# ॥ श्रीभक्तराजप्रशस्तिः ॥

रेवातपत्योः कलहायमानयोः
पर्यां विभक्तुं ननु निम्नगापतिः ।
भित्तिं यमुद्धृत्य न्यधात्तदन्तरे
विभात्ययं सप्तपुटो महीधरः ॥ १ ॥
उभे अपि स्वं महिमानमद्भुतं
जनेषु विख्यापयितुं हि मत्सरात् ।
श्रेयः सुवाते इह तापसार्थिनां
सिद्धाश्रमोऽभूत्तत एष भूधरः ॥ २ ॥
रेवा पुनः सोमसुतेति विश्रुता
सूर्यप्रसूतिस्तपतीह शस्यते ।
उभे तु यत्पादनिषेवणोत्सुके
मोक्षैकमार्गं दिशतीह शैलराट् ॥ ३ ॥
योऽशेषसत्त्वान् कुहरेषु लीनान्
विरुद्धशीलान् विविधैः प्रकारैः ।
बिभर्ति तेनास्य महीधरेन्द्र-
राजत्वमेतत्स्फुटमेव भाति ॥ ४ ॥
ग्रामोऽस्ति कश्चित्तदुपत्यकाया-
मान्लाडनामा दिशि दक्षिणस्याम् ।
यत्रायना धन्यतमां गृहस्थ-
पर्यां समारुह्य प्रसन्नचित्ताः ॥ ५ ॥
यद्भूमिभागो बहुसस्यवित्तो
गोधूमशाली चणकाद्युपेतः ।
धत्ते सपर्यां मुहुरातिथेयीं
सतामियान् सत्त्वभृतां निसर्गः ॥ ६ ॥

तत्राभवद्भक्तिमहाब्धिचन्द्रः
खण्डूजिनामा हरिदासवर्यः ।
योऽशेषभोगान् मलवद्विरक्तो
युवा जहौ श्रीहरिदर्शनोत्कः ॥ ७ ॥

पिता तु संसारपरिश्रमातुर
इच्छन् धुरं वोढुमिमं स्वदारकम् ।
न्ययुङ्क्त तद्ग्रामविलेखनेऽचिरात्
जीवातुरेतत्करणं कुलस्य हि ॥ ८ ॥

कुलस्य संतारणमेव धर्म-
स्तदेव कार्यं करणं ममापि ।
इतीव बुध्या सकलं विसृज्य
ययौ प्रकाशं[1] तपतां वरेण्यः ॥ ९ ॥

लब्ध्वा मनुं सिद्धमनोः सकाशात्
जोशीत्युपाख्यात्स तु सिद्धवर्यात् ।
तपः स तेपेऽगणितातिताप-
श्चिराय शुद्धो विरजा बभूव ॥ १० ॥

श्रीनागरज्ञातिकुलप्रदीपात्
मधोनिता नागरता स्फुटाऽस्मात् ।
ग्रामागतान् भागवतान् समर्च्य
महर्षपुञ्जोत्पुलकः स आसीत् ॥ ११ ॥

हरेर्गुणग्रामगृहीतितत्परो
जपन्नविश्रान्तमनाग्नदेकधीः ।
पूर्णात्मनोऽन्तरविरोधहेतवे
श्रीगीतगोविन्दमजस्रमाजगौ ॥ १२ ॥

ज्ञानेऽस्वर्गो भजने मोऽश्वरो
पुरेशधियो भवनानि रणितम् ।
विज्ञाय मर्म जयदेवगुम्फिता
भार्गं न मुक्तिं स पुरश्चकार वै ॥ १३ ॥

---

१. प्रवासम्.

ततो वाराणसीं गत्वा पुण्यां भागवतोत्तमः
अतप्यद्धरिपादाब्जपरिपूतसरित्तटे ॥ १४ ॥

स्वप्ने शिवाज्ञां संप्राप्य गुर्जरान् विषयान् ययौ
पुण्ये सोमसुतातीरे नान्दोदं पुरमावसत् ॥ १५ ॥

तत्राऽऽसीद्धरिपादभक्तिनिरतो दान्तः प्रशान्तः सुधी-
र्नित्यानित्यविवेकपूतधिषणो दामोदराख्यो यतिः ।
दृष्ट्वा भक्तिमलौकिकीं भगवति श्रीखण्डुनाम्नः पराम्
पीत्वा तत्कृतभक्तिकीर्तनरसं प्रेम्णाऽभवन्निर्भरः ॥ १६ ॥

नामैकनिष्ठां भुवने वरिष्ठां प्रेम्णा गरिष्ठां कलिकालपुष्टाम्
तमादिशच्छ्रीयतिराजवर्यः शान्तेर्निधानं हरिकीर्तनं च ॥ १७ ॥

उष्णीषं वरमालां च दत्त्वा तस्मै यतीश्वरः
स्वदेशं प्रेषयामास भक्तिमार्गप्रवृत्तये ॥ १८ ॥

तापीतीरं कतिपयदिनैरेत्य तस्मान्निदेशात्
तेपे भक्तो मधुपतिगुणग्रामगृह्यान्तरात्मा ।
यत्राऽऽस्तेऽन्तः सलिलनिलयः कामकोटीश्वरोऽसौ
नित्यं भृत्यानवितुमतुलैः कामपूरैरुदारः ॥ १९ ॥

निद्राहारविहारादिक्रियासु विरतोद्यमः
नाजानादात्मनो भावं नामैकनिरतः प्रभुः ॥ २० ॥

पवित्रजलसेवनैस्त्रिषवणैः समाराधनै-
र्विधूतकरणाशयः प्रविलसच्चिदानन्दभाक् ।
गृणन् यदुपतेर्यशो भुवनपावनं पावनो
न वेद किमपीह यज्जगदशेषनामाकृति ॥ २१ ॥

नाम्नः प्रभावादतितृप्तचेता
विमुक्तसङ्गो जितषट्सपत्नः ।
दधार धर्म्मं प्रविविक्तकर्मा
द्वंद्वापहं नामरसायनं हि ॥ २२ ॥

इत्थं तीव्रं तप्यतस्तस्य चेत-
स्याविर्भूताः सिद्धयोऽष्टा उदाराः ।
आक्रान्तं तल्लोकसंघैस्तपत्याः
पुण्यं तीर्थं सैकतं चाप्यजस्रम् ॥२३॥

समागतानां लोकानां भोजनाच्छादनादिभिः
अन्तर्यामिधिया सोऽयं सपर्यां विदधे पराम् ॥२४॥

ऐश्वर्यवैराग्यविबोधधर्म-
श्रीभिस्ततस्तस्य यशः प्रतेने ।
विदिक्षु दिक्षु प्रथितं समन्ता-
दलं महाभागवतत्वमाशु ॥ २५ ॥

तलोदावासिभिर्ग्रामवासाय बहुशोऽर्थितः
मन्दिरं कारयामास दृढं भक्तशिरोमणिः ॥२६॥

तत्र श्रीगरुडासनं यदुपतिं श्रीपाण्डुरङ्गं प्रभुं
दिव्यं दुःखविमोचनं प्रभुवरं नारायणं चाऽऽदरात् ।
संस्थाप्यैव जगद्धिताय तदुपास्तावास्त नित्योद्यतो
नित्यं स्तोत्रमिदं पठन् मधुरिपोः श्रीगीतगोविन्दकम् ॥२७॥

ध्यायं ध्यायं श्रीपते रूपमग्र्यं
गायं गायं गीतगोविन्दमेतत् ।
नृत्यन् नृत्यन् प्रेमबाष्पार्द्रताक्ष
आनन्दाब्धौ लीनचित्तो बभूव ॥२८॥

प्रतिनिशमनिशं गुणानुवादात्
व्रजवनितादयितस्य संकथाभिः ।
भवजलधिसुतारणाय पुंसां
सुपरिचितं प्लवमादिदेश सद्यः ॥२९॥

अज्ञानान्धो जनोऽयं हितमहितमलं नैव जानात्यविद्वान्
सन्तः संचारयन्तः प्रतिदिनमनिशं श्रेय आशंसमानाः ।
भद्रगीतस्मे कृतार्थः प्रतिसममचलः पण्ढरीपादयात्रां
नृत्यन् शौरेः सुरम्यादरिजनमनसि प्रीतिमाधाच्च तत्र ॥३०॥

इत्थं द्विजानां बहुभिश्च भोजनै-
दास्यं गतानां महतो महात्मनाम् ।
भक्तिं वितन्वन् भजनैकधिष्ठितो
निनाय कालं कलयन् हि भत्रयम् ॥२१॥
श्रीमालिविप्रजातीयः काशीरामो महामनाः
तथैवोत्तमरामश्च सोदरौ दास्यमागतौ ॥२२॥
नियुक्तौ देवभक्तानामाराधनविधौ यदा
महाभागवतस्यास्य सेवां चक्रतुरादरात् ॥२३॥
धर्मप्राणा धनप्राणा जिगीषन्ति परस्परम्
कस्य किं फलमित्यत्र विवादः सुमहानिह ॥२४॥
धर्माय जीवनं चात्र धनं सृष्टं स्वयंभुवा
उभाभ्यां धर्म एष्टव्य इति शास्त्रविनिश्चयः ॥२५॥
एवं विवादे धर्मात्मा महाभागवतः कृती
जहौ तलोदाग्रामं तु कुक्कुर्मुण्डां ततो ययौ ॥२६॥
तत्रस्थैर्ग्रामवास्तव्यैः सभाजित उपस्कृतः
निनाय कालं तत्रैव गरुडासनभक्तितः ॥२७॥
इत्थं ब्रह्मसुखानुभूतिरसिकः स्वीयां समाराधना-
मुष्णीषं वरमालिकामनुददौ श्रीकाशिरामाय च ।
शाके सप्तदशोत्तराष्टदशके वर्षे शुभे मान्मथे
गायन्नष्टपदीं जहौ निजतनुं सद्भक्तचूडामणिः ॥ २८ ॥
काशीरामो महात्मा गुरुवचसि परां प्रेमनिष्ठां दधानो
भक्तिं चक्रे यथावद्गुरुगुणगणतः सांप्रदायं प्रचार्य ।
दैवाल्लब्धेन तुष्टो वसुविधुवसुभूसंमितेऽब्दे पुनः स
देहं त्यक्ष्यन्नुदारो मधुपतिसुयशोगानतः शान्तिमाप ॥ २९ ॥
तस्मान्मन्त्रानुदीक्षा भवदहनपरित्राणदक्षा यमाप
भ्रातुष्पुत्रस्तृतीयो लघुरपि गुणतो गौरवं संदधानः ।
बाल्यादेवाऽऽशु पश्यन् निरयसममिदं भोगजातं जहौ यः
सोऽयं सद्भक्तवर्यो जगति विजयते सन्तुजीदेशिकार्यः ॥ ४० ॥

बाल्यादेवासिधाराव्रतममलमिदं ब्रह्मचर्यं गृहीत्वा
यः स्वं विद्यागुरुत्वं गुणगरिमगुरौ पण्डिताढ्ये कुलेऽधात् ।
यस्येच्छा विश्वमेतद्धरिहरपरमोपास्तिरूढं यथा स्यात्
सोऽयं सद्भक्तवर्यो जगति विजयते सन्तुजीदेशिकार्यः ॥ ४१ ॥

योऽसद्भ्योऽर्थान् गृहीत्वा व्यतरदनुदिनं सज्जनेभ्यो गुणिभ्यः
प्रत्यब्दं सद्गुरूणामगणितजनतामुत्सवे तर्पयंश्च ।
पूर्वाचार्यानुशिष्टं हरिगुरुदयितं भ'लयं यत्र पुष्टं
सोऽयं सद्भक्तवर्यो जगति विजयते सन्तुजीदेशिकार्यः ॥ ४२ ॥

अज्ञानध्वान्तमेतत्समविषमविभागावलोपाय पीनं
विश्वेषां साम्यमापादयति जगति यस्तत्प्रतीकर्तुमिच्छन् ।
शश्वद्धर्मप्रदीपं ज्वलयति पुरतो धीदृशां दीपनं यः
सोऽयं सद्भक्तवर्यो जगति विजयते सन्तुजीदेशिकार्यः ॥ ४३ ॥

हेत्वाभासैर्मदान्धैः पददलितमदो धर्मतत्त्वं समीक्ष्य
योऽन्वम्नायानुनतः सनिष्ठानीनिरतः पण्डितानुग्रहेण ।
धर्मादर्शं महात्मा श्रुतिपथकुशलेनाननोत्सूरिणाऽसौ
सोऽयं सद्भक्तवर्यो जगति विजयते सन्तुजीदेशिकार्यः ॥ ४४ ॥

भक्तराजप्रशस्तिस्तु भक्तकामप्रपूरणी ।
भक्तानां शिरसाद्ध्याद्भूयादेनोविशुद्धये ॥ ४५ ॥

इति श्रीसेन्तुरामकविभिश्रनापानसजपन्तभट्टशास्त्रिभिः प्रणीता
भक्तराजप्रशस्तिः ।



उत्पादक व चालक सनातनधर्मोज्जीविनी सभा

ह भ. प. श्री सतोजी महाराज, संस्थान कुकरमुडा व तळोदा

|| श्रीविठ्ठलेशः शरणम् ||

# सनातनधर्मोज्जीविनीसभाया उत्पादकानां संचालकानां च श्रीसंतोजीमहाराजानां निवेदनम्

---

कारुण्यामृतनिर्झरः सुरसरिज्जन्माकरः श्रीवधू-
लीलाब्जं व्रजकामिनीकुचतटीकस्तूरिकास्थासकः ।
उत्तंसः सुरयोषितां मुनिमनोवश्यौषधीपल्लवो
यस्याङ्घ्रिः सुरवल्लभः स जयति श्रीपुण्डरीकप्रियः ॥१॥

सुमहानयमद्य मङ्गलमहोत्सवप्रसङ्गः समुपस्थितः श्रीरुक्मिणीपाण्डुरङ्गप्रसादेनेति तदनुग्रहभाजनमात्मानं मन्ये । इदानींतनी परिस्थितिरियमीक्षापथं नेनीयमाना इदमेव द्रढयति यदधुना विप्रतिपन्नाना सामाजिकानां धार्मिकाणा च विषयाणां प्राचीनविचारप्रणाल्या नूतनसमीक्षणसरण्या च परीक्षणं विधाय निर्णायकः कश्चन प्रबन्धः प्रणेतव्य इति । सेयं ममामीप्सा बहोः कालादारभ्य मनसि नरीनृत्यमाना इदानीं फलेग्रहित्वमापद्यत इति सानन्दं जोघुष्यते । अन्यूनमात्रिंशद्वर्षेभ्यश्चेतसि जागरूकोऽयं विचारो यत् को वा मार्ग उररीकरणीयः खल्वस्मामिरिदानीं बलादापतिताया धार्मिक्याः सामाजिक्याश्चाधोगतेः प्रतीकारस्येति । तदर्थं च प्राचीनानामर्वाचीनानां च पण्डितानां विचारविनिमयेनैव निर्धारितं यदवश्यमेवैका प्रतिष्ठापनीया परिषदिति । तदनुसारेण चतुश्चत्वारिंशदधिकाष्टादशशततमे शकाब्दे १८४४ वैशाखशुक्लतृतीयस्यां नन्दुरबारग्रामे द्वारकाधीशदेवायतने प्रतिष्ठापितैका परिषत् सनातनधर्मोज्जीविनी नाम । यत्र किल —

श्री. शंकर श्रीकृष्ण देव महोदयाः धुळें.
म. म. श्रीधरशास्त्रिपाठकमहोदयाः धुळें.
ह. भ. प. केशवदत्तमहाराजाः सोनगीर.
वे. शा. सं. खुपेरकरशास्त्रिमहोदयाः धुळें.

अन्ये च तळोदावास्तव्याः कुकरमुण्डावासिनो नन्दुरबारवासिनश्च बहवः किल सज्जना उपस्थिता आसन् । संस्थापितायां समितौ 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति

न्यायेन प्रयोजनावेदकमेकमुद्देशपत्रकमपि प्रख्यापनीयमिति तदानीमेव निम्नलिखित-मिदमुद्देशपत्रकमपि प्रसिद्धिमानीतम् । तद्यथा—

" मनसिकृत्य खलु तत्रभवत् श्रीपरमेशचरणसरोजं तदनुक्रोशवशादस्मदीयान्तःकरणेऽनवरतं बम्भ्रम्यमाणानां केषांचित्सद्धेतूनां कुर्मस्तावदुपन्यासं तत्रभवतां निखिलविद्यास्थानेष्वधिगतविलासानां सज्जनाग्रणीनां पुरस्तात् । तदत्र प्रमादसुविचारयोः पयःक्षीरयोः सुविविच्य प्रमादोदकमपनोदपुरःसरं निवेद्य सुविचारपयःप्राशनेन तुष्टिमापन्नाः सज्जनहंसा अत्र कार्ये सहानुमोदेरन् सक्रियमित्याशास्महे ।

करालेऽस्मिन् कलिकाले " मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः " इति तत्रभवतो निखिलजगदभ्युद्धरणपारदृश्वनः कालत्रयसाक्षात्कारिणो व्यासस्योक्त्यनुसारेण समुपद्रुते जनसमाजे विगलिते धर्मविश्वासे समुपचिते चाधर्मे कथंकारं कृत्वा स्याद्धर्मस्य परिरक्षणमितीयं कार्यधुरा बलादापतिता किलेदानींतनानां धर्मधुरंधराणां शिरसि । इदं खल्वतीव सुविचार्यम्, यदस्यां कलिवेलायां कथंकारं शास्त्रतत्त्वरहस्यं जनतायामाविष्कृतं भवेदिति । यतोऽयं नैसर्गिको नियमः समानप्रकारतया संवित्संस्कारप्रवृत्तिनिवृत्तीनां हेतुहेतुमद्भाव इति ।

इदानींतनानामन्यदेशीयानां विदुषामिवास्मदीयपुरातनविदुषामप्यन्योन्यमसङ्गतमेव धर्मशास्त्रविषयकमवन्धप्रणयनमभूदित्यनुमिमते केचनाधुनातना विज्ञंमन्याः । परं च धर्मस्य लौकिकप्रमाणानमेयत्वेनालौकिकत्वात् त्रिकालदर्शिनामेव तत्राधिकार इति तेषामनधिकारितैवाऽविष्कृता भवति सप्रमादा इत्यत्र न संदेहः ।

स एवायं तेषां प्रमादो यदर्वाचीनप्रणाल्या नावलोकन्ते पुरातनान् ऋषिप्रणीतान् धर्मनिबन्धान्, न मन्वते तान् यथार्थतया, नाऽऽलोचयन्ति प्राचीनां विचारसरणिम् । न च स्वीकुर्वन्ति पुरातनीं विवेचनपद्धतिम्, नाऽऽलोडयन्ति सुविचार्यैव निश्चयसरणिमारोपितं धर्मतत्त्वम्, न मन्यन्ते तदेव समर्थनाय विभिन्नकालविरचितान् अनेकान् धर्मनिबन्धान्, नापि विचारयन्ति तत्र तत्र कृतवे महानिबन्धकर्तृणां तदेव धर्मतत्त्वस्य बद्धमूलत्वेनावस्थापनाय विहितं प्रशस्यं प्रयत्नमिति । विचारदृष्ट्येदं लौकिकदृष्ट्यैव सुसूक्ष्मम्, तर्हीदमेवोत्तरपक्षतां लभेत यदि च धर्मस्यैव विचारस्तदिति का वेदविदां भवेदधुनातनानाम्, तर्हि यथार्थविचारस्यापेक्षाऽऽधिक्यतया सर्वेऽप्यत्र को विमतः ।

यद्यपि तावत् विषये जैमिनिभट्टपादाद्याचार्यवर्याणां ग्रन्थानामाग्रहविचारसरणौ दृष्टिपातम् । ... ... पुरातनैव । तथापि ... तावत् ... तत्राऽऽधिकारवर्या इति ... ... विचारदृष्ट्येव, तर्हीदमेव ... ... सुस्पष्टतया ... 

चार्यवर्याणां विवेचनमार्गस्तावदतीव सुविचारपरिप्लुत इति। मीमांसादर्शने खलु वेदापौरुषेयत्वादिप्रतिपत्तौ केवलं वचनैकशरणाः प्राचीना वैदिकोपपत्तिप्रवणाश्च, न तु लौकिकयुक्तीनामत्र परिग्रह इति ब्रूयात्कैश्चन । परं नैतत्प्रमाणम् । यतः सन्ति खलु मीमांसायां बहवो लौकिकन्यायाः । उत्सर्गापवादादिलौकिकोपपत्तिप्रामाण्यनिदर्शनेनास्मत्पक्ष एव निःपक्षतया तत्र तत्र प्रकाशत इत्यलमत्र विवेचनेन ।

इदमत्र तात्पर्यं यज्जैमिनिशबरकुमारिलभट्टपादाद्याचार्याग्रणीनां या खलु धर्मविचारपद्धतिः, यथा खलु वेदनिबन्धावलोकनरीतिः, यथा हि स्मृतिप्रामाण्योपपत्तिः, कथंकारं पुराणेतिहासानां प्रामाण्यम्, कथं धर्मलक्षणम्, को धर्मः, को वाऽधर्मः, देशकालाद्यनुसारेण कथं वा धर्मबन्धनेषु विपरिवर्तनम्, तच्च कुत्र कर्तव्यम्, केन विधातव्यम्, कुत्र भवति, कुत्र च न भवतीत्यादिविषयेषु धर्मशास्त्रानुसारेण किं वोत्तरपक्षतां विन्देदिति सुस्पष्टतया जनताग्रामाविष्करणार्थमयमवतारस्तावत्सनातनवैदिकधर्मोज्जीविन्याः परिषद इति । अनया च परिषदा सनातनधर्मस्य पुनरुज्जीवनमेव कर्तव्यमित्यस्माकं विचारः । तत्र निखिलभारतवर्षीयानभ्यस्तमीमांसादर्शनानधीतधर्मशास्त्रान् सर्वानपि पण्डितानेकीकृत्य निम्नलिखिताश्चान्ये च तत्सदृक्षाः सर्वेऽप्यनुयोगास्तेषामग्रे उपन्यस्तव्याः । अनन्तरं च सर्वेषामनुयोगानां विचारस्तैः कर्तव्य इति ।

तत्राऽऽदौ इदानींतनानां निखिलानप्यनुयोगानेकीकृत्य ततस्तच्चिकित्सायै देशभागश एकैकपण्डितनियोजनपूर्वकमेकं पण्डितमण्डलं विरचय्य तद्द्वाराऽखिला अपि प्रश्ना विचारणीयाः । तत्र चाऽऽपद्धर्मानुसारेण ये केचनानुयोगा धर्मशास्त्राविरोधिनस्तेष्वनुमन्तव्यम् । कीदृशः खल्वापद्धर्मः, स च कुत्रास्ति कुत्र वा न भवतीत्यपि विचार्यानन्तरमेवानुमन्तव्यं सति धर्मशास्त्राविरोधे, येन खलु न स्पृशेद्धर्ममर्यादातिक्रमलेशोऽपि । अयमेव सभायाः प्रधानो हेतुर्यत् 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' इति ।

एवं च विरचिते किल तस्मिन्निबन्धे पण्डितमण्डलेनाखिलभारतवर्षीयाणां पण्डितप्रवराणां संमेलनेन तदनुमत्या पुरातनसरण्या विहिते कस्मिंश्चिद्वैदिकयज्ञमहोत्सवे तत्र कांचिन्निखिलविद्वत्परिषदं विधाय तत्र स निबन्धः प्रख्यापनीयः सर्वैरपि विद्वद्धौरेयैः । तस्य च निबन्धस्य मीमांसान्यायमूलकाखिलवैदिकलौकिकोपपत्त्यूहापोहपूर्वकं प्रणीतत्वेन निखिलभारतवर्षीयविज्ञातविद्वद्धुरीणैर्निबद्धत्वेन च तत्र सर्वेषामनुमत्या धर्मविषयैकमत्येन च भवितव्यमवश्यमेवेति निश्चीयते । कस्मिंश्चित् खेटकेऽपि यदि स्यात् कस्मिंश्चन धर्मविषये विप्रतिपत्तिः, तर्हि तस्मान्निबन्धादवश्यमेव निर्णीयेत यथानगरम् । अत एव धर्मविषयेऽविप्रतिपन्नमैकमत्यं स्यादिति बलवती खल्वस्माकमाशा । केवलमत्र सर्वेषामपि विप्रतिपन्नानां विषयाणां संग्रहे प्रयतनीयम् । एवं च सनातनधर्मानुयायिनीनामन्यासां चाधुनातनीनां धर्मसंसदामयं निबन्धोऽतीवोपकारमादध्यादिति निःसंदेहम् ।

नेदानीमेवायमश्रुतपूर्वो विप्रतिपन्नविषयनिर्णयविचारः संप्रवृत्तः। अपि तु निश्चिता एव ते विषयाः। तथापि निर्णयविचारस्य भिन्नभिन्नग्रन्थोपनिबद्धत्वेन न सर्वजनीन उपकारस्तैर्भवतीति तदर्थमेकीकरणमेवेदानीमावश्यकमिति निश्चित्य तत्तदुपपत्तिपूर्वकमुपन्यास एव विधातव्यो जनतायामित्ययमेव प्रधानोद्देशोऽस्याः परिषदः।

अत्र खल्वायव्ययविचारे पञ्चविंशतिसहस्रं धनमन्यूनमावश्यकमिति संभाव्यते। यतः समस्तविबुधाग्रणीनामन्येषां च धर्मानुयायिनां प्रथमतः परिषदुद्देशज्ञानार्थं तत्तद्देशेषु तीर्थेषु वा विद्वन्निकेतनेषु विद्यापीठेषु च प्रचारकत्वेन केचन पण्डिता अवश्यमेव प्रेषणीया इति। तत एव सर्वैरपि पण्डितैः सार्धमादौ प्रचारकपण्डितैरूहापोहितेऽस्मिन् विषये विचारितायां च कार्यपद्धतावनन्तरमेव सर्वे विबुधवराः सोत्साहमागच्छेयुरिति व्यवस्था संभाव्यते।

अत एव सर्वैरपि कोविदाग्रणीभिर्विचारविनिमयपूर्वकं परिषत्साफल्याय सनातनधर्मोज्जीवनहेतुकश्रेयःसंपादनाय चानुमतिप्रदर्शनेनानुग्राह्या वयमिति सप्रश्रयं विज्ञप्तिः।

## विचारणीया विषयाः

१. ग्रन्थप्रामाण्यविचारः।
२. जातिनिर्णयः।
३. सर्वेषां वर्णानामस्तित्वम्।
४. अत्यावश्यकखाद्यपेयाद्याचारः।
५. परदेशगमनम्।
६. स्पर्शास्पर्शविचारः।
७. भक्ष्याभक्ष्यविचारः।
८. स्त्रीणां वेदाधिकारविचारः।
९. प्रौढाविवाहः।
१०. स्त्रीणां पुनर्विवाहः।
११. केशवपनम्।
१२. मिश्रविवाहः।
१३. पतितपरावर्तनम्।
१४. अन्यधर्मीयाणां धर्मे संग्रहः।
१५. संस्काराचारविचारः।

इति।

इदं च विज्ञापनपत्रं मुद्राप्य भारतीयाखिलपण्डितानां सविधे प्रेषितम्। एममेव म. म. पूज्यपादश्रीलक्ष्मणद्राविडमहोदयानां सविधेऽपि प्रहितमासीत्। ततश्च १८४४ शकाब्दे ते पूज्यपादाः श्रीगण्डोजीमहाराजानां पुण्यतिथ्युत्सवप्रसङ्गेन कुकरमुण्डामाहूताः। तैश्चात्रागत्यैतादृशनिबन्धस्याखिलभारतीयपण्डितानामैकमत्येन निबन्धनमत्यावश्यकमिति प्रतिपाद्यात्र कार्येऽनुमतिः प्रदर्शिता। अनन्तरं सर्वोऽपि कार्यभारोऽयं तेषामुपर्येवास्माभिर्विनियुक्तः। तैश्च काशीं प्रतिनिवृत्य सर्वेषां तत्रत्यानां पण्डितानामनुमत्या संप्रतिष्ठापितैका परिषद् ग्रन्थप्रणयनसमितिर्नाम। यस्यां किलाधोलिखितानां पण्डितानां घटकतया समावेश आसीत्।

# निवेदनम्

| | | | |
|---|---|---|---|
| १. | म. म. पं. | यादवेश्वरतर्करत्नभट्टाचार्याः | काशी |
| २. | म. म. पं. | नित्यानन्दपर्वतीयाः | ,, |
| ३. | म. म. पं. | पद्मनाम भट्टाचार्याः | गोहाटी |
| ४. | म. म. पं. | जयदेव मिश्रमहोदयाः | काशी |
| ५. | म. म. पं. | ज्योतिर्विदः—अयोध्यानाथशर्माणः | ,, |
| ६. | म. म. पं. | अन्नदाचरणतर्कचूडामणयः | ,, |
| ७. | म. म. पं. | लक्ष्मणशास्त्रिणो द्राविडाः | ,, |
| ८. | म. म. पं. | पञ्चानन तर्करत्न भट्टाचार्याः | मलपाडा |
| ९. | पं. | नित्यानन्दाधिमासकाः | काशी |
| १०. | पं. | फणिभूषणतर्कवागीशाः | ,, |
| ११. | पं. | वीरेश्वरशास्त्रिणो द्राविडाः | ,, |
| १२. | पं. | पद्मनाभशास्त्रिणः | ,, |
| १३. | पं. | रामभवनपाण्डिताः | ,, |
| १४. | पं. | अम्बादासशास्त्रिणः | ,, |
| १५. | पं. | श्रीशंकरतर्करत्नभट्टाचार्याः | काशी |
| १६. | पं. | हरिनारायणत्रिपाठिनः | ,, |
| १७. | पं. | गणपतिशास्त्रिणः | ,, |
| १८. | पं. | चन्द्रधरशर्माणः | ,, |
| १९. | म. म. पं. | अच्युतानन्दत्रिपाठिनः | ,, |
| २०. | पं. | देवीप्रसादशर्माणः कवयः | ,, |
| २१. | म. म. पं. | शेण्डेइत्युपाह्वसीतारामशास्त्रिणः | ,, |
| २२. | पं | माधवशास्त्रिभाण्डारिणः | ,, |
| २३. | म. म. पं. | वेदान्तविशारदा अनन्तकृष्णशास्त्रिणः संपादकाः | |
| २४. | म. म. पं. | न्यायाचार्या राजेश्वरशास्त्रिणो द्राविडाः, उपसंपादकाः. | |

संस्थाप्य चैवं परिषदं विचारविनिमयार्थमेका प्रश्नावल्युपानिबद्धा। यत्र विप्रतिपन्नानां सर्वेषां विषयाणां समावेशो भवेत्। सा चैवम्—

१. हिन्दुत्वव्यपदेशनियामका धर्माः के ? सनातनधर्मानुयायिमात्रवृत्ति हिन्दुत्वमुतेदानीं ये ये हिन्दुपदव्यपदेश्या भवन्ति, तत्साधारणम् ?

२. धर्मतत्त्वविनिर्णयः केवलं युक्त्यधीनः ? उत शास्त्रनिबन्धनः ?

३. युक्तिभिरुपलब्धस्यार्थस्य बोधनार्थं शास्त्रं प्रवृत्तमुत युक्त्यनपेक्षतया तत्प्रवृत्तम्? शास्त्रयुक्त्योर्विरोधे कस्य प्राबल्यम्?

४. शास्त्रपदेन किं वेद एव विवक्षितः, उत स्मृतिपुराणेतिहासशिष्टाचारा अपि? वेदपदेन मन्त्रभागस्यैव ग्रहणमुत ब्राह्मणादेरपि?

५. शास्त्रार्थनिर्णयो मीमांसापरिपाट्या संपादनीयः, उतैतिहासिकशैल्या?

६. क्रियाणां स्वरूपतो धर्मत्वमुत फलविशेषसाधनत्वेन?

७. धर्मस्य फलं दृष्टमदृष्टमुभयं वा?

८. अदृष्टफलानां धर्माणामधर्माणां वा देशकालपरिस्थितिमनुसृत्यान्यथा परिवर्तनं फलपर्यवसायि भवितुमर्हति न वा?

९. धर्मज्ञसमयः प्रमाणमित्यत्र के धर्मज्ञाः? तेषां धर्मव्यवस्थापकत्वं शास्त्रमनुसृत्योत स्वतन्त्रम्? धर्मज्ञैः कदापि कस्यापि धर्मस्याधर्मस्य वा देशकालपरिस्थितिमनुसृत्य परिवर्तनं कृतं न वा? यदि कृतम्, कस्मिन् समये कस्मै प्रयोजनाय कैर्धर्मज्ञैस्तत्कृतम्? कानि चात्र प्रमाणानि?

१०. आपद्धर्म इत्यत्राऽऽपत्पदेन कीदृश्यापद्विवक्षिता? आपद्धर्माः शास्त्रेषु परिगणिता न वा?

११. इदानीं हिन्दुजनसंख्याह्रासपरिहारः कृतप्रायश्चित्तानां पतितानां स्वधर्मानुष्ठानयोग्यतास्वीकारमात्रेणाकृतप्रायश्चित्तानामपि दृष्टव्यवहाराय हिन्दुत्वव्यपदेशस्वीकारमात्रेण च संभवति वोत स्वस्वपूर्वतनजातिषु विवाहादिगुरुतरसंसर्गव्यवस्थापनेनैव भवति? कृतप्रायश्चित्तानां पतितानां पृथक्तयाऽवस्थापनं हिन्दुत्वसंरक्षणेन यदि क्रियते, का हानिः? अत्र कीदृशः शास्त्रीयो विनिर्णयः?

१२. इदानीं हिन्दूनामपेक्षितं संघटनं यथावच्छास्त्रार्थानुष्ठानेन संभवति न वा? यदि न संभवति, तर्हि कस्य धर्मस्य कीदृशं परिवर्तनमपेक्षितम्?

१३. आचारभेदो जातिभेदश्चेदानींतनवैमत्ये कारणमुतान्यदेव?

१४. पूर्वाचार्यैः केन निमित्तेन कस्मै प्रयोजनाय जातिभेद आचारनियमो जीविकानियमश्च परिकल्पितः? सत्यपि जात्यादिभेदे पूर्वतनकाले कदाप्यैकमत्यमासीन्न वा?

१५. चातुर्वर्ण्यं कर्मकृतमुत जन्मकृतम्? मतद्वयेऽपि साधकबाधकानां कथं विरोधपरिहारः? संकरजातीनां परिवर्तनं शास्त्रोक्तं न वा? जन्मवैचित्र्यं पूर्वजन्मकृतशुभाशुभकर्मफलं न वा?

१६. शास्त्रबोधितस्वर्गनरकादिलोकानां सद्भावोऽस्ति न वा?

१७. अपोनिर्दिष्टानामाचाराणां किं दृष्टं कामक्रोधादिकं मूलमुतादृष्टोपयोगित्वेन श्रुतिरेव मूलम्?

१. अस्पृश्यास्पर्शः।
२. अस्पृश्यानां देवालयादावप्रवेशः।
३. स्पृश्यकूपोदकादिष्वस्पृश्यानामसंव्यवहारः।
४. चातुर्वर्ण्यविवाहविशेषाः, विधवानां पुनरुद्वाहः।
५. समुद्रयाननिषेधः।
६. मतान्तरप्रविष्टस्य पुनरपरिग्रहः।
७. वेदाध्ययनाधिकारस्यासर्वजनीनता।
८. भक्ष्याभक्ष्यविवेकः।
९. संस्काराचारभेदाश्च। इत्येवमादयः।

एतेषां प्रश्नानां यस्यां कस्यामपि भाषायां समुचितमुत्तरं शतानधिकपृष्ठैर्निबन्धरूपेण प्रेषयतां तत्र प्रबन्धे तैरुल्लिखितानां साधकबाधकयुक्तीनां तारतम्यपर्यालोचनेनोत्कृष्टानां त्रयाणां प्रबन्धानां कृते क्रमशः १००। ७५। ५० रुप्यकाणि पारितोषिकतया वितीर्येरन्। अपेक्षिताश्च निबन्धा जनवरीमासस्यान्तिमदिवसात् प्राग्यथा प्रेषिता भवेयुस्तथा प्रयत्नः कर्तव्य इति प्रार्थयामः। एतद्विषयकः सर्वोऽपि व्यवहारः पत्रमुखेनैतत्समित्युपसंपादकनाम्ना करणीय इति च निवेदयामः॥ इति।

तदेवं ग्रन्थप्रणयनसमित्योपरितनप्रश्नेषु विवेचनात्मकाः प्राच्यनव्योभयमतप्रदर्शकाः प्रबन्धा उभयविधपाण्डितानां सविधे प्रार्थिताः। तदनुसारेण भारतवर्षस्य निखिलप्रदेशेभ्यः संस्कृत, हिन्दी, महाराष्ट्र–गुर्जर, कर्णाटक–आन्ध्र–वंगआङ्ग–तामिलादिसर्वभाषामयाः प्रबन्धा अन्यूनं सार्धद्विशतपरिमिताः समायाताः। एवं ग्रन्थप्रणयनसामग्री प्रायः साकल्येन यथावत्संभृता।

अतः प्रागेव च म. म. लक्ष्मणशास्त्रिद्राविडमहोदयैर्ग्रन्थविलेखने यथावदधिकृताः श्रीमदनन्तकृष्णशास्त्रिमहोदयाः १८४५ शकाब्दे चैत्रशुद्धप्रतिपदि तलोदाग्रामे मत्सविधे प्रेषिताः। तेषां दर्शने सर्वोऽपि ग्रन्थलेखनस्यातिभारोऽयं तैः स्वीकृतः। मयापि यथावत्सर्वं साहाय्यदानं प्रतिश्रुतम्। ततश्च सर्वत्र भारते प्रचारार्थमावश्यकं धनमपि मया तेभ्यो वितीर्णम्। ततश्च तैर्ग्रन्थलेखनसामग्रीसंपादनार्थं काशी–अलाहाबाद–कलकत्ता–मद्रास–म्हैसूर–त्रावणकोर–पञ्जाब–बिहार–बडोदा–मुंबई–पुणें–मध्यप्रांत–गुजराथ–सिन्ध–काश्मीर–नेपाल–मालवा–प्रभृतिप्रदेशेषु संचारं विधाय तत्रत्यानां पण्डितानां साक्षात्कारं कृत्वा तैः सह विचार्य चानेके मुद्रिता अमुद्रिताश्चोपयुक्ता ग्रन्थाः संपादिताः। एवमेव सांप्रदायिकपीठाचार्याणामपि साक्षात्कारादिमाचर्य ग्रन्थप्रणयनसरणिर्निर्धारिता। एवं सकलसंभारसंपत्त्यनन्तरं काश्यामक्षय्यतृतीयातो ग्रन्थप्रणयनसमितेराधि-

वेशनं प्रारब्धम् । तच्च मासमेकं प्रचलितम् । तत्र च सर्वेषां मतान्तराणां निबन्धानां चोहापोह-पूर्वकं ग्रन्थलेखनसरणिर्निर्धारिता । तदानीं बडोदातः छोटुमहाराजास्तर्कशास्त्रिणः तलोदातश्च देवकृष्णपण्डिता अपि प्रहिताः । सर्वेषामनुमत्या ग्रन्थलेखनभारोऽयमनन्तकृष्णशास्त्रिणामुपरि निहितः ।

उपक्रान्ते चैवं ग्रन्थकार्ये मध्ये १८४७ शकाब्दे माघमासे सोनगीरग्रामे श्री. केशवदत्तम-होदयैर्ब्रह्मीभूतगोविन्दमहाराजानामर्चामहोत्सवः प्रारब्धः । तदनुषङ्गेणैका पण्डितपरिषत्तत्र संपा-दिता । यत्र जगद्गुरुशङ्कराचार्यश्रीभारतीकृष्णतीर्थपादाः, शङ्कराचार्यश्रीकुर्तकोटिपादाः गोस्वा मिश्रीगोकुलनाथमहाराजप्रतिनिधीभूता, भट्टरमानाथशास्त्रिणः, म. म. लक्ष्मणशास्त्रिद्राविडमहो-दयाः, श्रीमदनन्तकृष्णशास्त्रिणः, वे. शा. सं. श्रीकाशीशेषव्यङ्कटाचलशास्त्रिणः—म्हैसूरवास्तव्याः, नारायणशास्त्रिमराठे महोदयाः, पाठकोपाह्वश्रीधरशास्त्रिमहाभागाः, खुपेरकरशास्त्रिणः, बाळ-शास्त्रिभट्टपादा इन्दोरवास्तव्याः, महादेवशास्त्रिदिवेकराः सिद्धेश्वरशास्त्रिचित्रावाः, इत्यादयो नव्य-मतपुरस्कारिणः प्राचीनमतसंस्थापकाश्च पण्डिता उपस्थिता आसन् । तदानीमधोलिखितानां विष-याणां चर्चा संवृत्ता —

१. धर्मग्रन्थबलाबलविचारः ।
२. स्मृतीनां समन्वयः कर्तव्यो न वा ।
३. प्राचीनार्वाचीनेतिहासयोरन्योन्यं साम्यदृष्ट्या विचारः ।
४. संस्काराचारयो रहस्यम्,
   (अ) आचाराणां श्रेष्ठता कथं निर्णेया,
   (आ) अत्र च किं बीजम् ।
५. कलिवर्ज्यप्रकरणोपनिबन्धने को हेतुः,
   १ शुद्धिः २ पतितपरावर्तनम्, ३ व्रात्यसंस्कारः, ४ परदेशगमनम् ।

इत्येतेषां प्रश्नानां निर्णयो नव्यमतेन प्राचीनमतेन च कथं भवतीत्यनया परिषदा सम्यगेव विचार्याहृत्य अवबोधितम् । आङ्ग्लानुशासने प्रायः प्रथममेवेयं पण्डितपरिषदित्यत्र न विशयः । अतश्च धार्मिकः सामाजिकश्च विचारप्रवाहः पण्डितानां मनसि प्रादुर्भूतः । अत्रैव परिषदि सनातनधर्म-मर्यादाग्रन्थस्य हस्तलिखितमपि पण्डितानां पुरत उपस्थापितमासीत् । चर्चाऽप्युद्बोधकरूपेण पूर्वोक्त-ग्रन्थस्य [illegible] । ततश्च १८४८ शकाब्दे चैत्रे—ग्रन्थमुद्रणं प्रारब्धम् । आषाढे च समाप्तम् । ग्रन्थस्य पृष्ठसंख्या १६०० वर्तते । विभागाश्च प्रमाणप्रकाराः, चातुर्वर्ण्यप्रकाराः, शुद्धिप्रकाशः, विवाहप्रकाशश्चेति । एवं चतुर्षु विभागेषु सनातनधर्मोज्जीविनीसभया ग्रन्थप्रणयनसमित्या चोपस्था-पितानां सर्वेषां विषयाणां विचारो नव्यमतदृष्ट्या च सवृत्तः । श्री. अनन्तकृष्णशास्त्रिभिः प्राचीन-

# निवेदनम्

ग्रन्थमहोदधिं निर्मथ्य प्रणीतोऽयं सनातनधर्मप्रदीपग्रन्थः सनातनमतानुयायिनामुद्बोधको मार्गदर्शकश्चेति सर्वैरपि पण्डितैर्निःसंकोचमुद्घोषितमनुमतं च।

एवं ग्रन्थमेनं सनातनधर्मप्रदीपं छायारूपेण ( ड्राफ्ट ) मुद्राप्य सर्वेषां सांप्रदायिकधर्मपीठाचार्याणां प्राचीनानां नव्यानां च पण्डितानां सविधे गुणदोषविवेचनपूर्वकसमालोचनार्थं विना मूल्यं प्राहिणोत् किल सनातनधर्मोज्जीविनी समितिः। तदनुसारेण सपादशतादन्यूनं समीक्षाप्रबन्धाः समागताः। येनाग्रिमनिर्णायकग्रन्थनिबन्धनं शास्त्रशुद्धं निर्विवादं च संपादयितुं सुकरं स्यात्। अत एव ग्रन्थोऽयं समालोचननिबन्धेन सह परावर्तनीय इति ग्रन्थस्य मुखपृष्ठे एव अनन्तकृष्णशास्त्रिभिः संपादकत्वेन स्वनाम्ना तथा निवेदितमिति तत एव सुविशदं विज्ञायते।

सोऽयं ग्रन्थः प्राचीनानां नव्यानां च पण्डिताना निबन्धान् पर्यालोच्य पाण्डित्यप्रचुरो विलिखितः। अत्र च प्राचीनधर्मशास्त्रीयनिबन्धानामन्योन्यं समन्वयरविरोधपरिहारौ चातीवोद्बोधकतया निबद्धौ। अत एव चात्र विषये विदुषां प्रशस्तिपत्राणि सहस्रशः समागतानि अस्मत्सविधे वर्तन्ते। एवं चायं प्रबन्धः सर्वाङ्गसंग्राहकः संपन्नः। इदानीमपि बहवः किल प्रार्थयन्त इमं ग्रन्थम्। तथा प्रार्थनापत्राणि समागतानि वर्तन्ते।

एवं सनातनधर्मोज्जीविनीसमया प्राथमिकमिदं ग्रन्थप्रणयनकार्यं सुव्यवस्थितमेव विनाऽवरोधं संपादितम्। प्रतिज्ञानुसारेण निर्णायकग्रन्थनिबन्धनकार्यं तु ततः २०।२२ वर्षपर्यन्तं केवलं विचारविषयत्वेनैव प्रचलितमासीत्। अत्र निदानमिदमेव यत्कार्यकर्तुरभावः। संपन्नपूर्वं कार्यं तु सर्वथा कै. लक्ष्मणशास्त्रिपूज्यपादानां साहाय्येनैव संजातमित्यत्र न विशयलेशोऽपि। यतस्ते परिनिष्ठितविद्वांसोऽपि लौकिकज्ञाः। अत एव भिन्नभिन्नसांप्रदायिकपीठाचार्याणा सर्वेषा नव्यानां प्राचीनानां च पण्डितानामत्र सहयोगसंपादनं सुकरमैकमत्यं च। नैतत्तपोबल विना पाण्डित्यमात्रेण संभवतीति सर्वविदितमिदम्। एतादृशां तपोमूर्तीनां विदुषा प्रभावशालिनां च तेषा पूज्यपादानामकालस्वर्गवासेन दैववञ्चिता वयमितस्ततस्तादृशपण्डिताश्रयणार्थमाहिण्डमाना अपि न समासादितवन्तस्तादृशं पण्डितम्। प्रत्युत विधिविपर्ययादस्माकं समाकलितानां पण्डितानामन्योन्यवैमनस्यमेवानुभवपथमापतितम्। अतश्च ग्रन्थप्रणयनसमितिः किल पण्डितानां काश्यां स्थापिता प्रयोजनाभावादनायासेनैव विलयमायाता। एवमपि निर्णायकग्रन्थनिर्माणकार्यं कथं केन कदा च पूर्तिमियादितीयं विवञ्चना न मामजहात्।

ततश्च परमपूज्यपण्डितराज—राजेश्वरशास्त्रिद्राविडा मया प्रार्थिताः। तैरपि व्यक्तिशः कार्यसंपादनस्यातिभारो नाङ्गीकृतः। पर तु 'काशीस्थगीर्वाणवाग्वर्धिनीसभाद्वारा कार्यमिदं संपादनीयमिति तैः सूचितम्। तदनुसारेण पत्रद्वारा कार्यकारिणां साक्षात्कारद्वारा च विचारविनिमये १५।१६ वर्षाणि व्यतीतानि। अनन्तरं काशीस्थसाङ्गवेदविद्यालयस्य रजतमहोत्सवप्रसङ्गेनाऽऽ-

हूता मम कनीयांसो भ्रातर उद्धवमहाराजा मयैतत्कार्यसंपादनपर्यालोचनार्थं प्रेषिताः काशीं प्रति। तदानीं पं. देवकृष्णशास्त्रिणः नवापूरग्रामस्था मोहनभाई चुनिलालनामानः श्रेष्ठिनश्च तैः सह प्रहिताः। तत्र च निर्णायकग्रन्थनिर्माणविषये सुबहु चर्चितम्। एवमपि स्वकार्यानुकूलं न किमपि निष्पन्नम्। ततश्च कार्यमिदं दीर्घसूत्रतामवलम्बते न सुशीघ्रं भविष्यतीति सनातनधर्मोज्जीविनीसभाया दृष्टिगोचरतामापन्नम्। अतश्च कार्यमिदं कथं संपादनीयामिति चिन्ताविषण्णः पाण्डुरङ्गप्रार्थनैकशरणोऽहं किंकर्तव्यमूढोऽहोरात्र पाण्डुरङ्गाराधनतत्परोऽभूवम्। ततश्चैवं स्फूर्तिः संजाता यन्मुल्हेराभिजनानामिदानीं तलोदावास्तव्यानां पं. देवकृष्णशास्त्रिणां पुरस्कारेण तद्द्वारैव च कार्यमिदं संपन्नं भवेदिति। ततश्च तेऽत्र कार्ये प्रार्थिताः। तैरपि मासद्वयपर्यन्तं स्वाराध्यदेवतानुमतिमन्तरा नाङ्गीकृतम्। अन्ततो मासद्वयानन्तरं तैः स्वीकृतमिदं कार्यम्। मया तु पाण्डुरङ्गादेशानन्तरमेव १८६८ शकाब्दे चैत्रशुद्धप्रतिपदि प्रातराह्निकसमाप्तौ आहूय स्वमन्दिरे पं. देवकृष्णशास्त्रिणः प्रति निवेदितोऽयमादेशो भगवतः श्रीपाण्डुरङ्गस्य। ततश्च तलोदावास्तव्यानां श्री. ओंकारदास किशोरदास चौधरी-गजाननराव बुद्धिसागर-ठाकरलाल पीताम्बरदासप्रभृतीनामुपस्थितौ संपूज्य श्री. देवकृष्णशास्त्रिणः सनातनधर्ममदीयं च समर्पितोऽयं ग्रन्थः समालोचनार्थम्। एवमेव समालोचनरूपेण समागतानां निबन्धानां संग्रहोऽपि तेषामायत्तीकृतः।

पं देवकृष्णशास्त्रिणो न तादृशाः प्रसिद्धाः पण्डिताः। नैतावताऽत्र विषये ते न पण्डिताः। विधिवशात् प्रसिद्धिपराङ्मुखत्वेन च तेषां पाण्डित्यं न जगति विख्यातम्। किं चोत्पत्तिपरिपूतानामेतेषां शास्त्रविद्याधनमिदं परम्परागतं रिक्थमेवेत्यत्र प्रदेशे सर्वविदितमिदम्। एते च नासिकमण्डलान्तर्गतमुल्हेरग्रामवास्तव्याः सुप्रसिद्धसाधुवर्य-रामानुजसांप्रदायप्रचारक-उद्धवमहाराजानुगृहीत पण्डितकुलवंश्याः उद्धवमहाराजगुरुचरणश्रीकाशीराजमहाराजवंशतिलकाः। करालेऽस्मिन् कलिकाले यावनशासनाक्रान्तिते सन्मार्गे विगलिते धर्मविश्वासे सर्वत्र प्रसृमरे च यावनमते समुपचिते धार्ष्ट्ये खानदेशमण्डले रामानुजमतं पुरस्कृत्य यैः सत्पुरुषैः षोडशशततमशकाब्दे पुनश्च सनातनवैदिकधर्मो भागवतसंप्रदायश्च प्रस्थापितः। ते एते काशीराजमहाराजा उद्धवमहाराजाश्च। एतेषामेव शिष्यपरम्परायां, अमळनेरस्थाः सखाराममहाराजाः, चोपडेग्रामस्था गोविन्दमहाराजास्तथा चान्ये सत्पुरुषाः समुत्पन्नाः खानदेशे। एतादृशे सत्पुरुषानुग्रहभाजने परमोच्चपवित्रवंशे संभूतानामेतेषां जन्मनैव परिशुद्धत्वमित्यत्र न विप्रतिपत्तिलेशोऽपि। अद्यापि च रामोद्धवसंस्थानपरिचालकत्वं परम्परागतपंचशाधानुसारेण मुल्हेरग्रामवासिनामेतेषां वंशपुरुषाणामेवेति नाविदितं केषामपि। एवमेतेषां पण्डितानां पूर्वमपि शास्त्राध्ययनं काश्यां पूज्यपाद पं. श्री. रामकृष्णशास्त्रिपटवर्धनानां तथा पूज्यपाद पं. श्री. शिवरामशास्त्रिमहोदयानां तथा पूज्यपाद श्री. गणपतिशास्त्रिमोकाटे महोदयानां चरणे संजातम्। निखिलदर्शनेषु तथा पाश्चात्यसमाजशास्त्रग्रन्थेषु परिशीलनपूर्वं तत्त्वज्ञानमेतेषां

तु एतस्मादेव ग्रन्थादवगम्यते । सनातनधर्मप्रदीपसंपादने चैतेषां कियत्साहाय्यं संजातमिति तु सना-
तनधर्मप्रदीपप्रस्तावनायां श्री. अनन्तकृष्णशास्त्रिभिरेव निवेदितमित्यत्र न वितन्यते । एवं चोत्प-
त्तिपरिपूताः परम्परागतविद्यावदाताः स्वयं च विद्यासंपन्ना एते पण्डितवरा इति तु निश्चप्रचमेव ।

अत्र चेदमवश्यमेव सप्रश्रयं निवेदनीयं कृतज्ञतया यदेतेषां पण्डितानां पितृचरणाः पूज्यपाद
श्री.केशवपण्डिता एव मे प्राथमिकाः संस्कृतविद्यागुरवः । तेषां च वैकुण्ठवासादनन्तरं तेषां पुत्राः
पं. देवकृष्णशास्त्रिणो ज्येष्ठभ्रातृचरणाः श्रीरामचन्द्रपण्डिता एव मे संस्कृतविद्यागुरवः । निखिल-
मपि मे संस्कृतविद्याध्ययनं तेषामेव सविधे संजातम् । एतस्मादेव कारणात्तेषां निवासोऽस्मद्ग्रामे
कुकुरमुण्डायां द्वादशवर्षपर्यन्तं संजातः । बाल्ये च देवकृष्णपण्डिता अपि तत्राऽऽसन् । तत एव चैते
प्रस्थिताः काशीं प्रति विद्याध्ययनार्थम् । बाल्यादारभ्य परिचयादेवैतेषामस्माकं च नात्र विषये मनसो
द्वैधम् । एतैश्च देवकृष्णपण्डितैरयं ग्रन्थो विलिखित इत्यत्र केवलमीश्वरेच्छैव निदानमित्यत्र नास्ति
संदेहलेशोऽपि । " सनातनधर्मोज्जीविनीसभाया इतिहासः सुसूक्ष्मतया पर्यालोच्येत चेदिदं सत्वर-
मेव दृष्टिगोचरतामियात् ।

यदा हि समालोचनार्थं प्रहितो सनातनधर्मप्रदीपस्तदानीमेव धर्मस्य विचारो धार्मिक--
सामाजिक--राजनैतिक--ऐतिहासिकेति चतुर्विधदृष्ट्या कर्तव्यः । यतोऽग्रे संपादनीयः खल्वस्माकं
तादृशो निर्णायको ग्रन्थः । अतश्च समालोचनं पूर्वोक्तचतुर्विधदृष्ट्या विधाय विलिख्य च प्रेषणीय-
मिति प्रार्थितास्ते ते पण्डिताः । तदनुसारेण संस्कृताङ्ग्लप्रभृतिभाषामया बहवो निबन्धाः समा-
याताः । तत्र कै. अण्णासोपटवर्धनमहोदयानां विचारा निबन्धरूपेण सातारा नगरस्थैः श्री. गो.
रा. राजोपाध्येमहोदयैः प्रेषितास्तथा तैरेव स्वयमुपनिबद्धः पाश्चात्यराजनीतिनिदर्शको निबन्ध-
श्चास्मत्सविधे हस्तलिखितः प्रेषित इति द्वावपि महत्त्वपूर्णौ । अन्योऽपि पुण्यपत्तनस्थैः गो. म.
जोशीमहोदयैः प्रेषित एको निबन्धः । सर्वेषामेतेषां समीक्षणं धर्मादर्शे देवकृष्ण पण्डितैः कृतमिति
ततो विज्ञायते ।

प्रमाणप्रतिबिम्बः, नीतिप्रतिबिम्बः, चातुर्वर्ण्यप्रतिबिम्बः, विवाहप्रतिबिम्बश्चेति चतुर्भागात्म-
कोऽयं धर्मादर्शः । सनातनधर्मोज्जीविनीसभया समुपस्थापितानां सर्वेषां प्रश्नानां प्रायोऽत्र विचारः
समजनि । स च साधकबाधकप्रमाणपुरःसरत्वेन मार्गदर्शकश्चेति न संदेहः । इदमप्यत्र वैशिष्ट्यं यत्
सनातनधर्मप्रदीपेऽवशिष्टो राजनीतिविचारोऽप्यत्र नीतिप्रतिबिम्बप्रकरणमुपनिबध्य कृत इति । एव-
मन्येऽपि गभीरविचारपरिप्लुता बहवो विषया ग्रन्थकृताऽत्रोपनिबद्धाः । शास्त्रतत्त्वरहस्यं शास्त्री-
यमाषायां यथा सुविशदीकर्तुं पार्यते, न तथाऽन्यभाषायामिति संस्कृतशास्त्रीयभाषायामेवास्योपनि-
बन्धनम् । तत्रापि यावच्छक्यं लौकिकभाषाऽप्युपयोजिता । संस्कृतभाषामन्तरेदानीं सर्वेषां पण्डि-

तानामासेतु हिमाचलं विचारविनिमयो न संभवतीत्यगत्या प्रादेशिकभाषाः विहाय संस्कृतभाषावल-
म्बनमिति विज्ञेयम् ।

अस्य च हिन्दीभाषायामाङ्ग्लभाषायां चानुवादो विधेय इति किलाऽऽस्माकीनो विचारः ।
तथापीदानीं कालातिपातमसह्यमानैरस्माभिरेवं निर्धारितं यदाङ्ग्लभाषायां हिन्दीभाषायां
च प्रस्तावना देया । तत्र ग्रन्थस्य सारगर्भं रहस्यमखिलमपि निखिलैर्ज्ञातुं शक्यम् । एवं च
संस्कृतभाषानभिज्ञानामपि ग्रन्थरहस्यज्ञानेनोपकृतं स्यात् । अत एव चैवं बुद्धिपुरःसरं विनिश्चितम् ।

एवं ग्रन्थस्य व्यापकविचारपूर्वकसर्वाङ्गपरिपूर्तये यावच्छक्ति प्रयतितम् । प्राक्तनसनातनधर्म-
प्रदीपग्रन्थापेक्षयाऽत्र शास्त्रीयतत्त्वानां पूर्वोत्तरपक्षरूपेण निबन्धनं तु विदुषां प्रमोदमरमेवाऽऽवहेदि-
त्यत्र न विशयलेशोऽपि । एवं च विवेचनपद्धतिरियमादर्शभूतैवाधुनातनानाम् । वस्तुतस्तु बौद्धका-
लादारभ्याद्ययावत् धर्मविषयोऽयं सामाजिकतां राजकीयतां च न व्यभिचरतीति सिद्धान्तोऽयं
नेक्षापथं नीतः । ततश्च समाजस्य शासनप्रणाल्याश्च कीदृशो विनाशः संपन्न इति तु नाध्यक्षतां
व्यभिचरति । वयमप्यस्मदीयदण्डनीतितत्त्वमिदं सुधीरमुद्घोषयामो यत्—

आन्वीक्षिकी त्रयी वार्ता सतीर्विद्याः प्रचक्षते ।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ॥ इति ॥

एवमपि प्रत्यक्षं दरीदृश्यमानो दण्डनीतिविप्लवः समाजविप्लवश्च सोढः सह्यते सहिष्यते च ।
किमिदं भारतवर्षमेवमेव परकीयविचारदास्यपरधर्मयोश्च पारतन्त्र्यास्पदमेव सततं स्यादिति शङ्कायां
त्विदमेव वक्तव्यं भवेयत् भारतवर्षीयाणामान्वीक्षिकी या किल प्रदीपः सर्वविद्यानाम्, उपायः
सर्वकर्मणाम्, आश्रयः सर्वधर्माणामिति वर्ण्यते । तस्याः पुनरुज्जीवनमेवेदानीमावश्यकम् । येनेयं
परकीयविचारपारतन्त्र्यशृङ्खला निगडिता विशीर्येत । अतश्च सनातनवैदिकधर्मग्रन्थानां परिशीलनं
सामाजिकराजकीयतत्त्वदृष्ट्यापि विधेयं प्रचारणीयं चेदानींतनैः पण्डितैरित्येतदर्थमेवायमस्माक-
मायासः । अनयैव दृष्ट्या विरचितोऽयं धर्मादर्शः पण्डितैरीक्षापथमानेतव्यः प्रचारणीयश्चेत्यस्माकं
समभ्यर्थं विज्ञप्तिः ।

अनेन चायमनुयोगोऽपि प्रत्याख्यातो यदत्र किंवा नूतनमिति । इदं तु सत्यमेव यन्नात्र
कोऽपि सिद्धान्तो नूतनः प्रतिपादितः । परंतु पाश्चात्यशिक्षणपद्धत्या पाश्चात्यतत्त्वपरिशीलनशालि-
नामस्मदीयानामेव भारतवर्षस्य प्राणभूते वैदिकधर्मे या किल घृणादृष्टिः प्रादुर्भूता, यया प्राचीना
धर्मधारा देशाचाराश्च समूलमुन्मूलयितुं प्रवृत्तिरहर्निशं परिदृश्यते, तस्या निरासस्तु नाऽऽक्षेपपरिहार-
मन्तरा भवितुमर्हतीति तादृशाक्षेपपरिहारार्थमेवास्य ग्रन्थस्यावतारः । एवं चाक्षेपाक्रमणादिकं यदि-
दानीं वैदिकधर्मे वा वैदिकसमाजे वा भवति, यच्चैवं दुष्परिणामादिकं समाजे स्वैराचारविहारादिना

नीतिभ्रंशेन च दरीदृश्यते, तद्द्वारा च संस्कृतिविनाशस्य संभावना परिस्फुरति । तदेतत्सर्वमेतादृश-
ग्रन्थरचनामन्तरेण न परिहर्तुं शक्यमित्यत्र न कस्यापि प्रेक्षावतः संदिग्धम् । इदानीं हि परैरुद्भा-
वितानां युक्त्याभासानामालम्बेन सर्वत्र वैदिकधर्मेऽविश्वासः समजनि । धार्मिका अपि अर्थकामप्र-
धानयुक्तिभिर्भ्रमचित्ता धर्मे संदिहानाः किंकर्तव्यतामूढा दृश्यन्ते । अत्र च स्वधर्माज्ञानमेव
मूलनिदानमिति तन्निरासोऽपि कर्तव्य एव प्रेक्षावद्भिः । न चायं प्रवचनसमितिप्रचारादिना सुकरः ।
तात्कालिको जायमानोऽप्यज्ञाननिरासः परकीयप्रचारेणोपहन्यते । ततश्च पुनरपि संदेहावस्थानं
तदवस्थमेव भवति । विद्यालयद्वाराऽधीतिबोधाचरणप्रचाराः यद्यपि सुकराः । तथापि तादृशबुद्धि-
वैभवशालिनां छात्राणां लाभस्तु न सुलभः । मेधाविनो बालकाः पालकैः परकीयविद्यायाभे-
वाऽऽधीयन्तेऽर्थलाभतृष्णयेति न सोऽपि मार्गः फलेग्रहि संपद्यते । एवमपि विद्यालयाना नापेक्षेति नास्माकं
मतम् । प्रत्युत विद्यालयद्वारा यदि भारतीयसंस्कृतिप्रचुराणां ग्रन्थानामध्यापनं भवेत् तदैव खलु संस्कृ-
तिबोधाचरण प्रचाराः सम्यक्तया भवितुमर्हन्तीत्यत्र न कापि विप्रतिपत्तिः । सन्ति खलु सर्वत्र प्राचीनग्र-
न्थेषूपनिबद्धाः सामाजिका धार्मिका राजकीयाश्च विषया इतस्ततो विस्खलिताः । ततश्चैकीकरणे पृथक्
पृथक् उपनिबद्धं चेत्तत्तच्छास्त्रम् । तर्हि तु पठनपाठनसौकर्येण महानुपकारः स्यादित्यत्रापि न संश-
यितव्यम् । एवं च धर्मादर्शसदृशानामनेकेषां निबन्धानामिदानीमतीवाऽऽवश्यकतेति निश्चप्रचमेव ।
आङ्ग्लविद्यालयेष्वपि एतादृशां ग्रन्थानां पठनपाठनाभ्यां विना न भारतीयाना भारतीयत्वेनाभ्युदयः ।
अत एव सनातनधर्मोज्जीविनीसभया सनातनधर्मप्रदीप-धर्मादर्शावितिग्रन्थावुपरचितौ । अल्पोऽयं प्रयत्नः ।
नैतावता संपन्नमखिलम् । किंतु भारतीयसमाजस्य भारतीयत्वेनाभ्युदयार्थं समाजाङ्गभूततत्तच्छास्त्रा-
लोडनपूर्वकं तत्तच्छास्त्रीयसिद्धान्तानामितरपाश्चात्यशास्त्रतत्त्वापेक्षया समीचीनतमत्वमाविष्करणीयमि
दानींतनैः प्राचीनपण्डितैरितीयं कार्यधुरा बलादापतितैव तेषां शिरसि । न ह्येकेन सर्वं सर्वथा परिपूर्णं वा
कर्तुं शक्यम् । पुरुषबुद्धेः स्खलनशीलत्वात् । सोऽयमतिभारो नोह्यते चेत्प्राचीनपण्डितैः । सर्वथा स्वयं
नष्टाः परान् नाशयन्तीति न्यायानुसरणं भवेदिति सूक्ष्मेक्षिकया मनसि करणीयं पण्डितैः । अतश्चात्र
या किल न्यूनता वा प्रमादो वा, सर्वथा पण्डितैरेव परिहरणीयम् । प्राचीनैरपि शबरस्वामि-कुमारिलभट्ट-
शङ्कराचार्यप्रभृतिभिर्ग्रन्थोपनिबन्धनद्वारैव धर्मसंस्कृतिप्रचारो विहित इति तु न तिरोहितम् । एवमेव
तुकाराम—रामदास—तुलशीदासाद्यनेकसाधुवर्यैरपि व्यावहारिकभाषामयकाव्यग्रन्थानुपनिबध्यैव धर्म-
रक्षण कृतम् । आर्यसमाजाद्युद्भावितकुतर्कखण्डनार्थमपि ग्रन्थरचनैव बहुधा कृता क्रियते च ।
एवमेव पाश्चात्यैरुद्भाविताना तत्त्वाभासात्मककुतर्कोपपत्तीनां ग्रन्थद्वारैव खण्डनादिकमत्यावश्यक-
मित्यत्र तु कथं वा संदिहत इति तु न जानीमः । नूतनमतवादिनां मतप्रचार इदानीं
सर्वथा वाङ्मयायत्तो दृश्यमानोऽपि न परिह्रियते वाङ्मयद्वारा प्राचीनपण्डितैरिति तु
महदाश्चर्यास्पदं भाति । इदं तु सत्य यत्प्रचारोऽयमिदानीं द्रव्याधीनः । प्राचीनाना

## निवेदनम्

ताया बुद्धिभ्रंशो विधीयमान इदमेव दृढयति यत्सर्वथा धनमानप्रतिष्ठादिकमेव जीवितप्रयोजनमिति । तदर्थं चार्थ एव परमपुरुषार्थ इति मन्यमानेयं भारतीयजनता सर्वथाऽधोगतिमभियातीति साधूक्तं भर्तृहरिणा यत्—

जातिर्यातु रसातलं गुणगणस्तत्राप्यधो गच्छतु
शीलं शैलतटात् पतत्वभिजनः संदह्यतां वन्हिना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ इति ॥

सत्यामित्थं परिस्थितौ सर्वतः प्रसृमरायां सर्वेषां नैतिकोऽधःपातः। न कस्याप्युक्तौ विश्वासः न मान्यानामुपदेशे श्रवणकुतूहलिता, न पूज्यानां पूज्यता, नापि वेदशास्त्रेष्वादरणीयता, नापीश्वरे वा पुनर्जन्मनि वा विश्वसनीयता, नापि कर्मविपाके श्रद्धेयता, सर्वथा तु मतमतान्तरकलकलेनाऽऽलोड्यमानोऽयं भारतीयजनसमाजः कां वा गतिं प्रपद्येतेति स एव जानीयाच्छ्रीरुक्मिणीजानिः। अस्यां च परिस्थितौ न धर्मोज्जीवनस्य प्रत्याशा । एवमपि—

न जानपदिकं दुःखमेकः शोचितुमर्हति
अशोचन् प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥

इति महाभारतोक्तिमनुसृत्याकरणावस्थानापेक्षया मन्दकरणमपि श्रेय इति यावद्बुद्धिबलं प्रतीकारं चिन्तयमानोऽहं ग्रन्थप्रकाशनद्वारा प्रतीकर्तुं प्रवृत्तः । अत्र के वा प्रयासा आयातप्रत्याधातादयश्च सोढाः स्युरिति तु न निवेदनार्हम् । एवमपि कार्यमिदं संपन्नमित्यत्र ईश्वरेच्छैव बलीयसी । एवं च तस्यैव तत्रभवतो भगवतः श्रीपाण्डुरङ्गस्य श्रीगुरुचरणानां चेच्छया यावान् कार्यभारो मया वोढव्यस्तावानूढ एव । तदेवं कार्यं भगवतस्त्रिभुवनगुरोः सर्वान्तर्यामिणो जगच्चालकस्य परमदयालोर्भक्तकामकल्पद्रुमस्य प्रभोः श्रीपाण्डुरङ्गस्य चरणयोः समर्प्य विरमामि—

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात् । करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ इति ॥

अन्ते च यैर्महाभागैरस्मिन् कार्ये साहाय्यकमाचरितं तेषामभीष्टचिन्तनमपि मे कर्तव्यतामापततीति तत्संपादनमत्यावश्यकम् । तत्र प्रथमतस्तावत् अमळनेरस्थतत्त्वज्ञानमन्दिरे अध्यापकत्वेन वर्तमानानां निखिलतन्त्रस्वतन्त्राणां श्री. आत्मारामशास्त्रिणां जेरेइत्युपाह्वयानां यद्ग्रन्थप्रणयनप्रणालीनिर्णये साहाय्यं संजातम् । तत्तु वाचामगोचरमेव । एतैर्हि महाभागैः पञ्चदशादिनान्यवस्थाय निःपक्षपातितया धर्मादर्शस्य हस्तलिखितः प्रमाणप्रतिबिम्बो वाचितः साकल्येन । तत्र च देव-

## निवेदनम्

ताया बुद्धिभ्रंशो विधीयमान इदमेव दृढयति यत्सर्वथा धनमानप्रतिष्ठादिकमेव जीवितप्रयोजनमिति । तदर्थं चार्थ एव परमपुरुषार्थ इति मन्यमानेयं भारतीयजनता सर्वथाऽधोगतिमभियातीति साधूक्तं भर्तृहरिणा यत्—

जातिर्यातु रसातलं गुणगणस्तत्राप्यधो गच्छतु
शीलं शैलतटात् पतत्वभिजनः संदह्यतां वन्हिना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ इति ॥

सत्यामित्थं परिस्थितौ सर्वतः प्रसृमरायां सर्वेषां नैतिकोऽधःपातः। न कस्याप्युक्तौ विश्वासः न मान्यानामुपदेशे श्रवणकुतूहलिता, न पूज्यानां पूज्यता, नापि वेदशास्त्रेष्वादरणीयता, नापीश्वरे वा पुनर्जन्मनि वा विश्वसनीयता, नापि कर्मविपाके श्रद्धेयता, सर्वथा तु मतमतान्तरकलकलेनाऽऽलोड्यमानोऽयं भारतीयजनसमाजः कां वा गतिं प्रपद्येतेति स एव जानीयाच्छ्रीरुक्मिणीजानिः । अस्यां च परिस्थितौ न धर्मोज्जीवनस्य प्रत्याशा । एवमपि—

न जानपदिकं दुःखमेकः शोचितुमर्हति
अशोचन् प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥

इति महाभारतोक्तिमनुसृत्याकरणावस्थानापेक्षया मन्दकरणमपि श्रेय इति यावद्बुद्धिबलं प्रतीकारं चिन्तयमानोऽहं ग्रन्थप्रकाशनद्वारा प्रतीकर्तुं प्रवृत्तः । अत्र के वा प्रयासा आघातप्रत्याघातादयश्च सोढाः स्युरिति तु न निवेदनार्हम् । एवमपि कार्यमिदं संपन्नमित्यत्र ईश्वरेच्छैव बलीयसी । एवं च तस्यैव तत्रभवतो भगवतः श्रीपाण्डुरङ्गस्य श्रीगुरुचरणानां चेच्छया यावान् कार्यभारो मया वोढव्यस्तावानूढ एव । तदेवं कार्यं भगवतस्त्रिभुवनगुरोः सर्वान्तर्यामिणो जगच्चालकस्य परमदयालोर्भक्तकामकल्पद्रुमस्य प्रभोः श्रीपाण्डुरङ्गस्य चरणयोः समर्प्य विरमामि—

कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वाऽनुसृतस्वभावात् । करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ इति ॥

अन्ते च यैर्महाभागैरस्मिन् कार्ये साहाय्यकमाचरितं तेषामभीष्टचिन्तनमपि मे कर्तव्यतामापततीति तत्संपादनमत्यावश्यकम् । तत्र प्रथमतरतावत् अमळनेरस्थतत्त्वज्ञानमन्दिरे अध्यापकत्वेन वर्तमानानां निखिलतन्त्रस्वतन्त्राणां श्री. आत्मारामशास्त्रिणां जेरेइत्युपाह्वयानां मद्ग्रन्थप्रणयनप्रणाडीनिर्णये साहाय्यं संजातम् । तत्तु वाचामगोचरमेव । एतैर्हि महाभागैः पञ्चदशदिनान्यवस्थाय निःपक्षपातितया धर्मादर्शस्य हस्तलिखितः प्रमाणप्रतिबिम्बो वाचितः साकल्येन । तत्र च देव-

कृष्णपण्डितैः सह विचारविनिमयं विधाय ग्रन्थस्य शुद्धिः समासादिता । एतत्सर्वं देवकृष्णपाण्डितानामाग्रहेणैव संजातमिति तेषां सन्मित्रत्वमुद्भावयद्भिरेतैर्महाभागैः सम्यगेवोपकृतमिति शं विदधातु भगवान् रुक्मिणीपतिस्तेषाम् ।

अनन्तरं मे कनियांसो भ्रातर उद्धवमहाराजाः कर्तव्यतया साहाय्यसंपादनदक्षाः । एतैश्च मत्कृते यदायासितं तत्तु न वर्णनार्हम् । इदं तु सत्यं यद्विना बाहुबलं यः कोऽपि किमपि कर्तुमसमर्थ एवेति न स्याच्चेदेतेषां साहाय्यं नान्तमियादिदं कार्यमिति पाण्डुरङ्गकृपया तेषां धर्माभ्युदयः स्यादित्याशासे ।

एवमेव तळोदाग्रामस्थाः स्वनामधन्या श्री. ओंकारदास किशोरदास चौधरीमहोदयाः प्रारम्भत एव सभाया मन्त्रिपदमलंकृत्य तनुधनमनोभिः साहाय्यकं विदधाना धन्यवादार्हाः । एते च परमश्रद्धालवो महाकुलप्रसूता महावदान्याः । गोदानादिमहादानेन च ब्रह्मण्यानामेतेषां शं विधाता विदध्यादिति प्रार्थये भगवन्तं राधावल्लभम् ।

यैस्तु महाशयैर्धर्मादर्शमुद्रापणे द्रव्यसाहाय्यं वितीर्णं तेषा नामानि—

| | |
|---|---|
| रु. १००० | ओंकारदास किशोरदास चौधरी, तळोदा. |
| रु. १००० | गोविंद रमाकांत ( आण्णासाहेब ) पाठकमहोदयाः, प्रकाशे. |
| रु. १००० | दामोदर हरकलालश्रेष्ठिमहोदयाः, बिरदेल. |
| रु. १००० | शंकर तुळसीदास श्रेष्ठिमहोदयाः, अमळनेर. |
| रु. १००० | निवृत्ति शिवशङ्कर सराफमहोदयाः, नन्दुरबार. |
| रु. २००० | श्री. उद्धवमहाराजाः, कुकरमुण्डा. |
| रु. ०३०० | भुवनमाई कपुभाई सराफमहोदयाः, नन्दुरबार. |
| रु. ०१२६ | चंदुलाल हरिदास चौधरी श्रेष्ठिमहोदयः, तळोदा. |
| रु. ०२५० | छगनलाल नरोत्तमदास श्रेष्ठिमहोदयः, कोपरली. |

एवमेव शहादा, कुकरमुण्डा, तळोदा, प्रकाशा, नन्दुरबार, नवापुरप्रभृतिषु ग्रामेषु संवसद्भिः स्वल्पधनिकैर्बहुभिर्यथाशक्ति यत्नेन साहाय्यं संपादितम् । तेषां सर्वेषाममीष्टं पुण्यात्वहर्निशं भगवान् रमारमणं इति प्रार्थये ।

एवमेव पुण्यपत्तनस्थाः भगवान् विष्णु पुरन्दरेमहाभागा अतीव धन्यवादार्हाः । अद्यापि कराले कलिकाले आदर्शभूता गार्हस्थ्यपदवी द्रष्टव्या चेदेतेष्वेव । सरलस्वभावतया अभ्यागतसंमाननया निर्व्याजश्रद्धया निरुपमदाक्षिण्येनाभिजातकुलोद्भवेन चैतेषां मुद्रापणकार्ये मुद्रालयनिर्धारण

—पत्रसंपादन—आयव्ययनिरीक्षणविशिष्टकार्यमन्त्रण—तत्सुचन—तदनुष्ठानादिना च परिश्रमेण यत्साहायकमाराचितमेतैर्निर्व्याजं निष्प्रयोजनं च। तत्र नाभीष्टचिन्तनादृतेऽस्ति मे' सविधेऽन्यदिति भूयो भूयः संप्रार्थये एतेषां कुलाभिवृद्धये धर्माभ्युदयाय भगवन्तं पाण्डुरङ्गम्।

एवमेव उपरितनमुद्रापणाद्यखिलकार्येषु सहभागिनो महाभागाः पुण्यपत्तनस्थाः श्री वल्लभदास चुनीलाल महोदया अपि धन्यवादार्हाः। यद्यप्येते पुष्टिसंप्रदायानुयायिनः, तथाप्याभ्युदयिकधर्मे एतेषां परमश्रद्धामालोक्याद्यापि जागर्ति भगवान् जानकीजानिरिति निर्भरं प्रमोदभरमावहति चेतः। भूयादेतेषामभ्युदयोऽनवरतमित्याशासे।

अपरैरपि नन्दुरबारवास्तव्यैः श्री. मोतीलाल ब्रिजलालदास, कै. सूरजराम उमाशङ्कर ओझा, मधुसूदन माणिकलाल त्रिवेदी वकील, प्रेमशङ्कर शिवशङ्कर देसाई, शिवशङ्कर निवृत्तिनाथ सराफ, भुवनभाई कथ्थुभाई सराफ वकील, विठ्ठलभाई नथुभाई सराफ, इत्यादिभिर्महाभागैर्यत्साहाय्यमनुष्ठितम्। तेऽपि धन्यवादार्हाः।

नागपूरस्थैः स. मा. पराण्डेमहोदयैस्तथा पण्ढरीस्थैः भगवानूशास्त्रिधारूरकरमहोदयैरेवं पुण्यपत्तनस्थैः वासुदेवशास्त्रि अभ्यङ्करमहोदयैः सूचनोपसूचनाद्वाराऽतीवोपकृतामिति सविनयं सूचयामि।

यैस्तु महाभागैर्मुद्रितपत्राणां शुद्धिसंपादनं विहितं परमदाक्षिण्येन निर्लोभतया च, ते परमपूज्याः स्वनामधन्याः मारूळकरशास्त्रिमहोदयाः। तेषामभ्युदयानिःश्रेयससिद्धिरुत्तरोत्तरं वृद्धिमियादिति संप्रार्थये जगन्नाथं धन्यवादपूर्वम्। एवमेव आर्यसंस्कृतिमुद्रालयस्वामिभिर्यथावसरं मुद्रापणमप्रमादेन सम्यक्तया चानुष्ठितामिति तेषां धन्यवादपूर्वकमभ्युदयमभ्यर्थये।

अन्ततो गत्वाऽन्तिममावेदनमिदमेव यदेतस्य धर्मादर्शस्य प्राणभूताः प्रणेतारो देवकृष्णपण्डिता एव। सत्यमेते केवलं प्राणा एव न प्राणभूताः। इद तु सत्यं यद्विद्यमाना अपि प्राणा हस्तपादमन्तरा न कार्यसंपादने समर्थाः। एतैस्तु पण्डितैर्विना हस्तपादं विरचितोऽय ग्रन्थः। शास्त्रीयग्रन्थविरचनावसरे समुन्मिपन्ति किल बहूनि शङ्कास्थानानि। तदानीमपरैस्तज्ज्ञैर्विचारविनिमयः कर्तव्यो भवति। तत्र प्रदेशे तु न सन्निहितः कश्चन तादृशः पण्डितः। न वा कश्चन सम्यक्तया संस्कृतलेखकोऽपि। केवलं प्रथमभागस्यावलोकनं जेरेशास्त्रिभिः कृतम्। विधिवशाद्वा द्रव्याभावाद्वा सर्वस्य ग्रन्थस्यावलोकनसाहाय्ये न पण्डितोऽपरः समुपलब्धः। अस्माभिरप्यत्र विषयेऽनादरः कृतः। लेखकोऽप्यपरो न दत्तः। येन मुद्रापणयोग्यं विलेखनं स्यात्। प्रथमभागो यद्यपि विठ्ठलशास्त्रिव्यवहारेमहोदयैर्विलिखितो मुद्रणयोग्यः। तथाप्यपरेषां भागानां विलेखनप्रया-

सस्तु देवकृष्णपण्डितैरेव सोढः। अतश्च हस्तपादमन्तरापि प्राणमात्रेण कार्यसंपादनमिवैतेषामिदं कार्यमिति प्राणभूतानामेतेषां पण्डितमहाराजानामतीवोपकारः संजातो जनताया उपरीति न विस्मर्यते। तदत्र कथं वा प्रत्युपकरणीयमिति दोदूयते चेतः। पण्डितोचितं जीवननिर्वाहस्वास्थ्य-मपि नाद्यावध्यधिगतमेतैः। नाप्यस्माभिस्तथा कर्तुं पार्यत इति अन्ततो गत्वा साञ्जलिबन्धं साशिरः-प्रणामं च संभावयामीत्यलमतिविस्तरेण।

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥ इत्याशासे।

अन्ते च यस्य चरणकृपयाऽय ग्रन्थनिर्माणभारो निर्व्यूढस्तस्य श्रीभगवतो भक्तकामकल्पद्रुमस्य पांडुरंगस्य श्रीगुरोश्च चरणारविन्दयोरनन्तसाष्टांगप्रणामपूर्वकमेतद्भगवत्सेवारूपकार्य समर्पणमेव प्रधानं कार्यं विरचय्य विरमामि इति शम्।

विदुषां विधेयतमः

श्रीसन्तोजीमहाराज

सनातनधर्मोज्जीविनीसमायाः संचालकः प्रतिष्ठापकश्च

॥ श्रीः ॥

# ग्रन्थसमुद्देशः ।



प्रथमत एव खल्वियं शङ्का समुदियान्निखिलतन्त्रसिद्धान्तपरिनिष्ठितशेमुषीणां सकललोकसंस्थितिव्यवहारचातुरीचतुराणां निःशेषकर्मविपाककलाकोविदानां समवधूतार्थकामाद्यनुगुणराद्धान्तमनीषालब्धवर्णानां तत्रभवतां प्रज्ञाचक्षुषां विदुषां यत्सत्सु किल बहुषु जैमिनिशबरकुमारिलाद्याचार्यप्रणीतप्रबन्धेषु किमर्थं पुनरयं ग्रन्थविरचनाटोप इति । तदत्र किमप्यप्रतिसमाधाय कार्यमिदं न पूर्णतामावहेदिति किंचित्प्रस्तूयते । विद्यार्जनादारभ्य शोश्रूयमाणोऽयं देशकालपरिस्थितिमूलकधर्मपरिवर्तनवाद एवात्र मूलनिदानम् । यदि धर्मो, न परिवर्तनीयः । यदि च परिवर्तनीयो, न धर्मः । नहि शैत्यौष्ण्यादिधर्मा जलादीनां परिवर्तयितुं पार्यते कश्चिदपि । धर्मो हि सर्वत्र मानवानामिति जेगीयतेऽस्मच्छास्त्रेषु । स्मिरतादिभिरपि न धर्मस्य देशकालव्यक्तिपरिच्छिन्नं स्वरूपं प्रतिपाद्यते यथा हि मनुप्रोक्तत्वमेव मानवधर्मशब्दस्य प्रवृत्तिनिमित्तम् । एवमेव मनोरपत्यत्वमेव मानवशब्दप्रवृत्तिनिमित्तम् । एवं च यावन्मानवानां मानवत्वं न परिवर्तते । तावद्धर्मोऽपि न परिवर्तते । धर्मपरिवर्तने हि पदार्थान्तरत्वमापद्यते । न हि शैत्यापगमे सर्वथा जलस्य जलत्वं वौष्ण्यापगमे तेजसस्तेजस्त्वं वा विज्ञानवादिभिरप्यभ्युपगम्यते । तत्कथमयं परिवर्तनवादो धर्मविषये जोघुष्यत इति मे मनसि महानयं शङ्काकोलाहलः समुन्मिषति स्म । तदपाकरणार्थं प्रवृत्तोऽहमजानामस्य वादस्य मूलकारणं यत् पारतन्त्र्यापोहमूलकस्वराज्यलाभाशेति । तच्च स्वराज्यं लब्धमिदानीमिति मन्यते । तत्रापीयमाशङ्केदानीमपि तदवस्थैव यत्स्वराज्यं नाम कस्य राज्यमिति । यदि स्वस्य स्वकीयं वा। तर्हि के स्वे किं वा स्वत्वम् । यदि मानवास्तर्हि मानवानां राज्यं पुराऽप्यासीदेव । आङ्ग्लानामपि मानवत्वाविशेषात् । यदि भारतीया एव स्वपदवाच्यास्तर्हि किं नाम भारतीयत्वम् । यदि च भारतदेशवासित्वं भारताभिजनत्वं वा भारतीयत्वम् । एवमपि माहम्मदादिष्वपि तदविशेषात् किमर्थं तर्हि देशविभागेन राज्यविच्छेदः । किमर्थं वेदानीमप्यत्रत्यानां माहम्मदानां राज्यविषये विप्रतिपत्तिः । ननु मौर्ख्याद्वाऽभिनिवेशाद्वा न तैस्तथा संमन्यते भारतीयत्वमिति चेन्न संमन्यत इत्यस्य कोऽर्थः । अस्माभिर्निर्धारितं तैर्न संमन्यते वा? वस्तुगत्यैव भारतीयत्वमन्यदिति वा? नाऽऽद्यः । प्रमाणनिर्धारितस्यापलपितुमशक्यत्वात् । समानधर्मणामपि देशमूलकवैशिष्ट्येन वैशिष्ट्यं भवति । यथाऽऽङ्ग्लानामाङ्ग्लत्वं, अमेरिकनानाममेरिकनत्वम् । एवं

देशैक्येऽपि विभिन्नसंस्कृतीनां वैशिष्ट्यं नापलापमर्हति। यथा सत्यपि देशैक्ये आङ्गलत्वं स्काटिशत्वं च। सत्यपि देशैक्ये भारतीयत्वं माहम्मदत्वं चान्यदपि स्यात्। अत एव न राज्यैक्यं माहम्मदैरङ्गीकृतमित्यपि सुवचम्। अतश्च वस्तुगत्यैव भारतीयत्वमन्यदेवेत्यभ्युपगन्तव्यम्। अत एव भारतवर्षं विहायाफ्रिकावास्तव्यानां भारतीयत्वं नापगच्छति। एवमेव स्वधर्मं विहाय परधर्मप्रविष्टानामपि न तदपगमः। नहि अत्रत्या माह्म्मदमतप्रविष्टास्तुर्कैस्तुर्कत्वेन संमन्यन्ते। अफगाणैरफगाणत्वेन वा। एवं च भारतीयत्वमिदं माह्म्मदादिव्यावृत्तं वंशपरम्परयापि भारतीयेषु वर्तमानं न केवलं प्रदेशनिबन्धनं भवितुमर्हति। किंत्वन्यदेव किंचित्तत्र प्रयोजकमवश्यमेवोरीकरणीयमिति सिध्यति।

## ( भारतीयत्वविमर्शः )

किं तदिति विचार्यमाणेऽनेकवर्षपर्यन्तं संदेहदोलारूढं मे चेतश्चेतस्ततः परिभ्रमति। अन्ततस्तु भारताभिजनत्वे सति विशिष्टसंस्कृतिमत्त्वमेव भारतीयत्वमिति निश्चयपदमारूढं मे मानसम्। तत्रापि का नाम संस्कृतिः, किं च तस्या वैशिष्ट्यमिति शङ्कातादवस्थ्यमेव। तत्र संस्कृतिः संस्कारः। स च सर्वकर्मारम्भमूलम्। एवं च वेशभाषाभूषादिकमारभ्य मरणपर्यन्तं ये व्यवहारा भारतीयैः क्रियन्ते। तन्निदानभूता बुद्धिगता भावनैवेति तादृशभावनाविशिष्टत्वे सति भारताभिजनत्वं भारतीयत्वमित्यत्र न प्रायो विप्रतिपत्तिः। एवं च यया भावनया भारतीयो निर्विद्यते, यया संमन्यते, यया माद्यति, यया क्रोधवशमायाति, यया च संतुष्यति, ययाऽऽनन्दकाष्ठामागच्छति, यया च दुःखान्यपि सुखासनान्यभिमन्यते, यया शत्रुभावमापद्यते, यया मित्रतामुपगच्छति, किं बहुना सर्वस्या अपि भोग्यसंपत्तेरुपभोगो यया भावनयाऽनुभूयते सुखास्पदत्वेन दुःखास्पदत्वेन च। तासां सर्वासां भावनानां वैशिष्ट्यमितरपरिच्छेदेन भारतीयेषु यद्दृश्यते, तदेव भारतीयत्वप्रयोजकमिति मे राद्धान्तः। न हि भारतीयः पादत्राणसहितं भोजनमाददाति। न वा पादत्राणयुक्तोऽभिवन्दते। न वा परपूर्विकां स्त्रियमभिनन्दति न वा भोजनेऽन्योन्यसंपर्कं वा एकामत्रभोजनं वाऽभिनन्दयति। नापि मुक्तकच्छो देवताराधनादिकं प्रशस्तं मन्यते। नाप्यभ्यागतादीनामवमाननं श्रेयस्करं पश्यति सत्यपि जात्याचारकुलभेदे। किं बहुनां यस्य सर्वेऽपि व्यवहारा अर्थकामविषयका अपि नार्थकामौ पुरस्कृत्य तदेकदृष्ट्यैव प्रवर्तन्ते। किंतु सर्वान्तर्यामिभगवत्समाराधनैकदृष्ट्यैव। अत एव शवदहनसमयेऽपि गतासोर्देहस्य "असौ स्वर्गाय लोकाय स्वाहा" इत्याहुतिप्रदानं क्रियते। अत एव च भक्ष्यान्नेयत्वाविशेषेऽपि केषांचित् किंचिदेव भक्ष्यं पेयं चेति विवेको भारतीयानाम्। एवं गम्यगम्यागम्यादिविवेकोऽपि। नहि मांसमिति कृत्वैव सर्वथा त्याज्यं सर्वेषां भारतीयानाम्। नैतावता ब्राह्मणानां तत्र ग्राह्यत्वं भक्ष्यत्वेन। नाप्यन्नमिति सर्वथा सर्वेषां ग्राह्यम्। तादिदमखिलं किंनिदानं रूपादिना भावनाम्। न हि हिताहितभावनामन्तरेतादृशो विवेकः संभवति। एवं चेता हिताहि-

तभावना एव हेयोपादेयताविवेकमापादयन्तीति सुविशदमेव। एतन्मूलक एव संस्कृतिभेदः समाजभेदश्च भवति। तत्र वेषभाषाभूषाभिर्जायमानो विशेषः केवलं प्रादेशिकभेदमेव संपादयेत्। संस्कृतिभेदस्तु भोग्यसंपत्तेर्विनियोगपद्धतिभेदेनैव भवति। नान्यथा। अत एव मांहाराष्ट्राणां वङ्गानामान्ध्राणां कार्णाटकानां वा सत्यपि वेशभाषाभूषाभेदे न संस्कृतिभेदः। न तथा माहम्मदादीनाम्। भोग्यसंपत्तेर्विनियोगभेदस्य सत्त्वात्। त एते विशिष्टाः संस्कारा युक्ता वाऽयुक्ता वेति विचारस्त्वन्य एव। परं च विद्यमानानामेतेषामपलापस्तु सर्वथा विगीत एवेत्येव निश्चप्रचम्। न हि सर्वेषां मानवानां समानसंस्कारवत्त्वं केनापि कदापि संपादयितुं सुशकम्। सृष्टेर्वैचित्र्यात्। स्वभावतो हि विचित्रा सृष्टिः स्वाभाविकवैचित्र्ययुक्तैर्भावैः परिपूर्णा न साम्यमापादयितुं शक्या। तथा च तत्तद्भावनासाम्ये व्यवहारसाम्यम्। ततश्च समाजसाम्यम्। तदेव च समाजैकत्वेन व्यपदिश्यते। तत्सिद्धं भारताभिजनत्वे सति विशिष्टसंस्कारवत्त्वमेव भारतीयत्वमिति। तद्यदि एतादृशां भारतीयानां राज्यं स्वराज्यम्। तदा तु येन भारतीयत्वमुपहन्येत, तादृशं परिवर्तनं तु सर्वथा हेयमेवेत्यपि सिध्यति।

## परिवर्तनवादः

अत्र कश्चन प्रत्यवतिष्ठेत परिवर्तनवादी—न वयं तादृशं परिवर्तनमभिलषामः। किंतु यैर्व्यवहारैः समाजस्याधःपातो भवति। तादृशान् व्यवहारान् निरुध्य समाजपोषकान् व्यवहारान् प्रवर्तयितुमिच्छाम इति। अत्रेदं प्रष्टव्यं यत् कैर्वा व्यवहारैः समाजस्याधःपातः, कैश्च परिपुष्टिः किंचात्र गमकमिति। यदि पारतन्त्र्यं दारिद्र्यं द्वेषमात्सर्यादिकलुषितत्वं समाजस्याधःपातः, तद्विरुद्धश्च स्वातन्त्र्यं वैभवं परस्परप्रेमभावोऽन्योन्यसहकारितेत्येवमादिकः समाजस्योत्कर्षः। एवं चोत्कर्षापकर्षावेव तादृशव्यवहारप्रवर्तनगमकौ। तत्रोत्कर्षो नाम बलम्। अपकर्षश्च दुर्बलता। बलाबले च द्विविधे कायिकमानसिके। तत्र कायिकबलसंपादनं भोग्यसंपत्तिप्राचुर्यमूलकम्। भोग्यसंपत्तिप्राचुर्याभावस्तु भोक्तॄणां बाहुल्येन। तदिदं भोक्तृबाहुल्यं निराकरणीयं चेद् द्वेधा संभवति तन्निराकरणम्। विद्यमानप्रजाघातेन। प्रजासमुत्पत्तिनिरोधेन। प्रजाघातस्तु युद्धेन वा रोगेण वा विषादिना वा तत्केन प्रकारेण प्रजाघातमिच्छत्ययं परिवर्तनवादीति जोघुष्यतां सः। यदि च जन्मसिद्धमेव प्राबल्यमपेक्ष्येत प्रजायास्तेन। तर्हि तदभिमतेन केन प्रबलेन नियोगमिच्छति स्त्रिया इत्यपि वक्तव्यम्। तथोदाहरणार्थं च तेन स्वयमनुष्ठेयं च येन दृष्टान्तभावमापाद्यान्वयव्यतिरेकौ सिद्धौ स्याताम्। प्रजासमुद्भवनिरोधेन चेदपाकरणीयं भोक्तृबाहुल्यं तदा निरोधोऽयं कथं संपाद्यते तद्वक्तव्यम्। किं सर्वेषां स्त्रीपुरुषाणां कृत्रिमोपायैर्वन्ध्यात्वसंपादनद्वारा वा भवदभिमतदुर्बलानामेव वन्ध्यत्वसंपादनद्वारा। तृतीयः

संयमपक्षस्तु भवदभिमतनिसर्गविरुद्ध इति नोच्यते। द्वितीयं मानसिकं बलं चेत्संपादनीयं समाजोत्कर्षार्थम्? तदा तु त्यागो नीतिमत्ता ज्ञानं संयमादिकं च संपादनीयम्। त्यागश्च भोगेच्छासंयममन्तरा दुरुपपादः। भोगेच्छासंयमश्च भोगेषु दोषदृष्टिं विना दुःशकः। तादृशदोषदृष्टिश्च शास्त्रज्ञानमन्तराऽनुपपन्ना। शास्त्रज्ञानं चासंभावनाविपरीतभावनानिरासमन्तरेणासंभवि। तादृशनिरासश्च चित्तशुद्धिमन्तरा दुर्विधेयः। चित्तशुद्धिश्चाऽऽचारधर्मं विना न संभवतीति प्रथमत आचारधर्मा एव सादरमनुष्ठेयाः। न तेषां परिवर्तनम्। आचारशब्देन चात्र संस्कृतिपदवाच्याः सर्वेऽपि व्यवहारधर्मा गृह्यन्ते। एवं च संस्कृतिसंरक्षणमेव प्राथमिकं कर्तव्यं समापतति। तच्चादौ केवलश्रद्धायत्तमेव। उपपत्त्या समर्थने तु प्रथमग्रास एव मक्षिकापक्षपातः स्यात्। न हि पञ्चवर्षदेशीयस्य सप्तवर्षदेशीयस्य वा बालस्य प्रथमत एव सर्वं सोपपत्तिकमध्यापयितुं शक्यम्। न वा सैनिकेभ्यो दीयमान आदेशः सर्वत्र सोपपत्तिक एवोपवर्णयितुमर्हः। न वा प्रतिपाद्यमानाप्युपपत्तिर्नीतिविदामुपपत्तित्वमावहति। वर्णितं चात्र चाणक्येनार्थशास्त्रे उपजापप्रकरण इति तत्रैव कणेहत्य समीक्षणीयम्। वयं तु भारतस्याभिजनत्वं मन्यमाना अप्युत्तरध्रुवप्रदेशवास्तव्यतां परकीयैरुपवर्ण्यमानां सादरमनुमन्यामहे। भारतीयादिवासिवर्गं त्वन्यं मन्यामहे। ततश्चाङ्ग्लानामिवास्माकमपि भारतवास्तव्यताया अधिकारो वर्तते न वेति पर्यनुयोगे किं वाऽऽधुनिकन्यायदृष्ट्योत्तरम्? किंबहुना निखिलकर्मणां मूलनिदानं श्रद्धैव वर्तते। यद्वि परिवर्तनस्यापेक्षणम्। तदपि श्रद्धामूलकमेव। न हि परिवर्तनस्य श्रेयसा प्रेयसा वाऽन्वयव्यतिरेकाभ्यां कार्यकारणभावोऽद्यावधि केनापि निर्धारितो निर्धार्यते निर्धारयिष्यते वा। सर्वाण्यपि प्राचीनानि समाजबन्धनानि निरस्य स्वैरं विहरतां मद्यमांसाशिनां परिवर्तनवादिनां किं वा श्रेयो वा प्रेयो वा सिद्धमिति तु न निश्चेतुं पार्यते तैरपि। केवलं वैयक्तिकेच्छापरिपोष एवान्ततो गत्वा प्रेय इत्येव तेषामभिमतम्। एवं च वैयक्तिकेच्छापरिपूर्तये समाजबन्धनान्यपसारयतां तेषां समाजोत्कर्षापकर्षप्रदर्शनमिदं स्वैराचारकञ्चुक एव। न हि श्रद्धामन्तरा स्वैराचारोऽपि सुखावहो भवति। सुखस्य भावनामात्यत्वेन तदनुकूलश्रद्धामूलकत्वात्। पाश्चात्यस्त्रीणां परपुरुषसंसर्गः सुखावहोऽपि भारतीयमहिलानां तस्य दुःखापादकत्वे श्रद्धैव निदानमित्यकामेनाप्यभ्युपगन्तव्यम्। तादृशश्रद्धावासितान्तःकरणानां महिलानां कष्टान्येव पुरुषाणां प्राणत्यागेनापि शत्रोरुच्चाटने उत्साहमुपजनयन्ति वीरतां चाविर्भावयन्ति। नो चेत्कुत्रापि श्रद्धा, किं नश्छिन्नमित्युदासीनतैवाधुनातनोदासीनतावत् प्रसरेदिति सुदूरमालोचनीयम्। अस्माकं स्त्रियोऽपह्रियन्ते बलाद्भुज्यन्ते देवायतनानि विनाश्यन्ते, गोघातः क्रियते, पूर्वजानां निन्दा विधीयते, धर्मसेतवो भज्यन्ते, मद्यमांसव्यवहारः प्रसार्यते, किं बहुना पाठशालासु पाठनावसरे यथावदनुशासनं वा पाठनं वा मास्तु नाम। केवलं परीक्षणावसरे पत्रोपरि लिखितं चेत् सम्यक् प्रचलतीति यत्र विद्यापरीक्षणं न प्रमाणमपि तु शिष्यकाणां भवति। अत्र सर्वत्र "भवतु किं नश्छिन्नम्" इत्युदासीनतैव

कारणम्। अत्र यदि तत्तद्विषये सम्यक् श्रद्धा स्यात्तदा तु विद्याबलस्य शरीरबलस्य चोत्कर्षः सम्यगेवाविर्भवेत्। सैव तु विनाशिता विनाश्यते च। अत्र च विषये इतिहासः पुरस्क्रियते प्रमाणत्वेन। ऋषिभिरपि स्त्रियोऽपहृता बलाद्भुक्ताः मद्यमांसाशनमपि कृतम्। मूर्तिपूजा न वैदिकी। धर्मसेतुभङ्गोऽपि कालौघेन तत्र तत्र कृत एव। पूर्वजनिन्दनं तु न पूर्वजत्वेन, किंतु मूर्खत्वेन। अत एव केनचिद् यूना ऋषिणा वृद्धा अपि ऋषयो बालत्वेन व्यपदिष्टाः। इत्येवमादीनामितिहासवृत्तानां पुरस्कारेण संपादितं श्रद्धाशैथिल्यमेव दुर्बलताहेतुः। इतिहासे हि नीतेरिवानीतेरपि प्रतिपादनं भवति। तदत्र किंवाऽभ्युदयनिःश्रेयसकरमित्यविविच्याऽऽपातरमणीयं गृह्णाना भारतीयाः स्वार्थान्न भ्रश्येयुश्चेन्महदाश्चर्यं स्यात्। एवं च दुर्बलताकारणस्य श्रद्धाशैथिल्यस्य पुरस्कारं विदधानाः कथं प्रबलतामावहेयुरिति भगवानेव जानीयात्। एवमपि आधुनिकराजकीयाग्रणीनां विचारेषु वचनेषु च जनानां श्रद्धामपेक्षमाणास्तदर्थं च प्रयतमाना अप्येते न जिह्रियत इत्यहो किमाश्चर्यमतःपरम्। कूटापणव्यवहारेण तु सुविशदमेवेदम्। शर्करोत्पादनमपूर्णमिति तद्विभजनम्। तथापि कूटापणेन लक्षगोणीपरिमिता शर्करा परदेशे गच्छति। एवमपि शर्कराया उत्पादनं न सर्वेषां कृते परिपूर्णमिति श्रद्धेयं तेषां वचनम्। एवं च मानसिकबलमन्तरेण न शारीरिकं बलं संभवति। मानसिकबलनिदानं तु श्रद्धैव सा चेद्दृढीकरणीया, न दृष्टफलोपभोगाभिलाषेण तथा कर्तुं शक्यते। अन्ततस्तु दृष्टार्थापि साऽदृष्टार्थपुरस्कारेणैव दृढा भवतीति प्रसिद्धमिदं सेनानां समुत्साहे। न मरणानन्तरं मृतस्य कोऽपि भोगः। एवमपि मरणस्यैव कर्तव्यतयाऽऽवश्यकतां प्रतिपादयन्तः किंवा दृष्टं फलं प्रदर्शयेयुः। यदि देशोत्कर्षः कुलोत्कर्षः। तथापि मृतस्य को वा देशः, किं वा कुलमित्यनुयोगे किमुत्तरम्। भवतु पूर्वजानां शौर्यम्, भवतु कुलस्याभ्युदयः। मम तु देशकालपरिस्थित्यनुसारेण वर्तितव्यमिति सर्वं संपन्नं भवेदित्युत्तरे किं वा ब्रूयात्तत्र परिवर्तनवादी। यथा सेनासमुत्साहे तथाऽन्यत्रापि सर्वत्र व्यवहारेषु श्रद्धापोष एव कार्यसिद्धिर्नान्यथेति तत्परिपोषः कर्तव्यश्चेददृष्टद्वारैव। तत्र प्रमाणमपि तादृगेवालौकिकमवलम्बनीयम्। तच्च न काव्यादिवद्बुद्धिपूर्वकं विरचितं वचनम्। किंत्वदृष्टार्थप्रतिपादकं भ्रमप्रमादविप्रलिप्सादिदोषशून्यमलौकिकं वेदवचनमेवेति प्रथमत एवात्र प्रमाणप्रतिबिम्बप्रणयनम्। वेदेष्वपि ग्राम्यगीतत्वमुद्भावितं परैरस्मासु कैश्चिद्बहु मन्यते इत्यहो बुद्धेरधःपातः। न ह्येतादृशी सत्त्वमयी सालंकारा प्रौढा भाषा ग्राम्यभाषेति कोऽपि प्रेक्षावानाचक्षीत। एवमुपपत्तयोऽपि प्रदर्शनीयाश्चेत् श्रद्धानुगुणा एव। उपपत्तीनां मतिवैचित्र्याद्वैचित्र्यं सूपपादम्। तदत्र कीदृश्युपपत्तिरभ्युपगन्तव्येत्यत्र प्रमाणाभावाद्यया श्रद्धाविनाशः, सा हेया, श्रद्धानुगुणा च ग्राह्या। श्रद्धा च समाजाभ्युदयसाधिकैवोपादेया नान्या। तन्मूला एव निःशेषसमारम्भाः सवीर्यतां भजन्ते नान्यथेति परिवर्तनवादिभिरिदं मनसि करणीयम्। इदमप्यपरमभिसंधेयं यत्समानधर्मणामपि जर्मनानां पोलण्डवासिनां चेदानीं पारतन्त्र्यरूपोऽपकर्षो

दृश्यते। तथा प्रबलस्य भिन्नधर्मस्य जपानस्य। अतश्च न धर्ममूलकावुत्कर्षापकर्षौ। किंतु साधनोत्कर्षमूलकौ कर्तव्यनिष्ठामूलकौ च तौ। कर्तव्यनिष्ठाया मूलं च श्रद्धातिशय इति श्रद्धैव परमं बलमिति सिद्धान्तः सिद्धो भवति। न हि भारतीयानां जात्याचारादिवैचित्र्यवज्जर्मनेषु तादृशं वैचित्र्यमस्ति। येनोपजापः शत्रूणां सुकरः। एवमप्युपजापादेव तेषां पारतन्त्र्यम्। येन शस्त्रसामग्रीज्ञानं शत्रुहस्तं गतम्। जपाने तु प्रकर्षतन्त्रा हि रणे जयश्रीरिति स्पष्टमेव। अतः सिद्धमिदं यद्राजकीयोत्कर्षापकर्षौ न धर्मवैचित्र्यमूलकौ। अतश्च धर्मपरिवर्तनवादो राजकीयोत्कर्षसाधनार्थं प्रतिपाद्यमानः सर्वथा हेय एव।

## (साम्यवादः)

अत्रापि प्रत्यवतिष्ठेत कश्चन् साम्यवादी न हि स्वराज्योत्कर्षाद्यर्थं धर्मपरिवर्तनम्। किंतु धर्माणां दुष्टत्वादेव तत्परिवर्तनमभिलषामः। तत्रापि वैदिकधर्मस्यात्यन्तदुष्टत्वात्तन्निर्मूलनमेव श्रेयः। तथाहि सर्वेषां मानवानां जीवनं प्रेष्ठमिति तदधिकारः सर्वेषामविशेषेण न्याय्यः। एवमेव विवाहाचारविचारधर्मभावनादीनां जीवनानुगुणत्वेनाऽऽवश्यकतायाः साम्यात्तत्रापि जन्मसिद्धमेव स्वातन्त्र्यं न्याय्यम्। वैदिकधर्मे तु एतत्सर्वं नियन्त्रितमेव वर्तते। न हि ब्राह्मणमन्तरेणान्यो याजनाध्यापनप्रतिग्रहान् कर्तुं कोऽपि शक्नोति, व्यवसायानां नियन्त्रणात्। एवं क्षत्रियादीनामपि व्यवसायनियन्त्रणं तत्र तत्र श्रूयते। वस्तुतस्तु यस्य यत्र योग्यता, तेन तादृशव्यवसायानुष्ठाने न कापि क्षतिः। न हि ब्राह्मणेनाध्यापने कश्चन विशेषः समुपलभ्यते, अन्यैश्चाध्यापने हानिर्वा। तत्किमिति निर्बन्धो यद्ब्राह्मणेनैवाध्यापनीयम्। एवमध्ययनेऽपि। न हि शूद्राद्यधीतं—अकिंचित्करम्। ब्राह्मणेन वाऽधीतं किंचिद् विशेषं पुष्णाति। ज्ञानफलस्य सर्वेषामविशेषात्। एवमेव विवाहेऽपि कन्यापरिग्रहो नियम्यते। सोऽप्यकिंचित्कर एव। न हि शूद्रेणोढायां ब्राह्मणकन्यायामपत्यं न जायते, जातं वा सर्वथा दुष्टं भवति। व्यवहारे तादृशदोषस्यानुपलब्धेः। एवमाचारादिविशेषाणां नियमनं यत्कृतम्। तदपि सर्वथा हेयमेव। गुणागुणविशेषस्यादर्शनात्। तत्राप्येतेषां सर्वेषां व्यवहाराणां धर्मत्वेन नियमनमिदं सर्वथा न न्याय्यतां भजते। धर्मभावनापीश्वरविषयिका चेदभ्युपगम्यते सा मूर्तिपूजादिना संस्कृतमन्त्राधीना नैव फलमावहति, नान्यथेत्यत्रापि न किमपि प्रमाणं पश्यामः। दुःखातिवेगावसरे हि सर्वेऽपि मानवा स्वस्वभाषयैव देवमाह्वयन्ति। तत्र संस्कृतमन्त्रैरेवाऽऽहूयमानः परमात्मा भक्तसंकटविमोचनार्थमाधावति नान्यथेत्यत्रापि न किमपि गमकम्। एवं च यः कोऽपि धर्मो भवतु, तत्र चेत्तादृशव्यवहारनियन्त्रणम्, स सर्वोऽपि हेय एव। प्राकृतिकस्वभावानुसारेण यत्र यस्य यदा विशेषानुरागः। तत्तेन तदाऽनुष्ठीयत एवेति निश्चप्रचमेव। तत्किमित्येतानि कृत्रिमाणि बन्धनानि मानवैरादरणीयानि। तत्रापि यत्र मूलत एव जातिवर्णद्वारा मानव-

विशेषान् परिकल्प्य सर्वाण्यपि नियमनान्यधिष्ठितानि। स तु वैदिको धर्मः प्रथमत एव परित्याज्यः। एवं च समाजरचना चेन्न्याय्या निबन्धनीया, तर्हि तु नैसर्गिकभावनासाम्यमवलम्ब्यैव निबन्धनीया। भावनासाम्यं त्वाहारनिद्राभयमैथुनेषु सर्वेषां समानमेव। विशेषस्तु पशुभ्यो मानवानां विचारशक्तिः। एवं चाऽऽहारनिद्राभयमैथुनेष्विव विचारेष्वपि मानवानां स्वातन्त्र्यमभ्युपेयम्। तथा चाऽऽहारस्वातन्त्र्यं व्यवहारस्वातन्त्र्यं विवाहस्वातन्त्र्यं विचारस्वातन्त्र्यं धर्मस्वातन्त्र्यं च मानवानां जन्मसिद्धमेवाङ्गीकर्तव्यम्। वाक्स्वातन्त्र्यं मुद्रणस्वातन्त्र्यमन्नपानस्वातन्त्र्यमित्येवमादयो भेदास्तु व्यवहारस्वातन्त्र्य-विचारस्वातन्त्र्य आहारस्वातन्त्र्ये च यथायथमन्तर्भवन्ति। एत एव किल फन्डामेन्टल राइट्स् पद-वाच्या जन्मसिद्धाधिकारा मनुष्याणाम्। एवं चैतेषामुपघातो यथा न स्यात्तथा दण्डसंस्थया प्रवर्तितव्यमनुशासनम्। तादृशी दण्डसंस्था संस्थापनीया। न तु धर्मानुसारिणी कृत्रिमनियमनपुरस्कारिणी पूर्वोक्तजन्मसिद्धाधिकारापहारिणीति सर्वथा धर्मो नापेक्ष्यत इति तदर्थं परिवर्तनमामूलाग्र-मुद्घोष्यते।

अत्र ब्रूमो यत्सत्यं सर्वेषां जीवनं प्रेष्ठमिति तदर्थं भोग्यसंपत्तिसंपादनाधिकारः सर्वेषां समान इति। एवमपि केन प्रकारेण भोग्यसंपत्तिः संपादनीयेत्यत्र निरर्गलमेव स्वातन्त्र्यं समेषां समानमूरीक्रियेत चेत्, न्यायवार्तापि विलुप्ता भवेत्। चौर्यादिनीतेरपि व्यवसायत्वप्रसङ्गात्। इदानीं क्रियमाणस्य कूटापणव्यवहारस्यापि न्याय्यत्वप्रसङ्गाच्च। जीवनार्थं भोग्यसंपत्तिसंपादने सर्वेषां स्वातन्त्र्ये विभजनेन प्राप्तस्यान्नस्योदरपरिपूर्तयेऽपर्याप्तौ कूटापणेनापि तत्संपादनस्य स्वातन्त्र्यं जन्मसिद्धमेवेति किमिति तादृशव्यवहारस्यान्याय्यत्वम्। यदि सर्वेषां तादृशाधिकारात्सङ्घर्षप्रसङ्गेन बलवतां प्राधान्ये दुर्बला क्षुत्क्षामकण्ठा म्रियेरन्। अतश्च सर्वेषामुपकारार्थं तथा नियमनं न्याय्यमिति चेत्, एवं तर्हि बहूपकारेण जीवनस्वातन्त्र्यं नियम्यत इत्यवश्यमभ्युपगन्तव्यमिति स्वातन्त्र्यस्य निरर्गलताऽस्तं गता। एवमेव कुलग्रामदेशराष्ट्राद्युपकारार्थं तत्तत्स्वातन्त्र्यस्य नियमनं न्याय्यमित्यपि सिध्यति। तथा च यदि राष्ट्रे निर्व्यवसायिता सर्वानर्थमूला मा प्रचारं गात्, मा चानिश्चितता जीवनस्य भूदिति चेद्व्यवसायनियन्त्रणम्, तर्हि कथं तस्यान्याय्यत्वमिति विचारणीयं प्रेक्षावद्भिः। दरीदृश्यते किलेदानीं संपन्नेष्वपि राष्ट्रेषु निर्व्यवसायिनां संख्याऽनेकलक्षपरिमिता। नात्र यन्त्रप्रचार एव निदानम्। सत्स्वपि यन्त्रेषु यदि व्यवसायनियमनं स्यात्, स्यादेव तदा सर्वेषां व्यवसायिता। आवश्यकतानुसारेण हि पदार्थनिर्मितिः संपादनीया नाधिका न्यूना वा। तत्र न्यूनाधिक्ये तु पुनरपि न जीवनपर्याप्तिः। अतश्च सर्वेषां जीवनोपकारो हि व्यक्तिस्वातन्त्र्यं नियच्छतीत्यकामेना-प्यभ्युपगमनीयम्। एवमारोग्यादिशास्त्राण्यपि तत्स्वातन्त्र्यनियामकानि। रुग्णो हि औषधं सेवते। रुग्णता तु आरोग्यनियमभङ्गात्। स तु स्वैराचारात्। स च जन्मसिद्धस्वातन्त्र्याधिकारात्। तत्फलं

चान्ते मरणम् । एवमपि जीवनार्थं मरणनिदानीभूतस्वैराचारप्रयोजनस्वातन्त्र्यमपेक्षन्ते सुशिक्षिता इति धिक् एतेषां प्रज्ञाबलम् । अतश्च संयम एव जीवनार्थमावश्यकः । तथा च यत्र व्यक्तेरपि जीवनं संयमादृते न संभवति । तत्र वंशपरम्परयाऽखण्डदण्डायमानराष्ट्रपुरुषजीवनं विना संयमं कथं संभवेत् । राष्ट्रे हि वंशपरम्परा बुद्धिबलेन शक्तिबलेन च समर्था तत्तत्कार्यकारिणी सर्वदाऽपेक्ष्यते । सा च पित्रोः संयमं विना न संभवति । अतश्च सर्वदा सर्वैः संयम एव परिपाल्यः । संयमश्च त्रेधा कायिको वाचिको मानसिकश्च । एवं कायिको व्यवहारः कायिकेन संयमेन, वाचिको वाचिकेन, मानसिको मानसिकेन बाध्यत इति कुत्र किल स्वातन्त्र्यं मानवानामवशिष्टम् । अतश्च स्वातन्त्र्यवादोऽयं परैरुपकल्पितोऽस्माकं पशुत्वसंपादनायेति सुविशदमेव । यत्तु यो हि यत्र समर्थः, स तत्कार्यं करिष्यतीति किमिति नियन्त्रणमिति । तत्रेदं वक्तव्यम् किमिदं सामर्थ्यम् । यदि च बुद्धिबलं शरीरबलं वा । उभयमपि न सर्वेषां जन्मसिद्धं समानम् । सर्वेषां सर्वविज्ञानाभावात् । सर्वकर्मकरणादर्शनाच्च । न हि समानविद्यावतामपि बुद्धिवैशद्यं समानं भवति । न वा समानकार्यकारिणां शारीरिकी शक्तिः समाना । अस्मिंश्च दृश्यमाने वैषम्ये किं निदानम् । पुनर्जन्मवादे तु प्राक्तनसंस्कारास्तन्निदानं स्युः । तदभावे तु मातापित्रो रजोवीर्यतारतम्यमेव । तच्च तयोर्व्यवहारदोषादित्यगत्या मातापितृभ्यां शास्त्रपारतन्त्र्यमूरीकृत्य स्वैराचारं विहाय संयमः परिपालनीयः । तदेवं यैः संयमपरिपालनपूर्वकं तत्तव्द्यवसायसातत्यमद्ययावत्परम्परयाऽनुष्ठितम् । तेषामेवाऽऽवी तत्तव्द्यवसायाधिकारोऽप्रतिहत ऊरीकर्तव्यः । येषां तु न तथा तैश्च यथाशक्त्यन्यद्विधेयम् । किं तदिति विशेषनिर्धारणं तु दीर्घदृष्टिभी राष्ट्रपुरुषाङ्गोपाङ्गप्रत्यक्षकारिभिरेव निर्णेयम् । न सामान्येन रागद्वेषाद्याकलितचित्तवृत्तिना । एवं च राष्ट्रपुरुषजीवनेन सर्वं व्यक्तिस्वातन्त्र्यमपोह्यते । संस्थाप्यते च तत्स्थाने व्यक्तिगता कर्तव्यनिष्ठा । सा च संयममूलिका । स च शास्त्रमूल इति शास्त्रनिष्ठैव राष्ट्रजीवनजीवातुरिति सिध्यति । अत एवोक्तम्—तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ—इति ।

## ( उपयुक्तावादः )

अत्र केचनोपयुक्तावादिनो यद्वदन्ति तदपि समालोचनीयम् । यद्यप्युपयुक्ततावादोऽयमतितुच्छः । तथापि नानाविधमतान्तरपर्यालोचनसमये तस्यापि समीक्षणं नास्थान इति दिङ्मात्रं प्रदर्श्यते । इदं तस्य सूत्रम्—यत्र यदा यस्योपयोगः, तत्तेन तदोरीकृत्य व्यवहारः कर्तव्यः । यस्य च नोपयोगः, तत्तु सर्वथा हेयमेव । व्यक्तेरिव राष्ट्रस्याप्ययं न्यायः । निदर्शनं चात्र भारतीयपशुपालनम् । यावन्तः पशवो भारतातिरिक्ते सर्वस्मिन् जगति, तावत्संख्याका एकस्मिन्भारतवर्षे । किमेतेषामखिलानामिदानीं यन्त्रयुग आवश्यकता वर्तते वेत्यनुयोगे नास्तीत्येवोत्तरपक्षमायाति । तथा हि पशु-

नामुपयोगोहि प्रवासवाणिज्यकृषिकर्मार्थः। इदानीं तु प्रवासः, अग्निशकट—बाष्पशकटिका—बाष्पद्वि-चक्रिका—द्विचाक्रिका—विमानैश्च सर्वत्र प्रायः सुकरः । कुत्रचित् कुट्टिममार्गाभावे वर्षासु कर्दमादिनाऽसौकर्ये तु केवल गर्दभपशोः परिपालनेन कार्यसिद्धौ गजाश्वोष्ट्रबलीवर्दादीनामसंख्यानां परिपालनमिद न केवलमनुपयुक्तम् । प्रत्युत मनुष्यखाद्याना धान्यादीना भक्षणेन मनुष्याणां कृते धान्यसमृद्धेरपर्याप्तिरित्यप्यापत्समुदेति । एवमेव कृषिरपि यन्त्रसाहाय्येन क्रियमाणाऽधिकां धान्यसमृद्धि निष्पादयतीति प्रयोगसिद्ध समेषामनुभवगोचरः । सन्ति च सर्वविधानि क्षेत्रकर्षण—धान्यावाप—तृणोत्पादन—सस्यच्छेदनवितुषीकरण—मर्दन—धान्यसग्रहादिसाधकानि यन्त्राणि । तत्किमित्येतत्कार्यकरणार्थमेतावता पशूना संग्रहः । एवं वापीजलोत्कर्षणार्थमपि यन्त्र वर्तत एव । एवमेव वस्तूनामावापोद्वापरूपवाणिज्यमपि यन्त्रशकटादिद्वारा सुकरम् । तथा च रक्षणीयाश्चेत्पशवस्तर्हि गोऽजाविमहिष्यादय एव पयोदानोपयुक्ताः, न त्वश्वबलीवर्दगजोष्ट्रादयः । पूर्वोक्तस्त्रीपशूनामपि यावद्दुग्धदानमेव पालनम् । ततश्च सूनागारप्रवेशः । येन माससमृद्धिः स्यात् । एवमेव सूकरकुक्कुटादीना शाकसद्रक्षाणामुपयोगित्वात् गर्दभानां च प्रवासोपयोगित्वात् व्यय विना परिपालनसौकर्याच्च परिपालनं न्याय्यम् । पुनश्चोपयुक्तानामुत्पादनार्थं तत्तज्जातीय एकैकः पशुः प्राणिसंग्रहालये संरक्षणीयः । एवमेवाऽऽरण्यकविभागोऽपि नातीवोपयुक्तः । काष्ठकार्यं गृहतदुपकरणपाकादिक चेदानीं पाषाणचूर्ण-पाषाणखण्डिका—लोहपत्र—लोहार्गल—विद्युत्—खनिजौषधादिभिः सर्वत्र सुकरम् । ये त्वाम्रजम्बूजम्बीरदाडिमपनसादयः फलद्वारोपयुक्ताः । तेषा तूपवने सुरक्षा कर्तव्या । नैतावता शाल्मलिरपिप्पलवटतिक्तनिम्बादीना सरक्षणमावश्यकम् । तथा च दण्डसंस्थया सरक्ष्यमाण आरण्यकविभागो व्यर्थ एव । तदभावे तु तस्या भूमेः सस्योत्पादनेऽपि स्यादुपयोग इति । एवमेव सर्वत्रोपयुक्तता-निकषमवलम्ब्य सर्वं परिशोध्योपादेयमन्यत्तु हेयमित्युपयुक्तवादिना समासेन सिद्धान्तः । एवमाचारविचारयोरपि यस्य यादृशस्य यदोपयोगः, स उपादेयः अन्यस्तु हेय इति धर्माधर्मसिद्धान्त-निर्धारणमिदमाकिंचित्करमेव ।

सोऽयमुपयुक्ततावादो नाम नितान्तपशुतावादः । पशवोऽपि सुदूरमनालोच्यैव तात्कालिकोपयुक्तत्वानुपयुक्तत्वे सुविचार्य प्रवर्तन्ते निवर्तन्ते च । सोऽय वादो मनुष्येषु प्रचारितश्चेत्को वा परिणामो भवेदिति विचारणीयम् । बधिरान्धकुब्जकाणखञ्जनपुंसकादीनामनुपयुक्तत्वेन शिरच्छेदः, वृद्धाना मातापित्रादीनामपि सूनागारप्रवेशः, असाध्यरोगिणामलसादीना चोच्छेदः, एवमनुपयुक्ताना दृष्ट्योपयुक्तानामनुपयुक्तत्वेन विनाश इत्येवं परस्परोच्छेदप्रसङ्गः समापतेत् । एवं च जगद्रक्षणाय मनुष्याणां सुस्थितये च प्रवृत्तोऽयमुपयुक्ततावादो जगद्विनाशाय प्रभवेदिति सुष्ठूक्तम् " प्रभवन्त्युग्रकर्माणो क्षयाय जगतोऽहिता. " इति भगवद्गीतासु । इदानीं त्वरण्योच्छेदेनानावृष्टिप्रसङ्गे पुनरपि वृक्षारोपणप्रकोत्साहप्रवर्तनमिदमेव गमयति. एवमेव पशूच्छेदेनापि सपद्यमानाऽऽपत्तिः कथ

निवारणीया। अत एव सृष्टौ न किंचिदनुपयुक्तं नाम न हि सृष्टिर्वा निसर्गो वेश्वरो वाऽनुपयुक्तपदार्थनिर्माणे सन्नद्धपरिकरोऽस्ति । एवमपि कदा कस्य केन कथमुपयोगः कर्तव्य इति तु मानवमनीषायत्तम् । तन्मनुष्येण स्वबुद्धिप्रचारस्तथैव कर्तव्यो येन जगत्संरक्षणमखण्डं भवेत् । अतश्चेदानींतनोऽयमुपयुक्ततावादोऽतीव तुच्छ इति सुधीभिः सुदूरमालोचनीयम् । एवं सर्वथा यन्त्रप्रचारे युद्धेन राष्ट्रोपघाते तज्ज्ञानामभावे च का वाऽऽपत्तिः प्रभवेदित्यपि न तिरोहितं विदुषाम्। न हीश्वरसृष्टिर्जीवसृष्ट्यधीना । महोल्कापातभूकम्पादिनाऽपि जीवसृष्टेः सर्वथाविनाशप्रसङ्गस्य बहुशो दृश्यमानत्वात् । तद्वरं निसर्गसृष्टेरनुसरणं मानवानामितीयमेव वस्तुतो मानवता। ईश्वरसृष्टेरनुसरणेन यत किंचित् संपादनीयं चेन्मानवैरवश्यमेव संपाद्यम्। नात्रास्माकं विप्रतिपत्तिः। न हि तावतेश्वरसृष्टेर्विघातः कर्तव्यः; ईश्वरसृष्टेर्नियमा मानवैरल्पज्ञैः सर्वथा ज्ञातुमशक्या एव। भोगार्थं तु जीवस्येशसृष्टिनिर्माणमिति तदनुपरोधेन भोगोऽवश्यमेव संपादनीयो मानवैः। उपरोधे तु विनाश एव मानवानामिति निश्चप्रचमेव । अत एव " त्यागेनैके अमृतत्वमानशुः; " " ईशावास्यमिदं विश्वं यत्किंच जगत्यां जगत् "; तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ", इति त्यागपूर्वकभोग एव वैदिके वाङ्मये पुरस्कृतः। एतेन च जगतः सुस्थितये कल्प्यमानाः सर्वेऽपीदानींतना वादा व्याख्याताः॥ इदानीं हि लोकसंख्याया धान्यसंपत्तेश्च समीकरणं कथं संपादनीयमिति महान् प्रश्नः । केचन लोकसंख्याह्रासार्थं प्रजोत्पादसंयमनमिच्छन्ति कृत्रिमैरुपायैः । केचन युद्धाद्युपायं पुरस्कुर्वन्ति । केचित्तु रोगादिप्रसारमिच्छन्ति । केचित् धान्यसंपत्तिं विपुलां कर्तुं प्रयतन्ते। एवमपि नोपर्युक्तं समीकरणं संपद्यते। तदत्र जनानां त्यागशालित्वे उदरमात्रपरिपूर्तिसंयमने च प्रवृत्तिश्चेदन्नवस्त्रादित्यागपूर्वकदेहमात्रधारिणां योगिनां विरागिणामादर्शपुरुषाणां प्रजासु वृद्धिश्चेदवश्यमेव तत्समीकरणं संपत्स्यत इति वैदिकः पन्था एव श्रेयान्। तदभावे तु " न जातु कामः कामानामुपभोगेन शाम्यति " इति न्यायेन सर्वथा भोगपुरस्कारे न कदापि जगत्स्वास्थ्यं लभेतेति सुविचार्यं सुधीभिः । अत एव त्याग एव मानवजीवितसमुद्देशः, स च प्रज्ञापूर्वकः, इति श्रुतेरुद्घोषः। तत्रैव मानवजीवितसाफल्यं निश्चप्रचमेव । स च त्यागः सर्वान्तर्यामिपरमेश्वराराधनां पुरस्कृत्य भवितुमर्हति नान्यथा । अत एव जगत्स्वरूपिणः परमात्मनः सर्वभावेन मानवैरुपास्तिः कर्तव्येति भक्तिमार्गामृतम् । एवमेव प्रगतिः, जीवितसाफल्यं, राष्ट्रोत्कर्ष इत्यादयो विषया अभ्यालोचनीयाः॥

एते च सर्वेऽपि विचारा विद्यार्थिदशायामेव मे मनसि प्रादुर्भूताः। यदा चाध्ययनं समाप्यात्र प्रदेश आगतोऽहं प्रकाशसेने पाठशालायां नियुक्तस्तदानीमेव सन्तोजीमहाराजैः सनातनधर्मप्रदीपकार्ये श्रीधरशास्त्रिवारेकरमहोदयप्रमुखानां साहाय्येन प्रारब्धं तदानीं परिवर्तनवादानुसारेण देशकालपरिस्थितिसंमतात्मकमिदं कार्यं भविष्यतीति पाठकशास्त्रिमहोदयप्रभृतिभिः प्रकाशितम्। तदालोच्य चलित-

चित्तवृत्तयो महाराजा मामाहूतवन्तः पृष्टश्च तैर्न्यवेदयमहं यत् यदि यथार्थधर्मशास्त्ररहस्यप्रकाशनमेव श्रीमतामभिप्रेतं तर्हि काशीस्थपण्डितानामपि सहकार्यमपि संपादनीयम् । ततश्च महाराजानामावेशेनाहं लक्ष्मणशास्त्रिद्राविडमहोदयानां सविधे एकं पत्रं प्रेषितवान् । ततश्च महाराजानामामन्त्रणानुसारेण तेषामागमनं संजातम् । ततःप्रभृति यत्कार्यं संपन्नं तत्तु महाराजानां निवेदने स्पष्टमेव । तदारम्यसर्वेषु कार्येषु मम सहकारित्वेनोपस्थितिरासीत् । यदा तु ग्रन्थप्रणनयसमितिः संस्थापिता तदाऽयं प्रश्नः समुत्पन्नो यत् को वा नूतनमतसंग्रहं करिष्यतीति । विधिवशात्तस्य कार्यस्यातिभारो ममोपरि निक्षिप्तः । तदाऽऽगरकरमहोदयनिबन्धेभ्य आरभ्य ज्ञानकोशान्ताः सर्वेऽपि नूतनमतग्रन्था मया वाचिताः । तेषां तात्पर्यमाकलय्य तदानीमेव विरचितो नूतनमतसंग्राहको निबन्धः 'सनातनधर्मप्रदीपे' अध्यर्धो मुद्रित एव तत्पर्यालोचनमपि तत्र पण्डितैः कृतम् । अतश्च महाराजैः संपादिता सामग्री मत्कृते न किंचित्करी संपन्ना । केवलं गो. रा. राजोपाध्येमहोदयैः प्रेषितात् निबन्धद्वयात् यदुपयुक्तं तदेवात्र संस्कृतभाषायामनूद्य संगृहीतम् । 'कॅपिटल'-सारसंग्रहग्रन्थस्य त्वतीवोपयोगः संजातः । अतश्च तत्रस्थमेकं प्रकरणमेव मया संस्कृतभाषायामनूद्य ग्रन्थे संगृहीतं येन साम्यवादस्य सर्वं रहस्यं प्रकाशितं भवेत् । एवमेव सनातनधर्मप्रदीपकार्यस्यारम्भादान्तं सर्वमितिवृत्तं प्रत्यक्षोपस्थित्या मया ज्ञातम् । तत्र संजायमाना धर्मशास्त्रचर्चाऽपि मया समवगता । तदनुरोधेन नूतनमतवादिनां च दृष्ट्योभयथाऽपि धर्मशास्त्राभ्यासो हि पुनश्च मया विहितः । ततश्चैतादृश उभयमतपर्यालोचकः कश्चन निबन्धोऽवश्यमेव सम्पादनीय इति मे मनीषा बहोः कालादारभ्य जागर्ति स्म । परं च विधिवशादनुकूलसमयाभावेन तत्कार्यं कर्तुमशक्नुवानोऽहं यदा. महाराजैः स्वतन्त्रग्रन्थविरचने आहूतस्तदा तत्कार्यं सादरं स्वीकृतवान् । एवमयं ग्रन्थो मद्धस्तेन संग्रथमानः परिनिष्ठितानां विदुषामालोचनार्थं प्रकाश्यते । गुणदोषविवेचने तु विद्वांसो विचक्षणा एव प्रमाणामिति न किंचिन्निवेदनीयम् ।

अस्य च ग्रन्थस्य भागचतुष्टयमेव प्रकाशितम् । उर्वरिताः पतितपरावर्तनं, व्रात्यसंस्कारः, अस्पृश्यस्पर्शः, अस्पृश्यानां मन्दिरप्रवेशः, भक्ष्याभक्ष्यविचार इत्यादयो विषयाः समयाभावाद्द्रव्यासौकर्याच्च नाऽऽलोचिताः । दैवयोगादवसरलाभे तेषामपि आलोचनं विधातुमिच्छा वर्तते । परमेश्वरेच्छया किं वा भविष्यत्यग्र इति न वक्तुं पार्यते । एतादृशोऽयं भागचतुष्टयात्मको निबन्धः प्रकाश्यत इत्येव महदानन्दास्पदम् । अत्र द्रव्यव्ययस्तु समस्तोऽपि श्रीसन्तोजीमहाराजानामेवाहं तु केवलं ग्रन्थप्रणयनकार्यमेव व्यदधामिति सुविशदमेव ।

सनातनधर्मप्रदीपे नीतिविचारो न कोऽपि कृतः सर्वेऽप्येते नूतनमतवादो राजनीतिमूलका एवेति निश्चप्रचमेव । तदत्र प्राधान्येन प्राचीनराजनीतिविचारमन्तरा सर्वोऽपि धर्मशास्त्रविचारो वैयर्थ्यमापद्यते । 'सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ।' इति किल वैदिकानामपि राद्धान्तः । एवमपि नीतिविचारमकृत्वा केवलं धर्मशास्त्रवचनैकवाक्यताविचार इदानीमकिंचित्कर

एवेति मत्वैव राजनीतिप्रकरणमिदं मयोपनिबद्धम् । कस्यापि विषयस्य विचारः प्रमाणमन्तरा केवल-तर्कमात्रेण नैव भवितुमर्हति । तर्कस्याप्रतिष्ठानात् । नहि सर्वेऽपि तार्किका भूता भविष्यन्तो वर्तमानाश्चैकीकृत्यैकमत्यं संपादयितुं शक्यम् । दृष्टमात्रफले व्यवहारे चेदियमवस्था कथं तावत्पार-लौकिकफलेषु कर्मसु तदैकमत्यं शक्यम् । "श्रद्धामयोऽयं पुरुषः" इति न्यायेन प्रकृतिभेदात् श्रद्धाया अपि भिन्नत्वे कथमैकमत्यं स्यादिति मनसि करणीयं तर्कविचक्षणैः । बहुमतानुसारेण निर्णयेऽपि अल्पमतानां श्रद्धाविघातः कथं निवारणीयः । अनिवृत्ते च तस्मिन् पुनश्च संघर्षोऽपरि-हार्यः । तदपेक्षया श्रद्धामयं वा बुध्यगम्यं वा किमपि प्रमाणतत्त्वमवलम्ब्य तत्र सर्वेषां श्रद्धा समुत्पन्ना चेत् जगदिदं शान्तिसुखमियात् । न हि येशुमहोदयेन महम्मदेन बुद्धेन वा स्वमतप्रचारः बहुमतानुसारेण विहितः । आत्मबलिदानपर्यन्तं त्यागेनाधीतिबोधाचरणप्रचारणैर्यत्सुयशो लब्धं न तत् केनापि राजनीतिज्ञेनाद्यावधि लब्धम् । न वाऽग्रेऽपि लब्धुं शक्यमिति विदांकुर्वन्तु विचक्षणाः । अतश्च प्रमाणविचार एव प्रथमतः कर्तव्यः समापतति विदुषाम् । तच्च प्रमाणं युक्त्यनुभवाभ्यां वेद एव सिद्धं भवति चेत् कथं तन्निवारणं कर्तव्यम् । अतश्च प्रथमप्रकरणे वेदप्रामाण्यमेव पूर्वजैः साधितम् पुनश्च युक्त्यूहापोहाभ्यां प्रतिपादितम् । तदनुरोधेन च स्मृत्याचारसूत्रागमात्मतुष्ट्यादयः । एवं धर्मोऽपि न वेदप्रतिपादितधर्मातिरिक्तो भवितुमर्हति । उपासितधर्माणां विभिन्नत्वेऽपि मानवकर्त-व्यतारूपो धर्मो जगदनुग्राहकः सर्वेषां मानवानामेकविध एव भवितुमर्हति । बौद्धादिमतानि तु वेदप्रतिपादितोपासनानामपभ्रंशा एव । अतश्च नैतेषां धर्मत्वं किंतु संप्रदायत्वमेव । अत एव ग्रन्थनाम्नि सनातनेति विशेषणं न प्रदत्तम् ।

विशेषणं हीतरसजातीयव्यावर्तकं भवति । सनातनधर्म इत्युक्तेऽसनातनोऽपि कश्चन धर्मः स्यात्तन्मा भवत्विति विशेषणपरिहारः ।

तदेवं प्रमाणप्रतिबिम्बे प्रमाणप्रामाण्यस्य विचारः प्रथमत एव कृतः । तदनुषङ्गेण च वेदापौ-रुषेयत्वमीश्वरास्तित्वं कर्मविपाकप्रक्रिया स्वभाववादः कालवादो नियतिवादो मन्त्रत्वविचार इत्यादयो विषया अप्यालोचिताः । एवं 'मानाधीना मेयसिद्धिः' इति न्यायेन सिद्धे प्रमाणे धर्माधर्म-विचारः प्रस्तोतव्यः । ततः प्रथमतो दण्डसंस्थायाः कर्तव्यप्रवर्तकत्वात् दृष्टफलकत्वाच्च तदनुसारे-णार्थकामानुकूलधर्मव्यवस्था कथं वा भवितुमर्हतीति पर्यालोचनीयम् । अतश्च नीतिप्रतिबिम्बप्रकरणं प्रारब्धम् । इदं तावत् प्रथममेवोद्घोषितं यत् धर्मार्थकामरूपत्रिवर्गस्य परस्परानुबन्धेनान्योन्यानुप-घातकत्वेन च यथा प्रचारो भवेत् तथा दण्डसंस्थयाऽनुविधेयम् । न तु केवलं सर्वेषां सर्वत्र साम्यपुरस्कारेण वा स्वातन्त्र्योद्घोषेण वाऽर्थकामयोर्व्यवस्था सर्वजनीना भवितुमर्हति । साम्यस्य व्यवहारे विषमतायामेव पर्यवसानात् । न हि बुद्धिसाम्यं कर्तृत्वशक्तिसाम्यं वा सर्वेषां भवितुमर्हति । स्वातन्त्र्यवादेऽपि परस्परोपघातकत्वे राष्ट्रहितविरोधे च स्वातन्त्र्यापहारो दण्डसंस्थानुशासनेन सर्वत्र

दरीदृश्यते । तत्किमेतेषां फलम् इति व्यर्थ एवायं प्रयासः । तदपेक्षया सर्वेषामलब्धलाभः, लब्धपरिरक्षणं, रक्षितविवर्धनम्, वृद्धस्य तीर्थेषु प्रतिपादनम्, यथा भवेत् तदर्थमेव दण्डसंस्थया प्रयतितव्यम् । तत्रैव च सर्वेषां समानोऽधिकारः । तत्र तीर्थेषु प्रतिपादनमित्यनेन तीर्थपदवाच्यपात्रापात्रनिर्णये तदनुषङ्गेण कर्तव्याकर्तव्येअपि निश्चिते भवतः । स च पात्रत्वापात्रत्वनिर्णयः धर्मशास्त्राधीन इति धर्मशास्त्रस्याऽऽवश्यकता । ये तु सर्वस्वत्वादयो वादास्त उपभोगार्थं प्रवृत्तानां मानवानां कृते स्वत्वाक्रान्तं किमपि वेतनादिकं वस्तुजातमवश्यमेव स्वीकर्तव्यं भवतीति वैयर्थ्यमापद्यन्ते । एवमपि स्वत्वविचारः कर्तव्यश्चेच्छास्त्रानुसरणमेव तत्र वरमिति नीतिप्रतिबिम्बे प्रतिपादितम् । ये तु साम्यवादिनो धर्मस्य व्यसनत्वं मन्यमाना अर्थमात्रस्योत्पादनविभजनविनिमयविनियोगैः जगतो योगक्षेमौ भवत इति मन्यन्ते तेऽपि विनियोगविषये नियामकत्वेन न किमपि प्रमाणं प्रतिपादयन्ति । एवं चेच्छैव खलु तत्र नियामिका स्यात् । सा चेच्छा मानवानां दण्डधारिभिः स्वेच्छानुसारेण वा बहुमतानुसारेण वा नियन्तव्या । अत एव जीवितमूल्यमपि तदधीनमिति अन्ततो गत्वा दण्डशैथिल्ये निसर्गतः प्रबलयोपभोगेच्छया समुत्पद्यमानः संघर्षः कथं निवारणीयः । अतः शास्त्रैकप्रमाणतामवलम्ब्य कर्तव्यबुद्ध्या यत्किमपि नियमनं चेत्तदेव खलु जगतो योगक्षेमावहं भवतीति निश्प्रचमेव । एतेन समाजरचनाविषये उपजायमानाः सर्वे वादा व्याख्याता इति तेषां सर्वेषां पर्यालोचनं तत्र विभागे कृतम् । अन्ततो गत्वा राष्ट्ररूपसर्वान्तर्यामिपरमेश्वराराधनां पुरस्कृत्य त्यागप्रवणता चेत् समस्तमानवानाम्, तदेव खलु जगत्स्वास्थ्यं भवितुमर्हतीति निश्चितम् । सत्याहिंसादिप्रकारा अपि शास्त्रदृष्ट्या कथं नियमिता इत्यपि महाभारतोद्धारेण प्रदर्शितम् । न ह्येकान्तेन सत्यं वाऽहिंसा वा दया वा मानवता वा जगतो योगक्षेमौ साधयितुमीष्टे ।

अतश्च प्रकृतिबलाबलमवलम्ब्येतरेतरानुपघातोऽन्योन्यानुबन्धश्च यथा सिद्धो भवेत्तथा दण्डसंस्थया सर्वाः प्रजा अनुशासनीया इति राद्धान्तो नीतिप्रतिबिम्बे प्रतिपादितः ।

चातुर्वर्ण्यप्रतिबिम्बे तु तस्या एव प्रकृतेः परस्परानुबन्धोऽन्योन्यानुपघातश्च जातिव्यवस्थया यथा भवितुमर्हति न तथा अन्योपायेन । जातिव्यवस्था हि प्राकृतिकस्वभावपर्यालोचनपूर्विकैव अर्थकामव्यवस्थां यथा सम्यक्तया साधयति न तथा सर्वस्वातन्त्र्यवादः । न हि बुद्धिबलं वा कर्मशक्तिर्वा सर्वेषां सर्वदा समाना भवति । अखण्डदण्डायमानराष्ट्रपुरुषरक्षणार्थं तु निखिलमपि ज्ञानं समस्ताऽपि कर्मशक्तिश्च परम्परयाऽवश्यमेव संरक्षणीया । द्रव्यविभाजनं द्रव्यविनिमयश्च यथावदेव सर्वैः संपादनीयस्तदर्थं प्राकृतिकनियमानुसारेण तत्तद्बुद्धिशक्तिशालिनः कर्मशक्तिशालिनश्च पुरुषाः परम्परया यथोत्पद्येरन् तथाऽवश्यमेव काचन व्यवस्था विधेया । सा च वर्णजातिव्यवस्थामन्तरा नान्या भवितुमर्हतीति निश्प्रचमेव । अत एव भारतराष्ट्रमिदमनादिकालादारभ्याद्ययावद्राष्ट्रत्वेन व्यपदिश्यते । यत्र तु व्यभिचारादिना कर्मशक्ते-

बुद्धिशक्तेश्च ह्रासवृद्धी दृश्येते तत्र शास्त्रनियमनाभाव एव कारणम् । यत्र तु सत्यपि शास्त्रनियमने किंचित् वैपरित्यमिव दृश्यते तत्र प्राक्तनसंस्कारवशात्तथा भवतीति तदपवादत्वेनोदाहार्यम् । न हि अपवादोऽस्तीत्येतावतोत्सर्गस्य सर्वथा विलयः । उत्सर्गानुसारेण प्रवृत्तमपवादः कुत्रचित्तं बाधत इत्येवापवादस्यापवादत्वम् । एवं चापवादानुसारेणोत्सर्गस्य जलाञ्जलिप्रदानमिदं न मानवतां प्रकाशयतीति सुस्पष्टमेव । इतरेष्वपि शास्त्रेषु शतशोऽपवाद-दर्शनेऽपि नोत्सर्गास्त्यज्यन्ते तत्किमपराद्धं धर्मशास्त्रेणेति समालोचयन्तु विचक्षणाः । अतश्च प्राक्तनस्वभाववशात्कर्मविपाकवशाद्वा यथा वर्णजातिव्यवस्था सिद्धा भवति, तथा च परम्परया समानसन्ततिप्रवाहः प्रचलति स सर्वोऽपि प्रकारोऽत्र प्रकरणे विचारितः । तदनुषङ्गेण च राष्ट्रियताविचारः, स्वभावपर्यालोचनम् , परिवर्तनवादविचार इत्यादयो विचारा अप्यालोचिताः । ' प्रवर्तितो दीप इव प्रदीपात् ' इति समाना संततिश्च येन विवाहसंस्कारेण संपद्यते तद्विचारार्थं विवाहप्रतिबिम्बप्रकरणं प्रारब्धम् ।

विवाहो हि समाजरचनायाः प्राथमिकः संस्कारः । न हि विवाहमन्तरा जनसंघः समाज-पदवाच्यो भवितुमर्हति । स चायं संस्कारः पुरुषं कथं संस्करोति, को वा तस्य समुद्देशः; कथं च स विधातव्यः, केन कदा च कः संस्कर्तव्य इत्यादिकं सर्वमप्यत्र प्रकरणे ह्यालोचितम् । तत्र संस्कारे समुत्पाद्यमाने संस्कर्तव्यस्य योग्यताऽपि निसर्गसिद्धाऽपेक्षिता भवति । क्रिया हि द्रव्यं विनयति नाद्रव्यम् । संघृष्यमाणो हि मणिर्यथा तेजस्वितामापद्यते न तथा मृत्पिण्डः । विवाहश्च क्रिया । सा हि संस्कर्तव्ये किंचित् गुणाधानं दोषापनयनं वाऽवश्यमेव कुर्यात् । तत्र पुरुष-योग्यताऽवश्यमेवापेक्षणीया भवति । न हि उन्मादवायुग्रस्तस्य पुरुषस्य क्लीबस्य वा विवाहक्रियया गुणाधानं वा दोषापनयनं वा भवितुमर्हति । एवं सपिण्डसगोत्रादिष्वपि तत्तद्दोषाणां पर्यालोचन-मवश्यमेव कर्तव्यं भवति । समुद्देशश्च विवाहस्य समानसंस्कारसंस्कृता प्रजैव । न कामः । अन्यथा-सिद्धत्वात् एवं च स्त्रीपुंसयोः पतिपत्नीत्वबुद्धिस्तत्पूर्वककर्तव्यनिष्ठा च यथा सुदृढा समुत्पन्ना भवेत् तथैव दण्डसंस्थयाऽनुविधेयम् । विधवानां च तादृशसंस्कारोत्पत्तेर्योग्यताऽभावात् न पुनः संस्कारः । केवलं कामोपभोगार्थमाश्रीयमाणं पुरुषान्तरं न पतिपत्नीत्वसंबन्धमुत्पादयितुं शक्नोति । क्लीबानां संन्यासिनामपि तथैव पत्नीत्वबुद्धेरनुत्पादः । विवाहकालेऽज्ञानाच्छलाद्बलाद्वा सवर्णादि-परिग्रहेऽपि न पतिपत्नीत्वबुद्धिः सुदृढा समुदेतीति नाद्यवत्तत्र संस्कारस्याकिंचित्करत्वमेव । अतश्च तादृशफले कन्यायाः पुरुषान्तरेण सह पुनर्विवाहाख्यः संस्कारो भवितुमर्हतीति तत्र प्रकरणे निर्णीतम् । कामशास्त्रादिपर्यालोचनमपि तदनुषङ्गेण क्रियमाणमिदमेव गमयति । कामो ह्यनुप-स्कृता रतिः । सा च सवर्णायामनूढायां शास्त्रविहितायां यथा समुत्पद्यते न तथाऽन्यत्रेति धर्म-शास्त्रनियमानामेव प्रामाण्यं सिद्धं भवति । एवं विवाहसंस्कारप्रयोजकं सुप्रजस्त्वमेवातश्च गर्भाधान

कालात्प्रागेव कन्यया विवाहसंस्कारो भवितुं युक्तः । तत ऊर्ध्वं तु कदाचित् सङ्कटवशादेव स भवितुमर्हति । नान्यथा स्वेच्छया । तथैव नैष्ठिकब्रह्मचर्यमपि स्त्रीणां नैव भवितुमर्हति। अतश्च कन्याविवाहकालोऽयं षोडशवर्षाद्दूर्ध्वमधर्म्य एव नैतावता नाष्टवर्षोद्वाह्या। एतेनाऽऽधुनिकानुशासनं व्याख्यातम्। चतुर्दशवर्षात्प्राक् दण्डसंस्थया विधीयमानो निषेधः न शास्त्रीयतां लभते । यानि तु चतुर्थीरात्रकर्मणि सहशयनबोधकानि वचनानि तानि दैवाद् गर्भाधानकाले समुपस्थिते सहशयन-बोधकानीति न विवाहाङ्गतां भजन्ते । विवाहस्य सप्तपद्यामेव परिनिष्ठितत्वात्। अत एव 'तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे' इति मनूक्तिः संगच्छते । 'तामुदूह्य यथर्तु प्रवेशनम्' इत्यादीनि वचनान्यपि 'उदूह्ये'ति ल्यबन्तेन विवाहस्य परिनिष्ठितत्त्वं गमयन्ति । न ह्यत्र 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति न्यायप्रसरः। कर्मभेदात् । यथाकथंचिन्न्यायानुसरणेऽपि वाजपेयवत् सिद्धस्यैव विवाहस्य कालान्तरेऽपि समावेशन प्रयोजकत्वं भवेत्। यथा हि बृहस्पति-सवः सिद्धस्यैव वाजपेयस्य पुनः किंचित् गुणाधानापूर्वमुत्पादयति तथैव सिद्धस्यैव विवाहस्य समावेशनेनोपकारं गमयति ऋतुकालः। अत एव 'यथर्तु' इत्युक्तम् । ऋतुमनतिक्रम्य प्रवेशनं कुर्यादिति तदर्थः। यानि तु बौधायनानि वचनानि तान्यपि प्राप्ते ऋतौ ऋतुप्रवेशनकर्मानुष्ठान-बोधकानि। एवं च ऋतुकालात्प्रागेव कन्यानां विवाहः शास्त्रीयः । इतरवचनानामेकवाक्यताऽपि सुधीभिः सौकर्येणोहितुं शक्येति नात्र प्रपञ्चिता ॥

तदेवं भागचतुष्टये प्रपञ्चितानां विषयाणां संक्षेपतो निर्देशोऽत्र विहितः। यथामति याव-च्छक्ति प्रचलिता संभावनाविपरीतभावनानिराकरणमेव ग्रन्थस्य परमुद्देश्यमिति तत्पुरस्कृत्य विरचितेऽ-स्मिन् ग्रन्थे शास्त्रीयविषयाणां न्यूनाधिक्यं चेत् सुधीभिः क्षन्तव्यम्। शास्त्रविषये स्खलनमपि मानव-स्वभावसहजमिति सुधीभिः कृपयाऽऽलोच्य निवेदनीयोऽयं जनः। अनेन च ग्रन्थेन स्याच्चेत् कश्चिदुपकारस्तदोपर्युक्तावशिष्टपतितपरावर्तनादिविषयान्तराण्यप्यालोचनीयानीत्यस्माकं मतम्। परमे-श्वरेच्छां मनसिकृत्य किंवा भविष्यतीति न ज्ञायते, तथापि शुभवासनाऽवश्यं विधेयेति मतमिदमत्र प्रदर्शितम्। सीसकाक्षरादिस्खलने पूर्वापरसंदर्भविरोधे पुनरुक्त्यादिषु च न विदुषां किमपि विज्ञा-पनीयम्। प्रमादप्रायश्चित्तं तु कर्त्रैव भोक्तव्यमिति तत्र बद्धपरिकरोऽयं जनः। यावच्छक्ति शुद्धि-करणादिकं विहितमेव। पूर्वापरसंदर्भोऽप्यालोचितः। एवमपि प्रमादा भवन्त्येवेति निश्चप्रचमेव। एकाकित्वादधिकं विधातुमक्षमोऽयं जनो विदुषां पुरत इदमेव प्रार्थयते यत् प्रमादनिवेदनेनानुग्रा-ह्योऽयं जनः। ये त्वसतोऽपि दोषानुद्भाव्य खण्डनादिषु प्रवर्तेरन्, ते तु दूरतयैव संमाननीयाः। यतः 'अकारणाविष्कृतवैरदारुणादसज्जनात् कस्य भयं न जायते। विषं महाहेरिव यस्य दुर्वचः सुदुःसहं संनिहितं सदा मुखे' इति किल भट्टबाणोक्तिः। इदमेव तान्प्रार्थयामि खण्डनमेव चेद् विधेयं कृपया युक्तियुक्तं विधाय यथाऽस्माभिरधिगन्तुं शक्येत तथाऽस्मत्सविधे प्रेषणोपकारोऽपि

कर्तव्यः। यतः कुग्रामेऽत्र न वृत्तपत्रादि न वा पुस्तकालयादि लब्धुं शक्यम्। अतश्च तद्स्मत्सविधे प्रेषणीयामिति। तत्रापि व्ययभारस्तु नास्माभिः स्वीकरिष्यते। प्रत्युत्तराशा चेन्न स्यात् न प्रेषणीयमित्यपि निवेद्यते। अन्ते च यत्कृपया प्रणीतोऽयं ग्रन्थः स एव भगवान् जानकीजानिः सर्वान् सुबुद्ध्या सम्पुनक्त्विति प्रार्थना।

येस्तु महाभागैर्महार्घं समयं यापयित्वा साहाय्य कृतमत्र ग्रन्थे तेषामभिनन्दनमपि कृतज्ञतया विधातव्यमेव। तत्र च श्रीआत्मारामशास्त्रिजेरेमहोदयैः अत्र ग्रामे मासमवस्थाय प्रथमभागपर्यालोचनेन योऽनुग्रहः कृतः स तु न कदापि विस्मरणपदवीमधिगच्छति। सर्वेषां भागानामेवमेव पर्यालोचनेन सहकार्य–प्रदानं तैरनुज्ञातमपि नास्माभिः विधिवशात्तथा कर्तुं पारितम्। नैतावता जेरेमहोदयैः कृतोऽनुग्रहः, विस्मरणपदवीमियात्। एते च विद्यार्थिदशात एव परिचिताः। सरलस्वभावा धर्मकर्मनिष्ठाः सर्वतन्त्रस्वतन्त्रा विशेषतो न्यायवेदान्तनिपुणा वैदिकधर्मपक्षपातिन इदानीमम्मळनेरग्रामे तत्त्वज्ञानमन्दिरे छात्रानध्यापयन्ति। एवमपि तेषां साहाय्यं नास्माभिः पूर्णतया स्वीकृतामिति दोदूयते चेतः। किं वा तेषां प्रत्युपकरणमिति धन्यवादैरेव तान् संभावयामः। एवमेव विठ्ठलशास्त्रिव्यवहारेमहोदयैरेदलाबादग्रामस्थैरत्रावस्थाय भागद्वयस्य मुद्रणयोग्यं प्रतिलिपिकरणं कृतमिति तेऽपि धन्यवादार्हा एव। पुण्यपत्तनस्थैरानन्दाश्रममुद्रणालये ग्रन्थसंशोधकैः वे. शा. शंकररंगनाथमारूळकरशास्त्रिमहोदयैरस्य ग्रन्थस्य मुद्रितसंशोधनं यत् कृत तेन महानस्माकं प्रयासो निराकृत इति तेऽपि धन्यवादार्हाः। एते च महाभागाः सर्वशास्त्रप्रवीणाः ' सदा संतुष्टमनसः सर्वाः सुखमया दिशः ' इति वचनानुसारेण वर्तयन्तो धर्मैकपक्षपातिनोऽत्र कार्ये भाग्यवशादेव सहकारिणः समुपलब्धा इत्यमन्दानन्दास्पदम्। किं वा तेषा संमाननमिति धन्यवादैरेव समश्रयं समावयामः।

अन्ततो गत्वेदमेव निवेद्यते यत्. ह. म. प श्रीसन्तोजीमहाराजैर्बहोः कालादारभ्य योऽयं शुभसंकल्पो मनसि संकलित आसीत्; यश्च कै. रावेरग्रामस्थगोविन्दशास्त्रीमहोदयैर्मनसि उप्तो; यश्च म. म. श्रीधरशास्त्रिपाठकमहाभागप्रभृतिभिरङ्कुरितः, काशीस्थपण्डितवर्यैश्च वृक्षत्वमापादित इदानीं फलेग्रहित्वमापद्यते यस्य कृते बहुव्ययायाससाध्यानि महान्ति कष्टानि जीवितनिरपेक्षमेव महाराजैरङ्गीकृतानि सोऽयं सत्वरमेव परिपक्वफलशालित्वमाप्नुयादिति किल शुभेच्छाप्रदर्शनं विना नायं समुद्देशः पूर्णतामियादिति सानन्दं सप्रश्रयं च तथा भगवन्त जानकीजानिमभ्यर्थयामः। स एव भगवानस्य वृक्षस्य फलास्वादपर्यन्तं श्रीसन्तोजीमहाराजानां दीर्घायुरारोग्यैश्वर्याभिवृद्धिं वितरतादिति भगवन्तं सर्वान्तर्यामिणं परमात्मानं प्रार्थयते—

विदुषां विधेयतमः
पण्डितोपाह्वकेशवसूनुः–देवकृष्णशर्मा;

इदानीं वास्तव्यस्थानम्—
तळोदा, पश्चिम खानदेश.

मुल्हेराभिजनः।
मितिः—आ. व. १२. शके १८७२

श्री. ओंकारदास किशोरदास चौधरी, प्रधानमन्त्री सनातनधर्मोज्जीविनी सभा.



ओंकारदासनामा किशोरदासात्मज सुधी श्रीमान्
निजवैश्यवृत्तिशौण्ड सहकारी सन्तुजीमहाराज ॥ १ ॥
श्रीमालिवैश्यजाति श्रीमाला विधिनशात्सदा धत्ते
श्रीपर्तापदैकनिरत श्रील श्राद्ध श्रीकरो नूनम् ॥ २ ॥
योऽसौ सदा शुचीना द्विजराजाना प्रहर्षदो निपुण
दाभादानैकरतो भास्वानिव भाति भासतिप्रसर ॥ ३ ॥
एकस्मै द्विजराजाय प्रकाशदानाद्विभात्यय भास्वान्
द्विजराजनिवहदानाद्भास्वाननु भाति भूतलेऽनसम् ॥ ४ ॥
दानी धनी च मानी निजननाहितकृत्सदा मुदा युक्त
धनधान्यधराधित्तो जयतुतरा धर्मनिष्ठोऽसौ ॥ ५ ॥

॥ श्रीविठ्ठल ॥

# सनातन धर्मोज्जीविनीसभा-प्रधानमंत्री श्री. ओंकारदास किशोरदास चौधरी, तळोदा।

# निवेदनम्।

भारतवर्षके प्राणभूत सनातन धर्मके विषयमें अनेक आक्षेप और आक्रमण सुरु हुवा है। उसका परिणाम केवल धर्मपरही नहीं अपितु भारतवर्षके राजकीय, सामाजिक, आर्थिक परिस्थितीपर बहोतही अनिष्ट हो रहा है। इस परिस्थितीका मूल कारण क्या है; और इस प्राणभूत धर्मके रक्षणके लिये क्या उपाय करना चाहिये इसका दूरदृष्टीसे विचार करके श्री संतोजी महाराजने सनातन धर्मोज्जीविनीसभाकी स्थापना की है।

तत्त्वप्रचुर इस सनातन धर्मका नाश होनेका कारण क्या इसका विचार करनेसे यह मालुम होता है की पाश्चात्त्य शिक्षणपद्धतीका यह दुष्परिणाम है यह निश्चित है। बहोतसे लोग धर्मको और आपने देशाचारोंको निंद्य दृष्टीसे देख रहे है। —और स्वकीय धर्मका अज्ञान और धर्मके विषयमें अरुचि और धर्मसंबंधीत अनेक शंका कुशंका करने लगे हैं। इतनाही नहीं किंतु इस परिस्थितीसे धर्माभिमानी लोगोंके अंतःकरणभी चलबिचल हो गये हैं। यह परिणाम पाश्चात्त्य शिक्षणपद्धतीका है। इस लिये श्री संतोजी महाराजने सनातन धर्मके मूलभूत सिद्धांतोंका सुव्यवस्थित प्रकारसे ज्ञान होनेके लिये प्राथमिक एक " सनातन धर्म-प्रदीप " नामका ग्रन्थ प्रसिद्ध किया है।

यह ग्रन्थ केवल विचारविनिमयार्थ और समालोचनार्थ भारतीय विद्वानोंके पास विना-मूल्य भेजा गया है। इस ग्रंथका समालोचन करके अनेक पंडितोंने निबंध भेजे हैं। सनातन धर्मप्रदीपका, और प्राप्त हुवे निबंधोंका संशोधन करके धर्मादर्श ग्रंथ प्रकाशित हुवा है।

सनातन धर्मप्रदीप ग्रंथ और धर्मादर्श ग्रंथ इन दोनो ग्रंथोंका इतिहास श्री संतोजी महाराजने अपने निवेदनमें सम्यक् रूपसे बताया है। उससे सब कुछ ज्ञान हो जायेगा। श्री संतोजी महाराजने अपना सारा आयुष्य इस ग्रंथकार्यमें व्यतीत किया है। और यह उभय ग्रंथ तत्त्वप्रचुर धार्मिक प्रजाको मार्गदर्शक ऐसे हुवे है। इसमें कुच्छ शंका नहीं। यह उभय ग्रंथोंके प्रकाशित करनेके कार्यमें आजदिनतक ७५००० पाऊण लाख रुपये खर्च हुये है। यह धनसंचय श्री संतोजी महाराजने भिक्षाके रूपसे संग्रहित किया है। इस विक्राळ

समयमें धर्मरक्षणार्थ धनसंग्रह करना बडा कठिन हो रहा है। इसमें कुछ शंका नहीं। और यह अनभव सिद्ध है।

श्री संतोजी महाराजने यह ग्रंथकार्य केवल धनलोभसे नहीं किया है। इसमें कुछ संदेह नहीं है। बहोत लोगोंके अंत.करणमें श्री संतोजी महाराजने ग्रंथद्वारा धनसंग्रह करनेका एक मार्ग निकाला है। यह आक्षेप केवल भ्रममात्र है। मुद्रापित धर्मादर्श ग्रंथ विक्रीके लिये रखा गया है। इसकी योजना श्री संतोजी महाराजने ऐसी की है की, यह ग्रंथका विक्रय करके जो धनसंग्रह होगा उसका व्यय इस ग्रंथके प्रचार-कार्यमेंही होना चाहिये। क्यों कीं, यह ग्रंथ इस समय संस्कृत भाषामें है। केवल संस्कृत भाषामें है इतनाही नहीं किंतु दार्शनिक दृष्टीसे उच्चतर संस्कृत भाषामें लिखा है। अत: सामान्य जनताको इसका बोध होना कठिन है। इस लिये इसका हिंदी, मराठी, अंग्रेजी इत्यादि भाषाओंमें रूपांतर होना आवश्यक है। अतः इस ग्रंथका विक्रय करके जो फायदा होगा वह सर्व धन इस ग्रंथके प्रचारकार्यमेंही व्यय होना उचित है। इस दृष्टीसे श्री संतोजी महाराजने सनातन धर्मग्रंथप्रसारक समिती स्थापन की है। उसका स्वरूप निम्नलिखित प्रकारका है।

इस ग्रंथप्रचारक समितीके सदस्योंका उल्लेख करना आवश्यक है। इस समितीके अध्यक्ष श्री संतोजी महाराज गुरु काशीराम महाराज हैं।

उपाध्यक्ष:—भुवनलाल कथुभाई सराफ, वकील, नंदुरबार।

सेक्रेटरी:—मधुसूदन माणकलाल त्रिवेदी, वकील, नंदुरबार।

इस समितीके सदस्य:—उद्धव महाराज कुकुरमुंडेकर।

श्रीमान्:—ओंकारदास किशोरदास चौधरी, तळोदा।

,, गोविंद रमाकांत पाठक, प्रकाशेंकर।

,, दामोदरदास हरकलाल शेट, विरदेल तो. शिंदखेडे।

,, निवृत्ती शिवशंकर सराफ, नंदुरबार।

,, शंकरलाल तुळशीदास शेठ अमळनेरकर।

यह इस समितीके सभासद है। इनका कर्तव्य धर्मादर्श ग्रंथका प्रकाशन करना, और ग्रंथका विक्रय करना, और विक्रय करके जो धनसंग्रह होगा उसमेंसे प्रथम सनातन धर्मोज्जीविनी सभाको जो ऋण हुवा है वह निवारण करना। अवशिष्ट धनसे इसी ग्रंथका देशी भाषाओंमें रूपांतर करना। और ग्रंथका प्रचार करना। और इस समितीके घटनानुसार सब कार्य चलाना है। सनातन धर्मोज्जीविनी सभानें यह समिती निर्माण की है। अतः राजशासना-

नुसार इस ग्रंथका सर्व प्रकारका मालकी हक्क इस समितीको रहेगा । और इस ग्रंथके प्रचार-कार्यमें जो कुछ धनकी आवश्यकता उपस्थित होगी उसके लिये धनसंग्रहभी इस समितीने करना । इस परसे इस ग्रंथके द्वारा जो धनसंग्रह होगा उसी धनद्वारा इस धर्मादर्श ग्रंथके सदृश और भी ग्रंथोंको निर्माण करनेकी आवश्यकता है ।

पूर्वजोंने साहित्यद्वाराही संकटसमयमे धर्मका रक्षण किया है । उसी प्रकारसे इस समय-भी रक्षणके लिये प्राचीन शास्त्रोंका पुनरुद्धार करनेका समय उपस्थित हुआ है । शास्त्रोंका पुनरुद्धार करनेके लिये धनसंग्रहकी बहोतही आवश्यकता है । इस लिये श्री संतोजी महाराजनें स्थायी धनसंग्रहके लिये सनातन धर्मग्रंथप्रसारसमितिकी स्थापना की है ।

अतः भारतवर्षके सनातन धर्मानुयायी धनीओंको सानुराधे प्रार्थना करता हूं कीं, मुक्त-हस्तसे धनप्रदान करके इस कार्यको उठा ले । सनातन धर्मके विषयमे सनातनी जनताकी बहोत गलती हो रही है । यह गलती देखकर बहोत शोक हो रहा है । विधर्मीओंके तरफसे सनातन धर्मपर बहोत जोरसे आक्रमण और आत्याचार हो रहा है । और धार्मिक जनताओंके तरफसे उसका प्रतिकार जिस प्रकारसे होना आवश्यक है उस प्रकारसे उतना होता नहीं है । पूर्वकालमें सर्वस्व त्याग करकेभी धर्मको रक्षण करनेका उत्साह जनताओंने प्रगट किया था । उसी प्रकार इस समयभी सर्वस्वका त्याग करके धर्मका रक्षण करना आवश्यक है ।

समस्त वैदिक धर्मानुयायी पीठाचार्योंकी और भारतवर्षके परिनिष्ठित विद्वान् पंडितोंकी संघट्ना होना अत्यंत आवश्यक है । बिना संघट्नासे कोईभी कार्य इस सयय नहीं हो सकता है । " संघे शक्तिः कलौ युगे " इस लिये सर्वान्तर्यामी, सर्वात्मा, धर्मात्मा, धर्ममूर्ती, धर्मरक्षक, श्री हरीसे प्रार्थना करते हैं कीं, अब आपने गीताजीमें जो प्रतिज्ञा की है वह शीघ्र सत्य कीजिये ।

॥ श्लोक ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥ गीता अ. ४

इस प्रकारकी प्रार्थना करके इस निवेदनको पूर्ण करता हूं ।

शके १८७२ कार्तिक शु. १० गुरुवार.                    शा. ओंकारदास किशोरदास चौधरी.

---



भगवद्भक्त शिव शंकर बापू सुवर्णकार.

अस्य पुत्रौ द्वौ तौ महाधर्मनिष्ठौ निवृत्तिनाथः ज्ञानात्मा च



शेठ दामोदरदास हरकलाल, बिरदेल.

# धर्मादर्शस्थविषयाणामनुक्रमणिका ।

## प्रमाणप्रतिबिम्बः [ १ ]

## नीतिप्रतिबिम्बः [२]

## चातुर्वर्ण्यप्रतिबिम्बः [२]

विवाहप्रतिबिम्बः [ ४ ]

॥ श्रीः ॥

# ॥ धर्मादर्शः ॥

## तत्र प्रमाणप्रतिविम्बः ।

पादपङ्कजसंस्पर्शाज्जडेभ्यो मानुषीं गतिम् ।
प्रयच्छन्तं विश्वगुरुं सीताराममुपास्महे ॥

## उपोद्घातः

इदानीं किल धर्माधर्मविषये विप्रतिपन्ना बहुविदोऽपि विचक्षणाः केचिदर्थकामपुरस्कारेण धर्माधर्मपरिवर्तनं, केचित् धर्मस्याप्रामाणिकत्वादनावश्यकत्वम्, केचित्तु तत्त्वतोऽसिद्धत्वान्नैवेश्वरः, नापि वा धर्माधर्माविति मन्वानाः प्रसृतामिमां धर्माधर्मबुद्धिमन्धपरम्परया व्यसनमिति मन्यन्ते । तदेतेषां मतानां पर्यालोचनं कर्तव्यतया समापतितमिदानींतनानां धार्मिकधुरीणानां शिरसि । तच्च पर्यालोचनं वादजल्पवितण्डानामन्यतमां कथामाश्रित्यैव कर्तव्यम् । तत्र स्वपक्षस्थापनं विनापि विपक्षपराजयेऽपि वितण्डया स्वपक्षे जनानां प्रवृत्तिर्न सेत्स्यति इति स्वपक्षस्थापनमप्यावश्यकं विधेयम्, जल्पस्य स्वपक्षस्थापकत्वेऽपि तत्त्वनिर्णायकत्वाभावः । जिगीषामूलकत्वात् । अतश्च तत्त्वबुभुत्सयैव प्रवृत्तिः साधीयसीति तामनुसृत्यैव किंचिद्विचारयामः ।

### ( विप्रतिपत्तेरावश्यकत्वम् )

विचारावसरे च " असंदिग्धो ह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः " इति *भाट्टोक्त्या* विचारस्य संदेहपूर्वकत्वात् आदौ विप्रतिपत्तिः प्रदर्शनीया । यद्यपि सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षत्वेन तत्संपादकत्वेन साध्यसंदेहस्यानुपयोगित्वान्न विप्रतिपत्तिप्रदर्शनस्याऽऽवश्यकता, तथापि वादिप्रतिवादिमतश्रवणानन्तरमितरेषां संदेहस्यावश्यंभावात् तत्र यथावन्निर्णयार्थं विप्रतिपन्नांशस्य स्पष्टप्रतिपत्तये च विप्रतिपत्तिः प्रदर्शनीयैव, विस्तरस्तु अद्वैतसिद्धिव्याख्यायां द्रष्टव्यः । एवं च विप्रतिपत्तिप्रदर्शनेन विचारणीयांशस्य विशदावगमे तदनुसारेण वादप्रवृत्तौ च तत्त्वावधारणं सम्यक्तया भवति सभ्यानाम्, तदभावे च वादिप्रतिवादिनोर्निग्रहादिकस्य ज्ञातुमशक्यत्वाज्जातेऽपि वादे न निर्णयसंभव इति कथायां विप्रतिपत्तिप्रदर्शनमत्यावश्यकम् ।

ज्ञातस्यैव, तच्च ज्ञानं यदि लौकिकैः प्रमाणैर्निश्चितप्रामाण्यैर्भवति, तदा कथं तावत्तस्यालौकिकत्वम्। यदि च ज्ञानमेव न स्यादिच्छापि न स्यादिति इष्टत्वव्याघातः। एवं च परस्परविरुद्धयोरनयोरेकरूपेण प्रसिद्ध्यभावात्संदेहानुपपत्तेर्विप्रतिपत्तेरेवासंभव इति चेदत्रेदमुच्यते—

( साध्यालौकिकत्वे उत्तरपक्षः )

स्यान्नाम विरोधः, यदि सर्वथा तस्याप्रसिद्धिः, न तु तथास्ति। शपथसमयबन्धादिषु लोके तस्य प्रसिद्धत्वात्। नहि शासनसभादिषु राजनिष्ठाशपथादिकमिदानीमपि धर्माधर्मानादरतत्परैरपि क्रियमाणं लौकिकेष्टसंपादनाय भवति, तथैव स्वकृतसमयबन्धोऽपि "मया भोजनव्यतिरेकेण पानीयं न पातव्यम्। इयं संस्था एतादृशनियमैरेव संचालनीया" इत्यादिको महताऽभिनिवेशेन परिपाल्यमानो लौकिकेष्टफलाय कल्पयितुं शक्यः। एतच्चाग्रे सुविशदं भविष्यति। एवं चालौकिकेष्टस्य प्रसिद्धत्वात् कचित्तस्य संदेहस्यापि संभवात् सूपपादेयं विप्रतिपत्तिः। एकदेशे साध्यसिद्धावपि न सिद्धसाधनतेति प्रसिद्धमेव घटदृष्टान्तेन कार्यत्वलिङ्गकानुमानेन क्षित्यङ्कुरादिषु कर्तृजन्यत्वसाधने, इति नात्र प्रपञ्च्यते।

एवं सिद्धायां विप्रतिपत्तौ

"तच्च पञ्चतयं केचिद् द्वयमन्ये वयं त्रयम्।
उदाहरणपर्यन्तं यद्वोदाहरणादिकम्।

इति भाट्टमतमनुसृत्य त्र्यवयवात्मकः कश्चन प्रयोगो वादिप्रतिवादिभिः प्रतिपादनीयः। पञ्चावयवानामतिविस्तृतत्त्वाद्गतार्थत्वाच्च द्व्यवयवयोरत्यन्तसाकाङ्क्षत्वात् क्लेशगम्यत्वाच्च वाक्यस्य त्र्यवयवात्मकत्वमेवोचितं मन्यन्ते वार्तिककाराः। अतः प्रतिपन्नार्थस्यानुमानेन प्रतिपिपादयिषायां साधनस्य पञ्चावयवात्मकस्य द्व्यवयवात्मकस्य त्र्यवयवात्मकस्य वा वाक्यप्रयोगस्यातीवाऽऽवश्यकत्वात्तदेव प्रथमतः प्रतिपादयितुमुचितमिति प्रतिपादयामः।

( सिद्धान्तानुमानम् )

अयमत्र सिद्धान्तसंपादकोऽनुमानप्रयोगः। विमताः क्रियाः, अलौकिकेष्टफलसाधनम्, वेदबोधितेतिकर्तव्यताकत्वात्, ईश्वरोपासनवत्। ईश्वरानङ्गीकारे च व्यावहारिककर्मदृष्टान्तेन केवलव्यतिरेकव्याप्तिः। यन्नैवं तन्नैवं यथा व्यावहारिकं भोजनादिकर्मेति। यद्वा "विमताः क्रियाः सफलाः क्रियात्वात्, लौकिकक्रियावत्," इति सामान्यतः क्रियात्वेन सफलत्वं संसाध्य

" विमताः क्रियां अलौकिकेष्टफलकाः, लौकिकफलराहित्ये सति सफलत्वात् इति परिशेषानुमानेनालौकिकफलसिद्धिः । अत्र चेतिकर्तव्यतायाः साधनस्वरूपनिष्पादकत्वात् साधनेन साध्ये साधयितव्ये अवान्तरव्यापाररूपत्वाद्वा साधनेन सह नियतसंबन्धस्यावश्यंभावात् "यदि हि इतिकर्तव्यता इष्टसाधनत्वव्यभिचारिणी स्यात् साधनस्य साधनत्वमेव न स्यादिति " व्यभिचारशङ्कानिवर्तकस्तर्कोऽनुसंधेयः । इतिकर्तव्यतास्वरूपं चेत्थमुक्तं भावार्थाधिकरणे शास्त्रदीपिकायाम् " अतो यदवस्थो यागः स्वर्गं संपादयति, तदवस्थो यागो येन व्यापारेण निष्पद्यते, स व्यापारः स्वर्गकृतिरित्येवंरूपेणाख्याताभिधेयो भवति । तस्यापि व्यापारस्य विशेषरूपं प्रमाणान्तरवेद्यं नाख्यातेन स्पृश्यते । यागेन स्वर्गं कुर्यादित्यनेन ह्येतावदवगम्यते यथा यागात्स्वर्गो भवति तथा व्याप्रियेतेति । तच्च कथं व्यापारयितव्यं, कोऽसौ व्यापार इति व्यापारविशेषात्मककथंभावापेक्षायामग्न्यन्वाधानप्रयाजावघातादिभिरुपकारसंपादनं शास्त्रान्तरैरवगम्यते । यागस्वरूपस्य च प्रयत्नादिसंपादनमर्थापत्त्या । न ह्यनिष्पादितस्य करणत्वमुपपद्यते । तेन स्वरूपसंपादनं प्रयाजादिभिश्चोपकारसंपादनमिति सकलोऽयं व्यापारः स्वर्गकृतिरित्यनेनाऽऽकारेणाऽऽख्यातशब्देनाभिधीयते । विशेषरूपं तु प्रयाजादिशास्त्रान्तरैरवगम्यते । तेन सकलोऽयं प्रयाजादि व्यापारः प्रधानकारणिकाया भावनाया एव प्रपञ्चः । तेन च व्यापारेण फलसाधनात्मना संपद्यमानो यागः करणम् । एतदेव हि करणानां करणत्वं यदुत फलोद्देशप्रवृत्तकर्तृव्यापारेण फलसाधनात्मना संपत्तिः परशोरिवोद्यमननिपतनाभ्यां द्वैधीभावसाधनतया " इति ।

## ( अनुमानलक्षणम् )

यन्नुतन्नु लिङ्गस्य लिङ्गिना सह नियतः संबन्ध एव व्याप्तिः, तस्या एव ज्ञानमनुमाने कारणम् । न कार्यकारणभावो वा प्रयोज्यप्रयोजकभावो वा तत्रापेक्ष्यते । अत एव कृत्तिकारोहिण्युदयादीनां लिङ्गलिङ्गिभावः । अत एवोक्तम्—संबन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना— इति । अत एव च " ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसंनिकृष्टे बुद्धिः " इत्यनुमानलक्षणमुक्तं शाबरभाष्ये । व्याख्यानं चेदं शास्त्रदीपिकायामित्थम्—यस्य यादृशस्य येन यादृशेन सह साक्षाद्वा परम्परया वा यादृशः संबन्धः संयोगः समवाय एकार्थसमवायः कार्यकारणत्वमन्यो वा दृष्टान्तधर्मिषु नियतो ज्ञातस्तादृशस्य तस्य धर्मिषु दृश्यमानस्तस्मिंस्तादृशे तादृशसंबन्धसंबन्धिनि दर्शनेन समानेन तादृग्धर्मविशिष्टधर्म्याकारविच्छिन्ना या बुद्धिः सानुमानम् , इति । अत एव च यद्रसवत्तद्रूपवत् , [illegible] , इत्यादौ व्यभिचारशङ्कानिवर्तकतर्काभावेऽपि व्याप्तिबुद्धिरुपपत्ति [illegible] । एवमत्रापि साधनत्वस्य [illegible] नियतः संबन्धो साधनेनेति व्यभिचार शङ्कानिवर्तकस्तर्कोऽपि [illegible] । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

## ( व्यभिचारवारणम् )

नन्वेवमपि कारीर्यादीनां दृष्टवृष्ट्यादिफलसाधनत्वात् वेदबोधितेतिकर्तव्यताकत्वेऽप्यलौकिकेष्टसाधनत्वं नास्तीति व्यभिचार इति चेत् स्यादेतदेवं यदि सर्वत्र कारीर्याद्यनुष्ठानानन्तरमेव वृष्ट्यादिफलदर्शनं स्यात् । न च तथास्ति कदाचित् कालान्तरेऽपि वृष्टिदर्शनात्। तदानीं तु प्रागनुष्ठितकारीर्यादीनामेवेदं फलमुताहो अन्यस्य कस्यचित् कारणस्येति कार्यकारणभावानवधारणेन योगजसिद्धिवत्तस्यापि फलस्यालौकिकत्वमस्त्येव, किञ्च फलस्य लोकसिद्धप्रमाणगम्यत्वेऽपि तत्साधनस्यालौकिकप्रमाणगम्यत्वेन कारीर्यादिष्वपि अलौकिकेष्टसाधनत्वमकामेनाप्यूरीकरणीयम् । तदुक्तम्——

द्रव्यकर्मगुणादीनां धर्मत्वं स्थापयिष्यते । तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥ श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते । ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ इति ॥ श्लो. वा. ॥

## ( साध्यनिर्वचनम् )

ननु किमिदमलौकिकेष्टसाधनत्वं नाम ? किमलौकिकं यदिष्टं तस्य साधनत्वमुतालौकिकं यदिष्टसाधनत्वम् ? नाद्यः-इष्टत्वमिच्छाविषयत्वम्, ज्ञानं विना च नेच्छोदयः । ज्ञानं च लौकिकप्रमाणैरेवेति सर्वथा इष्टस्यालौकिकत्वासंभवात् । नान्त्यः—साधनस्योपादेयत्वादलौकिकस्य चोपादातुमशक्यत्वात् । उभयथापि साध्याप्रसिद्धिः । न च शपथसमयबन्धादिषु पूर्वमेवोक्ता तस्य प्रसिद्धिरिति वाच्यम् । तस्या अपि प्रामाणिकत्वसंदेहेन मूलभूतप्रमाणपर्यालोचनस्याऽऽवश्यकत्वात् । अन्यथा धर्माधर्मयोरपि तथैव प्रसिद्धेः किं तद्विचारेण । तथाचोक्तं भट्टपादैः —

प्रत्यक्षादौ निषिद्धेऽपि ननु लोकप्रसिद्धितः ।
धर्माधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत् ॥
धार्मिकाधार्मिकत्वाभ्यां पीडानुग्रहकारिणौ ।
प्रसिद्धौ हि तथा चाऽऽह पाराशर्योऽत्र वस्तुनि ॥
इदं पुण्यमिदं पापमित्येतस्मिन्पदद्वये ।
आचाण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥
निर्मूलासंभवादत्र प्रमाणैः सैव मृग्यते ॥ इति ॥

अनेन चेदं स्पष्टमवगम्यते यत्प्रसिद्धिरपि प्रमाणमूलिकैवापेक्ष्यते, न निर्मूलेति । अतोऽलौकिकेष्टसाधनत्वरूपसाध्यस्यापि मूलभूतप्रमाणापेक्षाऽनिवार्या ।

ननु माऽस्तु तर्हि अलौकिकेति विशेषणम् । केवलमिष्टसाधनत्वमेव साध्यतामिति चेन्न । दृष्टादृष्टार्थक्रियासु दृष्टार्थसाधनत्वस्य सिद्धत्वेऽपि अदृष्टेष्टसाधनत्वस्य साध्यत्वात् क्रियात्वेन सेति-

कर्तव्यताकसकलक्रियाणामपि इष्टेष्टसाधनत्वस्य सिद्धौ सिद्धसाधनत्वेन कथोच्छेदप्रसङ्गात्। अतोऽलौकिकेति विशेषणमत्यावश्यकम्।

## ( अलौकिकत्वनिर्वचने पूर्वपक्षः )

ननु तर्हि निरूप्यतां किमिदमलौकिकेष्टसाधनत्वम्। किमलौकिकप्रमाणगम्येष्टसाधनत्वं वा, लौकिकप्रमाणागम्येष्टसाधनत्वं वा ? साधने लोकसिद्धसाधनातिरिक्तत्वं वा ? इष्टे अलौकिकव्यापारजन्यत्वं वा ? ममैतच्छरीरातिरिक्तशरीरभोग्यत्वं वा ? अतीन्द्रियत्वं वा ? नाऽऽद्यः, लोकसिद्धप्रमाणातिरिक्तप्रमाणस्याप्रसिद्धावलीकत्वापत्तेः। प्रसिद्धौ तस्य लौकिकत्वात् साध्याप्रसिद्धेः। अत एव न द्वितीयः। लोकसिद्धप्रमाणागम्यत्वे तस्य प्रमाणाप्रसिध्द्याऽलीकत्वम्। तदतिरिक्तप्रमाणस्याभावात

" मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात् "

इति न्यायेन प्रमाणाप्रवृत्तौ प्रमेयासिद्धेः। तृतीयस्तु सर्वेषां व्यापाराणां क्रियात्वेन क्रियाणां च प्रत्यक्षगोचरत्वेनालौकिकत्वाप्रसिद्धेर्व्यापारस्य विकल्पासहत्वान्नोपादेयः। चतुर्थे तु सिद्धसाधनता। अस्ति चेत्साधनता विमतानां क्रियाणां तर्हि सा लोकसिद्धसाधनतातिरिक्तैव। न वयमपि तादृशीं साधनतां लोकसिद्धां मन्यामहे। यत्र साधनत्वे एव विप्रतिपत्तिः। तत्र तस्या अलौकिकत्वमुभयवादिसिद्धमेवेति व्यर्थमेवेदं विशेषणम्। न हि पर्वतो भास्वरशुक्लवह्निमानिति साध्ये वह्नेर्भास्वरशुक्लत्वे विप्रतिपत्तिर्भवितुमर्हति। तथात्रापीति व्यर्थविशेषणत्वम्। पञ्चमस्तु पक्षः चित्राकारीर्यादिषु व्यभिचारान्न युक्तियुक्तः। तत्फलानां वृष्टिपश्वादीनामेकस्मिन्नेव शरीरे भोगसंभवात्। अत एव न षष्ठोऽपि। अतीन्द्रियस्योपभोगासंभवेनेष्टत्वव्याघातात्। इष्टं चानुपभोग्यं चेति विरुद्धमेतदन्योन्यम्। न चातीन्द्रियस्यापि वायोर्भोग्यत्वादिष्टत्वं संभवत्येवेति वाच्यम्। येषां मते वायोरतीन्द्रियत्वं तेषां मते तत्स्पर्शस्यैवेन्द्रियगोचरस्य भोग्यत्वेनेष्टत्वात् शब्दवत्। न हि शब्दो भोग्य इत्येतावता अतीन्द्रियस्याऽऽकाशस्य भोग्यत्वेनेष्टत्वं मन्यन्ते। न ह्याकाशो मे स्यादिति समुद्भवति कस्यापीच्छा। अतोऽतीन्द्रियस्येष्टत्वासंभवो युक्तिसहः। ननु परमाणूनामतीन्द्रियत्वेऽपि तत्साध्यमूर्तपदार्थसिद्ध्यर्थं तेषामिष्टत्वं वर्तत एवेति चेन्न; तत्साध्यमूर्तपदार्थस्यैव तत्रेष्टत्वात्। प्रवृत्तिस्तु इष्टसाधन एव नेष्टे इति परमाणुषु प्रवृत्तिः सुसङ्गता। नैतावता परमाणुत्वेन तेषामिष्टत्वमपि तु मूर्तसाधनत्वेन। नचात्र तथा। इष्टस्यैवातीन्द्रियत्वात्। तस्मात्सर्वथा साध्याप्रसिद्धिः, इति चेन्न

## ( अलौकिकत्वनिर्वचने उत्तरपक्षः )

प्रमाणान्तराऽगोचरधर्मविषयकज्ञानजनकत्वमेव ह्यलौकिकत्वं प्रमाणस्य। तस्य च लौकिकेषु प्रमाणेषु अभावात्, वेदे च तत्सद्भावात् साध्यप्रसिद्धेः। तथाहि—प्रत्यक्षादीनि लौकिकानि प्रमाणानि

ह्यन्योन्यविषयगोचराणि सुप्रसिध्दानि । वेदविषयस्तु न केनापि प्रत्याय्यत इत्यतस्तस्यालौकिकप्रमाणत्वम् । अत एवोक्तम्—

प्रत्यक्षेणानुमानेन यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।। इति ।।

अत एव द्वितीयः पक्षोऽपि सूपपन्नः । यानि लौकिकानि प्रमाणानि प्रत्यक्षादीनि तेषामत्र विषयेऽप्रवृत्तेः । क्रियासु इष्टसाधनताबोधनद्वारा प्रवर्तनैव सर्वस्य वेदस्य विषयः । तत्र चेष्टं च तत्साधनं चैतद्द्वयमपि यदि प्रत्यक्षादिना गृह्येत, तदा तयोरन्वयव्यतिरेकाभ्यां साध्यसाधनभावोऽपि प्रत्यक्षादिनैव ग्रहीतुं शक्यः स्यात् । नत्वेतदस्ति साध्यस्य स्वर्गादेः कालान्तरभावित्वेन शरीरान्तरभोग्यत्वेन चेह जन्मनि कथमप्युपलम्भासंभवात् । जन्मान्तरे च तस्योपलम्भेऽपि तत्कारणीभूतयागादिक्रियाणां साधनत्वेन परामर्शासंभवात् न तयोः कार्यकारणभावः कथमपि ग्रहणविषयतामापततीति वेद एव शरणीकरणीयः । अतश्चालौकिकवेदरूपप्रमाणगम्यस्वर्गादीष्टसाधनत्वं लौकिकप्रत्यक्षादिप्रमाणागम्यतादृशेष्टसाधनत्वं वा सर्वथा संभवति ।

## ( प्रत्यक्षादिप्रमाणाप्रवृत्तिप्रतिपादनम् )

तत्र प्रत्यक्षप्रमाणस्य " सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भात् " इति सूत्रेण प्रत्यक्षव्याख्याप्रदर्शनपूर्वकं सूत्रकारेण निरस्तत्वात्, अनुमानादीनां व्याप्तिज्ञानशक्तिज्ञानादिकारणकानां च प्रत्यक्षपूर्वकत्वात्तन्निरासेनैव गतार्थत्वम् । तच्च तत्रैव सूत्रे वार्तिके भट्टपादैर्विशदीकृतमिति तदेवात्रोपस्थापयामः ।

प्रत्यक्षेण गृहीत्वा च लिङ्गाद्यन्यतमं ध्रुवम् ।
प्रवृत्तिरनुमानादेर्न च धर्मेऽस्ति तादृशम् ।।
अनुमानानुमानादेर्न चाप्यस्तीह संभवः ।
संबन्धलिङ्गिलिङ्गानां पूर्वसिद्धेरसंभवात् ।।
सत्ता च नानुमानेन कस्यचित् प्रतिपाद्यते ।
धर्मेणान्याद्विशिष्यं चेत्पक्षोऽसिद्धविशेषणः ।।
तस्माददृष्टपूर्वत्वात्केनचिद्वस्तुना सह ।
धर्मस्य नानुमेयत्वमसाधारणवस्तुवत् ।।
अदृष्टसदृशत्वाच्च स्वयं चानुपलम्भनात् ।
धर्मस्य नोपमेयत्वमसाधारणवद् भवेत् ।।

नन्वर्थापत्तिरेवं स्याज्जगद्वैचित्र्यदर्शनात् ।
सुखदुःखादिभेदो हि नादृष्टात्कारणाद्भवेत् ॥

दृष्टस्य व्यभिचारित्वात्तदभावेऽपि संभवात् ।
सेवाध्ययनतुल्यत्वे दृष्टा च फलभिन्नता ॥

स्यादेवं यदि शक्येत स्वाभाविकनिवारणा ।
कर्मशक्तेश्च वैचित्र्ये हेतुरन्यो भवेद्यदि ॥

यथा च फलवैचित्र्ये कर्मणां शक्तता स्वतः ।
तथाऽपि चित्रता लोके स्वभावादुपपत्स्यते ॥

अधर्मे धर्मरूपे वा ह्यविभक्ते फलं प्रति ।
किमप्यस्तीति विज्ञानं नराणां क्वोपयुज्यते ॥

किंनु यागादितो दुःखं हिंसादेः किं सुखोद्भवः ।
स्वर्गपुत्रादिभेदश्च कीदृशात्कर्मभेदतः ॥

इति यावदविज्ञानं तावन्नैव प्रवर्तते ।
प्रवृत्त्यङ्गं च विज्ञानं तस्य मूलं प्रतीक्ष्यते ॥

तस्मात्सिद्धेऽपि सामान्ये विशेषो नाऽऽगमादृते ।
विशेषस्य तु जिज्ञासा सूत्रकारेण सूत्रिता ॥

गम्यमाने विशेषे च तदन्तर्भावकारितः ।
सामान्यप्रत्ययोऽपि स्याच्छास्त्रादेवेत्यकारणम् ॥

यथार्थापत्तिरेवं च नानुमानोपमेष्यते ।
शाब्दं चेत्तदपेक्षेत तस्यैव स्यात्प्रमाणता ॥

यद्यपि त्वनुमानस्याप्येवमादौ समर्थता ।
विना संबन्धबोधेन न तु तस्योद्भवः क्वचित् ॥

न सामान्यविशेषाभ्यां धर्मसंबन्धदर्शनम् ।
लिङ्गस्य कस्यचित्सिद्धं येन स्यादनुमानता ॥ इति ॥

## ( वेदार्थपर्यालोचनम् )

ननु कथं प्रवर्तनानिवर्तनारूपविषयद्वयमेव वेदतात्पर्यार्थः सिद्धरूपाणामाख्यायिकावंशादीनामपि तत्र तत्रोपलब्धिर्न केनाप्यपलपितुं शक्या। न च तत्र वाक्यार्थबोधो न भवति; गृहीतशक्तिकानां पदानां श्रवणानन्तरं वाक्यार्थप्रत्ययस्य सर्वानुभवसिद्धत्वात्, न च न स तात्पर्यविषयः, तथात्वे वेदे तत्प्रतिपादनस्य वैयर्थ्यापातात्। न चापुरुषार्थत्वेन निष्फलत्वं मा भूदिति विधिनिषेधविषयकप्रशंसाद्वारा प्रवृत्तिनिवृत्तिपरत्वे तात्पर्यम्। विनापि तादृशवाक्यानि विधेयनिषेध्यप्रशंसोपपत्तेः। स्थितस्य गतिश्चिन्तनीयेति न्यायेनाऽऽम्नायस्य गतिं वक्तुं प्रभवामो नाऽऽम्नायं पर्यनुयोक्तुमिति भाट्टोक्त्या च तेषां विधिनिषेधपरत्वं तु स्वसमयसिद्धान्तः, न तु प्रमाणसिद्धः सिद्धान्तः। न चापुरुषार्थत्वान्निष्फलत्वं, 'देवदत्त पुत्रस्ते जातः' 'कन्या ते मृता' इत्यादि सिद्धवस्तुप्रतिपादकवाक्येभ्योऽपि सुखदुःखरूपपुरुषार्थप्राप्तेः संभवात्। न हि तत्र श्रोतुः किमपि कर्तव्यं प्रतिपाद्यते। तथाऽऽख्यायिकादिभ्योऽपि स्ववंशजानां कार्यज्ञानादेतादृशो महात्मानः कार्यकुशला मत्पूर्वजा इति स्वाभिमानोद्बोधद्वारा सुखदुःखादिभोगरूपपुरुषार्थस्य संभवात्। तस्मात् "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" "दृष्टो हि तस्यार्थः कर्मावबोधनम्" इत्यादि प्रलपनं स्वसमयकल्पितमेव इति चेदत्रोच्यते—

## ( वेदस्येतिहासत्वखण्डनम् )

स्यादिदं यदीतिहासरूपत्वं स्याद्वेदानाम्। न त्वेतदस्ति। तत्र तत्रोपक्रमोपसंहारे विधिनिषेधप्रतीतेः। न हि केवलं वंशकथनं वाऽऽख्यायिकाकथनं वा कुत्राप्युपलभ्यते वेदे। कमपि विधिं वा निषेधं वा प्रस्तुत्य क्रियमाणं वंशकथनमाख्यानोपन्यासश्च पूर्वापरसंदर्भलोचनया तेषामेव विधिनिषेधानामङ्गतया प्रतिभातीति शाब्दीयं मर्यादा न केनाप्यपलपितुं शक्या, तथात्वे त्वाधुनिकग्रन्थेष्वपि भिन्नभिन्नतात्पर्यनिवेदनं स्यात्।

## ( वेदस्य शास्त्रत्वम् )

किं च शास्त्रमिदं वेदरूपम्। तस्य चेदं स्वरूपमेव यच्छासनं नाम। अत एव —

> प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
> पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥

इति तल्लक्षणम्। न चाहेये चानुपादेये च कश्चन प्रेक्षावान्प्रवर्तते निवर्तते वा। हानोपादाने च अन्य कर्मान्तरेण न कुत्रापि केनापि बोधयितु शक्ये। तेषां स्वरूपत एव कर्मत्वात्। कथं वा

हानोपादाने कर्तव्ये इति कथंभावाकाङ्क्षायां कर्मस्वरूपस्यैव अन्यस्य कथंभावपूरकत्वात् । अत एव कस्मिंश्चिद्विषये प्रवर्तयत् कुतश्चिद्विषयान्निवर्तयदेवार्थवच्छास्त्रम् । किं बहुना सर्वेषामपि साहित्यादिशास्त्राणामिष्टानिष्टप्राप्तिपरिहारोपायप्रदर्शनद्वारा कुत्रचिद्विषयविशेषे प्रवृत्तिः, कुतश्चिद्विषयविशेषान्निवृत्तिरेव परमं प्रयोजनमिति तत्तच्छास्त्राणां डिण्डिमः । अत एव —

चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥

इति साहित्यदर्पणारम्भे चतुर्वर्गफलप्राप्तिरेव प्रयोजनत्वेनोपन्यस्ता । तद्विवरणमपि "रामादिवत्प्रवर्तितव्यं न रावणादिवत्" इत्येवं प्रकारेण ग्रन्थकृता स्वयमेव विशदीकृतम् । एवं च यत्र पुरुषबुद्धिपरिकल्पिताना सिद्धार्थप्रतिपादकाना काव्यनाटककादम्बर्यादिप्रबन्धानामपि प्रवृत्तौ निवृत्तौ च तात्पर्यमवसीयते । तत्र प्रत्यक्षप्रवृत्तिनिवृत्तिबोधकविधिनिषेधात्मकवाक्यसमूहस्य वेदरूपप्रबन्धस्य सिद्धचरित्रादिबोधने तात्पर्यपरिकल्पनमाहोपुरुषिकामात्रमेवोत्पश्यामः ।

## ( पुरुषार्थत्वविचारः )

नन्विदं वचनं पुरुषार्थपरत्वमेव बोधयति न कार्यपरत्वम्, पुरुषार्थश्च सुखदुःखप्राप्तिनिवृत्तिरूपः सिद्धार्थादपि वाक्याज्जातो भवति । 'पुत्रस्ते जातो भार्या ते मृता' इत्यत्र । एवमेव काव्यादिभ्योऽपि स्यात् । किमर्थं विधिनिषेधपरत्वं शास्त्रस्य कल्पनीयमिति चेत् — स्यादेतदेवं यदि पुरुषार्थस्य भोगरूपत्वं स्यात् न त्वेतदस्ति । अनिच्छयाप्यकस्मात् केनचनोच्चरितात् 'पुत्रस्ते जात' इति वाक्यात् भोगोपलब्धिसंभवात् । पुरुषार्थस्तु पुरुषेणार्थ्यमानत्वादेव पुरुषेच्छाविषयो भवति । न तथा भोगः । एवं च यत्र पुरुषेच्छाविषयस्य स्वव्यापारतन्त्रेण संपादनं तत्र पुरुषार्थत्वम् । इच्छाभावेऽपि ज्ञानमात्रादेव यत्रेष्टानिष्टप्राप्तिः तत्र भोगत्वमिति सिद्धे विषयविवेकेऽर्थादेव पुरुषार्थे पुरुषव्यापारस्येष्टसाधनीभूतस्य अन्यस्यावश्यमुपदेश्यत्वात् तत्परकत्वमेव शास्त्रस्य न भूतपरत्वमिति युक्तमेवोक्तमाम्नायस्य क्रियार्थत्वादिति । ननु तर्हि सिद्धार्थप्रतिपादकानां वाक्यानां का गतिरिति चेत् — विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरिति आकरे स्पष्टम् । यत्र क्रियासिद्ध्यर्थं साधनीभूताः पयोदध्याहवनीयादयः सिद्धा एव पदार्थाः प्रतिपाद्यन्ते । एवमाख्यायिकादयोऽपीति नाभिलषितमनोरथपरिपूर्तिरैतिहासिकानाम् । यत्परः शब्दः स शब्दार्थ इति न्यायात् । तात्पर्यनिर्णयश्चोपक्रमोपसंहारादिना भवतीति आकरे सुविशदं नात्र प्रपञ्च्यते । तत्सिद्धं वेदतात्पर्यं प्रवर्तनानिवर्तनयोरेवेति, इष्टप्राप्त्यनिष्टपरिहारसाधने प्रत्यक्षादिप्रमाणागोचरे बोधयद्वेदरूपं प्रमाणमलौकिकमिति ।

## ( शब्दप्रामाण्यविचारे पूर्वपक्षः )

ननु न सांप्रतमिदं यच्छब्दस्य प्रमाणत्वम्। तथाहि प्रमाकरणं प्रमाणमिति तल्लक्षणम्। प्रमा चानधिगताबाधितार्थविषयकज्ञानरूपैव नान्या। न च शब्दस्यानधिगतार्थबोधकत्वं कुत्राप्युपलभामहे। विज्ञाताच्छब्दाच्छक्तिधीद्वारा पदार्थोपस्थितौ यद्वाक्यार्थज्ञानं तच्छाब्दं प्रमाणमिति सर्वसंमतोऽयं सिद्धान्तः। तथा च पदार्थज्ञानं शक्तिद्वारैव प्रथमत एव संजायते। वाक्यार्थश्च पदार्थसंसर्ग इत्यपि सर्वसंमतम्। शाब्दबोधे हि एकपदार्थः अपरपदार्थे संसर्गमर्यादया भासते इति किल भट्टगदाधरोक्तिः। स च क्रियाकारकादिसर्वविधसंसर्गस्तद्वाचकविभक्तिप्रत्ययादिनैवोपस्थाप्यते इति किमधिकं बोध्यते वाक्येन। अतश्च न पदार्थबोधातिरिक्तो वाक्यार्थ इति। पदार्थानां च तच्छक्तपदैरेव पूर्वमुपस्थापितत्वाज्ज्ञातत्वम्। अतश्च ज्ञातज्ञापकत्वमेव वाक्यस्येति नानधिगतार्थबोधकज्ञानकरणत्वेन प्रमाणत्वं सेत्स्यति। ननु नानधिगतार्थबोधकरणत्वं प्रमाणत्वम्। पूर्वक्षणे चक्षुःसंनिकर्षादिना ज्ञातस्यापि घटस्योत्तरक्षणे तथैव संनिकर्षसत्त्वे तद्वदेव प्रत्ययस्य धारावाहिकस्थले दर्शनात्। अनुमितावपि ज्ञातस्यापि साध्यस्यानुमित्सायामनुमानप्रयोगस्य सर्वैरङ्गीकारात् तज्ज्ञानस्यापि प्रमात्वेन तत्कारणस्य तादृशानुमानस्य प्रामाण्याङ्गीकारात्। तथैव शब्दस्यापि ज्ञातज्ञापकस्य प्रामाण्यं भवतु। तदर्थं चाबाधितार्थविषयकज्ञानकरणत्वमेव प्रमाणत्वम्। तच्च शब्देऽप्यस्तीति प्रमाणं शब्द इति चेन्न — तादृशस्थले प्रमाणमूलकत्वेन प्रमाणत्वोपचारात्। अन्यथाऽनुवादस्यापि प्रामाण्यापत्तेः।

नन्वनुवादो नाम शब्दजन्यं शब्दविषयकं ज्ञानम्, अत्र तु अर्थविषयकमिति भेदात्तत्रार्थांशे न प्रामाण्यमिति चेन्न प्रापणार्थकधातोरप्रयोगेऽनुवादत्वस्यागम्यत्वेन तत्पदानामेव शब्दविषयकज्ञानजनकत्वाद्वाक्यस्थपदानां स्वार्थविषयकज्ञानेऽबाधात्। सति शक्तिग्रहे वाक्यश्रवणानन्तरं वाक्यार्थज्ञानमवश्यमेव भवतीति महिमाऽयं शाब्दप्रमाणस्य। अत एव वह्निना सिञ्चतीत्यादौ संसर्गबाधसत्त्वेऽपि अद्रवेण वह्निना कथं सेकं ब्रवीषीति प्रत्युत्तरप्रदानेन गमकेन बोद्धुरपि पदार्थबोधो भवति। किंच शब्दे किल शक्तिद्वयम्,एका स्ववाच्यपदार्थे, द्वितीया स्वरूपे शब्दे। तत्र "दर्शनस्य परार्थत्वादिति न्यायेनार्थस्य प्राधान्यात् वाचकस्य शब्दस्य गौणत्वात् घटमानयेत्यादौ घटशब्दवाच्यकम्बुग्रीवादिमन्तमानयेति बोध उत्सर्गतो भवति। यत्र तु घटमुच्चारयेति प्रयोगः, तत्रोच्चारणस्य शब्दकर्मकत्वेनार्थस्योच्चारयितुमशक्यत्वादर्थप्रकारकशब्दविशेष्यकबोधो भाति। एवं चोत्सर्गत उक्त्यर्थकशब्दप्रयोगासमभिव्याहारे च सिद्धा अर्थबोधकशक्तिः सर्वथाऽपलपितुमशक्येति अनुवादेऽपि गौणतयाऽर्थप्रतीतिरस्त्येव। न चाज्ञातार्थशब्दस्योच्चारणेऽर्थबोधकशब्दोपस्थितेरसंभवाद्वाक्यार्थो न स्यादिति वाच्यम्। शक्तिग्रहासंभवे पदार्थानुपस्थितौ केवलशब्दविषयकबोधजनकत्वमुभयवादिसिद्धमेव। तत्रापि विभक्तिज्ञाने तदर्थोपस्थितौ च न शब्दप्रत्ययः प्रथमत एव भवति। किंतु संदर्भविमर्शानन्तरमिति-

शब्दादिकमध्याहृत्यैवेति न केवलज्ञातशक्तिकपदानां स्वरूपशाब्दबोधे सामर्थ्यम्। एवं चानुवादस्थलेऽप्युपस्थितपदार्थबाधे प्रमाणाभावात् प्रकारतया बोधविषयत्वमकामेनाप्यूरीकर्तव्यमिति तत्र प्रामाण्यं मा भूदित्यज्ञातज्ञापकत्वमेव प्रमाणत्वमूरीकर्तव्यम्। गौणप्रमाणं त्वितरप्रमाणवद्भवतु नाम। इदं शब्दानुवादे। अर्थानुवादे तु "अग्निर्हिमस्य भेषजमित्यादौ तत्र्थबोधस्योभयमतसिद्धत्वात्तत्र प्रामाण्यापत्तिः। इष्टापत्तौ त्वनुवादत्वव्याघातः।

वस्तुवस्तु अनुवादस्य स्मृतेरिव ज्ञातज्ञापकत्वमेवेति न प्रामाण्यमिति सर्वसंमतः सिद्धान्तः। अत एव न्यायदर्शने " विध्यर्थवादानुवादवचनविनियोगात् " इति त्रेधा खलु ब्राह्मणवाक्यविभागं प्रदर्श्य " विधिविहितस्यानुवचनमनुवादः " अ. २।१।६४ इत्यनुवादलक्षणमभिहितम्। " विध्यनुवचनंचानुवादो विहितानुवचनं च " इति तद्भाष्यम्। एवं च यस्यानुवादस्तत्प्रामाण्यसापेक्षमेवानुवादस्य प्रामाण्यमिति न स्वातन्त्र्येणानुवादस्य प्रामाण्यं सिध्यति। अत्र च ज्ञातत्वेन ज्ञापकत्वमेव ज्ञातज्ञापकत्वम्। न तु ज्ञातस्य ज्ञापकत्वम्। तथा च प्रत्यक्षगोचरेऽपि अनुमित्सायामनुमितौ ज्ञातत्वेन ज्ञापकत्वाभावात् प्रामाण्यमव्याहतमेव। अन्यथा प्रमाणमात्रोच्छेदप्रसङ्गात्। अत्र च स्पष्टप्रतिपत्तये ब्रह्मसिद्धिर्यथा—

विधेर्विना कार्यशून्यं भूतार्थमनुवादकम्।
वचः स्यादनुवादश्च प्रमाणान्तरगोचरे ॥ १० ॥
तत्प्रमाणान्तरापेक्षं प्रामाण्यमुतिवर्तते।
मानान्तरस्याविषये विध्यर्थं तु प्रतिष्ठितम् ॥ ११ ॥
अनपेक्षं प्रमाणत्वमश्नुते कर्मवाक्यवत्।
परमप्रत्ययभावेऽपि प्रामाण्यायैव तद्विधिः ॥ १२ ॥

विधिमन्तरेण न कार्योपदेशप्रतीतिः। यथावस्थितं वस्तु तद्विधस्यानुवादमात्रत्वं गम्यते। अनुवादश्च प्रमाणान्तर विषय इति तदपेक्षो भूतार्थो नार्थ उच्यत इति सापेक्षत्वादप्रामाण्यम्। विध्यर्थस्य तु प्रमाणान्तराविषयत्वात्तन्निष्ठमनपेक्षं प्रमाणं कर्मविधिवाक्यवत्। प्रमाणान्तराविषयश्च विध्यर्थः। न हि " कुरु " इति शब्दज्ञानादन्यतः प्रतीतिः। एवं च सति तत्त्वप्रतिपत्तिपरे वाक्ये यद्यपि वाक्यार्थबोधात् परार्थीना प्रवृत्तिर्विधिफलं नास्ति। प्रामाण्यायैव तु विधिनिष्ठत्वमेपितव्यमिति। अत्रोच्यते—

अत्र च स्पष्टप्रतिपत्तये ब्रह्मसिद्धिर्यथा—

" अत्रोच्यते— प्रमाणान्तरयानार्थभावः किमनुवादता।
उत भूतार्थता तस्य सिद्धार्थमपि यद्वचः ॥

न मानान्तरलब्धार्थतया तस्यावबोधकम् ।
न तत्सापेक्षमेषा चेदभिमेतानुवादता ॥

कः पुनरनुवादः — अधिगमान्तरसंभिन्नार्थत्वम्, मानान्तरेणाधिगत — इति प्रतिपादनम् ? आहोस्विद्भूतार्थतामात्रम् ? तत्र पूर्वस्मिन्कल्पे भवत्वधिगमान्तरसंभिन्नार्थं सापेक्षम् । यत्तु भूतार्थमपि न मानान्तराधिगत इति बोधयति न तदनुवादकम्, न सापेक्षम्; पूर्वाधिगमसंस्पर्शेन प्रतिपत्तेरभावात् इति।

एवं च यत्र शब्दस्यैव प्रामाण्यं नास्तीति तत्समूहस्य वेदस्यापि प्रामाण्यं दूरापास्तमेव। अत एव शाब्दप्रमाणव्याख्याप्रस्तावे " शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे ज्ञानम् " इति शास्त्रप्रमाणलक्षणमेव निर्दिष्टं शबरस्वामिपादैः । अन्यथा प्रत्यक्षलक्षणवद्व्यभिचारशङ्कानिवृत्तये शब्दमात्रस्यैव लक्षणं कर्तव्यं न तद्विशेषस्य शास्त्रस्य । न च सामान्यलक्षणं विना विशेषलक्षणमपि कर्तुं शक्यते । कृतं च तथेति मन्यामहे न लौकिकस्य शब्दस्य प्रमाणत्वमभ्युपयन्त्याचार्या इति । तत्सिद्धं शब्दस्याप्रामाण्यं तद्विशेषत्वाच्छास्त्रस्य वेदरूपस्येति ।

( शब्दप्रामाण्यव्यवस्थापनम् )

अत्राभिधीयते—यदि नाम पदार्थतत्संसर्गादिशाब्दप्रमाणमर्यादोपस्थापितानां सर्वविषयाणां बोधो जायमानो यदि पदेभ्य एव सविभक्तिभ्यो जायते, तत्किं वाक्यात् बोध एव यत्किंचिद्विषयको न भवति वा; आहोस्वित् जायमानोऽप्यकिंचित्करोऽन्यथासिद्धत्वात् ? नाद्यः वाक्याज्जायमानस्य बोधस्य सर्वानुभवसिद्धत्वेनापह्नोतुमशक्यत्वात् । न द्वितीयः — पदेभ्यः पदार्थानां विभक्त्यादिना कारकाद्यर्थानां चोपस्थितावप्यस्याः क्रियाया एवेदं कारकमिति नियमस्यान्यथासिध्यभावेन केवलवाक्यशक्त्यधीनत्वात् । न च सोऽपि सांनिध्यादिना बोद्धुं शक्य इति वाच्यम् । किमिदं सांनिध्यं नाम ? यदि च परस्परसाकाङ्क्षाणां पदानां निराकाङ्क्षपदाव्यवहितोच्चारणविषयत्वं वाऽनन्वितपदव्यवधानराहित्यं वा, सर्वथा तु तादृशपदसमूहात्मकत्वमेव वाक्यत्वं नातिरिक्तं किमपि । अत एव " वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः " इति तल्लक्षणम् । अयमेव संसर्गः । तथाहि राम इत्युक्ते रामनिष्ठकर्तृत्वनिरूपिका काचन क्रियेति सामान्यतो ज्ञायते । गच्छतीत्युक्ते गमनक्रियानिरूपितः कश्चन कर्तेत्यपि ज्ञायते । सविभक्तिकतादृशपदोच्चारणात् । परं चेयमेव क्रिया कर्तृत्वनिरूपिकाऽयमेव वा कर्ता एतत्क्रियानिरूपित इत्येवं निरूप्यनिरूपकभावो निश्चितो न भवति । स च तादृशपरस्परसाकाङ्क्षपदानामासत्त्यैव भवतीति तदासत्तियुक्तपदसमूहस्य वाक्यत्वेन वाक्यगम्य एव । अयं च निरूप्यनिरूपकभावः पूर्वमज्ञात इत्यज्ञातज्ञापकत्वेन शब्दस्यापि प्रामाण्यमव्याहतमेव । किं च यदि नाम शब्दाज्ज्ञानमेव न स्यात्तर्हि पदार्थोपस्थितिरपि न स्यात् । जायते चासौ । न च सा पूर्वं ज्ञातेति कथं नाम ज्ञातज्ञापकत्वं प्रमाजनकत्वाभावो वा शब्दस्य मन्यतेऽत्र भवान् देवानांप्रियः । अतो न सर्वथा शब्दोऽप्रमाणम् । संसर्गविषये प्रामाण्यात् ॥

## ( शब्दस्यानुमापकत्वखण्डनम् )

अस्यैव संसर्गस्याभिप्रायविषयत्वेनाभिप्रायानुमापकत्वं शब्दस्य मन्यते कैश्चित्। परंतु संसर्गज्ञानात्प्राक् को वाऽभिप्रायोऽनुमितिविषयः स्यादिति तैरालोचनीयम्। ज्ञाते तु शब्देनैव संसर्गे पश्चादभिप्रायानुमानेऽपि न शाब्दप्रमाणस्य स्वातन्त्र्यमनुमित्याऽपहर्तुं शक्यम्। अत एव " शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय " " अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः " इत्यादिस्थलेषु कीदृशो वक्तुरभिप्रायोऽनुमातव्य इति संदेहे शब्दशक्तिमर्यादैव शरणीकरणीया। एवं सिद्धायां शब्दशक्तौ तज्जन्याभिप्रायबोधे च सिद्धे पुनश्चानुमानमजागलस्तनायमानं व्यर्थमेव। इयमेव तात्पर्याख्या वृत्तिः शब्दस्य। एवं च शब्दस्यापि प्रामाण्ये सिद्धे विज्ञाताच्छब्दादसंनिकृष्टेऽर्थे यज्ज्ञानं तच्छाब्दं प्रमाणमिति तल्लक्षणम्। तदुक्तं शास्त्रदीपिकायाम् — विज्ञाताच्छब्दात्पदार्थाभिधानद्वारेण यद्वाक्यार्थाभिधानं तच्छाब्दं नाम प्रमाणम्। तल्लोकसिद्धत्वान्न परीक्षितत्वम्। तच्च द्विविधं पौरुषेयमपौरुषेयं चेति " इति। औलूक्यमतानुवादावसरे च तत्रैवानुमानरूपत्वं शाब्दस्य निरस्तम्। तद्यथा — " इदं शाब्दं " अस्येदं कारणं कार्यं संबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिकम्। इत्यनुमानलक्षणमभिधाय " एतेनैव शाब्दं व्याख्यातम् " इति वदन्तः काश्यपीयाः " प्रत्यक्षं चानुमानं च द्वे एव प्रमाणे " इति ब्रुवाणाः सौगताश्चानुमानादभिन्नमिति मन्यन्ते। तत्र यत्तावत्पदार्थज्ञानं तदवगतार्थविषयत्वात्प्रमाणमेव न भवतीति किं तस्य भेदाभेदपरीक्षया। यत्तु वाक्यार्थज्ञानं तदगृहीतसंबन्धैरेव पदार्थैरुपजायमानं नानुमानशङ्कामर्हति। नहि सर्वैर्वाक्यार्थविशेषैः संबन्धग्रहणमस्ति। न च संभवत्यनन्तैः संबन्धग्रहणम्। अत्यन्तापूर्वोऽपि वाक्यार्थविशेषः पदार्थैरवगम्यते दूरदेशवार्तास्विति सर्वजनीनमेतत्। यत्तु आप्तवाक्यत्वादविसंवादानुमानं तद्वाक्यार्थावगमोत्तरकालत्वान्न तस्यानुमानत्वमापादयति। वाक्यश्रवणानन्तरमेव हि आप्तानाप्तज्ञानानपेक्षैरेव पदार्थैर्वाक्यार्थोऽवगम्यते। अत्यन्तादृष्टपुरुषप्रणीतेऽपि वाक्येऽवगते तु वाक्यार्थे सत्यत्वासत्यत्वसंशये प्रणेतुराप्तत्वावगमे सति सत्यत्वमनुमीयमानं न वाक्यार्थावगतेराप्तत्वावधारणानपेक्षजन्मनोऽनुमानत्वमापादयति। तस्मात्प्रमाणान्तरमेव लोके शाब्दम् " इति॥ विस्तरस्तु " विषयोऽन्यादृशस्तावद्दृश्यते लिङ्गशब्दयोः " इत्यादिना महता प्रबन्धेन विषयभेदेन सामग्रीभेदेन च पदात्मकस्य भेदो निर्मितो वार्तिककारैरिति तत एवावगन्तव्यः।

## ( भावनायास्तर्कगम्यत्वनिरासः )

एतेन केनचन पण्डितंमन्येन भावनाऽपि तर्कगम्येति प्रतिपादितं वेदापौरुषेयत्वसिद्धौ। तदपि निरस्तम्। इत्थं हि तद्वचनानि—वेदापौरुषेयत्वं तु सर्वथा हेत्वाभासरहितैस्तर्कैरेव सिध्यतीत्यकामेनापि तद्विरोधिना तदभ्युपगन्तव्यमेव। तथाहि— मीमांसका इत्थं वर्णयन्ति। विधिनिषेधयोः कर्ता-

वदर्थ इति विमृश्यमाने प्रवृत्तिनिवृत्तिहेतुभूतज्ञानविषयः कश्चिदिति तावदविवादम् । तत्र नवीनतार्किकास्तावद्बलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वविशिष्टेष्टसाधनत्वज्ञानस्य प्रवृत्तिकारणतायाअन्वयव्यतिरेकाभ्यां सिद्धत्वात्प्रवृत्तिकारणीभूततादृशज्ञानस्य विषयीभूतो बलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वविशिष्टेष्टसाधनत्वरूप एव विध्यर्थ इति साधयन्ति । श्रीमदुदयनाचार्यप्रभृतयः प्राचीननैयायिकास्तु आप्ताभिप्रायो विध्यर्थ इति वर्णयन्ति । तेषामयमाशयः — यद्यपि बलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यताविशिष्टेष्टसाधनताज्ञानमन्वयव्यतिरेकानुसारेण प्रवृत्तिं प्रति साक्षात्कारणमित्यत्र न विवादः । तथापि आप्ताभिप्रायज्ञानस्यापि परम्परया प्रवृत्तिकारणत्वमस्त्येव । तथाहि 'वत्से पठ, इति पितुराज्ञां श्रुतवान् बालकः' पठनं बलवदनिष्टाननुबन्धित्वविशिष्टमदीयकृतिसाध्यत्वविशिष्टेष्टसाधनत्ववन्मत्कर्तव्यतया मदीयाप्ताभिप्रायविषयत्वात्, यत्कर्तव्यतया यदीयाप्ताभिप्रायविषयत्वं यत्र यत्र, तत्र तत्र तदीयबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वमिति व्याप्तेः । आप्तत्वं तु भ्रमप्रमादविप्रलिप्साकरणापाटवरूपदोषचतुष्टयराहितत्वमेवात्र विवक्षितम् । तेन भ्रान्तपित्रादिकृताज्ञायां न व्यभिचारः, इत्यादिरीत्या पठने कार्ये विशिष्टेष्टसाधनत्वमनुमिन्वानः सुधीर्बालकः पठने प्रवर्तत इति विशिष्टेष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्वे अविवादेऽपि पूर्वोक्तानुमितिरूपे तादृशज्ञाने हेतुभूतं ज्ञानं हेतुज्ञानं पूर्वोक्तरीत्याऽऽप्ताभिप्रायज्ञानमेव भवतीति । तच्च पूर्वोक्तानुमितिद्वारा प्रवृत्तिं प्रति कारणं संपन्नमिति परम्परया प्रवृत्तिकारणीभूततादृशाप्ताभिप्रायज्ञानविषयीभूतः पूर्वोक्ताभिप्रायोऽपि प्रवृत्तिहेतुज्ञानविषय एवेति कृत्वा विध्यर्थो भवितुमर्हतीति सिध्यति । इति ॥

अत्रेदं विचारणीयम् —अत्रानुमाने पक्षसाध्यहेतूनां एतदनुमानात्प्राक् प्रमाणान्तरेण सिद्धिरस्ति न वा? यदि न स्यात्पक्षादीनामप्रसिद्धत्वादेवानुमानाप्रवृत्तेः,नहि शशशृङ्गं श्वेतमित्यनुमानं संभवति । यदि चास्ति सिद्धिः प्रमाणान्तरात्, किं तत्, यदि विधिवाक्यमेव, तर्हि तु प्रथमप्रमाणत्यागेन प्रमाणान्तरेण सिद्धिः कथम् ? न हि पुत्र पठ इति वाक्याश्रवणे श्रुतेऽपि वार्थानवधारणे एतादृशानुमाने प्रवृत्तिर्बालकस्योपपद्यते । तथा चेत्सर्वेषां तादृशानुमानेऽप्रवृत्तिः स्यात् । किंच विध्यर्थो नाम विधिप्रत्ययजन्यबोधविषयःपदार्थः। स च शब्दात्मकविधिप्रत्ययेनैव प्रत्यायितश्चेत् कृतमनुमानेन । न प्रत्यायितश्चेत् पक्षादीनामसिद्धिरेवेति नान्यत्किमपि तर्कपाण्डित्यव्यामोहाभिनिवेशमन्तरेणास्य तर्कप्रयोगवाग्जालस्य निमित्तं पश्यामः । विध्यर्थविषये तु विचारयिष्यते । सर्वथा शब्दप्रमाणमन्तरा तदर्थेऽनुमानप्रवृत्तिर्न संभवतीति स्वतन्त्रमेव शाब्दं नाम प्रमाणम् । एतेन—दण्डेन गामानयेति लौकिकपदानि यजेतेत्यादिवैदिकपदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षामत्पदकदम्बत्वात्, घटमानयेत्यादिपदकदम्बवत् । यद्वा—एते पदार्थाः मिथः संसर्गवन्तः, योग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत्, इत्यादि प्रयोगा अपि व्याख्याताः । सर्वत्र साध्यान्तर्गतहेत्वन्तर्गताकाङ्क्षायोग्यतादीनां शक्तिज्ञानसहकृतपदार्थोपस्थितिमन्तरा ज्ञातुमशक्यत्वा-

त्पदार्थोपस्थितेश्च पदजन्यत्वस्वीकारे वाक्यार्थबोधस्यापि तथैवोपपत्तौ शब्दस्य स्वतन्त्रप्रामाण्यानङ्गीकारदुराग्रहोऽयं दुस्तर्कोपहतविवेकानामेव शोभते । सर्वथा तु शब्दोऽपि प्रमाणमिति सिद्धम् ।

### ( वेदप्रामाण्ये पूर्वपक्षः )

नन्वेवमपि न वेदस्य प्रमाणता । तथाहि—
पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी " ॥

इति किल शाब्दबोधप्रकारमर्यादा । अत्र च शब्देनार्थबोधे जनयितव्ये मध्ये शक्तिज्ञानद्वारा पदार्थोपस्थितेरवान्तरव्यापारत्वं प्रतिपाद्यते । वेदोऽपि शब्दसमूह एवेति तेनापि बोधे जनयितव्ये शक्तिज्ञानाधीना पदार्थोपस्थितिः करणीया । शक्तिज्ञानं च

" शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः " ॥

इति कारणेभ्य एव जायते । न च तानि वेदे संभवन्ति । अलौकिकैः सह व्यवहारासंभवात् । तन्मूलकत्वाद्व्याकरणादीनामप्यप्रवृत्तेः। व्याकरणमपि व्यवहारे प्रचलितानां शब्दनामेव। उपमानकोशाप्तवाक्यानि तु सर्वथा व्यवहारमात्रालम्बनानीति नातिरोहितम् । विवृतिस्तु व्याकरणमूलकत्वात्तथैव । वाक्यशेषो वा सिद्धपदसांनिध्यं वा यदि प्रसिद्धपदार्थबोधकं, तदा तु स्यात्ताभ्यां कथमपि शक्तिग्रहः । यदि तु ते अप्यलौकिकपदार्थबोधके, तदानीं तु न कथमपि शक्तिग्रहः संभवति । वेदस्य तु सर्वथा अलौकिकत्वात् [illegible] प्रमाणेन तस्य शक्तिग्रहो न संभवति । तदुक्तं भट्टपादैः —

पारम्पर्यस्थानाद्वेदरूपं न दृश्यते ।
स्वरूपाद्यभिरूपे तु दृष्टे भ्रान्तिर्निवर्तते ॥
आदिमात्रमपि श्रुत्वा वेदानां पौरुषेयता ।
न शक्याऽध्यवसातुं हि मनागपि सचेतनैः ॥
[illegible] वाक्यैर्[illegible]नुगामिभिः ।
[illegible] नराः वाक्यानि कुर्वते ॥
[illegible] पदैः ।
[illegible] कः करिष्यति ॥
[illegible] पदस्य [illegible]तम् ।
[illegible] ॥

किमालोच्य यत्र वा दृष्ट्वा वाक्यमतिच्छन्दमीदृशम् ।
पुरुषो रचयेद्वाक्यं किं चोद्दिश्य प्रयोजनम् ॥
अग्नेः पुरोहितत्वं च यत्र दृष्टं येन कीर्त्यते ।
ईळेशब्दप्रयोगश्च क्व दृष्टः स्तोत्रगोचरः ॥
देवत्वं चास्य यज्ञस्य विहितं क्वोपलक्षितम् ।
विधिनैव हि देवत्वं प्रतिकर्मावधार्यते ॥
न जात्या देवतात्वं हि क्वचिदस्ति व्यवस्थितम् ।
होतृत्वमपि यज्ञस्य देवताह्वानहेतुकम् ॥
रत्नधायितमत्वं च तन्नैरर्ज्ञायते कथम् ।
अविज्ञातगुणानां च कल्पने स्तवनं न तु ॥
स्वतन्त्रो वेद एवैतत्केवलो वक्तुमर्हति । इति ॥

अनेन चेदं स्पष्टमेवावगम्यते यद्देवत्वादयः सर्वे पदार्थाः प्रायोऽलौकिका एवात्र वेदे प्रतिपाद्यन्ते । न च तेषां व्यवहारादिना शक्तिग्रहः । वेदेनैव शक्तिग्रहस्तु अलौकित्वादेवाशक्यः । न ह्येकस्यालौकिकस्यापरेणालौकिकेन ज्ञान सभवति । अस्ति च काचन किंवदन्ती । कस्यचन मूर्खस्य राज्ञः सविधे कश्चन महान् पण्डितो मन्त्रिपदे नियुक्त आसीत् । तथैव राज्ञः प्रियभाजन कश्चन नापितोऽप्यासीत् । गतेपु केपुचिदहःसु केनचन कारणेन समजनि किलेर्ष्या नापितस्य पण्डितविषये । तया च बद्धवैरोऽसौ नापितः पण्डितनाशोपायमचिन्तयत् । एकस्मिन् दिने कृतश्मश्रू राजा श्मश्रुकरणे तस्य हस्तलाघव प्रशशस । तेन चावसरलाभेन स धूर्तो नापितो राजानमवदत् । अयि महाराजाः भवन्तो महाभागा अत्र सुखेन पानभोजनादिना काल यापयन्ति । पर स्वर्गे पितृणा कीदृश स्वास्थ्यमित्यत्र कदापि न क्रियतेऽन्वेषणा । प्रेषयन्तु भवन्तोऽत्रभवन्त बुद्धिमन्तं पण्डितप्रवर मन्त्रिवर पितृस्वास्थ्यावेक्षणाय । स तु बुद्धिबलाद्गमिष्यति प्रत्यागमिष्यति च । मूर्खेण राज्ञा तद्वचः श्रुत्वा विज्ञापितो मन्त्रिप्रवरश्चिन्तयामास । केनापि धूर्तेन मद्विनाशोऽभिकाङ्क्षितः । भवतु, बुद्धिबलेनैवाऽऽपदागतोध्दरणीया । इति मनसिकृत्य राज्ञः सकाशान्मार्गव्ययार्थं दशलक्षदीनारान् गृहीत्वा मासषट्कपर्यन्तमज्ञातवासं विधाय तेन मन्त्रिणा साक्षात्कृतो राजा निवेदितः । अयि महाराज भवदपेक्षयाऽपि भवदीयाः पूर्वजा अत्यन्तसुखिनो वर्तन्ते । एकैवाऽऽपदत्र भवति यच्छ्मश्रुकरणे नापितो न लभ्यते यतः स्वर्गे सर्वेऽपि सममेव सुखिन इति न कोऽपि कस्यापि किमपि भृत्यत्वेन कार्यं करोति । निदर्शन चात्राहमेव । तत्प्रेष्यता भवदीयो नापितः । स्मर्यते चासौ पितृभिः । मूर्खेण तेन राज्ञा जीवन्नेवासौ नापितश्चिताधूममवलम्ब्य गमिष्यति स्वर्गमिति चितामारोप्य दग्ध इति । अत्र च

यथोभयोरपि प्रलापोऽसत्यः, अदृष्टालौकिकविषयत्वात्। एवं वेदेऽपि शक्तिग्रहादिकं सर्वमप्यप्रामाणिकमेव स्यात्। यत्र क्वचिल्लौकिकं वाक्यं तत्रापि तस्याप्यलौकिकत्वं वर्ण्यते—

किंचिदेव तु तद्वाक्यं सदृशं लौकिकेन यत्।
तत्रापि च्छान्दसी मुद्रा दृश्यते सूक्ष्मदर्शिभिः॥ इति॥

यद्यप्ययं संदर्भग्रन्थो वेदापौरुषेयत्वविषयको न शक्तिग्रहसंभवासंभवनिर्णायकः। तथापि पदानां पदार्थानां वाक्यानां च सर्वथाऽलौकिकत्वप्रतिपादनेन लौकिकप्रमाणातिरिक्तत्वेन वेदस्य प्रामाण्यासंभवे उपयुज्यत एव। एवं च शक्तिग्रहासंभवे पदार्थानुपस्थितौ वाक्यार्थाभावे च सर्वथा वेदानामप्रामाण्यमेव। वेदेनैव वेदपदतदर्थोपस्थापने च परस्पराश्रयत्वादप्रामाण्यमुभयोरपीति पूर्वोक्तकिंवदन्ती न विस्मरणीया। अधुनाऽपि धर्मविषये सांप्रदायभेदकोलाहलः पूर्वोक्तकिंवदन्तीमेवानुसरति। अत्र—संवरणमात्रं त्रयी लोकयात्राविदः, इत्यर्थकाममात्रपुरुषार्थवादौशनसं मतमेव युक्तमुत्पश्यामः। किं च शब्दस्यायं स्वभाव एव यज्ज्ञातज्ञापकत्वम्। तथाहि—शब्दोच्चारणं हि परं प्रत्यर्थबोधनाय। "दर्शनस्य परार्थत्वात्" इति हि पारमर्षं सूत्रम्। एवं च यदा परार्थबोधनेच्छा भवति तदा वक्तुस्तदर्थज्ञानेनावश्यमेव भवितव्यम्। अन्यथा कं वाऽर्थमयं बोधयिष्यति। न हि तदर्थज्ञानं तदुच्चरितवाक्येन वक्तुर्भवति। असंभवात्। वाक्यान्तराद्वा प्रत्यक्षादिना वा तद्भवितुमर्हति। एवं च प्रमाणान्तरगोचरार्थप्रतिपादनेनैव शब्दस्य प्रामाण्याद्वेदेऽपि तथाविधे तादृशार्थप्रतिपादकत्वं स्यादिति कथमलौकिकार्थबोधकत्वं कथं वा प्रामाण्यम्? इति चेदत्र ब्रूमः—

(शब्दस्याज्ञातज्ञापकत्वव्यवस्थापनम्)

धानुगमाभावे सर्वत्रानाश्वासप्रसङ्गात्। किंच वाक्यार्थो हि विषयः किल पूर्वोक्तरूपः शब्दप्रमाणस्य। स च पदार्थसंसर्गरूपः। स चेत् शब्दातिरिक्तप्रमाणेन पूर्वं ज्ञातः स्यात् कृतं शब्दोच्चारणेन। अनुमितावपि पक्षे साध्यसंबन्धो हि विषयत्वेनाभिमतः। स च परार्थानुमानेऽनुमातुर्ज्ञातोऽपि इतरेषामज्ञातत्वादनुमीयते। स्वार्थानुमाने तु अनुमातुरप्यज्ञातो भवति। न हि तथा शाब्दे तादृशपदार्थसंसर्गः भविष्यदर्थे वा कस्यापि वक्तुर्ग्रहीतुं शक्यः। अयमेव महिमा शाब्दस्य यद्भूतं भविष्यन्तं वर्तमानं संनिकृष्टमित्यादिसर्वविधमर्थमवबोधयितुं शक्नोति नैवं प्रमाणान्तराणि। एवं च परार्थानुमानमिव कुत्रचिज्ज्ञातार्थप्रतिपादनेऽपि नैव सर्वत्र तथाविधो नियमः। प्रत्युत परदृष्ट्यैव परार्थानुमानमिव *ज्ञातज्ञापकस्थले यं प्रत्यज्ञातज्ञापकत्वं तन्निरूपितप्रामाण्यसंभवेऽपि ज्ञातृदृष्ट्याऽनुवादकत्वमेव* शब्दस्येति निश्चेयम्। अत एव शास्त्रस्याज्ञातज्ञापकत्वेनैव प्रामाण्यमिति सर्ववादिसिद्धान्तः। अत एव च चोदनासूत्रे शाबरभाष्ये "चोदना हि भूतं भविष्यन्तं भवन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवगमयितुं नान्यत्किंचनेन्द्रियम्। नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना यथा यत्किंचिल्लौकिकं वचनं नद्यास्तीरे फलानि सन्तीति। तत्तथ्यमपि भवति वितथमपि भवतीति। उच्यते विप्रतिषिद्धमिदमुच्यते ब्रवीति वितथं चेति। ब्रवीति इति उच्यतेऽवबोधयति बुध्यमानस्य निमित्तं भवतीति। यस्मिंश्च निमित्तभूते सति अवबुध्यते सोऽवबोधयति। यदि च चोदनायां सत्यामग्निहोत्रात्स्वर्गो भवतीति गम्यते कथमुच्यते न तथा भवतीति। अथ न तथा भवतीति कथमवबुध्यते। असन्तमर्थमवबुध्यते इति विप्रतिषिद्धम्-इत्यादिना शास्त्रस्यैवातीन्द्रियपदार्थबोधने सामर्थ्यमित्यज्ञातज्ञापकत्वमेव शास्त्रस्य। लोकेऽपि अहं ते कार्यं करिष्यामीति शपे देवपादयोः। सत्येन च शपे नाहं, इत्यादिशपथवाक्यस्य भविष्यत्कालिकार्थे प्रामाण्यमज्ञातज्ञापकत्वेनैव। यत्तु लौकिके वाक्ये कुत्रचिज्ज्ञातज्ञापकत्वम्। तत्रानुवादकत्वमेव न तु प्रमाणत्वम्। अत एव भाष्यकारैः शाब्दप्रमाणप्रस्तावे शाब्दस्य लक्षणमनुक्त्वा "शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे ज्ञानम्" इति शास्त्रप्रमाणलक्षणमेवोक्तम्। नैतावता अज्ञातज्ञापकलौकिकवाक्यानामप्रामाण्यमाचार्यशबरस्वामिनामभिमतम्। यथा शास्त्रीयः शब्दः प्रमाणमेवं यदि लौकिकोऽपि स्यात्प्रमाणं स्यादेव। केवलं प्रमाणभूतस्य शब्दस्य प्रमाणभावः कीदृशो भवतीति प्रदर्शन एव तात्पर्यमाचार्याणाम्।

### ( साहित्यशास्त्रदृष्ट्या शब्दस्यालौकिकार्थप्रतिपादकत्वम् )

भवतु वा कथंचिल्लौकिकैकदेशे। तथापि व्यङ्ग्यार्थस्य रसस्य प्रतिपादके वाक्ये कथं वा ज्ञातज्ञापकत्वमिति निरूपणीयं लौकिकैः। रसो हि विभावानुभावसंचारिसंयोगादेव निष्पद्यते। तथा च पारमर्षं सूत्रम् :— "विभावानुभावसंचारिसंयोगाद्रसनिष्पत्तिः" इति। विभावादयश्च न लौकिकाः पदार्थाः सीतारामादयः। तथा सति प्रत्यक्षतस्तेषां ज्ञानेऽपि रसः संपद्येत। किंतु त

एव काव्यनाटकादिषु शब्दोपहितरूपाः सन्तो लौकिकसामाजिकरत्याद्युद्बोधकविभावनारूपव्यापारकरणादलौकिकाः सन्तो रसमाविर्भावयन्ति । इति किल साहित्यशास्त्रसिद्धान्तः । तदिदमेतेषां शब्दोपहितं रूपं शब्दात्प्राक् कथं वा ज्ञायते । न चान्यकाव्यपरिशीलनादिति वाच्यम् । तस्यापि तत्काव्यकरणात्पूर्वं ज्ञानेऽन्यकाव्यपरिशीलनमेवमन्यस्यापीत्यनवस्था स्यात् । ननु प्रामाणिकत्वाद्बीजाङ्कुरवन्न दोषायेति चेत् प्रकृते वेदरूपे तथैव । एवं सर्वेषां निर्वेदादिभावानां द्रष्टव्यम् । तेऽपि शब्दोपहितरूपा एव भासन्ते । अत एव मम्मटाचार्यैर्वाग्देव्याः स्वरूपे " नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ", इति मङ्गलश्लोके नियतिकृतनियमराहित्यमनन्यपारतन्त्र्यं चोक्तं विशेषणद्वयम् । यदि शब्देनार्थे प्रतिपाद्यमाने नियमपारतन्त्र्ये स्याताम् । कथं तदभावः प्रतिपाद्येत । तत्सिद्धमज्ञातज्ञापकत्वम् । ननु शब्दोपहितरूपाणां मनोमयानां पदार्थानामलौकिकानां सृष्ट्युद्भावने शब्दस्य सामर्थ्ये सिद्धेऽपि लौकिकसृष्टौ किमायातमिति चेत्, इदमेवाऽऽयातं यदलौकिकार्थप्रतिपादनेऽपि शब्दस्यैव सामर्थ्यमस्तीति । इदमेवालौकिकत्वं शब्दस्य यदितरप्रमाणागोचरार्थप्रतिपादकत्वं नाम ।

## ( तत्र शक्तिग्रहोपपत्तिः )

ननु भवतु काव्ये तथा शब्दपूर्वकत्वं सर्वेषां पदार्थानाम् । तत्र विभिन्नकर्तृककाव्यानां सत्त्वेनैकस्यापरं कारणमिति शक्तिग्रहसंभवात् । प्रकृते तु वेदस्यैकत्वेन प्रथमः शक्तिग्रहः कथं वा स्यात् । तदभावे च कथं शाब्दबोधः । किंच साहित्ये एकं काव्यमपरस्य कारणमिति पुनरपि ज्ञातज्ञापकत्वमेव । न हीदंप्रथमकं किमपि काव्यं नाम । अनादौ संसारे अनादित्वेनैवानवस्थायाः प्रामाणिकत्वात् इति चेत् प्रकृतेऽपि तुल्यम् । यः कल्पः स कल्पपूर्वः, धाता यथा पूर्वमकल्पयत् ' प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते, इत्यादिवाक्यैर्वेदस्य वेदपूर्वकत्वं सेत्स्यति काव्यस्य काव्यपूर्वकत्वमिव । नैतावता वेदस्य प्रमाणान्तरगोचरार्थप्रतिपादकत्वम् । संभवति च शक्तिग्रहादिकमनादिवृद्धपरम्पराव्यवहारेणालौकिकानां शब्दानामलौकिकैरर्थैः सह । तच्च वृद्धव्यवहारादिनैवेति स्पष्टमेव यथाऽऽगमे यागादिकर्मणां स्वर्गादिफलसाधनताधिकरणे सोमनाथीयमयूखमालिकायां प्रतिपादितम् । तथाहि-प्रवर्तना हि लोके प्रवर्तयितृधर्मत्वेनावगता, अहमेनं प्रवर्तयामीत्याचार्यादेः प्रवर्तयितुः स्वगतत्वेन प्रवर्तनानुभवात् । ततश्च वेदे शब्दस्यैव प्रवर्तकत्वात्तद्धर्म एव प्रवर्तना । नन्वेवं विधिलिङादिप्रयोगस्य लोके व्यवहारानुपातित्वाभावात् कथं तत्र लिङादेः संबन्धग्रहः ? उच्यते-भुक्तिरस्य बालस्य रोदनेन स्तन्यदाने प्रवर्तमानाया मातुः प्रवृत्तेर्बालप्रवर्तनाहेतुकत्वदर्शनात् तद्दृष्टान्तेन गामानयेत्यादिवाक्यश्रवणानन्तरभाविमध्यमवृद्धप्रवृत्तौ प्रवर्तनाज्ञानस्य कारणत्वमनुमाय तत्कारणं जिज्ञासमानो व्युत्पित्सुर्लिङादिश्रवणानन्तर्यात्तस्यैव प्रवर्तनाश्रो

शक्तिं कल्पयति। तत्र चाऽऽज्ञादीनां विशेषाणामानन्त्यव्यभिचाराभ्यां वाच्यत्वासंभवात् सर्वविशेषानुयायिप्रवर्तनासामान्यस्यैव वाच्यत्वे स्थिते गोत्वादिसामान्यवाचिगवादिशब्दश्रवणे व्यक्तिविशेष इव वैदिकलिङादिश्रवणेऽपि तद्वाच्येन प्रवर्तनासामान्येन शब्दनिष्ठाज्ञादिविशेषान्तरविलक्षणः प्रवर्तनाविशेषो लक्षणया लभ्यत इति न संकटं किंचिदिति भाव इति। अत्र यद्यपि लौकिकदृष्टान्तेन सामान्यरूपेण प्रवर्तनानुमानं प्रतिपादितम्। तथापि लौकिकप्रवर्तनारूपस्याज्ञाभिप्रायादेर्वेदेऽसंभवाल्लोकविलक्षणः कश्चन प्रवर्तनारूपः शब्दनिष्ठो व्यापारो लक्षणया लभ्यते इति स्पष्टमेवोच्यते। अन्यथा लौकिकार्थवच्छक्त्यैव तल्लाभे लक्षणया लभ्यते इति प्रतिपादनं व्यर्थमेव स्यात्। एवं च जगद्वैचित्र्यान्यथाऽनुपपत्त्या कल्प्यमानं किंचिदलौकिकं कारणमनुमानेन कल्पितमपि न विशेषस्वरूपावगतये कल्पते, विशेषस्तु धर्माधर्मरूपः शास्त्रादेव। तथैव सामान्यतः प्रवर्तनास्वरूपे व्यवहारादिनाऽवगतेऽपि तद्विशेषो वेदादेवावगतो भवतीति वैदिकशब्दानामनादिव्यवहार एव शक्तिग्रहकारक इत्येव युक्तमुत्पश्यामः। किंच ये किल भार्यापुत्रस्वत्वादिशब्दा लौकिकाः, तेषामपि शक्तिग्रहो न केवलव्यवहारेण भवितुमर्हति। भार्यात्वस्य भोग्यस्त्रीवाचकत्वाभावात्। यथाकथंचित्तत्त्वेऽपि भोग्यत्वाभोग्यत्वानिर्णयस्य केवलशास्त्रैकगम्यत्वेनालौकिकत्वात्। तथैव पुत्रत्वपितृत्वादीनामपि केवलप्रत्यक्षादिप्रमाणागम्यत्वेन शब्दैकगम्यत्वात्। स्वत्वं तु सर्वथाऽलौकिकमित्यपि वक्ष्यते। किं बहुना सर्वेषां सविकल्पकज्ञानानां शब्दानुविद्धत्वेन शब्दपूर्वकत्वमिति तत्र सर्वत्रानादिपरम्परैव कारणमित्यकामेनाऽप्यूरीकर्तव्यम्। तत्किं वेदविषय एवैतावान् कोलाहलः। अत एव "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इत्यभियुक्तोक्तिः। अत एव च शब्दपूर्वकत्वं वाऽर्थपूर्वकत्वं वा सृष्टेरिति वादस्य प्रादुर्भावः। एवं च सर्वथा शब्दस्यापूर्वप्रमाणत्वादलौकिकत्वमिति सिद्धम्। भावनास्वरूपविचारस्त्वग्रे वक्ष्यते।

### ( स्वतःप्रामाण्यवादः )

नन्वेवमपि शब्दाज्जायमानं प्रमाणं वाऽप्रमाणं वेतिसंशये तत्परीक्षणाय प्रमाणान्तरापेक्षायां पुनरपि प्रमाणान्तरसापेक्षत्वमेव शाब्दस्य स्यात्। स्याद्यदि प्रमाणान्तरापेक्षा। तन्निरपेक्षतायां तु स्वतःसिद्धमेव प्रामाण्यं नापह्नोतुं शक्यमिति प्रमाणान्तरनिरपेक्षः शब्दः प्रमाणं स्यादेव। तदर्थमत्रेदं विचार्यते— किं प्रमाणानि विषयस्य सत्यतामपि बोधयन्ति ? उताहो केवलविषयमात्रप्रकाशकानि, तत्सत्यतायां च प्रमाणान्तरसापेक्षाणि ? अत्र मतान्तराणीत्थम्—केचित्-प्रमाणानां प्रामाण्यं नामार्थतथात्वमिति तेनैव प्रमाणेन स्वत एव बोध्यते। अर्थातथात्वं तु प्रमाणान्तरेणेति वदन्ति। अन्ये त्वर्थस्य तथात्वमतथात्वं चोभयमपि प्रमाणान्तरेणावगम्यते न तेनैव प्रमाणेन। अपरे त्वतथात्वं स्वतः, तथात्वं तु परत इति संगिरन्ते। तत्राऽऽद्यं भाट्टमतं, तथाहि— यदि तावदर्थतथात्वपरीक्षा प्रमाणान्तरैः कर्तव्या किं नाम तत्प्रमाणं स्याद्यदलौकिकेष्वपि पदार्थेषु पत्नीत्वपुत्रत्वजनकत्वस्वत्वादिषु

प्रवर्तेत । इतरेषां प्रमाणानां पूर्वमेव निरस्तत्वाद्यदि शब्दोऽपि तथात्वं न ब्रूयाद्व्यवहारलोपः स्यात् । अतः शब्दैकगम्यानामेतेषां पदार्थानां तथात्वान्वेषणं शब्दैनैव कृतमिति शब्दस्य स्वतःप्रामाण्यमवश्यमास्थेयम् । अतथात्वं यदि पश्चात्केनचन प्रमाणेन सिद्धं चेत्तदा तदास्थेयमिति । तदुक्तं भट्टपादैः–

जातेऽपि यदि विज्ञाने तावन्नार्थोऽवधार्यते ।
यावत्कारणशुद्धत्वं न प्रमाणान्तराद्भवेत् ॥
तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।
यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥
तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात्प्रमाणता ।
तस्याप्येवमितीच्छंश्च न क्वचिद् व्यवतिष्ठते ॥
यदा स्वतः प्रमाणत्वं तदाऽन्यन्नैव मृग्यते ।
निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥
तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ इति ।
तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः ।
अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः ॥
प्रत्ययोत्पत्तिहेतुत्वात्प्रामाण्यं नापनीयते ॥ इति च

निश्चायकत्वान्नैवमिति चेत् ममापि प्रत्यक्षेण लिङ्गनिश्चयात्तस्य च सत्तयैव निश्चायकत्वान्नैवमिति तुल्यम् । लिङ्गज्ञानस्य प्रामाण्यानिश्चये कथं तन्निश्चयः स्यादिति चेत्— अनुपपद्यमानार्थज्ञान-प्रामाण्यानिश्चये कथं तन्निश्चय इति तुल्यम् । न हि निश्चयेन स्वप्रामाण्यानिश्चयेन वा विषयं निश्चाययति प्रत्यक्षम् । अपि तु स्वसत्तयेत्युक्तमिति चेत्तुल्यम् । तथापि यदि तल्लिङ्गाभासः स्यात्तदा का वार्ता इति चेत्— अनुपपद्यमानोऽप्यर्थो यद्याभासः स्यात्, तदा का वार्तेति तुल्यम् । सोऽपि प्रामाण्यमाक्षिपतीत्युत्सर्गः । स च क्वचिद्बाधकेनापोद्यते इति चेत्— लिङ्गेऽप्येवमिति तुल्यम् । तर्हि प्रामाण्यानुमानेऽपि शङ्का तदवस्थैवेति निष्फलः प्रयास इति चेत्—एतदपि तादृगेव । अनुपपद्यमानोऽर्थ एवासौ तथाविधः कश्चित्, यः स्वप्नेऽपि नाऽऽभासः स्यात्ततो नाऽऽशङ्केति चेत्— लिङ्गेऽप्येवमिति समः समाधिः । कः पुनरसावर्थो यः स्वप्नेऽपि नाऽऽभासः स्यात् । यदनुपलम्भे विभ्रमावकाशः, यादृगुपलम्भे च तद्बाधव्यवस्था । अन्यथा हि तथाभूतस्यापि व्यभिचारे सापि न स्यात् । मा भूदिति चेन्न । भवितव्यं हि तत्त्वातत्त्वविभागेन । अन्यथा व्याघातात् । कथं हि नियामकानिःशेषविशेषोपलम्भेऽपि विपरीतारोपः । तथाभावे वा तदतिरिक्तविशेषानुपलम्भे कथं बाधकम् । तदभावे त्वबाधस्य कथं भ्रान्तत्वमिति " इति ।

अत्र " यश्चोभयोः समो दोषः " इति न्यायमनुसृत्य स्वतःप्रामाण्यवादिनामुपरि प्रतिद्वन्द्वीमुखेनाऽऽहत्य प्रवृत्त्यादीनामसंदेहमूलकत्वेन प्रामाण्यग्रहानपेक्षत्वं प्रतिपाद्य परतःप्रामाण्यवादिन मतं समर्थितमिति नातिरोहितं विपश्चिताम् । एवमुभयोरपि मतयोर्निष्कर्षो गीर्वाणवाग्वर्धिनीसभासंदृब्धे प्रबन्धे शुक्लमहोदयैरेवं निष्काशितः । तदित्थम्—" एवं सिद्धे सजातीयोच्चारणसापेक्षोच्चारणसामान्यकत्वरूपे वेदस्यापौरुषेयत्वे कामशास्त्रोक्तं तस्यानभिशङ्क्यत्वमपि सिध्यति । तथाहि—प्रामाण्यमर्थगतसत्यत्वादन्यद्दुर्वचम् । तच्च वेदान्तिमते " सत्यं ज्ञानमनन्तं ब्रह्म " इत्यादिश्रुतिबोधितसत्यस्वरूपब्रह्मतादात्म्यवत्त्वेव ज्ञानमात्रे विषयस्य भानाभ्युपगमात् स्वतःसिद्धमेव स्वतोग्राह्यमित्युच्यते । एवं भट्टमते कालसंबन्धित्वमेव सत्यत्वं स्वतःसिद्धम् । " न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते " इति तदुक्तेः । एवं ज्ञानमात्रस्वप्रकाशतावादिप्राभाकरमते ज्ञानविषयत्वरूपं सत्यत्वं ज्ञानमात्रस्यैव तन्मते यथार्थत्वात् । अत एव शुक्तिरजतादिभ्रमस्थलेऽपि सत्यतादात्म्यस्य स्वभावतः स्फुरणादेव रजतार्थिनां प्रवृत्तिरुपपद्यते । पश्चाद्बाधकज्ञाने सति दुष्टकरणजन्यत्वशङ्कायां वा सत्यां पूर्वमपि प्रातिभासिकरजतादौ मिथ्यात्वग्रहात् पूर्वगृहीतं प्रामाण्यमपोद्यते । एवं च प्राप्ताप्राप्तविवेके क्रियमाणे मिथ्यात्वेनाज्ञायमानरजतविषयकज्ञानस्यैव शुक्तिरजतादिस्थले प्रवृत्तिहेतुत्वमिति पर्यवसिते मिथ्यात्वेनाज्ञायमानत्वरूपं प्रवृत्तिप्रयोजकमर्थगतं सत्यत्वं यत्पूर्वमासीत्तदेव कारणदोषबाधकज्ञानादिसंभवे प्रातिभासिकरजतादिलुप्यतीति सिध्यति । भूतले घटानयनानन्तरं घटाभावस्येव मिथ्यात्वेन ज्ञायमानतादशायां तेन रूपेणाज्ञायमानतारूपस्य तद्भानसमशीलार्थसत्यत्वस्यापि विलोपे कस्याप्य-

विप्रतिपत्तेः । अयमेव विलोपः कारणदोषबाधकज्ञानाभ्यां पूर्वसिद्धस्य प्रामाण्यज्ञानस्यापवादपदार्थ इत्यत्रापि न कस्यापि विप्रतिपत्तिः ।

नैयायिका अपि ह्यप्रामाण्यज्ञानानास्कन्दितस्य शुक्तिरजतज्ञानस्य प्रवर्तकत्वं मन्यन्ते । तन्मतानुसारेणापि प्रवृत्तिप्रयोजककोटिप्रविष्टमप्रामाण्यज्ञानानास्कन्दितत्वं ज्ञानगतं वेदान्तिमतसिद्धेन मिथ्यात्वेनाज्ञायमानत्वरूपेणार्थगतसत्यत्वेन समशीलमेवेति नास्ति कोऽपि मतयोरनयोर्विशेषः । एवं च बाधकज्ञानकारणदोषज्ञानादिभिर्नैयायिकमतेऽपि प्रवृत्तिप्रयोजकीभूतस्याप्रामाण्यज्ञानानास्कन्दितत्वस्यापवादो निरपवाद एव । एवंविधस्य प्रामाण्यस्य परतःप्रामाण्यमितिवादिभिर्नैयायिकैः स्वतःप्रामाण्यवादिनामुपरि दीयमानं दूषणमप्यस्थान एवाधुना संपन्नम् । वेदान्तिमते साक्षिप्रत्यक्षग्राह्यत्वात् संदेहविपर्ययायविषयत्वम्, नैयायिकमते तु प्रतियोगिस्मरणयोग्यानुपलब्धिसहकृतमनोजन्यप्रत्यक्षविषयत्वसंभवस्थले मनोग्राह्यत्वमसंभवस्थलेऽपि च संदेहविपर्ययायविषयत्वमेव । ज्ञानाज्ञानविषयकसंदेहं प्रति ज्ञानाज्ञानयोः स्वरूपत एव हि तन्मते प्रतिबन्धकत्वम् । तदुक्तम्—" न हि जानन्नेव न जानामीति प्रत्येति " इति । अत्र जानन्निति अजानन्नित्यस्याप्युपलक्षणम् । न जानामीति च जानामीत्यस्यापि, अनुभवतौल्यात् । भट्टगुरुमतयोरप्ययमेव न्यायः । तथा च सर्वमतेऽपि मिथ्यात्वेनाज्ञायमानत्वस्य प्रवृत्तिप्रयोजकप्रामाण्यस्यासंदिग्धत्वरूपस्वतःसिद्धत्वेऽविप्रतिपत्तिरेव । परतः प्रामाण्यमितिवादिभिर्नैयायिकैः स्वतःप्रामाण्यवादिनामुपरि दीयमानं दूषणमप्यस्थान एवाधुना संपन्नम् । न हि त्रिकालाबाधितत्वरूपं व्यावहारिकसत्यत्वं सर्वथाऽबाध्यत्वरूपं पारमार्थिकसत्यत्वं वोत्पत्तौ ज्ञप्तौ वा स्वतःसिद्धमिति वेदान्तिनो भाट्टाः प्राभाकरा वा वदन्ति । तस्यातीन्द्रियकालत्रयवर्तित्वेन वेदान्तिमतरीत्या साक्षिभास्यत्वासंभवात् । तदन्यमतरीत्या चासंदिग्धत्वासंभवाच्च परतस्त्वस्यैव तैरप्यङ्गीकारात् । एवं च तदभाववति तत्प्रकारकत्वरूपप्रमात्वस्य ज्ञानगतस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधाप्रतियोगित्वरूपवेदान्तिमतसिद्धार्थगतसत्यत्वसमशीलस्य परतस्त्वं नैयायिकैरुच्यमानं न कश्चिदपराधः । तद्विषये उभयोरपि समशीलत्वात् । तथा चोभयमतरीत्यापि तदनुमेयमेव न साक्षिमात्रभास्यम् । तदनुमितिस्तु संवादिप्रवृत्तिजनकत्वादिभिर्हेतुभिरुभयमतेऽपि कर्तव्यैव इति ।

( स्वतःप्रामाण्यव्यवस्थापनम् )

वस्तुतस्तु प्रामाण्यं हि घटत्ववत्प्रमाणानां भावो जातिरूपो वोपाधिरूपो वा । प्रमाणानि च प्रत्यक्षानुमानोपमानशब्दादीनि । तल्लक्षणं च पक्षतावच्छेदकसमानियतं प्रमाकरणत्वमेव । तद्यदि प्रमाकरणत्वमेतेषां प्रमाणानां स्वाभाविकं, तर्हि तत्स्वतःसिद्धमेवेत्यर्थादेव सिद्धं न परतः, गुणादिना । अन्यथा यावद्गुणादिज्ञानं प्रमाकरणत्वनिश्चयो न स्यात् । तदभावे च तज्जन्यज्ञानस्यापि प्रमात्वनिश्चयाभावात्प्रवृत्तिर्न स्यात् । न चाप्रामाण्यानास्कन्दितत्वात्प्रवृत्तिः, प्रमाकरणत्वस्यानिश्चये

अप्रामाण्यास्कन्दितत्वादेव प्रवृत्त्यनुपपत्तेः । अत एव संदेहादिकमपि न प्रवृत्तिप्रयोजकं, यावद्गुणाविज्ञानं प्रामाण्यसंदेहस्यापि संभवात् । ननु तर्हि कथं शुक्तिरजतादिमिथ्याज्ञानोदयः प्रमाकरणात्, कथं वा तत्र प्रवृत्तिरिति चेदुच्यते । प्रमाणेन हि प्रमैव जनयितव्याऽन्यथा प्रमाणत्वव्याकोपप्रसङ्गः। प्रमा चानधिगताबाधितार्थविषयकं ज्ञानम् । तत्र सत्यरजतस्थल इव शुक्तिरजतादिष्वपि यावद्बाधदर्शनं प्रमात्वमस्त्येवेति बाधज्ञानाविषयत्वेन सत्यमिथ्याद्युभयस्थले प्रवृत्तिसंभवे न किंचिदनुपपन्नम्।

वस्तुतस्तु प्रामाण्यस्य स्वतस्त्वं हि ज्ञानसामान्य सामग्र्यधिकागन्तुकभावाप्रयुक्तत्वमेव किलोत्पत्तौ । गुणस्य हेतुत्वे तु पीतः शङ्ख इत्यादिस्थले व्यभिचारात् सर्वत्रानुगतगुणस्वरूपस्य दुर्निरूपणीयत्वाच्च लाघवाद्दोषाभावसहकृतज्ञानसामान्य सामग्रीजन्यत्वमेवाभ्युपेयम् । एवं प्रवृत्तिरपि गृहीतप्रामाण्यज्ञानत्वेनैव भ्रमप्रमासाधारणेनेति नाभावमुखेन तदुपपत्तिप्रदर्शनमिदमतीवोपयुक्तं पश्यामः । तदिदं सर्वं गूढार्थतत्त्वालोके श्रीधर्मदत्तशर्मभिः सुविशदमेव प्रदर्शितमिति तमेवात्रोपस्थापयामः । तद्यथा—

वस्तुतस्तु प्रमाणानां प्रामाण्यमपि स्वत एव ज्ञानप्रमात्वस्योपगमात् । ननु प्रमायां गुणस्य हेतुत्वात्तत्प्रयोज्यमेव प्रमात्वमिति कुतः स्वतस्त्वमिति चेन्न । भूयोवयवेन्द्रियसंनिकर्षप्रमापरामर्श-प्रमायोग्यताज्ञानादिसाधारणानुगतस्य गुणत्वस्याभावेन प्रमासामान्ये तेन रूपेण कारणत्वासंभवात् प्रत्यक्षप्रमासामान्येऽपि भूयोवयवेन्द्रियसंनिकर्षस्य गुणक्रियादिप्रत्यक्षे व्यभिचारेणाहेतुत्वाद्भूयस्त्वस्य दुर्निरूपत्वात् सास्नाया अदर्शने संनिकर्षेऽपि भूयोवयवैर्गवि गवयत्वभ्रमाच्चानुमितिप्रमायामपि लिङ्गिमति पक्षे भ्रमात्मकपरामर्शादपि प्रमोत्पादेन प्रमापरामर्शस्य व्यभिचारात्, प्रमापरामर्शे सत्यपि लाघवज्ञानादितो भ्रमोत्पादेनापि व्यभिचारात् । पीतः शङ्ख इत्यादि भ्रमस्थले गुणे सत्यपि प्रमानुत्पादाद्दोषाभावसाहित्यस्य गुण आवश्यकत्वे चाऽऽवश्यकत्वाद्दोषाभावस्यैव प्रमायां हेतुत्वस्य वाच्यत्वात् । न च दूरत्वादिदोषे सत्येव कस्यचिद्प्रमावत्कस्यचित्प्रमाया अप्युत्पादाद्दोषाभावस्यापि कथमनुगतहेतुत्वमेवं यस्यैव विषयविशेषस्य दूरत्वे सति न प्रत्यक्षप्रमा तस्यैव तत्स्थानादागतस्याऽऽप्तत्वेन निश्चितस्य पुरुषस्य वाक्यात्प्रमोत्पत्तेर्व्यभिचारादपीति वाच्यम् । तत्तद्विषयकप्रत्यक्षादावगत्या तत्तद्दोषाभावकूटस्य कारणत्वोपगमात् । न चाननुगमे गुणस्यैवाननुगतस्य लघोर्हेतुत्वमस्त्विति वाच्यम् । दोषाभावस्याऽऽवश्यकत्वेन तद्धेतुतया निर्वाहे गुणहेतुत्व एव गौरवात् । न च न गुणं विनापि प्रमोत्पाद इति तस्यापि हेतुत्वमावश्यकमिति वाच्यम् । दोषाभावसहितस्य तस्येन्द्रियसंनिकर्षत्वपरामर्शत्वादिनैव हेतुत्वाद्भूयोवयवसंनिकर्षत्वप्रमापरामर्शत्वादिना हेतुत्वानुपगमात्तादृशहेतुत्वस्यैव गुणहेतुत्वपदार्थत्वाद्वक्तृवाक्यार्थयथार्थज्ञानस्य शुकाद्युच्चरितवाक्यस्थले विरहेण शाब्दप्रमायां गुणत्वासंभवात् । भ्रान्तप्रतारकवाक्यस्थलेऽपि व्यभिचाराच्च । न चानुमितौ

शाब्दे चेश्वरस्यैव प्रमापरामर्शो वाक्यार्थयथार्थज्ञानं च गुण इति वाच्यम् । तस्य परम्परासंबन्धेन हेतुत्वस्य वाच्यतया भ्रमपूर्वमपि पुरुषे सत्त्वेनाव्यावर्तकत्वात् । यस्मिन्विशेष्ये यत्प्रकारिकानुमितिः प्रमा तद्विशेष्यकतत्प्रकारकानुमितौ तद्विशेष्यकतद्व्याप्यवत्तापरामर्शस्येश्वरीयस्य हेतुत्वापेक्षया तद्विशेष्यज्ञानस्य हेतुताया एव युक्तत्वात् भ्रमस्थले तत्सत्त्वस्येश्वरीयपरामर्शसत्त्वेनाविशिष्टत्वात् । तन्मात्रात्प्रमोत्पत्त्यापत्तेरप्यविशिष्टत्वात् । तत्पुरुषगततत्साध्यव्याप्यवत्तापरामर्शसहकारित्वकल्पनेन तद्विरहात्तद्वारणस्यापि समानत्वात् । न चेष्टापत्तिः । पर्वतविशेष्यकानुमितिमात्रे तस्यान्वयव्यतिरेकग्रहस्य समानत्वेन प्रमामात्रे तस्योक्तेश्वरज्ञानस्यापि हेतुताया अनुभवविरुद्धत्वात् । एवमीश्वरज्ञानस्य परम्परया हेतुत्वेऽनेकविधपरम्परायाः संभवेन विनिगमकाभावेनानन्तहेतुत्वापत्तेश्च । तस्माद्यदि कस्यचिद्भावस्य प्रमायामप्रमाव्यावृत्तस्य हेतुत्वं वक्तव्यं स्वविशेष्ये स्वप्रकारवत्त्वस्य स्वरूपसतो हेतुत्वं वक्तव्यम् । सन्निकर्षपरामर्शादेः प्रत्यक्षानुमित्यादिसामान्यकारणविरहादेव तन्मात्रात्प्रमापत्तिवारणसंभवात् । न ह्येतावता प्रमायाः परतन्त्रत्वादीश्वरसिद्धिरूपस्य तवाभिमतस्य सिद्धिः । वस्तुतः प्रत्यक्षानुमित्यादिसामान्यकारणाद्दोषाभावसहितात्प्रमोत्पत्तिरस्माकमभिमता । नैतावता स्वतस्त्वहानिः । ज्ञानसामान्यसामग्र्यधिकागन्तुकभावाप्रयुक्तत्वस्यैव तत्त्वाद्दोषाभावस्य अधिकस्यापेक्षणेऽपि तस्य भावत्वाभावान्न प्रमात्वस्य स्वतस्त्वहानिः । दोषस्य भावस्यैवाधिकस्यापेक्षणादप्रमात्वस्य स्वतस्त्वापत्तिरिति । एवं निष्कम्पप्रवृत्तिर्न ज्ञानेऽप्रामाण्यसंशये सति भवतीत्यप्रामाण्यज्ञानाभावविशिष्टज्ञानत्वेन तत्र कारणत्वं वाच्यम् । तदपेक्षया लाघवेन गृहीतप्रामाण्यज्ञानत्वेनैव कारणत्वं युक्तम् । तच्च स्वतःप्रामाण्यग्रह एव संभवति नान्यथाऽनुमानादिना प्रामाण्यग्रहणे ज्ञानस्यैवाभावात् । प्रामाण्यस्य क्वचिदप्यनुमानेनैव ग्राह्यतया तत्रापि साध्यसाधनसहचारग्रहापेक्षाया साध्यग्रहस्यानुमानेनैवानुसरणीयतयाऽनवस्थापाताच्च । जन्मान्तरीयप्रामाण्यग्रहजनितसंस्कारतोऽत्र जन्मनि तत्स्मरणे क्वचिज्ज्ञाने तदुपनीतभाने तत्र सहचारग्रहेऽनुमानमेवं पूर्वजन्मनि तत्पूर्वजन्मसंस्कारजनितस्मरणेन सहचारज्ञानादनुमानमित्यनादित्वगमेनानवस्थापरिहारस्यापि स्वतोग्राह्यतया प्रामाण्यस्य गतिसंभवे तादृशकल्पनाया अन्याय्यत्वेनायुक्तत्वात् । अगत्यैव हि जन्मान्तरीयसंस्कारोद्बोधकल्पनम् । अथ प्रामाण्यस्य स्वतोग्राह्यत्वे ज्ञानग्रहणस्यैव प्रामाण्यज्ञानत्वेन ज्ञाने कदापि प्रामाण्यसंदेहो न स्यादिति चेन्न । प्रामाण्यसंदेहस्य भ्रमत्वेन तत्प्रयोजकदोषस्यावश्यंभावेन प्रामाण्यस्य स्वतोग्रहणासंभवात् दोषाभावे [illegible] स्वतोग्राह्यत्वादप्रामाण्यसंदेहसंभवात् संदेहस्य ज्ञानोत्पत्तिक्षणे [illegible] । [illegible] दोषात्स्वतःप्रामाण्यनिश्चय- [illegible] । [illegible]

संभवस्तथापि स्मृतिसाधारणस्य प्रवृत्त्यौपयिकस्यार्थतथात्वस्य तद्वति तत्प्रकारकत्वपर्यवसन्नस्य स्वतोग्राह्यता संभवति विशेष्यत्वप्रकारत्वयोर्ज्ञानत्वज्ञानवदेव ज्ञानोत्पत्त्यैव प्रकाशाद्विशेष्ये विशेषणवत्त्वस्य व्यवसाये भानात् ''। इति।

## ( वेदापौरुषेयत्वव्यवस्थापनम् )

ननु वेदानां विशिष्टसमाजपरिगृहीतप्रामाण्यानां वाक्यसमूहात्मकग्रन्थराशिरूपत्वेन वाक्यानां च पुरुषोच्चारणमन्तरा ज्ञातुमशक्यत्वेन चेदंप्रथमकोच्चारणकर्तैव तत्कर्ता स्यादिति कथमपौरुषेयत्वमिति चेदुच्यते। अत्र च प्राचीनपक्षेषु केचन ईश्वरोक्तत्वात्, केचन भूतावेशन्यायेन तदाविष्कारात्, केचन अर्थानुसंधानपूर्वकविरचितत्वाभावात्, केचनानादिसिद्धत्वात् तद्राशेरपौरुषेयत्वं मन्यन्ते। तत्र भाट्टमतेऽर्थानुसंधानपूर्वकविरचितत्वाभावादेवापौरुषेयत्वमिति वार्तिकोपष्टम्भेन पूर्वमेवार्थस्येतरप्रमाणाविषयत्वं प्रदर्शयद्भिरस्माभिरभिहितम्। अधिकं तु सनातनधर्मप्रदीप–सनातनधर्मोद्धार–श्लोकवार्तिकादितोऽवगन्तव्यमिति नात्र प्रतन्यते।

## ( वेदत्वविचारे पूर्वपक्षः )

इदमेवात्र विशेषत आलोचनीयं यन्मन्त्रब्राह्मणयोर्वेदनामधेयमित्ययमापस्तम्बसमयः किं मूलक इति। अत्र च किं नाम वेदत्वं, किं मन्त्रब्राह्मणान्यतरत्वं वेदलक्षणमाहोस्वित् अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वं वा सजातीयोच्चारणसापेक्षोच्चारणविषयवाक्यत्वं वा। सर्वथा बौद्धमहमदादिचोदनावाक्येष्वतिप्रसङ्गात्। ननु मन्त्रब्राह्मणान्यतरत्वस्य तत्राभावात्तदेव युक्तं लक्षणमिति चेन्न। मन्त्रब्राह्मणलक्षणस्य तत्रापि सत्त्वात्। तथाहि–विधायकं वाक्यं ब्राह्मणम्। अनुष्ठेयार्थस्मारकवाक्यं मन्त्र इति तल्लक्षणयोरतत्रापि सत्त्वमस्त्येव तैरपि काश्चन देशनाः किमपि स्वर्गादिसदृक्षमलौकिकं फलमुद्दिश्य क्रियन्ते। तत्र च भाव्यकरणेतिकर्तव्यतारूपांशत्रयवत्या भावनायाः प्रत्यक्षोपलम्भात् तदर्थानुष्ठाने तत्तन्मन्त्रत्वाभिमतवाक्योच्चारणस्य तत्राप्यावश्यकत्वं प्रतीयत एव। अत एव तेषां प्रार्थनामन्दिरे कलमापठनादिकं दृश्यते। तदर्थस्य मूलमितरदनुपलब्धम्। महाजनपरिगृहीतत्वमपि तेषां वर्तत एव। महाजनशब्दस्य शिष्टापरपर्यायात्। शिष्टत्वं च न केवलवैदिकाचरणकर्तृत्वम्। तथात्वे वैदिकाचरणात् शिष्टत्वज्ञानम्, तज्ज्ञानाच्च तत्परिगृहीतत्वेन वेदत्वज्ञानम्, तज्ज्ञानाच्च तत्प्रतिपादितस्य कर्मणो वैदिकत्वमिति चक्रिकापत्तेः। यथा हि–''यो ब्रह्माणं विदधाति पूर्वं यो हि वेदांश्च प्रहिणोति तस्मै '' इति वेदवाक्यात् भूतावेशन्यायेन वा प्रत्यक्षतया वा वेदोपदेशः परमेश्वरेण कृतः। तथैव तद्ग्रन्थानामपि परमेश्वरोपदिष्टत्वं तद्ग्रन्थैः प्रतिपाद्यते। मन्यते च तदनुयायिभिः शिष्टैः। न च तेषामपभ्रष्टभाषामयत्वेनैव सादित्वात् परमेश्वरस्य त्वनादित्वादपभ्रंशस्य च लोकैः कृतत्वात् तदनुसारेण परमेश्वरस्योपादऽनुपपन्न इति वाच्यम्। सर्पदष्टस्य

विपर्ययैर्मन्त्रप्रयोगावसरे सर्पस्य मनुष्यदेहसंचारेणापकारादिभाषणमिव तस्याप्युपपत्तेः। न हि सर्पः स्वयं मानुषीं भारतीं व्याहर्तुमीष्टे। एवमपि मनुष्यदेहसंचारे तां वदत्येवेति सर्वजनीनम्। एवं परमेश्वरस्य मनुष्यदेहे आवेशे तद्वाण्या व्याहारो युक्ततर एव। न च तत्रानुसंधानमपि। अलौकिकत्वाद्वैदिकार्थ इव तत्रापि इतरप्रमाणप्रवृत्त्यसंभवेनार्थानुसंधानासंभवात्। सजातीयोच्चारणसापेक्षत्वं तु परमेश्वरवाक्यानुसारादेव। एवं च यानि किल वेदलक्षणान्यभिमतानि वैदिकानां तेषां सर्वेषामितरग्रन्थेषु संभवात् तदसंभवे च वस्तुनः सिद्धिरेव न स्यात्। तदुक्तं—"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्"। इति।

( वेदत्वविचारे—उत्तरपक्षः, कर्मकारणत्ववादश्च )

अत्रोच्यते—"भूतं भव्याय कल्पते" इति न्यायेन ब्रह्माण्डविवरान्तःपातिनां सर्वेषामपि सिद्धवस्तूनां यत्किंचिदर्थक्रियाकारिता सर्वैरप्यभ्युपगन्तव्या। पृथिवी हि धारणार्था धरित्रीत्युच्यते जलं जीवनार्थं जीवनमिति। एवमेव सर्वेऽपि सिद्धाः साध्यसाधनायैव। साध्या च क्रिया न कुत्रचिदपि सिद्धा दृश्यते। एवं च सर्वेषां क्रियामयत्वात्तदुत्पत्तिरपि क्रियाजन्यैवेत्यभ्युपगन्तव्यमकामेनापि। यो यन्मयस्तदुत्पत्तिस्तन्मूलिका मृन्मयघटस्य मृन्मूलकत्वेनोपलम्भात्।

तथा च "कर्मणा जायते जन्तुः कर्मणैव विलीयते।
सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते॥"

इति सिद्धान्तानुसारेण जगदुत्पत्तौ निदानं कर्मैव। न हि तत्त्वप्रसंख्याने सिद्धानां तत्त्वानां धर्मान्तरेण नानाविधवैचित्र्यपूरितान्तर्बहिर्भागस्य मनसाप्यचिन्त्यरचनारूपस्य जगतः सृष्टिः संभवति। अत एवेदानीतना वैज्ञानिका अपि जडतत्त्वस्य ( मॅटर ) कर्मशक्त्या ( मोशन् ) सहावस्थानमस्तीति मन्यन्ते। किंच कार्यं चाकारणं चेति परस्परव्याघातः। कार्यं कारणजन्यं कादाचित्कं नाकारणं भवितुमर्हति। कारणं न कार्यहेतुरिति नाकार्यमवतिष्ठते। यथा हि निःसंतानस्य पितृत्वं वा भार्यारहितस्य पतित्वं वा न संभवति। तयोर्निरूपकांशे नित्यसाकाङ्क्षत्वात्। एवं कार्यकारणयोरपि निरूपणे नित्यसाकाङ्क्षत्वादवश्यं निरूपकेन कर्मणा भाव्यम्। अत एव कुसुमाञ्जलौ [illegible]नमस्य जगतोऽनादित्वेऽनुगमकत्वेनोपन्यस्तम्—

तत्साक्षात्कारे वा यत्सामर्थ्यं तत्किमकारणमेव वा किंचित्कारणजन्यं वा ? । नाऽऽद्यः, सर्वशरीरे तथात्वापत्तेः । न हि निष्कारणं कार्यं कुत्रचित्कथंचित् भवेत्, कुत्रचित्कथंचिन्न भवेत् । निष्कारणभवनस्वभावस्य सर्वत्र सर्वदा भवनावश्यंभावात् । नचैवं, तस्माद् अस्ति किंचित्सापेक्षं तत् । न हि तदपेक्षणीयं शरीरवैशिष्ट्याद्वृते, न च शरीरवैशिष्ट्यं विना कर्मवैशिष्ट्यात् । विशिष्टकर्मसंस्कारसंस्कृतं हि शरीरं परमेश्वरसाक्षात्कारयोग्यं भवति नान्यदित्येवान्ततो गत्वा वक्तव्यम् । तानि च कर्माणि साक्षात्कारात्पूर्वं केन प्रमाणेन ज्ञातान्यनुष्ठितानि च । नह्यनुष्ठानमन्तरेण तत्संस्कारः संपद्यते कर्मत्वेन मन्यत्वात् । नापि चाज्ञातमनुष्ठातुं शक्यम् । तस्मादितेभ्यः पूर्वमपि धर्मसंस्थापकेभ्य आसीत्किल कर्मानुष्ठानज्ञापकं किमपि प्रमाणम् । येन कर्माणि ज्ञात्वैवानुष्ठितानि स्युः । तच्चेत्प्रमाणं स्ववच एव, तर्हि त्वात्माश्रयः । अन्यच्चेत्किं तत्, न हि वेदमन्तरेण किमप्युपलभामहे । तस्माद्वेदेन वा तत्सदृशप्रमाणेन वा ज्ञात्वैवानुष्ठितानि कर्माणि स्वीयविशिष्टसंस्काररहितं परमेश्वरसाक्षात्कारयोग्यं शरीरं संपादयामासुरित्यवश्यमभ्युपेयम् । इदमेव जगद्वैचित्र्यापादकं कर्मवैशिष्ट्यं जन्मान्तरास्तित्वेऽपि प्रमाणम् । तत एवाकृताभ्यागमकृतहानिप्रसङ्गहानेः । अयमेव संस्कारो धर्माधर्मरूपः " चिरध्वस्तं फलायालं न कर्मातिशयं विना " इत्यनया कारिकया कुसुमाञ्जलावुक्तः । ततश्चेश्वरसाक्षात्कारात्पूर्वं यानि कर्माण्यनुष्ठितानि तानि तु साक्षात्कारानन्तरं ज्ञातेभ्योऽतिरिक्तान्येवेति स्वयमन्यत्कुर्वन्तः परेभ्योऽन्यदुपदिशन्ति एते बौद्धादयः कथं वा धर्माश्वासभाजनं कथं वाऽऽप्ताः । नन्वधिकारानुसारेण तथोपदेश इति चेत्तथा तैरप्रतिपादनात् । न हि सर्वेऽपि लोकास्तदानीं सत्क्रियाविमुखाः । अद्यापि सत्क्रियानिरतानां दर्शनात् । नो चेत्तेषामप्युपदेशासंभवात् । एवं च " मनस्यन्यद्वचस्यन्यत्कार्यमन्यद्दुरात्मनाम् " इति दुरात्मत्वेनानाप्तत्वात्तेषां वाक्यमप्रमाणमिति न तत्र प्रामाण्यम् । तदुक्तं भट्टपादैः—

( सर्वज्ञनिराकरणे वार्तिकम् )

सर्वज्ञकल्पनाद्यैस्तु वेदे चापौरुषेयता ।
तुल्यता कल्पिता येन तेनेदं संप्रधार्यताम् ॥
सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
निराकरणवच्छक्त्या न चाऽऽसीदिति कल्पना ॥
न चाऽऽगमेन सर्वज्ञस्तदीयेऽन्योन्यसंश्रयात् ।
नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम् ॥
न चाप्येवं परो नित्यः शक्यो लब्धुमिहाऽऽगमः ।
नित्यश्चेदर्थवादत्वं तत्परे स्यादनित्यता ॥

आगमस्य च नित्यत्वे सिद्धे तत्कल्पना वृथा ।
यतस्तं प्रतिपद्यन्ते धर्ममेव ततो नराः ॥
योऽपीन्द्रियार्थसंबन्धविषये सत्यवादिताम् ।
दृष्ट्वा तद्वचनत्वेन श्रद्धेयेऽर्थेऽपि कल्पयेत् ॥
तेनापि पारतन्त्र्येण बाधिता स्यात्प्रमाणता ।
प्रामाण्यं चेत्स्वयं तस्य काऽपेक्षाऽन्येन्द्रियादिषु ॥
यथैवात्रेन्द्रियादिभ्यः परिच्छेदात्प्रमाणता ।
श्रद्धेयेऽपि तथैव स्यान्न स्वातन्त्र्येण लभ्यते ॥
यथा च तेषां सत्यत्वं सिध्यत्येतेन हेतुना ।
तथान्यानवबुद्धार्थप्रामाण्याभावसाधनम् ॥
अश्रद्धेयार्थसत्यत्वं श्रद्धेये चाप्यसत्यता ।
पूर्वज्ञानानुवादित्वं दृष्टान्तवदिहेष्यताम् ॥
अपि चालौकिकार्थत्वे सति पुंवाक्यहेतुकम् ।
मिथ्यात्वं वेदवाक्यानां स्यादन्योन्यं सपक्षतः ॥
धर्माधर्मातिरिक्तार्थे प्रामाण्यं च प्रसज्यते ।
साङ्ख्यादिषु च जीवत्सु दृष्टान्तो दुर्लभोऽस्य च ॥
अलौकिकार्थवाचित्वं नृवाक्यत्वे सतीति च ।
परस्परमपेक्ष्यैव बौद्धादेः स्यान्मृषार्थता ॥
यद्येवं तु यो नाम वादी प्रथमसंगतः ।
तस्यापि हेतुः स्यादेष भवन्तं प्रत्यसंशयम् ॥
बुद्धादीनामसार्वज्ञ्यमिति मन्यं वचो मम ।
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]

कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥
सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्न तं प्रति ।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् ॥
रागादिरहिते चास्मिन् निर्व्यापारे व्यवस्थिते ।
देशनान्यप्रणीतैव स्यादृते प्रत्यवेक्षणात् ॥
सांनिध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।
निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥
एवमाद्युच्यमानं तु श्रद्दधानस्य शोभते ।
कुड्यादिनिःसृतत्वाच्च नाऽऽश्वासो देशनासु नः ॥
किं नु बुद्धप्रणीताः स्युः किमु कैश्चिद्दुरात्मभिः ।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः ॥
एवं यैः केवलं ज्ञानमिन्द्रियाद्यनपेक्षिणः ।
सूक्ष्मातीतादिविषयं जीवस्य परिकल्पितम् ॥
नर्ते तदागमात्सिध्येन्न च तेनाऽऽगमो विना ।
दृष्टान्तोऽपि न तस्यान्यो नृषु कश्चित्प्रवर्तते ॥
नित्यागमाववोधोऽपि प्रत्याख्येयोऽनया दिशा ।
न हि तत्रापि विश्रम्भो दृष्टोऽनेन कृतोऽथवा ॥
सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः ।
यथाऽद्यत्वे न विस्रम्भस्तथाऽतीतार्थकीर्तने ॥
स्वप्नादिज्ञानवच्चापि प्रत्ययोऽस्याऽऽगमार्थयोः ।
भवेदिति सशङ्कानां प्रामाण्यं गम्यते कथम् ॥
पुरुषातिशयश्रेष्टः सैव चाऽऽगमनित्यता ।
कल्पितं स्मरणं चास्य जन्मान्तरनिवन्धनम् ॥
ग्राह्यत्वे चागमस्यैवं द्वेषोऽर्थग्रहणे वृथा ।
यो ह्यनुच्चारितं शब्दं गृह्णात्यर्थेऽस्य का कथा ॥
पुमांस्तावत्स्वतन्त्रः स्यादर्थग्रहणवादिनाम् ।
अभिप्रायाभिधाने तु पारतन्त्र्यं द्वयोरपि ॥

अनेकपुरुषस्यत्वादेकत्रैव च जन्मनि ।
ग्रहणस्मरणाद्भेदे न स्वातन्त्र्यं विहन्यते ॥
अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणम् ।
एकस्य प्रतिभानं तु कृतकान्न विशिष्यते ॥
अतश्च संप्रदाये च नैकः पुरुष इष्यते ।
बहवः परतन्त्राः स्युः सर्वे ह्यन्तलवन्नराः ॥ इति ।

## ( सिद्धनिराकरणम् । )

एतेन कपिलादयः सिद्धा अपि व्याख्याताः । तेषां सिद्धेरपि सापेक्षत्वात् । धर्मानुष्ठानापेक्षा हि सिद्धिः । स च धर्मश्चार्थादेव चोदनालक्षण इत्येव सिध्यति । एतेनाऽऽधुनिकसन्तमहन्तपद-वाच्यानामपि धर्मप्रणेतृत्वं सर्वज्ञत्वादिकं च व्याख्यातम् । जगति हि तापत्रयाभिहताः प्राणिनः समाधानार्थं चित्तस्येतस्ततो बम्भ्रम्यमाणाः क्वचन शर्मालभमाना यदाकदाधुनिकसन्तपदवाच्यानां मुखान्मोहर्तिकादिव स्वेष्टसंसिद्धौ तच्चरणपङ्कजभ्रमरायमाणा अन्ततः कुत्रापिशर्मालभमाना ऐहिक-पारलौकिकोभयस्वार्थात्प्रच्यवन्तः, एतादृशासन्तपदवाच्यान् देहंभरान् पुष्णन्तीति महतीयं धर्मविडम्बना प्रचलति कलिकालमहात्म्यात् । तद्वरमर्थकामप्रधाना दृश्यफलोद्देशेन स्वेष्टसाधनाय प्रयतमानाः स्वकष्टार्जितेन जीविकां बिभ्रति । एतदपेक्षया धर्माधर्मावालम्ब्य मनोमयीयं रज्जुः परमेश्वरात्मक आलाने दृढं बध्वा यदि

ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।
वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ।

इति-मनूक्तरीत्या स्वधर्मात्मकतपोनिरता दुःखिता भवेयुः । मन्ये परमकारुणिकः स भगवान् नारायण ऐहिकपारलौकिकश्रेयःसंपादनेनावश्यं कृतार्थतां नेष्यति दुःखितान् । तदलं प्रसक्तानुप्रसक्त्या । सर्वथा कर्मशक्तेर्बलवत्त्वात्तस्याश्च वेदैकसमवगम्यत्वात्केनापि पौरुषेयवचसा तत्साल्यं सम्पादयितुमसाम्प्रतमेव । अतो न बौद्धमर्हमदादीनामागमेषु तादृशं प्रामाण्यं यादृशम-लौकिकार्थबोधकत्वेनापौरुषेयस्य वेदस्य ।

द्रव्यकर्मगुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ।
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः । ( इति. श्लो. वा. )

अतश्चालौकिकार्थबोधकं वाक्यं वेद इत्येव तल्लक्षणम्। तदुक्तम्—ऋग्वेदभाष्यभूमिकायां सायणाचार्यैः—

( वेदत्वनिरुक्तौ पूर्वपक्षः। )

ननु वेद एव तावन्नास्ति कुतस्तदवान्तरविशेष ऋग्वेदः। तथाहि कोऽयं वेदो नाम। नहि तत्र लक्षणं प्रमाणं वाऽस्ति। न च तदुभयव्यतिरेकेण किंचिद्वस्तु प्रसिध्यति। लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्यायविदां मतम्। प्रत्यक्षानुमानागमेषु प्रमाणविशेषेष्वन्तिम इति तल्लक्षणमिति चेन्न। मन्वादिस्मृतिष्वतिव्याप्तेः। समयबलेन "सम्यक्परीक्षानुभवसाधनम्" इत्येतस्याऽऽगम-लक्षणस्य तास्वपि सद्भावात्। "अपौरुषेयत्वे सति" इति विशेषणाददोष इति चेन्न। वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात्शरीरधारिपुरुषनिर्मितत्वाभावादपौरुषेयत्वमिति चेन्न। "सहस्रशीर्षः पुरुषः" इत्यादिश्रुतिभिरीश्वरस्यापि शरीरत्वात्। कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणा-पौरुषेयत्वं विवक्षितं इति चेन्न—जीवविशेषैरग्निवायुआदित्यैर्वेदानामुत्पादितत्वात्। ऋग्वेद एवाग्ने-रजायत यजुर्वेदो वायोः सामवेद आदित्यादिति (ऐ. ब्रा. ५।३२) इति श्रुतेरीश्वरस्याग्न्यादि-प्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम्। मन्त्रब्राह्मणात्मकशब्दराशिर्वेद इति चेन्न। ईदृशो मन्त्र ईदृशं ब्राह्मणमित्यनयोरद्याप्यनिर्णीतत्वात्। तस्मान्नास्ति किंचिद्वेदस्य लक्षणम्। नापि तत्सद्भावे प्रमाणं पश्यामः। "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्" इत्यादिवाक्यं प्रमाणमिति चेन्न—तस्यापि वाक्यस्य वेदान्तःपातित्वेनाऽऽत्माश्रयत्वप्रसङ्गात्। न खलु निपुणोऽपि स्वस्कन्धमारोढुं प्रभवति। "वेद एव द्विजातीनां निःश्रेयसकरः परः" इत्यादि स्मृतिवाक्यं प्रमाणमिति चेन्न—तस्याप्युक्तश्रुतिमूलकत्वेन निराकृतत्वात्। प्रत्यक्षादिकं तु शङ्कितुमप्ययोग्यम्। वेदविषया तु लोकप्रसिद्धिः सर्वजनीनापि—"नीलं नभः" इत्यादिवद्भ्रान्ता। तस्माल्लक्षणप्रमाणरहितस्य वेदस्य सद्भावो नाङ्गीकर्तुं शक्यत इति पूर्वः पक्षः।

( वेदत्वनिरुक्तौ—उत्तरपक्षः। )

अत्रोच्यते—मन्त्रब्राह्मणात्मकं तावददुष्टं लक्षणम्। अत एवाऽऽपस्तम्बो यज्ञपरिभाषाया-मेवमाह "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति। तयोस्तु स्वरूपमुपरिष्टान्निर्णेष्यते। अपौरुषेयवाक्य-त्वमितीदमपि यादृशमस्माभिर्विवक्षितं तादृशमुत्तरत्र स्पष्टीभविष्यति। प्रमाणान्यपि यथोक्तश्रुति-स्मृतिलोकप्रसिद्धिरूपाणि वेदसद्भावे द्रष्टव्यानि। यथा घटपटादिद्रव्याणां स्वप्रकाशकत्वाभावेऽपि

अनेकपुरुषस्यत्वादेकत्वैव च जन्मनि ।
ग्रहणस्मरणाद्वेदे न स्वातन्त्र्यं विहन्यते ॥
अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणम् ।
एकस्य प्रतिभानं तु कृतकान्न विशिष्यते ॥
अतश्च संप्रदाये च नैकः पुरुष इष्यते ।
बहवः परतन्त्राः स्युः सर्वे ह्यध्येतृतन्त्रताः ॥ इति ।

( सिद्धनिराकरणम् । )

एतेन कपिलादयः सिद्धा अपि व्याख्याताः । तेषां सिद्धेरपि सापेक्षत्वात् । धर्मानुष्ठानापेक्षा हि सिद्धिः । स च धर्मश्चार्थादेव चोदनालक्षण इत्येव सिध्यति । एतेनाऽऽधुनिकसन्तमहन्तपद-वाच्यानामपि धर्मप्रणेतृत्वं सर्वज्ञत्वादिकं च व्याख्यातम् । जगति हि तापत्रयाभिहताः प्राणिनः समाधानार्थं चित्तस्येतस्ततो बम्भ्रम्यमाणाः क्वचन शर्मालभमाना यदाकदाधुनिकसन्तपदवाच्यानां मुखान्मोहर्तिकादिव स्वेष्टसंसिद्धीं तच्चरणपङ्कजभ्रमरायमाणा अन्ततः कुत्रापिशर्मालभमाना ऐहिक-पारलौकिकोभयस्वार्थात्प्रच्यवन्तः, एतादृशसन्तपदवाच्यान् देहंभरान् पुष्णन्तीति महतीयं धर्मविडम्बना प्रचलति कलिकालमहात्म्यात् । तद्वरमर्थकामप्रधाना दृश्यफलोद्देशेन स्वेष्टसाधनाय प्रयतमानाः स्वकष्टार्जितेन जीविकां बिभ्रति । एतदपेक्षया धर्माधर्मावालम्ब्य मनोमयीयं रज्जुः परमेश्वरात्मक आलाने दृढं बध्वा यदि

ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।
वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ।

इति-मनूक्तरीत्या स्वधर्मात्मकतपोनिरता दुःखिता भवेयुः । मन्ये परमकारुणिकः स भगवान् नारायण ऐहिकपारलौकिकश्रेयःसंपादनेनावश्यं कृतार्थतां नेष्यति दुःखितान् । तदलं प्रसक्तानुप्रसक्त्या । सर्वथा कर्मशक्तेर्बलवत्त्वात्तस्याश्च वैदिकसमधिगम्यत्वात्केनापि पौरुषेयवचसा तत्प्रामाण्यं संपादयितुमसांप्रतमेव । अतो न बौद्धमद्मदादीनामागमेषु तादृशं प्रामाण्यं यादृशम-लौकिकार्थबोधकत्वेनापौरुषेयस्य वेदस्य ।

द्रव्यकर्मगुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न तादृप्येण धर्मता ।
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ।
तादृप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः । ( इति. श्लो. वा. )

अतश्चालौकिकार्थबोधकं वाक्यं वेद इत्येव तल्लक्षणम् । तदुक्तम्—ऋग्वेदभाष्यभूमिकायां सायणाचार्यैः—

## ( वेदत्वनिरुक्तौ पूर्वपक्षः । )

ननु वेद एव तावन्नास्ति कुतस्तदवान्तरविशेष ऋग्वेदः । तथाहि कोऽयं वेदो नाम । नहि तत्र लक्षणं प्रमाणं वाऽस्ति । न च तदुभयव्यतिरेकेण किंचिद्वस्तु प्रसिध्यति । लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्यायविदां मतम् । प्रत्यक्षानुमानागमेषु प्रमाणविशेषेष्वन्तिम इति तल्लक्षणमिति चेन्न । मन्वादिस्मृतिष्वतिव्याप्तेः । समयबलेन “ सम्यक्परीक्षानुभवसाधनम् ” इत्येतस्याऽऽगम-लक्षणस्य तास्वपि सद्भावात् । “ अपौरुषेयत्वे सति ” इति विशेषणाददोष इति चेन्न । वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात्शरीरधारिपुरुषनिर्मितत्वाभावादपौरुषेयत्वमिति चेन्न । “ सहस्रशीर्षः पुरुषः ” इत्यादिश्रुतिभिरीश्वरस्यापि शरीरत्वात् । कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणा-पौरुषेयत्वं विवक्षितं इति चेन्न—जीवविशेषैरग्निवायुआदित्यैर्वेदानामुत्पादितत्वात् । ऋग्वेद एवाग्ने-रजायत यजुर्वेदो वायोः सामवेद आदित्यादिति ( ऐ. ब्रा. ५।३२ ) इति श्रुतेरीश्वरस्याग्न्यादि-प्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम् । मन्त्रब्राह्मणात्मकशब्दराशिर्वेद इति चेन्न । ईदृशो मन्त्र ईदृशं ब्राह्मणमित्यनयोरद्याप्यनिर्णीतत्वात् । तस्मान्नास्ति किंचिद्वेदस्य लक्षणम् । नापि तत्सद्भावे प्रमाणं पश्यामः । “ ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम् ” इत्यादिवाक्यं प्रमाणमिति चेन्न—तस्यापि वाक्यस्य वेदान्तःपातित्वेनाऽऽत्माश्रयत्वप्रसङ्गात् । न खलु निपुणोऽपि स्वस्कन्धमारोढुं प्रभवति । “ वेद एव द्विजातीनां निःश्रेयसकरः परः ” इत्यादि स्मृतिवाक्यं प्रमाणमिति चेन्न—तस्याप्युक्तश्रुतिमूलकत्वेन निराकृतत्वात् । प्रत्यक्षादिकं तु शङ्कितुमप्ययोग्यम् । वेदविषया तु लोकप्रसिद्धिः सर्वजनीनापि—“ नीलं नभः ” इत्यादिवद्भ्रान्ता । तस्माल्लक्षणप्रमाणरहितस्य वेदस्य सद्भावो नाङ्गीकर्तुं शक्यत इति पूर्वः पक्षः ।

## ( वेदत्वनिरुक्तौ—उत्तरपक्षः । )

अत्रोच्यते—मन्त्रब्राह्मणात्मकं तावददुष्टं लक्षणम् । अत एवाऽऽपस्तम्बो यज्ञपरिभाषाया-मेवमाह “ मन्त्रब्राह्मणयोर्वेदनामधेयम् ” इति । तयोस्तु स्वरूपमुपरिष्टान्निर्णेष्यते । अपौरुषेयवाक्य-त्वमितीदमपि यादृशमस्माभिर्विवक्षितं तादृशमुत्तरत्र स्पष्टीभविष्यति । प्रमाणान्यपि यथोक्तश्रुति-स्मृतिलोकप्रसिद्धिरूपाणि वेदसद्भावे द्रष्टव्यानि । यथा घटपटादिद्रव्याणां स्वप्रकाशकत्वाभावेऽपि

सूर्यचन्द्रादीनां स्वप्रकाशकत्वमविरुद्धम् । तथा मनुष्यादीनां स्वस्कन्धारोहासंभवेऽपि अकुण्ठितशक्तेर्वेदस्य इतरवस्तुप्रतिपादकत्ववत् स्वप्रतिपादकत्वमप्यस्तु । अत एव संप्रदायविदः अकुण्ठितां वेदस्य शक्तिं दर्शयन्ति—" चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुम् " इति । तथा सति वेदमूलायाः स्मृतेस्तदुभयमूलाया लोकप्रसिद्धेश्च प्रामाण्यं दुर्वारम् । तस्माल्लक्षणप्रमाणसिद्धो वेदो न केनापि चार्वाकादिनाऽपोढुं शक्यत इति स्थितम् ।

## ( वेदलक्षणम् )

अनेन च माधवाचार्यविरचितर्वेदभाष्येण वेदस्य लक्षणप्रमाणाभ्यां सिद्धत्वं स्पष्टतयैव प्रतिपाद्यते । यद्यप्यत्र मन्त्रब्राह्मणात्मकत्वं वेदत्वमिति लक्षणम् । तथापि वेदस्याकुण्ठितशक्तिसिद्धौ चोदनाया लोकविलक्षणार्थप्रतिपादिकाया उदाहृतत्वेनालौकिकार्थप्रतिपादकत्वमेव वेदत्वमिति पर्यवस्यति । मन्त्रलक्षणं ब्राह्मणलक्षणं तैरेव स्वीयजैमिनीयन्यायमालायां प्रतिपादितम् । तद्यथा—

> अहे बुध्निय मन्त्रं मे इति मन्त्रस्य लक्षणम् ।
> नास्त्यस्ति वाऽस्य नास्त्येतदव्याप्त्यादेरवारणात् ॥
> याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ।
> तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ॥

अत्र च याज्ञिकसमाख्यानादनुष्ठेयार्थस्मारकत्वं मन्त्रत्वमिति प्रतिपाद्यते । ब्राह्मणलक्षणं यथा—

> नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा ।
> नासीयन्तो वेदभागा इति क्लृप्तेरभावतः ॥
> मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः ।
> अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् ॥

अत्र च मन्त्रातिरिक्तो वेदभागो ब्राह्मणमिति प्रतिपाद्यते । तत्र द्विविधं हि ब्राह्मणं विधिरर्थवादश्चेति । तत्रार्थवादस्य विध्यङ्गत्वेन विधिवाक्यैकवाक्यतापन्नतयैवार्थावबोधकत्वाद्विधायकं वेदभागं ब्राह्मणमिति तात्पर्यतः सिध्यति । बौद्धागमाना तु सादित्वेनालौकिकार्थबोधकत्वाभावेन वेदत्वाभावादेव न तत्र मन्त्रब्राह्मणलक्षणयोरतिव्याप्तिः । विस्तरस्तु सायणभाष्यभूमिकातोऽनुसंधेयः ।

## ( विधिविमर्शः )

अथ कोऽयं विधिः, यस्यालौकिकार्थबोधने सामर्थ्यमिति । उच्यते—लिङर्थो हि विधिः । "विधिनिमन्त्रण" इति शब्दानुशासनात् । यदर्थे यस्य शब्दस्यानुशासनं स तदर्थ इति सर्वसंमतम् । एवमपि विधिशब्दार्थे विवदमाना बहवः परिदृश्यन्ते । केचन इष्टसाधनताज्ञानमेव विध्यर्थ इत्याचक्षते । अन्ये तु कृतिसाध्यताविशिष्ट—बलवदनिष्टाननुबन्धित्वविशिष्टं तदित्यभिमन्यन्ते । अपरे तु आत्माभिप्राय एव विध्यर्थ इत्यभिप्रयन्ति । एके तु प्रेरणमेव विधिः स च पुरुषप्रवृत्त्यनुकूलः कश्चन प्रेरकगतो व्यापार इति सिद्धान्तयन्ति । एतेषां सारासारविचारेण तत्त्वनिर्णयस्तु भगवानेव जानीयात् । पराक्रान्तं चात्र सूरिभिरन्यत्र भाट्टरहस्यादिषु इति तत एव द्रष्टव्यम् । ग्रन्थन्यूनतापरिहारार्थं तु दिङ्मात्रमत्र प्रदर्श्यते भूषणसारदर्पणतः —

## ( विध्यर्थे व्याकरणमतम् )

"विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" इति किल भगवतः पाणिनेरनुशासनम् । तत्र विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणं नियोगकरणम् । आवश्यके प्रेरणेत्यर्थः । आमन्त्रणं कामचारानुज्ञा । अधीष्टः—सत्कारपूर्वको व्यापारः । अत्र च सर्वत्रानुगतं प्रवर्तनारूपम्, अतस्तस्यैव वाच्यता युक्ता । उक्तं च—

> अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।
> तत्रैव लिङ्विधातव्यः किं भेदस्य विवक्षया ॥
> न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमतोऽपि वा ।
> विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥

तदिदं प्रवर्तनात्वं प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम् । तच्चेष्टसाधनत्वस्यास्तीति तदेव विध्यर्थः ॥ यद्यप्येतत्कृतिसाध्यत्वस्याप्यस्ति, तज्ज्ञानस्यापि प्रवर्तकत्वात् । तथापि यागादौ सर्वत्र तल्लोकत एव गम्यत इति अन्यलभ्यत्वान्न तच्छक्यम् । बलवदनिष्टाननुबन्धित्वज्ञानं च न हेतुः । द्वेषाभावेनान्यथासिद्धत्वात् । आस्तिककामुकस्य नरकसाधनताज्ञानदशायामपि उत्कटेच्छया द्वेषाभावदशायां प्रवृत्तेर्व्यभिचाराच्च । तस्मादिष्टसाधनत्वमेव प्रवर्तना । उक्तं च विधिविवेके मण्डनमिश्रैः—

> पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः ।
> प्र त्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥ इति ॥

## ( विधिविवेकमतविचारः )

अत्रायं विचारणीयोंऽशः । प्रवर्तनात्वं नाम प्रवृत्तिप्रयोजकज्ञानविषयतावच्छेदकमेव भवितुमर्हति नवेति । प्रवर्तना हि प्रेरणा, परप्रवृत्तिप्रयोजकः कश्चन प्रेरकस्य व्यापारविशेष इत्येवाभ्युपगन्तव्यम् । अचेतने यन्त्रादौ तथैव प्रेरकशब्दप्रयोगात् । तथात्रापि प्रेरकस्य कश्चन स्वगतो व्यापार एव प्रवर्तनेति वक्तुमुचितम् । नासौ व्यापारः सर्वत्रेष्टसाधनत्वबोधनमेव । राजाज्ञादिषु कारागृहे तथाऽभावात् । न हि तत्रेष्टसाधनत्वबोधद्वारैव बन्धादीनां प्रवृत्तिः, अपि तु बलादेव । ननु तत्र दण्डादीनां भयेन बलवदनिष्टसंभावनापरिहारार्थमेव प्रवृत्तिरिति चेदत्रापि तथाऽस्तु । धर्मानुष्ठानाभावे बलवदनिष्टसभावनेति तत्परिहारार्थमेव धर्मे प्रवृत्तिरस्तु । अत एव नित्यादिकर्मसु फलाभावेऽपि प्रवर्तकत्व विधेः । "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यधिकरणे काम्यानामपि फलेच्छाराहित्येनानुष्ठीयमानाना चित्तशुद्धिद्वारा विविदिषायां विनियोगोऽप्यत एवोपपद्यते । किंच न बलवदनिष्टसभावनैवाकरणे प्रवृत्तिप्रयोजकम् । यन्त्रादावचेतने तस्याप्यसभवात् । अतः प्रवृत्तिप्रयोजनः कश्चन प्रेरकस्य विशिष्टो व्यापार एव प्रवर्तना प्रेरणापरनामाऽभ्युपगन्तव्यः । स चाचेतने प्रेरके कर्म । चेतने तु सामर्थ्यमूलकस्तादृशोऽन्तःकरणनिष्ठो व्यापारः । सोऽपि क्वचिदिष्टसाधनत्वज्ञानानुकूलशब्दप्रयोगरूपः । यदि सर्वत्रेष्टसाधनत्वज्ञानमेव प्रवर्तना । तर्हि तु कान्तासमितादिषु अनिष्टसाधनत्वज्ञानेऽपि कान्ताभिमतकार्ये प्रवृत्तिः किंमूलिका स्यात् । अतो राजशासनमिव तत्राप्यकरणे प्रेरकसामर्थ्यमूलकानिष्टसभावना वर्तत इति तत्परिहारार्थमेव प्रवृत्तिः । यत्र तु स्वय प्रवृत्तिः, न प्रेरणावशात् तत्र स्यान्नाम प्रवृत्तिप्रयोजकज्ञानविषयतावच्छेदकमिष्टसाधनत्वम् । यत्र न तादृशी प्रवृत्तिस्तत्र तु प्रेरकशक्तिभयमेव तदवच्छेदकम् । अत एवोक्त मनुना—

> सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ।
> दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ इति

वेदोऽपि न मित्रसमितमिव वा कान्तासमितमिव कर्माण्यनुशास्ति । किंतु राजसमितमिव विधत्ते कर्माणि क्षेमाय । तत्र राज्ञः प्रवृत्तिप्रयोजकव्यापार इव वेदस्यापि कश्चन तादृशव्यापारोऽवश्यमभ्युपेयः । स च वेदे पुरुषाभावाच्छब्दनिष्ठ एव । सैव भावना प्रवर्तना प्रेरणेति । स च व्यापारः पृथग सर्वत्रानुभूयते । गच्छति गमन करोति, चलति चलन करोति, स्पन्दते स्पन्दन करोति अर्थान्तरेषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्न यथा कुसुमेभ्य· सूत्र, इति भामत्युक्तयुक्त्या चलनगमनादिषु व्यावर्तमानेषु अनुवर्तमानं करण तदपेक्षया भिन्न भावनापदव्यपदेश्य सिद्ध भवति । स एव चाऽऽख्यातार्थः । लिङि आख्यातत्वमिव लिङ्त्वस्यापि सत्त्वात्ततोऽपि कश्चनार्थो विधि-

रूपोऽधिक उन्नेयो भवति । स च तादृशभावनोत्पादानुकूलः कश्चन शब्दनिष्ठो व्यापारविशेष एवाभ्युन्नेयः । पुरुषगतव्यापारवदपौरुषेये वेदेऽभ्युन्नेतुमसंभवात् । तदुक्तम्—

अभिधां भावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सा चाऽऽख्यातस्य गोचरः ॥
लिङोऽभिधा सैव च शब्दभावना
भाव्या च तस्याः पुरुषप्रवृत्तिः
संबन्धबोधः करणं तदीयम्
प्ररोचना चाङ्गतया प्रयुज्यते ॥ इति ॥

## ( भूषणसारमतम् )

एतदसहमानाः परे तु आर्थीभावनाया यथा वा स्वयंप्रवृत्तौ वा इष्टसाधनत्वज्ञानमेव प्रवृत्तिप्रयोजकं नान्यत् किमपि । तथैव वैदिकलिङादिष्वपि तदेव प्रवृत्तिप्रयोजकमभ्युपेयम् । एकरूपेणानुगमसंभवात् । अभिधा तु लिङादिनिरूपिता शक्तिरेव । न तु तदतिरिक्तः कश्चन शब्दसमवेतो व्यापारः । मानाभावात् । विधेः प्रवर्तकत्वस्य पूर्वमुपपादनात्तदनुपपत्तेरप्यभावात् । अन्यथा शब्दातिरिक्तः शब्दसमवेत एको व्यापारः कल्पनीयः । तस्य च स्वप्रवृत्तौ परप्रवृत्तौ वा कारणत्वेनाक्लृप्तस्य तत्त्वेन कारणत्वम् । प्रवर्तनात्वेन परनिष्ठव्यापारबोधकत्वेन क्लृप्तस्य शब्दस्य स्वनिष्ठव्यापारबोधकत्वं सविषयकत्वं च कल्पनीयामिति गौरवस्य स्फुटत्वाच्च । प्रेरणाया विध्यर्थत्वेऽपि सामान्यस्य विशेषे पर्यवसानात् कोऽसौ व्यापार इति विशेषगवेषणाया समीहितसाधनत्वमेव स इति वक्तुमुचितम् । लिङस्तदर्थकत्वं विना प्रवर्तकत्वस्यैवासंभवात् । प्रेरणाविषयः पाक इति बोधस्येष्टसाधनत्वाद्यविषयकस्य प्रवर्तकत्वं लोकविरुद्धमेव । ज्ञानकरणस्य स्वनिष्ठव्यापारद्वारैव फलजनकत्वमिति नियमस्तु नास्त्येव । व्याप्तिज्ञानादौ व्यभिचारात् । तस्माल्लिङादिजन्यबोधविषयाभिधाया इष्टसाधनत्वादिज्ञाननिरपेक्षायाः प्रवर्तकत्वं निर्युक्तिकमेव । शब्दरूपप्रेरणावादिनाऽपि तद्विषये इष्टसाधनत्वानुमितिद्वारैवोक्तयुक्त्या प्रवर्तकत्वं वाच्यम् । तच्च वैदिकविधिस्थले न संभवति । तस्यैव महाभूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद इति श्रुत्युपष्टम्भेन निःश्वसितवद्वेदे तैर्जन्यत्वाङ्गीकारेण यथार्थज्ञानवदुच्चरितत्वरूपाप्तोक्तत्वरूपविशेषणवैकल्येनोक्तानुमानाप्रवृत्तेः । एवं सविषयत्वमप्यात्मविशेषगुणव्यतिरेकिण्यास्तस्याः सर्वतन्त्रविरुद्धम । न च प्रेरणैव प्रवृत्तिहेतुः । स्वतन्त्रप्रवृत्तौ व्यभिचारात् । सर्व इमे स्वभूत्यर्थं प्रवर्तन्ते इति समीहितसाधनताज्ञानप्रवर्तकताप्रतिपादकहेतुमतिचेति सूत्रभाष्यविरोधाच्च । कः प्रयोज्यस्य प्रेरणयाऽर्थो यदभिप्रायेषु सज्जत इति तत्सूत्रस्थभाष्येण णिजर्थ-

प्रेरणाया अपि स्वातन्त्र्येणाप्रवर्तकत्वबोधनाच्चेति वैदिकविधेः प्रेरणार्थकत्वासंभवेन प्रवर्तकत्वानुपपत्त्येष्टसाधनत्वार्थकत्वमेवाङ्गीकरणीयम्। एवं च लौकिकविधेरपि तच्छक्त्यैव प्रवर्तकत्वोपपत्तौ तदर्थोऽपि साभिप्राय एव। तत्र विध्यर्थ इति कल्पस्तु वक्ष्यमाणाचार्यमतनिरासेनैव निरस्तः। विधिः प्रेरणमिति भाष्यं तु प्रेर्यते प्रवर्त्यतेऽनयेति व्युत्पत्त्या प्रवर्तकज्ञानविषयेष्टसाधनत्वपरम्। ज्ञानस्य तद्विषयकत्वेनैव प्रवर्तकत्वात्। यदपि तदुपष्टम्भकतया पृच्छतु मां भवानिति भाष्योपन्यसनं, तदपि नास्माकं प्रतिकूलम्। यतस्तेन प्रवर्तकज्ञानजनकत्वेन प्रवर्तनापदव्यपदेश्याया लोडाद्यन्तशब्दप्रयोगरूपायाः प्रेरणाया णिजर्थत्वं प्रतिपाद्यते न तु विध्यर्थत्वमपि। अर्थभेदस्य दर्शितत्वात्। अकर्तृत्वादित्यनेनापि गमयतीत्यादेर्गच्छन्तं प्रेरयतीतिवत् पृच्छतीत्यस्य पृच्छन्तं प्रेरयतीति विग्रहस्यादर्शनेन कर्त्रसंबद्धधात्वर्थविषयकप्रवृत्तिजनकज्ञानानुकूलायास्तस्या णिजर्थत्वाभावप्रतिपादनात् तद्विरोधाभावात्। अथापीत्याद्युक्तिस्तु एकदेशिनः। विध्यर्थप्रत्ययप्रकृत्यर्थस्य स्वाभाव्येन भाविष्यत्त्वेव प्रतीतेः। तदानीं प्रयोज्यस्य निर्व्यापारत्वेन कर्तृत्वासंभवादेव लोटा प्रेषणस्य धात्वर्थविशेषणतयैव भानात् तद्विशेष्यतया प्रेरणविवक्षायां णिचो दुर्वारत्वं तु लोडन्ताद्धात्वर्थविशेष्यतया प्रेरणायाः प्रतीतेः पूर्वपक्षस्यैव निर्दलत्वापत्तेः। इदं ते इष्टसाधनमित्याद्युक्तिस्तु सर्वथेष्टसाधनत्वबोधनपरैव। इष्टसाधनत्वस्य प्रवर्तनात्वेन विधिवाच्यत्वमिति पक्षे पौनरुक्त्यसंभवात् नैयायिकमते कृत्यात्मकव्यापारस्य पच्याद्यर्थत्वाभावेन तन्मते इष्टसाधनत्वेनेष्टसाधनत्वस्य विध्यर्थत्वे पौनरुक्त्यापादनानवकाशाच्च। वस्तुतस्तु भाष्ये बहुषु स्थलेषु प्रेरणाया विध्यर्थकत्वकथनात् प्रामाण्याल्लिडाद्यन्तशब्दप्रयोगरूपाया एव तस्या विध्यर्थत्वमुचितम्। श्रुतेस्तु "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" इत्यादिश्रुतिबलात् पौरुषेयत्वमभ्युपेत्यैकरूपेणैव लोकवेदयोस्तद्विषये इष्टसाधनत्वानुमानेन विधेः प्रवर्तकत्वं निर्वाह्यमिति सर्वं चतुरस्रम्॥

## ( भूषणसारमतपर्यालोचनम् )

अत्र हि प्रथमतो भूषणसारानुसारेण प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वं प्रवर्तनात्वं तच्चेष्टसाधनत्वमिति सिद्धान्तसमर्थनार्थं दर्पणे मीमांसामतं पूर्वपक्षीकृत्योपर्युक्तं सर्वं समार्थितम्। तथापि हेतुमतिचेतिसूत्रस्थमहाभाष्यसमर्थनमन्यत्र च भाष्योक्तिसमर्थनं नेष्टसाधनत्वस्य विध्यर्थत्वाङ्गीकारेण भवतीत्यन्ततो गत्वा वस्तुतस्तु इति ग्रन्थेन मीमांसामतमेव भाष्यकारमतमिति स्पष्टमेव प्रतिपाद्यते। केवलं वेदे पुरुषप्रवेशाभावात् याऽनुपपत्तिः, सा च पौरुषेयत्वमभ्युपेत्य परिहृता। अत्र पौरुषेयत्वाभावेऽपि प्रेरणायाः सविषयकत्वं शब्दव्यापारस्वरूपत्वं च यथा संभवति तथा दर्पणादिशावत्र प्रतिपादयामः। तद्यथा—

## ( विध्यर्थ मीमांसामतम् )

परे तु लिङादिश्रवणेऽयं मा प्रेरयतीति नियमेन प्रतीतेरभिधानामकः प्रेरणापरपर्यायो व्यापारो लिङादिवाच्यः। सा च लिङ्गसंख्यानन्वयित्वाद्व्यापारपदेन प्रवर्तकनिष्ठत्वात् प्रवर्तनापदेन च व्यवह्रियते प्रेरणात्वेन तस्याः सविषयकत्वमपि। शक्यतावच्छेदकं च प्रेर्यादिधात्वर्थतावच्छेदकतया सिद्धं प्रेरणात्वमखण्डोपाधिः। स च व्यापारः संभवाल्लोके प्रवर्तकपुरुषनिष्ठोऽभिप्रायविशेष एव। तत्प्रवर्तकत्वं तु लिङाद्युच्चारयितृत्वम्। वेदे तु प्रयोक्तुरसंभवात् लिङाद्यन्तशब्दस्वरूप एव। तत्प्रवर्तकत्वं तु तत्त्वे सति स्वतन्त्रत्वम्। राजादिप्रेरितपदातेर्लिङाद्युच्चारयितृत्वेऽपि प्रवर्तकत्वेनाव्यवह्रियमाणत्वात् स्वतन्त्रेति। अद्विष्टयाऽऽप्तोक्तया च तया स्वविषये इष्टसाधनत्वानुमानम्। ततश्च प्रयोज्यप्रवृत्तिः। शत्रूक्ताद्विषं भुङ्क्ष्वेत्यतो विषभोजने इष्टसाधनतानवगतेराप्तोक्तयेति। आप्तोक्तयाऽपि विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्था इत्यादिकयाऽपि तस्मिन्निष्टसाधनत्वाननुमानाददिष्टयेति। तत्र विषभोजनविषयकाभिप्रायस्य तदीयद्वेषविशिष्टत्वान्न व्यभिचारः। भवतु वा लिङादिसमभिव्याहारे व्यापारान्तरस्याननुभवात् सर्वत्र लिङाद्यन्तशब्दस्वरूपैव सा। अत एव हेतुमति चेति सूत्रे भाष्ये लिङादिशब्दप्रयोजककर्तृव्यापारस्य सत्त्वादित्याशयेन पृच्छतु मां भवानित्यत्र णिच् कस्मान्न भवतीति प्रश्ने अकर्तृत्वादित्युत्तरम्। सक्रियप्रेरणायां णिच्, निष्क्रियप्रेरणायां लोडादि। तत्प्रयोजक इत्यत्र तत्पदेन व्यापाराविष्टः कर्तोच्यत इति तद्भावः। अथापि कथंचित् कर्ता स्यादेवमपि न दोषः। लोटोक्तत्वात्प्रेषणस्य णिच् न भविष्यतीत्युक्तम्। तत आहत्यैव प्रेरणाया विध्यर्थत्वं लभ्यते। विधिनिमन्त्रणेति सूत्रभाष्येऽपि विधिः प्रेरणं, इत्युक्तेश्च। तस्मान्नेष्टसाधनत्वादि विध्यर्थः। किंचेदं ते इष्टसाधनं तस्मात्त्वं कुरु इति स्वारसिकव्यवहारादपि न तस्य विध्यर्थत्वम्। पौनरुक्त्यापत्तेः। पौनरुक्त्यस्य सर्वथेष्टसाधनत्वप्रबोधनतात्पर्यकत्वेऽपि तस्मादित्यस्यानन्वयापत्तेश्चेत्याहुः" इति।

## ( उक्तार्थे सिद्धान्तचन्द्रिकोपष्टम्भः। )

इदं च सर्वं भाट्टमतमेव। एवं च भाट्टमतवैयाकरणमतयोरेकरूपत्वाच्छब्दानुशासनस्य सम्यक्तया परिग्रहाच्चेदमेव युक्तम्। नेष्टसाधनत्वं वाऽऽप्ताभिप्रायो वा विध्यर्थ इति मतान्तरम्। शब्दार्थनिर्णये शब्दानुशासनशास्त्रस्य विशेषतः प्रामाण्यात्। इदमेव भाट्टमतं सुचरितमिश्रैरपि प्रतिपादितम्। तदुक्तं शास्त्रदीपिकाटीकायां सिद्धान्तचन्द्रिकायाम्—एवं हि वार्तिककृता भावार्थाधिकरणे उक्तम्—" लिङादिशब्दानां पुरुषं प्रति प्रयोजकव्यापारोऽभिधात्मिका भावना विधिः" इत्यादिना वार्तिकानुसारेण विधिस्वरूपं निरूपितं सुचरितमिश्रैस्तदेवास्माभिः संक्षिप्यते। द्वे किल भावने मीमांसकाः संगिरन्ते, शब्दात्मिका, अर्थात्मिका चेति। तत्रार्थात्मिका स्वर्गादिफलकर्मिका

प्रेरणाया अपि स्वातन्त्र्येणाप्रवर्तकत्वबोधनाच्चेति वैदिकविधेः प्रेरणार्थकत्वासंभवेन प्रवर्तकत्वानुपपत्त्येष्टसाधनत्वार्थकत्वमेवाङ्गीकरणीयम्। एवं च लौकिकविधेरपि तच्छक्त्यैव प्रवर्तकत्वोपपत्तौ तदर्थोऽपि साभिप्राय एव। तत्र विध्यर्थ इति कल्पस्तु वक्ष्यमाणाचार्यमतनिरासेनैव निरस्तः। विधिः प्रेरणमिति भाष्यं तु प्रेर्यते प्रवर्त्यतेऽनयेति व्युत्पत्त्या प्रवर्तकज्ञानविषयेष्टसाधनत्वपरम्। ज्ञानस्य तद्विषयकत्वेनैव प्रवर्तकत्वात्। यदपि तदुपष्टम्भकतया पृच्छतु मा भवानिति भाष्योपन्यसनं, तदपि नास्माकं प्रतिकूलम्। यतस्तेन प्रवर्तकज्ञानजनकत्वेन प्रवर्तनापदव्यपदेश्याया लोडाद्यन्तशब्दप्रयोगरूपायाः प्रेरणाया णिजर्थत्वं प्रतिपाद्यते न तु विध्यर्थत्वमपि। अर्थभेदस्य दर्शितत्वात्। अकर्तृत्वादित्यनेनापि गमयतीत्यादेर्गच्छन्तं प्रेरयतीतिवत् पृच्छतीत्यस्य पृच्छन्तं प्रेरयतीति विग्रहस्यादर्शनेन कर्त्रसंबद्धधात्वर्थविषयकप्रवृत्तिजनकज्ञानानुकूलायास्तस्या णिजर्थत्वाभावप्रतिपादनात् तद्विरोधाभावात्। अथापीत्याद्युक्तिस्तु एकदेशिनः। विध्यर्थप्रत्ययप्रकृत्यर्थस्य स्वाभाव्येन भविष्यत्त्वेनैव प्रतीतेः। तदानीं प्रयोज्यस्य निर्व्यापारत्वेन कर्तृत्वासंभवादेव लोटा प्रेषणस्य धात्वर्थविशेषणतयैव भानात् तद्विशेष्यतया प्रेरणविवक्षायां णिचो दुर्वारत्वं तु लोटन्ताद्धात्वर्थविशेष्यतया प्रेरणायाः प्रतीतेः पूर्वपक्षस्यैव निर्दलत्वापत्तेः। इदं ते इष्टसाधनमित्याद्युक्तिस्तु सर्वथेष्टसाधनत्वबोधनपरैव। इष्टसाधनत्वस्य प्रवर्तनात्वेन विधिवाच्यत्वमिति पक्षे पौनरुक्त्यसंभवात् नैयायिकमते कृत्यात्मकव्यापारस्य पच्याद्यर्थत्वाभावेन तन्मते इष्टसाधनत्वेनेष्टसाधनत्वस्य विध्यर्थत्वे पौनरुक्त्यापादनानवकाशाच्च। वस्तुतस्तु भाष्ये बहुषु स्थलेषु प्रेरणाया विध्यर्थकत्वकथनात् प्रामाण्याल्लिडाद्यन्तशब्दप्रयोगरूपाया एव तस्या विध्यर्थत्वमुचितम्। श्रुतेस्तु "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" इत्यादिश्रुतिबलात् पौरुषेयत्वमभ्युपेत्यैकरूपेणैव लोकवेदयोस्तद्विषये इष्टसाधनत्वानुमानेन विधेः प्रवर्तकत्वं निर्वाह्यमिति सर्वं चतुरस्रम्॥

## ( भूषणसारमतपर्यालोचनम् )

अत्र हि प्रथमतो भूषणसारानुसारेण प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वं प्रवर्तनात्वं तच्चेष्टसाधनत्वमिति सिद्धान्तसमर्थनार्थं दर्पणे मीमांसामत पूर्वपक्षीकृत्योपर्युक्तं सर्वं समर्थितम्। तथापि हेतुमतिचेतिसूत्रस्थमहाभाष्यसमर्थनमन्यत्र च भाष्योक्तिसमर्थनं नेष्टसाधनत्वस्य विध्यर्थत्वाङ्गीकारेण भवतीत्यन्ततो गत्वा वस्तुतस्तु इति ग्रन्थेन मीमांसामतमेव भाष्यकारमतमिति स्पष्टमेव प्रतिपाद्यते। केवल वेदे पुरुषप्रवेशाभावात् याऽनुपपत्तिः, सा च पौरुषेयत्वमभ्युपेत्य परिहृता। अत्र पौरुषेयत्वाभावेऽपि प्रेरणायाः सविषयकत्वं शब्दव्यापारस्वरूपत्वं च यथा संभवति तथा दर्पणदिशात्र प्रतिपादयामः। तद्यथा—

## ( विध्यर्थे मीमांसामतम् )

परे तु लिङादिश्रवणेऽयं मा प्रेरयतीति नियमेन प्रतीतेरभिधानात्मकः प्रेरणापरपर्यायो व्यापारो लिङादिवाच्यः । सा च लिङ्गसंख्यानन्वयित्वाद्व्यापारपदेन प्रवर्तकनिष्ठत्वात् प्रवर्तनापदेन च व्यवह्रियते प्रेरणात्वेन तस्याः सविषयकत्वमपि । शक्यतावच्छेदकं च प्रेर्यादिधात्वर्थतावच्छेदकतया सिद्धं प्रेरणात्वमखण्डोपाधिः । स च व्यापारः संभवाल्लोके प्रवर्तकपुरुषनिष्ठोऽभिप्रायविशेष एव । तत्प्रवर्तकत्वं तु लिङाद्युच्चारयितृत्वम् । वेदे तु प्रयोक्तुरसंभवात् लिङाद्यन्तशब्दस्वरूप एव । तत्प्रवर्तकत्वं तु तत्त्वे सति स्वतन्त्रत्वम् । राजादिप्रेरितपदातेर्लिङाद्युच्चारयितृत्वेऽपि प्रवर्तकत्वेनाव्यवह्रियमाणत्वात् स्वतन्त्रेति । अद्विष्टयाऽऽप्तोक्तया च तया स्वविषये इष्टसाधनत्वानुमानम् । ततश्च प्रयोज्यप्रवृत्तिः । शत्रूक्ताद्विषं भुङ्क्ष्वेत्यतो विषभोजने इष्टसाधनतानवगतेराप्तोक्तयेति । आप्तोक्तयाऽपि विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्था इत्यादिकयाऽपि तस्मिन्निष्टसाधनत्वाननुमानाद‌द्विष्टयेति । तत्र विषभोजनविषयकाभिप्रायस्य तदीयद्वेषविशिष्टत्वान्न व्यभिचारः । भवतु वा लिङादिसमभिव्याहारे व्यापारान्तरस्याननुभवात् सर्वत्र लिङाद्यन्तशब्दस्वरूपैव सा । अत एव हेतुमति चेति सूत्रे भाष्ये लिङादिशब्दप्रयोजककर्तृव्यापारस्य सत्त्वादित्याशयेन पृच्छतु मां भवानित्यत्र णिच् कस्मान्न भवतीति प्रश्ने अकर्तृत्वादित्युत्तरम्। सक्रियप्रेरणायां णिच्, निष्क्रियप्रेरणायां लोडादि । तत्प्रयोजक इत्यत्र तत्पदेन व्यापाराविष्टः कर्तोच्यत इति तद्भावः । अथापि कथंचित् कर्ता स्यादेवमपि न दोषः । लोटोक्तत्वात्प्रेषणस्य णिच् न भविष्यतीत्युक्तम् । तत आहत्यैव प्रेरणाया विध्यर्थत्वं लभ्यते । विधिनिमन्त्रणेति सूत्रभाष्येऽपि विधिः प्रेरणं, इत्युक्तेश्च । तस्मान्नेष्टसाधनत्वादि विध्यर्थः । किंचेदं ते इष्टसाधनं तस्मात्त्वं कुरु इति स्वारसिकव्यवहारादपि न तस्य विध्यर्थत्वम् । पौनरुक्त्यापत्तेः । पौनरुक्त्यस्य सर्वथेष्टसाधनत्वबोधनतात्पर्यकत्वेऽपि तस्मादित्यस्यानन्वयापत्तेश्चेत्याहुः " इति ।

## ( उक्तार्थे सिद्धान्तचन्द्रिकोपष्टम्भः । )

इदं च सर्वं भाट्टमतमेव । एवं च भाट्टमतवैयाकरणमतयोरेकरूपत्वाच्छब्दानुशासनस्य सम्यक्तया परिग्रहाच्चेदमेव युक्तम् । नेष्टसाधनत्वं वाऽऽप्ताभिप्रायो वा विध्यर्थ इति मतान्तरम् । शब्दार्थनिर्णये शब्दानुशासनशास्त्रस्य विशेषतः प्रामाण्यात् । इदमेव भाट्टमतं सुचरितमिश्रैरपि प्रतिपादितम् । तदुक्तं शास्त्रदीपिकाटीकायां सिद्धान्तचन्द्रिकायाम्—एवं हि वार्तिककृता भावार्थाधिकरणे उक्तम्—" लिङादिशब्दानां पुरुषं प्रति प्रयोजकव्यापारोऽभिधात्मिका भावना विधिः " इत्यादिना वार्तिकानुसारेण विधिस्वरूपं निरूपितं सुचरितमिश्रैस्तदेवास्माभिः संक्षिप्यते । द्वे किल भावने मीमांसकाः संगिरन्ते, शब्दात्मिका, अर्थात्मिका चेति । तत्रार्थात्मिका स्वर्गादिफलकर्मिका

यागादिधात्वर्थकरणिका स्ववाक्यप्रकरणान्यप्रकरणानारभ्यवादस्मृतिलोकाचारप्राप्ततत्तदितिकर्तव्यतावती तत्र तत्र सिध्यतीति। शब्दात्मिका तु लिङादिशब्दानां प्रयोजकानां प्रयोज्यपुरुषकर्मिकाऽभिधासंबन्धज्ञानकरणिकाऽर्थवादोदितप्राशस्त्येतिकर्तव्यतावतीति विवेकः। शब्दव्यापाररूपाऽप्यभिधा शब्दात्मिका व्यापारतद्वतोरनतिरेकात्। द्रव्यमेव हि पूर्वावस्थातः प्रच्युतं परावस्थामप्राप्तं पूर्वापरीभूतं व्यापारशब्दवाच्यम्। भावना हि लिङादिभिरभिधीयमाना न स्वरूपमात्रेण वर्तमानापदेशवदभिधीयते, किं तर्हि कुर्यादिति प्रवृत्तिविषयतया। अतो लिङादीनामभिधा पुरुषकर्मिकेत्युच्यते। उक्तं च— पुरुषं हि वदन्ति भावयेदिति। लिङादिश्रवणानन्तरं प्रवृत्तिहेतुप्रत्ययः सर्वस्य भवतीत्यविवादम्। प्रवृत्तिहेतुस्वरूपे तु विप्रतिपत्तिः। तत्र संभावितानामन्येषां प्रवृत्तिव्यभिचारित्वात् प्रमाणान्तरागोचरे च प्रवृत्तिहेतौ व्युत्पत्त्यसंभवादभिधेयप्रत्ययबलोन्नीयमानस्वरूपलिङादीनामभिधानमेव प्रवृत्तिहेतुरिति युक्तम्। स एव प्रवर्तना पुरुषप्रवर्तकत्वात्। लिङादिव्यापारोऽपि सन्नभिधेयप्रत्ययहेतुत्वादभिधेत्युच्यते यतः प्रवृत्तिदर्शनम्। तद्व्यापारः प्रवर्तना प्रवृत्तिहेतुत्वात्। न च शब्दान्तरेभ्यः प्रवृत्तिरुपलभ्यते, अतो न तदभिधासु प्रवर्तनात्वप्रसङ्गः। यत्तु कार्योन्नेयत्वादनभिधानमुक्तं तन्न। भावनावगतिरूपस्य कार्यस्य वर्तमानापदेशेष्वपि प्रसङ्गात्। 'प्रवर्तेऽहं' इति ज्ञानं तु प्रवर्तनाज्ञानोत्तरकालीनं न तदुन्नायकम्। अतोऽनन्यप्रमाणकत्वादुपपन्नमभिधेयत्वमभिधायाः। नापि व्युत्पत्तिविरहः। प्रवृत्तिहेतुत्वेनैवार्थापत्तितस्तदवगमात्। तथाहि—यत्र तावल्लिङादिभ्यः प्रवृत्तिरुपलभ्यते, तत्र मया प्रवर्तितव्यमित्यन्तः संकल्पात्मा प्रवृत्तिविशेष उन्नीयते। अप्रवर्तमाना अपि लिङ्श्राविणः प्रवर्त्येति मामयमाहेति वक्तारं निर्दिशन्ति। तेनावगम्यते प्रवृत्तिहेतुरभिहितो लिङा। स च नर्ते व्यापारात्सिध्यति। एतदेवास्यानन्यप्रमाणकत्वं यत्प्रवर्तकत्वेन शब्दादवगम्यते। न तु प्रवर्तनास्वरूपमेवान्यतो नावगतम्, येन व्युत्पत्तिविरहश्चोद्येत। न चाभिधानादभिधीयत इति मन्तव्यम्। अभिधाशब्दवदुपपत्तेः। यदेव हि शब्दश्रवणानन्तरं बुद्धौ विपरिवर्तते, तदभिधेयम्। उक्तं च—लिङादिभ्यः प्रवृत्तिहेतुरवगम्यते। न च लिङादीनामभिधाव्यापारादन्यः प्रवृत्तिहेतुः शक्यो निरूपयितुमिति। नाप्यनवस्था तदभिधानस्य शब्दादप्रतीतेः प्रवर्तनामात्रस्यैव प्रतीतेः। नापि लिङादिस्वरूपाभिधानापत्तिः स्वयमेव तद्व्यापारस्य वैलक्षण्यात्। अतो लिङादीनामभिधा दर्शिता सोऽयं विधिः—आह च— "अभिधां भावनामाहुरन्यामेव लिङादयः" इति तदनेन रूपेण विना सर्वदा भावना प्रवृत्तिविषयतयाऽवगता फलतया निश्चीयते। तथावगता चानुष्ठीयते। पश्यता च विधिशक्तिमवसीदन्तीमुत्तमभाति। सागरं तरेदित्यादौ तु सत्यपि लिङ्श्रवणे निर्वाहकाभावात् प्रवर्तनाया अभावान्न निर्वर्तते। तदभावप्रामाण्यवाक्यत्वाद्वेदे त्वपौरुषेयत्वात् पुरुषदोषाशङ्काभावादुपपन्नम्। विधौ तु तमाश्रित्येति।

सुचरितमिश्रनिरूपितविधितत्त्वमिदं मयाऽत्र संक्षिप्तम् ।
वार्तिकराणकटीकाविरोधपरिहारस्तु संचिन्त्यः ॥ इति ।

## ( आचार्यमतपर्यालोचनम् )

एतेनाऽऽप्ताभिप्रायो विध्यर्थ इत्युदयनाचार्यादिमतमपि निरस्तम् । अभिप्रायस्य चेतनधर्मत्वेन लोके तथात्वसंभवेऽपि अपौरुषेये वेदे तदसंभवात् । यदि चाभिप्रायस्तात्पर्यादनर्थान्तरं, तर्हि तु वेदस्यापि तात्पर्यवत्तासंभवेन सोऽपि पक्षः समर्थनीयः स्यादेव । परंतु तात्पर्यस्य शब्दनिष्ठवृत्तिरूपत्वेनाभिधायाश्च शब्दनिष्ठप्रवर्तकव्यापाररूपत्वेन तयोर्भेदः वृत्तेस्तदतिरिक्तशब्दार्थत्वासंभवश्च ।

यत्तु—कर्तव्यत्वेनेच्छैव विध्यर्थः । तया चेष्टसाधनत्वानुमानम् । तद्यथा स्वर्गकामस्य मम याग इष्टसाधनं कर्तव्यत्वेनाऽऽप्तोक्तलिङ्बोध्येच्छाविषयत्वात् मत्पित्रेष्यमाणमद्भोजनवदिति । विषभोजनादेरपि कस्यचित्कृतिसाध्यतया कर्तव्यत्वेनेश्वररूपाप्तेच्छाविषयत्वेन तत्रेष्टसाधनत्वरूपसाध्याभावाद्व्यभिचारवारणाय लिङ्पदबोध्येति । आप्तस्तु वैदिकस्थले ईश्वर एव । तस्मिन्विधिरेव तावत् कुमार्या गर्भ इव पुंयोगे मानम्, इत्याहुः केचन । तदपि न, कृत्यसाध्यनिष्फलानिष्टे प्रवृत्तिवारणायेष्टसाधनतादिज्ञानहेतुताया आवश्यकत्वेन तद्विषयेष्टसाधनत्वादीनां विध्यर्थत्वोपगमेनैव निर्वाहे आप्ताभिप्रायस्य विध्यर्थत्वे मानाभावात् । न हीष्टसाधनत्वज्ञानमन्तरेण आप्तेच्छाविषयज्ञानमात्रात् प्रवृत्तिः कस्यापि दृश्यते । स्वतन्त्रप्रवृत्तौ व्यभिचारेणाऽऽप्ताभिप्रायज्ञानस्य प्रवर्तकत्वासंभवाच्चेत्यलम् ।

## ( विध्यर्थपर्यालोचननिष्कर्षः )

इत्थं लिङर्थे पक्षद्वयं प्रवर्तते । तत्र स्वतन्त्रप्रवृत्तिस्थलानुसारेण प्रवर्तकत्वमिष्टसाधनताज्ञानस्यैवाङ्गीकर्तव्यं लिङ्स्थलेऽप्यनुमानात् । अन्यथा लिङि प्रवर्तकत्वमभिधायाः । लोके चेष्टसाधनताज्ञानस्येत्यननुगमः स्यादित्यनुगम एवैतत्पक्षसमर्थकः । अभिधाया लिङर्थत्वमिति द्वितीयपक्षे तु शब्दार्थनिर्णये केवलं स्वतन्त्रलोकव्यवहार एव न प्रमाणम् । किंतु तच्छब्दविषयकलोकव्यवहारः । तच्च शब्दशास्त्रान्निर्णीयत इत्यतो महाभाष्यकारपतञ्जलिर्भगवान् यदि प्रेरणार्थं ब्रूते लिङः, तर्हि स एव तदर्थ इत्येवाभ्युपगन्तव्यम् । स्वतन्त्रप्रवृत्तौ स्यान्नामेष्टसाधनत्वज्ञानस्य प्रवर्तकत्वम् । नैतावता तदेवात्राभ्युपगन्तव्यम् । तथा सति लोके यवादिशब्दानां म्लेच्छरूढ्यापि प्रियङ्ग्वाद्यर्थता स्यात् । न च तथा । किंत्वार्यरूढेः शास्त्रानुगृहीतत्वेन बलवत्त्वात्तस्या एवात्र ग्रहणम् । एवमेव लिङ्श्रवणेऽयं मा प्रेरयतीति शास्त्रसंस्कारसंस्कृतानां प्रेरणार्थे स्पष्टतया भासमाने तदतिरिक्तशब्दशास्त्राननुगृहीतप्राकृतबोधमवलम्ब्य शब्दार्थवर्णनमिदमितरेषां न सांप्रतम् ।

एवं चाभिधाया लिङर्थत्वे शब्दशास्त्रानुग्रहात् बोधस्य च तथैवोपजायमानत्वात्सिद्धत्वाच्च वेदस्याभिधाभिधेयकत्वमेव लिङः युज्यते इत्यलम् ।

(इष्टसाधनताबोधस्यानुमानगम्यत्वनिरासः)

यत्त्विष्टसाधनत्वबोधस्त्वनुमानात्पश्चाद्भवतीत्युक्तम् । तत्र ब्रूमः । अभिप्रायविषयत्वं प्रथमतो ज्ञायते चेत् लिङ्पदादेव । तत्राभिप्रायस्य विषयांशे नित्यसाकाङ्क्षत्वेन विषयोऽपि यागो वाक्यार्थबोधविषयोऽभ्युपेयः । नो चेत्पुत्रोऽहमित्यत्रापि वाक्यत्वं स्यात् । न हि साकाङ्क्षत्वे वाक्यत्वम् । " अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेत् विभागे स्यात् " इति भगवतो जैमिनेर्वाक्यलक्षणम् । अत्र च पूर्णो बोध एव वाक्यत्वनिदर्शक इति सिध्यति । नो चेदद्य पुत्रस्ते इति आख्यातरहितस्याप्याकाङ्क्षादिमत्पदकदम्बकस्य वाक्यत्वं स्यात् । एवं च पुत्रोऽहमित्यादाविवाभिप्रायस्यापि विषयांशे नित्यसाकाङ्क्षत्वेन प्रकृत्युपात्तयागस्य संबन्धो वक्तव्यः । सोऽपि क्रियात्वेन कर्तृसापेक्षत्वात्स्वर्गकामपदेन संबद्धव्यः । एवं च वाक्यसिद्धौ स्वर्गकामपदादिष्यमाणस्वर्गस्य यागेन संबन्धोऽपि बोधितो भवति । तं विना वाक्यार्थस्यापरिपूर्णत्वात् । न हि स्वर्गकामकर्तृको याग आप्ताभिप्रायविषय इति वाक्यार्थेन कस्यापि श्रोतुराकाङ्क्षा निवृत्ता भवेत् । अन्ततो गत्वा स्वर्गसाधनो यागः स्वर्गकामकर्तृक इत्याप्ताभिप्राय इत्येव वाक्यार्थोऽभ्युपेयः । अभ्युपेते च तस्मिन् साधनत्वस्यापि संसर्गमर्यादयैव भानात् वाक्यार्थत्वमेवेति साधनत्वमपि शाब्दप्रमाणविषयमेव नानुमानगम्यमिति वृथाऽयं प्रयासस्तर्ककर्कशानाम् । एतादृशानुमानेनैव भावनाया अपि तर्कगम्यत्वं प्रतिपादयन्ति केचनापौरुषेयत्वनिबन्धलेखकाः । तदप्येतेन निरस्तम् । तत्सिद्धं प्रेरणापरपर्यायाया अभिधाया लिङर्थत्वमिति । आख्यातार्थत्व स्वार्थीभावनायाः । तस्याश्च स्वनिष्ठविषयताकत्वरूपेण प्रेरणायामन्वयः । प्रेरणाया प्रेर्यांशे नित्यसाकाङ्क्षत्वात्तदेव विषयस्य विषयत्वं यत्स्वेन रूपेण निरूपणीयीकरणम् । विशृण्वन्ति निबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्ति ते विषया इति वाचस्पतिमिश्रोक्तेः । नान्यदपूर्वं विषयत्वं येन कल्पनीयं स्यात् । पुत्रोऽपि पित्रर्थे नित्यसाकाङ्क्ष इति तत्रापि पितुर्जनकताख्यविषयत्वमस्त्येव । विषयताया रूढिस्तु आत्मविशेषगुणेषु ज्ञानेच्छादिष्विति त्वन्यत् । एतादृशविषयतासंबन्धमनादृत्येष्टसाधनत्वस्य विध्यर्थत्वाङ्गीकारः, आर्थीभावनायाः स्वज्ञानाधीनानुमितिजन्यत्वरूपः परम्परासंबन्धः शाब्दीभावनया, उभयविधभावनाया अनुमानगम्यत्वं चेत्यादिकं केवलतर्कप्रदर्शनमेवेति सुधीभिर्मन्तव्यम् ।

(वाक्यार्थबोधोपपत्तिः)

ननु क्रियायाः यागांशे नित्यसाकाङ्क्षत्वात्कस्य कस्मिन्कथं वा प्रेरणेत्याकाङ्क्षायां पुरुषप्रवृत्त्यनुकूलभावनायां कामनायां फलोद्देशेन यागस्य बोधकत्वेन प्रेरणा इत्येवाऽऽगच्छत्युपरप-

धम् । एवं च कामिनं कामनिर्देशपूर्वकमार्थीभावनायां यज्ञादिकर्मकरणिकायां प्राशस्त्यबोधादिद्वारा प्रेरयेदित्येव शाब्दभावनाबोधः । आर्थीभावनायास्तु यागेनेष्टं भावयेदिति सर्वविदितमिदम् । तत्सिद्धं लिङर्थो भावनेति ।

## ( निषेधस्य निवर्तनार्थत्वम् )

एवं निषेधस्थलेऽपि निवर्तनैव लिङर्थो नञा साहचर्यात् । तथाहि—त्रिधा हि नञो वृत्तिः, पर्युदासाभावप्रतिषेधैः । तद्यत्र नाम्ना संयुज्यते अब्राह्मण इति, ब्राह्मणवस्त्वन्तरपर्युदस्तं क्षत्रियाख्यवस्त्वेव नञा प्रतिपाद्यते । तथा नेक्षेतेत्यादौ धात्वर्थयोगेऽपि ईक्षणपर्युदस्तमनीक्षणसंकल्पाख्यवस्त्वन्तरमेवोच्यते । तच्च वस्त्वन्तरपर्युदस्तत्वं वस्त्वन्तरस्यानुगुणमेव । सर्ववस्तूनामितरेतराभावात्मकत्वात् । यत्राप्याख्यातसंयोगे नास्ति घटो नाऽऽसीन्न भविष्यतीति वा निवृत्तिः प्रतीयते । तत्रापि न वस्त्वभावो नञा क्रियते, किंत्वज्ञानसंशयविपर्ययमात्रनिवारणम् ।

यथाऽऽहुः—नामधात्वर्थयोगी च निषेधोऽन्यार्थभाग्भवेत् ।
तत्र वस्त्वन्तरैर्युक्तं वस्त्वेवानुगुणं च यत् ॥
आख्यातप्रत्ययैर्योगे निवृत्त्यर्थः प्रतीयते ।
तत्र चाज्ञातसंदिग्धविपरीतार्थवारणम् ॥ इति ।

एवं च विधिना नञ्योगे विध्यर्थार्थीभावनारूपप्रवृत्तिनिवारणमेव निवर्तनापरपर्यायं निषेधेन बोध्यते इति स्पष्टमेव । एवं च न कलञ्जं भक्षयेदित्यादिनिषेधस्थले भक्षयेदिति विधिना कलञ्जभक्षणमिष्टसाधनमिति बोधमूलकप्रवृत्तिर्निषेधनीया । सा च कलञ्जभक्षणमनिष्टसाधनमिति बोधद्वारैवेति अनिष्टसाधनत्वं निषेधार्थ इति सिध्यति । प्रेरणावन्निवर्तनापि निषेधयुक्तनञर्थो व्यापाररूप इत्यभ्युपगमेऽपि प्रेरणाविपरीतनिवर्तनार्थत्वमेव नञः सिध्यति । निषेधश्रवणेऽयं मां निवर्तयतीति प्रतीतेः । एवं चाप्राशस्त्यादिबोधद्वारा नञ्युक्तलिङा निवृत्तिं भावयेदिति शाब्दीनिवर्तनाविषयको बोधः । आर्थीभावनायां तु अभक्षणेनेष्टं भावयेदिति । अभक्षणं च भक्षणप्रवृत्तिप्रतिरोधको व्यापारविशेषः । नञो विरोधार्थकत्वात् । तत्र कथंभावाकाङ्क्षायामिन्द्रियनिग्रहादिनेति वाक्यार्थः । अर्थादेव भक्षणस्येष्टसाधनत्वे निवृत्ते भक्षणमनिष्टसाधनमिति पर्यवस्यतीति निवर्तनैव निषेधार्थः, नानिष्टसाधनत्वमिति दिक् । अत्र च स्पष्टप्रतिपत्त्यर्थं भाट्टरहस्यमेवोदाहरामः ।

तद्यथा—तदयमत्र क्रमः=प्रथमं लिङादिपदाद्व्यापारत्वेन सामान्यरूपेणैव व्यापारोपस्थितिः । पश्चादाख्यातोपस्थितकृतौ तस्य स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्यत्वसंसर्गेण तत्त्वेनानुपस्थितेनैवान्वयः । शाब्दबोधश्च व्यापारवती यागादिकृति''रिति । न च लिङर्थविशेष्यक एव शाब्दबोध इति भ्रमितव्यम् । " भावप्रधानमाख्यात " मिति स्मृत्या लकारार्थप्रकारकशाब्दबोधत्वावच्छिन्नं

कत्वान्न भवन्मते यागादावपीष्टसाधनत्वादिसिद्धिः, ज्ञानस्यास्मन्मते स्वतःप्रमाणत्वेन दोषाद्यभावे प्रमात्वस्यैव सिद्धेः । सल्लिङ्गकपरामर्शस्य भ्रान्तानुमित्यजनकत्वाच्च ।

अतः सिद्धं शक्यतावच्छेदकस्यातिप्रसक्तत्वेऽपि लोके वेदे वा विशेषलाभो निरुक्तसंसर्गलाभश्चेति ।

अथवा लोकवेदसाधारणः पूर्वोक्तविधया प्रवृत्तिविशेषप्रयोजकतावच्छेदकतया सिद्धो व्यापारत्वरूपोऽखण्डधर्म एवानतिप्रसक्तो लिङादिपदशक्यतावच्छेदकः ।

अथवा अयमत्र प्रवर्ततामित्याकारकत्वरूपस्य लोकवेदसाधारणस्य विषयिताविशेषस्य पूर्वमुक्तत्वात्स एव लिङादिशक्यतावच्छेदकः ।

एष्टव्यश्चायमेव प्रकारः शाब्दबोधत्वावच्छिन्नं प्रति लक्षणादिजन्यशाब्दबोधत्वावच्छिन्नं प्रति वा लोकवेदसाधारण्येन तात्पर्यज्ञानस्य भाट्टमते कारणत्वनिर्वाहार्थम् । न ह्यस्मात्पदादयमर्थो बोद्धव्य इत्याकारकेच्छारूपं तात्पर्यं वेदे संभवति ।

अतस्तत्रातिरिक्तः शब्दनिष्ठो धर्मविशेष एव तात्पर्यं भट्टमते वाच्यम् । न च तज्ज्ञानस्य कारणत्वं लोके क्लृप्तम् । अत्रैवातिरिक्तकार्यकारणभावकल्पने मानाभाव एव । अतो विषयिताविशेषस्यैवानुगतव्यवहारादुभयसाधारणत्वमङ्गीकृत्य कारणतावच्छेदकत्वं वाच्यम् । तद्वदिहापि विषयिताविशेषस्यैव प्रवृत्तिप्रयोजकतावच्छेदकत्वं लिङादिपदशक्यतावच्छेदकत्वं च ।

यदि तु निरुक्तविषयिताविशेषस्येच्छात्वव्याप्यत्वमेवेत्याग्रहः, तदा वैदिकलिङादिनिष्ठव्यापारस्यापीच्छारूपत्वे न काचित्क्षतिः । गुणे गुणानङ्गीकारस्य निर्युक्तिकत्वेनाश्रद्धेयत्वात्, श्रद्धेयत्वेऽपि वा शब्दस्य द्रव्यत्वोपपत्तेर्जीवातिरिक्तेश्वरे नित्येच्छाङ्गीकारवद्वैदिकशब्देऽपि नित्येच्छाङ्गीकारे बाधकाभावात् ।

यदि तु इच्छात्वस्याऽऽत्मनिष्ठत्वव्याप्यत्वमेवेत्याग्रहः, तदा लिङादिर्वैदिकशब्दे श्रौतात्मशब्दप्रयोगाभावेनेश्वर इवाऽऽत्मत्वाङ्गीकारे मानाभावादुपनिषदादिप्रमाणगम्यमीश्वरमङ्गीकृत्य तदिच्छैव तत्तदाकारिका वेदे लिङाद्यर्थस्तात्पर्यरूपा च । " वेदस्थलिङादिप्रेरितोऽहं यजे " इत्यादिव्यवहारस्तु तादृशेच्छाया लिङादिबोध्यत्वादिति सर्वथा नेष्टसाधनत्वादिकं विध्यर्थः ।

वस्तुतस्तु इच्छात्वं जातिरेव लिङादिशक्यतावच्छेदिका लाघवात् । विशेषलाभः पूर्ववत् । वेदे त्वलौकिकप्रेरणायां लक्षणा, अन्यत्सर्वं पूर्ववदित्यपि वक्तुं शक्यम् । एवं " चैत्रो न पचेत्न कलञ्जं भक्षयेत् " इत्यादौ नञ्समभिव्याहृतलिङादिस्थलेऽपि न तावत् बलवदनिष्टाननुबन्धित्वं लिङर्थः, तदभावो नञा बोध्यत इति पक्षः सुवचः, पूर्वमेव निरस्तत्वात् । नापि अनिष्टसाधनत्वे लिङो लक्षणा, नञ्पदं तात्पर्यग्राहकमिति नवीनतार्किकमत युक्तम् । " ज्योतिष्टोमेन न यजेत "

ति लौकिकवाक्यस्य प्रामाण्यापत्तेः । श्रुत्या स्वर्गसाधनत्वावगमेऽपि तात्कालिकानिष्टसाधनत्वस्य यागे बाधाभावात् । न हि नरकादिरूपकालान्तरभाव्यनिष्टजनकत्वमेव निषेधार्थ इत्यत्र प्रमाणमस्ति । " अग्निं न स्पृशे " दित्यादिलौकिकवाक्ये व्यभिचारात् । " नातिरात्रे षोडशिनं गृह्णाती " त्यादावुभयथापि व्यभिचाराच्च ।

यदि हि तात्कालिकानिष्टसाधनत्वं तत्र निषेधार्थः, तदा तस्य प्रमाणान्तरसिद्धानुवादकत्वेऽपि " अतिरात्रे षोडशिनं गृह्णाती " त्यनेनेष्टसाधनत्वस्य बोधात्क्रत्वङ्गतया नित्यवत्करणापत्तिः । अथ तत्र वैयर्थ्यभिया क्रतुगतवैगुण्यरूपानिष्टसाधनत्वमेव " नानृतं वदे " दितिवत्तदर्थः, तदेकस्यैव क्रतुसाद्गुण्यतद्वैगुण्यजनकत्वविरोधः । अथ विरोधपरिहारार्थं वैगुण्यापेक्षया साद्गुण्याधिक्यं कल्प्येत, तदा तात्कालिकानिष्टसाधनत्ववद्वैगुण्यस्यापि नान्तरीयकत्वापत्तेर्नित्यवत्करणापत्तिः, अस्मन्मते तु वक्ष्यमाणरीत्या प्रवृत्त्यभावप्रयोजकप्रवृत्तिसामग्रीविघटनाय षोडशिग्रहणाभावेऽपीतराङ्गैरेव क्रतुमहोपकारसिद्ध्यनुमितेरेव तत्र संसर्गवत्कतयोक्तविधानुमित्या प्रवृत्त्यभावोपपत्तौ तत्रानिष्टसाधनत्वाननुमानात् । अत एव विध्युत्तरनिषेधे सर्वत्र विधिप्रमितेष्टसाधनत्वाभावस्यैव बोधनाद्द्वयोर्वैदिकत्वे प्रयोगभेदेन प्रामाण्योपपत्तावपि श्रौतविधिविरोधे लौकिकवाक्यस्याप्रामाण्यं नानुपपन्नम् ।

एतेनेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वमेव शक्त्या लक्षणया वा नञ्समभिव्याहारे लिङाद्यर्थः । तदभावस्तादृशदुःखजनकत्वरूपो बलवदनिष्टाननुबन्धित्वं नञर्थः । तस्य च धात्वर्थेऽन्वयः । नातो लौकिकवाक्यस्य प्रामाण्यापत्तिर्निर्मूलत्वादित्यपास्तम् । " नातिरात्रे षोडशिनं गृह्णाती " त्यादावपि तदापत्तेः ।

किंचैतेषु सर्वेष्वपि पक्षेषु रागिणः कलञ्जभक्षणवर्तमानतावेलायाम् , " चैत्रः कीदृश " इति प्रश्ने इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनककलञ्जभक्षणानुकूलकृतिमानित्युत्तरवन्न कलञ्जं भक्षयेदित्युत्तरवक्तुरसंबद्धप्रलापित्वापत्तिः । श्येनवर्तमानतादशायां च श्येनेन न यजेतेत्युत्तरापत्तिः । अस्मन्मते तु वक्ष्यमाणरीत्या लिङर्थस्येच्छायाः स्वज्ञानविशेषजन्यानुमितिसंपादितप्रवृत्तिसामग्र्यभावकालीनाभावप्रतियोगित्वसंबन्धेनाऽऽख्यातार्थे कृतावन्वयान्न तदापत्तिरिति वैषम्यम् । किंच चैत्रः कीदृश इति प्रश्नस्य नैवेदमुत्तरम्; प्रथमान्तमुख्यविशेष्यकत्वाभावात् । कीदृशी कृतिरित्यस्यापि नोत्तरम्; लिङ्धर्मितावच्छेदकप्रश्ने तदनालिङ्गितोत्तरस्यासंबद्धत्वात् । अत एव कीदृशी कृतिरिति प्रश्नस्यापि चैत्रः पचति, न पचतीत्यादि नैवोत्तरम् । लिङानालिङ्गितत्वात् । अत एव कृतिमुख्यविशेष्यकत्वमेव भट्टसंमतम् । प्रथमान्तमुख्यविशेष्यकत्वे तादृशोत्तरस्यासम्बद्धत्वानापत्तेः । अतो नञ्समभिव्याहारस्थले प्रवर्तनावन्निवर्तनापि निवृत्तिप्रयोजकतया अभ्युपेया । आचार्योपदेशादहं निवृत्तो न कृतो न भाऽन्योरं,शादिति व्यवहारदर्शनात् । निवर्तनात्वं च प्राचां मते प्रवर्तनात्ववदेव

निवृत्तिजनकव्यापारत्वादिरूपं भिन्नं बोध्यम् । तदवच्छिन्नं च लोके इच्छा, वेदे चालौकिको धर्म इत्यादि सर्वं पूर्ववत् । शक्ततावच्छेदकं च तस्या नञ्पदत्वम् । प्रवर्तनावाचकं च लिङादिपदं तात्पर्यग्राहकम्; इतरथा न पचति चैत्र इत्यादौ नञ्पदादत्यन्ताभावस्यैव बोधात् । लिङा वा निवर्तनोच्यते, नञ्पदं तु प्रवृत्त्यभावानुवादकं सत्तात्पर्यग्राहकमित्यादि प्राचीनमतं कौस्तुभ एव व्यक्तम् ।

एतेन पूर्वोक्तनिषेधानुमानमपि सूपपन्नम् ।

( मन्त्रप्रयोजनविचारः । )

इत्थं विधायकब्राह्मणवाक्यविचारः समासेन प्रदर्शितः । अथ मन्त्रविषये किंचित् प्रदर्श्यते । मन्त्राणां प्रयोगार्थस्मारकत्वेन विनियोगः । सोऽपि नियमविधिद्वारेति मीमांसासिद्धान्तः । मन्त्रान् विनापि कर्मसंपत्तिः संभवत्येव । प्रयोगार्थस्मरणमप्यन्यथाऽऽसादनविल्लेखद्वारा भवितुमर्हतीति व्यर्थो विधिर्नियमं गमयतीति मन्त्रैरेवार्थः स्मरणीय इति । अत्रेदं चिन्त्यते—किमिद नियमापूर्वं सिद्धस्य कर्मणः किंचिदुज्ज्वलतापादकं कुम्भस्येव पाषाणमालाघर्षणम्, उताहो प्रधानापूर्वोत्पत्तावुपकारकम्; आहोस्वित् अङ्गापूर्वोत्पत्तिकारकम् । तत्रार्थस्मरणस्य ब्राह्मणादिनापि सिद्धे मन्त्रोच्चारणं केवलं अदृष्टार्थमेवेति पूर्वपक्षे दृष्टे सति अदृष्टफलकल्पनमन्याय्यमिति न्यायेन मन्त्राणां प्रयोगार्थस्मरणमेव दृष्टं फलमन्यथासिद्धमप्यङ्गीकृतम् । नियमस्तु अपूर्वार्थः । तदिदमपूर्वं न प्रयोगस्य किंचिदुपकरोति, अतः प्रधानापूर्वस्य वाऽङ्गापूर्वस्य वा किमुपकुर्यात् । अन्यथापि कर्मस्वरूपे सिद्धे यत्र मन्त्रस्य आवश्यकतैव नास्ति तत्रतन्नियमापूर्वस्य कर्मसिद्धौ नाऽऽवश्यकता स्यादिति किं वक्तव्यम् । यथाहि, *प्रयाजादीनामनुष्ठानमन्तरेण दर्शपूर्णमासादीनामनिष्पत्तिः, न तथा मन्त्रमन्तरेण कर्मणोऽनिष्पत्तिः ।* तस्मादिदं नियमापूर्वकल्पनं स्थितस्य गतिश्चिन्तनीयेत्येव कल्पितमिति मन्त्राणामनावश्यकतैव दृश्यते । यत्र तु " ऐन्द्या गार्हपत्यमुपतिष्ठते " इत्यादौ प्रत्यक्षत एवोपस्थानादिकं कर्माङ्गत्वेन विहितं, तत्र मन्त्राणामावश्यकता, मन्त्रैर्विना तदनुष्ठातुमशक्यत्वात् । तत्रापि स्तोत्रशस्त्रवत् केवल-देवतार्थप्रकाशनपरत्वाभावेन प्रधानकर्मत्वमेव स्तुत्यादीनामित्यपि स्तोत्रादिप्राधान्याधिकरणन्यायेन स्वीकर्तव्यम् । तत्रेयं चिन्ता--स्यान्नाम देवताप्रकाशन मन्त्रैर्विनापि तदर्थस्य भाषाकाव्यरूपेणो-च्चारेऽपि गद्येन वा । किमर्थं तादृशी आनुपूर्वी स्वरायनतिक्रान्तैवोच्चारणीया । किमर्थं च मन्त्रो हीनः स्वरतो वर्णतो वा " इत्यादि निषेधे मिथ्याप्रयुक्तत्वम् । " अग्निमीळे " इत्यादिना यथा अग्निदेवताप्रकाशनं तथैव " यज्ञस्य देवमग्निं वै ईडेऽहं स्तुतिभिः प्रभुम् । होतारं ऋत्विजं चैव रत्नधाश्रितमं तथा " इत्यादिनापि अग्निरूपदेवताप्रकाशनं भवत्येवेति किमित्यानुपूर्व्यामभिनिवेशः ।

किंच नहि सर्वत्र मन्त्रेषु देवतार्थत्वम् । किंतु प्रश्नव्याकरणतर्कादीनामप्युपलम्भः । तदुक्तं शुक्लयजुः-संहिताभाष्ये वेददीपे—

विध्यर्थवादयाञ्चाशीः स्तुतिप्रैषप्रवह्लिकाः ।
प्रश्नो व्याकरणं तर्कः पूर्ववृत्तानुकीर्तनम् ॥
अवधारणं चोपनिषद्वाक्यार्थाः स्युस्त्रयोदश ।
मन्त्रेषु ये प्रदृश्यन्ते व्याख्या च श्रुतिचोदिता ॥

अथैतेषामुदाहरणानि— तत्र विधिः— परमेष्ठ्यभिहितः—, अश्वस्तूपरः, गोमृगः, इत्यादिः । अर्थवादः— "देवा यज्ञमतन्वत इत्यादिः । याञ्चा—तनूपा अग्नेऽसि तन्वं मे पाहि । आशीः—आ वो देवास ईमहे " । स्तुतिः—' अग्निर्मूर्धा दिवः" । प्रैषः—होता यक्षत्, समिधाग्निम् । प्रवह्लिका—" इन्द्राग्नी अपादियम् " । प्रश्नः—" कः स्विदेकाकी चरति " । व्याकरणम्— "सूर्य एकाकी चरति" । तर्कः— "मा गृधः कस्य स्विद्धनम्" । पूर्ववृत्तानुकीर्तनम्— " ओषधयः समवदन्त " । अवधारणम्— " तमेव विदित्वाऽति मृत्युमेति " । उपनिषत्— ' ईशावास्यमिति " ।

ऋग्वेदभूमिकायां सायणाचार्या अप्येवमुदाहरन्ति—

हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना ॥

" इन्दवो वामुशन्ति हि " इति हेतुः । उदानिषुर्महीरिति तस्मादुदकमुच्यते " इति निर्वचनम् । " मोघमन्नं विन्दते अप्रचेताः इति निन्दा । " अग्निर्मूर्धा दिवः ककुत् " इति प्रशंसा । " वसन्ताय कपिञ्जलानालभते " इति विधिः । " सहस्रमयुता ददत् " इति परकृतिः । " यज्ञेन यज्ञमयजन्त देवाः " इति पुराकल्प. । इति ॥

एतेषां सर्वेषां कथं वा देवताप्रकाशनपरत्वम् । किंबहुना कुत्रचित् केवलमृषिवर्णनमेव न देवतारूपमुपलभ्यते ।

—दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे ।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः ॥
( अ २ अ ३ व २ म ६ ) इति,

अत्रेदं माधवीयभाष्यम्—दीर्घतमा एतन्नामा महर्षिः स च मामतेयः—ममतायाः पुत्रः, दशमे युगे दशयुगपर्यन्तं महानुभावयोरश्विनोः प्रभावात् पूर्वोक्ताद्दुःखाद्विमुक्तोऽत्यन्तसुखी स्वपुत्रभार्यादिभिः सहितो जीवितवान् । दशमे युगेऽतीते सति जजुर्वान् जीर्णः—वलीपलितगात्रो बभूव । एवं भूतः

सन् अर्थं पुरुषैरर्थ्यमानं कर्मफलं स्वर्गादिकं यतीनां प्राप्नुवतीनामपामप्कार्याणां प्रजानाम् । यद्वा अपां अपसां कर्मणां अर्थं प्रयोजनं यतीनां तासां प्रजानां ब्रह्मा ब्रह्मसदृशः परिवृढो भवति । किंच सारथिस्तद्वन्निर्वाहको भवति देवो भवतीत्यर्थः । एवमस्य वृत्तान्तं मन्त्रोऽनुवदति । स्वयं वा स्वात्मानं पारोक्ष्येण अश्विनोर्महानुभावत्वं प्रकटयितुं ब्रवीति इति ।

अत्र मन्त्रस्यानुवादकत्वं प्रतिपाद्यते । तच्चेतिहासविषयकम् । ऋष्युक्तित्वस्वीकारेऽपि अश्विनोर्महानुभावत्वस्यानुभवानन्तरमेव ऋषिणोक्तत्वादिति सादित्वानुवादकत्वे तदवस्थे एव ।

अपरोऽयं मन्त्रः—

" किमु श्रेष्ठः किं यविष्ठो न आजगन् किमीयते दूत्यं कद्यदूचिम ।
न निन्दिम चमसं यो महाकुलोऽग्ने भ्रातर्द्रुण इद्भूतिमूदिम ॥
( अ. २ अ. ३ व. ४ मं. १ )

अत्रेदं माधवीयम्— ऋभवो नाम सुधन्वनस्त्रयः पुत्रा ऋभुर्विभ्वा वाज इति । ते च मनुष्याः सन्तः सुकर्मणा देवत्वं प्राप्य कदाचित्कर्मकाले सोमपानाय प्रवृत्ताः तान् प्रति देवैः प्रेरितोऽग्निः परस्परसमानरूपान् दृष्ट्वा स्वयमपि तदाकारं धृत्वा तेषु मध्ये स्वयं चतुर्थः सन् पातुं प्रवृत्तः । ते च ऋभवः आगतं तं समानरूपमवलोक्य विवेक्तुमसमर्थाः परस्परमेवं संदिहते । अयं किमु श्रेष्ठः किंतु खलु अस्मत्तोऽयं प्रशस्यतमो वयसा श्रेष्ठः सः अस्मान् आजगन् आगमत् प्राप्तः । अजगन्निति गतिकर्मा " अगन् अजगन् " इति तन्नामसु पाठात् ( नि २।१४।११२ ), किं यविष्ठः किंवा अस्माकं युवतमः अस्मत्तः कनीयान् आजगन् प्राप्तः । किंवा दूत्यं दूतकर्म देवसंबन्धि ईयते गच्छति । देवैः प्रेरितो दूतः अस्मानागतो वा । यदूचिम यदेतद्ब्रूमः तत् कत् कथं निश्चेतव्यमित्यर्थः । वयं तावत्त्रय एवेदानीं चत्वारः समानरूपा वर्तामहे । तस्मादयमधिकः किमु श्रेष्ठ इति विचिकित्सा । एवं संदिह्य कथंचित्स्वतोऽन्यं निश्चित्य तं प्रति आपरोक्ष्येण ब्रुवते, हे अग्ने भ्रातः भ्रातृवद्भागार्ह भ्राता यथा बलात्स्वकीयभागं स्वीकरोति तद्वत्समानरूपमाश्रित्य बलात्सोमपानाय प्रवृत्त इति भ्रातरित्युक्तम् । हे तादृशाग्ने चमसं न निन्दिम । अधिकः समागत इति पानमकृत्वा चमसं न दूषयामः । अदूष्यत्वे कारणमाह यश्चमसः महाकुलः महाकुलोत्पन्नः त्वष्ट्रा निर्मितत्वात् । वक्ष्यति च " त्वष्टाग्नास्वन्तर्न्याञ्जे " इति । अतः कारणाद्द्रुणः । विकारे प्रकृतिशब्दः । ततश्च तत्स्थे तच्छब्दः । इच्छब्दोऽवधारणे । दारुविकारचमसस्य भूतिं प्राप्तिं ऊदिम ब्रूमः इति ।

अत्र च सूक्ते ऋभूणामग्निना साकं संवाद आख्यायिकारूपेण प्रतिपादितः । सोऽयं संवादो ऋभूणां मनुष्यत्वेऽपि प्रदत्तः । इदं च सूक्तं षष्ठेऽहनि वैश्वदेवशस्त्रे आर्भवं निविद्धानं द्विमतीकम् ।

सुराश्च । तस्यैव प्रजापतेः प्राणा वागादयः । कथं पुनस्तेषां देवासुरत्वम् । उच्यते--शास्त्रजनित--ज्ञानकर्मभाविता द्योतनाद्देवा भवन्ति त एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभाविता असुराः । स्वेष्वसुषु रमणात् सुरेभ्यो वा देवेभ्योऽन्यत्वात् । यस्माच्च दृष्टप्रयोजनज्ञानकर्मभाविता असुराः, ततस्तस्मात्कारणात् कानीयसाः कनीयांस एव कानीयसाः । स्वार्थेऽणि वृद्धिः । कनीयांसोऽल्पा एव देवाः । ज्यायसा असुराः, ज्यायांसोऽसुराः । स्वाभाविकी हि कर्मज्ञानप्रवृत्तिर्महत्तरा प्राणानां शास्त्रजनितायाः कर्मज्ञानप्रवृत्तेः । दृष्टप्रयोजनत्वात् । तत एव कनीयस्त्वं देवानां शास्त्रजनितप्रवृत्तेरल्पत्वात् । अत्यन्तयत्नसाध्या हि सा । ते देवाश्चासुराश्च प्रजापतिशरीरस्था एषु लोकेषु निमित्तभूतेषु स्वाभाविकेतरकर्मज्ञानसाध्येषु अस्पर्धन्त स्पर्धां कृतवन्तः । देवानां चासुराणां च वृत्त्युद्भवाभिभवौ स्पर्धा कदाचिच्छास्त्रजनितकर्मज्ञानभावनारूपा वृत्तिः प्राणानामुद्भवति । यदा चोद्भवति तदा दृष्टप्रयोजना प्रत्यक्षानुमानजनितकर्मज्ञानभावनारूपा तेषामेव प्राणानां वृत्तिरासुर्यभिभूयते । स देवानां जयोऽसुराणां पराजयः । कदाचित्तद्विपर्ययेण देवानां वृत्तिरभिभूयते आसुर्या उद्भवः । सोऽसुराणां जयो देवानां पराजयः । एवं देवानां जये धर्मभूयस्त्वादुत्कर्ष आ प्रजापतित्वप्राप्तेः, असुरजयेऽधर्मभूयस्त्वादपकर्षः, आ स्थावरत्वप्राप्तेः । उभयसाम्ये मनुष्यत्वप्राप्तिः, इति । ”

## ( वृत्तीनामेव देवत्वमसुरत्वं च । )

अनेन च भाष्येण स्पष्टमिदमवगम्यते यत्प्राणेन्द्रियादीनां वृत्तय एव देवाश्चासुराश्च । तत्र मनुष्यशरीरे उभयविधवृत्तीनां साम्यात्कासामुत्कर्षः साधनीय इति शङ्कायां शास्त्रजनितज्ञानकर्मभावनारूपाणां वृत्तीनामुत्कर्षः साधनीय इति । तत्साधनं च शास्त्रम् । अतो यासां वृत्तीनामुत्कर्षः साधनीयः, तदनुकूलान्येव नामरूपकर्माणि सेवनीयानि । “ त्रयं वा इदं नाम रूपं कर्म ” इति शतपथब्राह्मणे नामरूपकर्मात्मकत्वं जगतः प्रतिपाद्यान्ते “ तदेतत्त्रय सदेकमयमात्मा ” इति जगद्रूपस्यैवाऽऽत्मत्वप्रतिपादनात्, अतो वृत्तीनामेव शास्त्रजनितज्ञानकर्मभावितानां देवत्वं, स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभावितानामसुरत्वमभिप्रेतमाचार्याणाम् । तत्र ज्ञानस्य शास्त्रजन्यत्वं तु तदध्ययनात्तदर्थस्य विचारणाच्च । अत एव “ ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो' ज्ञेयश्च ” इति ज्ञानविधिरपि । “ स्वाध्यायान्मा प्रमदः ” इति व्रतोत्सर्गावसरे च स्नातकस्य गृहस्थस्यापि च नित्यस्वाध्यायविषयको विधिः । नहीदानीमिव तदापि ‘ केऽस्तु ’ ‘इति संख्यायाः, प्रथमामृचमेव केवलां पठित्वाऽन्ते विद्यातपोयोनिरिति ब्रह्मयज्ञस्य च प्रत्याहारः शास्त्रेण विधीयते । दृष्टप्रयोजनप्रत्यक्षानुमानजनितभावनाप्राबल्ये तु सर्वं सम्भवतीति कलिकालमाहात्म्यमेतत् । कर्मविषयेऽपि शास्त्रजनितत्त्वं तदेव वृत्तीनां यच्छास्त्रीयानुष्ठानजनितकर्मवासनावासितत्वम् । तदभावे चाधुनातनमहन्तपदवाच्यानामुपासनामिव केवलं देहंभरत्वं लोकैषणामूलकत्वेनाऽऽडम्बररूपत्वं

तद्यदि शस्त्रं वैश्वदेवं विश्वेदेवदेवताकम्, तर्हि तु अस्मिन् मन्त्रे विश्वेदेवदेवताप्रकाशनेन भाव्यम् । न च तदस्ति । अतः किमिदं मन्त्राणां मन्त्रत्वं, इत्याशङ्का समुदेति । एवमेवागस्त्यलोपामुद्रा-संवादात्मकसूक्तेऽपि । किंबहुना कुत्रचित्तत्त्वज्ञानं द्वा सुपर्णा इत्यादौ । कुत्रचित्पदार्थविज्ञानं द्यावापृथिवीभ्यां सूर्यस्योत्पत्तिप्रदर्शनात्मकम् । क्वचित् वनस्पतिविपलतादीनां प्रदर्शनम् , इत्यादिकं सर्वं न यज्ञोपयुक्तम् । विपलतादिप्रदर्शकानां मन्त्राणां विषनिर्हरणे विनियोगो द्वितीयाष्टकस्यान्ते, स तु यज्ञातिरिक्तः । आथर्वणिका विनियोगास्तु शान्तिकपौष्टिकजारणमारणोच्चाटनकामनापूर्त्यादिषु क्रियमाणा मन्त्राणां कीदृशं देवताप्रकाशनपरत्वं वा प्रयोगस्मारकत्वं वा ब्रूयुरिति सुधीभिरेवोह्यम् । न हि " शंनो देवीरिति मन्त्रः शनिग्रहदेवतां प्रकाशयति । न वा " धूरसि धूर्व " इति मन्त्रः धूपपदार्थं स्मारयति । न हि " उद्बुध्यस्वाग्ने " इति मन्त्रः बुधग्रहदेवतां स्फोरयति । तान्त्रिका विनियोगास्त्वन्ये एव । स्त्रीपुत्रद्रव्यलाभऋणमोचनरोगनिवारणपिशाचादिबाधनिवृत्त्यादिषु तान्त्रिकमन्त्रेण सह क्रियमाणा वैदिकमन्त्रविनियोगा कां वा देवतां प्रतिपादयेयुः । एवं च सर्वमिदं मन्त्रजातं किमुच्चारणमात्रेण फलवत् कल्पनीयम, उत विनियोगानुसारेण देवतास्वरूपं परिकल्प्य तदर्थकत्वेन नेयम् । आहोस्वित्प्रतिपादितोऽर्थ एव देवतातत्त्वम् शनैश्चरस्याश्वरूपत्वामिव मन्तव्यम् । उच्चारणमात्रेण फलवत्त्वे तु मन्त्रमयं देवतास्वरूपं न विग्रहवत् सिद्धं स्यात् । तत्त्वात्मककल्पना तु इतरशास्त्रविरुद्धा । विनियोगानुसारेण देवतास्वरूपकल्पने तु मन्त्राणामनेकार्थत्वप्रसक्त्याऽनवस्था स्यात् । इत्येवं प्रकारेण विचारश्चेत्कर्तव्यः तदा तु पण्डितैरत्र विषयेऽवश्यमिदानीं पराक्रमितव्यम् । न केवलं पदकृत्ये शास्त्रार्थकरणेन कालो यापनीयः । सर्वेऽपीदानीं वेदमनालोच्यैव वैदिकत्वं वैदिकधर्मानुयायित्वं च मन्यमाना धर्मधुरंधरत्वेनाऽऽत्मानमाविर्भावयन्तीति सफलः कलिमनोरथः । तदत्र विषये केचन प्रबुद्धा विचारा विदुषां पुरत उपन्यस्यन्ते । येन सारासारविचारद्वारा किमपि तत्त्वमुपासनायोग्यं ब्राह्मण्यसंरक्षकं पुनश्च ' वर्णानां ब्राह्मणः प्रभुः ' इति प्रभुत्वसंस्थापकं निष्कासयेयुर्विद्वांस इति दिक् प्रदर्श्यते ।

### ( देवतास्वरूपविचारः )

तत्रादौ देवतास्वरूपं विचारणीयम् । ततश्च मन्त्रस्वरूपं तत्स्फुरणं तत्तत्त्वनिदर्शनं चेति क्रमेणोपपादयामः । बृहदारण्यके उद्गीथब्राह्मणे ( १।३।१। कण्डिका )

" द्वया ह प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त । ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति " । अत्रेदं शांकरभाष्यम्— द्वया द्विप्रकाराः । ह इति पूर्ववृत्तावद्योतको निपातः । वर्तमानप्रजापतेः पूर्वजन्मनि यद्वृत्तं तदवद्योतयति हशब्देन । प्राजापत्याः प्रजापतेस्तत्पूर्वजन्मावस्थस्यापत्यानि प्राजापत्याः । के ते । देवाश्चा-

सुराश्च । तस्यैव प्रजापतेः प्राणा वागादयः । कथं पुनस्तेषां देवासुरत्वम् । उच्यते--शास्त्रजनित-ज्ञानकर्मभाविता द्योतनाद्देवा भवन्ति त एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभाविता असुराः । स्वेष्वसुषु रमणात् सुरेभ्यो वा देवेभ्योऽन्यत्वात् । यस्माच्च दृष्टप्रयोजनज्ञानकर्मभाविता असुराः, ततस्तस्मात्कारणात् कानीयसाः कनीयांस एव कानीयसाः । स्वार्थेऽणि वृद्धिः । कनीयांसोऽल्पा एव देवाः । ज्यायसा असुराः, ज्यायांसोऽसुराः । स्वाभाविकी हि कर्मज्ञानप्रवृत्तिर्महत्तरा प्राणानां शास्त्रजनितायाः कर्मज्ञानप्रवृत्तेः । दृष्टप्रयोजनत्वात् । तत एव कनीयस्त्वं देवानां शास्त्रजनितप्रवृत्तेरल्पत्वात् । अत्यन्तयत्नसाध्या हि सा । ते देवाश्चासुराश्च प्रजापतिशरीरस्था एषु लोकेषु निमित्तभूतेषु स्वाभाविकेतरकर्मज्ञानसाध्येषु अस्पर्धन्त स्पर्धां कृतवन्तः । देवानां चासुराणां च वृत्त्युद्भवाभिभवौ स्पर्धा कदाचिच्छास्त्रजनितकर्मज्ञानभावनारूपा वृत्तिः प्राणानामुद्भवति । यदा चोद्भवति तदा दृष्टप्रयोजना प्रत्यक्षानुमानजनितकर्मज्ञानभावनारूपा तेषामेव प्राणानां वृत्तिरासुर्यभिभूयते । स देवानां जयोऽसुराणां पराजयः । कदाचित्तद्विपर्ययेण देवानां वृत्तिरभिभूयते आसुर्या उद्भवः । सोऽसुराणां जयो देवानां पराजयः । एवं देवानां जये धर्मभूयस्त्वादुत्कर्ष आ प्रजापतित्वप्राप्तेः, असुरजयेऽधर्मभूयस्त्वादपकर्षः, आ स्थावरत्वप्राप्तेः । उभयसाम्ये मनुष्यत्वप्राप्तिः, इति । ''

( वृत्तीनामेव देवत्वमसुरत्वं च । )

अनेन च भाष्येण स्पष्टमिदमवगम्यते यत्प्राणेन्द्रियादीनां वृत्तय एव देवाश्चासुराश्च । तत्र मनुष्यशरीरे उभयविधवृत्तीनां साम्यात्कासामुत्कर्षः साधनीय इति शङ्कायां शास्त्रजनितज्ञानकर्मभावनारूपाणां वृत्तीनामुत्कर्षः साधनीय इति । तत्साधनं च शास्त्रम् । अतो यासां वृत्तीनामुत्कर्षः साधनीयः, तदनुकूलान्येव नामरूपकर्माणि सेवनीयानि । " त्रयं वा इदं नाम रूपं कर्म " इति शतपथब्राह्मणे नामरूपकर्मात्मकत्वं जगतः प्रतिपाद्यान्ते " तदेतत्त्रयं सदेकमयमात्मा " इति जगद्रूपस्यैवाऽऽत्मत्वप्रतिपादनात्, अतो वृत्तीनामेव शास्त्रजनितज्ञानकर्मभावितानां देवत्वं, स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभावितानामसुरत्वमभिप्रेतमाचार्याणाम् । तत्र ज्ञानस्य शास्त्रजन्यत्वं तु तदध्ययनात्तदर्थस्य विचारणाच्च । अत एव " ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च " इति ज्ञानविधिरपि । " स्वाध्यायान्मा प्रमदः " इति व्रतोत्सर्गावसरे च स्नातकस्य गृहस्थस्यापि च नित्यस्वाध्यायविषयको विधिः । नहीदानीमिव तदापि ' केऽस्तु ' 'इति संध्यायाः, प्रथमामृचमेव केवलां पठित्वाऽन्ते विद्यातपोयोनिरिति ब्रह्मयज्ञस्य च प्रत्याहारः शास्त्रेण विधीयते । दृष्टप्रयोजनप्रत्यक्षानुमानजनितभावनाप्राबल्ये तु सर्वं संभवतीति कलिकालमाहात्म्यमेतत् । कर्मविषयेऽपि शास्त्रजनितत्वं तदेव वृत्तीनां यच्छास्त्रीयानुष्ठानजनितकर्मवासनावासितत्वम् । तदभावे चाधुनातनमहन्तपदवाच्यानामुपासनमिव केवलं देहंभरत्वं लोकैषणामूलकत्वेनाऽऽडम्बररूपत्वं

च भवति । येन धर्मस्थापनप्रचारादिविरुद्धमधर्मोत्कर्षादिकमेव फलं संसाध्यते । नान्यत्किमपीति प्रत्यक्षमेवानुभयते । अस्तु ।

## ( शब्दस्य तादृशवृत्तिप्रकटनसामर्थ्यम् )

तदेव वासनाप्रवाहस्य देवासुरत्वभेदेन द्वैविध्यात् । आसुरवासनापरिभवपूर्वकं दैववासनानामुत्कर्षाय मुख्यसाधनं तु शब्द एव । शब्देनैव ज्ञानं तन्मूलकं च कर्मेति सिद्धान्तः । ज्ञानेच्छाकृतीनां पूर्वपूर्वकारणत्वात् । तथा च ज्ञानं साधकबाधकयुक्तिप्रदर्शनरूपतर्केण यदि लब्धुं शक्यम् । तदा तु युक्तिपाटवपरिवृद्धानामप्यासुरवृत्तिवासितत्वं कदापि न दरीदृश्येत । अतश्च तद्भावनोद्दीपकछन्दोरूपादिनिबद्धसत्काव्यरूपेणैव सम्यक्तया भवति । तत्र कीदृश्या वृत्तेः को वा छन्दः, कानि वाऽक्षराणि के वा वर्णाः प्रयोक्तव्या इति यथा साहित्य उपदिश्यते, तथोपनिबद्धसत्काव्यपरिशीलनेन च यथा वृत्तीनामाविर्भावः स्थिरीकरणं च भवतीति सर्वजनीनमेवैतत् । तथैव मन्त्रेष्वपि वर्णविन्यासादिकं छन्दः स्वरादीनां नियमनं च मन्त्रेषु क्रियमाणं युक्ततममेव । लोकेऽविद्यमानोऽप्यर्थः कविकल्पनयोपनिबद्धः श्रोतॄणां वाचकानां मनोनयनाल्हादजनको भूत्वा तदनुगुणा वृत्तीः पुष्णाति । तथा मन्त्रेष्वपि पुरोहितत्वादिगुणविशिष्टत्वमग्नावविद्यमानमप्युपनिबद्धं यदि दैवीर्वृत्तीः पुष्णीयात् का हानिः । इदं तु सत्यं यत्काव्येषु प्रमाणान्तरज्ञातार्थस्यैव उपनिबन्धनम्, क्वचिदविभावादिलौकिकपदार्थनिबन्धनमपि । वेदे तु न तथा प्रमाणान्तराविषयत्वात्तदर्थस्य । तथापि वृत्तिपोषकत्वं तूभयत्र समानमेव । तत्रापि यद्यर्थो वैज्ञानिकप्रमाणसिद्धः स्यात्तर्हि तु पयसि शर्करापातः ।

## ( मन्त्रदर्शनोपपत्तिः )

तदिदं वृत्तिपोषकत्वं मन्त्राणां कथं सम्भवतीति मन्त्रदर्शनप्रकारप्रदर्शनं किञ्चिदुपनिबध्नीमः । सर्वेषां मन्त्राणां जन्मभूमिस्तु अकारादिमातृका एव । तासां स्फुरणप्रकारश्चेत्थम्—

" आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।<br>
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥<br>
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ।<br>
प्रातः सवनयोगं तं छन्दो गायत्रमाश्रितम् ॥<br>
कण्ठे माध्यंदिन युगं मध्यमं त्रैष्टुभानुगम् ।<br>
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥<br>
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।<br>
वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः ॥ इति ।

अन्यत्र तन्त्रशास्त्रेऽपि शारदातिलके—

> ततो व्यक्तिं प्रवक्ष्यामि वर्णानां वदने नृणाम् ।
> प्रेरिता मरुता नित्यं सुषुम्णारन्ध्रनिर्गताः ॥
> कण्ठादिकरणैर्वर्णाः क्रमादाविर्भवन्ति ते ।
> एषु स्वराः स्मृताः सौम्याः स्पर्शाः सौराः शुभोदयाः ॥
> आग्नेया व्यापकाः सर्वे सोमसूर्याग्निदेवताः ।
> स्वराः षोडश विख्याताः स्पर्शास्ते पञ्चविंशतिः ॥
> तत्त्वात्मानः स्मृताः स्पर्शा मकारः पुरुषो यतः ।
> व्यापका दश ते कामधनधर्मप्रदायिनः ।
> ह्रस्वः स्वरेषु पूर्वोक्तः परो दीर्घः क्रमादिमे ॥
> शिवशक्तिमयास्ते स्युर्बिन्दुसर्गावसानकाः ।
> बिन्दुः पुमान् रविः प्रोक्तः सर्गः शक्तिर्निशाकरः ॥
> स्वराणां मध्यगं यच्च तच्चतुष्कं नपुंसकम् ।
> पिङ्गलायां स्थिता ह्रस्वा इडायां संगताः परे ।
> सुषुम्णामध्यगा ज्ञेयाश्चत्वारो ये नपुंसकाः ।
> विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा ॥
> शिवशक्तिमयान् प्राहुस्तस्माद्वर्णान् मनीषिणः ।
> कारणात्पञ्चभूतानामुद्भूता मातृका यतः ।
> ततो भूतात्मका वर्णाः पञ्च पञ्च विभागतः ॥
> वाय्वग्निभूजलाकाशा पञ्चाशल्लिपयः क्रमात् ।
> पञ्च ह्रस्वा पञ्च दीर्घा बिन्द्वन्ताः संधिसंभवाः ।
> पञ्चाशत्कादयः पक्षलसहान्ताः समीरिताः ।
> सोमसूर्याग्निभेदेन मातृकावर्णसंभवाः ॥ इति ॥

अत्र च विवक्षायां मनसः कायाग्न्याऽऽघातेन समुत्पन्नो मारुतो वर्णान् जनयते इति पूर्वोक्तपाणिनीयशिक्षावाक्यानुसारेण कायाग्निरूपकुण्डलिनीगतचैतन्याघातादेव वायुमुत्पन्नं मातृकावर्णानां कारणमामनन्ति । एवमपि केचन वर्णाः सोमदेवत्याः केचन सूर्यदेवत्याः केचनाग्निदेवत्या इति सर्वेषां वर्णानामग्निसोमसूर्यात्मकत्वमुपवर्ण्यते । वायुनोत्पन्ना *अपि ते न वायवीयाः, अपि तु*

तैजसा एव। तच्च कायाग्निरूपकुण्डलिनीगतचैतन्यात्मकमपि इडापिङ्गलासुषुम्णानाडीत्रयेणाऽऽविर्भवतीति सोमसूर्याग्निरूपं जायते । अत एव शब्दानां स्फोटरूपत्वेन चैतन्यात्मकत्वमभिप्रीयते वैयाकरणैः । तदुक्तं हरिणा—

तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ।
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ॥
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।
अत्रातीतविपर्यासः केवलामनुपश्यति ॥ इति ।

एवं च तैजसानामेषां वर्णानां पदार्थसंयोगपृथक्करणादौ शक्तिरवश्यमभ्युपेया । प्रत्यक्षतया तथोपलम्भात्, वेदेष्वपि तथाऽऽम्नानात् । तथाहि—

( विभक्तारं हवामहे वसोश्चित्रस्य राधसः ।
सवितारं नृचक्षसम् ॥

इत्येतस्मिन् वाजसनेयमन्त्रे सवितुः पदार्थविभागकर्तृत्वं प्रतिपाद्यते । विभागेन चान्यत्र संयोगोऽप्यनुमीयते । एवं च पदार्थानां संयोगकरणे पृथक्करणे च तेज एव परं कारणमित्यत्र- आधुनिका वैज्ञानिका अपि न विप्रतिपद्येरन् । एवमेव सोमाग्न्योरपि तेजोरूपत्वात्तादृशमेव कार्यम् । तत्र सोमस्य संयुक्तपदार्थपोषकत्वमुज्जीवकत्वमपि । अतोऽग्निसूर्यसोमात्मकैर्वर्णैरपि शरीरान्तर्गतदैवभावनाविरुद्धपदार्थानां पृथक्करणमनुकूलपदार्थानां च संयोजनं जपतत्पराणां क्रियते । अग्रे च वर्णानां पञ्चमहाभूतात्मकत्वं प्रतिपाद्यते । जगदपि पञ्चमहाभूतात्मकमेव । तत्र च अ आ ए क च ट त प य षा वायवीयाः । एवमेतेषां द्वितीया आग्नेयाः, तृतीया भौमाः, चतुर्था जलात्मकाः पञ्चमा आकाशात्मान इति सिध्यति । अतश्च तत्तद्भूतकार्यप्रसङ्गे विरोधानुकूल्ये पर्यालोच्य तत्तद्वर्णानां विभागशः समुच्चयेन वा समुच्चारे तत्तत्त्वाविर्भावात् तत्तत्कार्यानुकूला वृत्तिरुदेष्यतीति तत्तद्वर्णसमुदायस्य तत्तत्कार्ये मन्त्रत्वं भवति । अत एवोपासनामार्गे पुरश्चरणादिप्रकारः साधकस्योपदिष्टः । निरोधिवर्णोच्चारवर्जनमपि यमनियमादिपालनद्वारोपदिष्टं भवति । एवमुपासनेन साधकस्याऽऽन्तरी वृत्तिः स्थिराऽऽविर्भवति कार्यानुकूला, स एव देवताविर्भावः । अत्र पूर्वोक्तवचनेषु यत्र वर्णविषये उत्पत्तिशब्दः, तत्राऽऽविर्भावार्थकत्वं मन्तव्यम् । मीमांसामतेन वर्णानां नित्यत्वात् । अन्येषां तूत्पत्त्यर्थकत्वमेव । एवं च वर्णसमुदायात्मकच्छन्दोविद्यारहस्य एवं प्रकारेण मन्त्रत्वे सिद्धे तदनुष्ठानपरायणानां संयमनेन तत्र तत्र तत्तत्कार्यकारित्वं तेषां तैजसशक्त्या संभवतीति मन्यामहे ।

## ( देवताया विग्रहवत्त्वोपपत्तिः )

येषां तु मते देवताया विग्रहवत्त्वम्। तेषामियं प्रक्रिया या तत्त्वात्मकदेवतास्वरूपेण संभाव्यते। तथाहि—वेदेषु तावत्केचन मन्त्राः सौराः, केचन सावित्राः, कतिचन मैत्राः, अन्ये च पौष्णाः। एतेषां सर्वेषां देवताभेदस्तत्तन्नाम्नाऽन्यः प्रदर्शयितुमशक्यः। व्यवहारे चैते सूर्यादिशब्दाः सर्वे सूर्यस्यैव वाचकाः। देवताभेदश्च तत्र तत्र प्रदर्श्यते। तेनार्थादिदं कल्पनीयमापतति, यदेकस्यैव सूर्यस्य कार्यशक्तिवशात्स्वरूपभेदमभ्युपेत्य तत्तच्छक्तिविशिष्टं तत्तत्स्वरूपं स्तूयत इति। तत्र शक्तेरिन्द्रियगोचरत्वाभावेऽपि कार्यस्येन्द्रियगोचरत्वेन कार्यरूपेण परिणतं स्वरूपं यदोपासकानां मनोवृत्तिं व्याप्नोति तदा तत्स्वरूपपरिणतायाश्चित्तवृत्तेस्तद्देवतासाक्षात्कारो मूर्तरूपेण भवितुमर्हति इत्येतावदेव विग्रहवत्त्वं देवताया इति मन्ये। अन्यथैकस्मिन्कालेऽनेकदूरस्थानस्थितानामनेकेषामुपसकानामेकस्या एव विग्रहवत्या देवतायाः साक्षात्कारोऽनुपपन्नः स्यात्। न च दैवप्रभावादनेकविग्रहग्रहणशक्तिरनुमेयेति। तथाविधानेकविग्रहस्वीकारे प्रत्यहमनेकविग्रहानामुत्पत्तिध्वंसादिकल्पने गौरवात्। तस्मात्पदार्थगत-कार्यशक्तिरेव देवतेत्येव कल्पनीयम्। तन्त्रशास्त्रे तु—एकोऽहं बहु स्या प्रजायेय" "एकं सद्विप्रा बहुधा वदन्ति" इत्यादिश्रुतिसिद्धस्यैकस्यैव ब्रह्मणो "उपासकानां कायार्थं ब्रह्मणो रूपकल्पनेति" नानाविधरूपकल्पना शांकरसिद्धान्तानुसारेण स्वीक्रियते। अत एव तत्र तत्र शिवशक्तिरूपेण वा भुवनेश्वरीरूपेण वा केवल शिवरूपेण वा लक्ष्मीविष्णुरूपेण वा एकस्यैव चैतन्यस्य मूलभूतत्वं स्वीक्रियते। न हि शुद्धचैतन्यस्य कदापि विभ्रमादिकं संभवति। तत्सहकारिण्याः शक्त्यपरपर्यायाया मायाया एवायं विलासो यज्जगदाडम्बरविलसन नाम। तदुक्तम्—

> आच्छाद्य विक्षिपति संस्फुरदात्मरूपम्।
> जीवेश्वरत्वजगदाकृतिभिर्मृषैव॥
> अज्ञानमावरणविभ्रमशक्तियोगात्।
> प्रत्यक्त्वमात्रविषयाश्रयतावलेन॥

इति संक्षेपशारीरके। तन्त्रेऽपि—

> सर्वस्याऽऽद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी।
> लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता॥ इति।

ब्रह्मविष्णुमहेशानां तु महालक्ष्म्याः सकाशादेवोद्भवः। सर्वमिदं मार्कण्डेयपुराणे देवीमाहात्म्ये देवीभागवते च द्रष्टव्यम्। तत्रैव एकस्या एव चिच्छक्तेर्योगमायाचेतनाबुद्धिनिद्राक्षुधातृष्णाकान्तिशान्तिक्षान्तिभ्रान्त्यादिरूपैः सर्वभूतावस्थितिः सर्वव्यापकत्वं च प्रदर्श्यन्ते—

> चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत्
> नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः॥

इत्युपसंहृतम्। अनेन चेदमेव सिध्यति यत्तत्तत्पदार्थशक्तीनामेव देवतात्वमिति। श्रीमद्भागवते चोत्पन्नानां प्राणेन्द्रियादीनामेव देवतात्वमुपवर्ण्यते तृतीयस्कन्धे। शिल्पशास्त्रे मयसंहितायामयं श्लोक उपलभ्यते—

संस्थाप्य मृन्मये पात्रे ताम्रपात्रं सुसंस्कृतम्।
छादयेच्छिखिकण्ठेन आर्द्राभिः काष्ठपांसुभिः॥
दस्तालोष्टो विधातव्यः पारदाच्छादितस्ततः।
संयोगाज्जायते तेजो मित्रावरुणसंज्ञितम्॥

अत्र चोत्पन्नस्य तेजोद्वयस्य मित्रावरुणेति नाम, आहो स्विदेकस्यैव तेजसः, एवमेव वेदेषु गीयमाना मित्रावरुणदेवता सेयमेव वाऽन्या वेति विमर्शनीयं विद्वद्भिः। यदा तु पूर्वोक्तप्रकारेण कार्यशक्तिरेव पदार्थगता देवतेत्यभ्युपेयते तदा तु तेजोद्वयमेतद्विद्युद्द्वयकमित्येव सिध्यति। अत एव वेदे मित्रावरुणाविति देवताद्वयमभ्युपेयते। एवं चैकस्यैव चिद्घनस्य परब्रह्मणश्चित्कला एव कार्यवशादनेकभेदमापन्ना देवतात्वेन सन्तूयन्ते वेदे इति सिध्यति। तासां प्राकट्यप्रकारस्तु उपासनामार्गेण यथा भवितुमर्हति, तथोपपादितमेव क्वचित्। कर्ममार्गद्वारा तत्प्राकट्यमुपासकानां कथं भवति, अग्नि वा तत्र कश्चन हवनीयद्रव्यस्य सम्बन्ध इत्याद्याशङ्का समुदेतीति तत्र तद्विषये ऋषिचरणा एव प्रमाणम्। दिङ्मात्रमिह प्रदर्शनं तु विचक्षणानां विचारोद्बोधाय। एतन्मूलक एवायं प्रवादो यद्देवानां संकलनं व्यासकृतमिति। तत्तत्संशोधकैस्तत्तच्चित्कलानां तत्कार्यमुखेनाऽऽविष्कारे कृते तस्य संरक्षणाय कार्यरूपं तिरोधाप्य केवलस्मरणमात्रेण प्रातिस्विकतया निष्क्रान्ता वाग्विलासा एव संकलिताः, अत एव मन्त्रत्वम्। मन्त्रशब्दस्य मन्त्रि गुप्तपरिभाषणे इति धातोर्घञि व्युत्पन्नत्वात्। अत एवोक्तं भट्टपादैः—

ननु तर्हि चित्कलानां साक्षात्कारः कथमिति चेत् परमेश्वरानुग्रहाद्वा "यो हि ब्रह्माणं विदधाति पूर्वं" इत्यादिश्रुतेः, प्राक्तनजन्मोद्भवसंस्कारवशाद्वा महर्षीणां कल्पादौ सुप्तप्रतिबुद्धवदिति कल्पनीयम्। अधुनातनानां वैज्ञानिकानामपि इन्द्रियगोचरवस्तूनां यज्ज्ञानं तदपि न प्रत्यक्षम्। किंत्वानुमानिकं कार्यवशादुन्नीतमेव। न हि ईथर इलेक्ट्रान इत्यादिपदार्था यन्त्रसहस्रेणापि दृष्टिविषयतामापादयितुं शक्याः, येषां च पृथक्करणं भवति ते सर्वेऽपि सावयवा दृष्टिगोचरत्वमापतन्ति। सावयवानां मूलभूतं तत्त्वं त्वन्ततो निरवयवमेवेति तत्र मुह्यमाना एतेऽज्ञेयवादं पुरस्कुर्वन्ति। अत एवैषामशक्तिर्ज्ञायते। निरवयवस्यापि तत्त्वस्य शब्दसाहाय्येन साक्षात्कारो भवतीति वैदिकः पन्थाः। अस्तु। अलमतिप्रपञ्चेन। सर्वथाऽत्र विषये परिनिष्ठितैर्मन्त्राणां मन्त्रत्वमाविष्करणीयमिदानीमिति उपनिबद्धा एते विचाराः सुधीभिर्विमर्शनीयाः। एतदेव ऋषीणामृषित्वं यन्मन्त्रार्थसाक्षात्कारकर्तृत्वमिति। अत एव ऋषयो मन्त्रद्रष्टारो न तु मन्त्रकर्तारः। अस्य च विस्तरः सनातनधर्मप्रदीपे द्रष्टव्यः।

सर्वथा मन्त्राणां कर्मकाण्डातिरिक्तस्थले उपासनादौ विनियोगो वर्तत इति न केवलं प्रयोगार्थस्मारकत्वं भवितुमर्हति। येनाऽऽख्यायिकादीनां वैयर्थ्यं तदनुसारेण च तासामृचाममन्त्रत्वं वा भवितुमर्हति। कर्मकाण्डेऽपि तत्तद्देवताप्रकाशनपरत्वं परम्परयाऽऽख्यायिकादीनां भवितुमर्हति, अस्य कर्मणो वा देवताया वैतादृशी आख्यायिकेति प्रशस्तमेवेदं सर्वमवश्यमनुष्ठेयमिति सर्वतात्पर्यात्।

तत्सिद्धं मन्त्राणामपि अलौकिकप्रमाणत्वं तन्मूलकं चालौकिकेष्टसाधनत्वं ततश्च वेदत्वम्। एवं चालौकिकप्रमाणगम्यत्वरूपमलौकिकत्वं सिद्धमिष्टसाधने। एवमेव लौकिकप्रमाणागम्यत्वमिति न तत्प्रपञ्च्यते। तृतीयमलौकिकत्वं चालौकिकव्यापारजन्यत्वमिष्टे। तद्विचारयामः—

## (तृतीयालौकिकत्वविचारः।)

कोऽयमलौकिको व्यापारो नाम यज्जन्यत्वमिष्टे प्रतिपाद्यते। व्यापारो नाम क्रिया, सा च प्रत्यक्षैवेति तस्या अलौकिकत्वं कथमपि न संभवति। यद्यपि क्रियायाः प्रत्यक्षत्वे विप्रतिपत्तिः। तस्या अनुमानगम्यत्वस्य प्राभाकरादिभिरभ्युपेतत्वात्। तथापि भाट्टमते अन्येषां च दार्शनिकानां मते तस्याः प्रत्यक्षत्वस्य सिद्धान्तितत्वात् तत्रैवाप्रत्यक्षत्वस्य निराकरणाच्च न तत् प्रपञ्च्यते। एवं क्रियायाः प्रत्यक्षत्वेऽलौकिकत्वं कथं व्यापारस्येति शङ्कायामुच्यते। स्यान्नाम क्रियायाः प्रत्यक्षत्वम्। अत्र तु करणजन्यत्वविशिष्टकरणफलोत्पादकः कश्चनातिशय एव व्यापारपदेन विवक्षितः। तथाहि करणत्वं व्यापारवदसाधारणकारणत्वम्। यथा घटकरणीभूतस्य दण्डस्य चक्रभ्रामणादिको व्यापारः, यथा वेन्द्रियाणां विषयेन्द्रियसंबन्धः, यथा च व्याप्तिज्ञानस्य परामर्शः। एवं च व्यापारस्य क्वचित्क्रियारूपत्वं कुत्रचित् संबन्धस्वरूपत्वं, कुहचिज्ज्ञानरूपत्वमिति न क्रियारू-

पत्वेनानुगमः । तथा च विधिना बोधितस्य करणस्य यागादिक्रियाया अपि फले जनयितव्ये कश्चन व्यापार आवश्यक इति सिध्यति । यत्र च भोजनादावव्यवहितकालमेव तृप्तिरूपफलोत्पत्तिः, तत्रापि गलबिलाधःसंयोगरूपव्यापारः कल्पनीयः । न हि तादृशसंयोग एव भुक्तिः, किं तु तदनुकूलो व्यापारः । एवं च तेन व्यापारेण तृप्तावुत्पादयितव्यायां मध्ये गलबिलाधःसंयोगमुत्पाद्यैव सा जनयितव्या । स च संयोगोऽपि तृप्तेः कारणमिति संभवति तस्य व्यापारत्वम् । यद्वा व्यवहितसाधनानामेव फलोत्पत्तिपर्यन्तव्यापारव्याप्यत्वमिति नियम इति नाव्यवहितफलजनके साधनेऽतिप्रसङ्गः । एवं च करणानां व्यापारवत्त्वावश्यंभावात्, यागादीनां च वेदेन करणत्वबोधनात् व्यापाराभावे च क्षणिकानां तेषां फलोत्पत्तिपर्यन्तमनवस्थानादर्थापत्त्या तज्जन्यः कश्चन आत्मन्यतिशयोऽपूर्वापरपर्यायोऽदृष्टः कल्प्यते । तस्य चाऽऽत्मनि स्थिरभावाभ्युपगमात् जन्मान्तरेऽपि फलदातृत्वं सिध्यति । तदुक्तं शास्त्रदीपिकायाम्—

> विनष्टस्यासतस्तावन्न कार्यारम्भसंभवः ।
> क्षणिकत्वेन सिद्धस्य नावस्थानं च युक्तिमत् ॥

तदेव हि श्रुतार्थापत्त्या कल्पयितव्यम्, न यत्प्रमाणान्तरेण विरुध्यते । विरुद्धं च सर्वप्रमाणैर्विनष्टस्यासतोऽनारब्धवस्त्वन्तरस्य कार्यारम्भकत्वम् । अवस्थानं च क्षणमात्रवर्तिनः प्रमाणविरुद्धमेव । अतोऽपूर्वं कल्पनीयमिति ।

कुसुमाञ्जलावुदयनाचार्यैरपि—

> चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
> संभोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥

इति कर्मजन्यातिशयस्य लौकिकवैदिककर्मसाधारणत्वम् ।

सोऽयं कर्मजन्योऽतिशयो न वैदिककर्मणामेव । अपि तु सर्वस्यापि कर्मण एतादृशातिशयद्वारैव पदार्थारम्भकत्वम् । तथाहि—यदिदं सृष्टिवैचित्र्यं गुणतः स्वरूपतः परिणामतश्च तत्र तत्र सर्वैरनुभूयमानं किं तत्त्ववैचित्र्यमात्रेण भवितुमर्हति नवेति विचारणायां तत्त्वानां परिमितत्वात्तन्न केवलं तत्त्वेभ्यो भवितुमर्हति । समानधर्मककारणस्यासति विशेषे समानधर्मककार्यारम्भकत्वात् । एकस्या एव मृत्तिकायाः कर्मविशेषातिशयाभावे घटशरावादिनानाविधकार्यासंभवात् । अतः सर्वस्यापि जगद्वैचित्र्यस्य कारणमिदमेव यत्कर्मविशेषजन्योऽतिशयो नाम ।

( कालवादः )

ननु न जगद्वैचित्र्यकारणं धर्मातिशयः । तदनुपलम्भात् । अपि तु सर्वमिदं विश्ववैचित्र्यं कालकृतमेव । तथाहि—आम्रनिम्बादयो वनस्पतयः स्वस्वकाल एव फलन्ति । न कालान्तरे

कृतेऽपि तदुत्पत्त्यनुकूलकर्मातिशये, एवमेव नारकादिनिखिलभावजातं विभावनीयम्। कर्मणोऽपि शक्तिश्चेत्कालाधीनैव। अन्यथा बालाया अपि गर्भोत्पत्तिसंभवः स्यात्। किंच सर्वेषामपि भावानां स्थितिस्तु कालाधीनैव। अन्यथोत्पत्त्यनन्तरमेव लयः स्यात्। कुत्रचित्तु सत्यपि स्त्रीपुंसंयोगरूपगर्भकारणे न सर्वत्र गर्भाधानम्। एवमेव सुखदुःखादिभोगेऽपि। सुखकारणत्वेनाभिमतायां सामग्र्यां सत्यामप्येकस्य दुःखदत्वमपरस्य सुखदत्वं तस्या अनुभूयते इति कालाधीनमेवैतदित्यवश्यमभ्युपेयम्। तदुक्तम्—

> न कालव्यतिरेकेण गर्भबालयुवादिकम्।
> यत्किंचिज्जायते लोके तत्रासौ कारणं किल ॥ १ ॥
> कालः पचति भूतानि कालः संहरते प्रजाः।
> कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ २ ॥
> किंच कालादृते नैव मुद्गपक्तिरपीक्ष्यते।
> स्थाल्यादिसंनिधानेऽपि ततः कालादसौ मता ॥ ३ ॥
> कालाभावे च गर्भादि सर्वं स्यादव्यवस्थया।
> परेष्टहेतुसद्भावमात्रादेव तदुद्भवात् ॥ ४ ॥ इति।

श्रीमद्भागवतेऽपि—

> यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः।
> कृष्णोऽस्त्री गाण्डिवं चापं सुहृत् कृष्णस्ततो विपत् ॥
> सर्वं कालकृतं मन्ये भवतां च यदप्रियम् ॥ इतिभीष्मपितामहोक्तिः।

ननु सर्वस्यापि कार्यजातस्य कालैककारणत्वे युगपत्सर्वकार्याणामुद्भवः स्यात्। कालस्याविशेषात्। अतोऽकामेनापि कालातिरिक्ता तत्तत्कार्याणां तत्तत्कारणसामग्री विभिन्नैवाभ्युपेया। एवं च तयैव कार्यसंपत्तौ वृथा कालस्य कारणत्वकल्पना। अन्यथासिद्धत्वात्। आकाशवदिति चेन्न। कालस्य क्षणरूपेण विभिन्नत्वात्। तत्तत्कार्याणां तत्तत्कार्याव्यवहितपूर्ववृत्तिक्षण एव कारणमिति कार्यकारणभावे तेनैव कार्यसंपत्तौ अनेकसामग्रीणां तत्कल्पने गौरवात्। न चैकस्मिन् क्षण एव यदा नानाविधविचित्रकार्योत्पादः, तदा तत्र वैचित्र्यकारणमन्यदेवाभ्युपेयमिति वाच्यम्। कार्यसामग्र्यां समानायामप्येकस्मिन् क्षेत्रेऽधिकधान्यसंपत्तिरन्यस्मिंश्च न्यूनेति तद्वदत्राप्युपपत्तेः। क्वाचित्कत्वस्य सर्वत्र स्वभावत एव संभवात्। इति।

## ( स्वभाववादः )

अत्रापरः स्वभाववादी प्रत्यवतिष्ठते। सर्वमिदं स्वभावत एवोपपद्यते। अन्ततो गत्वा क्वाचित्कत्वं स्वाभाविकमिति वदता कालवादिनाऽपि स्वभावस्याभ्युपगमात्। तेनैव जगद्वैचित्र्यसिद्धौ

वृथा कालस्य कारणत्वकल्पना । वनस्पतीनामयं स्वभाव एव तत्तत्काले फलोत्पादकत्वम् । अन्यथा यस्मात्कस्मादपि यत्किंचिदपि फलजातं समुत्पद्येत । कालस्य सामान्यात् । प्रतिनियतस्वभावं हि सर्वं वस्तुजातं उपलभ्यते । न हि वह्निः कदाचिदनुष्णोऽपि संभाव्यते शर्करा वा कटुका । एकस्या एव बदर्याः कश्चन कण्टकस्तीक्ष्णः वक्रश्चान्यः सरलोऽतीक्ष्णश्चेत्यत्र किं वा स्वभावादन्यन्नियामकम् । एवमेव पुत्रादिपिण्डविषयेऽपि । एकस्य सौन्दर्यमपरस्य कुरूपत्वमित्यादिवैचित्र्यं न स्वभावमन्तरेण भवितुमर्हति । तदुक्तम्—

नित्यसत्त्वा भवन्त्येके नित्यासत्त्वाश्च केचन ।
विचित्राः केचिदित्यत्र तत्स्वभावो नियामकः ॥
वह्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः ।
केनेदं निर्मितं तस्मात्स्वभावात्तद्व्यवस्थितिः ॥ इति ।

अन्यत्रापि—स्वभावाव्यतिरेकेण गर्भबाल्ययुवादिकम् ।
यत्किंचिज्जायते लोके तदसौ कारणं किल ॥
सर्वे भावाः स्वभावेन स्वस्वभावे तथा तथा ।
वर्तन्तेऽथ निवर्तन्ते कामचारपराङ्मुखाः ॥
न विनेह स्वभावेन मुद्गपक्तिरपीष्यते ।
तथा कालादिभावेऽपि नाश्वमाषस्य सा यतः ।
अतत्स्वभावात्तद्भावेऽतिप्रसङ्गोऽनिवारितः ॥
तुल्ये तत्र मृदः कुम्भो न पटादीत्ययुक्तिमत् ।
कः कण्टकानां प्रकरोति तैक्ष्ण्यम् ।
विचित्रभावं मृगपक्षिणां च ॥
स्वभावतः सर्वमिदं प्रवृत्तम् ।
न कामचारोऽस्ति कुतः प्रयत्नः ॥
कण्टकस्य च तीक्ष्णत्वं मयूरस्य विचित्रता ।
वर्णाश्च ताम्रचूडानां स्वभावेन भवन्ति हि ॥
बदर्याः कण्टकस्तीक्ष्णो ऋजुरेकश्च कुञ्चितः ।
फलं च वर्तुलं तस्या वद केन विनिर्मितम् ॥ इति ।

असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् ।
शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥ इति ।

उत्पत्तेः प्राक्कार्यस्येदमेव सत्त्वं यत्कारणे तिरोभावो लयो वा । स्वभावो हि स्वस्य कारणस्य भावो धर्मो वा शक्तिर्वा । नहि तत् कार्यप्रागवस्थाया अन्यदिति तत्तत्स्वभावसापेक्ष एवायं कार्यकारणभाव इति सिध्यति । येऽपि नैयायिकादयः कार्यकारणभावनियमनचातुरीचतुरास्तेऽपि अन्वयव्यतिरेकालोचनेन तत्तत्स्वभावानामेव नियमानाविष्कुर्वन्ति । अन्यथा नियतपूर्ववर्तित्वेनाऽऽकाशकालादीनामपि कारणत्वमापद्येत । एतदेवानन्यथासिद्धत्वं नाम यत्कार्योत्पादानुकूलशक्तिमत्त्वम् । आकाशादीनामवकाशादिदानेन सर्वकार्यानुकूलशक्तिमत्त्वेऽपि कारणसामग्रीपरिग्रहमन्तरा तत्तद्विशिष्टकार्यादर्शनात् तच्छक्तेः सामान्यरूपतैवेति न तत्तद्विशिष्टकार्यनिरूपिता कारणता तेषां भवितुमर्हति । सा च घटस्य मृदः, पटस्य तन्तूनामित्येवंरूपेण स्वभावसहचरितैवेति स्वभाववाद एवान्ततः पर्यवसानम् । न चान्तरङ्गकारणसामग्र्यैव कार्यसिद्धौ किं स्वभावपर्यालोचनया इति वाच्यम् । अन्तरङ्गकारणसामग्र्याः स्वभावानतिरेकात् । सहकारिसमवधानासमवधाने चोभयोस्तुल्ये । ननु तर्हि सहकारिसमवधानसहितस्य तत्तद्वस्तुन एव कारणताऽस्तु, किमन्तर्गडुना स्वभावेनेति चेत् पूर्वपूर्वोपादानपरिणामानामेवोत्तरोत्तरोपादेयपरिणामहेतुत्वे नियामकाभावप्रसङ्गात् । अन्वयव्यतिरेकयोश्च ज्ञापकत्वेन नियामकत्वाभावात् । तत्सिद्धं स्वभावस्यैव जगद्वैचित्र्यकारणत्वम् ।

## ( नियतिवादः )

अत्रान्ये नियतिवादिनः प्रत्याशङ्कन्ते—

सत्यं स्वभावो जगद्वैचित्र्यनिर्वाहको भवेत्, यदि समानस्वभावानां सर्वथा समानफलजनकत्वं स्यात् । नतु तथाऽस्ति । तथाहि–मधुमासे न सर्वेऽप्याम्राः समानफलभाजो भवन्ति । न वा सर्वेऽपि संव्यवहारिणो धनिनो भवन्ति । न वौषधेन सर्वेषां समानो रोगनिवारणोपकारो भवति । नापि सर्वेऽपि पुत्रिणो वा निपुत्रिका मृतप्रजा वा भवन्ति । यदि स्वभाव एव नियामकस्तर्हि तु भक्ष्यत्वेनाभिमतानां पदार्थानां सर्वदा सर्वेषां रुचिकरत्वं स्यात् । तस्मादस्ति कश्चिन्नियतिरूपः पदार्थः । येन नियताः सर्वे भावास्तत्तत्कार्यकारिणो भवन्ति । एवमेव युद्धादिसमये सत्यामपि मरणसाधनसामग्र्यां न सर्वेऽपि म्रियन्ते । अतश्च नियतिरूपः कश्चन पदार्थो जगद्वैचित्र्यकारणमभ्युपेयः ।

तदुक्तम्—नियतेनैव रूपेण सर्वे भावा भवन्ति यत् ।
ततो नियतिजा ह्येते तत्स्वरूपानुवेधतः ॥

यद्यदेव यतो यावत्तत्तदेव ततस्तथा ।
नियतेर्जायते न्यायात् क एतां बाधितुं क्षमः ॥

इति । अनुमानमपीत्थम्— सर्वे भावा नियतिरूपनियामकतत्त्वोद्भवाः, सजातीयविजातीयव्यावृत्तस्वभावानुगतरूपेणैव प्रादुर्भावात्, नियतिकृतप्रतिनियतधर्मोपश्लेषाद्वा, मरणनियतभावेऽपि तीक्ष्णशस्त्राद्युपहतजीवनवत्, इति । न चाप्रयोजकः, यद्यस्मिन्काले यन्निमित्तात् यावद्देशव्यापि जायमानं कार्यं दृश्यते, तत्तस्मिन्काले तन्निमित्तात्तावद्देशव्यापि भवतीत्यनुकूलतर्कस्य विद्यमानत्वेन नियतरूपावच्छिन्नं प्रति नियतेरेव हेतुत्वात् । अन्यथा नियतरूपस्याऽऽकस्मिकत्वापत्तेः । ननु नैयत्यं स्वभावप्रयोज्यमेवेति स्वभावकारणवाद एव सिध्यतीति चेन्न, स्वभावस्य कार्यैकजात्यप्रयोजकत्वात् । नहि सर्वेषामाम्रफलानामौष्ण्येन समानः परिपाकः । तस्मादस्ति नैयत्यम् । ननु कार्यारम्भात्प्राक् तदज्ञानात् कार्ये प्रवृत्तिरेव न स्यादिति चेन्न, सामान्यकार्यकारणभावसंभावनयैव प्रवृत्तिसिद्धेः । फललाभस्तु यादृच्छिक एव । तस्माद्यद्भावि तद्भवत्येवेति निश्चयः ।

तदुक्तम्—यद्भाव्यं तद्भवत्येव नारिकेलफलाम्बुवत् ।
गन्तव्यं गमयत्येव गजभुक्तकपित्थवत् ॥
न चर्ते नियतिं लोके मुद्गपक्तिरपीष्यते ।
तत्स्वभावादिभावेऽपि नासावानियता मता ॥

अन्यत्र च—यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्तापरो नित्यं नरः शान्तिमुपैष्यति ॥
अवश्यं भाविभावानां प्रतिकारो भवेद्यदि
तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥ इति ॥

एवं च नियतिनियमितमिदं जगद्वैचित्र्यमिति सिध्दम् ।

( यदृच्छावादः )

एवमेव केचन यदृच्छावादिनो यदृच्छयैव सर्वमिदं विश्ववैचित्र्यमिति मन्यन्ते तेषामयमाशयः—नियतिस्वरूपस्य निरूपयितुमशक्यत्वात्, स्वभाववादस्य च निखिलवैचित्र्यनिर्वाहकत्वाभावात्, भूतवादस्य च स्वभावमन्तराऽनुपपन्नत्वादन्ततो गत्वा यदृच्छैव कारणमभ्युपेयम् । यथा बालक्रीडासु न कश्चन कार्यकारणभावः, केवलं तेषामिच्छैव तत्र नियामिका, तथा विश्वस्मिन् जगति वैचित्र्यनिर्माणमपि नान्यद्यदृच्छातः किमपि कारणमपेक्षते । अत्र च यदृच्छायाः स्वरूपं यदि पुरुषेच्छारूपं स्यात्, तदा तु कर्मस्वरूपमेव सिध्यति । प्राग्भवीयकर्मसंस्कारातिरिक्तदैवस्य केनाप्यनभ्युपगमात् । तत्र परमेश्वरेच्छायाः स्वातन्त्र्ये वैषम्यनैर्घृण्यप्रसङ्गात् परमेश्वरास्तित्वापादकप्रमाणाभावाच्च न सा पक्षो युक्तः ।

## ( ईश्वरास्तित्वनिराकरणपूर्वककर्मवादव्यवस्थापनम् )

नन्वस्ति परमेश्वरास्तित्वे प्रमाणमनुमानम् । तथाहि क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद्धटवत् इत्यनुमानम् । न च शरीराजन्यत्वेन सत्प्रतिपक्षितत्वम् । अप्रयोजकत्वात् । कार्यत्वस्य कृतिजन्यत्वव्याप्यत्वेन प्रकृतानुमाने हेतोरप्रयोजकत्वाभावात् इति चेन्न । विद्युदादिषु व्यभिचारात् । न च विद्युदादीनां पक्षान्तःपातित्वेन पक्षतावच्छेदकाक्रान्तत्वात्तत्रापि साध्यसिद्धिरिति वाच्यम् । तथा सति घटादीनामपि तथात्वेन दृष्टान्तोपादानासंभवात् । न च कुलालकृतिजन्यत्वस्य घटादौ प्रत्यक्षत्वेन न तस्य पक्षकोटौ प्रवेश इति सुलभो दृष्टान्तः, तादृशकृतेस्तु साध्यतावच्छेदकानाक्रान्तत्वात् । यदि दृष्टान्तानुसारेण कृतिजन्यत्वस्यैव साध्यत्वं न कृतेर्नित्यत्वादिविशेषापेक्षा । तदा तु यत्किमपि सामान्यं क्रियाजन्यत्वादिकमेव साध्यताम् । अलं कृत्या । तथाच कर्मजन्यत्वं सिध्येत्, तत्तु अस्माकमभीष्टमेव । कारणीभूतपरमाण्वादिकर्मद्वारैव सृष्ट्युत्पत्तेरस्माकमपीष्टत्वात् । किंच पक्षतावच्छेदकावच्छेदेन साध्ये साधयितव्ये जन्यत्वस्यैव पक्षतावच्छेदकत्वासिद्धौ पक्षतावच्छेदकहेत्वोरैक्यप्रसङ्गात् । तथा चोद्देश्यतावच्छेदकविधेययोरैक्यप्रसङ्गेनोपनयवाक्याच्छाब्दबोधानुपपत्तेः । अधिकं चात्रान्यतोऽवगन्तव्यम् । विस्तरभयान्नात्र प्रपञ्च्यते । तथा चेश्वरसाधकप्रमाणाभावान्निगमवाक्यानां चोपासनारूपक्रियापरत्वेन स्वार्थे तात्पर्याभावात् यथाकथंचित्सिद्धेऽपीश्वरे तस्य नानाविधाधिव्याधिघटितविश्वरचनायां स्वातन्त्र्ये च वैषम्यनैर्घृण्यप्रसङ्गाच्च कर्मैव कारणतयाऽभ्युपेयमकामेनापि ।

यस्तु परमाणुकारणवादः प्रकृतिकारणवादो वा, स सर्वोऽप्यनयैव रीत्या निरसनीयः । ये हि कार्यकारणभावविचक्षणा वैज्ञानिकास्तेऽपि पदार्थात्पदार्थान्तरोत्पत्तिमालोच्यैव एतदस्य कारणमिति निश्चिन्वते । तत्र कारणीभूतपदार्थस्य यत्कारणत्वं तत्तु तत्रत्यस्वाभाविकशक्त्यैव नान्यत इति स्वभाववाद एव तेषां पर्यवसानं भवति । एवमेव परमाणुपक्षे प्रकृतिपक्षे चेति नातिरोहितं विदुषाम् । अशक्तावपि कारणात्कार्यमुत्पद्येत, सर्वस्मात्सर्वोद्भवप्रसङ्गः । सोऽयं स्वभाववादो दुरतिक्रम इति तस्यैवाऽऽलोचनमवश्यं कर्तव्यम् । एते सर्वेऽपि वादाः श्वेताश्वतरोपनिषदि संग्रथिताः । तथाहि—

> कालः स्वभावो नियतिर्यदृच्छा ।
> भूतानि योनिः पुरुष इति चिन्त्यम् ।
> संयोग एषां न त्वात्मभावात् ।
> आत्माऽप्यनीशः सुखदुःखहेतोः ॥ इति ॥

एककस्य कारणत्वेऽनुपपन्नेऽपि सर्वेषां संयोगस्य कारणत्वं स्यादित्युदेत्याकाङ्क्षा । साऽपि संयोग एषां न त्वात्मभावात्, इत्यनेन निरस्ता । सर्वेषां संयोगश्चेत् स कुत्र भवेत् । यद्यात्मनि,

तर्हि तु तस्यापि स्वातन्त्र्येण कार्यकर्तृत्वं नास्तीत्युक्तम्। एतत्सहकारेणेति चेत् कृतमेभिः। कर्मजन्यापूर्वस्वीकारेण सर्वेषां गतार्थत्वात्। अतश्च केवलं स्वभाववाद एव पर्यालोचनीयः।

## (प्रकारान्तरेण स्वभाववादपर्यालोचनम्)

स्वभावतो निखिलमिदं विश्ववैचित्र्यमिति वादे हि स्वभावस्य गतिमत्त्वमस्ति न वा? नास्ति चेत्प्रस्तरवत् सर्वेषां भावानां संयोगेऽप्यकिंचित्करत्वात् तिलतण्डुलवत्केवलं संसृष्टिप्रसङ्गेन विचित्रभावान्तरोत्पत्त्यनुपपत्तिः। न हि बीजावापानन्तरं क्षेत्रे बीजेन वा जलेन वौष्ण्येन वा पार्थिवभागेन किंचिदपि व्यापाराकरणेऽङ्कुरोत्पत्तिः संभवति। सर्वेषां संसृष्टिरूपेणावस्थानं विना परिणामं स्यादिति कुतः कार्यवैचित्र्यम्। अत एवाऽऽधुनिका वैज्ञानिकाः सर्वत्र भावानां परस्परसंयोगानन्तरं कामपि परिणामफलिकां रासायनिकक्रियामभ्युपगच्छन्ति। तादृशक्रियाशालित्वं तु तेषां स्वभाव इति त्वन्यत्। एवं च स्वभावस्य सक्रियत्वे तेनैव जगद्वैचित्र्यनिर्वाहोपपत्तौ तदतिरिक्तस्वभावकारणवादोऽयं व्यर्थ एव। ननु स्वभावानङ्गीकारे क्रियासामान्यात् कथं वैचित्र्योपपत्तिः। यथा हि शालिबीजानां क्रिया तथैव गोधूमबीजानामिति गोधूमेभ्योऽपि शाल्युत्पत्तिः स्यात्। अतस्तत्तत्त्वघटकस्वाभाविकावयवानामपि कारणत्वमवश्यमभ्युपेयम्। एवं च तत्तदवयवानामयं स्वभाव एव यत्क्रियाद्वारा सजातीयकार्यारम्भण नाम इति चेन्न। अवयवानामपि कार्यत्वेन तत्र तादृशस्वभावाधानेऽपि किंचित्कारणस्यापेक्षणीयत्वेन पूर्वपूर्वावयवस्थस्वभावस्य कारणत्वं कल्पनीयं स्यात्। तथा च अनन्ततत्त्वस्वीकारापत्तेः। यद्यपि तत्त्वानां परिसंख्याने नैकमत्यम्। नवतिमारभ्यैकतत्त्वपर्यन्तं स्वस्वाभिलषितप्रक्रियया परिसंख्यानात्। तद्वरं तत्तत्परमाणूनां नित्यत्वस्वीकारेणानन्तपरमाणुद्वारा सृष्टेः प्रवाहरूपेणाखण्डत्वस्वीकरणम्। यथावापोद्वापाभ्यामन्वयव्यतिरेकाभ्यां वा साजात्यवैजात्यनिर्धारणेन तत्त्वेत्तया परिसंख्यानं वैज्ञानिकानामभिमतम्। तदा तु कतिपयतत्त्वैरेव तावत्स्वभावनियतैरनन्तवैचित्र्यनिर्माणस्य विना कर्मविपाकमनुपपत्तिरेव। सर्वेऽपि पदार्था घनद्रववायुरूपान्यतमस्वरूपाः, इति वर्गीकरणेऽपि घनपदार्थस्वभावादनन्तविचित्रस्वरूपा नानाविधगुणधर्मपरिणामादिगुणाः पदार्थाः कथं वा भवेयुः। घनस्वभावस्यैकरूपेण सामान्यात् कारणवैचित्र्यानुपपत्तेः। तद्वरं जडत्वात्सर्वेषां भावानां जडैकतत्त्ववादस्योरीकरणम्। इष्टापत्तौ तु तस्यापि गतिमत्त्वाभावे पुनश्च पूर्वोक्तापत्तिर्दुर्निवारा। अत एव जडप्रकृतिवादे सांख्ये योगे च प्रकृतेः प्रतिक्षणपरिणामित्वं गतिमत्त्वं चाभ्युपेतम्। तथा च पारमर्षं सूत्रम्—"प्रतिक्षणपरिणामिनो हि भावा विना चितिशक्तेः"। इति।

परमाणुवादेऽपि स्वभावतः परमाणूनां निष्क्रियत्वे कार्यानारम्भकत्वप्रसङ्गः। यद्यप्युत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति तेषां सिद्धान्तः। एवमुत्पत्तेः प्रागपि प्रलयकाले परमाणूनां निष्क्रियत्वम्, तथापि द्रव्यारम्भकाले परमेश्वरेच्छया वा तत्कृत्या वा सृज्यमानप्राणिकर्मवशाद्वा तत्र क्रिया त्वभ्युपगतैव। अत एव कर्मकारणवादोऽयं सर्वेषां वैज्ञानिकानां गले पतित एव।

तदिदं कर्म कार्यमुत्पादयद्द्रव्ये स्वजन्यपरिणाममाधायैव कार्यारम्भकं भवति। स च परिणामः प्रथमतोऽदृश्योऽपि सजातीयपरिणामसातत्येन कार्यरूपेण दृष्टो भवतीति कारणरूपाः कर्मपरिणामा अदृश्या एवेति सिध्यति । अत एव दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वम् । न ह्यत्र दावदाहेनोत्पन्नः कदलीकाण्डजननानुकूलः परिणामः केनापि केनचनापि यन्त्रादिसाधनेन प्रदर्शयितुं शक्यः । केवलं कार्यरूपेण दर्शनानन्तरमेवानुमातव्यः । एवमेवाऽऽधुनिकवैज्ञानिका अपि कार्यरूपमेव प्रदर्शयन्ति न कारणस्य क्रियाविपाकम् । अत एव क्रियाया अदृश्यपरिणामजननद्वारैव कार्योत्पादकत्वम् । न हि क्रिया स्वपरिणामजननरूपव्यापारमन्तरा कार्यमुत्पादयति । अतश्च कर्मणो व्यापारद्वारैव फलजनकत्वमिति सुष्ठूक्तं " चोदना पुनरारम्भः " । इति ।

## ( स्वभावस्य कर्मकार्यत्वम् )

ननु क्रियापि स्वभावनिरपेक्षैव यदि परिणाममुत्पादयेत्, तर्हि सर्वस्मात्सर्वोत्पत्तिप्रसङ्गो दुर्वारः । न हि तिलेभ्य एव तैलं नान्येभ्यः, तन्तुभ्यः एव पट इत्यादिनियमस्तदा भवितुमर्हति । अत एव " क्रिया हि द्रव्यं विनयति नाद्रव्यम् " इति नियमश्चाणक्येनोक्तः । न हि प्रयत्नसहस्रैरपि रासभो मनुष्यवत्कार्यकारित्वं नेतुं शक्यः । सत्यम् , यदि स्वभावः कारणगतकर्मविपाकातिरिक्तो भवेत् । कार्यानुकूलः कारणगतकर्मविपाक एव कारणस्य कार्यानुकूलः स्वभाव इति पूर्वपूर्वकर्मविपाकानामुत्तरोत्तरकार्यविपाकजनकत्वेऽनादिरेवाय कर्मप्रवाहः । अत एव " न कदाचिदनीदृशं जगत् " इति सिद्धान्तो मीमांसकानाम् । अनीदृशमिति प्रवाहरूपेण नित्यमित्यर्थः । अत एव—

> वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
> वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥

इति वेदानामनादित्वम् । तदेवमनादिसिद्धे कर्मविपाकप्रवाहे कस्य कर्मणः को विपाक इति प्रत्यक्षेणानुमानेन ज्ञातुमशक्यत्वादेव शाब्दप्रमाणस्य नित्यस्य पुरुषदोषशङ्काकलङ्करहितस्याभ्युपगमः । तत्र च तस्य सामर्थ्यं पूर्वं प्रदर्शितमेव ।

## ( आत्मसिद्धिः )

ननु अदृष्टपदवाच्योऽयं कर्मविपाकोऽपि न जगद्वैचित्र्यकारणं संभवति । तथाहि— कर्मविपाकरूपस्यादृष्टस्याऽऽश्रयतया किमपि स्थिरद्रव्यमस्ति न वा ? अस्ति चेत्कर्मविपाकस्याकिंचित्करत्वप्रसङ्गः । कर्मणा विपाके जनयितव्ये द्रव्ये किमपि गुणाधानं दोषापनयनं वा कर्तव्यम् । नो चेद्विपाकोऽपि न स्यात् । अन्ततो गत्वा विपाकरूपगुणस्तु आधेय एव । एवं च विपाकरहितं पूर्वद्रव्यं विपाकेन विकृतमिति पूर्वद्रव्यनाशः उत्तरद्रव्योत्पत्तिश्चेति विपाकोऽयं द्रव्याणां क्षणिकत्व-

तर्हि तु तस्यापि स्वातन्त्र्येण कार्यकर्तृत्वं नास्तीत्युक्तम् । एतत्सहकारेणेति चेत् कृतमेभिः । कर्मजन्यापूर्वस्वीकारेण सर्वेषां गतार्थत्वात् । अतश्च केवलं स्वभाववाद एव पर्यालोचनीयः ।

### ( प्रकारान्तरेण स्वभाववादपर्यालोचनम् )

स्वभावतो निखिलमिदं विश्ववैचित्र्यमिति वादे हि स्वभावस्य गतिमत्त्वमस्ति न वा ? नास्ति चेत्प्रस्तरवत् सर्वेषां भावानां संयोगेऽप्यकिंचित्करत्वात् तिलतण्डुलवत्केवलं संसृष्टिप्रसङ्गेन विचित्रभावान्तरोत्पत्त्यनुपपत्तिः । न हि बीजावापानन्तरं क्षेत्रे बीजेन वा जलेन वौष्ण्येन वा पार्थिवभागेन किंचिदपि व्यापाराकरणेऽङ्कुरोत्पत्तिः संभवति । सर्वेषां समृष्टिरूपेणावस्थानं विना परिणामं स्यादिति कुतः कार्यवैचित्र्यम् । अत एवाऽऽधुनिका वैज्ञानिकाः सर्वत्र भावानां परस्परसंयोगानन्तरं कामपि परिणामफलिकां रासायनिकक्रियामभ्युपगच्छन्ति । तादृशक्रियाशालित्वं तु तेषां स्वभाव इति त्वन्यत् । एवं च स्वभावस्य सक्रियत्वे तेनैव जगद्वैचित्र्यनिर्वाहोपपत्तौ तदतिरिक्तस्वभावकारणवादोऽयं व्यर्थ एव । ननु स्वभावानङ्गीकारे क्रियासामान्यात् कथं वैचित्र्योपपत्तिः । यथा हि शालिबीजानां क्रिया तथैव गोधूमबीजानामिति गोधूमेभ्योऽपि शाल्युत्पत्तिः स्यात् । अतस्तत्तत्त्वघटकस्वाभाविकावयवानामपि कारणत्वमवश्यमभ्युपेयम् । एवं च तत्तदवयवानामयं स्वभाव एव यत्क्रियाद्वारा सजातीयकार्यारम्भण नाम इति चेन्न । अवयवानामपि कार्यत्वेन तत्र तादृशस्वभावाधानेऽपि किंचित्कारणस्यापेक्षणीयत्वेन पूर्वपूर्वावयवस्थस्वभावस्य कारणत्वं कल्पनीयं स्यात् । तथा च अनन्ततत्त्वस्वीकारापत्तेः । यद्यपि तत्त्वानां परिसंख्याने नैकमत्यम् । नवतिमारभ्यैकतत्त्वपर्यन्तं स्वस्वाभिलषितप्रक्रियया परिसंख्यानात् । तद्वर तत्तत्परमाणूनां नित्यत्वस्वीकारेणानन्तपरमाणुद्वारा सृष्टेः प्रवाहरूपेणाखण्डत्वस्वीकरणम् । यथावापोद्वापाभ्यामन्वयव्यतिरेकाभ्यां वा साजात्यवैजात्यनिर्धारणेन तत्त्ववेत्तया परिसंख्यानं वैज्ञानिकानामभिमतम् । तदा तु कतिपयतत्त्वैरेव तावत्स्वभावनियतैरनन्तवैचित्र्यनिर्माणस्य विना कर्मविपाकमनुपपत्तिरेव । सर्वेऽपि पदार्था घनद्रववायुरूपान्यतमस्वरूपाः, इति वर्गीकरणेऽपि घनपदार्थस्वभावादनन्तविचित्रस्वरूपा नानाविधगुणधर्मपरिणामादिगुणाः पदार्थाः कथं वा भवेयुः । घनस्वभावस्यैकरूपेण सामान्यात् कारणवैचित्र्यानुपपत्तेः । तद्वरं जडत्वात्सर्वेषां भावानां जडैकतत्त्ववादस्योरीकरणम् । इष्टापत्तौ तु तस्यापि गतिमत्त्वाभावे पुनश्च पूर्वोक्तापत्तिर्दुर्निवारा । अत एव जडप्रकृतिवादे साङ्ख्ये योगे च प्रकृतेः प्रतिक्षणपरिणामित्वं गतिमत्त्वं चाभ्युपेयम् । तथा च पारमर्षं सूत्रम्—" प्रतिक्षणपरिणामिनो हि भावा विना चितिशक्तेः " । इति ।

परमाणुवादेऽपि स्वभावतः परमाणूनां निष्क्रियत्वे कार्यानारम्भकत्वप्रसङ्गः । यद्यप्युत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति तेषां सिद्धान्तः । एवमुत्पत्तेः प्रागपि प्रलयकाले परमाणूनां निष्क्रियत्वम्, तथापि द्व्यणुकारम्भकाले परमेश्वरेच्छया वा तत्कृत्या वा सृज्यमानप्राणिकर्मवशाद्वा तत्र क्रिया त्वभ्युपगन्तव्य । अत एव कर्मकारणवादोऽयं सर्वेषां वैज्ञानिकानां गले पतित एव ।

तदिदं कर्म कार्यमुत्पादयद्द्रव्ये स्वजन्यपरिणाममाधायैव कार्यारम्भकं भवति। स च परिणामः प्रथमतोऽदृश्योऽपि सजातीयपरिणामसातत्येन कार्यरूपेण दृष्टो भवतीति कारणरूपाः कर्मपरिणामा अदृश्या एवेति सिध्यति । अत एव दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वम् । न ह्यत्र दाववदाहेनोत्पन्नः कदलीकाण्डजननानुकूलः परिणामः केनापि केनचनापि यन्त्रादिसाधनेन प्रदर्शयितुं शक्यः । केवलं कार्यरूपेण दर्शनानन्तरमेवानुमातव्यः । एवमेवाऽऽधुनिकवैज्ञानिका अपि कार्यरूपमेव प्रदर्शयन्ति न कारणस्य क्रियाविपाकम् । अत एव क्रियाया अदृश्यपरिणामजननद्वारैव कार्योत्पादकत्वम् । न हि क्रिया स्वपरिणामजननरूपव्यापारमन्तरा कार्यमुत्पादयति । अतश्च कर्मणो व्यापारद्वारैव फलजनकत्वमिति सुष्ठूक्तं " चोदना पुनरारम्भः " । इति ।

## ( स्वभावस्य कर्मकार्यत्वम् )

ननु क्रियापि स्वभावनिरपेक्षैव यदि परिणाममुत्पादयेत्, तर्हि सर्वस्मात्सर्वोत्पत्तिप्रसङ्गो दुर्वारः। न हि तिलेभ्य एव तैलं नान्येभ्यः, तन्तुभ्यः एव पट इत्यादिनियमस्तदा भवितुमर्हति । अत एव " क्रिया हि द्रव्यं विनयति नाद्रव्यम् " इति नियमश्चाणक्येनोक्तः । न हि प्रयत्नसहस्रैरपि रासभो मनुष्यवत्कार्यकारित्वं नेतुं शक्यः । सत्यम् , यदि स्वभावः कारणगतकर्मविपाकातिरिक्तो भवेत् । कार्यानुकूलः कारणगतकर्मविपाक एव कारणस्य कार्यानुकूलः स्वभाव इति पूर्वपूर्वकर्मविपाकानामुत्तरोत्तरकार्यविपाकजनकत्वेऽनादिरेवायं कर्मप्रवाहः । अत एव " न कदाचिदनीदृशं जगत् " इति सिद्धान्तो मीमांसकानाम् । अनीदृशमिति प्रवाहरूपेण नित्यमित्यर्थः । अत एव—

वेदस्याध्ययन सर्व गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥

इति वेदानामनादित्वम् । तदेवमनादिसिद्धे कर्मविपाकप्रवाहे कस्य कर्मणः को विपाक इति प्रत्यक्षेणानुमानेन ज्ञातुमशक्यत्वादेव शाब्दप्रमाणस्य नित्यस्य पुरुषदोषशङ्काकलङ्करहितस्याभ्युपगमः । तत्र च तस्य सामर्थ्यं पूर्वं प्रदर्शितमेव ।

## ( आत्मसिद्धिः )

ननु अदृष्टपदवाच्योऽयं कर्मविपाकोऽपि न जगद्वैचित्र्यकारणं सम्भवति । तथाहि— कर्मविपाकरूपस्यादृष्टस्याऽऽश्रयतया किमपि स्थिरद्रव्यमस्ति न वा ? अस्ति चेत्कर्मविपाकस्याकिंचित्करत्वप्रसङ्गः । कर्मणा विपाके जनयितव्ये द्रव्ये किमपि गुणाधान दोषापनयन वा कर्तव्यम् । नो चेद्विपाकोऽपि न स्यात् । अन्ततो गत्वा विपाकरूपगुणस्तु आधेय एव । एवं च विपाकरहितं पूर्वद्रव्यं विपाकेन विकृतमिति पूर्वद्रव्यनाश उत्तरद्रव्योत्पत्तिश्चेति विपाकोऽयं द्रव्याणा क्षणिकत्व-

मेव साधयति । एवं च वैदिककर्मणामपि फलोत्पत्तिपर्यन्तं विपाकजनकत्वे स्थायिनो द्रव्यस्य भोक्तृरूपस्याभावाज्जनितोऽपि विपाकः कस्य वा फलं विदध्यात्, इति चेन्न । गुणभूतानामदृष्टानामुपचयापचयेऽपि स्वभावसिद्धस्थायिनो द्रव्यस्याङ्गीकारात् । ननु किमिदं स्थायित्वं, किं गुणोपचयापचयाभ्यामपि स्वभावादप्रच्युतत्वं वाऽसङ्गत्वं वा ? उभयथापि भोगासंभवः, भोगस्यादृष्टकार्यत्वेन समानाधिकरणत्वात् । तत्र यद्यदृष्टमेवाऽऽश्रयेण सह संबन्धं न कुर्यात्, तत्कुतस्तत्कार्यसंबन्धसंभवः । न चादृष्टस्याऽऽश्रयेण सह संबन्धस्वीकारादिदमसांप्रतमिति वाच्यम् । संबन्धो हि संबन्धिनः किंचिद्गुणाधानं वा दोषापनयं वा कुर्वन्नेव भवतीति स्वभावाद्च्युतस्यासङ्गस्य वा तस्यादृष्टेन सह संबन्धासंभवात् । ननु यथा घटस्य पाकादिना कृष्णवर्णापगमे रक्तवर्णोत्पत्तौ च सत्यामपि स एवायं घटः, तदेवेदमाम्रफलमित्यादौ प्रत्यभिज्ञावशाद्यथा स्थिरद्रव्यं घटकतया सिध्यति, तथात्रापि स्यादिति चेन्न । तथा सति बाल्यस्थाविरशरीरयोरप्येकत्वप्रसङ्गः । न चात्र घटकद्रव्यस्योपचयापचययोः प्रत्यक्षत्वान्न तथा । घटाम्रफलादिषु च तदभावात्स्यात्स्थिरद्रव्यसिद्धिरिति वाच्यम् । घटकद्रव्यस्योपचयापचयवत् गुणाधानदोषापनययोरपि पदार्थभेदकत्वात् । सोऽयं घटः, तदेवेदमाम्रफलमित्यादिप्रत्यभिज्ञा तु प्रदीपवत् वह्निज्वालावद्वा सादृश्यमूलिकेति न तथा स्थायिद्रव्यसिद्धिरिति चेन्न । कर्मजन्यपरिणामस्य द्रव्यसंबन्धेऽपि द्रव्यान्तरानुत्पादात् । तथा हि द्विविधो हि परिणामः कर्मणः । द्रव्यान्तरोत्पादकः, द्रव्यस्यैवावस्थान्तरोत्पादकश्च । वेत्रबीजे दाहजन्यः परिणामो द्रव्यान्तरोत्पादकः । गोमये वृश्चिकोत्पादकोऽपि परिणामो द्रव्यान्तरोत्पादकः । घटे आम्रफले च पाकजो वा प्रस्तरमणिमालाघर्षणजो वा परिणामोऽवस्थान्तरोत्पादकः । यदि सर्वत्रैव पूर्वद्रव्यनाशपूर्वकं द्रव्यान्तरोत्पादकत्वमेव परिणामस्य स्वीक्रियेत, परिणामस्यैवानुपपत्तिः स्यात् । यस्मिन्द्रव्ये परिणामः कर्तव्यः तस्य नाशे द्रव्यान्तरोत्पादकद्रव्याभावात् परिणामस्यापि नाशापत्तेः । अत उपादानोपादेययोर्मध्ये घटकद्रव्यं समानमेव स्थिरतयोरीकर्तव्यम् । यत्रापि तत्त्वान्तरोत्पत्तिर्गोमयवृश्चिकादिषु, तत्रापि वृश्चिकशरीरारम्भकपरमाणूनां गोमये सत्ताऽवश्यमुभ्युपेया । अन्यथा कार्यकारणभावो न स्यात् । तथापि कार्यस्य कारणापेक्षयाऽत्यन्तविभिन्नकार्यकारित्वात्तत्र कारणस्थूलद्रव्यापेक्षया कार्यस्य विभिन्नत्वमङ्गीक्रियते । न तथा वृश्चिकाद्वृश्चिकोत्पत्तौ । अतो यत्र विजातीयकार्यदर्शनं तत्र द्रव्यान्तरजनकत्वम् । यत्र तु कार्यस्य न विजातीयत्वम्, तत्र परिणामस्य न द्रव्यान्तरजनकत्वमपि तु अवस्थान्तरजनकत्वमिति विशेषः । सर्वथा तु कर्मपरिणामस्य स्थायिद्रव्यं विनाऽनुपपत्त्या कर्मपरिणामशालि अविनाशि किंचित् कार्यकारणयोर्द्वयोरपि घटकं स्थायिद्रव्यमवश्यमभ्युपेयम् । तदन्तरा विश्वरचनानुपपत्तेः । एवं तद्द्रव्यमेकमनेकं वा भवतु, न तत्रास्माकं विप्रतिपत्तिः । वर्गीकरणस्वेच्छिकत्वात । भावोऽभावश्चेति पदार्थद्वयस्याभ्युपगमेऽपि न काचिद्धानिः । तत्राप्यभावस्य प्रतियोगिसापेक्षभावस्वरूपानतिरिक्तत्वे तु भावात्मकैकद्रव्यवादोऽपि सूपपन्नो भवितुमर्हति । भावस्वरूपं तु

प्रमाणानुसारेण निश्चेतन्यम् । तच्च पूर्वोक्तरीत्या कर्मशाले तादृपाकभागाते सिध्यति । नौपनिष-दानामिवासङ्गं निष्क्रियं निरञ्जनं चेति नातिरोहितं विदुषाम् ।

ननु भवतु तादृशं भावस्वरूपं, प्रकृते किमायातमिति चेदिदमेवाऽऽयातं यच्छरीरकृतकर्मणा-मपि विपाकः शरीरातिरिक्तस्थिरभावेऽभ्युपेयः । स च भाव एव कर्मफलभोक्ता, स चाऽऽत्मेति शरीरातिरिक्तकर्मफलभागात्मासिद्धिः पुनर्जन्म चेति ।

ननु नास्ति शरीरातिरिक्त आत्मा कर्मफलभोक्ता न-वा पुनर्जन्म । प्रत्यक्षेणानुपलम्भात् पूर्वोक्तकर्मविपाकेन सिद्धस्य स्थायिभावस्य शरीरघटकत्वेन तन्नाशादेव नाशादिति चेन्न । विद्यादि-संस्काराणां शरीरेऽदृश्यमानत्वात् । शरीरान्तर्गतज्ञानतन्तुषु तदभ्युपगमे तु शरीरोपचयापचयाभ्यां तेषामप्युपचयापचयस्य प्रत्यक्षत्वात् तदव्यभिचारिज्ञानादीनां तु तथा उपचयापचयाभावात् । किंच मनुष्यकृतविद्यासंस्कारा यदि ज्ञानतन्तुष्वेव, तर्हि बुद्धिमत्त्वाबुद्धिमत्त्वकृतो विशेषो मनुष्येषु न दृश्येत, तथैव विद्वत्त्वाविद्वत्त्वे अपि । किंच सर्वेषां सर्वविद्यासु निष्णातत्वाभावदर्शनात्ततोऽपि न ज्ञानतन्तूनां तादृशसंस्काराधारत्वम् । किंतु व्यञ्जकत्वमेव । ते च संस्कारास्तदतिरिक्तबुद्ध्यादिभावेष्वेवेति निश्ची-यते । बुद्ध्याविभावश्चाऽऽत्मगुण एवेत्यात्मन्येव तेषां प्रादुर्भावो नान्यत्र । किंच शरीरातिरिक्त आ-त्माऽवश्यमभ्युपेयः । नो चेद्बाल्ये विद्याभ्यासादिप्रवृत्त्यनुपपत्तिः स्यात् । न हि बालशरीरमेव यौवने वार्धके वा वर्तते । तद्घटकद्रव्यस्योपचयापचययोः प्रत्यक्षत्वात् । घटकद्रव्यस्योपचयापचयाभ्यां शरीरनाशस्य सिद्धत्वात् । न च पूर्वघटकद्रव्यस्योत्तरकार्यारम्भकत्वेन कारणगुणा हि कार्यगुणाना-रभन्त इति न्यायेन पूर्वद्रव्यस्थितविद्यादिसंस्कारस्याप्युत्तरशरीरे विद्यादिसंस्कारोत्पादकत्वं स्यादिति वाच्यम् । तादृशसंस्कारवत्त्वे कथंचित्सिद्धेऽपि योऽहं बाल्ये पितरावन्वभवम्, स एवाहं स्थविरे प्रणप्तृ-ननुभवामीति पूर्वापरानुसंधानासंभवात् । पूर्वसंस्काराणामुत्तरोत्तरसजातीयसंस्कारोत्पादकत्वे तु माता-पितृशरीरगतसंस्काराणामपि तथात्वप्रसङ्गात् । इष्टापत्तिरिति चेल्लब्धवर्णस्यापि विदुषः पितुः पुत्रे मूर्खत्वं किंमूलकं स्यात् । किं बहुना मूर्खस्यापि पितुः पुत्रो विद्वान् विदुषश्च मूर्खः । समानेऽपि पुत्रत्वे एकस्य मूर्खत्वमपरस्य वैदुष्यमित्यनुभवस्यानुपपत्तिः स्यात् । तस्मादस्ति शरीरातिरिक्तो नित्यः कश्चन कर्मसंस्कारभागात्मपदार्थः । यत्र प्राग्भवीयाः संस्कारा अदृष्टपदवाच्या भवन्ति । येन तद्विरोधिसंस्कारस्य प्रयत्नसहस्रैरप्यनुदय इत्यकामेनाप्यभ्युपगन्तव्यम् ।

किंच पदार्थदर्शनानन्तरं तत्प्रासंनिधावपि किं बहुना तन्नाशेऽपि तादृशाकारभानं यन्मनसि जायते तदनुकूलसंस्कारास्त्वप्यवश्यमभ्युपेयत्वेन तत्रापि शरीरान्तर्गतभागे तत्स्वीकारे शरीरोपचया-पचयाभ्यां तदुपचयापचयप्रसङ्गो दुर्वारः । ततोऽप्यस्ति कश्चन शरीरातिरिक्तः पदार्थः, तत्संस्काराधार-भूत इति सिध्यति । वेदप्रामाण्यात्त्वर्थापत्त्या कर्मफलभोक्ता शरीरातिरिक्त आत्मा सिध्यतीति नाति-

रोहितम् । एतत्सर्वमभिप्रेत्यैवोक्तं शास्त्रदीपिकायाम्—किं पुनः शरीरातिरिक्तात्मसद्भावे प्रमाणम् ? प्राणनादिलिङ्गं सुखादयश्च । प्राणनादिशब्देन कोष्ठ्यस्य वायोरूर्ध्वाधोगमनवृत्तिविशेषस्य प्राणनादिशब्दवाच्यस्य हेतुभूतः प्रयत्न उच्यते । स च सुखादयश्च न शरीरधर्माः संभवन्ति । अयावच्छरीरभावित्वात् । ये हि कार्यद्रव्यवर्तिनो विशेषगुणा रूपादयः, ते विरोधिगुणान्तराद्वा कार्यद्रव्यविनाशाद्वा विनश्यन्ति । प्राणनादयस्तु तदभावेऽपि नश्यन्ति मृतावस्थायामिति न शरीरगुणाः । तथा ज्ञानमप्ययावच्छरीरभावित्वादेव न शरीरधर्मः । तथा ये प्रत्यक्षविषयाः शरीरगुणास्ते स्वयमिव परैरपि प्रत्यक्षेण गृह्यन्ते यथा रूपादयः । सुखादयस्तु प्रत्यक्षा अपि सन्तो न परप्रत्यक्षग्राह्याः । तस्मान्न शरीरगुणाः । तदिदमपि द्वयं सुखादीनां शरीरगुणत्वं निवारयदन्यगुणतां सूचयति । योऽसावन्यः स आत्मा । किंच सर्व एव विशेषगुणाः कारणेऽपि वर्तमाना एव कार्यद्रव्यगुणतां भजन्ते । न च शरीरकारणभूतेषु पार्थिवपरमाणुषु चैतन्यमस्तीति कथं शरीरगुणता चैतन्यस्य स्यात् । तस्मादन्यश्चेतन इति ।

अधिकं चात्र श्लोकवार्तिकायाकरग्रन्थेभ्योऽवसेयम् । नात्र प्रपञ्च्यते । किं बहुना शरीरातिरिक्तात्मवादे सर्वेऽपि दार्शनिकाः प्रायः सन्नद्धा एवेति तत एव स वादो द्रष्टव्यः । तेषामुपपत्तिनिरासमन्तरा कस्याप्याधुनिकनास्तिकवादस्य न स्थितिरिति सुधीभिरूह्यम् ।

यत्तु यदि शरीरातिरिक्तो नित्यः कर्मविपाकशाली कर्ता भोक्ता चेतनश्चाऽऽत्मा स्यात्, फलभोगकाले मया कृतस्यास्य कर्मण इदं फलमनुभूयत इदानीमित्यनुसंदधीत । न चानुसंधत्त इति नातिरिक्त आत्मेति केषाञ्चित्प्रलपनम्, तत्त्वात्मवादारम्भ एव प्रथमतो भट्टपादैर्निरस्तम् । प्रवृत्तावपि न तादृशपरामर्शो निदानम्, किंतु केवलं कर्मणो नित्ये कस्मिंश्चिद्द्रव्येऽदृष्टसंस्कारजनकत्वात्तस्य च भोगमन्तराऽनिवृत्तेर्मदीयकर्मणोऽपि तथात्वात् फलावश्यंभाव इति ज्ञानमेव प्रवृत्तिनिवृत्तिकारणम् । तत एव तदुपपत्तौ तादृशानुसंधानस्याकिंचित्करत्वम् । एतत्सर्वमभिप्रेत्यैव उक्तं सिद्धान्तचन्द्रिकायाम्—

नन्वस्तु नित्यत्वमात्मनः । तथापि मयैव कर्मकाले कृतस्यामुष्य कर्मणः फलमिदं मया भुज्यत इत्यपरामृशतः कर्मण्यनुरागाभावान्नानुष्ठानं स्यात् । तथा स्वोपयोगे परोपयोगे वा न कश्चिद्विशेषः स्यात् । यो ह्यस्य कर्मणः फलसाधनत्वं फलकालेऽनुसंधास्यामीति निरूपयति, स कर्मानुतिष्ठति नान्यः । स निषिद्धमपि न वर्जयेत् । ततश्चानित्यपक्षे नित्यपक्षेऽपि आत्मनः कृतनाशाकृताभ्यागमौ स्यातामिति । यथाऽऽहुर्भट्टपादाः—

नित्यः कर्तृत्वभोक्तृत्वे प्रतिपन्नोऽपि सन् यदा ।
न कर्मकालस्मरणं फलकाले च बुध्यते ॥

मया यद्यत्कृतं कर्म तस्येदं भुज्यते फलम् ।
शुभाशुभं मयैवेति तदा कोऽस्य रसो भवेत् ॥
अपरामृश्यमाने हि स्वकर्मप्रत्यये फले ।
न विशेषो भवेत्कश्चित्स्वपरात्मोपभोगयोः ॥
कुर्वन्नप्यशुभं कर्म तेनैवं चिन्तयेन्नरः ।
न स्मरिष्यामि भोगेऽहमिति नैतद्विवर्जयेत् ॥
तत्र नित्यत्वपक्षेऽपि कृतनाशाकृतागमौ ।
फलतस्तुल्यरूपौ चेद्व्यथा तत्प्रतिपादनम् ॥ इति ॥

नैष दोषः । भोगकालीनस्मृतेः कर्मणि प्रवृत्तौ वा निवृत्तौ वा न कश्चिदुपयोगः । भोगस्य प्रवृत्त्युत्तरकालीनत्वात् । यस्तु प्रवृत्त्यङ्गभूतः शास्त्रतः फलसाधनत्वपरामर्शः, स प्रवृत्तेः पूर्वमस्त्येव । भोगकालेऽपि विदुषामस्त्येव परामर्शः । अविदुषां तु तदभावेऽपि न दोषः ।

यथाऽऽहुः—नैष दोषो न भोगे हि स्मृतिर्न उपयुज्यते ।
न प्रवृत्तिर्निवृत्तिर्वा भोगकाले स्मृतेर्भवेत् ॥
तदङ्गं यः परामर्शस्तदस्तित्वं च मृग्यते ।
प्राक्प्रवृत्तेश्च सोऽस्त्येव विदुषां शास्त्रतः स्फुटः ॥
भोगकालेऽपि शास्त्रज्ञा विमृशन्त्येव केचन ।
तेषामेवाधिकारश्च माभूदविदुषां हि सः ॥ इति

अनेन चेदं स्पष्टमवगम्यते यत्कर्मणो भोगकाले साधनत्वपरामर्शस्य प्रवृत्तौ नापेक्षा, किंतु प्रवृत्तेः प्राक् शास्त्रीयज्ञानजन्यः कार्यकारणभाव एव । अत एव वैद्यकशास्त्रे रोगनिदानानि । नाहि तेषां रोगकाले अस्मात्कारणादयं रोग इति सर्वेषां परमर्शोऽस्ति । शास्त्रवासनावासितान्तःकरणाना तु स भवति । अत एव शारीरकाज्ञानिनां केषांचिज्ज्ञानिनामपि रोगनिदानक्रियायामपि प्रवृत्तिः सर्वत्रोपलभ्यते । आधुनिका डॉक्टरपदवाच्या वैद्या अपि राजयक्ष्मगृहीताः तन्निदानभूतं कर्मानेनैव शरीरेण कृतं न परामृशन्ति । किमुत प्राक्तनम् । कर्मजन्यपरिणामानामयमेव स्वभावो यददृष्टरूपेणैव कार्यारम्भकत्वम् । अत एव फलकाले न परामर्शः । किं बहुना सर्वत्रादृष्टरूपेण फलवैचित्र्यापादकत्वादेव कर्मणो जगद्वैचित्र्यमिति सिद्धः कर्मविपाकवादः । कर्मफलभोक्ता नित्यश्चेतनशक्तिमानात्मा च शरीरातिरिक्तः ।

## ( शरीरात्मवादनिरासः )

ननु न चैतन्यं भूतातिरिक्तम्। भूतेष्वेव दर्शनात। यद्धि यत्र दृश्यते तत्तस्यैव धर्म, यथा रूपादय । दृश्यते च शरीरे चैतन्यम्। शरीर च भूतसघा । तस्माच्चैतन्यमपि भूतसघातधर्म । किण्वादिद्रव्यसघातजन्यमदशक्तिवत्। एव ज्ञानेच्छाकृत्यादयोऽपि । तदुक्तम्—

किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥

इति चेन्न। भूताना निष्क्रियत्वे तदनुपपत्ते । रासायनिकक्रियावत्कर्मवत्त्वे तु तदनुकूलशक्तिमतिरिक्तद्रव्यसिद्धे । ननु नैकस्य द्रव्यस्य सा शक्ति । प्रत्येकमनुपलम्भात्। यथा हि नैकस्मिन् आक्सिजनवायौ वा हैड्रोजनवायौ वा द्रवत्वस्नेहादिशक्ति । तथापि तत्सघाते सोपलभ्यते। तथैव भूतेषु प्रत्येक चैतन्याभावेऽपि सघाते चैतन्यशक्ति स्यादिति चेन्न । सघातस्योपचयापचयवत्त्वेन चैतन्यस्यापि तत्प्रसङ्गात्। न च दीपवदस्योपचयापचयवत्त्वमिति वाच्यम्। तथा सति प्रतिक्षण भिन्नत्वेन बाल्यानुभवस्य तारुण्ये वार्धके वा स्मरणानुपपत्ते । यदि च बौद्धमतवत्क्षणिकत्वेऽपि पूर्वपूर्ववासनानामुत्तरोत्तरसक्रमणात् तदुपपत्ति । तर्हि तु स्थिरद्रव्यस्य कस्याप्यभावात् कर्मसस्कारसक्रमणासभव । किं च ज्ञानेच्छाकृतीना सामानाधिकरण्येनैवानुभवात् क्षणिकचैतन्यवादे च ज्ञातु कर्तुश्च चिरकालावस्थानासभवेनैकत्वाभावात् कर्मणामनुदयापत्ति । अत एवोक्त कुसुमाञ्जलौ—

कर्तृधर्मानियन्तारश्चेतिता च स एव नः ।
अन्यथाऽनपवर्गः स्यादससारोऽथवा ध्रुव ॥ इति

किं च स्वर्गोऽपवर्गश्च सर्वथा प्रवृत्तिरुपलभ्यते । न ह्यात्मन क्षणिकचैतन्यरूपत्वे एकस्यैव कर्तृभोक्तृत्वे सभवेताम् । ततोऽप्यससारापत्ति कर्मोच्छेदप्रसङ्गात् ।

न हि भूतानां समुदायपर्यवसितं चैतन्यम् । प्रतिदिन तस्यान्यत्वे पूर्वपूर्वदिवसानुभूतस्यास्मरणप्रसङ्गात् । नापि प्रत्येकपर्यवसितम् । करचरणाद्यवयवापाये तदनुभूतस्य स्मरणायोगात् । नापि मृगमदवासनेव वस्त्रादिषु संसर्गादन्यवासनाऽन्यत्र सक्रामति । मात्राऽनुभूतस्य गर्भस्थेन भ्रूणेन स्मरणप्रसङ्गात् । न चोपादानोपादेयभावनियमो गतिः । स्थिरपक्षे परमाणूना तदभावात् । खण्डावयविन प्रति च विच्छिन्नानामनुपादानात् । पूर्वसिद्धस्य चावयविनो विनाशात् ।

## ( क्षणभङ्गवादनिरासः )

अस्तु तर्हि क्षणभङ्गः । न चातिशयोऽप्यतिरिच्यते । किंतु सादृश्यतिरस्कृतत्वाद्भ्रागेव तद्विकल्प्यते । कार्यदर्शनाबध्यवसीयते अन्त्यातिशयवत् । तथाच भूतान्येव तथा तथा चोत्पद्यन्ते यथा यथा प्रतिसंधाननियमादयोऽप्युपपद्यन्ते । क्षणिकत्वासिद्धावेवमेतत् । तदेव त्वन्यत्र विस्तरेण प्रतिषिद्धमिति ।

सोऽयं क्षणिकचैतन्यवादो भट्टपादैरात्मवादे विस्तरेणैव निरस्त । दिङ्मात्रमत्रोपस्थापयामः ।

ज्ञानानां क्षणिकत्वाद्धि कर्तृभोक्त्रन्यता भवेत् ।
निष्क्रियत्वाविभुत्वाभ्यां न च देहान्तराश्रितिः ॥
कर्ता य एव संतानो ननु भोक्ता स एव नः ।
विज्ञानक्षणभेदस्तु त्वदवस्थान्तरैः समः ॥
कर्तृत्वमेव दुःसाधं दीर्घकालेषु कर्मसु ।
सत्सु ज्ञानसहस्रेषु कुलकल्पोपमं हि तत् ॥
व्यतिरिक्तो हि संतानो यदि नाभ्युपगम्यते ।
संतानिनामनित्यत्वात्कर्ता कश्चिन्न लभ्यते ॥
भोक्तुरत्यन्तभेदाच्च प्रसज्येताकृतागमः ।
कृतनाशं च न ब्रूमः कृतं नैव हि केनचित् ।
संतानानन्यतायां तु वाचो युक्त्यन्तरेण ते ।
तत्र चोक्तं न चावस्तु संतानः कर्तृता व्रजेत् ॥
संतानक्षणिकत्वे च तदेवाक्षणिकस्त्वथ ।
सिद्धान्तहानिरेवं च सोऽपि द्रव्यान्तरं भवेत् ॥
एका चाव्यतिरिक्ता च संतानिभ्योऽथ संततिः ।
भेदाभेदौ प्रसज्येयातां ग्राह्यग्राहकयोर्यथा ॥

तस्मादत्यन्तभेदो वा कथंचिद्वापि भिन्नता ।
संतानस्येष्यते चाऽऽत्मा स्याद्वैशेषिकसांख्ययोः ॥
संतानोऽयं स एवेति न त्वभेदाद्विना भवेत् ।
वायुदीपादिसंताने वायुत्वादिर्न भिद्यते ॥
ज्ञानत्वेनाप्यभिन्नत्वं शून्यवादे निराकृतम् ।
तथैव कर्मभिर्दृष्टा फलार्थं चित्तवासना ॥
न चात्र वासनाकाले किंचिच्चित्तमवस्थितम् ।
अवस्तुत्वाच्च संतानः कर्मभिर्नैव वास्यते ॥
तस्मात्स्वसंतानेऽपि भुञ्जाने कर्मणः फलम् ।
नादात्म्येन विना स्पष्टौ कृतनाशाकृतागमौ ॥
संतानान्तरजेभ्यश्च यो हेतुफलभावतः ।
विशेषः सोऽपि दुःसाध्यः परिहारो न चानयोः ॥
तस्मिन्नन्यपि मृषाः परिहारस्त्वनन्यथा ।
समानपृथिवीत्वादिज्ञानत्वाद्यविशेषतः ॥
समान इति नाप्येतदेकत्वानुगमाद्विना ।
येन परिगतं तस्य संतान इति सो मृषा ॥
न हि [illegible] भिन्नवस्तुनि ।

तत्र नित्यविभुत्वाभ्यामात्मानो निष्क्रिया यदि ।
सुखदुःखाविकार्याश्च कीदृशी कर्तृभोक्तृता ॥
अथ कर्तृत्ववेलाया दुःखादेश्चापि जन्मनि ।
प्राग्रूपादन्यथात्वं स्यान्नित्यताऽस्य विरुध्यते ॥
नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते ।
विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता ॥
स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ ।
न त्ववस्थान्तरप्राप्तौ लोके बालयुवादिवत् ॥
अवस्थान्तरभाव्येतत् फलं मम शुभाशुभम् ।
इति ज्ञात्वाऽनुतिष्ठंश्च विजहच्चेष्टते जनः ।
अनवस्थान्तरप्राप्तिर्दृश्यते न च कस्यचित् ॥
अनुच्छेदात्तु नान्यत्वं भोक्तुर्लोकोऽवगच्छति ।
सुखदुःखाद्यवस्थाश्च गच्छन्नपि नरो मम ।
चैतन्यद्रव्यसत्तादिरूपं नैव विमुञ्चति ॥
दुःखिनः सुखव्यवस्थाया नश्येयुः सर्व एव ते ।
दुःखित्वं चानुवर्तेत विनाशे विक्रियात्मके ॥
तस्मादुभयहानेन व्यावृत्त्यनुगमात्मकः ।
पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु सर्पवत् ॥
न च कर्तृत्वभोक्तृत्वे पुंसोऽवस्थासमाश्रिते ।
तेनावस्थावतस्तत्त्वात्कर्तैवाप्नोति तत्फलम् ॥
न चावस्थान्तरोत्पादे पूर्वाऽत्यन्तं विनश्यति ।
उत्तरानुगुणत्वात्तु सामान्यात्मनि लीयते ॥
स्वरूपेण ह्यवस्थानामन्योन्यस्य विरोधिता ।
अविरुद्धस्तु सर्वासु सामान्यात्मा प्रवर्तते ॥ इति ॥

( आत्मानेकत्वम् )

एतेनाऽऽत्मानेकत्वमपि सिध्यति । विरुद्धकर्मविपाकशालिनां बहूनामुपलम्भात् । यद्येक एवाऽऽत्मा सर्वकर्मविपाकशाली स्यात् सर्वेषां सर्वफलानुभवो युगपदेव स्यात् । नह्येकस्य सुखित्वे दुःखित्वे वा सर्वेषां तद्भवति । न च शरीरभेदान्न तथेति वाच्यम् । एकस्य

सर्वकर्मविपाकशालित्वे शरीरभेदस्याप्यनुपपत्तेः । न हि कर्मविपाकमन्तरेण शरीरभेदोऽपि संभवति । एकस्मिन्नात्मनि सर्वेषां कर्मजन्यदृष्टपरिणामानां सत्वेऽपि युगपत्तत्तदनुगुणानेकशरीरारम्भकत्वे तेषां प्रमाणाभावात् । परिणामजन्यशरीराणां परस्परविरोधस्तु सर्वप्रत्यक्षगोचरः । तथा च तदनुगुणपरिणामानामपि परस्परविरोधे इतस्ततः आकृष्यमाणोऽयमात्मा किमपि शरीरमेव न धारयेत् । तथा सति सृष्ट्यसंभवापत्तिः । योगिवद्युगपदनेकदेहधारणपरिकल्पनायां तु प्रवर्तकचित्तवदेकचित्तपरिकल्पनाप्रसङ्गेन सर्वस्य सर्वभोगानुभवापत्तिः । एवं च कथमन्येकात्मवादोऽयमनुभवविरोधान्नोपपत्तिसहो भवितुमर्हतीत्यनेकात्मवाद एव युक्तः । अधिकं चात्र योगतन्त्रादवसेयम् ।

## ( चतुर्थोऽलौकिकत्वम् )

तत्सिद्धमिष्टेऽलौकिकापूर्वव्यापारजन्यत्वम् । एवमेव लोकसिद्धसाधनातिरिक्तत्वमपि साधने सुवचम् । या हि लौकिक्यः क्रियास्ताः सर्वा अपि लोकसिद्धान्यैवैकजन्मभोग्यानि फलान्युत्पादयन्ति । यत्र त्वपूर्वद्वारा फलोत्पादकत्वं तत्र तासां साधनत्वं तु न लोकसिद्धम् । अपि तु शास्त्रैकगम्यम् । अत एव यत्रान्वयव्यतिरेकद्वारा प्रत्यक्षेणैव साध्यसाधनभावो गृह्यते, तादृशसाधनातिरिक्तत्वं शास्त्रैकगम्यानां क्रियाणां भवतीति संभवति किल लोकसिद्धसाधनातिरिक्तेष्टसाधनत्वरूपसाध्यस्य प्रसिद्धिः। अत एव राजनिष्ठाशपथादिव्यवहार इदानीमपि दृश्यते । अत एवोक्तं भट्टपादैः—

भोगकालेऽनुसंदध्यात्फलं यदि तु कश्चन ।
स्थादिकर्मवद्यागे शास्त्रं स्यादप्रकल्पकम् ॥

अयमाशयः—यदव्यवहितोत्तरक्षणे यस्योत्पत्तिः, येन विना च यस्यानुत्पत्तिः, तत्तस्य कारणमिति हि लौकिकः साध्यसाधनभावः प्रत्यक्षगम्यः । यथा भोजनतृप्त्यादौ । यत्र तु न तादृशान्वयव्यतिरेकौ, तत्र तु तयोः साध्यसाधनत्वं केवलशास्त्रगम्यमेव । यथा रोगनिदानेषु । अत एव रोगिणा स्वयमाचरितमपि रोगनिदानं निदानत्वेन नानुभूयते । तच्छास्त्रज्ञेन तु तद्भूतकालीनमप्रत्यक्षमपि ज्ञायते । तथैव शास्त्रीयक्रियासु यत्साधनत्वं शास्त्रबोधितम्, तदपि न प्रत्यक्षगम्यान्वयव्यतिरेकसिद्धमिति लोकसिद्धसाधनातिरिक्तत्वं वैदिकक्रियारूपसाधने सिध्यति । प्राकृतजनप्रत्यक्षाविषयत्वेऽपि विशिष्टानां तादृशसाध्यसाधनभावः प्रत्यक्षः स्यादिति चेन्न । सर्वज्ञनिराकरणे दत्तोत्तरत्वात् । न हि विशिष्टानां विशिष्टबुद्धिमत्त्वमकारणम्, स्वाभाविकत्वप्रसङ्गात् । तथा च सर्वेषां तदापत्तिः । किं स्वभावोऽपि कर्मजन्यावस्थाविशेष इत्यपि पूर्वमेव निरूपितम् । एवं च शास्त्रबोधितकर्मजन्यविपाकशालिना जातिस्मरत्वादिवत् तादृशकार्यकारणभावज्ञानशालित्वमपि सम्भवेदिति चेत् तथा वचनमेवेतरेषां शास्त्रत्वेन प्रमाणमित्येव सिध्यति । अनादिसिद्धपरम्पराया तु तदपि न सिध्यति । तस्मादपि तादृशकर्मबोधकशास्त्रस्यापेक्षणादिति शास्त्रमेवानादिसिद्धं प्रमाणम् ।

## ( पञ्चमालौकिकत्वम् )

अत एव च ममैतच्छरीरातिरिक्तशरीरभोग्यत्वरूपमलौकिकत्वमिष्टे सुवचम्। ननु नित्यस्य विभोरात्मनो गमनागमनादिक्रियाणामसंभवेन कथं शरीरान्तरग्रहणमिति चेन्न। विभोर्नित्यस्यैवैकाकारपरित्यागपूर्वकमन्याकारग्रहणसंभवात्। परिच्छिन्नस्य तु परिच्छिन्नत्वादेवाऽऽकारान्तरेष्वप्रवेशात् नहि वयमात्मनोऽसङ्गत्वं मन्यामहे येनाऽऽकारान्तरप्रवेशो दुर्घटः स्यात्। किंतु तस्य कर्मजन्यादृष्टपरिणामशालित्वात् तत्तत्परिणामानुकूलमाकारवत्त्वमपि स्वीकुर्मः। एवमपि नानित्यत्वमिति पूर्वमेव भट्टपादवचनैर्निरूपितम् " अविरुद्धस्तु सर्वासु सामान्यात्मा प्रकाशते " इति। अत्रायमभिसंधिः— यथा ह्याधुनिकवैज्ञानिकमते घनद्रववाय्वात्मकघटकद्रव्यत्रयस्यैवाथ कर्मजन्यपरिणामो यज्जगन्नामेति। तथा च जगति नानाकारपरिणतानि तान्येव द्रव्याणि यद्येकाकारेण परिच्छिन्नानि स्युः, तर्हि तु आकारान्तराणां तत्राप्रवेशात् जगद्विलोपापत्तिः। अतश्च सर्वाकारानुगतं घनत्वद्रवत्ववायुत्वादिसामान्यरूपं द्रव्यमेव जगत्कारणत्वेन अङ्गीकर्तव्यम्। तस्य च घनत्वाद्याकारहानपूर्वकं द्रवत्वाद्याकारग्रहणं च यथा रासायनिकक्रियावशाद्भवति। तथैवाऽऽत्मनोऽपि सामान्यरूपेण सर्वत्रानुगतत्वेऽपि स्वकृतकर्मजन्यापूर्वसंस्कारवशात् भोगेच्छावशाच्च भिन्नभिन्नदेहाकारधारणे न काऽप्यनुपपत्तिः। इयमेव कर्मणो महती यत्स्वरूपतः सतोऽपि भिन्नरूपस्यापि पदार्थस्य स्वरूपेणानुच्छेदेऽपि विभिन्नाकारतापादनं नाम। कदा केन रूपेण केन वाऽऽकारेण कथं वा पदार्थो भासेतेति न नियमः। यदा यथा भासेत तदा तद्रूपत्वं तस्येति। अयमेवानैकान्तिकवादः। सोऽयं कर्ममहिमा। अतश्चाऽऽत्मनोऽपि कर्माशयवशात् विभिन्नदेहधारणं तत्र तत्तत्कर्मफलभोग इत्यादिकं सर्वमुपपन्नमेव। तदुक्तं भगवद्गीतासु—

> वासांसि जीर्णानि यथा विहाय।
> नवानि गृह्णाति नरोऽपराणि।
> तथा शरीराणि विहाय जीर्णा—
> न्यन्यानि संयाति नवानि देही॥ ( अ. २।२२ ) इति॥

उपनिषत्सु च— " अथ य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणाः, अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा " इति

## ( योगशास्त्रानुसारेण कर्मविपाकोपपत्तिः )

अस्य च विषयस्य विस्तारो योगदर्शने द्रष्टव्यः। यद्यपि योगशास्त्रे बुद्धितत्त्वस्यैव धर्माधर्मसुखदुःखेच्छादिधर्मास्तथापि वृत्तिसारूप्यात्ते चेतनपुरुषगता इव भासन्ते। भाट्टमते त्वात्मनश्चे-

तनाशक्तिमत्त्वाच्चेतनत्वम्। न तु सर्वदा चेतनस्वरूपत्वम्। सुषुप्तिमूर्च्छाद्यवस्थासु तदभावात्। एवं च सर्वेऽप्येते आत्मगता एवेति कर्माशयोऽप्यात्मगत एवेति तद्विपाकस्तद्दर्शनप्रक्रिययाऽपि सूपपन्न इति तामत्रोपस्थापयाम:।

" क्लेशमूल: कर्माशयो दृष्टादृष्टजन्मवेदनीय:।

( पा. द. सा. पा. सू. १२ )

(भा.) तत्र पुण्यापुण्यकर्माशय: कामलोभमोहक्रोधप्रसव:। स दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च। तत्र तीव्रसंवेगेन मन्त्रतप:समाधिभिर्निर्वर्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा परिनिष्पन्न: स सद्य: परिपच्यते पुण्यकर्माशय इति। तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृत: पुन: पुनरपकार: स चापि पापकर्माशय: सद्य एव परिपच्यते। यथा नन्दीश्वर: कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणत:। तथा नहुषोऽपि देवानामिन्द्र: स्वकं परिणामं हित्वा तिर्यक्त्वेन परिणत इति। तत्र नारकाणां नास्ति दृष्टजन्मवेदनीय: कर्माशय:, क्षीणक्लेशानामपि नास्ति अदृष्टजन्मवेदनीय: कर्माशय इति॥

नुभवनिमित्ताभिस्तु वासनाभिरनादिकालसंमूर्छितमिदं चित्रीकृतमिव सर्वतो मत्स्यजालं ग्रन्थिभिरिवाऽऽततमित्येता अनेकभवपूर्विका वासनाः। यस्त्वयं कर्माशय एष एवैकभविक उक्त इति। ये संस्काराः स्मृतिहेतवस्ता वासनास्ताश्चानादिकालिका इति। यस्त्वसावेकभविकः कर्माशयः, स नियतविपाकश्चानियतविपाकश्च। तत्र दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियमो न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य। कस्मात्। यो ह्यदृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी गतिः। कृतस्याविपक्वस्य नाशः। प्रधानकर्मण्यवापगमनम्। नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानम्। तत्र कृतस्याविपक्वस्य नाशो यथा शुक्लकर्मोदयादिहैव नाशः कृष्णस्य। यत्रेदमुक्तम्—

> द्वे द्वे ह वै कर्मणी वेदितव्ये।
> पापस्यैको राशिः पुण्यकृतोऽपहन्ति॥
> तदिच्छस्व कर्माणि सुकृतानि कर्तुम्।
> इहैव ते कर्म कवयो वदन्ति॥ (इति श्रुतिः)

प्रधानकर्मण्यवापगमनम्। यत्रेदमुक्तम्—स्यात्स्वल्पः संकरः सपरिहारः संप्रत्यवमर्षः। कुशलस्य नापकर्षायालम्। कस्मात् कुशलं हि मे बह्वन्यदस्ति यत्रायमवापं गतः स्वर्गेऽपि अपकर्षमल्पं करिष्यति। (इति श्रुतिः)

नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानम्। कथमिति। अदृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्मणः समानं मरणमभिव्यक्तिकारणमुक्तम्। न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य। यत्त्वदृष्टजन्मवेदनीयं कर्मानियतविपाकं, तन्नश्येत्। आवापं वा गच्छेत्, अभिभूतं वा चिरमप्युपासीत यावत्समानं कर्माभिव्यञ्जकं निमित्तस्य न विपाकाभिमुखं करोतीति। तद्वि पाकस्यैव देशकालनिमित्तानवधारणात्, इयं कर्मगतिर्विचित्रा दुर्विज्ञाना चेति। न चोत्सर्गस्यापवादान्निवृत्तिरिति एकभविकः कर्माशयोऽनुज्ञायत इति।

अनेन च भाष्येण स्पष्टमिदमवगम्यते यन्न सर्वेऽपि कर्मसंस्कारास्तत्काल एव वा परिणामकारकाः। किंतु येषां तीव्रसंवेगो विरोधिसंस्कारानभिभूतः, ते तत्काल एवायुर्भोगादिविपाकप्रारकाः। ये तु मध्यमसंवेगाः, ते संस्कारान्तरैर्गुणप्रधानभावमुपगता यथायथं विपाकारम्भिणः। ये त्वल्पसंवेगास्तेषां विरोधिसंस्कारैर्नाशो वाऽभिभवो वेति। ये तु जातिरूपविपाकारम्भिणस्तेषां तु फलमायुर्भोगादि जन्मान्तर एवेति। तत्रापि मरणसमये यस्योदयस्तेन कर्मणा साकं संमूर्छित एवायं कर्माशयो जात्यायुर्भोगादि विपाकारम्भी भवति। एवं कस्य कर्मणः कदा विपाक इत्यस्य दुर्ज्ञेयत्वात्सामान्यत एतच्छरीरातिरिक्तशरीरभोग्येष्टसाधनत्वमेवावसेयं कर्मणाम्। न त्वचिदनुष्ठानादिना धनपुत्रादिप्राप्तौ

व्यभिचारः शङ्कनीयः । अलौकिकप्रमाणगम्यत्वात्, अलौकिकव्यापारजन्यत्वाद्वा इष्टस्यायुर्भोगादेः, तेषामप्यलौकिकेष्टसाधनत्वमिति परिहारस्तु पूर्वमेवोक्त इति अलं विस्तरेण ।

## ( आधुनिकविज्ञानशास्त्रानुसारेण कर्मविपाकः )

एतादृशोऽयं दुर्ज्ञेयः कर्मविपाकस्तु आधुनिकवैज्ञानिकैरप्यवश्यमङ्गीकरणीयः । अत एव जलकर्कादिद्रवघनद्रव्याणां पुनश्च वाष्पावस्थापादनवत्, दधिघृतादीनां पयोरूपपूर्वावस्थापादनं तेषामपि दुःशकम् । इदं च पौरुषेयकर्मसंस्कारविषये । अपौरुषेये वृष्ट्यादौ तथैव कल्पने तु अतिवृष्ट्यनावृष्ट्यादिकाले ऑक्सिजन-हैड्रोजनद्रव्ययोर्बहुत्वाल्पत्वकल्पनाप्रसङ्गः । तस्याश्चाप्रामाणिकत्वम् । न हि वयं यथा किंचिद्द्रव्यमुत्पादयामो विघटयामो वा तथैव तत्तद्द्रव्यं सृष्टावपि भवतीति कल्पनं युक्तम् । सृष्टौ शतशो व्यभिचारात् । कर्मविपाकानामसंख्येयत्वाद्दुर्ज्ञेयत्वाच्च । न हि वयं यथा केनचन द्रव्येण किंचिद्रङ्गमुत्पादयामस्तथैव पशुपक्षिवनस्पत्यादौ तद्रङ्गोत्पत्तिरिति व्यर्थोऽयमभिनिवेश आधुनिकानाम् ।

## ( परिवर्तनवादनिरासः )

एतेन परिवर्तनवादोऽपि व्याख्यातः । न हि पुरुषपरतन्त्राः कर्मविपाकाः, येनास्माभिरतथाऽभिमता अपि तथैव स्युः । यदि पत्न्यपतित्वं वाऽसत्यभाषणादिकं वाऽतिथेरादरातिथ्यानन्तरं गर्भस्थहरणं वा कस्मिंश्चिन्काले कश्चिद्धर्मत्वेनाभिमतमपि पुण्यविपाकमेव जनयेदित्यत्र प्रमाणं स्यात्तदा तदभिमतेरपि धर्मनिर्णये प्रामाण्यं स्यात् । न तु तथास्ति । कर्मविपाकानां उत्सर्गतो नियतत्वात् । तद्विपर्ययकल्पनेऽपि तादृशकल्पनानुत्पादात् । यदि तु वैदिककर्मसमानविपाकं किमपि कर्मान्तरं केनचन प्रमाणेनावगम्येत । तदापि तस्यापि कर्मान्तरस्य धर्माधर्मत्वं स्यात्, न तु पूर्वसिद्धस्य कर्मणस्तद्विपर्यय इति । यथा आधुनिकं विज्ञानं नैसर्गिकमत एव न परिवृत्तिसहम् । [illegible] अपि नैसर्गिका एव न परिवृत्तिसहा वा सामयिका वेति व्यर्थोऽयमभिनिवेशः [illegible] । एवमपि [illegible] नियामकं प्रकृतीनो [illegible] [illegible] निश्चितमिदं [illegible]नाम् । अपिकं [illegible]।

निषिद्धक्रियासु च वेदबोधितनिषेधविषयत्वादेव अनिष्टसाधनत्वमिति सिद्धं धर्माधर्मत्वं क्रियाणाम्।

एतेन तत्त्वज्ञानमेव धर्मः, उपासनैव वा धर्मः, नीतिरेव वा धर्म इत्याद्याधुनिकमतानि व्याख्यातानि। तेषामेव धर्मत्वे प्रमाणाभावात्। प्रत्युत तत्त्वानुसारिणी यथावत्फलदायिनी क्रियैव धर्म इति पूर्वोक्तविवेचनात्सिध्यति। तत्त्वज्ञानं तु फलमेव स्याद्धर्मस्य प्रयोजकं वा। उपासनायाः क्रियात्वेन धर्मत्वमिष्टमेव। नीतिस्त्वाचारपरिणता चेत्तदैव धर्म इति अन्ततो गत्वा प्रत्यक्षतया तत्तदाचाररूपक्रियाणामेव धर्माधर्मत्वं पर्यवस्यति न तु स्वरूपतः स्वाभिमतेर्वा। अत एव " यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते। यश्च यस्य कर्ता स तेन व्यपदिश्यते यथा पाचको लावक इति " इति शाबरभाष्ये क्रियाकर्तुरेव धार्मिकत्वमुक्तम्। किंच तत्त्वज्ञानमपि किमर्थमभिमन्तव्यम्, उपासनापि किमित्यासेवितव्या, नीतिरपि किमुद्दिश्य समादर्तव्या इत्यनुयोगे किं वोत्तरपथमायाति। यदि नाम न पुनर्जन्म न वा शरीरातिरिक्त आत्मा, नापि वा तस्य कर्मजन्यः कश्चन विपाकस्तर्हि तु व्यर्थ एवायमभिनिवेश इत्येवापतेत्। एवं चान्ततो गत्वा इदं सर्वं सवरणमात्रमेव निष्पद्येतेति "यावज्जीवं सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्" इति देहात्मवादप्रसक्तौ सर्वोच्छेदप्रसङ्गः। एवं च स्वयं नष्टाः परान्नाशयन्त इमे विभिन्नमतप्रवर्तका जगतोऽहितायैवेति मन्तव्यम्। अत एवोक्तं भगवता—

> असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्।
> अपरस्परसंभूतं किमन्यत्कामहैतुकम्॥
> एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
> प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः॥ ( अ १६।८-९ ) इति॥

किं बहुना सर्वथाऽयमेकाङ्गवादो यथा यथा विमृश्येत तथा तथा जगन्नाशायैव प्रभवतीति सुविशदमेव दीर्घचक्षुषाम्।

### ( स्मृतिप्रामाण्यप्रस्तावः )

तदिदं सिद्धं यद्वेदबोधितेतिकर्तव्यताकानां क्रियाणां अलौकिकेष्टसाधनत्वम्, तादृशसाधनत्वे प्रमाणं तु वेद एव, स च नित्यः। तस्य नित्यत्वं हि शब्दनित्यत्वे अर्थनित्यत्वे तयोश्च संबन्धनित्यत्वे काठकादिसमाख्यानां चान्यथा प्रवचनोत्कर्षादिनाप्युपपत्तौ च सिध्यति। अतस्तद्विचारोऽप्यावश्यकः। तथापि तस्य मीमांसादर्शने वार्तिके शास्त्रदीपिकादिषु सनातनधर्मप्रदीपे च विस्तरेण निरूपितत्वादिह न प्रपञ्चितः। तद्भिन्नानि वेदार्थस्येतरप्रमाणागम्यत्वेन भ्रमप्रमादविप्रलिप्सादिबाधककारणाभावेन चापौरुषेयत्वात् प्रामाणिकत्वाच्च [illegible] साध्यसिद्धौ प्रपञ्चविधानमनर्थकमित्युपेक्षितोऽस्माभिः। प्रकृतमासामिदमत्र विचारणीयम्, यदासां क्रियाणामितिकर्तव्यता न वेदबोधिता किंतु स्मृतिसदाचारपरम्पराबोधिता, तदा तासामलौकिकेष्टसाधनत्वमस्ति न वा ? ताश्च

व्यभिचारः शङ्कनीयः। अलौकिकप्रमाणगम्यत्वात्, अलौकिकव्यापारजन्यत्वाद्वा इष्टस्यायुर्भोगादेः, तेषामप्यलौकिकेष्टसाधनत्वमिति परिहारस्तु पूर्वमेवोक्त इति अलं विस्तरेण।

## ( आधुनिकविज्ञानशास्त्रानुसारेण कर्मविपाकः )

एतादृशोऽयं दुर्ज्ञेयः कर्मविपाकस्तु आधुनिकवैज्ञानिकैरप्यवश्यमङ्गीकरणीयः। अत एव जलकरकादिद्रवघनद्रव्याणां पुनश्च वाष्पावस्थापादनवत्, दधिघृतादीनां पयोरूपपूर्वावस्थापादनं तेषामपि दुःशकम्। इदं च पौरुषेयकर्मसंस्कारविषये। अपौरुषेये वृष्ट्यादौ तथैव कल्पने तु अतिवृष्ट्यनावृष्ट्यादिकाले ऑक्सिजन-हैड्रोजनद्रव्ययोर्बहुत्वाल्पत्वकल्पनाप्रसङ्गः। तस्याश्चाप्रामाणिकत्वम्। न हि वयं यथा किंचिद्द्रव्यमुत्पादयामो विघटयामो वा तथैव तत्तद्द्रव्यं सृष्टावपि भवतीति कल्पनं युक्तम्। सृष्टौ शतशो व्यभिचारात्। कर्मविपाकानामसंख्येयत्वाद्दुर्ज्ञेयत्वाच्च। न हि वयं यथा केनचन द्रव्येण किंचिद्रङ्गमुत्पादयामस्तथैव पशुपक्षिवनस्पत्यादौ तद्रङ्गोत्पत्तिरिति व्यर्थोऽयमभिनिवेश आधुनिकानाम्।

## ( परिवर्तनवादनिरासः )

एतेन परिवर्तनवादोऽपि व्याख्यातः। न हि पुरुषपरतन्त्राः कर्मविपाकाः, येनास्माभिस्तथाऽभिमता अपि तथैव स्युः। यदि पञ्चपतित्वं वाऽसत्यभाषणादिकं वाऽतिथेरादरातिथ्यानन्तरं सर्वस्वहरणं वा कस्मिंश्चित्काले कैश्चिद्धर्मत्वेनाभिमतमपि पुण्यविपाकमेव जनयेदित्यत्र प्रमाणं स्यात्तदा त्वभिमतेरपि धर्मनिर्णये प्रामाण्यं स्यात्। न तु तथास्ति। कर्मविपाकानां उत्सर्गतो नियतत्वात्। तद्विरुद्धकल्पनेऽपि तादृशफलानुत्पादात्। यदि तु वैदिककर्मसमानविपाकं किमपि कर्मान्तरं केनचन प्रमाणपुरःसरमुपस्थाप्येत। तदापि तस्यापि कर्मान्तरस्य धर्माधर्मत्वं स्यात्, न तु पूर्वसिद्धस्य तत्सदृशस्य तद्विपर्यास इति। यथा ह्याधुनिकं विज्ञानं नैसर्गिकमत एव न परिवृत्तिसहम्। तथैव कर्मजन्यसंस्कारा अपि नैसर्गिका एव न परिवृत्तिसहा वा सामयिका वेति व्यर्थोऽयमभिनिवेशः परिवृत्तिवादिनाम्। एवमपि परिवर्तयिष्यन्ति चेदिमे विनायकं प्रकुर्वाणो रचयामास वानरमित्याभाणकमेव मन्यतामवतारयिष्यन्तीति निश्चितमिदं दूरदृष्टीनाम्। अधिकं त्वन्यत्रावसेयम्।

निषिद्धक्रियासु च वेदबोधितनिषेधविषयत्वादेव अनिष्टसाधनत्वमिति सिद्धं धर्माधर्मत्वं क्रियाणाम् ।

एतेन तत्त्वज्ञानमेव धर्मः, उपासनैव वा धर्मः, नीतिरेव वा धर्म इत्याद्याधुनिकमतानि व्याख्यातानि । तेषामेव धर्मत्वे प्रमाणाभावात् । प्रत्युत तत्त्वानुसारिणी यथावत्फलदायिनी क्रियैव धर्म इति पूर्वोक्तविवेचनात्सिध्यति । तत्त्वज्ञानं तु फलमेव स्याद्धर्मस्य प्रयोजकं वा । उपासनायाः क्रियात्वेन धर्मत्वमिष्टमेव । नीतिस्त्वाचारपरिणता चेत्तदेव धर्म इति अन्ततो गत्वा प्रत्यक्षतया तत्तदाचाररूपक्रियाणामेव धर्माधर्मत्वं पर्यवस्यति न तु स्वरूपतः स्वाभिमतेर्वा । अत एव " यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते । यश्च यस्य कर्ता स तेन व्यपदिश्यते यथा पाचको लावक इति " इति शाबरभाष्ये क्रियाकर्तुरेव धार्मिकत्वमुक्तम् । किंच तत्त्वज्ञानमपि किमर्थमभिमन्तव्यम्, उपासनापि किमित्यासेवितव्या, नीतिरपि किमुद्दिश्य समादर्तव्या इत्यनुयोगे किं वोत्तरपथमायाति । यदि नाम न पुनर्जन्म न वा शरीरातिरिक्त आत्मा, नापि वा तस्य कर्मजन्यः कश्चन विपाकस्तर्हि तु व्यर्थ एवायमभिनिवेश इत्येवापतेत् । एवं चान्ततो गत्वा इदं सर्वं संवरणमात्रमेव निष्पद्येतेति "यावज्जीवं सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत् " इति देहात्मवादप्रसक्तौ सर्वोच्छेदप्रसङ्गः। एवं च स्वयं नष्टाः परान्नाशयन्त इमे विभिन्नमतप्रवर्तका जगतोऽहितायैवेति मन्तव्यम् । अत एवोक्तं भगवता—

> असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
> अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥
> एतां दृष्टिमवष्टभ्य नष्टात्मानोल्पबुद्धयः ।
> प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ( अ. १६।८- ९ ) इति ॥

किं बहुना सर्वथाऽयमेकाङ्गवादो यथा यथा विमृश्येत तथा तथा जगन्नाशायैव प्रभवतीति सुविशदमेव दीर्घचक्षुषाम् ।

( स्मृतिप्रामाण्यप्रस्तावः )

तदिदं सिद्धं यद्वेदबोधितेतिकर्तव्यताकानां क्रियाणां अलौकिकेष्टसाधनत्वम्, तादृशसाधनत्वे प्रमाणं तु वेद एव, स च नित्यः । तस्य नित्यत्वं हि शब्दनित्यत्वे अर्थनित्यत्वे तयोश्च संबन्धनित्यत्वे काठकादिसमाख्यानां चान्यथा प्रवचनोत्कर्षादिनाप्युपपत्तौ च सिध्यति । अतस्तद्विचारोऽप्यावश्यकः । तथापि तस्य मीमांसादर्शने वार्तिके शास्त्रदीपिकादिषु सनातनधर्मप्रदीपे च विस्तरेण निरूपितत्वादिह न प्रपञ्चितः । तद्विनापि वेदार्थस्येतरप्रमाणागम्यत्वेन भ्रमप्रमादविप्रलिप्सादिबाधककारणाभावेन चापौरुषेयत्वात् प्रामाणिकत्वाच्च प्रकृतसाध्यसिद्धौ प्रपञ्चविधानमनर्थकमित्युपेक्षितोऽस्माभिः । प्रकृतप्राप्तमिदमत्र विचारणीयम्, यद्यासां क्रियाणामितिकर्तव्यता न वेदबोधिता किंतु स्मृतिमत्राचारपरम्पराबोधिता, तदा तासामलौकिकेष्टसाधनत्वमस्ति न वा ? ताश्च

क्रियाः, अष्टकाः कर्तव्याः, गुरुरनुगन्तव्यः, तडागं खनितव्यम्, प्रपा प्रवर्तयितव्या, शिखाकर्म कर्तव्यम्, रुग्णालयः स्थापनीयः, इत्येवमादयः । तत्र क्रियात्वेन साफल्ये सामान्यतः सिद्धेऽपि यद्यलौकिकफलवत्त्वं न स्यात् । तदा तु लौकिकदृष्टफलार्थं तत्र प्रवृत्तिः स्यात् । तदपि यत्राष्टकादिषु नोपलभ्यते, तत्र प्रवृत्तिर्न स्यात् । यत्र तु प्रपादिषु परोपकारादिकं दृष्टं फलं प्रत्यक्षगोचरं, तत्रापि कर्तुः किमपि फलं न स्याच्चेन्न प्रवर्तेत । यदि लाभपूजाख्यात्यादिकं परिकल्पेत तथापि तस्य परसापेक्षत्वेन यस्मात्तत्सम्भवः तदर्थमेव तत्र प्रवृत्तिः स्यान्न तु सामान्यतः, ते च नीतिनर्मसचिवा एव । दृश्यते च सामान्यतः प्रवृत्तिः । सा किं फलमुद्दिश्य भवति ? न हि निष्फले दुःखैकफले वा कोऽपि प्रेक्षावान् प्रवर्तते । तस्मादवश्यमवेदं विचारणीयं यदेताः क्रियाः, अलौकिकेष्टफलसाधनं न वेति !

## ( स्मृतिप्रामाण्ये पूर्वपक्षः )

अत्र ब्रूमः—स्मृतिविषयत्वादेवैतासां मूलविज्ञानकारणं किंचिदनुमीयते । यतः स्मृतिः स्मरणम्, तच्च संस्कारमात्रजन्यं ज्ञानम्, संस्कारश्चानुभवमन्तरेण नोपपन्न इत्यनुभवमाक्षिपति । विना प्रमाणमनुभवोऽपि अनुपपन्न इति प्रमाणमाक्षिपेत् । तच्चातीन्द्रियार्थविषये विनाऽऽगमान्न किमपि प्रभवतीत्यागमं मूलभूतमनुमापयत् स्मृतिविषयत्वमेतासामलौकिकेष्टसाधनत्वमपि बोधयति । ननु स्मृतित्वे किं प्रमाणम्, परम्परा चेदन्धपरम्परावदनादेयत्वादप्रामाणिकैव । प्रत्युत दृष्टार्था एव बह्वचः क्रियाः स्मृतिग्रन्थेषूपदिष्टा राजधर्मादयः । कुत्रचित्तु "अथातः सामयाचारिकान् धर्मान् व्याख्यास्यामः" इत्युपक्रम्यैव धर्मोपदेशः । तत्रापेक्रमानुसारेण पर्यालोच्यमाने सर्वोऽप्ययं धर्मोपदेशः सामयिक एव सिद्धो भवतीति कुतो मूलकल्पनम् । तस्मात्स्मृतित्वमिद प्रौढिवादमात्रम् । वस्तुतस्तु यथाऽधुना शासनसभादिषु प्रस्तावानुपक्रम्य बहुमतानुसारेण शासनविधिनिर्माणम् । तथैव पूर्वकालेऽपि स्मृतीनां शासनविधिशास्त्रत्वमेव । यस्तु मध्ये किंचिददृष्टार्थकर्मनिर्देशः प्रायश्चित्तादिभागे चातुर्वर्ण्याचारभागे च सोऽपि राज्ञां देशजातिश्रेणीगणादिधर्माणामुपसंग्रहणमवश्यकर्तव्यतया निर्दिष्टमित्येव तेषां निर्देशः । अत एवोपनयनविवाहश्राद्धादि कर्तव्यतया आम्नातमपि न सेतिकर्तव्यताकम् । प्रायश्चित्तादिकमपि तथैव । यत्तु सूत्रादिषु सेतिकर्तव्यताकं आम्नानम्, तदपि न वेदमूलकम्, किंतु सामयिकमेव । समयस्य प्रामाण्यं तु सर्वजनाभिमतत्वादेव । यदा च सर्वेषां समये विरागो वाऽनुष्ठानाशक्तिर्वा बलवज्जीविकासंघर्षो वा तदा तु सर्वैर्मिलित्वा समयान्तरानुबन्धने न काऽपि हानिः । अत एव धर्मपरिवर्तनं देशकालपरिस्थित्यनुसारेण भूतं—

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥ इति ।

इदमेव धर्मपरिवर्तनमिदानींतनैराकाङ्क्ष्यते । न वस्तुतत्त्वपरिवर्तनम् । तत्सिद्धं न स्मृतिविषयत्वेन स्मार्तानां कर्मणामलौकिकेष्टफलसाधनत्वमिति ।

( स्मृतिप्रामाण्ये उत्तरः पक्षः )

अत्राभिधीयते सत्यम् —

" निजधर्माविरोधेन यश्च सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ " ( या. २।१८६ )

इति याज्ञवल्क्यवचनानुसारेण देशजातिकुलग्रामश्रेणीगणादीनां सामयिका धर्माः स्वीयप्रजापालनधर्माविरुद्धाश्चेत् राज्ञा परिपालनीया इति । परंतु तत्रापि समयस्य रुचिरूपत्वे धर्मत्वव्याघातात् प्रजानामुन्मार्गगामित्वसंभवाच्च स्वीयप्रजापालनधर्मविरोधः प्रसज्यते । तत्परिहाराय समयस्यापि किंचित्प्रामाणिकं स्वरूपमवश्यमेव निश्चेतव्यम् । समयस्वरूपं तु संविद्व्यतिक्रमप्रकरणे नारदोक्त्यैवं निरूपितं मिताक्षरायाम्—

पाखण्डनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ इति ॥

तद्यदि समयो निर्मूलो वाऽनीतिमूलो वा यथारुचि वा स्यात्, स सर्वोऽपि राज्ञा परिपालनीयो वा ? आहोस्वित् प्रामाणिको नीतिमूलक एव परिपालनीयः । आद्ये चौर्यसाहसादिविषयकस्यापि पालनीयत्वापत्तिः । अन्ते तु मूलभूतप्रमाणापेक्षा, नीतिमूलकत्वेऽपि नीतेर्नीतित्वसिध्द्ये प्रमाणापेक्षा तदवस्थैव । नारदीयव्याख्यायां तु स्थितिरेव समय इत्युक्तम् । स्थितिश्च न धर्ममन्तरा प्रजानां संभवति । कामक्रोधादिपापानां निरासमन्तरा स्थितेरनुपलम्भात् । तन्निरासश्च धर्मादिति धर्ममूलक एव समयः परिपालनीयो राज्ञा । तदर्थमेव चाधिकरणयोजना राजनीतौ । अर्थात्समयरूपत्वेऽपि स्मृतीनां धर्ममूलकत्वमेव सिध्यति । धर्ममूलं च श्रुतिरिति श्रुतिमूलकत्वमेव स्मृतीनां सिध्यति । तदुक्तं—

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः । इति ।
चोदना लक्षणोऽर्थो धर्म इति च ।

तत्सिद्धं स्मृतीनां सूत्राणामाचाराणां च पौरुषेयत्वेऽपि श्रुतिमूलकत्वम् । न हि श्रुतिप्रामाण्यप्राणाः धर्मनिष्ठाः यं कमपि समयं यथेच्छं कल्पयन्तीति कल्पयितुं शक्यम् । न हि ते वानराः, अपि तु नराः, अयमेवोभयोर्विशेषो यत्—

शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः ।
मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः ॥ इति ।

क्रियाः, अष्टकाः कर्तव्याः, गुरुरनुगन्तव्यः, तडागं खनितव्यम्, प्रपा प्रवर्तयितव्या, शिखाकर्म कर्तव्यम्, रुग्णालयः स्थापनीयः' इत्येवमादयः । तत्र क्रियात्वेन साफल्ये सामान्यतः सिद्धेऽपि यद्यलौकिकफलवत्त्वं न स्यात् । तदा तु लौकिकदृष्टफलार्थं तत्र प्रवृत्तिः स्यात् । तदपि यत्राष्टकादिषु नोपलभ्यते, तत्र प्रवृत्तिर्न स्यात् । यत्र तु प्रपादिषु परोपकारादिकं दृष्टं फलं प्रत्यक्षगोचरं, तत्रापि कर्तुः किमपि फलं न स्याच्चेन्न प्रवर्तेत । यदि लाभपूजाख्यात्यादिकं परिकल्पेत तथापि तस्य परसापेक्षत्वेन यस्मात्तत्सम्भवः तदर्थमेव तत्र प्रवृत्तिः स्यान्न तु सामान्यतः, ते च नीतिनिर्मसचिवा एव । दृश्यते च सामान्यतः प्रवृत्तिः । सा किं फलमुद्दिश्य भवति? न हि निष्फले दुःखैकफले वा कोऽपि प्रेक्षावान् प्रवर्तते । तस्मादवश्यमवेदं विचारणीयं यदेताः क्रियाः, अलौकिकेष्टफलसाधनं न वेति ।

## ( स्मृतिप्रामाण्ये पूर्वपक्षः )

अत्र ब्रूमः—स्मृतिविषयत्वादेवैतासां मूलविज्ञानकारणं किंचिदनुमीयते । यतः स्मृतिः स्मरणम्, तच्च संस्कारमात्रजन्यं ज्ञानम्, संस्कारश्चानुभवमन्तरेण नोपपन्न इत्यनुभवमाक्षिपति । विना प्रमाणमनुभवोऽपि अनुपपन्न इति प्रमाणमाक्षिपेत् । तच्चातीन्द्रियार्थविषये विनाऽऽगमान्न किमपि प्रभवतीत्यागमं मूलभूतमनुमापयत् स्मृतिविषयत्वमेतासामलौकिकेष्टसाधनत्वमपि बोधयति । ननु स्मृतित्वे किं प्रमाणम्, परम्परा चेदन्धपरम्परावदनादेयत्वादप्रामाणिकैव । प्रत्युत दृष्टार्था एव बह्व्यः क्रियाः स्मृतिग्रन्थेषूपदिष्टा राजधर्मादयः । कुत्रचित्तु "अथातः सामयाचारिकान् धर्मान् व्याख्यास्यामः" इत्युपक्रम्यैव धर्मोपदेशः । तत्रोपक्रमानुसारेण पर्यालोच्यमाने सर्वोऽप्ययं धर्मोपदेशः सामयिक एव सिद्धो भवतीति कुतो मूलकल्पनम् । तस्मात्स्मृतित्वमिदं प्रौढिवादमात्रम् । वस्तुतस्तु यथाऽधुना शासनसभादिषु प्रस्तावानुपक्रम्य बहुमतानुसारेण शासनविधिनिर्माणम् । तथैव पूर्वकालेऽपि स्मृतीनां शासनविधिशास्त्रत्वमेव । यस्तु मध्ये किंचिददृष्टार्थकर्मनिर्देशः प्रायश्चित्तादिभागे चातुर्वर्ण्याचारभागे च सोऽपि राज्ञा देशजातिश्रेणीगणादिधर्माणामुपसंग्रहणमवश्यकर्तव्यतया निर्दिष्टमित्येव तेषां निर्देशः । अत एवोपनयनविवाहश्राद्धादि कर्तव्यतया आम्नातमपि न सेतिकर्तव्यताकम् । प्रायश्चित्तादिकमपि तथैव । यत्तु सूत्रादिषु सेतिकर्तव्यताकं आम्नानम्, तदपि न वेदमूलकम्, किन्तु सामयिकमेव । समयस्य प्रामाण्यं तु सर्वजनाभिमतत्वादेव । यदा च सर्वेषां समये विरागो वाऽनुष्ठानाशक्तिर्वा बलवज्जीविकासंघर्षो वा तदा तु सर्वैर्मिलित्वा समयान्तरानुबन्धने न काचित् हानिः । अत एव धर्मपरिवर्तनं देशकालपरिस्थित्यनुसारेण भूतं—

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥ इति ।

इदमेव धर्मपरिवर्तनमिदानींतनैराकाङ्क्ष्यते । न वस्तुतत्त्वपरिवर्तनम् । तत्सिद्धं न स्मृतिविषयत्वेन स्मार्तानां कर्मणामलौकिकेष्टफलसाधनत्वमिति ।

( स्मृतिप्रामाण्ये उत्तरः पक्षः )

अत्राभिधीयते सत्यम् —

" निजधर्माविरोधेन यश्च सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ " ( या. २।१८६ )

इति याज्ञवल्क्यवचनानुसारेण देशजातिकुलग्रामश्रेणीगणादीनां सामयिका धर्माः स्वीयप्रजापालनधर्माविरुद्धाश्चेत् राज्ञा परिपालनीया इति । परंतु तत्रापि समयस्य रुचिरूपत्वे धर्मत्वव्याघातात् प्रजानामुन्मार्गगामित्वसंभवाच्च स्वीयप्रजापालनधर्मविरोधः प्रसज्यते । तत्परिहाराय समयस्यापि किंचित्प्रामाणिकं स्वरूपमवश्यमेव निश्चेतव्यम् । समयस्वरूपं तु संविद्व्यतिक्रमप्रकरणे नारदोक्त्यैवं निरूपितं मिताक्षरायाम्—

पाखण्डनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ इति ॥

तद्यदि समयो निर्मूलो वाऽनीतिमूलो वा यथारुचि वा स्यात्, स सर्वोऽपि राज्ञा परिपालनीयो वा ? आहोस्वित् प्रामाणिको नीतिमूलक एव परिपालनीयः । आद्ये चौर्यसाहसादिविषयकस्यापि पालनीयत्वापत्तिः । अन्ते तु मूलभूतप्रमाणापेक्षा, नीतिमूलकत्वेऽपि नीतेर्नीतित्वसिध्द्ये प्रमाणापेक्षा तदवस्थैव । नारदीयव्याख्यायां तु स्थितिरेव समय इत्युक्तम् । स्थितिश्च न धर्ममन्तरा प्रजानां संभवति । कामक्रोधादिपापानां निरासमन्तरा स्थितेरनुपलम्भात् । तन्निरासश्च धर्मादिति धर्ममूलक एव समयः परिपालनीयो राज्ञा । तदर्थमेव चाधिकरणयोजना राजनीतौ । अर्थात्समयरूपत्वेऽपि स्मृतीनां धर्ममूलकत्वमेव सिध्यति । धर्ममूलं च श्रुतिरिति श्रुतिमूलकत्वमेव स्मृतीनां सिध्यति । तदुक्तं—

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः । इति ।
चोदना लक्षणोऽर्थो धर्म इति च ।

तत्सिद्धं स्मृतीनां सूत्राणामाचाराणां च पौरुषेयत्वेऽपि श्रुतिमूलकत्वम् । न हि श्रुतिप्रामाण्यमाणाः धर्मनिष्ठाः यं कमपि समयं यथेच्छं कल्पयन्तीति कल्पयितुं शक्यम् । न हि ते वानराः, अपि तु नराः, अयमेवोभयोर्विशेषो यत्—

शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः ।
मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः ॥ इति ।

न हीदानींतना अपि यथेच्छं यं कमपि शासनविधिं निर्मिमते राजशासनसभासु । किंतु शास्त्रव्यवहाराग्रिमपरिणामज्ञानपूर्वकमेव निर्मिमत इति तेषामनुभवपूर्वकमेवेदानीतनं शासनविधिं पश्यामः । तथैव पूर्वजैरपि धर्मप्राणैर्वेदजन्यानुभवानन्तरमेव शासनविधयः प्राणायिषतेति कल्पनायां, परिवर्तनवादिनामिच्छाविघातमन्तरा न कामपि हानिं पश्यामः । तदुक्तम्—

धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्, । मी. द. (१।३।१ ),

वस्तुतस्तु अदृष्टार्थाः स्मृतयः सेतिकर्तव्यताका एवोपनिबद्धा दृश्यन्ते । न हि शालाकर्मविवाहादयो विषयः सेतिकर्तव्यताका वेदेषु यज्ञादिवदुपलभ्यन्ते । न वा तेषां दृष्टं किंचिदपि फलम् । इतिकर्तव्यता च विज्ञानम् । न च तत्प्रमाणमन्तरा प्रतिपत्तुं शक्यम्, न वा तत्र प्रत्यक्षादीनि प्रभवन्ति । अतीन्द्रियत्वात्तस्य । अतोऽगत्याऽतीन्द्रियार्थबोधकं प्रमाणमभ्युपेतव्यम् । तच्च न वेदमन्तरा । तत्र तस्यैव शक्तत्वस्य पूर्वमुपपादनात् । अत एवोक्तं शाबरभाष्ये—

प्रमाणं स्मृतिः । विज्ञानं हि तत् किमित्यन्यथा भविष्यति । पूर्वविज्ञानमस्य नास्ति कारणाभावादिति चेत् । अस्या एव स्मृतेर्दृढिम्नः कारणमनुमास्यामहे । तच्च नानुभवनम् । अनुपपत्त्या । न हि मनुष्या इहैव जन्मन्येवंजातीयकमर्थमनुभवितुं शक्नुवन्ति । जन्मान्तरानुभूतं च न स्मर्यते । ग्रन्थस्त्वनुमीयेत । कर्तृसामान्यात् स्मृतिवैदिकपदार्थयोः । तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानाम् । ननु नोपलभ्यत एवंजातीयको ग्रन्थः । अनुपलभमाना अप्यनुमिमीरन् । विस्मरणमप्युपपद्यत इति । [illegible]विज्ञानस्य त्रैवर्णिकानां स्मरतां विस्मरणस्य चोपपन्नत्वात् ग्रन्थानुमानमुपपद्यत इति प्रमाणं स्मृतिः" ।

एवं चाष्टकादीनां शान्तिकादिस्मार्तधर्माणां गृह्यधर्माणां च वेदमूलकत्वेनैव प्रामाण्यम् । [illegible] । अत एव मन्वादिस्मृतिषु उपक्रमोपसंहारयो- [illegible] । नहि [illegible] विशेषम् । [illegible] ।

अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् । मी. द. ( १।३।२ )

गम्यमिति तत्राप्यलौकिकप्रमाणगम्यत्वमवश्यमेव कल्पनीयमतीन्द्रियार्थत्वात् । तच्च प्रमाणं न वेदा-
तिरिक्तमिति वेदमूलकत्वमेव सर्वासां स्मृतीनामभ्युपगन्तव्यमकामेनापि । तदुक्तं तन्त्रवार्तिके—

सर्वथा तावन्मन्वादिप्रणीताः सनिबन्धनाः स्मृतयः शेषाणि च विद्यास्थानानि स्वार्थं
प्रतिपादयन्त्युपलभ्यन्ते । मन्वादीनां चाप्रत्यक्षत्वात्तद्विज्ञानमूलमदृष्टं किंचिदवश्यं परिकल्पनी-
यम् । तत्र च—

भ्रान्तेरनुभवाद्वापि पुंवाक्याद्विप्रलम्भनात् ।
दृष्टानुगुणसाध्यत्वाच्चोदनैव लघीयसी ॥

सर्वत्रैव चादृष्टकल्पनायां तादृशं कल्पयितव्यं यद्दृष्टं न विरुणद्धि न वा दृष्टान्तरमासञ्ज-
यति । तत्र भ्रान्तौ तावत्सम्यङ्निबद्धशास्त्रदर्शनविरोधापत्तिः । सर्वलोकाभ्युपगतदृढप्रामाण्य-
बाधश्च । इदानींतनैश्च पूर्वैरपि भ्रान्तिर्मन्वादीनामनुवर्तिता ।' तत्परिहारोपन्यासश्च मन्वादीना-
मित्यनेकादृष्टकल्पना । अनुभवेऽपि च स एव तावदनुभवः कल्पयितव्यः । पुनश्चेदानींतनसर्व-
पुरुषजातिविपरीतसामर्थ्यकल्पना मन्वादेः । तच्चैतत्सर्वज्ञवादे निराकृतम् । पुरुषवाक्यपरम्परा-
प्यन्धपरम्परया निराकृता । नहि निष्प्रतिष्ठप्रमाणात्मलाभो दृश्यते । तथा विप्रलम्भेऽपि तत्क-
ल्पना । विप्रलिप्सा प्रयोजनं, लोकस्य च तत्र भ्रान्तिस्तस्याश्चेयन्तं कालमनुवृत्तिरित्याद्याश्रयणी-
यम् । उत्पन्नस्य च दृढस्य प्रत्ययस्य प्रामाण्यनिराकरणाद् दृष्टविरोधः । तस्मात्सर्वाभ्यश्चोदनाकल्प-
नैव ज्यायसी । तत्र हि तन्मात्रादृष्टाभ्युपगमः । शेषास्तु महाजनपरिग्रहादयः सर्वेऽनुविधीयन्ते ।
संभाव्यते च मन्वादीनां चोदनापूर्वविज्ञानकारणत्वेन ॥ इति ॥

दृष्टार्थानां स्मृत्यादीनामपि चोदनामूलकत्वे चादृष्टार्थत्वे चेत्थं तन्त्रवार्तिकम्—

एतदयुक्तं कुतः—

धर्मं प्रति यतोऽत्रेदं प्रामाण्यं प्रस्तुतं स्मृतेः ।
तस्मात्कृष्यादिवत्तेषामुपन्यासो न युज्यते ॥

न हि यावत्किंचिदाचरणं तस्य सर्वस्य मूलमिह प्रमाणीक्रियते । धर्मजिज्ञासाधिकारात् ।
यदि च गुर्वनुगमनादीनां केवलं दृष्टार्थत्वमेव स्यात्, ततः कृष्यादिवद्धर्मं प्रत्यप्रामाण्यमेवेति नोप-
न्यसितव्याः । स्यादेतत्—अप्रमाणत्वेनैषामुपन्यास इति । न । तथा सति " हेतुदर्शनाच्च " इत्यत्रो-
दाहर्तव्या भवेयुः । तस्माच्छ्रेयांसामिति च दर्शनं निष्फलम् । न च नियोगतः शास्त्रादृते प्राप्तिः ।
शक्यते ह्युपायान्तरेणापि सामदानादिना गुरुरध्यापनादीनि कारयितुम् । तन्नास्ति नियमविधेरव-
काशः । सर्वत्र च यथाकथंचित् लोकपङ्क्तिसाहाय्योपादानात्मरक्षणप्रीत्युत्पादादिका दृष्टार्थता
भाष्यकारोक्ता शक्या वक्तुम् । न चावघातादीनां वृष्टिकामयागादीनां च दृष्टार्थानामवैदिकत्वम् ।
तस्मात्सत्यपि दृष्टार्थत्वे संभाव्यते वेदमूलत्वं नियमादृष्टासिद्धेरनन्यप्रमाणकत्वात् । ततश्च गुर्वनुगम-

नादेर्नैमित्तिकत्वादक्रियायां प्रत्यवायः, करणे च न भवति । दृष्टं च प्रीतो गुरुरध्यापयिष्यतीत्येवमादि निष्पद्यते । नियमाच्चाविघ्नसमाप्त्यर्थोऽपूर्वसिद्धिः ॥ इति ॥

एवं च " आचाराद्गृह्यमाणेषु तथा स्यात् ( जै. सू. ६–२–१० ) इत्यत्र सकृदसकृद्वाऽनुष्ठानमिति विचारो युक्तः । इतरथा तु दृष्टार्थत्ववशेनैवोदकपानादिवदवधारणं स्यात् । यत्तु भाष्यकारेण दृष्टार्थत्वादेव प्रामाण्यमित्युक्तम् । तत्पूर्वपक्षवाद्यतिशयार्थम् । एतदुक्तं भवति । यास्तावददृष्टार्थाः स्मृतयस्ताः कथंचिदप्रमाणीकुर्याद् भवान् । इमाः पुनर्गुर्वनुगमनादिविषयाः कथमिवाप्रमाणं भविष्यन्ति इति । सभाप्रपादीनां यद्यपि विशेषश्रुतिर्नैव कल्प्यते । तथापि परोपकारश्रुत्यैव समस्तानामुपादानात्प्रामाण्यम् । तस्माच्छ्रेयांसमित्यश्वे गर्दभेनानुगन्तव्ये सिद्धवच्छ्रेयसामुनैरनुगमनं दर्शयति । यथा धन्वनि निरुदके कृताः प्रपाः परेषामुपकुर्वन्त्येवं त्वामिति देवतास्तुतिपरे वाक्ये सिद्धवत्प्रपासद्भावस्तस्याश्च पारार्थ्यं दृश्यते । गोत्रचिह्नं शिखाकर्म । तत्राप्याचारनियमस्यादृष्टार्थत्वान्नैव तावन्मात्रमेव प्रयोजनम् । शक्यं ह्युपायान्तरेणापि गोत्रं स्मर्तुम् । तेनान्य एवाभिप्रायः । कर्माङ्गभूतं तावच्चतुरवत्तपञ्चावत्तादिविभागसिद्ध्यर्थमवश्यं स्मर्तव्यं गोत्रम् । अतस्तच्चिह्नार्थमपि तावच्छिखाकल्पस्मृतेः प्रामाण्यमस्तु । तन्नियमादृष्टस्य त्वेकान्तेनैवानन्यगतित्वात्पुरुषार्थता सेत्स्यतीति । तेन सर्वस्मृतीनां प्रयोजनवती प्रामाण्यसिद्धिः । तत्र यावद्धर्ममोक्षसंबंधि, तद्वेदप्रभवम् । यत्त्वर्थसुखविषयं तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यम् । एषैवेतिहासपुराणयोरप्युपदेशवाक्यानां गतिः । उपाख्यानानि त्वर्थवादेषु व्याख्यातानि । यत्तु पृथिवीविभागकथनं, तद्धर्माधर्मसाधनफलोपभोगप्रदेशविवेकाय किंचिद्दर्शनपूर्वकं किंचिद्वेदमूलम् । वंशानुक्रमणमपि ब्राह्मणक्षत्रियजातिगोत्रज्ञानार्थं दर्शनस्मरणमूलम् । देशकालपरिमाणमपि लोकज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं दर्शनगणितसंप्रदायानुमानपूर्वकम् । भाविकथनमपि त्वनादिकालप्रवृत्तयुगस्वभावधर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण वेदमूलम् । अङ्गविद्यानामपि त्वर्थपुरुषार्थप्रतिपादनं लोकवेदपूर्वकत्वेन विवेक्तव्यम् । तत्र शिक्षायां तावद्वर्णकरणस्वरकालादिशविभागकथनम्, तत्प्रत्यक्षपूर्वकम् । यत्तु तथा विज्ञानात् प्रयोगे फलविशेषस्मरणम् । मन्त्रो हीनः स्वरतो वर्णतो वेति च प्रत्यवायस्मृतिः, तद्वेदमूलम् । एवं कल्पसूत्रेष्वर्थवादादिमिश्र-शाखान्तरविप्रकीर्णन्यायलभ्यविध्युपसंहारसमर्थनिरूपणं तत्तत्प्रमाणमङ्गीकृतम् । लोकव्यवहारपूर्वकाश्च [illegible]प्रकाराः सुखार्थहेतुत्वेनाऽऽश्रिताः । व्याकरणेऽपि शब्दापशब्दविभागज्ञानं साक्षाद्दृष्टादिविभागान्वयव्यतिरेकनिमित्तम् । साधुशब्दप्रयोगात्फलसिद्धिरपशब्देन तु फलवैगुण्यं भवतीति वैदिकम् । छन्दोविचित्यामपि गायत्र्यादिविवेको लोकवेदयोः पूर्ववदेव प्रत्यक्षः । तज्ज्ञानपूर्वकप्रयोगात् फलसिद्धिर्वेदात् । यथा च भवति ब्राह्मणम् । यो ह वाऽविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति [illegible]त्यादि । ज्योतिःशास्त्रेऽपि ग्रहनक्षत्रविभागद्वारेण चन्द्रादित्यादिगतिविभागेन तिथिनक्षत्र-[illegible]नुमानमूलं ग्रहगतिस्पर्शः[illegible]निमित्तपूर्वकं शुभाशुभकर्मफलविपाकसूचनं

तद्गतशान्त्यादिविधानद्वारेण वेदमूलम् । एतेन सामुद्रवास्तुविद्यादि व्याख्यातम् । ईदृशा वा विषयः सर्वत्रानुमातव्याः । ईदृशे गृहशरीरादिसंनिवेशे सति एतदेतच्च प्रतिपत्तव्यमिति । मीमांसा तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्नसंप्रदायपण्डितप्रवरैः प्रवृत्ता । न हि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः । एतेन न्यायविस्तरं व्याचक्षीत ॥ इति ॥

एतेन च तन्त्रवार्तिकेन—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ( या. स्मृ. १।३ )

इति चतुर्दशविद्यास्थानेषु किं किं वा लोकव्यवहारमूलकं किंच वेदमूलकमिति विवेकः सुविशदमेव विशदीकृतः । अर्थादेव यदर्थसुखविषयं तल्लोकव्यवहारपूर्वकमिति धर्मशास्त्रापरपर्याय-स्मृतिष्वपि न सर्वेऽपि विधयो वेदमूलका इति सिध्यति । तत्र केषां वा वचनानामर्थसुखविषयत्वं केषां च धर्ममोक्षसंबन्धित्वमिति विवेकस्तु धर्मकामपण्डितप्रवरायत्त इति तैरेव सुविज्ञेयः ।

## ( स्मृतिप्रामाण्यनिष्कर्षः )

इदमत्र तात्पर्यं—यासां क्रियाणामितिकर्तव्यता प्रमाणान्तरागोचरा शास्त्रमात्रगम्या, तासां वेदमूलत्वम्, यासां च सा न तथा, किंतु प्रमाणान्तरैः सोपपत्तिका सुनिश्चेया च, तासां तत्तच्छास्त्र-मूलकत्वं लोकव्यवहारमूलकत्वं च । यत्र तु वेदमूलकेतिकर्तव्यतासंबन्धः, तत्र शास्त्रान्तरमूलकत्वेऽपि वा लोकव्यवहारमूलकत्वेऽपि वा नियमपरत्वमङ्गीकृत्य तदंशे वेदमूलकत्वं कल्पनीयम् । आद्ये विवाहो पनयनप्रायश्चित्तशान्तिकपौष्टिकादीनि कर्माण्युदाहरणम् । द्वितीये राजधर्माः । अत्र च प्रजापालन-रूपधर्मस्यालौकिकेष्टसाधनत्वेऽपि तदितिकर्तव्यताया अन्तःकण्टकबहिःकण्टकशोधनादिरूपाया इतर-प्रमाणैर्लोकव्यवहारेण च सुनिर्णेयत्वान्न तत्तत्कार्याणामलौकिकेष्टसाधनत्वं न वा वेदमूलकत्वम् । यस्तु सुविहितेऽपि शासने रहस्यपापजन्यः परिणामः, यथा कानीनसहोढपौनर्भवादिपुत्राः, तस्य च व्यवस्थाकरणं लोकव्यहारमूलमेव । तथैव राक्षसपैशाचविवाहानां विवाहत्वेन परिगणनमपि स्थितस्य गतिश्चिन्तनीया इति न्यायेन लोकव्यवहारमूलकमेव । प्रतिलोमजानां व्यवस्थापि तथैव । यद्येतेषां सर्वेषां वेदमूलकत्वं परिकल्प्येत, तदा तु कुमारीव्यभिचार-प्रतिलोमविवाह-बलात्कुमारी संभोग-तदपहरणादीनामपि धर्मत्वप्रसङ्गः । तथा सति निषेधवाक्यानामनवकाशापत्तिः । स्त्रीसंग्र-हणादिषु दण्डविधानादेर्निरर्थकत्वापत्तिश्च प्रसज्येत । अतः स्मृतिवाक्यानां पर्यालोचनावसरे पूर्वो-क्तमूलभूतविचारतत्त्वमवलम्ब्यैव यदि विचारः करिष्यते इदानीतनैः पण्डितप्रवरैः, तदा तु धर्मतत्त्वर-क्षणेन तत्प्रचारेण च महानुपकारः कृतः स्याज्जनतायाम् । नहि वचनमस्तीत्येतावतैव धर्मो वाऽधर्मो

वेत्यभ्युपगन्तुं युक्तम्। तथा सति लोकोच्छेदप्रसङ्गः स्यात्तदनु च धर्मोच्छेदः। अत एव धर्मपर्यालोचनायां धर्माभासोऽप्यवश्यं पर्यालोचनीयो भवति।

धर्मबाधो विधर्मः स्यात्परधर्मोऽन्यचोदितः।
उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः॥

इति श्रीमद्भागवतेऽन्यत्र च महाभारतादौ धर्माभासत्वेन निर्णयार्थमेताः पञ्चाधर्मशाखा अवश्यपर्यालोचनीयत्वेनोपदिष्टाः। अस्माभिरपि यथाबुद्धिबलं तत्तद्विषयपर्यालोचनावसरे पर्यालोचयिष्यन्त इत्यलं प्रपञ्चेन।

नन्वेवं वेदमूलकत्वं चेत्स्मृत्यादीनाम्, किमिति वेदवाक्यान्येव नोध्दृतानि। किमर्थमर्थस्मृतिरूपेण तदर्थसंग्रहणेऽभिनिवेश इति चेदत्र भट्टपादवचनान्येवोपन्यस्यामः। तथाहि—यत्तु किमर्थं चोदना नोपलभ्यन्त इति। तत्र केचिदाहुः—नित्यानुमेयास्ता न कदाचिदुच्चार्यन्ते यथा लिङ्गादिकल्पिताः। कथमनुच्चरितानां मूलत्वोपपत्तिरिति चेत्। नैष दोषः। पाठाविच्छेदवत्पारम्पर्येण स्मरणात्तत्सिद्धेः। यथैव हि ग्रन्थः संप्रदायादविच्छिन्नोऽस्तित्वं भजते, तथैव प्रतिज्ञया नित्यानुमेयश्रुतिसंप्रदायाविच्छेदसिद्धिः। तत्त्वयुक्तम्। अन्धपरम्परान्यायादेव। या हि चोदना न कदाचिदुच्चार्यते, तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावाद् दुर्लभतरमस्तित्वम्। तथा च स्मृतेरपि सैव वन्ध्यादौहित्रतुल्यता। लिङ्गादीनां तु नित्यत्वान्नित्यमनुच्चारितश्रुत्यनुमानकारणत्वमविरुद्धम्। तेन वरं प्रलीनश्रुत्यनुमानमेव। न च प्रलयो न संभाव्यते। दृश्यते हि प्रमादालस्यादिभिः पुरुषक्षयाच्चाल्पविषयत्वम्। न चैवं सति यत्किंचित्प्रमाणमापत्स्यते। शिष्टैर्त्रैवर्णिकदृढस्मरणान्यथानुपपत्तिलभ्यत्वाच्छ्रुत्यनुमानस्य। यद्वा विद्यमानशाखागतश्रुतिमूलत्वमेवास्तु। कथमनुपलब्धिरिति चेत्—उच्यते—

शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः।
नानाप्रकरणस्थत्वात्स्मृतेर्मूलं न दृश्यते॥

यत्तु किमर्थं वेदवाक्यान्येव नोपसंगृहीतानि इति। संप्रदायविनाशभीतेः। विशिष्टानुपूर्व्या व्यवस्थितो हि स्वाध्यायोऽध्येतव्यः श्रूयते। स्मार्ताश्चाचाराः केचित्क्वचित् कस्यांचित् शाखायाम्। तत्रापि तु केचित्पुरुषमेवाधिकृत्य आम्नायन्ते। येन क्रतुप्रकरणाम्नाताः केनचिन्निमित्तेनोत्कृष्यमाणाः पुरुषधर्मतां भजन्ते। यथा मलवद्वाससा सह न संवदेत्, तस्मान्न ब्राह्मणायावगुरेत् इत्येवमादयः। तत्र यदि तावत्तान्येव वाक्यान्युद्धृत्याध्यापयेयुः, ततः क्रमान्यत्वात्स्वाध्यायविधिविरोधः स्यात्, अनेन च निर्देशेनान्येऽप्यर्थवादोद्धारेण विधिमात्रमधीयीरन् कर्मौपयिकमात्रं वा। तत्र वेदप्रलयः प्रसज्येत। न चावश्यं मन्वादयः सर्वशाखाध्यायिनः। ते हि प्रयत्नेन शाखान्तराध्यायिभ्यः श्रुत्वाऽर्थमात्रं स्वपारंपरविस्मरणार्थं निबध्नीयुः। न च वाक्यविशेषो ज्ञायते।

यथैव हि स्मृतेर्दृढत्वात् भ्रान्तिमूलत्वं नास्त्येवमर्थवादमूलत्वमपि । शक्नुवन्ति हि त विध्यर्थवादौ
विवेक्तुम् । तत्र स्मृतेर्विध्यात्मकत्वात्प्रकृतितादात्म्यानुमानलब्धास्पदेऽर्थवादपूर्वकत्वं निष्प्रमाणकम् ।
अपि च वेदोऽखिलो धर्ममूलं, स सर्वोऽभिहितो वेदो, इति च स्वयमेव स्मर्तृभिरात्मा बद्ध्वा समर्पितः ।
तच्चैतन्नियोगतस्तत्कालैः कर्तृभिर्बुद्धिकारित्वादुपलब्धम् । अतः सिद्धं वेदद्वारं प्रामाण्यम् ।
यस्तु कर्तृसामान्यात् स्वतन्त्रमेव प्रामाण्यं वेदमूलत्वं वाऽनुमानेन साधयति । तस्यार्थकामानुसारि-
भिर्दृष्टार्थैराचारैरनेकान्तः । श्रूयमाणश्रुत्यधीनप्रामाण्यापत्तेश्च विरुद्धता । तस्मादर्थापत्तिरेवात्राव्यभि-
चारादुपचारात्पश्चान्मानादनुमानत्वेनोक्ता । इति ।

( वेदविरुद्धस्मृत्यादिवाक्यप्रामाण्यविचारः )

ननु वेदविरुद्धस्मृतिसूत्रपुराणवाक्यानां धर्ममोक्षसंबन्धिनां का गतिरिति चेत्—अत्रोच्यते—
नन्वेवं वेदविरुद्धस्मृतिसूत्रपुराणवाक्यानां धर्ममोक्षसंबन्धिनां का गतिरिति चेत्—अत्रोच्यते—
शाबरभाष्यमतेन तावत्तेषामप्रामाण्यमेव । वेदानुमापकत्वासंभवात् । यथा हि वह्निरनुष्णो द्रव्य-
त्वादिति यदि कश्चन अनुमिमीत, तदा प्रबलेन प्रत्यक्षप्रमाणेनानुष्णत्वविरुद्धोष्णत्वस्योपलम्भाद्व्यभि-
विघटनद्वारा प्रकृतानुमानप्रतिबन्धः । तद्वत् स्मृतित्वेन मूलविज्ञानकारणवेदानुमाने प्रवृत्ते उपलब्ध-
स्मृतिविषयविरोधिविषयस्य प्रत्यक्षेण प्रबलेन वेदवाक्येनोपस्थापितत्वात् तादृशस्मृतिविषयस्य बाधि-
तत्वेन तद्विषयकविज्ञानस्यापि बाधितत्वात्प्रकृतस्मृतेर्बाधितविषयकत्वेनैवाप्रामाण्यानिर्धारणात् न
तन्मूलवेदानुमानप्रवृत्तिः । भट्टमते तु स्मृतित्वेनाद्ययावत् धर्मप्राणैः स्वीकृतत्वात्, वेदानामसंख्ये-
यत्वेन शाखोच्छेदानामिदानीमप्युपलम्भेन चोच्छिन्नशाखान्तःपातिकिंचिद्वाक्यमूलकत्वसंभवात्
वेदमूलकत्वं तादृश्याः स्मृतेः संभवत्येव । एवमपि यावच्छ्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यं तावत्सं-
भवत्येव । नो चेत्सर्वथाऽप्रामाण्यापत्तौ कालान्तरे तादृशवेदोपलम्भे सति पुनश्च स्मृतिविप्रलोपेन
सर्वत्रानाश्वासे पुनराश्वासस्य दुःशकत्वेन तादृशधर्मस्य सर्वथा लोपप्रसङ्गात् । तस्मादननुष्ठान-
लक्षणमप्रामाण्यं युक्तमिति ।

सूत्रद्वयमिदं बाह्यस्मृतिप्रामाण्यनिराकरणपरम्, इति वार्तिककारमतम्। एवमपि भाष्यकारमत-
मनुसृत्य "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" "हेतुदर्शनाच्च" इति सूत्रद्वयमपि स्मृतेरेवा-
प्रामाण्यप्रतिपादनपरं नेयम् । ननु श्रुतिद्वैधं दृश्यते किलोदितानुदितसमयाध्युषितहोमादौ, तद्वदत्रापि
विरोधेऽपि श्रुत्यनुमानसंभवात् कथं तावदत्यन्ताप्रामाण्यकल्पना । शाखानां तु सहस्रश आम्नानं
सहस्रवर्त्मा सामवेद इत्यादि । उच्छेदस्तु प्रत्यक्षत एवानुभूयते । तद्वरमननुष्ठानलक्षणाप्रामाण्यकल्पनेति
चेन्न । पूर्वविज्ञानानुमानसमय एव विरोधिविज्ञानस्योपस्थित्याऽनुमानासंभवात् । तस्मादयमत्राभिसंधिः-
अद्य तावत् स्मृतित्वेनोपलभ्यमानानां ग्रन्थाना न केवलं धर्ममोक्षसंबन्धिविषयकत्वमेव । अर्थकाम-
लोकव्यवहारवैद्यकादिविषयकत्वमप्युपलभ्यते । तत्र यदि स्मृतित्वेन सर्वत्र वेदमूलकत्वकल्पना

स्यात्तदा त्वनवस्था स्यात् । अतः प्रत्यक्षवेदविरोधे तादृशस्मृतिरप्रमाणं हेतुदर्शनाच्च । एवं च वेदाविरोधि यदितरविज्ञान तन्मूलिका च स्मृतिश्चेद्धर्मविषये प्रमाणतामर्हतीत्येतावानेवाऽऽशयः सूत्रकाराणाम् । अत एव " अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु " इति स्मृतेश्चरितार्थता । नो चेदस्वर्ग्यं न धर्म्यं यदि च धर्म्यं नास्वर्ग्यमिति वाक्यमिदं निरवकाशमेव स्यात् । अस्मन्मते तु धर्माविरुद्धार्थकामविषयकविधीनामपि धर्म्यत्वेन तद्विषये लोकविद्वेषेऽनाचरणं श्रेय इति भवति सावकाशता वाक्यस्य । तस्माद्वेदविरोधे हेतुदर्शने च स्मृतीनामप्रामाण्यमेवेति श्रेयान् भाष्यकारीयः पन्थाः ।

अत एवोक्तं वीरमित्रोदये परिभाषाप्रकरणे भविष्यपुराणे—

दृष्टार्था तु स्मृतिः काचिददृष्टार्था तथा परा ।
दृष्टादृष्टार्थरूपाऽन्या न्यायमूला तथा परा ॥
अनुवादस्मृतिस्त्वन्या शिष्टदृष्टा च पञ्चमी ।
सर्वा एता वेदमूला दृष्टार्थाः परिहृत्य तु ॥

एतासां लक्षणानि तत्रैव—

पड्गुणस्य प्रयोज्यस्य प्रयोगः कार्यगौरवात् ।
सामादीनामुपायानां योगो व्याससमासतः ॥
अध्यक्षाणां च निक्षेपः कण्टकानां निरूपणम् ।
दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज ॥
संध्योपास्या सदा कार्या शुनो मांसं न भक्षयेत् ।
अदृष्टार्था स्मृतिः प्रोक्ता ऋषिभिर्ज्ञानकोविदैः ॥
पालाशं धारयेद्दण्डमुभयार्थां विदुर्बुधाः ।
विरोधे तु विकल्पः स्याज्जपहोमश्रुतौ यथा ॥
श्रुतौ दृष्टं यथा कार्यं स्मृतौ तत्तादृशं यदि ।
भवत्यनुवादिनी सा तु पारिव्राज्यं यथा गृहात् ॥ इति

[illegible] । अन्यथा [illegible] वेदमूला अनुवादिन्यपि वेदमूलेति को विशेषः । [illegible] दृष्टार्थेष्वपि न मन्तव्यम् । [illegible] । [illegible] विषये [illegible] इति चेत्, [illegible] । तथा हि—

[illegible] ।
[illegible] ॥

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥ मनुः
( अ. ३ श्लो. १२।१३ )

इति मनूक्तौ कामतस्तु प्रवृत्तानामित्यनेन काम्यभार्यात्वमेतासां स्पष्टमेवोक्तम्। तत्र विवाहो हि रतिपुत्रधर्मार्थत्वेन त्रिविधः। तत्र काम्यस्यापि "दध्नेन्द्रियकामस्य जुहुयादि"त्यत्रेव नित्यसंयोगसंभवात्, नित्यपञ्चमहायज्ञादिक्रियासु सर्वासामधिकारप्राप्तौ शूद्रस्य वेदानधिकारप्रतिपादकश्रुतिवाक्यविरोधो दुर्वारः। न च शूद्रस्यापि—

" नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत् "।

इति वचनात् पञ्चमहायज्ञाधिकारो वर्तत एवेति वाच्यम्। त्रैवर्णिकपतिना सह शूद्राया अपि वैदिकक्रियासु अधिकारप्राप्तिप्रसङ्ग इति तदर्थत्वात्। एवं चैतादृशकाम्यस्मृतेः प्रत्यक्षश्रुत्या बाध एव युक्तः। अत एव याज्ञवल्क्येन शूद्राभार्यानिषेधः कृतः।

यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः।
नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥

अत्र मिताक्षरा—रतिपुत्रधर्मार्थत्वेन विवाहस्त्रिविधः। तत्र पुत्रार्थो द्विविधः। नित्यः काम्यश्च। तत्र नित्ये प्रजार्थे " सवर्णः श्रोत्रियो वरः " इत्यनेन सवर्णा मुख्या दर्शिता। इदानीं काम्ये नित्यसंयोगे चानुकल्पो वक्तव्य इत्यत आह--यदुच्यत इति "। यदुच्यते-सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्माणि। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥ इत्युपक्रम्य ब्राह्मणस्य चतस्रो भार्याः, क्षत्रियस्य तिस्रः, वैश्यस्य द्वे इति द्विजातीनां शूद्रावेदनमिति। नैतद्याज्ञवल्क्यमतम्। यस्मादयं द्विजातिस्तत्र स्वयं जायते " तज्जाया जाया भवति यदस्यां जायते पुनः " इति श्रुतेः। अत्र च तत्रायं जायते स्वयमिति हेतुं वदता नैत्यकपुत्रोत्पादनाय काम्यपुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयनिषेधं कुर्वता नैत्यकपुत्रोत्पादनानुकल्पे काम्ये च पुत्रोत्पादने ब्राह्मणस्य क्षत्रियावैश्ये, क्षत्रियस्य च वैश्याभार्याऽभ्यनुज्ञाता भवति " इति।

नन्वत्र " आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः " इति विधिमूलकनित्यप्रजार्थविवाह एवानुलोमेन क्षत्रियावैश्ययोरनुज्ञानम्, न धर्मार्थम्। तथैव शूद्राया अपि स्यात्, ततश्च कुतः किल तस्या वैदिकयज्ञसम्बन्धसंभव इति चेन्न—मृतभार्यस्याऽऽश्रमान्तरानधिकारिणो गृहस्थाश्रमावस्थामात्राभिकाङ्क्षिणोऽनुलोमेन एतद्भार्योपदेशात्। अत एव मिताक्षरायामभ्यनुज्ञावाक्यशीर्षके— " इदानीं रतिकामस्योत्पन्नपुत्रस्य वा विनष्टभार्यस्याऽऽश्रमान्तरानधिकारिणो गृहस्थाश्रमावस्थामात्राभिकाङ्क्षिणः परिणयनक्रममाह—" तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्र-

मम् । ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः " इत्युक्तम् । यदि च केवलं काम्यपुत्रोत्पादनमेवैतासां फलं स्यात् । कथमाश्रमावस्था स्यात् । किं च शूद्रापरिणयकाले पाणिग्रहहोमादौ ब्राह्मणस्य पत्युः वैदिकमन्त्रोच्चारोऽस्ति न वा ? नो चेद्ब्राह्मणादीनां विवाहसंस्कार एव न निष्पद्येत, अस्ति चेत्—" पद्यु ह वा एतच्छ्मशानं यच्छूद्रः ." तस्माच्छूद्रसमीपे नाध्येतव्यम् " इति श्रुतिर्विरुध्येत । तस्मात्प्रत्यक्षश्रुतिविरोधात् हेतुदर्शनाच्चेयं शूद्रापरिणयस्मृतिरप्रमाणमेव ।

अत एव मनुनापि—

न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते ॥

इति यस्यां कस्यामप्यवस्थायां शूद्राभार्योपदेशाभावो नाम विधिर्नास्तीति प्रतिपाद्यते । एतेन काममूलकमपि शूद्रापरिणयनमधर्मिति सूचनेनेतरयोः क्षत्रियवैश्ययोः काममूलकमपि परिणयनं धर्मो भवतीति अभिसन्धिराविष्कृतः ॥

तथैव " महोक्षं वा महाजं वा श्रोत्रियायोपपादयेत् " इत्याद्या " तद्यथैवादो मनुष्यराज आगते अन्यस्मिन् वार्हत्युक्षाणं वा वेहन्तं वा क्षदन्ते " इत्याद्यर्थवादप्रभवा स्मृतिः " मा गामनागामदितिं वधिष्ट " इति प्रत्यक्षश्रुत्या विरोधादप्रामाणिकी । एवमन्यत् ऊह्यम् । अत एव वीरमित्रोदये भाष्यवार्तिकयुतयोर्बलाबलविचारे उभयोरपि दोषत्वमभिधाय स्मृतीनामनुकल्पत्वमुक्त्वा मुख्यासंभवे चानुकल्पानुष्ठानात् फलं भवति न तत्संभवे । इत्युक्तम् । मुख्यकल्पस्तु श्रुतिबोधित एव तद्विरोधेन स्मृतेरनुष्ठाने फलाभाव इति तदर्थः । एतदर्थमत्र स्पष्टप्रतिपत्तये वीरमित्रोदयवाक्यान्येवोद्धरामः तद्यथा—स्मृतिरित्यनुवृत्तौ भविष्यपुराणे—

श्रुत्या सह विरोधे तु बाध्यते विषयं विना ।

निष्प्रमाणत्वाद् उपसंहरणीयार्थश्रुतिद्वयस्य च ग्रहणाग्रहणवद्विकल्पसंभवात् किंनिमित्तमननुष्ठानम् । न च श्रुतिविरुद्धा स्मृतिः किम् "अङ्गं वा समभिव्याहारा" दितिवन्न्यायाभासमूलोताष्टकादि-स्मृतिवच्छ्रुतिमूलेत्यप्रामाण्यसंशयात्तदिति वाच्यम् । अविरुद्धस्मृतिष्वपि तस्यानिवार्यत्वादिति । अत्र वदन्ति—

अतः स परमो धर्मो यो वेदादवगम्यते ।
अवरः स तु विज्ञेयो यः पुराणादिषु स्मृतः ॥

इति व्यासवचनाद्वेदस्मृत्यवबोधितयोर्धर्मयोरुत्कर्षापकर्षाववगम्येते । तथा च वैदिको धर्मो मुख्य उत्कृष्टत्वात् । स्मार्तोऽनुकल्पः, अपकृष्टत्वात् । मुख्यासभवे चानुकल्पानुष्ठानात् फलं भवति न तत्संभवे ।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

इति मनूक्तेः । तथा च श्रुतिविरुद्धार्थानुष्ठाने फलाभाव एव बीजम्, न त्वप्रामाण्यसंदेहादि अविरोधे तु स्मृत्यर्थानुष्ठानादेव फलम् । तस्या अपि धर्मे प्रमाणत्वादिति सर्वं सुस्थम् । इति ।

अत्र च यद्यप्यनुकल्पत्वेन स्मार्तस्य कर्मणः प्रत्यक्षश्रुतिविरोधे फलाभाव उक्तः । सोऽपि न धर्ममोक्षसंबन्धिस्मृतिविषयकः संभवति । कर्मणामनुष्ठाने किंचिदपि फल स्यादेव । तत्रैहिकफला-संभवेऽर्थादेव पारलौकिकं सेत्स्यति । तस्मादिदमपि मतमर्थकामविषयकस्मृतिविषयमेव । तत्र पारलौकिकफलाभावो हि धर्माविरोध्यर्थकामाभावेन संभवति । दृष्टं चैहलौकिकमर्थकामात्मकं च फलं स्यात् । परंतु न सांपरायिकमिति । एवं च सांपरायिकशब्देन मनूक्त्यापि अर्थसुखसंबन्धिन्याः स्मृतेरेव प्रत्यक्षश्रुतिविरोधे धर्मफलाभावो बोध्यते इति मनुवचनमप्यस्माकमनुकूलमेव । एवं च धर्माविरोध्यर्थ-कामयोरपि धर्मत्वेन तन्मूलकस्मृतेः प्रत्यक्षधर्मबोधकश्रुतिविरोधे धर्मेऽप्रामाण्यमेव । अर्थकामयोस्तु स्यान्नाम प्रामाण्यं, तादृशार्थकामयोर्धर्मविरोधेन हेयत्वमित्येव प्रकृतसूत्रद्वयस्य तात्पर्यमिति भाति । अतः परं परिनिष्ठिता एव प्रमाणमत्र विषये ।

अस्तु वा भाट्टमतानुसारेण बाह्यमतनिराकरणपरत्वमेतयोः सूत्रयोः । एवमपि धर्मविरोध्यर्थ-काममूलकस्मृतिपरत्वं नैव संभवतीति नैव वक्तु पार्यते । तथा सति कानीनसहोढजादिपूर्वनिर्दिष्ट-विषयकस्मृतीनां धर्मे प्रामाण्यापत्तिः, न च सेष्टा अतिप्रसङ्गात् । तस्मात्पूर्वोक्तविषयकत्वकल्पने-ऽपि न हानिरिति सिद्धः स्मृतिप्रामाण्याप्रामाण्यविचारः ।

## ( स्मृतिप्रामाण्यनिष्कर्षः । )

एतेन स्पष्टमिदमवगम्यते यन्नहि सर्वासां स्मृतीनां साक्षाद्वेदमूलकत्वेन प्रामाण्यम् । किंतु कासांचिददृष्टार्थप्रधानानामेव । दृष्टार्थप्रधानानां तु राजधर्मादिविषयकानां दण्डनीतिमूलकत्वमेव । दण्डनीतौ च प्रजापालनप्रकार एव मुख्यतया प्रतिपाद्यते । तस्य च राज्ञः परमधर्मत्वेन वेदेऽपि प्रतिपाद्यमानत्वाद्धर्मत्वमिति नातिरोहितं विपश्चिताम् । एवं च यथा यथा परिस्थितिपरिवर्तनं तथा तथा प्रजानां धर्मनिष्ठापूर्वकं विनीतत्वसंपादनमपि परमवश्यं कर्तव्यमिति तद्विषयिकाः स्मृतयः काश्चन "अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः" इत्यादयो न्यायमूलिकाः, काश्चन संवित्परिपालनादिविषयप्रतिपादिकाः परिस्थितिमूलिकाः, काश्चित् वेदविरुद्धा अपि "पञ्चधा विप्रतिपत्तिः, दक्षिणतस्तथोत्तरतः" इत्यादयः प्रजाप्राबल्यमूलिकाः, काश्चन

"देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्याद्यस्य चोक्ता न निष्कृतिः" ॥

इत्यादयः प्रजापालनकारुण्यमूलिकाः, इत्येवं प्रकारेण स्मृतीनां मूलकल्पने बहवो विभेदाः । एतासां धर्मप्रामाण्यं तु राजधर्मे । तस्य चादृष्टोपसर्जनत्वेन एतासामप्यदृष्टार्थत्वं वेदमूलकत्वं चोरीक्रियते शिष्टैः । न हि प्रतिपदोक्तत्वेन सर्वेषां धर्माणां निर्देशः कर्तुं शक्यः । अत एव—

अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥ (म. अ. १२, १०८)

इति मनुना स्वयमेवानाम्नातविषये कण्ठत एवोक्तमनुशासनम् । इदं सर्वं धर्मपालनार्थमेव प्रजानां परिपालनाधिकारिणा राज्ञा प्रजाविषये च कर्तव्यं, न येन केनापि । न हि बाह्यकण्टकसंशोधने म्लेच्छादिषु धार्मिकप्रतिपक्ष इव नीतिः प्रवर्तनीया । अत एव—

नास्य च्छिद्रं परः पश्येत् परस्य च्छिद्रमन्वियात् ।
गूहेत् कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ ( म. अ. ७, १०५ )

इत्यादि सामान्यानुशासनम् । नहि शरणागतरक्षणं परमो धर्म इति आततायिभिर्यवनादिभिः संव्यवहारे स धर्मः । अत एव—

आततायिनमायान्तमपि वेदान्तगं रणे ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥

इति,—

आततायिनमायान्तं हन्यादेवाविचारयन् ।

इति च स्मृत्यनुशासनम् । नहि राजधर्मा अदृष्टार्थप्रधानाः, अपि तु दृष्टार्थप्रधानाः । एतादृग्व्यतिरेकाभावादेव नराणां शरणागतस्य परधर्मरक्षाव्यवहार एव परमो धर्म इति

मन्वानस्य घोरीयवनस्य पृथ्वीराजेन परिरक्षण कृत्वाऽप्यन्ततस्तस्यैव हस्तेन मरणं स्वीकृतम्।
अत एवोक्तम्—

सूक्ष्मो हि भगवान् धर्मः परोक्षो दुर्विचारणः।
अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेत् ॥

इत्यप्युक्तम्। अधिकं चात्र धर्मार्थकामाना परस्परबलाबलविचारेऽग्रे विशदीकरिष्यते। इद-
मेवात्र संसूच्यते यत् "या दृष्टार्थास्ता तत एव प्रमाणम्" इति भट्टपादप्रभृतिभिर्मीमांसकैरथयाव-
दुद्घोषितमपि दृष्टार्थकस्मृतिप्रामाण्यं नाकर्ण्यते पण्डितप्रवरैरिदानीतनैरिति महत्कष्टम्। अलमतिप्रप-
ञ्चेन। सर्वथा तु दृष्टार्थानामदृष्टार्थानामुभयार्थानां वा स्मृतीना साक्षाद्वा परम्परया वा वेदमूलकत्वे-
नैव प्रामाण्यमित्यत्र न विशयलेशोऽपि। फलस्य प्रधानोपसर्जनत्वे परं कदाचित्स्याद्विप्रतिपत्तिः।
वेदविरोध्यर्थकामानां त्याज्यत्वेन तद्विषयकस्मृतीनां परमप्रामाण्य तु पूर्वमेव निवेदितम्। अथ क्रमप्राप्त-
माचारप्रामाण्यं निरूप्यते।

## ( आचारप्रामाण्यविचारः )

आचारप्रामाण्यस्य विषयविचारः। यद्यपि "आचारश्चैव साधूनाम्" "वेदः स्मृतिः सदाचारः"
इत्यादि मनुयाज्ञवल्क्यप्रभृतिवचनैः शिष्टाचारस्य धर्माधर्मयोः प्रामाण्यमवगम्यते। तथापि कीदृशः
शिष्टाचारस्य ? किं दृष्टार्थकस्यादृष्टार्थकस्य वोभयार्थकस्य, आहोस्वित् जानपदपरिस्थितिपर्या-
लोचनेन धर्मसंरक्षणार्थं प्रवर्तितस्य राजशासनमूलकस्य, स्वयमाचरितस्य वा सामयिकस्य वेति
समुदेति शङ्का तदर्थं चाऽदौ श्रुतिस्मृत्यनुदितस्याऽऽचारमात्रस्य क्वावकाशो धर्मप्रमाणत्वेन स्वीकारे
इत्यालोचनीयम्। जन्मप्रभृत्यामरणं देहसंस्कारविषयः प्रायेण सूत्रस्मृत्यादिषूपनिबद्धाः, तथैवानुवर्त-
नीया इति न तत्राऽऽचारस्य स्वातन्त्र्येण धर्मप्रामाण्यम्। यद्यपि विवाहश्मशानयोर्देशाचारकुलाचारयोः
प्रामाण्यं पारस्करगृह्यसूत्रादिषु प्रतिपादितम्। तथापि विहितसाङ्गविवाहादिकर्मसु न तयोरुपकारकत्वम्।
अविहितत्वात्। यदि तावदङ्गत्वेनाऽऽचारानुष्ठानमभिमतं स्यात्तदा तु तदाचारस्वरूपमपि निर्दिष्टं स्यात्।
न च प्रामाण्यबोधकवचनेनैवाङ्गत्वमपि बोधितमिति वाच्यम्। आचाराणामनेकविधत्वसंभवेन तत्त-
दाचारस्वरूपाणां विवाहाद्यङ्गत्वे कुत्रापि साङ्गविधेरनुष्ठानासंभवात्। न च न सर्वत्र सर्वेषा तदङ्गत्वम्।
तत्तद्देशे तत्तत्कुले च तत्तदाचारस्याङ्गत्वे साङ्गानुष्ठानस्य को वाऽसभव इति वाच्यम्। एवमप्यङ्गविशे-
षात् प्रधानवैलक्षण्यापातेन सर्वत्र विवाहादिसंस्कारस्वरूपाणामेकविधानुगमासंभवात्। न चेष्टापत्तिः।
सर्वत्रानादिकालादारभ्यैव विवाहस्य
अदृष्टार्थधर्मेषु तथा सति अनुशासनप्रयोजनाभावप्रसङ्गात्।
श्मशानक्रियायाश्च यथासंभवमनुस्यूतत्वेन वेदमूलकत्वापत्तेः। न सापीष्टा।

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ (मनु १२।९५)

इत्यादिना विरोधात् । अतश्च वेदमूलकं किंचित् सर्वसाधारणमदृष्टार्थं कर्मानुशास्यैवानन्तरं तदनङ्गोऽपि तदविरुद्धः कश्चन देशाचारो वा कुलाचारो वा धर्मत्वेन अनुष्ठीयेत चेत् सोऽपि संग्राह्य इत्येवानुमतिनिदर्शकमेतदाचारप्रामाण्यवचनमित्येवाङ्गीकर्तव्यम् । एवं च कदाचित् कुलाचारदेशाचारयोरननुष्ठानेऽपि नादृष्टार्थकसंस्कारहानिः । एवं च संस्कारेषु आचारस्य नातीवोपयोगः । न वा प्रायश्चित्तादिविधिषु । तत्रापि शास्त्रेण तत्स्वरूपनियमनात् । तत एव न श्राद्धादिस्मार्तविधिषु । अन्ततो गत्वा सामयिका गणधर्मा वा राजानुशासनप्रवर्तिता आचारा वा आगमोक्ता वा आचारा इत्येवाऽऽचारप्रामाण्यविषयः । संदिग्धव्यवहारे च शिष्टव्यवहारमनुसृत्यैव निर्णय इति यद्यपि तैत्तिरीयोपनिषदि स्मृत्यादिषु च प्रतिपादितम् । तथापि तत्रापि प्रमाणविषयकसंशयस्य निराकरणमेव आचारप्रामाण्यप्रयोजनं चेत् नाऽऽचारस्याऽऽचारत्वेन प्रामाण्यं सिध्यति प्रामाण्यानुमापकत्वेन । यदि च व्यवहारे वृत्तविचिकित्सायां शिष्टाचारस्य प्रामाण्यं तर्हि तु तस्य दृष्टार्थकत्वेनादृष्टार्थे धर्मेऽप्रामाण्यम् । दृष्टार्थानां च धर्माणां प्रायोऽर्थकाममूलकत्वेन तेषां धर्माविरोधित्वनिश्चये राजदण्डस्यैव प्रभुत्वेनान्ततो गत्वा राजदण्डप्रवर्तिता आचारा एव विचारविषयतामावहन्ति । सामयिकास्तु पाखण्डिनैगमाद्याचारा धर्माविरोधिनश्चेदेव राज्ञा परिपालनीया इत्युक्तं पराशरमाधवीये संविद्व्यतिक्रमप्रकरणे नारदीयस्मृतिवचनेन । तद्यथा—

यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः ।
यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा ॥
प्रतिकूलं च यद्राज्ञः प्रकृत्यवमतं च यत् ।
दोषवत्करणं यत्स्यादनाम्नायप्रकल्पितम् ॥
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत् ॥ इति ।

व्याख्यानं चैतत्स्यैव—धर्मो जटावत्त्वादिः । कर्म प्रातः पर्युषितभिक्षाटनादि । उपस्थानविधिः समूहकार्यार्थं पटहादिध्वनिमाकर्ण्य मण्डपादौ मेलनम् । वृत्त्युपादानं जीवनार्थं तापसवेषपरिग्रहः । राज्ञः प्रतिकूलमधिकारिशूद्रकर्तृकं त्रैवर्णिकविवादे धर्मविवेचनम् । तस्य च प्रतिकूलत्वमुक्तं स्मृत्यन्तरेण—

यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम् ।
तस्य मज्जत्यते राष्ट्रं बलं कोशश्च नश्यति ॥ इति ॥

मकृत्यवमतं स्वभावत एव यदननुज्ञानं पाखण्ड्यादिषु ताम्बलभक्षणाद्यर्थानां बाधकं रसवादादिकम् । मिथः संघातकरणमुपस्थानविधेः पूर्वं पृथक् पृथगवान्तरस्तोभकरणम् । आहितकलशादिकम् । परस्परोपतापः राजपुरुषाश्रयणेनान्योन्यमर्थापहरणादिः । दोषवत्करणं श्रुतिस्मृतिविरुध्दं विधवादौ वेश्यात्वादिकं पाखण्ड्यादिभिः प्रकल्पितम् । इति ।

एतेन पाखण्डिनैगमादिसामयिकाचाराणामपि राजदण्डैकनिर्णेयत्वाद्दृष्टार्थत्वेन धर्मे प्रामाण्याभाव इति सिध्यति । एवं चान्ततो गत्वा यत्र जानपदव्यवहारपरिस्थितिः संकटप्राया, तत्र वृत्तविचिकित्सा । यत्र च धर्मप्रमाणसंशयः स्वशक्त्या निराकर्तुमशक्यः, तत्र धर्मविचिकित्सा, यत्र च राष्ट्रविप्लवसंभवः धर्मरक्षणासंभवो वा आपद्ग्रस्तत्वं वा तत्रोभयविचिकित्सेति तत्रैव शिष्टाचारमवलोक्य वर्तितव्यमिति तैत्तिरीयोपनिषदभिप्रायः । अत्र धर्मप्रमाणसंशयादन्यत्र राजदण्डस्यैव प्रभुत्वेन तत्प्रवर्तिताचाराणां धर्ममूलकलोकसंरक्षणैकफलकानां संभवति प्रामाण्यचिन्ता । अतस्तवत्र विचार्यते ।

## ( धर्मप्रमाणसंशयमूलकाचारप्रामाण्यविचारः )

जीवत्पितृकेणाश्विनशुद्धप्रतिपदि मातामहश्राद्धं कर्तव्यमित्याम्नायते निबन्धकारैः । तस्य मूलं तु न कुत्रापि श्रुतौ स्मृतौ वोपलभ्यते । तच्च महता संरंभेण क्रियते । जातमात्रेऽपि शिशौ मासाभ्यन्तरेऽपि तस्यानुष्ठानं दरीदृश्यते । तत्रापि श्राद्धनिषिद्धा अपि द्विःपक्वादयः पदार्थास्तत्र हविर्द्रव्यत्वेन मन्यन्ते । यथा पूरणापक्वादयः । तत्रायं विचारः—किं जीवति पितरि शैशवावस्थायामपि माङ्गलिकवदिदं कर्तव्यं न वा ? तत्र—

**शिष्टाकोपे विरुध्दमिति चेत् ( मी. सू १।३।५ । )**

**न शास्त्रपरिमाणत्वात् ( मी. सू. १।३।६ )**

शिष्टस्य वेदानुशिष्टस्याकोपे दूषणाभावेऽविरुध्दत्वादेव न काचिद्धर्महानिरिति कर्तव्यम् । इति चेन्न । शास्त्रस्य परिमितत्वात् । परिमितान्येव हि चतुर्दशाष्टादश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेदोपवेदाङ्गोपाङ्गाष्टादशधर्मसंहितापुराणशास्त्रशिक्षादण्डनीतिसंज्ञकानि । न च तैरेतादृशीनां क्रियाणां धर्मत्वं प्रतिपाद्यते । मोहमूलकत्वमप्येतासां संभवति । अतो नैतादृशस्याऽऽचारस्य धर्मे प्रामाण्यमिति पूर्वः पक्षः ।

**अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ( मी. सू. १।३।७ )**

अपिवेति पक्षव्यावृत्तिः, न ह्येतादृश आचारस्य धर्मबुद्धेरन्यत् कारणं ग्रहीतुं शक्यते । न चापि मोहमूलकत्वं संभवति । श्राद्धस्य फलं हि पितृतृप्तिः । न च सा शास्त्रव्यतिरेकेण केनापि प्रमाणेनावगम्यते । शास्त्रमपि न स्यात् केन कारणेन धर्मैककामानां शिष्टानां तत्र प्रवृत्तिर्न्याय-

साध्या। प्रवृत्तिस्तु दृश्यते। ज्ञायते च ततो नेदं विफलं वा निष्प्रमाणं वेति प्रयुज्यमानानामेतादृशानामाचाराणां धर्मे प्रामाण्यमिति। एवं च यत्र प्रमाणसंशयः, तत्र धर्मबुद्ध्या परिगृहीतानामाचाराणां धर्मे प्रामाण्यम्। इदं चादृष्टार्थमात्रैकफलकानामाचाराणाम्। यत्र तु धर्मविप्लवसंभवे राज्ञैव प्रजारक्षणार्थं ब्राह्मणादीनां तदन्यस्मिन्नाचारे प्रवर्तनम्, यथोत्तरत आयुधीयकम् समुद्रसंयानम्, इत्यादि। तत्र तु दृष्टफलकत्वेऽपि अदृष्टार्थधर्मरक्षणमेव परमं प्रयोजनमित्यदृष्टार्थत्वेनापि दण्डनीतिमूलकत्वेन प्रामाण्यम्। राजानुशासनमन्तरा तथा अनुष्ठाने तु कामलोभमूलकत्वेन स्वाधिकारानुरूपधर्मातिक्रमेण प्रत्यवायजनकत्वादधर्मत्वमेव। अत एव बौधायनेन पञ्चधाविप्रतिपत्तिप्रदर्शनपूर्वकं "इतरदितरस्मिन् कुर्वन् दुष्यतीतरदितरस्मिन्। तत्र तत्र देशप्रामाण्यमेव स्यात्" इति देशाचारत्वेन प्रामाण्यमभिधाय "मिथ्यैतदिति गौतमः। उभयं चैव नाद्रियेत शिष्टस्मृतिविरोधात्" इति निषिद्धम्। यदि च विप्रतिपत्तिसत्त्वेऽपि प्रामाण्यं, तदा तु निषेधस्मृतीनामनवकाशत्वमेव स्यात्। न च तदितरस्मिन् देशे सावकाशत्वम्। सामान्यवचनस्य विशेषोपसंहारे प्रामाणाभावात्। विप्रतिपत्तेः संशयजनकत्वेन प्रामाण्याभावात्। अत एवैतादृशस्मृतेर्न वेदमूलकत्वमपि तु लोकसिद्धानुवादकत्वमेव। अस्ति च पञ्चधा स्मृतिषु अनुवादस्मृतीनामपि परिगणनम्। तस्मादप्रमाणमेवेयं स्मृतिः। एतेन कान्यकुब्जेषु विंशतिगणनया ब्राह्मण्यवस्थापनमपि प्रमाणमिति सिध्यति।

## ( आगमप्रामाण्यविचारः )

आगममूलकानामाचाराणां चम्पापट्टचार्दी देवतानिवेद्यपूर्वकपलाण्डुभक्षणादीनां विधवा–मातङ्गी–रजकी–सुवासिनीनां कुलधर्मे भोजनादिकस्य चाऽऽगमप्रामाण्यादेव प्रामाण्यम्। न चाऽऽगमानां धर्मे न प्रामाण्यं वेदविरोधित्वात् पौरुषेयत्वाच्चेति वाच्यम्। वेदाविरोध्यागमानां धर्मे प्रामाण्यस्य बहुधा व्यवस्थापनात्। तदत्र वीरमित्रोदयोद्धृतानि कानिचन वचनानि स्पष्टप्रतिपत्तये निर्दिश्यन्ते। तद्यथा योगियाज्ञवल्क्यः—

न वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं हि विद्यते।
निःसृतं सर्वशास्त्रं तु वेदशास्त्रात्सनातनात्॥
दुर्बोधं तु भवेद्यस्मादध्येतुं नैव शक्यते।
तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम्॥
पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥
साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा।
अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत्॥ इति॥

न्स्यमागममात्रस्याप्रामाण्यमापादयति। कथं तर्हि " धर्मस्य च चतुर्दश " इति संख्यानिर्देश उपपद्यते। उपलक्षणमात्रतयेति ब्रूमः। अन्यथा रामायणशिष्टाचारादीनामप्यनुपसंहारादप्रामाण्यापत्तेः। यदि तु तथा स्मृत्यन्तरेषु चेति पूर्वोदाहृतभविष्यत्पुराणवचनेन तदुपसंहारः, तदा स प्रकृतेऽपि तुल्यः। यत्तु साम्बपुराणे—

श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः।
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ॥ इति ॥

यच्च कौर्मे—

अथांशुः सात्त्वतो नाम विष्णुभक्तः प्रतापवान्।
महात्मा दाननिरतो धनुर्वेदविदां वरः ॥
स नारदस्य वचनाद्वासुदेवार्चने रत :।
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् ॥
तस्य नाम्ना तु विख्यातं सात्त्वतं नाम शोभनम्।
प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥ इति ॥

श्रीभागवतेऽपि—

तेनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत्।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥

इत्यादिवचनैः श्रुतिभ्रष्टादीनामेवाऽऽगमेष्वधिकारप्रतिपादनाद्वेदविदामनधिकार इति कैश्चिदुक्तम्। तन्न न्यायविदामभिधानम्। तथाहि—श्रुतिभ्रष्टादिवाक्येषु न तन्त्रमुद्दिश्य कर्तारो विधीयन्त राजसूयोद्देशेन राजेव, येनान्येषामनधिकारः स्यात्। किंतु श्रुतिभ्रष्टादीनुद्दिश्य तन्त्रं विधीयते। तथाच

" स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा

अतो भारतमाख्यानमितिवचनात् स्त्रीशूद्रादीन् प्रति भारतप्रवृत्तावपि अन्येषां भारताधिकारवत् आगमेष्वप्यविरुद्धेष्वविहतोऽधिकारः ॥ इति।

अनेन च वीरमित्रोदयप्रबन्धेन धर्मे वेदाविरुद्धानामागमग्रन्थानां प्रामाण्यं सुविशदमेव प्रतिपाद्यते। यत्तु वेदविरुद्धानां मोहनत्वात्तामसत्वेनाप्रामाण्यम्। तत्तु सात्त्विकराजसप्रकृतीनामेव, न तामसानाम्। तेषां तादृक्प्रकृतित्वेन तद्धर्मत्वात्। न हि तामसानां कामक्रोधलोभोपहतचेतसां वा शुद्धसात्त्विकधर्माधिकारः संभवति। तथानुष्ठानाशक्तेः। अत एव भगवद्गीतासु—

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥

इत्यारभ्य—

एष पाशुपतो योगः सेवनीयो मुमुक्षुभिः ।
भस्मच्छन्नैर्हि सततं निष्कामैरिति हि श्रुतिः ॥

इति वेदसारमयत्वमेकस्याभिधाय

अन्यानि चैव शास्त्राणि लोकेऽस्मिन्मोहनानि वै ।
वेदवादविरुद्धानि मयैव कथितानि तु ॥
वामं पाशुपतं सोमं लाङ्गलं चैव भैरवम् ।
न सेव्यमेतत्कथितं वेदबाह्यं तथेतरत् ॥

इति वेदविरुद्धस्य अन्यस्य कौर्मेऽभिधानात् । वायुसंहितायां तु—

शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च संस्मृतः ।
श्रुतिसारमयः श्रौतः स्वतन्त्र इतरो मतः ॥

स्वतन्त्रो दशधा पूर्वमित्यारभ्य—

श्रुतिसारमयोऽन्यस्तु शतकोटिप्रविस्तरः ।
परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते ॥

इत्यन्तेन श्रौताश्रौतविभागः स्पष्टीकृतः । अत्र शैवागमोऽपि द्विविध इत्यादिना स्वसमानयोगक्षेमवैष्णवपञ्चरात्राद्यागमानामपि श्रौताश्रौतभेदेन द्वैविध्यमुक्तं भवति । उक्तं पञ्चरात्रादेर्वैदिकत्वम् । हेमाद्रौ विष्णुधर्मोत्तरे—

सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे ॥
संसारक्षपणे स्वर्गभागोपकरणेषु च ।
सेतुगत्वैष्णवाद्धर्मात्सारमेतत् प्रकीर्तितम् ॥ इति ॥

भगः ऐश्वर्यम् । सेतुर्मार्गः । एवं च कौर्मे—

कापालं पञ्चरात्रं च यामलं वाममार्हतम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥

इति पञ्चरात्रस्य यन्मोहकत्वाभिधानं तदवैदिकपञ्चरात्रपरम्

यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि तु ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥

इति तेषां वेदविरुद्धानामंशानामेव अप्रमाण्यम् । विरोधे त्वनपेक्षं स्यादिति मीमांसाधिकरण “ यान्येतानि प्रतिविरुद्धानि पाशुपतानि ” इत्यादिप्रत्यक्षदर्शनादवैदिकागमविषयत्वेनाप्युपपन्नेना-

वश्यमागममात्रस्याप्रामाण्यमापादयति। कथं तर्हि "धर्मस्य च चतुर्दश" इति सङ्ख्यानिर्देश उपपद्यते। उपलक्षणमात्रतयेति ब्रूमः। अन्यथा रामायणशिष्टाचारादीनामप्यनुपसंहाराद्प्रामाण्यापत्तेः। यदि तु तथा स्मृत्यन्तरेषु चेति पूर्वोदाहृतभविष्यत्पुराणवचनेन तदुपसंहारः, तदा स प्रकृतेऽपि तुल्यः। यत्तु साम्बपुराणे—

> श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः।
> क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत्॥ इति॥

यच्च कौर्मे—

> अथांशुः सात्त्वतो नाम विष्णुभक्तः प्रतापवान्।
> महात्मा दाननिरतो धनुर्वेदविदां वरः॥
> स नारदस्य वचनाद्वासुदेवार्चने रतः।
> शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम्॥
> तस्य नाम्ना तु विख्यातं सात्त्वतं नाम शोभनम्।
> प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम्॥ इति॥

श्रीभागवतेऽपि—

> तेनोक्तं सात्त्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत्।
> यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः॥

इत्यादिवचनैः श्रुतिभ्रष्टादीनामेवाऽऽगमेष्वधिकारप्रतिपादनाद्वेदविदामनधिकार इति केश्चिदुक्तम्। तन्न न्यायविदामभिधानम्। तथाहि—श्रुतिभ्रष्टादिवाक्येषु न तन्त्रमुद्दिश्य कर्तारो विधीयन्ते राजसूयोद्देशेन राजेव, येनान्येषामनधिकारः स्यात्। किंतु श्रुतिभ्रष्टादीनुद्दिश्य तन्त्रं विधीयते। तथाच

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा

अतो भारतमाख्यानमितिवचनात् स्त्रीशूद्रादीन् प्रति भारतप्रवृत्तावपि अन्येषां भारताधिकारवत् आगमेष्वप्यविरुद्धेष्वविहतोऽधिकारः॥ इति।

अनेन च वीरमित्रोदयप्रबन्धेन धर्मे वेदाविरुद्धानामागमग्रन्थानां प्रामाण्यं सुविशदमेव प्रतिपाद्यते। यत्तु वेदविरुद्धानां मोहनत्वात्तामसत्वेनाप्रामाण्यम्। तत्तु सात्त्विकराजसप्रकृतीनामेव, न तामसानाम्। तेषां तादृक्प्रकृतित्वेन तद्धर्मत्वात्। न हि तामसानां कामक्रोधलोभोपहतचेतसां वा शुद्धसात्त्विकधर्माधिकारः संभवति। तथानुष्ठानाशक्तेः। अत एव भगवद्गीतासु—

> ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः।
> तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः॥

इत्यर्जुनप्रश्नानन्तरमुत्तरमुखेन भगवानेवमभिवक्ते—

> त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
> सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥
> सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
> श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥

इति । व्याख्यातं चैतच्छ्रीमच्छङ्करभगवत्पादैः । तद्यथा—तस्माच्छास्त्रं प्रमाणं त इति भगवद्वाक्याल्लब्धप्रश्नबीजोऽर्जुन उवाच ये शास्त्रेति । ये केचिदविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन् पूजयन्ति श्रद्धयाऽन्विताः श्रद्धयाऽऽस्तिक्यबुद्ध्याऽन्विताः संयुक्ताः सन्तः श्रुतिलक्षणं स्मृतिलक्षणं वा कंचिच्छास्त्रविधिमपश्यन्तो वृद्धव्यवहारदर्शनादेव ये श्रद्धानतया देवादीन् पूजयन्ति त इह ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धायाऽन्विता इत्येवं गृह्यन्ते । ये पुनः कंचिच्छास्त्रविधिमुपलभमाना एव तमुत्सृज्यायथाविधि देवादीन् पूजयन्ति, त इह ये शास्त्रविधिमुत्सृज्य यजन्ते इति न परिगृह्यन्ते । कस्मात् ? श्रद्धयाऽन्वितत्वविशेषणात् । देवादिपूजाविधिपरं किंचिच्छास्त्रं पश्यन्त एव तदुत्सृज्याश्रद्धानतया तद्विहितायां देवादिपूजायां श्रद्धयाऽन्विताः प्रवर्तन्ते इति न शक्यं कल्पयितुं यस्मात्, तस्मात्पूर्वोक्ता एव ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विता इत्यत्र गृह्यन्ते । तेषामेवभूतानां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः किं सत्त्वनिष्ठाऽवस्थानमाहोस्विद्रजोऽथवा तमः । एतदुक्तं भवति या तेषां देवादिविषया पूजा सा सात्त्विक्याहोस्विद्राजसी उत वा तामसीति ॥ १ ॥ सामान्यविषयोऽयं प्रश्नो नाप्रविभज्य प्रतिवचनमर्हतीति श्रीभगवानुवाच त्रिविधेति । त्रिविधा त्रिप्रकारा भवति श्रद्धा यस्यां निष्ठायां त्वं पृच्छसि । देहिनां सा स्वभावजा । जन्मान्तरकृतो धर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते । ततो जाता स्वभावजा । सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिविषया, राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया, तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषयैवं त्रिविधा । तामुच्यमानां श्रद्धां शृणु ॥ २ ॥ सेयं त्रिविधा भवति । सत्त्वेति । सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति हे भारत । यद्येवं ततः किं स्यादित्युच्यते । श्रद्धामयः श्रद्धाप्रायोऽयं पुरुषः संसारी जीवः । कथम् ? यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स तच्छ्रद्धः । स एव तच्छ्रद्धानुरूप एव स जीवः ॥ ३ ॥

शास्त्रं नेदानीं प्रत्यक्षम् । किन्तु वृद्धपरम्परयावगत तत्र प्रामाण्यसंशये शिष्टाचारत्वादेव निर्णयः । अतो वामाद्यागमाचारा अपि शिष्टाचारविषयतामर्हन्तीत्यनुमीयते । नो चेत् पलाण्डुभक्षणादीनां प्रत्यक्षेण स्मृतिलक्षणेन शास्त्रेण निषेधेऽपि कथं शिष्टपरिगृहीतत्वम् । न च तेषां तामसत्वान्न धर्मत्वम् । पूर्वोक्तभाष्ये तामसश्रद्धामूलकस्यापि देवपूजनादिकस्य धर्मत्वप्रतिपादनात् ।

ननु श्रद्धायाः सत्त्वकार्यत्वेन सात्त्विकत्वमेव संभवति न राजसत्वं तामसत्वं वा । तदुक्तं श्रीमद्भागवते—

शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ।
तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिर्निर्वृतिर्धृतिः ॥

इत्येताः सत्त्वस्य वृत्तयः ॥ इति ।

अतः कथं तस्यास्त्रैविध्यमिति चेन्न ।

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥

इति भगवद्गीतावचनात् सर्वस्यापि जीवस्य त्रिगुणात्मकत्वेन सत्त्वे कार्योन्मुखे तत्र रजस्तमसोरप्युपसर्जनत्वेन मिश्रणात् संभवति तन्मूलकं त्रैविध्यं श्रद्धायाः । अतः संभवति प्रामाण्यं तामसागमानां तन्मूलकशिष्टाचाराणां च । ननु तत्र जारणमारणादिहिंसाफलककर्मदर्शनादनिष्टसाधनत्वे कथं धर्मत्वमिति चेन्न । श्येनयागादिवत्फलस्यानर्थत्वेऽपि कर्मणश्चोदनालक्षणत्वादेव धर्मत्वोपपत्तेः । न च निषिद्धपदार्थाङ्गकत्वेनाप्यधर्मत्वम् । तथा सति सोमादीनामप्यधर्मत्वापत्तेः । नहि मांसं पशुहत्या सुरायहादिकं वा न निषिद्धम् । यदि च निषेधस्य पुरुषार्थत्वात् विधेश्च क्रत्वर्थत्वादिभिन्नविषयकत्वेन विधिस्पृष्टे निषेधानवकाश इति न्यायः । स चात्रापि समान एव । न च कामाद्यभिवर्धकत्वेनाप्यधर्मत्वम् । " न काञ्चन परिहरेत्तद्व्रतम् " इति मताङ्गकस्य वामदेव्यसामोपासनस्य " अथ य इच्छेत् पुत्रो मे पण्डितोऽविगीतःसमितिङ्गमः शुश्रूषितां वाचं भाषिता जायेत सर्वान् वेदाननुब्रुवीत सर्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्षेण वाऽऽर्षभेण वा " ( बृ. ६।४।१८ ) इत्यादीनामपि चाधर्मत्वापत्तेः । तस्माद्धर्मत्वमङ्गीकृत्य सत्त्वानुरूपश्रद्धाव्यवस्थापनमेव श्रेयस्करमिति तत्त्वम् । एवं च तामसागमानामपि तामसाधिकारिकत्वेन धर्मे प्रामाण्यमभ्युपेयम् । एतेन शाक्तसौरगाणपत्याद्यागमानामपि प्रामाण्यं समानयोगक्षेमत्वात् सिध्यति । अधिकं चात्राऽऽगमतन्त्रेष्वेवानुसंधेयं नात्र प्रपञ्च्यते ।

यत्तु ब्रह्मसूत्रशाङ्करभाष्ये पञ्चरात्रागमस्याप्रामाण्यमुपपादितमिति केषाञ्चिन्मतम् । तत्तु भाष्याज्ञानमूलकत्वाद्धेयमेव । तथाहि—" उत्पत्त्यसंभवादिति सूत्रे हि शाङ्करभाष्ये प्रथमत एव

हेयांशनिर्देशश्चेत्थम्—येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतः, तेषां पक्षः प्रत्याख्यातः। येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतः तेषां पक्षः प्रत्याख्यायते। ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ् निर्धारितः प्रकृतिश्चाधिष्ठाता चेति। श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः। तत्कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति। उच्यते। यद्यप्येवंजातीयकोंऽशः समानत्वान्न विसंवादगोचरो भवति। अस्ति त्वंशान्तरं विसंवादस्थानमिति। अतस्तत्प्रत्याख्यानायाऽऽरम्भः। तत्र भागवता मन्यन्ते—भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वम्। स चतुर्धाऽऽत्मानं प्रविभज्य प्रतिष्ठितः, वासुदेवव्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च। वासुदेवो नाम परमात्मोच्यते। संकर्षणो नाम जीवः। प्रद्युम्नो नाम मनः। अनिरुद्धो नामाहंकारः। तेषां वासुदेवः परा प्रकृतिः। इतरे संकर्षणादयः कार्यम्। तमित्थंभूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यते। इति। तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्वात्मा, स आत्मनाऽऽत्मानमनेकधा व्यूह्यावस्थित इति। तन्न निराक्रियते। "स एकधा भवति त्रिधा भवति" (छां. ७।२६।२) इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधा भवनस्याभिमतत्वात्। यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाऽभिप्रेयते, तदपि न प्रतिषिध्यते। श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात्। यत्पुनरिदमुच्यते वासुदेवात्संकर्षण उत्पद्यते संकर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्ध इति। तत्र ब्रूमः" इति।

दक्षिणाचारेण कर्तव्यम् " इत्यादीन्युदाहृत्य विचारितम्। किमेते आचाराः कर्तव्या न वेति। तत्र चानुष्ठितेष्वप्येतेषु न किंचिदनुशिष्टं वैदिकं कुप्यतीति वेदाविरुद्धत्वात् कर्तव्या इति पक्षमुत्थाप्य प्रथमसूत्रेण, द्वितीयेन सूत्रेण "वेदं कृत्वा वेदिं कुर्वीत" इति श्रुतिविहितक्रमबाधनसंभवात् दक्षिणेन चैकहस्तेनानुष्ठीयमानेषु पदार्थेषु कदाचित् प्रधानकर्मणः कालातिपातसंभवाच्च नानुष्ठेयाः, परिमितशास्त्रविरोधादिति पूर्वपक्षं कृत्वा, तृतीयेन सूत्रेण सिद्धान्तितम्, यदेवंजातीयकेष्वाचारेषु कामक्रोधलोभादिकिंचिन्मूलभूताप्रामाण्यकारणग्रहणासंभवादेते कर्तव्या इति। क्रमः कालश्च पदार्थधर्मौ, न ताभ्यां पदार्थबाधः। पदार्थोपस्थित्यनन्तरं तयोरुत्तरकालभावित्वात्। पदार्थोपस्थितिकाले तयोरभावात् केनसह विरोधो भविष्यतीति विरोधाभावात्। किंच सर्वपदार्थशेषभूता एते आचारा न पदार्थव्यवधातार इत्यवश्यकर्तव्या इति।

एतेन श्रुत्यपेक्षया स्मृत्याचारयोरपि प्राबल्यं प्रतिपाद्यते यत्र स्मृत्याचारयोः पदार्थविधायकत्वं श्रुतेश्च तच्छेषीभूतकालक्रमादिविधायकत्वम्। एवं च पूर्वाधिकरणे श्रुतिविरोधे स्मृतेरप्रामाण्यं यत्प्रतिपादितम्, तदपवादमुखेनैतदधिकरणमिति सिध्यति।

(भाट्टमतेनैतदधिकरणविचारः)

भट्टपादास्तु पूर्वाधिकरणाक्षेपपरिहारसूत्रत्वेनैवैतानि सूत्राणि व्याख्यातव्यानीति वदन्तो भाष्यकारीयोदाहरणानां प्रत्यक्षश्रुतिमूलकत्वमेव प्रदर्शयन्ति। तथाहि—नन्विदं यज्ञोपवीतमुदाहर्तव्यम्? दर्शपूर्णमासादिषु "उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति क्रत्वङ्गप्रत्यक्षविधानात्। तथा काठके चानारभ्यवादविधिना सर्वयज्ञगतयजनयाजनसंबन्धोऽध्यापनाध्ययनसंबन्धश्च श्रूयते, "प्रसृतेन वै यज्ञेन देवाः स्वर्गं लोकमायन्नप्रसृतेनासुरान् पराभावयन्। प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुपवीतिनो यत्किंच ब्राह्मणो यज्ञोपवीत्यधीते यजत एव। तत्तस्माद्यज्ञोपवीत्येवाधीयीत याजयेत् यजेत वा यज्ञस्य प्रसृत्यै" इति। तथाऽऽचमनविधिरपि "दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचम्य द्विः परिमृज्य दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङ्मुखमुपविश्य स्वाध्यायमधीयीत" इति यद्यपि ब्रह्मयज्ञप्रकरणे श्रूयते, तथापि वेदोच्चारणसंबन्धात् तदङ्गत्वेनापि तावज्ज्ञायमानं सर्वयज्ञानां मन्त्रवत्प्रयोगित्वात्तदङ्गं भवति। तथा च "न सोमेनोच्छिष्टा भवन्ति" इति प्राप्ताचमनप्रतिषेधार्थमेवावधार्यते। दक्षिणाचारत्वं तु—

यत्राऽऽहृत्य विधानेन स्यात्सव्याञ्जलिचोदना।
तस्मादेव निवर्तेत नान्यत्राशङ्क्यतेऽपि तत्॥

तेन तद्वाक्यचेष्टानां सर्वदैवास्तिसंभवः ।
तदुक्तिज्ञापनाद्वेदो नानित्योऽतो भविष्यति ॥
प्रतियज्ञं भवन्त्यन्ये सर्वदा षोडशर्त्विजः ।
आदिमत्त्वं च वेदस्य न तच्चरितबन्धनात् ॥

उक्तं च—यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भाति युगादिषु ॥ इति ।
इतिहासपुराणं च कृत्रिमत्वेन निश्चितम् ।
तथाप्यकृत्रिमे वेदे तद्विद्यात्वेन संमतम् ॥

एवं ह्युपनिषत्सूक्तम्—ऋग्वेदं भगवोऽध्येमि यजुर्वेदं—
सामवेदमथर्ववेदं चतुर्थमितिहासं पुराणं पञ्चममिति ।

तेन प्रतिकल्पमन्वन्तरयुगनियतनित्यऋषिनामाभिधेयकृत्रिमविद्यास्थानकारा ये वेदेऽपि मन्त्रार्थवादेषु श्रूयन्ते तत्प्रणीतान्येव विद्यास्थानानि धर्मज्ञानाङ्गत्वेन संमतानि । तथा च ऋग्वेदाविविहितयज्ञाङ्गप्रेषप्रायश्चित्तविशेषानभिधाय "यद्यविज्ञात" इतिप्रायश्चित्तान्तरं विदधत् त्रैविद्यवृद्धस्मृतिविहितविनष्टोद्देशेनैव विदधातीति गम्यते । अन्यथा हि प्रत्यक्षवेदविहितं सर्वं विज्ञातमूलविशेषत्वादविज्ञातमूलत्वेनानभिधेयमेव स्यात् । यदि च स्मर्यमाणवेदमूलग्रन्थनिबन्धनानामविज्ञातवेदविशेषपूर्वकत्वेनापि स्थितानां प्रामाण्यं नाऽऽश्रीयेत । तथा सति नैवाविज्ञातमूलं किंचिद्यज्ञे क्रियत इति तद्विनष्टप्रायश्चित्तविधिर्नैवोपपद्येत ।

तस्माद्यान्येव शास्त्राणि वेदमूलानतिक्रमात् ।
अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः ॥
यथैवान्यायविज्ञाताद्वेदाल्लेख्यादिपूर्वकात् ।
शूद्रेणाधिगताद्वापि धर्मज्ञानं न संमतम् ॥
तथातिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम् ।
संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥
स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः ।
कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति
यथा कृतककर्पूरसुवर्णादिषु दीयते ।
यद्बीजं तदपि व्यक्तमग्राह्यत्वात्प्रलीयते ॥

तथाऽन्धस्य धृतराष्ट्रस्येज्या पाण्डुवर्जितैर्धनैरित्यनधिकृतक्रिया। तथा युधिष्ठिरस्य कनीयोऽर्जित-भ्रातृजायापरिणयनमाचार्यब्राह्मणवधार्थमनृतभाषणं च। वासुदेवार्जुनयोः प्रतिषिद्धमातुलदुहितृरुक्मिणीसुभद्रापरिणयनम्। "उभौ मध्वासवक्षीबौ" इति सुरापानाचरणम्। अद्यत्वेऽप्यहिच्छत्रमथुरानिवासिब्राह्मणीनां सुरापानम्। केसर्यश्वाश्वतरखरोष्ट्रोभयतोदद्दानप्रतिग्रहविक्रयव्यवहारभार्यापत्यमित्रसहभोजनाद्युदीच्यानाम्। मातुलदुहितृद्वाहासन्दीस्थभोजनादीनि दाक्षिणात्यानाम्। मित्रस्वजनोच्छिष्टभोजनं सर्ववर्णपरस्परस्पृष्टताम्बूलादानतदवसानानाचमननिर्णेजकधौतगर्दभारूढवस्त्रपरिधान-ब्रह्महत्यातिरिक्तमहापातककार्यापरिहरणादीन्युभयेषाम्। अतिस्थूलानि प्रतिपुरुषजातिकुलावस्थित-सूक्ष्मस्वधर्मव्यतिक्रमणानि त्वनन्तभेदानि सर्वत्र विगानहेतुदर्शनानि च प्रायेणैव संभवन्तीति नैवंजातीयकमिश्रसदाचारधर्मत्वाध्यवसानसंभवः। किं च—

के शिष्टा ये सदाचाराः सदाचाराश्च तत्कृताः।
इतीतरेतराधीननिर्णयत्वादनिर्णयः॥

ननु—सदाचारप्रमाणत्वं मन्वादिभिरपि स्मृतम्।
आत्मतुष्टिः स्मृताऽन्या तैर्धर्मे सा चानवस्थिता॥

यथाभ्यासं ह्याशयवैचित्र्येण शुभाशुभोभयहीनक्रियानुष्ठायिनामात्मतुष्टिरपि विचित्रैव भवति तथाहि—

कस्यचिज्जायते तुष्टिरशुभेऽपि हि कर्मणि।
शाक्यस्येव कुहेतूक्तिवेदब्राह्मणदूषणे॥

तथाहि—पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि द्विजाः।
तेभ्य एव हि यज्ञेभ्यः शाक्याः क्रुध्यन्ति पीडिताः॥

तथा—शूद्रान्नभोजनेनापि तुष्यन्त्यन्ये द्विजातयः।
स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति।
अन्ये तु सव्यलीकेन मनसा तन्न कुर्वते॥

तथा चानवस्थितत्वाद्यथैवाऽऽत्मनस्तुष्टिरेव चेत्येतन्मनुवचनं कथमप्यन्यथा नेतव्यम्। एवमाचारश्चैव साधूनामित्येतदपि।

स्वयमज्ञातमूलाश्च शिष्टाचारप्रमाणताम्।
वदन्तोऽपि न शोभन्ते स्मृतिकारास्ततोऽधिकाः॥

स्मृतिकारवचनार्थो हि शिष्टैराचरितव्यः शिष्टत्वाय। अन्यथा हि तदनपेक्षाः स्वातन्त्र्येण व्यवहरमाणा दुष्टा भवेयुर्न शिष्टाः।

न च तेषां श्रुतिर्मूलं व्यवहारस्य दृश्यते ।
यदि च स्यात्परोक्षाऽपि स्मर्येतैव ह्यसौ ध्रुवम् ॥

तस्मान्निर्मूलत्वादनपेक्षाणि शिष्टाचरणानीति प्राप्तेऽभिधीयते—अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ।

दृष्टकारणहीनानि यानि कर्माणि साधुभिः ।
प्रयुक्तानि प्रतीयेरन् धर्मत्वेनेह तान्यपि ॥
शरीरस्थितये यानि सुखार्थं वा प्रयुञ्जते ।
अर्थार्थं वा न तेष्वस्ति शिष्टानामेव धर्मधीः ॥
धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित् ।
वैदिकैः कर्तृसामान्यात्तेषां धर्मत्वमिष्यते ॥
प्रदानानि जपो होमा मातृयज्ञादयस्तथा ।
शक्रध्वजमहो याला देवतायतनेषु च ॥
कन्यकानां च सर्वासां चतुर्थ्याद्युपवासकाः ।
प्रदीपप्रतिपद्दानमोदकापूपपायसाः ॥

अनग्निपक्वमाघसप्तमपौर्णमासफाल्गुनप्रातिपद्वसन्तोत्सवादीनां नियतक्रियाप्रमाणं न शास्त्रादृते किंचिदस्ति । स्मृतिकाराश्च " आचारश्चैव साधूनां देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम् " इति वेदाविरुद्धानामाचाराणां सामान्यतः प्रामाण्यमनुमन्यन्ते । तथाऽनध्यायाधिकारे ऊर्ध्वं भोजनादुत्सव इति देशनगरोत्सवप्रामाण्याश्रयणम् । वेदेऽपि च महाव्रते " प्रेङ्खमारुह्य होता शंसति " इत्येतद्वाक्यशेषे श्रूयते " यदा वै प्रजा मह आविशन्ति प्रेङ्खं तर्ह्यारोहन्ति " इति महःशब्दवाच्योत्सवप्रसिद्धिरनूदिता । यत्तु परिमितशास्त्रप्रमेयत्वाद्धर्माधर्मयोरिह च तदसंभवादित्युक्तम् । तद्वेदमूलत्वानुमानात्पूर्ववदेव प्रत्याख्येयम् । न च स्मृतिर्निर्मूला । विस्तरप्रवचनानामपि प्रपाठकमात्रेणोपसंहारात् किमुत संक्षेपवचनस्य । शक्यं च स्मृत्यनुरूपमेव वेदवचनमनुमातुम् । तथाहि—

शिष्टैराचर्यमाणानां सतां गोदोहनादिवत् ।
फलसंबन्धमप्राप्तं बोधयच्छास्त्रमर्थवत् ॥

न हि तदेवैकं शास्त्रप्रमाणकं यस्य स्वरूपमपि तत एवावगन्तव्यम् । अनेकाकारस्य हि प्रमेयस्य कश्चिदेवाऽऽकारः केनचित्प्रमाणेन प्रमीयते । तत्र प्रत्यक्षाद्यवगतेऽप्याचारस्वरूपे वधिगोदो- हनादिवत्फलसंबन्धः शास्त्रेणावगम्यते । यागादिष्वपि च नैव स्वरूपप्रज्ञानेन शास्त्रमपेक्षितम् । फलसंबन्धमात्रस्यैवातीन्द्रियत्वेन तदपेक्षितत्वात् । अतो न नामोपलक्षणान्तरेण शास्त्रं प्रवृत्तमुपलभ्य

शिष्टाः प्रवृत्ताः । सर्वकालं तु शिष्टव्यवहारशास्त्रयोरनियोगात् । व्यवहारादेवोपोद्धृत्य केचित् स्वर्गादिसाधनत्वेन नियम्यमानाः कादाचित्कत्वपरित्यागेन नित्यप्रयोज्या विज्ञायन्ते । तेषां चाऽऽर्यावर्तनिवासिशिष्टप्रयोज्यत्वमेवोपलक्षणम् । वेदेनापि सरस्वतीविनशनप्लक्षप्रस्रवणादिवदुपात्तमिति शक्यमनुमातुम् ।

ननु शास्त्रार्थकारित्वाच्छिष्टत्वं गम्यते यदा ।
शिष्टत्वेन च शास्त्रोक्तिरित्यन्योन्याश्रयं भवेत् ॥
नैव तेषां सदाचारनिमित्ता शिष्टता मता ।
साक्षाद्विहितकारित्वाच्छिष्टत्वे सति तद्वचः ॥

प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टत्वव्यपदेशा यत्परम्पराप्राप्तमन्यदपि धर्मबुध्या कुर्वन्ति तदपि स्वर्ग्यत्वाद्धर्मरूपमेव ।

तद्यथा श्रुवान् विद्वाननूचानश्च वैदिकः ।
पुनस्तल्लक्षितो वेदे तेनैवाध्ययनादिषु ॥

तेनाहोरात्रपौर्वापर्यवदनादित्वाद्वेदतदर्थानामितरेतराश्रयत्वाप्रसङ्गः । स्मृतिरप्याचार वा वेदवचनं वोपालभ्याभ्यनुज्ञानायैव प्रवृत्तेत्यदोषः ।

यत्तु हेत्वन्तरं दृष्ट्वा वेदमूलनिवारणम् ।
प्रत्यक्षवेदमूलेऽपि तद्दृष्टेस्तदकारणम् ॥

वेदेऽपि हि बहून्येव दृष्टार्थगन्धस्पृष्टानि विधीयन्त इति न तावता वेदमूलत्वाभावः ।

यानि तु म्लेच्छादिसमानानि नियतानियतक्रियान्तराण्यर्थसुखसाधनकृषिसेवावाणिज्यादीनि मृष्टान्नपानमृदुशयनासनरमणीयगृहोद्यानालेख्यगीतनृत्यगन्धपुष्पादिकर्माणि प्रसिद्धानि, तेषु नैव कस्यचिद्धर्मत्वाशङ्काऽस्तीति न तत्सामान्यतो दृष्टेनेतरनिराक्रियोपपत्तिः । केषांचिद्वा धर्मत्वाभ्युपगमान्न सर्वेषामेव तत्प्रसङ्गः । किंतु—

देवब्राह्मणपूजादि यत्तेषामपि किंचन ।
तत्रेष्टमेव धर्मत्वं शिष्टाचारमतं हि तत् ॥
लोके हि कश्चिदाचारः शिष्टत्वेन विशिष्यते ।
कश्चित्तु प्राणिसामान्यप्राप्तस्तैरपि संगतः ॥
तत्र यः कार्यरूपेण शिष्टानेवानुवर्तते ।
स एव केवलो धर्मो नेतरः प्राणिमात्रगः ॥ इति ॥

( आत्मतुष्टिप्रामाण्ये वार्तिकम् )

एतेन वैदिकानन्तधर्मधीसत्कृतात्मनाम् ।
आत्मतुष्टेः प्रमाणत्वं प्रसिद्धं धर्मशुद्धये ॥

तथैव बहुकालाभ्यस्तवेदतदर्थज्ञानाहितसंस्काराणां वेदनियतमार्गानुसारिप्रतिभानां नोन्मार्गेण प्रतिभानं संभवतीत्याश्रित्योच्यते । यदेव किंचनानूचानोऽभ्यूहत्यार्षं तद्भवतीति । वैदिकवासनाजनितत्वाद्वेद एव स भवति । तथाहि—

यथा रुमायां लवणाकरेषु मेरौ यथा वोज्ज्वलरत्नभूमौ ।
यज्जायते तन्मयमेव तत्स्यात्तथा भवेद्वेदविदात्मतुष्टिः ॥
एवं हि विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥

इति बहुदिनाभ्यस्तधर्मव्याप्तात्मनो हि न कथंचिद्धर्मकरणरूपात्मतुष्टिरन्यत्र संभवतीति धर्मत्वेनाभ्यनुज्ञायते ।

यद्वा शिष्टात्मतुष्टीनां वचनादेव धर्मता ।
पुण्यकृद्ध्यानवत्तस्मादाचारेष्वपि सा मता ॥
यथा वा वरदानार्थं देवताराधनोद्भवे ।
यद्वस्यासि स मन्त्रस्ते विपन्न इति मन्त्रिते ॥
लोकः स्मरति तं मन्त्र विषापहरणादिषु ।
यथा वा सर्पसिद्धान्ते नकुलो यां किलौषधीम् ॥
दन्तैर्गृह्णाति तामाहुः समस्तविषहारिणीम् ।
यथा वा यां भुवं कश्चिदध्यावसति पुण्यकृत् ॥
तत्संपर्कपवित्रत्वात् सेव्यते पुण्यकारणम् ।
तथाऽऽचारात्मतुष्ट्यादि धर्म्यं धर्ममयात्मनाम् ॥
वेदोक्तमिति निश्चित्य ग्राह्यं धर्मबुभुत्सुभिः ॥ इति ॥

अतः परं पूर्वोक्तधर्मव्यतिक्रमसाहसोदाहरणानां केषांचित् धर्मत्वसमर्थनं केषांचिदधर्मत्वव्यवस्थापनं च वार्तिके गुरुपादाभिरिति नात्र तदारम्भोऽस्यावश्यकः । जिज्ञासुभिस्तु तत एव द्रष्टव्यः ।

प्रवासादिसौकर्यार्थं व्यवहारार्थं वा यदितस्ततो यथाकथंचिद्धनसंपादनम्, अग्निशकटादिष्वस्पृश्यस्पर्शनभोजनादिकं, अवान्तरजातीनामन्योन्यविवाहादियौनसंबन्धसंपादनं परदेशगमनादिकमन्यद्वैतादृशमाचरणमपि धर्मत्वेनोरीकरणीयम्, शिष्टैराद्रियमाणत्वादिति योऽभिनिवेश इदानींतनानां दरीदृश्यते स प्रत्याख्यातो भवति । तथापि परिगणितशास्त्रेषु दण्डनीतेरपि संग्रहणात्—

मुखबाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥

इतिमनूक्तम्लेच्छयवनादिदस्युभिः प्रसङ्गे तेषां च प्रचलितदण्डस्य स्वायत्तीकरणे च कथं वर्तितव्यमित्यस्य तु न निर्णयो भवति ।

किंचैतादृशपरिस्थितौ “ धर्मज्ञसमयः प्रमाणम् ” इति स्मृत्यनुसारेण धर्मज्ञैर्दण्डस्वायत्तीकरणानुकूलः कश्चन समयो निर्धारणीयः, उत स्मृतिप्रतिपादितदण्डनीतिनियमानुसारेणैव वर्तितव्यम् ? इति संदेहस्य निराकरणं न भवति ।

किंच “ धर्मज्ञसमयः प्रमाणम् ” इति स्मृतेः “ न धर्माधर्मौ चरत आवां स्व इति । न गन्धर्वा न देवा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति । यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः, यं विगर्हयन्ति सोऽधर्म इति ” इत्यापस्तम्बोक्तचनुसारेण शिष्टाचारपरत्वमेवोत स्वतन्त्रसमयविधायकत्वमपि । यदि च शिष्टाचारपरत्वमेवेति मतम्, तदा तु कलिवर्ज्यप्रकरणस्य कथं प्रामाण्यम् ? यदि च स्वतन्त्रसमयविधायकत्वम्, इदानीमपि तथा समयप्रणयने का हानिः ? न च धर्मज्ञाभावान्न तथा समयप्रणयनम् ।

“ धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ ”

इति मनुवचनानुसारेण तादृशशिष्टानामिदानीमत्यन्ताभाव इति कल्पनाप्रसङ्गात् । एतादृशकल्पनायाः प्रामाणिकत्वे सर्वस्वहान्यापत्तेः । अतश्च किंपरत्वमस्य वचनस्येत्यवश्यं विचारणीयम् ।

किं च यदिदं धर्मसाहसोदाहरणत्वेन युधिष्ठिरस्याऽऽचार्यब्राह्मणवधार्थमनृतभाषणम्, यच्च नैष्ठिकब्रह्मचारिणोऽपि व्यासस्य विचित्रवीर्यभार्यास्वपत्योत्पादनम्, तद्दण्डनीत्युक्तदिशा धर्मो न वा ? न हि शत्रुपक्षविनाशमन्तरा राज्यप्राप्तिः । न चासत्यभाषणमन्तरा तद्विनाश इत्यवस्थायाम्—

“ यस्मिन् यथा वर्तते यो मनुष्यस्तस्मिन् तथा वर्तितव्यं स धर्मः ।
साध्वाचारः साधुना प्रत्युपेयो मायाचारो मायया बाधितव्यः ॥ ”

इति दण्डनीतिरनुसरणीया वा “ सत्यं वद धर्मं चर ” इति धर्मानुशासनमवधेयम् ?

तथैव राजवंशोच्छेदप्रसङ्गे दण्डनीतेर्विप्लवसंभवात्

" नाङ्गस्य वंशो राजर्षेरेष संस्थातुमर्हति "

इति प्राचीनशिष्टाचारानुसारेण वंशोज्जीवनं यथा कयापि रीत्याऽवश्यं विधेयं वा केवलपारलौकिकधर्मानुष्ठानमेव परिपालनीयमित्यपि संशयः समुदेति ।

किं चाऽऽत्मतुष्टिर्हि वैकल्पिके प्रमाणमिति निबन्धकाराणां मतम् । मनुरपि—

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ मता ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥

इति वचनेनोभयोरपि धर्मत्वं ब्रुवाण इदमभिप्रैति यदेतादृशवैकल्पिकस्थले आत्मतुष्टिः प्रमाणमिति । अत एव—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥

इति याज्ञवल्क्येन सम्यक्संकल्पजकामस्य " स्वस्य च प्रियमात्मनः " इत्यात्मतुष्टचपेक्षय पृथक् धर्ममूलत्वमभिहितम् ।

वार्तिककारास्तु आत्मतुष्टिसम्यक्कामयोरेकरूपत्वमभ्युपेत्य विषवल्ल्यादिदृष्टान्तेन वैकल्पिकविषयातिरिक्तविषयत्वमभिप्रयन्ति । अतोऽत्र विषये किंचिद्विचार्यते । तत्र दण्डनीत्यनुसारेण धर्माधर्मादिचिन्ता तु पश्चाद्भविष्यति । प्रथमतस्तावत् " धर्मज्ञसमयः प्रमाणम् " इत्यस्य कथं वा निर्णयः, किं वा स्वरूपम्, कश्च विषयः, इत्येवाऽऽलोच्यते ।

वेदा एव प्रमाणत्वेन पुरस्क्रियेरन्, तदा स्मृतीनामिव तन्मूलकत्वादेव धर्मज्ञसिद्धान्तस्यापि प्रामाण्यसिद्धौ स्मृतिरूपत्वमेव स्यादिति न तदतिरिक्तत्वेन तेषामुपादान साम्प्रतम्। न च श्रौतगार्ह्यातिरिक्तत्वेन तेषा पृथगुपादानमिति वाच्यम्। तादृशानुशासनस्य मन्वादिकाना स्मृतित्वेनैव व्यपदेशात्। न चास्तु स्मृतित्वम्। स्मृतिष्वपि—

अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत्।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः॥

इत्यादिवचने शिष्टाना धर्मनिर्णयाधिकारदर्शनात् तन्निर्णयस्य स्मृत्यतिरिक्तत्वावगमात्। न च—

धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः।

इति वचनात् वेदार्थनिर्णायकत्वमेव शिष्टत्वमिति तन्निर्णयस्य स्मृतिरूपत्वमेवेति वाच्यम्। न हि वेदार्थनिर्णायकत्व शिष्टत्वमपि तु श्रुतिसाक्षात्कारकर्तृत्वमित्येव। श्रुतिप्रत्यक्षहेतव इति पदोपादानात्। किंच शिष्टत्वस्य श्रुतिसाक्षात्कारकर्तृत्वे वा वेदार्थनिर्णायकत्वे वोभयथापि शिष्टवचनाना पौरुषेयत्वमेव। अनाम्नातेष्वेव तद्वचनाना धर्मप्रामाण्योपदेशात्। वेदेनैव तदाम्नान चेत्कृत शिष्टवचनैः। एवमेव परिषद्विषयेऽपि। किं च—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥

इति मनुवचनेन श्रुतिस्मृत्योस्तदविरोधितर्केणानुसधानात्मकोऽपि कश्चन तन्निर्णयातिरिक्तो धर्मोऽनुमीयते। एवं च यथाकथमपि समयस्य पौरुषेयपरिभाषानतिरिक्तत्वमेव सिध्यति। अत एव " पौरुषेयी पारिभाषिकधर्मेण व्यवस्थान समय " इति मिताक्षरायामुक्तम्। उज्ज्वलाकारैरपि " पौरुषेयी व्यवस्था समय " इत्युक्तम्। पौरुषेयत्व च पुरुषबुद्धिपरिकल्पितत्वमेव। तद्यदि पुरुषबुद्धेरपि सावकाशत्व स्याद्धर्माधर्मयो प्रामाण्ये, कृत वेदशास्त्रे। न च मूलत्वेन तेषामपेक्षा। निर्णयावसरे च भ्रमप्रमादविप्रलिप्साद्यप्रामाण्यकारणीभूतदोषसंभवेन निर्णयस्यैवाप्रामाणिकत्वप्रसङ्गात्। अत एव स्मृतिसूत्रनिबन्धाना परस्परवैमत्यम्। दिङ्मात्रमुदाह्रियते यथा—मातुलकन्यापरिणयस्य धर्मत्वे यन्मन्त्रलिङ्ग प्रमाणत्वेन कैश्चिदुपादीयते, तदेव स्मृतिकारैरविवक्षितमिति मत्वा प्रमाणत्वेन नाभ्युपेयते। अत एव मातुलस्य सुतामूढ्वेति स्मार्ता निषेध। न च स्मृतिकाराणा तदज्ञातमिति कल्पना संभवति।

य: कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥ मनुः २।७

इति मनोः सर्वज्ञत्वावगमात् । न चैवं विधिनिषेधयोर्वेदमूलकत्वेन तुल्यबलविरोधात् षोडशिग्रहणाग्रहणवदस्तु विकल्प इति वाच्यम् । सर्वज्ञस्य मनोस्तथानवबोधे प्रमाणाभावात् । निबन्धेषु च प्रसिद्धमेव वैमत्यं मिताक्षरा-जीमूतवाहनकृत-दायभागे व्रतादिनिर्णये च । किंच धर्माधर्मयोरतीन्द्रियफलकत्वेन शास्त्रैकगम्यत्वस्य शास्त्रत्वस्यच वेदैकवृत्तित्वस्य सर्ववादिसंप्रतिपन्नत्वात् तत्र पुरुषबुद्धेः कथमपि नावसरः । नो चेत्—

कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा ।
तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः ॥

इति पुरुषबुद्धिदुरवस्थायां वक्त्न्यो विशेषः । येन दुरवस्थापरिहारः स्यात् । न च धर्मज्ञत्वादेव तत्समयस्यापि प्रामाण्यम्, धर्मज्ञानामपि साहसस्य प्रायो दर्शनात् । तथैव वार्तिके प्रतिपादितम् । अत एव "दृष्टो धर्मव्यतिक्रमः साहसं च महताम्" इति गौतमेनोक्तम् । तत्सिद्धं पौरुषेयत्वान्न धर्मज्ञसमयः प्रमाणमिति ।

यत्तु केचनाधुनातनाः पण्डितम्मन्या एतादृशस्थले उभावपि धर्मौ वैकल्पिकौ न्यायसिद्धत्वादिति विकल्पमाश्रयन्ति । तत्तु सिद्धप्रामाण्ययोः प्रमाणयोः परस्परविरोधे विकल्प इति न्यायात् प्रकृते च पुरुषबुद्धेः प्रामाण्यस्यासिद्धत्वात्तुच्छमेव । न्यायस्य तर्करूपत्वात् तस्य चाप्रतिष्ठानात् । येनैव हि सत्त्वहेतुना सौगताः क्षणिकत्वं साधयन्ति, तेनैवौपनिषदा नित्यत्वमित्यत्र नान्यः कश्चन सत्त्वपरिभाषाभेदमन्तरा हेतुः । परिभाषायाः सर्वत्र पुरुषबुद्धिपरिकल्पितत्वमेवेति न सांप्रतं विकल्पाश्रयणमतीन्द्रियार्थे साध्ये कर्मणि । अत एव च परिस्थितिमूलकमेवेदं स्मृतीनां निबन्धानां च वैमत्यमिति मन्वाना आधुनिका इतिहासप्रामाण्यं पुरस्कृत्येदानींतनपरिस्थितिमनुसृत्य नूत्ना काचित् स्मृतिः प्रणेयेति वदन्तः

चाप्रतिष्ठानात् परस्परविसंवादेन चाप्रामाण्यात् मूलभूतवेदानुपलम्भात् तथाभूतवेदानुमाने च यथाक-
थंचित् यस्य कस्यापि विधेः समर्थनसंभवात् उपलब्धवेदाविरोधस्य प्रामाण्योपोद्बलकत्वकल्पनाया-
मपि परस्परवैमत्यस्यानिराकरणाच्च न धर्मज्ञसमयस्य प्रामाण्यमिति प्राप्तम् ।

## ( धर्मज्ञसमयस्य प्रामाण्यव्यवस्थापनम् )

अत्राभिधीयते—सत्यं पुरुषबुद्धेरनवस्थानान्नैकमत्येन धर्मनिर्णयः संभवतीति । तत्किंरूपमन-
वस्थानम् । किं वचनादर्थबोध एव न भवति, आहोस्वि भवन्नपि न प्रामाणिकः । नाऽऽद्यः ।
समस्तव्यवहारोच्छेदप्रसङ्गात् । नहि परस्पराशयबोधने व्यवहारे शब्दातिरिक्तमन्यत्साधनम् । ततोऽपि
यदि न बोधः । तदा तु व्यवहारलोप एव स्यात् । न चावयवचेष्टादिभिस्तत्रार्थज्ञानम् । विना
शब्दं तेषामपि यथावद्बोधजनकत्वासंभवात् न च मूकादिवत्तत्संभवति । तत्रापि सामान्यसङ्केताभावे
दुरवस्थाप्रसङ्गसंभवात् । नहि आगन्तव्यमित्यर्थकहस्तसंकेतेनाऽऽगमनमेव बोद्धव्यमिति सामान्यरूपेण
संकेताभावे आगमनरूपार्थप्रतीतिः सर्वेषां संभवति । तदसंभवे चाऽऽगमनानुष्ठानस्याप्येकरूपेणासंभवः ।
तस्मात्सामान्यरूपेण संकेतस्य चेष्टादिष्वपि सर्वैरङ्गीकार आवश्यकः । तथैव शब्देष्वपि शक्तिरू-
पसंकेतस्याङ्गीकारे समस्तव्यवहारनिर्वाहःसंभवति । सर्वजनप्रतीतिरपि तथैव वर्तत इति वृथाऽयं
निर्गलः प्रलापो यच्छब्दान्नार्थप्रतीतिरिति । अथ भवन्नप्यर्थबोधो न प्रामाणिक इति चेत्तदपि न ।
तादृशबोधस्य प्रामाणिकत्वाभावे हानोपादानानुकूलनिवृत्तिप्रवृत्त्यसंभवापत्तेः । प्रत्यक्षगोचरा च
सर्वजनीना तथा व्यवहारप्रतीतिः । न च सा वचनातिरिक्तप्रमाणजन्या वचनश्रवणसमनन्तरमेव
भवन्ती। तस्माद्वचनादपि निश्चितः प्रामाणिकः कश्चनार्थः प्रतीयत इत्यकामेनाप्यभ्युपगन्तव्यम् । न
च सा भ्रान्तिरूपा । बाधाभावात् । न च मणिमन्त्रौषधाद्यनन्तरं क्वचिद्वस्तूपलब्धिवद्यादृच्छिकत्वमाकस्मि-
कत्वं वा । सर्वत्राव्यभिचारात् । वचनश्रवणसमनन्तरभाविन्यास्तस्या वचनसापेक्षत्वेनाऽऽकस्मिकत्वा-
योगात् । प्रामाणिकत्वं च प्रमाणजन्यत्वमेव । प्रमाणं चानधिगताबाधितार्थविषयकज्ञानजनकत्वमि-
त्युक्तमेव पुरस्तात् । तद्यदि वचनात्पूर्वमज्ञातो वक्तुराशयो निर्बाधमेवावगम्यते श्रोतृभिस्तथाऽनुष्ठीयते
न च वक्त्रा निषिध्यते, तत्कथं न प्रामाणिक इति प्रष्टव्य एवात्रभवान् देवानांप्रियः । ननु तर्हि कथं
वैमत्यमिति चेत् संकेतानवधारणात् । यथा हि शब्दार्थोपस्थितौ कारणीभूततत्तत्सङ्केतानवधारणे न यथावद्वा-
शाब्दबोधः । तथैव वाक्यार्थावबोधेऽपि वाक्यार्थनिर्णायकतत्तन्न्यायरूपसङ्केतानवधारणे न यथावद्वा-
क्यार्थबोध इत्यत्र बोद्धुरेवापराधः । न हि स्थाणोरयमपराधो यदेनमन्धो न पश्यतीति । न हि
"अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः" इत्यादिवाक्येषु सहृदयहृदयानन्दकरः रसिकजने-
कसंवेद्यो नायकनायिकाचुम्बनादिरूपवाक्यार्थो रङ्गगतकाष्ठकुड्यवदवस्थितानामरसिकानां बुद्धौ न
स्फुरतीति काव्यहानिः । नैतावता वा कविभिरेतादृशं काव्यं न प्रणेयम् । न हि कृष्णार्जुनावि-

त्युक्ते शब्दार्थविशेषस्मृतिकारिसाहचर्यनियमस्याज्ञाने नीलधवलाविति कस्यचित् ग्रामीणस्य बोधवत् तन्नियमज्ञानवता सुधियामपि तथैव बोधो भवितव्य इति राजाज्ञाऽस्ति। न वा तथा शब्दप्रयोगो न कर्तव्य इत्यपि किंचिच्छासनमस्ति। एवमेव सन्दिग्धस्थले, उपक्रमोपसंहारयोः, परस्परविरोधे, समबलेषु समानविषयकेषु विधिनिषेधवाक्येषु, विधिं विनाऽप्युच्चरिते प्राशस्त्यबोधकवाक्ये एवमन्यत्रापि सर्वत्र संशयोपस्थितौ च कथं वा निर्णयमित्येतदर्थमपि केचन नियमा भाषाशास्त्रविषयका विचक्षणैर्निर्धारिता वर्तन्त एवानादिकालात्। तदनुसारेण यथावद्वाक्यार्थः सेत्स्यतीति न वैमत्यमात्रात् तात्पर्यानवधारणमूलकादप्रामाणिकत्वकल्पनं साम्प्रतम्। नो चेत् केवलमक्षरार्थग्रहणपाटवेन पण्डितमन्यानां मूर्खाणां महाजन इति प्रेतानुगामी जनसमर्दः, राजद्वारे श्मशाने च यस्तिष्ठति स बान्धव इति गर्दभस्य बन्धुत्वम्, धर्मस्य त्वरिता गतिरिति उष्ट्रस्य धर्मत्वम्, इष्टं धर्मेण योजयेदिति गर्दभघण्टाबन्धनमुष्ट्रस्य गले इति कथामिवानुकुर्यादज्ञजनवाक्यार्थनिर्णयः। तस्मात्सूक्ष्मेक्षिकयाऽऽलोचिते्ऽस्मिन् जगति पदार्थब्रह्मण इव शब्दब्रह्मणोऽपि सुसम्बद्धः कार्यकारणभावो वरीवर्तीति तमज्ञात्वा यत्किंचिदर्थकल्पनं महतेऽनर्थाय भवति। एतादृशपरिकल्पनात्मकस्तर्कस्तु हेय एव। अत एवोक्तं मनुना—

> योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः।
> स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः॥ इति।

ननु के ते नियमा, यदनुसारेण वाक्यार्थनिर्धारणं यथावदेव स्यादिति चेत्, मीमांसापरनामधेयाः पूर्वोत्तरमीमांसाशास्त्ररूपा इति गृहाण। ननु अपौरुषेये वेदे कथं तेषामावश्यकता। न हि पुरुषबुद्धिवत् तस्य भ्रमप्रमादविप्रलिप्सादिदोषाकुलता इति चेत्। अत एव तत्र तेषामावश्यकता। पौरुषेये तु कदाचिन्निर्धारणासंभवे सर्वमपि त्याज्यं स्यात्। नूतनं च पारिभाषिकं निर्माय व्यवहर्तुं शक्यम्। अपौरुषेये तु तथा त्याज्यत्वासंभवात् त्यक्तेऽपि च स्वेनैव स्वानर्थसंपादनसंभवाच्च तन्निर्णयोऽत्यावश्यक इति तदर्थमेव मीमांसाशास्त्रप्रणयनं तादृशन्यायसङ्ग्रहात्मकम्। अत एवोक्तं भट्टपादैः—

> अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम्।
> धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्॥

इति। न हि मीमांसाशास्त्रस्य धर्मनिर्णयमन्तराऽन्यत् किमपि परं प्रयोजनम्। कृते च धर्मनिर्णये तद्वदेव यदि कस्यचिद्ग्रन्थस्यापि तात्पर्यनिर्णयः कर्तव्यश्चेत्सोऽपि भवतु नाम। नैतावता धर्मातिरिक्तविषयनिर्धारणार्थं तत्प्रवृत्तिः।

ननु किमत्र प्रमाणमिति चेत् "स्वाध्यायोऽध्येतव्यः" इति विधिरेवेति गृहाण। तथा हि—अध्येतव्य इति हि विधिवाक्यम्। पचति—पचनं करोति, गच्छति-गमनं करोति, दहति—दहनं

करोति, इति किल सर्वत्र विवरणात् दहनगमनादिक्रियासु व्यावर्तमानास्वनुवर्तमानः करोत्यर्थः कृतिरूपस्ततो भिन्न इत्यतो अनुवर्तमानाख्यातापरनामधेयतिप्रत्ययस्यैव सोऽर्थ इति निश्चीयते। नायं प्रयत्नापरपर्यायः कृतिरूपो नैयायिकाभिमत आत्मगुणः। प्रयतते—प्रयत्नं करोतीति प्रयत्नापेक्षया भिन्नरूपत्वेन प्रतीतेः। किंतु धात्वर्थनिष्पत्त्यनुकूलः कश्चन व्यापार इत्येवाभ्युपगन्तव्यम्। सैव च भावनेति मीमांसकाः। भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेष इत्येव तेषामभिप्रायः। भविता च गमनपचनादिर्धात्वर्थो भाव्यत्वात्। अतः पचतीत्यादिषु-पचनादिक्रियाभवनानुकूलो भावयितुर्व्यापार इत्येव बोधः। न तु नैयायिकादिवत् पचनानुकूलव्यापारानुकूलकृतिमान् भावयितेति। ये तु वैयाकरणाः—फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः—इति सिद्धान्तयित्वा पुनश्च व्यापारमुख्यविशेष्यकं देवदत्ताश्रिता पाकानुकूला क्रियेति शाब्दबोधमिच्छन्ति, ते तु "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोः प्रत्ययार्थस्य प्राधान्यम्" इत्यन्यत्र स्वीकृतस्य नियमस्य प्रकृते त्यागादर्धजरतीया हेया एव। मीमांसकमते तु वैयाकरणाभिमतफलस्वरूपपचनाद्येव धात्वर्थः। व्यापारस्त्वाख्यातार्थ इति सिद्धान्तः। स च सर्वानुस्यूतः पूर्वोक्तभावनारूप एव। यद्यपि मीमांसकमते "लः कर्मणि भावे चाकर्मकेभ्यः" इति पाणिनीयानुशासनेनाऽऽख्यातानां कर्तरि कर्मणि च विधानात् तदनुसारेणैव च संख्याबोधकप्रत्ययविधानाच्चापाततो व्याकरणानुशासनविरोधः प्रतीयते। तथापि पाणिनीयसूत्रस्थकर्तृकर्मपदानां भावपरत्वमङ्गीकृत्य सुकरो हि विरोधपरिहारः। लौकिकप्रतीत्यनुसारित्वाद्व्याकरणस्य। सा च प्रतीतिः पूर्वोक्तरीत्या भावनापरपर्यायव्यापारविषयिकेति भाव्यं फलं धात्वर्थो व्यापारश्च प्रत्ययार्थ इत्येव युक्तम्। एवं च धात्वर्थस्य भाव्यत्वेन प्रत्ययार्थभावनायामन्वय इत्युत्सर्गः। यत्र तु भाव्यफलवाचकमन्यत्पदमस्ति यथौदनं पचतीति। तत्र त्वगत्या धात्वर्थस्य करणत्वेनैव भावनायामन्वयः स्वीकर्तव्यः पाकेनौदनं करोतीति। न हि भाव्यार्थकपदसमभिव्याहारे तस्य च धात्वर्थस्य च युगपदेव भावनायां भाव्यत्वेनान्वयः संभवति पाकमोदनं च करोतीति। वाक्यभेदापत्तेः। पाकस्य चौदनसाधनत्वेनानन्वयापत्तेश्च। न हि घटं पटं च करोतीत्युक्ते घटः पटस्य साधनं पटो वा घटस्येति बोधः संभवति। तथा प्रकृतेऽपि पाकमोदनं च करोतीत्युक्ते पाकस्यौदनसाधनत्व न प्रतीयेत। एक चेदं वाक्यमेकार्थकमेव भवतीत्यगत्या पाकस्य साधनत्वेनौदनस्य च भाव्यत्वेन भावनान्वयोऽभ्युपेयः। संभवत्येकवाक्यत्वे वाक्यभेदो न न्याय्यः इति किल शाब्दमर्यादा। एवं च यत्र फलवाचकपदसमभिव्याहारस्तत्र तदुपस्थापितफलस्यैव भाव्यत्वेनान्वयः, धात्वर्थस्य च करणत्वेन। यत्र तु न तथा, तत्र धात्वर्थस्यैव भाव्यत्वेनान्वय इति सिध्यति। तच्च फलमुत्पाद्यं वा स्यात् विकार्यं वा संस्कार्यं वा प्राप्यं वा। घटं करोत्यत्र घटस्योत्पाद्यत्वम्। तण्डुलान् पचतीत्यत्र तण्डुलानां विकार्यत्वमोदनरूपावस्थान्तरप्राप्तेः। ग्रामं गच्छतीत्यत्र ग्रामस्य प्राप्यत्वमिति। प्रकृते च पात्रं मार्ष्टीत्यत्र पात्रस्य संस्कार्यत्वम्।

" स्वाध्यायोऽध्येतव्यः " इत्यत्र विधौ स्वाध्यायस्य भाव्यत्वेनोपादानादध्ययनेन स्वाध्यायः कर्तव्य इति वाक्यार्थबोधः पूर्वोक्तरीत्या सिध्यति । तत्र स्वाध्यायरूपवेदस्य पूर्वसिद्धत्वान्नोत्पाद्यत्वम् । अवस्थान्तराप्राप्तेश्च न विकार्यत्वम् । संस्कार्यत्वं तु तत्रैव यत्र संस्कृतस्य कर्मान्तरे विनियोगः । यथा प्रोक्षितानां व्रीहीणाम् । स्वाध्यायस्य तु तादृशविनियोगाभावान्न संस्कार्यता । प्राप्यत्वं तु संभवति । अध्ययनेन वेदाधिगमात् । तथापि निरर्थकस्य तस्य कुत्राप्यनुपयोगाद्विधेरानर्थक्यप्रसङ्गः । न चार्थी समर्थो विद्वानेवाधिक्रियते कर्मस्विति ज्ञानद्वारा कर्मणि विनियोगसंभवात् संस्कार्यत्वं वा प्राप्यत्वं वा संभवतीति वाच्यम् । तथा सत्यर्थज्ञानार्थमेवायं विधिरित्यङ्गीकारे तस्य च विधिमन्तरापि भारताध्ययनादिवदेव लौकिकरीत्या सिद्धौ विधेरदृष्टार्थकत्वकल्पनाप्रसङ्गात् । तदुक्तम्—

विनापि विधिना दृष्टलाभान्न हि तदर्थता ।
कल्प्यस्तु विधिसामर्थ्यात्स्वर्गो विश्वजिदादिवत् ॥

इति । एतेन— अनधीयाना व्रात्या भवन्ति— इति व्रात्यतादोषपरिहारार्थमेवायं विधिरिति कल्पयन्तः परास्ताः । तत्राप्यदृष्टार्थकत्वस्यैव कल्पनात् । एवं च स्वाध्यायविधिरयमदृष्टमात्रफलक इति प्राप्तेऽभिधीयते । स्यादिदमदृष्टमात्रार्थकत्वं विधेर्यदि दृष्टं फलं किमपि नोपलभ्येत । उपलभ्यते चार्थज्ञानं दृष्टं फलमध्ययनस्य । न च दृष्टे संभवत्यदृष्टपरिकल्पनं सांप्रतम् । तदुक्तम्—

लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना ।
विधेश्च नियमार्थत्वान्नानर्थक्यं भविष्यति ॥ इति ।

यद्यपि लौकिकरीत्याप्यर्थज्ञानं संभवति । तथापि प्राप्ते सत्यारभ्यमाणो विधिर्नियमाय भवतीति न्यायेनाध्ययनेनैवार्थज्ञानं कर्तव्यं न लौकिकरीत्येति विधेर्नियमार्थत्वं स्यात् । एवं चानारभ्याधीतस्याप्यस्य विधेरुपनयनवाक्यसापेक्षोपनीतमाणवककर्तव्यसमर्पकतयाऽध्ययनाधिकारसिद्धिरप्यस्य फलम् । उपनीताश्च त्रैवर्णिका इति त एवाधिकारिणः । नो चेदर्थी समर्थो विद्वानिति विद्यासापेक्षत्वेऽपि कर्मणः केनचिदुपायेन येन केनापि संपादिते विद्याधिगमे कर्म कर्तव्यमित्यापतेत् अतश्च दृष्टार्थज्ञानार्थोऽयं विधिरिति संभवत्यर्थज्ञानद्वारा संस्कार्यत्वं प्राप्यत्वं वाऽध्ययनस्येति अध्ययनेनार्थज्ञानद्वारा संपादनीयः स्वाध्याय इति वाक्यार्थः पर्यवसितो भवति । एवं च नाक्षरग्रहणमात्रमध्ययनम्। तु अर्थज्ञानपर्यन्तमिति तावत्कालं गुरुगृहेऽवस्थातव्यम्, न समावर्तितव्यमिति सिध्यति । तच्चार्थज्ञानं न विचारमन्तरेण यथावत्संभवतीति विचारमाक्षिपन्नयं विधिर्गुरूपदेशपरम्परयैव विचारः कर्तव्यः, न यथाकथंचित्स्वीयबुध्द्येति बोधयति । स एव च मीमांसा । पूजितविचारवचनो हि मीमांसाशब्दः । तदेव पूजितत्वं यद्गुरुपरम्परया यथावदर्थबोधकत्वम् । एतादृशविचारात्मकतर्कयोगादेवैवं तु मनुनाप्युक्तम्—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ इति १२।१०६

भट्टपादैरप्युक्तम्—

धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इति कर्तव्यताभागं मीमांसा पूरयिष्यति ॥ इति ।

एतेनाऽऽधुनिकानां तर्कपाण्डित्यं देशकालपरिस्थितिपुरस्कारेण धर्मशास्त्रविरोधपरिहारादिकं च प्रत्याख्यातम् । न ह्यनादिगुरुपरम्परया विना देशकालपरिस्थितिपुरस्कारेण मन्त्रलिङ्गप्राशस्त्य-निन्दादिविवक्षाऽविवक्षानिर्णयः संभवति । अधुनातनपरिस्थितेस्तदानीमनुपलम्भात् । न वा यत्किंचि-द्वासनावासितया स्वबुद्ध्या । निष्कामत्वाद्धर्मज्ञानाम् । यत्तु स्मृत्यादिगतं वैमत्यादिकं, तत्तु परम्पर-यैव तादृशवेदवाक्योपलम्भपूर्वकम् । इदानींतु शाखानामनध्ययनेनोच्छिन्नत्वात्तथा भाव्यते । नहि स्मृतिकाराः सूत्रकारा वाऽस्मदादिवत्कषायदोषदूषिता विषयासक्ताश्च । अपि तु श्रुतिप्रत्यक्षहेतव एव । अत एवोक्तं मनुना—

धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ इति १२।१०९

इदानीं तु " वेदव्यासः स इह दश यो वेद वेदाक्षराणि " इति करालायां परिस्थितौ कुतो वा धर्मेण सपरिबृंहणवेदाधिगमः, कुतश्च शिष्टत्वं धर्मज्ञत्वं वा । अत एव " नाज्ञानामुदितोऽ-युतैः " इत्ययुताज्ञानां परिषत्त्वनिषेधः । ततश्च बहुसंमतिनिषेधोऽप्यर्थादेव । एवं च पूर्वपक्षोक्तं सर्वमज्ञानोज्जृम्भणविलसितमेवेति हेयमेव । एतादृशधर्मज्ञानां समयोऽपि धर्मबुद्ध्यैव परिकल्पितत्वा-त्प्रमाणमित्यपि परिषन्निर्णयस्य एकस्यापि ब्रह्मविदो वचनस्य च प्रामाण्यमभिदधता मनुना स्पष्ट-मेवोक्तम्—

दशावरा वा परिषद्यं धर्मं परिकल्पयेत् ।
त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत् ॥ इति १२।११०

अत्र वृत्तस्थेति परिषदो विशेषणेन शीलमाचारश्चावगम्येते । तेन शीलाचारसंपन्नानामेव पारिषद्यं नान्येषामिति सुविशदमेव । तत्र परिषत्स्वरूपं यथा—

त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा ॥ इति १२।१११

अत्र मन्वर्थमुक्तावली यथा— वेदत्रयसंबन्धशाखाध्येतारः, श्रुतिस्मृत्यविरुद्धन्यायशास्त्रज्ञः, मीमांसात्मकतर्कवित्,

याज्ञवल्क्यस्तु एकस्याप्यध्यात्मवित्तमस्य तादृशाधिकारमाह—

> चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
> सा ब्रूते यं स धर्मः स्यादेकोऽप्यध्यात्मवित्तमः ॥ ९ ॥ इति ।

## (धर्मज्ञसमयप्रामाण्यतात्पर्यम्)

अत्रेदमवधेयम्—अद्ययावन्मन्वादिभिः स्मृतिकारैर्धर्मज्ञैरालोडितेऽपि समस्तवेदराशौ किमवशिष्टानि कानिचित्स्थलानि यत्र मन्त्रलिङ्गस्य विवक्षाऽविवक्षासंदेहो वा निन्दाप्राशस्त्यरूपभूतार्थवादस्य स्वार्थे विवक्षाऽविवक्षा वा विधौ वा कुत्रचित्तथा संदेहो वा स्यात्। यदि चावशिष्टानि, न मन्वादीनां सर्वज्ञानमयत्वम्। यदि नावशिष्टानि, कथं वा तन्निर्णयार्थं पूर्वोक्तपरिषद्विधानम्। यदि च स्मृतिवाक्यविषयकत्वं वा पुराणवाक्यविषयकत्वं वा श्रौतगृह्यसूत्रादिविषयकत्व परिषद्विधानस्य परिकल्प्येत, तथापि मीमांसाशास्त्रेण गतार्थत्वान्न तद्युक्तमुत्पश्यामः। न च मीमांसाशास्त्रस्य विचाररूपत्वात्तदर्थमेव परिषद्विधानमिति वाच्यम्। तथा चेदेकस्यैव मीमांसकस्य तत्तद्वाक्यविषयकसंदेहापाकरणे सामर्थ्यात् तस्यैवाधिकारो युक्तः। न त्र्यवराया वा दशावराया वा परिषद इति तद्विधानवैयर्थ्यतादवस्थ्यात्। तस्मादन्यः खलु विषयः परिकल्पनीयः। अत एव समग्रशास्त्रकथनानन्तरम्—

> नैःश्रेयसमिदं कर्म यथोदितमशेषतः ।
> मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते ॥ (१२।१०७)
> अनाम्नातेषु धर्मेषु कथं स्यादितिचेद्भवेत् ।
> यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥ (१०८)

इति श्लोकद्वयेन रहस्यतयाऽऽनाम्नातविषयकत्वमुपदिश्यते परिषदः। अत्र स्पष्टप्रतिपत्तये मन्वर्थमुक्तावलिर्यथा—

एतन्निःश्रेयससाधन कर्म निःशेषेण यथावदुदितम्। अत ऊर्ध्वं मानवशास्त्रस्य रहस्यं गोपनीयमिदं वक्ष्यमाणं शृणुत ॥ १०७ ॥ अस्य शास्त्रस्यासमस्तधर्माभिधानमाशङ्क्यानया सामान्योक्त्या समग्रधर्मोपदेशकत्व बोधयति। सामान्यविधिप्राप्तेषु विशेषेणानुपदिष्टेषु कथं कर्तव्यं स्यादिति यदि संशयो भवेत्, तदा य धर्मं वक्ष्यमाणलक्षणाः शिष्टा ब्राह्मणा ब्रूयुः, स तत्र निश्चितो धर्मः स्यात् ॥ इति ॥

अनेन च मन्वर्थमुक्तावलिसदर्भेण स्पष्टमिदमवगम्यते यत् यद्यपि मनुना समग्रधर्मोपदेशो विहितः, तथापि न स सर्वविषयको विशेषरूपेण च। वर्णधर्मेषु च वैश्यधर्माणां राजधर्माणां चानु-

शासनं सामान्यरूपेणास्ति । तत्रापि प्रजापालनरूपस्य निःश्रेयसकरस्यापि धर्मस्यान्तःकण्टकबहिःकण्टकशोधनादिषु बहुप्रकारत्वादितरधर्माणां च तदधीनत्वात् तदभावे च तेषामपि यथावदाचरणासंभवात्, तेषां च प्रकाराणां प्रतिपक्षोत्थापितबह्वन्तरायप्रचुरत्वेन विशेषरूपेणोपदेशासंभवाच्च रहस्यत्वेनानाम्नातविषये निर्णयार्थमेवेदं सर्वं परिषदादि विधानमिति । अत्रैव खलु 'परिस्थिति'शब्दः श्रूयत इदानींतनानाम् । यद्यपि वेदराशेरनन्तत्वात् पुरुषबुद्धेश्चाल्पत्वात् मीमांसान्यायमूलकनिर्णयावसरेऽपि कदाचित् संशयः संभवति । तथापि—मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते इति वचनेन मनुवचनाविरोधेनैव तत्र निर्णयः सुकरः । पूर्वोक्तविषये तु मनुवचनानामतीव सामान्यरूपत्वात्तत्र संशयापाकरणं दुष्करमेव ।

किंच दण्डनीतेरपि परिगणितशास्त्रेष्वनाम्नात् धर्ममूलत्वमवश्यमभ्युपेयमकामेनापि । तथा च दण्डनीतिधर्मशास्त्रयोर्विरोधप्रसङ्गे बलाबलविचारोऽप्यावश्यकः । तत्र धर्मपरिपालनार्थमेवावलम्ब्यमानाया दण्डनीतेः पूर्वोक्तकण्टकशोधनादिषु अधर्मभासात्मकाचरणेऽवश्यकर्तव्ये समापतिते तत्कर्तव्यं नवेति संदेहोऽपि समुदियात् । तदर्थमपि परिषदो निर्णायकत्वं संभवति । अत एव गोपनीयत्वेनोपदेशोऽनाम्नातेष्विति । तथैव शक्तिह्रासादिषु निर्णयस्याऽऽवश्यकता । एवं च धर्मज्ञानां समयरूपेण कार्यद्वयमिदं सिध्यति यत्पौरुषेयपरिभाषारूपेण धर्मनिर्णयः परिस्थितिरूपेण तत्प्रचारश्च । प्रचारावसरे च तद्विरोधिकण्टकशोधनार्थं मार्गप्रदर्शनं चेति । अत एव कलिवर्ज्यप्रकरणस्योपपत्तिः । न हि विधिबोधितानां यावज्जीवाग्निहोत्रादिधर्माणां देशकालापरिच्छिन्नानां पौरुषेयव्यवस्थया निषेधो भवितुं युक्तः । शक्तिह्रासकृतश्चेत्तत्र दण्डाभाव एव निदानम् । क्षत्रियाणां दण्डदोषादेव प्रजासु कामक्रोधादिना धर्मह्रासाच्छक्तिह्रासः । स्पष्टमिदं रामायणे शूद्रकतपस्यया अकाले ब्राह्मणपुत्रमरणेन, भागवते च । तस्मात्पूर्वोक्तरीत्यैव तदुपपत्तिः संभवति नान्यथेति तदेवात्र विचारयामः । एतादृशपूजितविचाररूपा या तर्कविद्या सैव किलाऽऽन्वीक्षिकी । अनु पश्चात् श्रवणोत्तरं ईक्षणं परीक्षणमन्वीक्षा, सा प्रयोजनमस्या इत्यान्वीक्षिकी । "प्रयोजनम्" इति पाणिनीयानुशासनात् । श्रवणं च श्रुतीनामेवेति गुरुगृहेऽक्षरग्रहणानन्तरमर्थज्ञानायावस्थितौ श्रुतस्यार्थस्य विचारमन्तरेणासंभावनाविपरीतभावनयोरनिरासात् यो हि विचारः क्रियते, स एव पूजितविचारापरपर्याया मीमांसेति तस्याश्चतसृषु विद्यासु समाजस्थित्युपयोगिनीषु संग्रहः शास्त्रे कृतः । सा च विशेषतो धर्मप्रचारार्थमावश्यकधर्मनिश्चयार्थमेवेति तदधिकारिराजधर्मेषु तदनुशासनम् । यथाऽऽह मनुः—

> त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ।
> आन्वीक्षिकीं चाऽऽत्मविद्यां वार्तारम्भांश्च लोकतः ॥७।४३

अत्र चाऽऽत्मविद्यायाः पृथगान्वीक्षिकीनिर्देशात् पूर्वोक्तविचाररूपा मीमांसैव सेति स्पष्टमवगम्यते । अर्थशास्त्रे तु चाणक्येनास्याः सर्वविद्यापेक्षयाऽतीव श्रेष्ठत्वमुपयुक्तत्वं च प्रतिपाद्यते ।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणा शश्वदान्वीक्षिकी मता ॥ इति ।

एतेन धर्मनिर्णयो वा भवतु, धर्मप्रचारो वा, इतरविद्यासु सदेहो वा यत्किमपि वा भवतु, सर्वत्रास्या अतीवोपयुक्तत्व प्रतीयते । अत एव समाजसुस्थितये विद्याचतुष्टयस्यैवानुशासनम् । न स्मृत्यादीनाम् । तेषामान्वीक्षिकीद्वारा श्रुतिमूलकत्वेन त्रय्यामेवान्तर्भावात् । एवमेव वार्ताया अप्याव-श्यकता पूर्वोक्तमनुवचनात् प्रतीयते । त्रयीवार्तादण्डनीतीना परस्परविरोधप्रसक्तौ बलाबलनिर्णयस्त-थाऽन्योन्यानुबन्ध· परस्पराविरोधश्चाऽऽन्वीक्षिक्यायत्त एवेति तत्र धर्मज्ञसमयस्य प्रामाण्यमवश्यमे-व । अत एवोज्ज्वलाकारे, स्मृत्यादीनामपि धर्मज्ञसमयत्वमेवोक्तम् । एतेन धर्मनिर्णयो मीमासापरिपा-ट्यैव नैतिहासिकशैल्येत्यपि सिद्धम् ।

यत्तु "आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयो" इति कोशात् पञ्चावयवात्मक-वाक्यप्रयोगरूपानुमानप्रधानतर्कशास्त्रस्य ग्रहणमिति केषाचिन्मतम् । तत्तु "त्रैविद्यो हेतुकस्तर्की" इति मनुवचने हेतुशब्देन तादृशतार्किकनिर्देशात् तर्किपदेन च मीमासकस्य ग्रहणात् "आन्वीक्षिकी चात्मविद्याम्" इति वचनव्याख्यावसरे "आन्वीक्षिकी तर्कविद्या भूतप्रवृत्तिप्रयुक्त्युपयोगिनीम्" इति मन्वर्थमुक्तावल्या विवरणाच्च न युक्तमिति मन्यामहे। न हि तादृशी तर्कविद्या भूतप्रवृत्तिप्रयु-क्त्युपयोगिनी । चोदनाया एव प्रवृत्तिप्रयोजकत्वात् । अपौरुषेयत्वेन तस्या निर्दोषत्वात्स्वत प्रामा-ण्यात् भूतभविष्यद्वर्तमानार्थबोधनसामर्थ्याच्च । न तथाऽनुमानात्मकतर्कविद्येति सुविशदमेव सुधियाम् । ततसिद्ध धर्मज्ञसमयस्य प्रामाण्यम् । तच्च केवल शक्तिह्रासादिपर्यालोचनया विहितसङ्को-चकरण एवोत निषिद्धस्य प्रवर्तनेऽपि । निषिद्धस्य प्रवर्तनेऽपि चेत्प्रामाण्य तर्हि स्वपूर्वविधायकत्वमपि स्याद्धर्मज्ञसमयस्येति तदर्थं कलिवर्ज्यप्रकरणप्रामाण्यविचार प्रस्तूयते ।

( कलिवर्ज्यप्रकरणप्रामाणिकत्वविचारः )

इदमत्र विचारणीयम्-किमिद प्रकरण प्रमाण नवेति । तत्र धर्मस्यानपेक्षशब्दमूलत्वात् श्रुते-स्तादृशशब्दरूपत्वाच्च तस्या एव धर्माधर्मयोर्मुख्यत प्रामाण्यम् । स्मृतिसूत्रपुराणादीना च पौरुषेय-व्यवस्थारूपत्वेऽपि साक्षात् श्रुतिप्रत्यक्षहेतुभूतमन्वादिप्रणीतत्वाच्छ्रातिमूलकत्वेनैव प्रामाण्यम् । तदन्य-दृष्टार्थकानामेव तेषाम् । दृष्टार्थकाना तु दृष्टार्थकत्वादेवार्थकामप्रतिपादकशास्त्रमूलकम् । न्यायसि-द्धाना तु न्यायमूलकमेव । आचाराणा तु धर्मज्ञे परम्परया धर्मबुद्ध्याऽनुष्ठानादेव । धर्मज्ञसमयस्य तु विशेषतोऽनाम्नातविषयेषु सादिग्धस्थलेषु च परिभाषारूपेण वा पौरुषेयव्यवस्थारूपेण वा धर्मज्ञानु-शासनत्वादेव प्रामाण्यम् । तच्चानुशासन श्रुतिस्मृतिपुराणादीना मीमासान्यायपूर्वकविचारेण तत्त-

त्वारीस्थितौ कर्तव्यनिर्धारणमिति न स्मृतीनामिव तेषामुपानिबन्धनमित्येव स्मृतितो धर्मज्ञसमयस्य विशेषः।

तत्र पौरुषेयत्वान्नेदं श्रुतिरूपं प्रकरणम्। नापि स्मृतिरूपम्। स्मृतिष्वनुपलम्भात्। न च पुराणेषूपलम्भात् तद्वत् प्रामाण्यं स्यादिति वाच्यम्। एवमपि "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति न्यायेन वेदविरोधादप्रमाणमेव स्यात्। न केवलं वेदविरोधः। स्मृतिविरोधोऽपि। तथाहि वायुपुराणे—

दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः।
गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा॥
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः॥

इति। अत्र च "अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यम्" इति श्रुतिर्विरुध्यते। कमण्डलुधारणनिषेधे तु—यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम्—इति स्नातकव्रतविषयिणी व्यासस्मृतिर्विरुध्यते। मातृगोत्रात् मातृसापिण्डाच्च विवाहः कलौ वर्ज्य इत्युक्तेस्तु अन्यत्र तद्विधिः प्रतीयते। स तु—

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्॥

इति बौधायनस्मृतिविरुद्धो मीमांसान्यायविरुद्धश्च। अत एव मीमांसायां तदाचारस्य प्रामाण्यं निषिद्धम्। एवं सर्वदा निषेधेऽवगम्यमाने कलावित्युक्तिर्धर्मज्ञानामसामञ्जस्यं गमयति। सपिण्डाविवाहनिषेधस्यापि सार्वकालिकत्वं—

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥

इति मनुवचनेनावगम्यमानं तदेवासामञ्जस्यं द्रढयति। मधुपर्के गोमेधे च प्रत्यक्षश्रुतिरेव विरुध्यते। मद्यविषयेऽपि "नित्यं मद्यं ब्राह्मणो वर्जयेत्" इति मद्यवर्जनस्य सार्वकालिकत्वेन तदेवासामञ्जस्यम्। एवमन्यदपि। तदर्थं च तदेव प्रकरणमत्रोपस्थापयामः—

देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते
न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः॥

इति क्रतुरिति पराशरमाधवीये। अत्र च 'दत्ता कन्या न दीयते' इत्यस्य कोऽर्थः? किं वाचा दत्ता मनोदत्ता विवाहिता वा त्रिविधापि वा? तत्र यदि वाचा वा मनसा वा दत्ताया असंस्कृतायाः कलौ कलङ्कसङ्कुले न पुनर्दानं स्यात्, तदा दीर्घकालं ब्रह्मचर्यावस्थानमेव। तच्च 'दीर्घकालं ब्रह्मचर्यम्' इत्यादिना निषिद्धमिति परस्परविरोधः। न च तत् पुरुषब्रह्मचर्यविषयं न स्त्रिया

इति वाच्यम् । पुरुषब्रह्मचर्यवत् सहगमनाभावे स्त्रीणामपि ब्रह्मचर्यव्रतविधानात् निषेधस्य च प्राप्ति-पूर्वकत्वादविशेषादुभयोरपि ग्रहणे एतत्प्रकरणस्थवचनानामन्योन्यविरोधस्य दुष्परिहरत्वात् । विवाह-संस्काराभावे स्त्रीणां व्रात्यतापात्तिरिति त्वन्यदपि । अथ दत्ता पदेन विवाहितग्रहणे तु तदेवासाम-ञ्जस्यम् । न ह्यन्यत्र युगे विवाहितायाः पुनर्दानमाम्नायते । अत एव धर्म्यविवाहे "अनन्यपूर्विका कान्तामसपिण्डां यवीयसीम्" इत्यनन्यपूर्वाया एव विधिः । काम्यविवाहे तु—

सा चेदक्षतयोनिः स्याद्गतप्रत्यागताऽपि वा ।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥

इत्यादौ दातुरभावात् स्वयमेव दानमिति वृथाऽयं निषेधः । अत एव—

न दानं नैव वरणं न चैव हि प्रतिग्रहः ।
त्रैरात्रिको विधिर्न स्यात्पुनरुद्वाहकर्मणि ॥

इत्युक्तम् । अत एव न त्रिविधानामपि ग्रहणम् । एवमन्यान्यपि वचनानि यथा—

विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
बालिकाऽक्षतयोन्योश्च वरेणान्येन संस्कृतिः ॥
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।
आततायिद्विजाग्र्याणां धर्मयुद्धे न हिंसनम् ॥
द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः ।
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥
महाप्रस्थानगमनं गोसञ्ज्ञप्तिश्च गोसवे
सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः ॥
अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः ।
वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः ॥
वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा ।
प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् ॥
संसर्गदोषः स्तेनाद्यैर्महापातकनिष्कृतिः ।
वरातिथिपितृभ्यश्च पशूपाकरणक्रिया ॥
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ।
सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि ॥
अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः ।
अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च ॥

शामित्रं चैव विप्राणां सोमविक्रयणं तथा ।
षड्भक्तानशनेनान्नग्रहणं हीनकर्मणः ॥
शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् ।
भोज्यान्नता गृहस्थस्य तीर्थसेवाऽतिदूरतः
शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिरीरिता
आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा
प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः ।
ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ।
बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः ॥
यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः ॥
नवोदके दशाहं च दक्षिणा विधिचोदिता ।
ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च ।
भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा ।
गोतृप्तिमात्रे पयसि शिष्टैराचमनक्रिया ॥
पितापुत्रविरोधे तु साक्षिणां दण्डकल्पनम् ।
यत्र सायंगृहत्वं च सूरिभिस्तत्त्वतत्परैः ॥
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ॥
समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् ॥ इति ॥

एतानि किल वचनानि कुत्रत्यानीति मूलं सम्यङ् न ज्ञायते । आदित्यपुराणान्तर्गतानीति हेमाद्रिः । सारसङ्ग्रहस्थानीति मदनपारिजातः । अन्यत्र क्वचित् देवलवचनानीति । विद्वन्मनोहरायां, पराशरस्मृतिव्याख्यायां तु बृहन्नारदीय-शौनकीय-धर्मज्ञसमयेत्यादिस्थत्वेनैतेषां निर्देशः । मूले तु न कुत्रापि दृश्यन्ते । एवमपि प्रायः सर्वनिबन्धकारैरादृतत्वाद्विचारविषयतामापद्यन्ते । तत्र चानुपदोक्तरीत्या विरोधासामञ्जस्यादयो दोषाः परिस्फुरन्ति । किं च कालेऽस्मिन् परिस्थितिं पुरस्कृत्य स्मृतायाः विप्राणां द्विजकर्मबोधिन्याः पराशरस्मृत्या आपद्वृत्तिनिषेधेन विरोधः । बलात्कारदुष्टसङ्ग्रहबोधकदेवलस्मृत्या च बलात्कारादिदुष्टस्त्रीसङ्ग्रहनिषेधस्य विरोधश्च समानकालविषयत्वात्स्फुट एव ।

अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

इति वचनेन तु अग्निहोत्रस्यैव निषेधे तत्साध्यकर्मणामपि निषेधे सिद्धे पुनश्च तदङ्गाग्निहोत्रहवणीलेहादिनिषेधस्य वैयर्थ्यमपि। यथाकथञ्चित्—

अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योश्च पृथक्कृतिः।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता॥

इति लौगाक्षिवचनात्सर्वाधानस्यैव निषेध इति कल्पयितुं शक्यम्। एवमपि पूर्वोक्तविरोधस्तु न समाधेयो भवति। किं च लोकगुप्त्यर्थमित्यत्र लोकानां का वा गुप्तिः, व्यवस्थापूर्वकं बुधैरिति च कीदृशी व्यवस्था, इत्यपि पर्यालोचनीयम्। तत्र गुप्तिर्नाम संरक्षणम्। तच्च योगक्षेमसाधनेन वा धर्मसंरक्षणेन वा। उभयत्रापि दण्डनीतेरेव प्रभुत्वात् तद्विप्लव एव तदसंभवः। प्रत्यक्षमेव चेदानीमवगम्यते यद्दण्डनीतेर्यवनम्लेच्छायायत्तत्वादेव धर्मनाशो योगक्षेमासौकर्यं चेति। तस्याश्च सम्यङ्नेत्रधिष्ठितत्वे तु इदानीमपि तथानुष्ठानसंभवान्नोपयुक्तमिदं प्रकरणम्। अत एवोक्तं मनुना—

दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः॥ ७।१८
दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्वसेतवः।
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात्॥ ७।२४
कृतं त्रेतायुगं चैव द्वापरं कलिरेव च।
राज्ञो वृत्तानि सर्वाणि राजा हि युगमुच्यते॥ ९।३०१

एवं च कलियुगाद्धहासोऽयं दण्डनीतेः सम्यङ्नेतुरभावादेव। किं च निषेधो हि प्राप्तिपूर्वकः। प्राप्तिश्च कामतो वा वचनतो वा। उभयथापि कालनियमस्य कथमप्यसंभवात् निषेधवाक्येन तन्नियमोऽय निष्प्रमाण एव। न च शक्तिसत्त्वासत्त्वाभ्यां तदुपपत्तिः। शक्तिश्चार्थिनः समर्थस्य विदुषश्च सर्वत्र पूर्वोक्तनिषिद्धकर्मसु वर्तत एव कलियुगे। येषां त्वप्रतिसमाधेयाङ्गवैकल्यं पङ्ग्वन्धबधिरादीनाम्, तेषां त्वाज्यावेक्षणविष्णुक्रमप्रैषश्रवणासंभवेनाङ्गवैकल्यात् क्रतुसाद्गुण्याभावेन पूर्वयुगेष्वप्यनधिकार एव। प्रतिसमाधेयाङ्गवैकल्यवतस्तु निर्धनवदस्त्येवाधिकारः। स्पष्टं चेद—

त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात्।
अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः।
अङ्गहीनश्च तद्धर्मा॥ ६।१।३९।४०।४१
उत्पत्तौ नित्यसंयोगात्॥ ६।१।४२

इति पूर्वमीमांसासूत्रैः। न च तथा किंचिदपि प्रकृते। नच कलियुगस्य कामक्रोधाद्यतिशयाक्रान्तत्वेन तद्गता जनाना न पूर्वोक्तकर्माचरणे शक्तिरिति वाच्यम्। अधिकारे कामक्रोधाद्यभाववत्त्वस्य कुत्राप्यनुक्तेः। प्रत्युत—

कामात्मता न प्रशस्ता न चैवेहास्त्यकामता।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥

इति मनुवचनात् सर्वस्यापि वैदिककर्मयोगस्य काम्यत्वावगमेन पूर्वयुगे तादृशप्रचारे तत्रैव कामाद्यतिशयप्रसङ्गात्। न च परस्परविरुद्धैकविषयकश्रुतिस्मृतिवचनानां षोडशिग्रहणाग्रहणवत् विकल्पः प्राप्तः कालभेदेन व्यवस्थाप्यत इति वाच्यम्। तादृशव्यवस्थायां प्रमाणाभावात्। अन्यथा षोडशिग्रहणाग्रहणे अपि तथा व्यवस्थाप्येयाताम्। नापि पुराणत्वादेतेषां प्रामाण्यम्। पूर्वोक्तविरोधात्। धर्मज्ञसमयस्य संदिग्ध स्थलेऽनाम्नात विषयेच प्रामाण्यमिति पूर्वमेवोक्तम्।

यत्तु पर्युदासविधया वा प्रसज्यप्रतिषेधविधया वाऽस्य प्रकरणस्य प्रामाण्यमिति विकल्प्य पर्युदासविधया प्रामाण्योपवर्णनम्। तत्तु निर्धारितप्रमाणभावस्यैवेति प्रकृते तदभावान्न युक्तम्।

किं च धर्मज्ञानां निर्मूलसमयनिर्धारणाधिकारश्चेत् कृतं वेदैः। स्वतन्त्रपुरुषबुद्धिपरिकल्पितत्वेन बुद्धादिवाक्यवदप्रामाण्यापत्तिरिति त्वन्यदेतत्। निर्मूलकल्पनायां धर्मज्ञत्वहानिरपि। अत एव "धर्मज्ञसमयः प्रमाणम्" इत्यस्याग्रे वेदाश्चेति सूत्रयामासाऽऽपस्तम्बः। यत्तु एतस्मादेव मूलमनुमास्याम इति केषांचिन्मतम्। एतच्च सति मूले धर्मज्ञसमयत्वम्, सति च तस्मिन् मूलानुमानमित्यन्योन्याश्रयतया हेयमेव। तत्सिद्धं नेदं प्रकरणं प्रामाणिकमिति।

( कलिवर्ज्यप्रकरणप्रामाणिकत्वव्यवस्थापनम् )

इदमत्र विचारयामो यदेतत्प्रकरणस्यान्ते लोकगुप्त्यर्थं व्यवस्थापूर्वकं चेति पदद्वयेन एतत्प्रकरणस्य फलं मूलं चाऽऽम्नायते। अतश्च लोकगुप्त्यर्थं व्यवस्थामूलको धर्मज्ञसमय एवात्र प्रमाणमिति गम्यते। अत एवान्ते—

" समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् "

इति धर्मज्ञसमय एवात्रोपवर्णितः। सोऽयं समयो व्यवस्थापूर्वक इति सिद्धे कीदृशी सा व्यवस्था किं मीमांसान्यायरूपविचारपूर्विका वा लोकगुप्तिमूलिका वा वचनपूर्विका वेति विशेषत आलोचनीयम्। तत्र मीमांसान्यायरूपविचारपूर्विका तु नैव संभवतीत्युक्तं प्रागेव। समर्थस्याधिकार इत्यत्र सामर्थ्यं स्विदमेव यत्साङ्गकर्मानुष्ठानोपयुक्तावयववत्त्वम्। तच्च कलिवर्ज्यकर्मानुष्ठाने फलान्यसन्तीति न तन्मूलकमिदम्। लोकगुप्तिमूलकत्वं तु संभवति। परंतु तत्रापि वचनसापेक्षता। नो चेल्लोकगुप्तिरूपस्याभिप्रायानिश्चयेऽधुनातनानामपि स्वकपोलकल्पितधर्मविरुद्धलोकगुप्तिपरिकल्पकानां मनोरथसिद्धेरनतिहतत्वे धर्मलोपप्रसङ्गापत्तेः। अतश्च लोकगुप्तिपदार्थनिर्णय एवाऽत्र विधेयः। अत्र पराशरमाधवीये आनुशासनिकेऽपि—

धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः ।
द्वितीयं धर्मशास्त्रं तु तृतीयं लोकसङ्ग्रहः ॥

इत्युक्तम् । तत्र लोकसङ्ग्रह इत्यस्य लोकानामुन्मार्गप्रवृत्तिनिवारणपूर्वकधर्मनिष्ठासंरक्षण-
मेवार्थः । सेयं लोकगुप्तिः । सापि धर्मप्रमाणत्वेनाऽऽद्रियमाणा धर्मनिष्ठाविपर्ययोत्पादकानां कर्मणा-
मननुष्ठेयत्वं गमयति । न तु योगक्षेमसंरक्षणरूपा । तस्या अर्थकामोपयोगित्वेन धर्मेऽप्रामाण्यात् ।
न च लोकानां लोकाचाराणां सङ्ग्रह इत्यर्थोऽस्तु । तथा च शिष्टाचारस्य धर्मप्रामाण्यं यन्मन्वा-
दिभिरुक्तम्, तदुपोद्बलकमेवेदमित्येकवाक्यतापि स्यात् । नो चेदपरमेवेदं मन्वादीनामननुमतं प्रमाणं
स्यात् । तच्चायुक्तम् । " यद्वै किंचन मनुरवदत्तद्भेषजम् " इत्यर्थवादमूलिकायाः

" मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते "

इति स्मृतेर्विरोधापत्तेरिति वाच्यम् ।

मनसा कर्मणा वाचा यत्नाद्धर्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ॥ ( १।१५६ )

इति याज्ञवल्क्यस्मृत्या लोकसङ्ग्रहस्यापि धर्मप्रमाणत्वेनावबोधनात् । तच्च न धर्मस्वरूप-
निर्णायकत्वेन, किं तु लोकानां धर्मनिष्ठासंरक्षकत्वेन । तथा ह्यत्र मिताक्षरा—

"कर्मणा कायेन यथाशक्ति धर्ममनुतिष्ठेत् । तमेव मनसा ध्यायेत् । वाचा च वदेत् धर्म्य-
मपि लोकविद्विष्टं लोकाभिशस्तिजननं मधुपर्के गोवधादिकं नाचरेत् । यस्मादस्वर्ग्यमग्नीषोमी-
यवत् स्वर्गसाधनं न भवति इति । अनेन च मधुपर्कीयगोवधदृष्टान्तेन स्पष्टमिदं प्रतीयते यल्लोका-
भिशस्तिजननं विहितमपि स्वर्ग्यं न चेन्नानुष्ठेयम् । सा च लोकाभिशस्तिर्विहितविषये तदेव भवितु-
मर्हति यदा सूक्ष्मस्य धर्मस्याऽऽकलनसामर्थ्यं न स्यात् । नो चेद्धर्मानुष्ठाने कुतो वाऽभिशस्तिसंभवः ।
एवं च लोकाभिशस्त्यभावो यथा स्यात्तथा कर्तव्यमिति सिध्यति । तच्च किमर्थमित्याशङ्कायामर्था
देव तेषां धर्मनिष्ठासंरक्षणार्थमित्येवोत्तरपथमायाति । न हि धर्मानुष्ठानेन स्वस्य प्रत्यवायो वाऽन्यद्वा
किंचिदनिष्टं संभाव्यते । केवलम्—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ गी. ३-२१

इति भगवद्गीतोक्त्यनुसारेण सूक्ष्मधर्मतत्त्वाकलनासमर्थैरपि तथानुष्ठाने तेषां प्रत्यवायापत्तौ
धर्मनिष्ठाप्रसरभङ्ग एवेति तादृशधर्मतत्त्वाकलनसमर्थैरपि तद्वर्जनीयमित्येव तात्पर्यार्थः ।

अत्र च प्रसङ्गात् कोऽयं सूक्ष्मो धर्मः, तदितरश्च स्थूल इत्यपि विवेचनीयमिति तदर्थं परा-
शरमाधवीयमेवात्रोपस्थापयामः । तद्यथा—

अथासाधारणं धर्मं पृच्छति—

चतुर्णामपि वर्णानां कर्तव्यं धर्मकोविदैः ।
ब्रूहि धर्मस्वरूपज्ञ सूक्ष्मं स्थूलं च विस्तरात् ॥

प. स्मृ. १७ इति । धर्मस्वरूपे वादिविप्रतिपत्तेस्तदीयविवेकस्य दुःशकत्वाच्च तत्र प्रावीण्यं विवक्षित्वा धर्मस्वरूपज्ञ इति संबोध्यते । तार्किकास्तावदात्मगुणौ धर्माधर्मावित्याहुः ।

विहितक्रियया साध्यो धर्मः पुंसो गुणो मतः
प्रतिषिद्धक्रियासाध्यः पुंगुणोऽधर्म उच्यते ॥

इति । मीमांसकास्तु "चोदनालक्षणोऽर्थो धर्मः" इत्यसूत्रयन् । तत्र भाट्टा मन्यन्ते—

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥

इति । श्लो. वा. १–१–२।१३–१४ ॥

प्राभाकरास्तु कार्यनियोगापूर्वशब्दैरुच्यमानं धात्वर्थसाध्यं स्वर्गादिफलसाधनमात्मगुणं धर्ममाहुः । दुर्विवेच्यत्वं च महाभारते धृष्टद्युम्नेनोक्तम्

अधर्मो धर्म इति च व्यवसायो न शक्यते
कर्तुमस्मद्विधैर्ब्रह्मन् अतो न व्यवसाम्यहम् ॥

( म. भा. आ. १९६–११–१२ ) इति ।

ईदृशस्यापि धर्मस्य स्वरूपमव्याकुलो जानातीत्यस्ति तत्र प्रावीण्यम् । धर्मस्वरूपं च विश्वामित्र आह—

यमार्याः क्रियमाणं तु शंसन्त्यागमवेदिनः ।
स धर्मो यं विगर्हन्ते तमधर्मं प्रचक्षते ॥
ईदृशस्यापि धर्मस्य स्वरूपं व्याकुलो न तु ।
जानातीत्यस्ति तत्रापि प्रावीण्यं धर्मशालिनाम् ॥ इति ॥

मनुरपि—

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥ २।१ ॥

इति । नन्वेवं धर्मस्वरूपमनिर्धारितमेव स्यात् । तथाहि विश्वामित्रमनुवाक्याभ्यां यावत्वा-

मान्याकारः प्रतीयते । न तु द्रव्यगुणादिरूपो विशेषाकारः । वादिनस्त्वत्र विप्रतिपन्ना इति भवते-
वोक्तम् । एतदेवाभिप्रेत्य महाभारते राजधर्मे स्मर्यते—

न कल्मापो न कपिलो न कृष्णो न च लोहितः ।
अणीयान् क्षुरधारायाः को धर्मो वक्तुमर्हति ॥ इति ।

नैष दोषः । उक्तवाक्ययोरधर्मव्यावृत्तस्याऽऽकारविशेषस्य स्फुटं प्रतीयमानत्वात् । वादि-
विप्रतिपत्तेस्तु समाधातुं शक्यत्वात् । स्वर्गादिसाधनस्य शास्त्रैकसमधिगम्यस्यातिशयस्य धर्मत्वेन
सर्वसंप्रतिपत्तेः । स चातिशयो द्विविधः । द्रव्यादिनिष्ठ आत्मनिष्ठश्च । तत्राऽऽत्मनिष्ठस्यातिशयस्य
साक्षात्फलसाधनत्वात् फलनिष्पत्तिपर्यन्तं चिरकालमुपस्थानाच्च तद्विवक्षयाऽऽत्मगुणोऽपूर्वशब्दवाच्यो
धर्म इति तार्किकप्राभाकरावाहतुः । उक्तापूर्वस्य फलोत्पत्तिदशात्वमभिप्रेत्य तत्साधनभूतो द्रव्या-
यतिशयो धर्म इत्याहुर्भाट्टाः । ब्रह्मवादिनामप्येतदविरुद्धम् । "व्यवहारे भट्टनयः" इत्यभ्युपग-
मात् । एवं धर्मस्वरूपे निरूपिते सत्यव्याकुलत्वेन तदभिज्ञत्वं संभवति ।

चतुर्णां वर्णानां मध्ये धर्मकोविदैरसाधारणधर्माभिज्ञैः कर्तव्यं विस्तराद् ब्रूहि । स च कर्तव्यो
धर्मो द्विविधः स्थूलः सूक्ष्मश्च । मन्दमतिभिरपि सुखेन बुध्यमानः शौचाचमनसंध्यावन्दनादिः
स्थूलो धर्मः । शास्त्रपारंगतैः पण्डितैरेव बोद्धुं योग्यः, इतरेषामधर्मत्वभ्रान्तिविषयो द्रौपदीविवाहादिः
सूक्ष्मो धर्मः । तथा च महाभारते द्रुपद एकस्याः कन्याया बहुपतित्वं लोकवेदविरुद्धं मन्वानोऽधि-
चिक्षेप । तत्र लोकविरोधः स्फुट एव । तिर्यक्ष्वपि एकस्यां गवि वृषभद्वययुद्धदर्शनात् । वेदेऽप्येवं
श्रूयते एकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सहपतयः[तै. सं. ६–५–४] इति । "यदेक-
स्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते । यन्नैकां रशनां द्वयोर्यूपयोः परिव्य-
यति तस्मान्नैका द्वौ पती विन्दते" इति च । तत्र "लोकवेदविरुद्धोऽयं धर्मो धर्मभृतां वर"
(म. भा. आ. १९५–२८) इति वदतो द्रुपदस्य भ्रान्तिनिवृत्तये युधिष्ठिर आह—

सूक्ष्मो धर्मो महाराज नास्य विद्मो गतिं वयम् ॥

(म. भा. आ. १९५–२९) इति धर्मत्वं च बहुपतित्वस्य तत्रैव बहुधा प्रपञ्चितम् । एवं
धर्मव्याधोपाख्याने विद्याभ्यासात् गरीयसी मातापित्रोः शुश्रूषा । विनाऽप्यभ्यासं तच्छुश्रूषयैव तस्य
ज्ञानोत्पत्तेरिति प्रतिपाद्य सूक्ष्मत्वं धर्मस्य निगमितम् ।

बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम ॥ इति । म.भा.व.२०६-४२

"इत्थं स्थूलसूक्ष्मयोः सद्भावात् युक्तस्तदुभयविषयः प्रश्नः" इति ।

अनेन च पराशरमाधवीयेन स्पष्टमिदमवगम्यते यद्वेदशास्त्रानभिज्ञानां प्राकृतानां यत्राधर्मत्व-
भ्रान्तिः संभवति स सूक्ष्मो धर्मः । तदितरस्तु स्थूल इति ।

( शुद्धबुद्धेः कर्माधिकारप्रयोजकत्वम् )

इदमत्राऽऽकूतम्—

> सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि
> प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ( गी. ३।३३ )

इति गीतावचनात्

> यं तु कर्मणि यस्मिन् स न्ययुङ्क्त प्रथमं प्रभुः
> स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः ॥ ( मनु.१।२८ )

इति मनुवचनाच्च सर्वस्यास्यास्य सर्गस्य प्रकृतिकर्माधीनत्वात् तदनुसारेण क्रियमाणेकर्मणि स्वरूपतो धर्माधर्मत्वव्यवस्थायाः कर्तुमशक्यत्वात् पापपुण्यविषये संदिहानोऽर्जुन उवाच—

> अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः
> अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ( गी. ३।३६ )

इति । तदुत्तरदानमुखेन श्रीभगवानुवाच—

> काम एष क्रोध एष रजोगुणसमुद्भवः
> महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ( गी. ३।३७ )

इति । एवं च, चित्तस्य कामक्रोधाद्याक्रान्तत्वे यत्कर्मानुष्ठानम्, तस्य स्वरूपतो धर्मत्वेऽप्यधर्मत्वम् तदभावे च अधर्मत्वेऽपि धर्मत्वमिति गीताशास्त्रसिद्धान्तः । अत एव —

> यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते
> हत्वापि स इमान् लोकान् न हन्ति न निबध्यते ॥ ( गी. १८।१७ )

इत्यन्ते सिद्धान्तितम् । एवं च कर्मानुष्ठानसमये बुद्धेः कामक्रोधाद्याक्रान्तिराहित्यरूपशुद्धेरपेक्षा वर्तते । अत एव मनुनाऽपि " नित्यमद्वेषरागिभिः । हृदयेनाभ्यनुज्ञातः " इति विशेषणद्वयं दत्तम् । एवं च स्वर्गादिसाधनस्य शास्त्रैकसमधिगम्यस्यातिशयस्य धर्मत्वे सर्ववादिसंप्रतिपत्तावप्यनुष्ठानकाले बुद्धिशुद्धेरावश्यकत्वात् स्वरूपतश्चानुष्ठानस्य तद्व्यञ्जकत्वाभावात् धर्मेऽप्यधर्मत्वमधर्मेऽपि धर्मत्वमिति भ्रान्तिरज्ञजनसाधारण्येन संभवति । एवं चाधिकारे बुद्धिशुद्धिरप्यर्थसामर्थ्यविद्यावदन्तर्भवति । अत एव धर्मवद्धर्माभासोऽपि विज्ञेय इत्येवमर्थं कर्णपर्वादिभारतमिति नीलकण्ठाचार्या व्याचक्षते । इयमेव शुद्धधर्मबुद्धिः । अत एव—

> " स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः " ( गी. १८।४५ ):

इत्युक्तं गीतासु । तत एव धर्मव्याध–तुलाधार–पतिव्रतादीनां केवलशुद्धधर्मबुद्ध्यैव स्वधर्मानुष्ठानाज्ज्ञानोत्पत्तिः । एवं च काम्यनिषिद्धानां त्यागे नित्यनैमित्तिकानां च शुद्धधर्म-

बुध्याऽनुष्ठाने च संचितस्य नाशे क्रियमाणस्य चानुत्पत्त्या प्रारब्धानां च कर्मणां भोगादेव क्षये
च ज्ञानोत्पत्त्यनन्तरं मोक्ष इति सिद्धान्तः संगच्छते ।

एवं च शुद्धधर्मबुद्धेरप्यधिकारप्रयोजकत्वात् द्रौपदीविवाह–विश्वामित्रश्वजाघनीभक्षणादीनां
धर्मत्वं सिध्यति । तपस्विजाजल्यादीनां स्वरूपतो धर्मानुष्ठातृत्वेऽपि न ज्ञानमित्यप्यत एव सिद्धम् ।
प्रकृते च कलियुगे कामक्रोधलोभाद्याक्रान्तमानसानां जनानां प्राचुर्येणोपलम्भात् शुद्धधर्मबुद्धेरसंभवेन
तादृशकर्मणां वर्ज्यत्वम्, यैः प्राकृतानां अधर्मत्वभ्रान्त्या बुद्धिभेदः स्यात्, यदुक्तं धर्मज्ञैः, तत्सूपप-
न्नमेव । कलिवर्ज्यप्रकरणे च प्रायस्तादृशान्येव कर्माण्यभिहितानि । तथाहि ‘ दत्ता कन्या न
दीयते ’ इति हि निषेधः ‘ दत्तामपि हरेत्पूर्वात् श्रेयांश्चेद्वर आव्रजेत् ’ इति स्मृतिप्राप्तमुत्कृष्टवरप्राप्तौ
वाग्दत्ताया अपि कन्याया हरणपूर्वकदानं विषयीकरोति । इतरथा ‘ सकृत्कन्या प्रदीयते ’ इति
सकृदेव कन्यादानं शास्त्रत एव प्राप्तमिति व्यर्थ एव स्यात् । तत्र च कामक्रोधादिकलङ्कसंभवेन
तादृशवरलाभेऽपि न वाग्दत्तायाः पुनः कलौ दानमिति वर्ज्यत्वम् । एतेन पूर्वपक्षोक्तविकल्पदोषाः
प्रत्याख्याताः । अत्र पुनर्दाने शुद्धबुद्धेरनुमातुमशक्यत्वात्सर्वत्र व्यवहारासौकर्यं कदाचित्तादृशधर्मेऽ-
धर्मत्वबुद्धेः संभावना स्यात् । दीर्घकालब्रह्मचर्यस्य तु कलाववश्यमेव वर्ज्यत्वं पूर्वोक्तरीत्यैव व्यव-
हारेऽपि सून्नेयम् । मातृगोत्रसपिण्डकन्याविवाहनिषेधेऽपि शुद्धधर्मबुद्धेरभाव एव कारणम् । मन्वाद्य-
विवाक्षितमन्त्रलिङ्गानुसारेण परिकल्पितविधिमूलकत्वादादावपि यत्र धर्माधर्मत्वविप्रतिपत्तिः, कलियुगे
तादृशविवाहस्य यथाकथंचिद्धर्मत्वेऽपि वर्जनमत्यावश्यकमेव । प्राकृतानामधर्मत्वभावनया धर्म-
निष्ठालोपप्रसङ्गात् । दृश्यते चेदानीं तथा कोलाहलः, यद्गोत्रादिपरिपालनं नाऽऽवश्यकं विवाह
इति । एवं सुराग्रहादिना मद्यपानादिप्रवृत्तिः । अश्वमेधादिनाऽयोनिव्यभिचारप्रवृत्तिः । अग्निहोत्र-
हवणीलेहादिनोच्छिष्टभक्षणप्रवृत्तिः । आपद्वृत्त्यादिनोपानदादिविक्रयप्रवृत्तिः । विधवाविवाहादिना
प्रकटव्यभिचारप्रवृत्तिः । इत्यादि स्वयमेवोह्यं वाचकैः ।

अत एतादृशशुद्धधर्मनिष्ठाया असंभवेऽधर्मे धर्मबुद्धिर्मा भूदिति दीर्घदर्शिभिर्धर्मज्ञैरेतानि
लोकानां धर्मनिष्ठासंरक्षणपूर्वकाधर्मनिवारणरूपगुप्त्यर्थं स्वर्ग्यत्वास्वर्ग्यत्वादिकं निर्धार्य वर्जितानीति
धर्मज्ञसमयत्वादेवास्य प्रकरणस्य प्रामाण्यम् । अतः सूक्तं—

“ समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् ” । इति

किंच “ अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः
संमर्शिनः, युक्ता अयुक्ता अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन्, तथा तत्र वर्तेथाः,”
इति तैत्तिरीयोपनिषद्गतशिक्षावाक्येन शिष्टानां धर्मज्ञानामाचरणमितरेषामनुकरणीयतामापद्यत

“ यद्यच्छीर्षण्याचरितं तत्तदनुवर्तते लोकः ”

इति गम्यते ।

इति न्यायात्। तत्र यदि स्वाचरणेनेतरेषां धर्मबुद्धिविपर्ययः स्यात्। तादृशमाचरणं यावच्छक्ति शिष्टैर्न विधेयमित्यपि भारः शिष्टेष्विति गम्यते। एवं च कर्मणां फलमपि द्विविधम्। प्रथमं तावत्स्वात्मनिष्ठातिशयो धर्माधर्मरूपः। द्वितीयं तु प्राकृतानां मनसि तादृशी श्रद्धा, यया धर्मानुष्ठाननिरतास्ते भवेयुरधर्माच्च निवर्तेरन्। तत्र प्रथमं सूक्ष्मधर्मानुष्ठानेनापि सिध्यति। न द्वितीयम्। उभयं तु स्थूलधर्मानुष्ठानेनैव सिध्यतीति प्रायः कलौ स्थूलधर्मानुष्ठानमेव युक्तमित्येतन्मनसिकृत्यैवेदं प्रकरणमाम्नातमिति। एवमपीदानीं निषिद्धानां श्रेष्ठवरलाभे वाग्दत्तकन्याहरण, मातृगोत्रमातृसपिण्डकन्योद्वाहः, ब्राह्मणानामापद्वृत्तिस्वीकारः, उत्तरे भोज्यान्नशूद्रनापितादीनां महानसादौ पाकपूर्वसामग्रीसंपादनम्, शूद्रोदकग्रहणं, इत्यादीनामनुष्ठानं दरीदृश्यते तत्र तत्र। तद्यदि श्रुत्यैवैतानि निषिद्धानि स्युस्तर्हि कथमिदानीमपि तेषामनुष्ठानम्। पूर्वोक्तलोकगुप्तिमूलककल्पनायां तु यत्र तदाचरणेनापि लोकगुप्तिः संभवति। तत्रत्यैः शिष्टैर्न निषेधः परिपाल्यते इति कल्पनासामञ्जस्यं भवति। एतेन नास्य निषेधस्य सति शुद्धधर्मबुद्धिरूपसामर्थ्ये स्वरूपतः प्रत्यवायजनकत्वम्। किंतु प्राकृतजनानां बुद्धिभेदद्वाराऽधर्मभावनोत्पादकत्वात्कथंचित् पापप्रयोजकत्वादेव प्रत्यवायजनकत्वमिति सिध्यति। अतो नास्य पर्युदासविधया मूलभूतश्रुतिस्मृतिवाक्यैकवाक्यतया प्रामाण्यं, किं तु प्रसज्यप्रतिषेधविधयैव।

## ( कलिवर्ज्यप्रकरणस्य पर्युदासविधया प्रामाण्यवादस्य निरासः )

तथाहि—ये तावदष्टदोषदुष्टविकल्पापत्तिभिया पर्युदासत्वमङ्गीकुर्वन्ति, तेषां मते प्रकरणमिदं यदि श्रुतिसदृशमेव निरपेक्षं प्रमाणं स्यात्, स्यात्तर्हि तुल्यबलविरोधात् विकल्पप्राप्तिः। न त्वेतदस्ति। प्रकरणस्य पौरुषेयव्यवस्थारूपत्वात्। पौरुषेयी च व्यवस्था प्रमाणमूलैव न निर्मूला। अनवस्थाप्रसङ्गेनाप्रामाण्यापत्तेः। मूलं च श्रुतिर्वा स्मृतिर्वा। तत्र न तावत्तादृशी श्रुतिरुपलभ्यते। तथाविधस्मृत्युपलम्भस्तु वर्तते। तत्रापि तु मूलप्रमाणापेक्षा वर्तत एव। तादृशमूलश्रुतिकल्पनावसरे च प्रथमोपस्थितमूलश्रुतिप्रमाणेनैव बाधितत्वादनुमानस्य प्रसर एव न संभवति। अत एव—

'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्, इति न्यायः सावकाशः। स्मृतीनामियमवस्था, तदा धर्मसमयस्य कैव कथा मूलभूतश्रुत्यनुमाने। तस्मादत्र समबलत्वं विधिनिषेधयोस्तत्रैव विकल्प इत्येव सिद्धान्तः। किंच प्रकरणमिदं न क्रत्वर्थमपि तु पुरुषार्थमेवेत्यकामेनाप्यभ्युपगन्तव्यम्। येन भावनाकथंभावरूपं विधीयते, तदेव किल क्रत्वर्थमन्यत्करणं फलं च पुरुषार्थमिति क्रत्वर्थपुरुषार्थयोः संक्षेपेण विवेकः। तथा चात्रोक्ताः सुराग्रहादिनिषेधा न कथमपि कस्या अपि भावनायाः कथंभावपूरकाः, किंतु लोकाभिशस्तिपरिहारार्था एवेति कथं तैः क्रत्वर्थसुराग्रहादिबाधः संभवेत्। न च पुरुषार्थानामपि अश्वमेधादिकर्मणां निषेधान् तुल्यबलत्वेन विकल्पापत्तिरिति वाच्यम्। एवमपि

समानफलकत्वाभावेनाधिकारभेदाद्विकल्पासंभवात्। स्वर्गकामो यजेत, लोकाभिशस्तिपरिहारकामो न यजेत, इति विधिनिषेधयोर्युगपत्प्राप्त्यसंभवाच्च। न हि श्रौतमद्यपाननिषेधेनाऽऽयुर्वेदीयमद्यपानविधेर्विकल्पः केनापि प्रेक्षावतोत्प्रेक्षितुं शक्यः। किंच प्रकरणमिदं—

" आख्यातानामथ ब्रुवतां शक्तः सहकारिणी "

इति न्यायमूलकमशक्तिमूलकसंकोचात्मकमित्यभ्युपगम्यते पर्युदासवादिभिरपि। तत्र च शक्तो यजेतेत्युक्तेऽर्थादेवाशक्तस्य प्राप्तिरेव नास्ति। एवं यथा प्रातर्जुहुयादित्युक्ते मध्याह्ने न जुहुयादित्यर्थसिद्धो निषेधो न प्रातर्विधिना विकल्प्यते, तद्वदर्थसिद्धानुवादकत्वेनास्य विषये व्यर्थैवेयं चिन्ता यत्पर्युदासपरत्वं वा प्रतिषेधपरत्वं वेति।

एवमप्यभ्युपेत्यैव समबलं प्रामाण्यं चिन्तैव कर्तव्या चेत्तर्हि तु सामान्यस्य विशेषेण बाध इत्याश्रीयतां प्रतिषेधः। यथाहि " आहवनीये जुहोति " इति सामान्यविहितस्याऽऽहवनीयस्य " पदे जुहोति " " वर्त्मनि जुहोति " " गार्हपत्ये पत्नीसंयाजान् जुहोति " इति विशेषशास्त्रैर्बाधः। तथाऽत्रापि कालनैरपेक्ष्येण विहितस्य कलिरूपकालविशेषेण प्रतिषेधात् निवृत्त्यात्मको बाधः संभवत्येव। कलिरिति लोकाभिशस्त्युपलक्षणम्। नन्वाहवनीयहोमस्य पदहोमप्रत्याम्नानेन तथा बाधसंभवेऽपि प्रकृते प्रत्याम्नानाभावात् कथं बाधः। प्रत्युत नञ्श्रवणात् पर्युदासनिबन्धनो वा प्रसज्यप्रतिषेधनिबन्धनो वा बाधः स्यात्। तत्र प्रसज्यप्रतिषेधे विकल्पप्रसङ्गात् तस्य चाष्टदोषदुष्टत्वेनायुक्तत्वादगत्या पर्युदासनिबन्धन एव बाधः स्वीकर्तव्य इति चेन्न। पर्युदासे ह्युत्तरपदेन सह नञः संबन्धस्याऽऽवश्यकत्वात्। न तु क्रियया सह संबन्धः। न चात्र कलिपदं नञा संबध्यते। येनानुयाजातिरिक्तयजतिषु ये यजामह करोतीतिवत् कल्यतिरिक्तकाले एतानि अनुष्ठेयानीति एकवाक्यतालाघवं परिकल्प्येत। सांनिध्याभावादपि नात्र तथैकवाक्यता। यदि तु " पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः " इति वैयाकरणन्यायमनुसृत्यापवादत्वं चास्य प्रकरणस्याभिप्रेयते, तदा तु यथाकथंचित् चोदकवाक्य एव तथा संकोचः स्यात्। अपवादस्य प्रथमत एव बुद्ध्यारूढत्वात्। परंतु पौरुषेयस्य निषेधस्यापौरुषेयश्रुत्यनुसंधानसमये कथं बुद्धावभिनिवेश इत्येव विचारणीयम्। एवं च यदि नञ्श्रवणादेव पर्युदासाग्रहः, तर्हि त्वत्रार्थलोपादेव सर्वेषां निवृत्तिरित्याश्रीयताम्। तथाहि अर्थलोपो हि त्रेधा, स्वरूपेण प्राकृतपदार्थलोपः, फललोपः, द्वारलोपश्च। द्वारलोपोऽपि बहुविधः कचिद्द्वारत्वाभिमतस्य स्वतःसिद्धतया। यथा कृष्णलेष्ववघातस्य। कचित् पूर्वसिद्धतया यथा खलेवाल्यां छेदनतक्षणादेः। कचित्संपादनाशक्त्या यथा प्राशित्रिडाभक्षणार्थेषु कृष्णलेष्वभिघारणजन्योपकारस्य स्वादिम्नः संपादयितुमशक्यत्वात्। एवं सिद्धशेषिविरोधात् यथाऽऽग्रयणे दक्षिणारूपे वत्सेऽन्वाहार्यधर्मस्य पाकस्य। पाके सति वत्सो नश्येत् मासमेव दक्षिणा स्यात्। कचित्साध्यशेषिविरोधात्, यथा "नैवारः सप्तदशशरावश्चरुर्भवति " इत्यत्र सप्तदशशरावपरिमाणचरुरूपसाध्यशेषिविरोधात् प्राकृतमुष्टिबाधः। प्र—

संपादनाशक्तिरेव कलौ तत्तत्कर्मणां बाधे कारणमिति तदनुवादकमेवेदं प्रकरणं न निषेधकम्। लोकाभिशस्तिमूलकत्वं चास्य पूर्वमेवोपपादितमित्यल पल्लवितेन।

एवं च कलिवर्ज्यानामपि केषांचित् कर्मणामिदानीं प्रचलितमनुष्ठानं शक्तौ सूपपन्नं भवति। अन्यथा तु कल्यतिरिक्तकाल एव तेषां विधौ कलौ सर्वथा प्रत्यवायजनकत्वमेव स्यात्। न च तथा कल्पनमुचितं पश्यामः। सन्ति चेदानीमपि जगतोऽस्य पवित्रीकरणे समर्थाः संन्यासिनोऽग्निहोत्रिणश्च। तथाऽऽपद्वृत्तिस्वीकारिणोऽपि स्वधर्मनिष्ठा ब्राह्मणाः। नो चेत्

"चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च।
कलौ यदा गमिष्यन्ति तदा त्रेतापरिग्रहः।
संन्यासश्च न कर्तव्यः"

इत्यादिवचनैस्तेषां सर्वेषां पावनानां प्रत्यवायित्वप्रसङ्गापत्तेः। तस्मान्नेदं प्रकरणमपूर्वनिषेधकम्। अशक्तिमूलकसंकोचसिद्धनिषेधानुवादकमेवाभ्युपगन्तव्यम्।

यत्तु केचित्

"तद्यदेवादो मनुष्यराज आगतेऽन्यस्मिन्वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्ते"

इत्यर्थवादमूलकत्वमिव मधुपर्कगोवधस्मृतेरस्याप्यर्थवादमूलकत्वं परिकल्पयन्ति। तन्न सांप्रतम्। विधिनिषेधाभ्यामर्थवादस्येव तत्प्रभवस्मृत्याऽर्थवादप्रभवायाः स्मृतेरपि बाधात्। तथा च "मागामनागामदितिं वधिष्ट" इति निषेधप्रभवया गां न हन्यादिति स्मृत्या मधुपर्कीयगोवधस्मृतिर्बाध्येत। प्रत्युत

आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्।

इति न्यायेन मधुपर्कीयगोवधस्मृतेरेव निरवकाशत्वेन प्राबल्ये निषेधस्मृतिः सर्वथा निष्प्रमाणं स्यात्। एवमेव कलिवर्ज्यप्रकरणस्य सर्वथाऽप्रामाण्यापत्तिरिति सुधीभिरूह्यम्।

वस्तुतस्तु

"अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु"

इति स्मृतिमूलकमिदं लोकसंग्रहार्थमनूदितमिति पूर्वोक्तकल्पनैव ज्यायसीत्यल विस्तरेण। स्वार्थत्वास्वार्थत्वे तु सर्वथा शास्त्रैकगम्ये न पुरुषबुद्धिविषये इति तु न विस्मर्तव्यम्।

## ( युगधर्मान्यत्वविचारः )

अत्र तु प्रसङ्गात्कलियुगे कथं शुद्धबुद्धेरभावः किं च कलियुगलक्षणम्, किं वा तत्र प्रमाणमित्यादि यथेष्टो निर्णयते। तत्र मनुः

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाऽऽहुर्दानमेव कलौ युगे ॥ १।८५।८६

पराशरः—

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे युगे ।
अन्ये कलियुगे नृणां युगरूपानुसारतः ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाऽऽहुर्दानमेव कलौ युगे ॥
कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥ प. स्मृ.२२–२४ ॥

इत्यादिस्मृतिवचनैः पुराणवचनैश्च कालखण्डचतुष्टयस्य काचित्कल्पना भवति । तत्र कालस्यातिरिक्तपदार्थत्वे वा पदार्थान्तरस्वरूपत्वेऽपि वाऽखण्डदण्डायमानत्वेन नित्यत्वादेकरूपत्वाच्च कथमयं विभाग इति प्रथमत एव समुन्मिषति शङ्का । न च तस्या अयनत्वादिवदुपपत्तिः संभवति । अयनत्वादीनां सूर्यगतिनिमित्तकत्वस्यैवात्र यत्किंचिन्निमित्तकत्वस्यानुपलम्भात् । नहि भौतिकधर्मा वा भूतधर्मा वा युगभेदेन विपरियन्ति । अतोऽगत्या बुद्धिविपर्यय एवात्र ग्रहीतव्यः । ततश्च कर्मान्यथात्वम् । तत एव सामर्थ्यह्रासश्चेति युगह्रासः । तत्र—

तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः ।
अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव ॥

इति श्रीमद्भागवतोक्तदिशा सकलस्यापि धर्मस्याधिष्ठानत्वं तपःसत्यदयाशौचानामेव । तत्र नित्यनैमित्तिकादीनां तपसि, भक्ष्याभक्ष्यपेयापेयगम्यागम्यादीनां शौचे, देवतोद्देशेन द्रव्यत्यागरूपयागादीनां तन्मूलकत्यक्तद्रव्याणामग्न्यादिषु प्रक्षेपादीनां च दयायां, इन्द्रियनिग्रहादीनां च सत्ये, इत्येवं सर्वेषां धर्माणां यथायथं चतुष्टय एवान्तर्भावादेव धर्मस्य चतुष्पात्त्वमित्यवगन्तव्यम् । तत्र जनानां प्रवृत्तिभेदादेव युगभेदव्यवस्था । स च प्रवृत्तिभेदः सत्त्वरजस्तमोरूपगुणोपचयापचयाभ्यामेवेति स्पष्टमिदं श्रीमद्भागवते द्वादशस्कन्धे तृतीयाध्याये । तद्यथा—

कृते प्रवर्तते धर्मश्चतुष्पात्तज्जनैर्धृतः ।
सत्यं दया तपो दानमिति पादा विभोर्नृप ॥ १८ ॥

संतुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः ।
आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥ १९ ॥
त्रेतायां धर्मपादानां तुर्यांशो हीयते जनैः ।
अधर्मपादैरनृतहिंसाऽसन्तोषविग्रहैः ॥ २० ॥
तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः ।
त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥ २१ ॥
तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे ।
हिंसाऽतुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥
यशस्विनो महाशीलाः स्वाध्यायाध्ययने रताः ।
आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः ॥ २३ ॥
कलौ तु धर्मसेतूनां तुर्यांशोऽधर्महेतुभिः ।
एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥ २४ ॥
तस्मिन् लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ।
दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः ॥ २५ ॥
सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसंचोदितास्ते वै परिवर्तन्त आत्मनि ॥ २६ ॥

इति । अन्यत्र पुराणसारेऽपि—

कृते चतुष्पात्सकलो व्याजोपाधिविवर्जितः ।
वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्पुरा ॥
तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः ।
धर्मः पादविहीनस्तु त्रिभिरंशैः प्रतिष्ठितः ॥
त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म इष्यते ।
त्रिपादहीनस्तिष्ये तु सत्तामात्रेण तिष्ठते ॥

तिष्यः कलिः । तथा बृहस्पतिरपि—

कृतेऽभूत्सकलो धर्मस्त्रेतायां त्रिपदः स्थितः ।
पादः प्रविष्टोऽधर्मस्य मत्सरद्वेषसंभवः ॥
धर्माधर्मौ समौ भूत्वा द्विपादौ द्वापरे स्थितौ ।
तिष्येऽधर्मस्त्रिभिः पादैर्धर्मः पादेन संस्थितः ॥

इति । एतेन तपःसत्यदयाशाचाना सवषां पादानां चतुर्थांशः कलावनुवर्तत इति सुविशद-मेव । न त्वेकैकपादस्यैव विप्लवः । ततश्च धर्मविप्लवमूलकसामर्थ्यविप्लवोऽपि कलौ सिध्यति। तदुक्तं महाभारतेऽरण्यपर्वणि—

कृतं नाम युगं श्रेष्ठं यत्र धर्मः सनातनः ।
कृतमेव न कर्तव्यं तस्मिन् काले युगोत्तमे ॥ ११ ॥
न तत्र धर्माः सीदन्ति न क्षीयन्ते च वै प्रजाः ।
ततः कृतयुगं नाम कालेन गुणतां गतम् ॥ १२ ॥
कृते युगे चतुष्पादः श्वेतवर्णः स चाच्युतः ।
एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितम् ॥ १३ ॥
पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः ।
सत्यप्रवृत्ताश्च नराः क्रियाधर्मपरायणाः ॥ १४ ॥
ततो यज्ञाः प्रवर्तन्ते धर्म्याश्च विविधाः क्रियाः ।
स्वधर्मस्थाः क्रियावन्तो जनास्त्रेतायुगेऽभवन् ॥ १५ ॥
विष्णुः पीतत्वमायाति चतुर्धा वेद एव च ।
सत्यस्य इह विभ्रंशः सत्ये कश्चिदवस्थितः ॥ १६ ॥
सत्यात्प्रच्यवमानानां व्याधयो वहवोऽभवन् ।
कामाश्चोपद्रुताश्चैव तथा दैवतकारिताः ॥ १७ ॥
कामकामा ह्यर्थकामा यज्ञास्तन्वन्ति द्वापरे ।
एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः ॥ १८ ॥
पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः ।
वेदाचाराः प्रशाम्यन्ति धर्मयज्ञक्रियास्तथा ॥ १९ ॥
ईतयो व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा ॥

इति । एतेन हीदमवगम्यते कालौघेन व्यूहमानाना सर्वेषां पदार्थानामेवैव परिवर्तनपरिपाटीति तदनुसारेण मनुष्याणा वासनापरिवृत्तौ धर्माधर्मयोरपि परिवर्तनं भवतीति । इदं च न स्वरूपतः, किंतु फलतः । अतश्च यथा कार्तयुगीनमनुष्ठान यस्य कस्यापि कर्मणः, तत्तथैव त्रेतादिष्वपि भवति । परं च बुद्धिपरिवर्तनात्फलपरिवर्तन तु भवत्येव । न हि धर्मबुद्ध्या क्रियमाणाना यागादीनां फलमिव लाभपूजाख्यात्यर्थं क्रियमाणानां तेषां तत्तथैव भवितुमर्हति । एतदभिप्रायेणैव धर्मान्यत्वं न स्वरूपप-रिवर्तनाभिप्रायेणेति नैतानि वचनानि धर्मपरिवर्तनवादिनामैतिहासिकानामभीष्टलाभायेति विज्ञेयम् । अत एव पराशरस्मृतौ—

अभिगम्य कृते दानं त्रेतास्वाहूय दीयते ।
द्वापरे याचमानाय सेवया दीयते कलौ ॥ १।२८ ॥
अभिगम्योत्तमं दानमाहूयैव तु मध्यमम् ।
अधमं याचमानाय सेवादानं तु निष्फलम् ॥ १।२९ ॥

इति दानपद्धतिमुखेन दानफलतारतम्यं तन्मूलकभूतबुद्धितारतम्यं च स्पष्टमुक्तम् । स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपदानस्वरूपं च युगचतुष्टयेऽपि समानमेव । एवमेव श्रौतस्मार्तादिकर्मणामपि। एवं च यत्र तादृशधर्माचरणे कर्तुः शुद्धबुद्धिर्न संभवेत्, लोके वाऽधर्मभावनाप्रसरः स्यात्, तत्र तत्तत्कर्मणामङ्गानां वाऽननुष्ठानलक्षणः संकोच एव शिष्टसंमतः । एतदभिप्रायेणैव धर्मान्यत्वप्रतिपादनं " कृते तु मानवा धर्माः " इति । " तपः परं कृतयुगे " इत्यादीनां तु प्राधान्यपरत्वमेव । न तु नियमरूपेण परिसंख्यारूपेण वाऽन्यधर्मनिरासे तात्पर्यम् । " त्यजेद्देशं कृतयुगे " इत्यादीनामपि पापसामर्थ्यसंकोचनिदर्शकत्वमिति ज्ञेयम् । एतच्च प्रायश्चित्तप्रकरणे स्पष्टं विवेचयिष्यामः । यत्तु—

प्रतिमन्वन्तरं चषा श्रुतिरन्या विधीयते ।

इति वायवीयम्

युगेष्वावर्तमानेषु धर्मोऽप्यावर्तते पुनः ।
धर्मेष्वावर्तमानेषु लोकोऽप्यावर्तते पुनः ॥

इत्याश्वमेधिकं च वाक्यम् । तयोश्चायमेवाभिप्रायो यत्स्वभावधर्मानुसारेण सर्वेषामपि सात्त्विकराजसतामसादिधर्माणां वेदोपदिष्टत्वेऽपि तत्तद्युगस्वभावसामर्थ्यानुसारेण तत्तद्धर्मविधायकानां चोदनावाक्यानामेव तत्र तत्र श्रुतित्वेनाऽऽदरः । इतरेषां तु तत्त्वेनानादर इत्येव वेदान्यत्वं धर्मान्यत्वं च, न स्वरूपतः । अत एव कलियुगं पुरस्कृत्य प्रवर्तितायां पराशरस्मृतावेव प्रारम्भे—

न कश्चिद्वेदकर्तास्ति वेदं स्मृत्वा चतुर्मुखः ।
तथैव धर्मान् स्मरति मनुः कल्पान्तरान्तरे ॥ प. २१ ॥

इतिश्रुतेः पुरुषप्रणीतत्वनिरासो विहितः । एतस्मादेवेदमपि बोध्यते यद्ब्रह्मणोऽपि स्मृतिकर्तृत्वं तदुपदेशाच्च मन्वादीनामिति । समुपलभ्यन्ते च खलु बहूनि वचनानि पितामहस्मृतित्वेन । श्रुतिरपि—

यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

इति । यद्यप्युपरितनानां सर्वेषां वाक्यानामर्थवादत्वम् । तथापि " वायुर्वै क्षेपिष्ठा देवता " इत्यादिवद्वा " अग्निर्हिमस्य भेषजम् " इत्यादिवद्वा भूतार्थवादत्वेन स्वार्थे प्रामाण्याभ्युपगमात् " भावि कथनमपि स्वनादिकालप्रवृत्तयुगस्वभावधर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण वेद-

मूलम् " इति स्मृत्यधिकरणगतवार्तिकवाक्यात् " इयं स्मृतिरस्मिन्युगे आदतव्या " इति विधि-
गमकत्वेन प्रामाण्यमप्रतिहतमेव तेषाम् । संदिग्धे च वाक्यशेषादिति न्यायात् । तत्सिद्धं न्यायसि-
द्धानुवादकत्वात्कलिवर्ज्यप्रकरणस्यापि प्रामाण्यम् । तदेवं श्रुतिस्मृतिसदाचारन्यामूलकवचनात्मतु-
ष्टिसम्यक्संकल्पजकामानां धर्माधर्मयोः प्रामाण्यमिति सिद्धे तेषां बलाबलविचारोऽपि परस्परविरोधे
कर्तव्यः । स चाऽऽकरे कृतोऽपि न्यूनतापरिहाराय किंचिदिव प्रदर्श्यते ।

## ( प्रमाणबलाबलविचारः )

अत्र वीरमित्रोदये परिभाषाप्रकरणे यथा—अथैतेषां विरोधे बलाबलम् । तत्र श्रुत्योर्विरोधेऽ-
गृह्यमाणविशेषत्वाद्द्वयोरपि तुल्यबलत्वम् । अनुष्ठाने परं विकल्पः । यथा षोडशिग्रहणाग्रहणादौ ।
एवं स्मृत्योराचारयोरपि विरोधे द्रष्टव्यं तुल्यन्यायत्वात् । श्रुतिस्मृत्योर्विरोधे तु श्रुतिर्बलीयसी निर-
पेक्षत्वात् । स्मृतेस्तु मूलभूतवेदानुमानसापेक्षत्वेन विलम्बितत्वाद्दुर्बलत्वम् । यथा औदुम्बरीं स्पृष्ट्वो
द्गायेदौदुम्बरी सर्वा वेष्टयितव्येति । स्मृत्याचारयोर्विरोधे स्मृतिर्बलीयसी । स्मृतेः साक्षाच्छ्रुत्यनुमाप-
कत्वात् । आचारस्तु स्मृतिद्वारा तदनुमापकत्वाद्दुर्बलः । यथा सूर्याविदे वधूवस्त्रं दद्यादिति स्मृत्या
चतुर्थेऽहनि वधूवस्त्रपरिधानाद्याचारो विरुद्धः । सूर्यास्तद्देवत्या ऋचः । तथा मातुलकन्यापरिणयनं
मातुलस्य सुतामूढ्वेति स्मृतिविरुद्धम् ।

श्रुत्यादीनां विशेषग्रहणे बाध्यबाधकभाव उच्यते । तथाहि—संदिग्धमसंदिग्धेन बाध्यते ।
यथा अक्ताः शर्करा इति तेजो वै घृतमित्यनेन । दुर्बलाश्रयं बलवदाश्रयेण । यथा वेदं कृत्वा वेदिं
कुर्यादिति दुर्बलक्रमाश्रयं बलवत्पदार्थाश्रयेण, क्षुत आचामेदिति क्षुतादिनिमित्ताचमनेन ॥ उपसंहार-
स्थमुपक्रमस्थेन । यथा " उच्चैर्ऋचा क्रियते " इत्युपसंहारस्थमृक्पदं " त्रयो वेदा अजायन्त "
इत्युपक्रमस्थवेदपदेन । बहुबाधोऽल्पबाधेन। यथा " यावन्तोऽश्वान् प्रतिगृह्णीयात् " इत्यत्र प्रतिग्रहीतु-
रिष्टिश्चेत् " प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्च्छत् " इति वाक्ये वरुणायेति चतुर्थी
पञ्चम्यर्थे नयतिर्गृह्णात्यर्थे देवतापदं चाविवक्षितार्थमिति बहुबाधो दातुरिष्टौ गृह्णातिरेको दानलक्ष-
णार्थ इत्यल्पबाधेन बाध्यते । वेदान्तरोत्पन्नं वेदान्तरविहितेन । यथा सामवेदोत्पन्नं वारवन्तीया
श्रयमुच्चैस्त्वं " उपांशु यजुषा " इति विनियोजकयजुर्वेदस्वरेणोपांशुत्वेन । परशाखाविहितमग्नी-
षोमीयादेर्द्वादशकपालत्वादि स्वशाखाविहितेनैकादशकपालत्वादिना । नित्यं " पञ्चदश सामिधेनी-
रनुब्रूयात् " इति पाञ्चदश्यं नैमित्तिकेन " सप्तदश वैश्यस्य " इति साप्तदश्येन । द्विविधमप्येतत्
क्रत्वर्थं चेत् पुरुषार्थेन " एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य " इत्याद्येकविंशतित्वादिना । अनार-
भ्याधीतं सप्तदश सामिधेनीरनुब्रूयादिति साप्तदश्यं प्राकरणिकेन पाञ्चदश्येन यद्युद्गाताऽपच्छिन्द्या-
ददक्षिणेन यजेत यदि प्रतिहर्ता सर्वस्वदक्षिणेनेत्यदाक्षिण्यसर्वस्वदाक्षिण्ययोर्निमित्तक्रमेण

पौर्वापर्यप्राप्तौ परेण पूर्वस्य बाधः । कुशमयं बर्हिर्भवतीत्यतिदेशप्राप्तं शरमयं बर्हिर्भवतीति वैकृतेन । औद्गात्रसमाख्याते श्येनेऽतिदेशप्राप्तेषु प्राकृतेष्वङ्गेषु प्रयोगवचनात्प्राप्तमुद्गातृमात्रकर्तृकत्वं चोदकाश्रयेण नानर्त्विक्कर्तृकत्वेन । ब्राह्मणक्रमावगतमाग्नेयस्याग्नीषोमीयोत्तरत्वं मन्त्रक्रमावगतेनाग्नीषोमीयात्पूर्वत्वेन बाध्यते । आहवनीये जुहोतीति होमसामान्ये विहित आहवनीयः पदे जुहोतीति होमविशेषविहितेन पदेन । यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति यत्किंचिदिति सर्वनाम्ना सावकाशेन दीक्षणीयादावपि प्रथितमुपांशुत्वं यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयादिति निरवकाशेन दीक्षणीयामात्रे विहितेनोच्चैस्त्वेन । एवं स्मृतिष्वपि । नाऽऽत्मानं घातयेत्प्राज्ञ इत्याद्याप्तमन्वादिस्मृत्या केदारे पातयेद्देहमित्याद्यनाप्तपाखण्डस्मृतिर्बाध्यते । तथा भार्याश्रवतस्रो विप्रस्येत्याप्तस्मृतिरपि " यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः । नैतन्मम मतम् " इति याज्ञवल्क्याद्यविगीतस्मृतिभिर्विगीता । तथा न जातु ब्राह्मणं हन्यादित्यदृष्टार्थया जिघांसन्तं जिघांसीयादित्यात्मरक्षणादिदृष्टार्था । तथा पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राज्ञे निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा प्रतिगृह्णीयात्, इति होमादीतिकर्तव्यताविषयत्वात् श्रुतिप्रभवया " न शेषो अग्ने अन्यजातमस्ति " इत्यादेः । शेषोऽपत्यनाम । अपत्यमन्योत्पादितं नास्तीत्यभिधायित्वेन दत्तपुत्रनिषेधलिङ्गत्वात्तत्प्रभवा—

वीजिनो यस्य ये जातास्तस्य ते नेतरस्य तु ।

इत्याद्या । तथा " तथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाऽर्हति उक्षाणं वा वेहन्तं वा क्षदन्ते " इति मन्थनार्थवादप्रभवा " महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् " इत्याद्या " मा गामनागामदितिं वधिष्ट " इति विधिश्रुतिप्रभवया " गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् । नो निन्दाताडने कुर्यात् " इत्याद्यया । एवमाचारेष्वपि । अभियुक्ततराणामार्याणां पील्वादिशब्दस्य वृक्षविशेषे प्रयोगाचारेण म्लेच्छानां हस्त्यादौ प्रयोगाचारो बाध्यते । आचारात्मतुष्टिसम्यक्संकल्पजकामानां पूर्वपूर्वबलीयस्त्वमिति मिताक्षरायाम् । कचिद्दुर्बलेनापि बलवतो बाधः । यथा सौत्रामण्यां सुराग्रहान् गृह्णातीति प्रत्यक्षश्रुतेरपि—

' कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः ' ।

इति स्मृत्या । अन्यथाऽऽनर्थक्यापत्तेः । मनुविरुद्धा स्मृतिरप्रमाणमित्याह बृहस्पतिः—

वेदार्थोपनिबन्धृत्वात्प्राधान्यं हि मनोः स्मृतम् ।
मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥ इति ॥

कल्पतरावप्येवम् । गौतमः—देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम् । आम्नायैर्वेदस्मृतिपुराणैः । देशाद्याचाराणां बलवत्प्रमाणविरुद्धानामपि

" आनर्थक्यप्रतिहतानां विपरीतं बलाबलम् "

इति न्यायेन बलवत्त्वे प्राप्ते इदमुच्यते ।-एते देशादिधर्मा आम्नायविरुद्धा नैव प्रमाणम् । किंतु प्रमाणाभासा वामागमवदित्यर्थः । इति ।

अत्र च कलिवर्ज्यप्रकरणस्य स्मृतित्वेन वर्णनम्, तस्य च निरवकाशत्वेन प्रत्यक्षश्रुतिबाधकत्वनं च स्वमतानुसारेण । अस्मदुपपत्तिस्तु प्रागेवोक्ता । यथा ह्याचाराणां स्मृत्याद्यनुमापकत्वेन प्रामाण्यं न स्वातन्त्र्येण । अतश्चाऽऽम्नायविरुद्धानां तेषामप्रामाण्यमेव । न निरवकाशत्वेन श्रुतिबाधकत्वम् । तथैव धर्मज्ञसमयस्यापि निर्मूलप्रामाण्याभावात् मूलानुमानावसरे च प्रत्यक्षश्रुत्या बाधितत्वेन तादृशानुमानप्रसरासंभवान्न श्रुतिबाधकत्वं युक्तमुत्पश्यामः । कलिवर्ज्यप्रकरणं च धर्मज्ञसमय इति पूर्वमेव निगदितम् । अतस्तत्प्रामाण्यार्थं पूर्वोक्तोपपत्तिरेव ज्यायसी । अन्यथा आनर्थक्यप्रतिहतानामिति न्याय आचारेष्वप्यापतेत् । अन्यत्सर्वं नातिरोहितम् ।

मीमांसाबालप्रकाशे तु प्राप्ताप्राप्तभेदेन बाधं द्विधा विभज्य पञ्चाधिकशतं प्राप्तबाधभेदाः, एकोनपञ्चाधिकं शतपञ्चकं चाप्राप्तबाधभेदा निर्दिष्टास्ते तत एवावगन्तव्याः । विस्तरभयादनावश्यकत्वाच्च नात्र निर्दिश्यन्ते । एवं च कलिवर्ज्यप्रकरणमिदं तत्तद्विषयानुसारेण यथाकथंचित् तत्तद्बाधन्यायैः स्मृतिपरमप्युन्नेतुं शक्यमिति सुधीभिरूह्यम् ।

एवं च सर्वेषामपि प्रमाणानां मूलभूतश्रुतिसापेक्षत्वात् तत्तत्क्रियाणां वेदबोधितेतिकर्तव्यताकत्वेनालौकिकेष्टसाधनत्वं सिद्ध्यति । निषिद्धानां च वेदबोधितनिषेधविषयत्वादेवालौकिकानिष्टसाधनत्वसिद्धिरिति सिद्धं समस्तस्यापि धार्मिकवाङ्मयस्य धर्माधर्मपरत्वम् । तदेव सिद्धे धर्माधर्मप्रामाण्येऽर्थकामरूपपुरुषार्थसाधनत्वाभावेन तस्य व्यवहारेऽकिंचित्करत्वमेव स्यात् । विशेषतः स्वरधर्मिण्यस्मिन् कलियुगे । अत एवाऽऽधुनिकानामयमभिनिवेशो यद्धर्मस्यार्थकामरूपपुरुषार्थोद्देश्यकत्वात् तयोश्चार्थकामयोर्दण्डनीत्यनुसारेण लाभालाभसंभवेन परिवर्तनशालित्वात्तदुपायभूतधर्मस्यापि परिवर्तनार्हत्वमिति । न हि कार्तयुगीनपुरुषार्थमुद्दिश्य विहितयोर्धर्माधर्मयोरिदानीं कलियुगेऽन्नमयप्राणेऽनुष्ठानसंभवः । अतश्च कालेयार्थकामरूपपुरुषार्थोपयोगित्वेन तयोः परिवर्तनमत्यावश्यकम् । तच्च दण्डनीत्यनुसारेण । अत एवोक्तम्—

> यश्च कार्तयुगो धर्मो न कर्तव्यः कलौ युगे ।
> पापप्रसक्ताश्च यतः कलौ नार्यो नरास्तथा ॥
> न विद्वत्ता न शुद्धोऽर्थो न शुद्धिर्मनसः कलौ ।
> यतोऽतः सत्यमेवैकं नराणामुपकारकम् ॥

इति स्मृतिचन्द्रिकायामादिपुराणे । अत एव सन्निपत्योपकारकधर्महेतुषु कालस्य परिगणनम्

> देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ।
> पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥

इति याज्ञवल्क्यस्मृतौ । शङ्खलिखितावपि

तत्र धर्मलक्षणानि देशः काल उपायो द्रव्यं श्रद्धा पात्रं त्याग इति समस्तेषु धर्मोदयः साधारणोऽन्यथा विपरीतः । श्रद्धापात्रसंपन्नो धर्मः कालापेक्षः । श्रद्धाद्रव्योत्पत्तिरिति कालस्तन्मूलो देश इति ।

अत्र यद्यपि श्रद्धाद्रव्योत्पत्तिर्यदा, स एव धर्मकाल इत्युक्तम् । तथापि कालः संक्रान्त्यादिरिति मिताक्षरावीरमित्रोदयादिनिबन्धव्याख्यानात् यस्य कर्मणो यः कालो विहितः, स एवात्र कालपदेन संगृह्यते । तथा च कार्तयुगधर्माणां कलिकाले प्रसक्त्यभावादिदानीमेतद्युगानुसारेण धर्मप्रणयनं वा धर्मपरिवर्तनं वाऽत्यावश्यकम् । न च पराशरस्मृतेः कलियुगैकविषयत्वात् तदुक्तधर्मानुष्ठाने का हानिः, किमर्थं च धर्मपरिवर्तनमिति वाच्यम् । पराशरेण दण्डनीतेरनुक्तत्वात्तस्याश्चेदानीं विप्लवाद्बाह्यायत्तत्वाच्च तदुपसंग्रहाय तदनुरोधिधर्मप्रणयनस्याऽऽवश्यकत्वात् । एतन्मूलका एव "सोशिआलिझम्, कम्युनिझम्" इत्यादयः सामाजिका वादाः । अतश्चार्थकामदृष्ट्याऽपि धर्माधर्मपर्यालोचनस्याऽवश्यकता । किं बहुना तदर्थमेवैतत्कार्योपक्रमः पञ्चत्रिंशद्वर्षेभ्यः प्राक् समारब्धः । फलं चास्य यथा भविष्यति तथा भवतु नाम । परं त्वारब्धस्यान्तगमनमिति न्यायेन "नमः पतन्त्यात्मसमं पतत्रिणः" इति व्यासोक्त्यनुसारेण यथाबुद्धिविभवमेतद्वादस्य पर्यालोचनमवश्यमेव विधेयमित्युत्तरार्धः प्रारभ्यते । परमतपर्यालोचनं विना स्वपक्षस्थापनं तु न कदापि संभवति । अतस्तदुपक्रम्यते ।

वसुऋतुवसुभूमिते हि शाके
शनिवारेऽसितपक्षकार्तिके च ।
विधुभानुसमागमे समाप्ता
कृतिरेषा किल देवकृष्णजन्मा ॥ १ ॥
दोषाः सन्ति न सन्तीति विदुषां बोधयेत कः ।
स्वयं विमृश्य सुधियो विचिन्वन्तु गुणागुणान् ॥ २ ॥
चक्षुर्विषयतातीतोऽप्यतर्क्यो बुद्धियोजकः
प्रीयतां जानकीजानिरनया विश्वभृद्विभुः ॥ ३ ॥

इति पण्डितोपाह्वकेशवसूनुदेवकृष्णशर्मणा विरचिते
धर्मादर्शे प्रमाणप्रतिबिम्बः ॥

---

॥ श्रीः ॥

# ॥ धर्मादर्शः ॥

## तत्र नीतिप्रातिबिम्बः (२)

यत्कृपालेशमात्रेण नरायन्ते च वानराः ।
सुरायन्ते नरास्तं हि सीतारामुपास्महे ॥

### उपोद्घातः

तदेवं सिद्धे किल धर्माधर्मस्वरूपप्रमाणविचारे तदनुष्ठानं कथं वा प्रवर्तेतेति विचारोऽप्यावश्यक इति तदर्थं प्रवृत्तौ प्रथमत एव दण्डविचारः समापतति । न हि दण्डमन्तरा कोऽपि कथमपि शुद्धधर्माचरणे प्रवर्तयितुमधर्माचरणाद्वा निवर्तयितु शक्यः । यदि स्वभावत एव प्रवृत्तिनिवृत्ती तथा स्याताम्, तर्हि तु क्षत्रियोत्पत्तिस्तत्कर्तव्यानि च न धर्मशास्त्रेषूपनिबध्नीयुः, उपनिबद्धानि च दृश्यन्ते तत्र तत्र । अतो धर्माधर्मपरिपालनं विना दण्डं दण्डधारिणं च न भवतीति तच्चिन्ता कर्तव्यतया समापतति । उक्तं च मनुना—

" सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ।
दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ ७।२२
देवदानवगन्धर्वा रक्षांसि पतगोरगाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥ ७।२३
यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ ७।२५ इति ।

किं बहुना समाजस्थितिहेतूनामान्वीक्षिकी–त्रयी–वार्ता–दण्डनीतीनां दण्डनीतिरेव सर्वविद्याप्रचारकत्वेन सर्वविद्याधिष्ठातृत्वाज्ज्यायसीति नातिरोहितं विचक्षणानाम् । तदुक्तम्—

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।
विद्या ह्येताश्चतस्रस्तु लोकसंस्थितिहेतवः ॥

आन्वीक्षिकी त्रयी वार्ता सतीर्विद्याः प्रचक्षते ।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ॥
दण्डनीतिर्यदा सम्यङ्नेतारमधितिष्ठति ।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते ॥ इति कामन्दकः ।

कौटिलीयार्थशास्त्रे त्वत एव "दण्डनीतिरेकैव विद्या इत्यौशनसाः । तस्यां हि सर्वविद्यारम्भाः प्रतिबद्धाः" इति सर्वविद्याधिष्ठातृत्वं दण्डनीतेरौशनससमतमिति प्रतिपादितम् । यद्यपि कौटिल्यमतेन चतस्र एव विद्याः । तथापि लोकयात्राया दण्डनीतिमात्रायत्तत्त्वं च तस्यापि संमतमेव । अत एव "आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः । तस्य नीतिर्दण्डनीतिः । अलब्धलाभार्था लब्धपरिरक्षणी रक्षितविवर्धनी वृद्धस्य तीर्थेषु प्रतिपादनी च । तस्यामायत्तालोकयात्रा" इति वार्तादण्डनीतिस्थापनायां चतुर्थेऽध्याये तेनोक्तम् ।

मनुरपि—

अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥ ७।३

इति राजोत्पत्तिप्रयोजनमभिधाय—

तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥ ७।१४

इति राजकार्यसिद्ध्यर्थं दण्डोत्पत्तिमभिदधाति। अर्थात्सर्वाभिरक्षणस्य दण्डायत्तत्वात्तदभावे च तदभावाच्छास्त्रप्रमितयोरपि धर्माधर्मयोरधीतिबोधाचरणप्रचारणानि दण्डायत्तान्येव । अतश्च दण्डनीत्यनुसारेणापि धर्माधर्मविचारः कर्तव्य इति सिध्यति । दण्डनीतेश्च धर्माधर्मविषये प्रामाण्यं तु शिष्टाकोपाधिकरणे "न शास्त्रपरिमाणत्वात्" इत्यस्मिन्सूत्रे शास्त्रपरिगणनायां दण्डनीतेरुपादानात् भट्टपादाभिमतमेवेति पुरस्तादेव प्रतिपादितम् । अतस्तदनुसारेणापि विचारो न प्रमाणपदवीमतिक्रामति ।

( दण्डनीतेः प्रामाण्यविचारः )

ननु न दण्डनीतेर्धर्माधर्मविषये प्रामाण्यम् । तथाहि प्रमाणं हि प्रमाकरणम्, प्रमा च यथार्थज्ञानम्, तथा च अर्थयाथात्म्यज्ञानजनकत्वमेव हि प्रमाणानां प्रामाण्यम् । न च तद्दण्डनीतौ संभवति । न हि द्रव्यक्रियागुणादीनां स्वरूपतो धर्माधर्मत्वे, किंतु श्रेयःसाधनत्वेन न ताद्रूप्येण ज्ञानजनकता दण्डनीतेः । किंतु सर्वसिद्धस्य ताद्रूप्यस्यानुष्ठापनमेव किल दण्डनीतेर्विषयः । एवं च दण्डनीतेर्धर्माधर्मप्रवृत्तिनिवृत्तिहेतुत्वेऽपि न स्वरूपतस्तन्निर्णायकत्वमिति कथं वा धर्माधर्मयोः प्रामाण्यं दण्डनीतेः

स्यात्। अत एव कौटिलीयार्थशास्त्रे विद्याचतुष्टयस्य विषयविवेके—"चतस्र एव विद्या इति कौटिल्यः। ताभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम् ।सांख्यं योगो लौकायतिकं चेति आन्वीक्षिकी । धर्माधर्मौ त्रय्याम् । अर्थानर्थौ वार्तायाम्, नयानयौ दण्डनीत्याम्। बलाबले चैतासां हेतुभिरन्वीक्षमाणा आन्वीक्षिकी लोकस्योपकरोति व्यसनेऽभ्युदये च बुद्धिमवस्थापयति प्रज्ञावाक्यक्रियावैशारद्यं च करोति ।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥ इति ।

त्रय्यास्तावद्धर्माधर्मप्रमापकत्वम्। वार्ताया अर्थानर्थप्रमापकत्वम् । दण्डनीतेर्नयानयप्रमापकत्वम् । आन्वीक्षिक्यास्त्वेतासां बलाबलपरीक्षकत्वमुक्तम् । एतेन नयानययोर्धर्मातिरिक्तकत्वमपि गम्यते । यदि हि धर्माधर्मविव नयानयौ न तदतिरिक्तौ, तदा विद्यानां चातुर्विध्यस्य व्याकोपः, विषयविवेकवैयर्थ्यं चाऽऽपद्येत । तस्मान्नयानययोर्धर्माधर्मातिरिक्तत्वात् तद्विषयकत्वाच्च दण्डनीतेर्न धर्माधर्मप्रमापकत्वम् । मनुरपि—

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्
आन्वीक्षिकीं चाऽऽत्मविद्यां वार्तारम्भांश्च लोकतः ॥ ७।४३

इति विद्याचतुष्टयं प्रदर्शयन्निममेव सिद्धान्तमभिप्रैति । अयमभिप्रायः—आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डस्तस्य नीतिर्दण्डनीतिरिरितिकौटिल्यवचनात् धर्मार्थकामरूपत्रिवर्गसाधनं दण्डनीतिरिरिति गम्यते । एवं च धर्मार्थकामाना परस्परानुबन्धित्वेनानुष्ठापनमेव परमं प्रयोजनं दण्डनीतेरिरिति सिध्यति न केवल धर्मानुष्ठापनम् । एवं च यथा द्रव्यकर्मगुणादीनामैन्द्रियकत्वेऽपि श्रेयःसाधनत्वं त्रय्या निश्चीयते तथैव धर्माधर्मयोस्त्रय्या निश्चितत्त्वेऽपि अर्थकामानुबन्धित्वं दण्डनीत्या प्रमाप्यते । तद्विना तदनुष्ठापनासंभवात् । एवं च श्रेयःसाधनत्वेन निश्चितयोरपि धर्माधर्मयोर्यावदर्थकामानुबन्धित्वं न निश्चीयते, न तावत्तेषामनुष्ठानं श्रेयस्करमिति ताद्रूप्येण प्रमापकत्वाद्दण्डनीतेर्न धर्माधर्मप्रमाकत्वम् । किंतु त्रिवर्गप्रमापकत्वमेव । तत्र त्रय्या धर्मप्रमापकत्वेनावशिष्टार्थकामप्रमापकत्वमेव दण्डनीतेरिरिति न तस्या धर्माधर्मयोः प्रामाण्यम्। तत्रापि कामस्य भोगरूपस्य पुरुषायत्तत्त्वात्केवलमर्थविषयकत्वमवे दण्डनीतेः सिध्यति । अत एवार्थशास्त्रापरनामेयं दण्डनीतिः । अत एव, मनुरपि—

धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥ २।२२४

इति धर्मार्थकामेषु श्रेयस्त्वेन विप्रतिपत्ति प्रदर्श्य त्रिवर्गस्य श्रेयस्त्वं सिद्धान्तयित्वा तत्रार्थप्राप्त्युपायं दण्डमाह—

अलब्धं चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः ।
रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत् ॥
एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम् ।
अस्य नित्यमनुष्ठानं सम्यक्कुर्यादतन्द्रितः ॥
अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया ।
रक्षितं वर्धयेद् वृद्ध्या वृद्धं पात्रेषु निक्षिपेत् ॥ ७।९९–१०१ इति ।

वात्स्यायनीयकामशास्त्रेऽपि—

"त्रिवर्गप्रतिपत्तिफलं शास्त्रम् । तस्मिन्नप्रतिपत्तौ विप्रतिपत्तौ वा तदुपायपर्येषणमपि युक्तम् । तस्माच्छास्त्रसंग्रहादनन्तरं त्रिवर्गप्रतिपत्तिरुच्यते इति प्रकरणसंबन्धः । उद्देशापेक्षया च संबन्धित्वे कथमुद्देश इति चिन्त्यम् । प्रतिपत्तिस्त्रिविधा । अनुष्ठानमवबोधः संप्रतिपत्तिश्चेति । तत्र प्राधान्यादनुष्ठानमधिकृत्याऽऽह–शतायुर्वै पुरुषो विभज्य कालमन्योन्यानुबद्धं परस्परानुपघातकं त्रिवर्गं सेवेत ॥ १ ॥ ( अ. २ )

शतायुरिति । शतमायुरस्येति शतायुः । शतशब्दः सामान्यवाच्यपि वर्षगतसंख्यानमाह । वृत्तौ तथार्थस्य विवक्षितत्वात् । कालविभागार्थं चैतत् । अपरिच्छिन्नायुषो विभागासंभवात् । पुरुष इति प्राधान्यख्यापनार्थम् । स्त्रीणां तु पुरुषाधीना त्रिवर्गसेवेत्यस्वातन्त्र्यम् । विभज्य वक्ष्यमाणेन न्यायेन । अन्योन्यानुबद्धमिति । धर्मादीनामन्यतमं द्वाभ्यामेकेन वा अनुबद्धम् । तद्यथा प्रजार्थिनो धर्मपत्न्यामनभिप्रेतायामृतावभिगमनं धर्मोऽर्थानुबद्धः । अप्रजार्थिनोऽभिप्रेतायां पत्न्यामभिगमनं धर्मः कामानुबद्धः । अपरिणीतस्य सवर्णादनभिप्रेतकन्यालाभोऽर्थो धर्मानुबद्धः । परिणीतस्यासमवर्णादभिप्रेतकन्यालाभोऽर्थः कामानुबद्धः । धर्मपत्न्यामभिप्रेतायामृतौ कामो धर्मानुबद्धः । परिणीतस्य निष्किंचनस्य असमवर्णायामर्थवत्यामभिप्रेतायामधिगतायां कामोऽर्थानुबद्धः । इत्येकानुबद्धाः । अपरिणीतस्य सवर्णायामनन्यपूर्वायां अभिप्रेतायां यथाविधि संयोगो धर्मोऽर्थकामानुबद्धः । तस्यैवाभिप्रेतसवर्णकन्यालाभोऽर्थः धर्मकामानुबद्धः । तस्यैवार्थरूपवत्या परस्परोत्कण्ठयोद्वाहितायां कामो धर्मार्थानुबद्धः । इति द्व्यनुबद्धाः । परस्परस्यानुपघातकमिति । यत्रानुबन्धो नास्ति तत्रैकमितरयोरनुपघातकम् । एकानुबन्धे चान्यस्यानुपघातकं सेवेत । अत्रोदाहरणं वक्ष्याम इति । अनेन च वात्स्यायनकामसूत्रव्याख्यानेन सुविशदं इदमवगम्यते यद्धर्मार्थकामानामेव श्रेयस्त्वं न धर्ममात्रस्यार्थमात्रस्य वा । तत्र च परस्परानुबन्धस्थलेषु धर्मशास्त्रदृष्ट्यैव धर्मविनिर्णयो नार्थशास्त्रदृष्ट्या वा कामशास्त्रदृष्ट्या वेति कथं दण्डनीत्यर्थयोः प्राधान्यम् !

न च धर्मस्यार्थशास्त्रसापेक्षत्वात् तस्य च दण्डनीतिसापेक्षत्वात् परम्परया दण्डनीतिसापेक्षत्वेन धर्मस्य च तदपेक्षत्वमिति वाच्यम् । अर्थस्यापि धर्मशास्त्रनिर्दिष्टमार्गेण धर्मसापेक्षत्वात्, अर्थशा-

स्वाधानममितित्वे तु अर्थस्य कदाचिदनर्थत्वप्रसङ्गात् । परस्परसापेक्षे तु धर्मार्थनिर्णये अन्योन्याश्रयत्वेन निर्णयासंभवात् । अत एव तत्तच्छास्त्रविषयविवेकः । एवं च पूर्वोक्तरीत्या त्रय्या धर्मे निश्चिते तदनुरोधेनार्थशास्त्रादर्थः, कामशास्त्राच्च कामो निश्चेतव्यस्तदनुबद्ध इति नैव दण्डनीतेः कामशास्त्रस्य वा प्रामाण्यं संभवति धर्माधर्मयोः सत्यपि त्रिवर्गस्य श्रेयस्त्वे । इति चेदत्र ब्रूमः । सत्यं न धर्माधर्मयोः क्रियारूपयोः स्वरूपतो निर्णायकत्वं दण्डनीतेः कामशास्त्रस्य वा, तथापि क्रियाणां स्वरूपतो धर्माधर्मत्वाभावात् श्रेयःसाधनत्वेनैव तत्त्वस्य भट्टपादैरुक्तत्वात् त्रिवर्गस्य च श्रेयोरूपत्वात् अर्थकामानुबन्धाभावे च श्रेयस्त्वव्याघातप्रसङ्गात् तादृशानुबन्धपर्यालोचनायां च दण्डनीतेः कामशास्त्रस्यावश्यमेवोपादेयत्वात् तद्रूप्येण धर्माधर्मप्रमाकत्वं तु दण्डनीतेरेवेति संभवति प्रामाण्यं दण्डनीतेरपि धर्माधर्मयोः । अयमत्राभिप्रायः—यत्तत्तच्छास्त्रेण तत्तद्विषयकप्रमायां न शास्त्रान्तरापेक्षा । शुद्धस्वरूपस्य तत्तच्छास्त्रेणैव निर्णयात् । एवमपि श्रेयस्त्वनिर्णयस्तु धर्मार्थकामानां परस्परानुबन्धाधीन इति तेन रूपेण प्रमायां तु परस्परशास्त्राविरोधसंपादनमावश्यकमित्यस्त्येव धर्माधर्मप्रमापकत्वं दण्डनीतेरर्थशास्त्रस्य कामशास्त्रस्य च । किंच यदा न परस्परानुबन्धः शक्यः, तदा तु परस्परानुपघातकत्वं त्ववश्यमेव पर्यालोचनीयमिति तदर्थमपि दण्डनीतिकामशास्त्रयोः प्रामाण्यमङ्गीकरणीयमकामेनापि ।

किंच प्रजापालनमेव राज्ञः परमो धर्म इति नातिरोहितम् । तच्च राष्ट्रस्य त्रिवर्गसंपादनेनैव भवतीति राष्ट्रीयत्रिवर्गनिश्चयार्थमपि दण्डनीतेः प्रामाण्यमङ्गीकर्तव्यम् । न हि दण्डनीतिमन्तरा तन्निश्चयः, तस्य चान्योन्यमनुपघातनिश्चयश्च संभवति । एतत्सर्वमभिप्रेत्यैवोक्तम्—महाभारते वनपर्वणि अध्याये ३३—

याज्ञसेन्या वचः श्रुत्वा भीमसेनो ह्यमर्षणः ।<br>
निश्वसन्नुपसंगम्य क्रुद्धो राजानमब्रवीत् ॥१॥<br>
राज्यस्य पदवीं धर्म्यां व्रज सत्पुरुषोचिताम् ।<br>
धर्मकामार्थहीनानां किं नो वस्तुं तपोवने ॥२॥<br>
नैव धर्मेण तद्राज्यं नाऽऽर्जवेन न चौजसा ।<br>
अक्षकूटमधिष्ठाय हृतं दुर्योधनेन वै ॥३॥<br>
गोमायुनेव सिंहानां दुर्बलेन बलीयसाम् ।<br>
आमिषं विघसाशेन तद्वद्राज्यं हि नो हृतम् ॥४॥<br>
धर्मलेशप्रतिच्छन्नः प्रभवं धर्मकामयोः ।<br>
अर्थमुत्सृज्य किं राजन् दुःखेषु परितप्यसे ॥५॥<br>
भवतोऽनवधानेन राज्यं नः पश्यतां हृतम् ।<br>
अहार्यमपि शक्रेण गुप्तं गाण्डीवधन्वना ॥६॥

कुणीनामिव बिल्वानि पङ्गूनामिव धेनवः ।
हृतमैश्वर्यमस्माकं जीवतां भवतः कृते ॥७॥
भवतः प्रियमित्येवं महद्व्यसनमीदृशम् ।
धर्मकामे प्रतीतस्य प्रतिपन्नाः स्म भारत ॥८॥
कर्षयामः स्वमित्राणि नन्दयामश्च शात्रवान् ।
आत्मानं भवतां शास्त्रैर्नियम्य भरतर्षभ ॥९॥
यद्वयं न तदैवतान् धार्तराष्ट्रान्निहन्महि ।
भवतः शास्त्रमादाय तन्नस्तपति दुष्कृतम् ॥१०॥
अथैनामन्ववेक्षस्व मृगचर्यामिवाऽऽत्मनः ।
दुर्बलाचरितां राजन् अबलस्थैर्निषेविताम् ॥११॥
यान्न कृष्णो न बीभत्सुर्नाभिमन्युर्न सृंजयाः ।
न चाहमभिनन्दामि न च माद्रीसुतावुभौ ॥१२॥
भवान् धर्मो धर्म इति सततं व्रतकर्शितः ।
कच्चिद्राजन्न निर्वेदादापन्नः क्लीवजीविकाम् ॥१३॥
दुर्मनुष्या हि निर्वेदमफलं स्वार्थघातकम् ।
अशक्ताः श्रियमाहर्तुं आत्मनः कुर्वते प्रियम् ॥१४॥
स भवान् दृष्टिमान् शक्तः पश्यन्नस्मासु पौरुषम् ।
आनृशंस्यपरो राजन् नानर्थमवबुध्यसे ॥१५॥
अस्मानमी धार्तराष्ट्राः क्षममाणानलं सतः ।
अशक्तानिव मन्यन्ते तद्दुःखं नाऽऽहवे वधः ॥१६॥
तत्र चेद्युध्यमानानामजिह्ममनिवर्तिनाम् ।
सर्वशो हि वधः श्रेयान्प्रेत्य लोकान् लभेमहि ॥१७॥
अथवा वयमेवैतान्निहत्य भरतर्षभ ।
आददीमहि गां सर्वां तथापि श्रेय एव नः ॥१८॥
सर्वथा कार्यमेतन्नः स्वधर्ममनुतिष्ठताम् ।
काङ्क्षतां विपुलां कीर्तिं वैरं प्रतिचिकीर्षया ॥१९॥
आत्मार्थं युध्यमानानां विदिते कृत्यलक्षणे ।
अन्यैरपि हृते राज्ये प्रशंसैव न गर्हणा ॥२०॥
कर्षणार्थं हि यो धर्मो मित्राणामात्मनस्तथा ।
व्यसनं नाम तद्राजन् न स धर्मः कुधर्म तत् ॥२१॥

सर्वथा धमानित्यं तु पुरुषं धर्मदुर्बलम् ।
त्यजतस्तात धर्मार्थौ प्रेतं दुःखसुखे यथा ॥२२॥
यस्य धर्मो हि धमार्थं क्लेशभाङ्न स पण्डितः ।
न स धर्मस्य वेदार्थं सूर्यस्यान्धः प्रभामिव ॥२३॥
यस्य चाऽऽत्मार्थमेवार्थः स च नार्थस्य कोविदः ।
रक्षेत भृतकोऽरण्ये यथा गास्तादृगेव सः ॥२४॥
अतिवेलं हि योऽर्थार्थी नेतरावनुतिष्ठति ।
स वध्यः सर्वभूतानां ब्रह्महेव जुगुप्सितः ॥२५॥
सततं यश्च कामार्थी नेतरावनुतिष्ठति ।
मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते ॥२६॥
तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम् ।
कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥२७॥
तस्माद्धर्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः ।
प्रकृतिः सा हि कामस्य पावकस्यारणिर्यथा ॥२८॥
सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थपरिग्रहः ।
इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा ॥२९॥
द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते ।
स कामश्चित्तसंकल्पः शरीरं नास्य दृश्यते ॥३०॥
अर्थार्थी पुरुषो राजन् बृहन्तं धर्ममिच्छति ।
अर्थमिच्छति कामार्थी न कामादन्यमिच्छति ॥३१॥
न हि कामेन कामोऽन्यः साध्यते फलमेव तत् ।
उपयोगात्फलस्यैव काष्ठाद्भस्मेव पण्डितैः ॥३२॥
इमाञ्छकुनकान् राजन् हन्ति वैतसिको यथा ।
एतद्रूपमधर्मस्य भूतेषु हि विहिंसता ॥३३॥
कामाल्लोभाच्च धर्मस्य प्रकृतिं यो न पश्यति ।
स वध्यः सर्वभूतानां प्रेत्य चेह च दुर्मतिः ॥३४॥
व्यक्तं ते विदितो राजन् नार्थो द्रव्यपरिग्रहः ।
प्रकृतिं चापि वेत्यास्य विकृतिं चापि भूयसीम् ॥३५॥
तस्य नाशे विनाशे वा जरया मरणेन वा ।
अनर्थ इति मन्यन्ते सोऽयमस्मासु वर्तते ॥३६॥

इन्द्रियाणां च पञ्चानां मनसो हृदयस्य च ।
विषये वर्तमानानां या प्रीतिरुपजायते ॥३७॥
स काम इति मे बुद्धिः कर्मणां फलमुत्तमम् ।
एवमेव पृथग्दृष्ट्वा धर्मार्थौ काममेव च ॥३८॥
न धर्मपर एव स्यान्नचार्थपरमो नरः ।
न कामपरमो व स्यात्सर्वान्सेवेत सर्वदा ॥३९॥
धर्मं पूर्वं धनं मध्ये जघन्ये काममाचरेत् ।
अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥४०॥
कामं पूर्वं धनं मध्ये जघन्ये धर्ममाचरेत् ।
वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥४१॥
धर्मं चार्थं च कामं च यथावद्वदतां वर ।
विभज्य काले कालज्ञः सर्वान् सेवेत पण्डितः ॥४२॥
मोक्षो वा परमं श्रेय एष राजन् सुखार्थिनाम् ।
प्राप्तिं वा बुद्धिमास्थाय सोपायां कुरुनन्दन ॥४३॥
तदाशु क्रियतां राजन् प्राप्तिं वाप्यधिगम्यताम् ।
जीवितं ह्यातुरस्येव दुःखमन्तरवर्तिनः ॥४४॥
विदितश्चैव मे (ते) धर्मः सततं चरितश्च ते ।
जानन्तस्त्वापि शंसन्ति सुहृदः कर्मचोदनाम् ॥४५॥
दानं यज्ञाः सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो राजन् बलवान्प्रेत्य चेह च ॥४६॥
एष नार्थविहीनेन शक्यो राजन्निषेवितुम् ।
अखिलाः पुरुषव्याघ्र गुणाः स्युर्यद्यपीतरे ॥४७॥
धर्ममूलं जगद्राजन् नान्यद्धर्माद्विशिष्यते ।
धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम् ॥४८॥
न चार्थो भैक्ष्यचर्येण नापि क्लैब्येन कर्हिचित् ।
वेत्तुं शक्यः सदा राजन् केवलं धर्मबुद्धिना ॥४९॥
प्रतिषिद्धा हि ते याच्ञा यया सिध्यति वै द्विजः ।
तेजसार्थलिप्सायां यतस्व पुरुषर्षभ ॥५०॥
भैक्ष्यचर्या न विहिता न च विट्शूद्रजीविका ।
क्षत्रियस्य विशेषेण धर्मस्तु बलमौरसम् ॥५१॥

स्वधर्मं प्रतिपद्यस्व जहि शत्रून् समागतान् ।
धार्तराष्ट्रवनं पार्थ मया पार्थेन नाशय ॥५२॥
उदारमेव विद्वांसो धर्मं प्राहुर्मनीषिणः ।
उदारं प्रतिपद्यस्व नावरे स्थातुमर्हसि ॥५३॥
अनुबुध्यस्व राजेन्द्र वेत्थ धर्मान् सनातनान् ।
क्रूरकर्माभिजातोऽसि यस्मादुद्विजते जनः ॥५४॥
प्रजापालनसंभूतं फलं तव न गर्हितम् ।
एष ते विहितो राजन् धात्रा धर्मः सनातनः ॥५५॥
तस्मादपचितः पार्थ लोके हास्यं गमिष्यसि ।
स्वधर्माद्धि मनुष्याणां चलनं न प्रशस्यते ॥५६॥
सक्षात्रं हृदयं कृत्वा त्यक्त्वेदं शिथिलं मनः ।
वीर्यमास्थाय कौरव्य धुरमुद्वह धुर्यवत् ॥५७॥
न हि केवलधर्मात्मा पृथिवीं जातु कश्चन ।
पार्थिवो व्यजयद्राजन् न भूतिं न पुनः श्रियम् ॥५८॥
जिह्वां दत्वा बहूनां हि क्षुद्राणां लुब्धचेतसाम् ।
निकृत्या लभते राज्यमाहारमिव शल्यकः ॥ ५९ ॥
भ्रातरः पूर्वजाताश्च सुसमृद्धाश्च सर्वशः ।
निकृत्या निर्जिता देवैरसुराः पार्थिवर्षभ ॥६०॥
एवं बलवतः सर्वमिति बुद्ध्वा महीपते ।
जहि शत्रून् महाबाहो परां निकृतिमास्थितः ॥६१॥
न ह्यर्जुनसमः कश्चिद्युधि योधो धनुर्धरः ।
भविता वा पुमान् कश्चिन्मत्समो वा गदाधरः ॥६२
सत्त्वेन कुरुते युद्धं राजन् सुबलवानपि ।
न प्रमाणेन नोत्साहात्सत्त्वस्थो भव पाण्डव ॥६३॥
सत्त्वं हि मूलमर्थस्य वितथं यदतोऽन्यथा ।
न तु प्रसक्तं भवति वृक्षच्छायेव हैमनी ॥६४॥
अर्थत्यागोऽपि कार्यः स्यादर्थं श्रेयांसमिच्छता ।
बीजौपम्येन कौन्तेय मा ते भूदत्र संशयः ॥६५॥

अर्थेन तु समोऽनर्थो यत्र लभ्येत नोदयः ।
न तत्र विचणः कार्यः खरकण्डूयनं हि तत् ॥६६॥
एवमेव मनुष्येन्द्र धर्मं त्यक्त्वाल्पकं नरः ।
बृहन्तं धर्ममाप्नोति स बुद्ध इति निश्चितम् ॥६७॥
अमित्रं मित्रसंपन्नं मित्रैर्भिन्दन्ति पण्डिताः ।
भिन्नैर्मित्रैः परित्यक्तं युवानं कुरुते वशम् ॥६८॥
सत्त्वेन कुरुते युद्धं राजन् सुबलवानपि ।
नोद्यमेन न होत्राभिः सर्वाः स्वीकुरुते प्रजाः ॥६९॥
सर्वथा संहतैरेव दुर्बलैर्बलवानपि ।
अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ॥७०॥
यथा राजन् प्रजाः सर्वाः सूर्यः पाति गभस्तिभिः ।
अत्ति चैव तथैव त्वं सदृशः सवितुर्भव ॥७१॥
एतच्चापि तपो राजन् पुराणमिति नः श्रुतम् ।
विधिना पालनं भूमेर्यत्कृतं नः पितामहैः ॥७२॥
न तथा तपसा राजन् लोकान् प्राप्नोति क्षत्रियः ।
यथा सृष्टेन युद्धेन विजयेनेतरेण वा ॥७३॥
अपेयात्किल भाः सूर्याल्लक्ष्मीश्चन्द्रमसस्तथा ।
इति लोको व्यवसितो दृष्ट्वेमां भवतो व्यथाम् ॥७४॥
भवतश्च प्रशंसाभिर्निन्दाभिरितरस्य च ।
कथायुक्ताः परिषदः पृथक् राजन् समागताः ॥७५॥
इदमभ्यधिकं राजन् ब्राह्मणाः कुरवश्च ते ।
समेताः कथयन्तीह मुदिताः सत्यसंधताम् ॥७६॥
यन्न मोहान्न कार्पण्यान्न लोभान्न भयादपि ।
अनृतं किंचिदुक्तं ते न कामान्नार्थकारणात् ॥७७॥
यदेनः कुरुते किंचिद्राजा भूमिमवाप्नुवन् ।
सर्वं तन्नुदते पश्चाद्यज्ञैर्विपुलदक्षिणैः ॥७८॥
ब्राह्मणेभ्यो ददद्ग्रामान् गाश्च राजन् सहस्रशः ।
मुच्यते सर्वपापेभ्यस्तमोभ्य इव चन्द्रमाः ॥७९॥
पौरजानपदाः सर्वे प्रायशः कुरुनन्दन ।
सवृद्धबालसहिताः शंसन्ति त्वां युधिष्ठिर ॥८०॥

श्वदृतौ क्षीरमासक्तं ब्रह्म वा वृषले यथा ।
सत्यं स्तेने बलं नार्यां राज्यं दुर्योधने तथा ॥८१॥
इति लोके निर्वचनं पुरश्चरति भारत ।
अपि चैताः स्त्रियो बालाः स्वाध्यायमधिकुर्वते ॥८२॥
इमामवस्थां न गते सहास्माभिररिंदम ।
हन्त नष्टाः स्म सर्वे वै भवतोपद्रवे सति ॥८३॥
स भवान् रथमास्थाय सर्वोपकरणान्वितम् ।
त्वरमाणोऽभिनिर्यातु चिरमर्थोऽर्थभावकः ॥८४॥
वाचयित्वा द्विजश्रेष्ठानद्यैव गजसाह्वयम् ।
अस्त्रविद्भिः परिवृतो भ्रातृभिर्दृढधन्विभिः ॥८५॥
आशीविषसमैर्वीरैर्मरुद्भिरिव वृत्रहा ।
अमित्रांस्तेजसा मृद्नन्नसुरानिव वृत्रहा ॥८६॥
श्रियमादत्स्व कौन्तेय धार्तराष्ट्रान्महाबल ।
न हि गाण्डीवमुक्तानां शराणां गार्ध्रवाससाम् ।
स्पर्शमाशीविषाभानां मर्त्यः कश्चन संसहेत् ॥८७॥
न स वीरो न मातङ्गो न च सोऽश्वोऽस्ति भारत ।
यः सहेत गदावेगं मम क्रुद्धस्य संयुगे ॥८८॥
सृंजयैः सह कैकेयैर्वृष्णीनां वृषभेण च ।
कथंस्विद्युधि कौन्तेय न राज्यं प्राप्नुयामहे ॥८९॥
शत्रुहस्तगतां राजन् कथंस्विन्नाहरेर्महीम् ।
इह यत्नमुपाहृत्य बलेन महतान्वितः ॥९०॥ इति ॥

एवमेव शान्तिपर्वण्यष्टमाध्यायेऽर्थप्राधान्यं सप्तषष्ट्यधिकशततमेऽध्याये च धर्मार्थकामक्षाणां श्रेयस्त्वं च प्रतिपादितं तत एवावगन्तव्यम् । विस्तरभयान्नात्रोपन्यस्यते ।

अनेन च भीमसेनवाक्यजातेन स्पष्टमिदमवगम्यते यत्र केवलधर्मेण लोकयात्रानिर्वाहः धर्मस्याप्यर्थसाध्यत्वात्, अर्थ एव बलीयानिति स एव प्रथममधिगन्तव्यः । तस्य च मूलं राज्यं तत्संपादनमत्यावश्यकत्वेन प्रतिपादितम् । वस्तुतस्तु अस्मिन्नध्याये एकविंशतितमश्लोकादारभ्याष्टात्रिंशत्तमश्लोकपर्यन्तं त्रिवर्गस्याप्यन्योन्यानुबन्धित्वेन परस्परानुपमर्दकत्वेन च सेवनमेव श्रेय इति सोपपत्तिकमेव विवेचितम् । नहि धर्ममात्रेण योगक्षेमो भवति जगतः । तत्र चार्थमूलत्वेन योगक्षेमा-

पादकत्वेन च राज्यस्यैव प्राधान्यात्तदर्थं च दण्डनीतेरादेयत्वात् तदनुसारेणैव वर्तितव्यमिति सिध्यति । तदुक्तं कौटिलीयसूत्रे—

सुखस्य मूलं धर्मः ॥ १ ॥ धर्मस्य मूलमर्थः ॥ २ ॥ अर्थस्य मूलं राज्यम् ॥ ३ ॥ इति ।

इदमत्र तात्पर्यम्—यदिह जगति सर्वोऽपि जन्तुः सुखायैव प्रयतते । न हि कोऽपि दुःखं मे भूयादित्याशास्ते । येऽपि केचिद्रन्तिदेवसदृशा जन्तुमात्रस्य दुःखमात्मन्याशासते तेऽपि तेषां सुखायैवेति न व्यभिचरत्युपर्युक्ताशीः । अत एव—

"इह जगति सर्व एव जन्तुर्निरतिशयं सुखमुत्तमं ममास्तु ॥
व्युपरमतु तथोपघातरूपं विषयजदुःखमिति स्पृहां करोति ॥१॥

इति संक्षेपशारीरकेऽभिहितम् । सा चाऽऽशीः कामरूपेनेति कामस्यैव मुख्यं पुरुषार्थत्वं श्रेयोरूपत्वात् । मोक्षोऽपि सुखरूपत्वेनेच्छाविषयत्वात्काम एव । एवं चैतादृशेच्छापरिपूर्त्यर्थमेव धर्मार्थयोरुपादेयत्वम् ॥ नो चेत्कर्मणो वैयर्थ्यं स्यात् । तदुक्तं मनुना—

कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥
संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः ।
व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः ॥
अकामस्य क्रियाः काचिद्दृश्यते नेह कर्हिचित् ।
यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥ २।२–४

इति । जातस्य जन्तोरशनायापिपासे तु स्वभावत एव भवतः । तत्परिपूर्त्यर्थं त्वर्थजातस्यावश्यमेवोपादेयत्वं भवति । तच्चार्थोपधानकधर्ममात्राचरणेनेतरपोषणत्वापेक्षया वरं तदनुपघातकेन तदनुबन्धिना वा धर्माचरणेन संपादनीयमिति । अत एव न दैववादावलम्बनेन वा स्वभाववादावलम्बनेन वा जगद्यात्रानिर्वाहः । किंतु स्वीयेच्छापरिपूरणार्थं स्वकीयकर्माचरणमेव श्रेय इति कर्मवाद एवाकामेनाप्युरीकर्तव्य इति । तदुक्तं भगवद्गीतासु—

"शरीरयात्रापि च ते न प्रसिध्येदकर्मणः"

महाभारते वनपर्वणि च द्वात्रिंशत्तमेऽध्याये द्रौपद्युवाच—

नाधर्मं न गर्हे च धर्मं पार्थ कथं चन ।
ईश्वरं कुत एवाहमवमंस्ये प्रजापतिम् ॥१॥
आर्ताऽहं प्रलपामीदमिति मां विद्धि भारत ।
भूयश्च विलपिष्यामि सुमनास्त्वं निबोध मे ॥२॥

कर्म खल्विह कर्तव्यं जानताऽमित्रकर्शन ।
अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः ॥३॥
यावद् गोस्तनपानाच्च यावच्छायोपसेवनात् ।
जन्तवः कर्मणा वृत्तिमा वन्ति युधिष्ठिर ॥४॥
जङ्गमेषु विशेषेण मनुष्या भरतर्षभ ।
इच्छन्ति कर्मणा वृत्तिमवाप्तुं प्रत्य चेह च ॥५॥
उत्थानमभिजानन्ति सर्वभूतानि भारत ।
प्रत्यक्षं फलमश्नन्ति कर्मणां लोकसाक्षिकम् ॥६॥
सर्वे हि स्वं समुत्थानमुपजीवन्ति मानवाः ।
अपि धाता विधाता च यथायमुदके बकः ॥७॥
अकर्मणां हि भूतानां वृत्तिः स्यान्नहि काचन ।
तदेवाभिप्रपद्येत न विहन्यात्कदाचन ॥८॥
स कर्म कुरु मा ग्लासीः कर्मणा भव दंशितः ।
कृतं हि योऽभिजानाति सहस्रे सोऽस्ति नास्ति च ॥९॥
तस्य चापि भवेत्कार्यं विवृद्धौ रक्षणे तथा ।
भक्ष्यमाणो ह्यनादानात्क्षीयेत हिमवानपि ॥१०॥
उत्सीदेरन् प्रजाः सर्वा न कुर्युः कर्म चेद् भुवि ।
तथा ह्येता न वर्धेरन् कर्म चेदफलं भवेत् ॥११॥
अपि चाप्यफलं कर्म पश्यामः कुर्वतो जनान् ।
नान्यथा ह्यपि गच्छन्ति वृत्तिं लोकाः कथंचन ॥१२॥
यश्च दिष्टपरो लोके यश्चापि हठवादिकः ।
उभावपि शठावेतौ कर्मबुद्धिः प्रशस्यते ॥१३॥
यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं शयेत् ।
अवसीदेत्स दुर्बुद्धिरामो घट इवोदके ॥१४॥
तथैव हठदुर्बुद्धिः शक्तः कर्मण्यकर्मकृत् ।
आसीत न चिरं जीवेदनाथ इव दुर्बलः ॥१५॥
अकस्मादिह यः कश्चिदर्थं प्राप्नोति पूरुषः ।
तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ॥१६॥
यच्चापि किंचित्पुरुषो दिष्टं नाम भजत्युत ।
दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् ॥१७॥

यत्स्वयं कर्मणा किंचित्फलमाप्नोति पूरुषः ।
प्रत्यक्षमेतल्लोकेषु तत्पौरुषमिति श्रुतम् ॥१८॥
स्वभावतः प्रवृत्तो यः प्राप्नोत्यर्थं न कारणात् ।
तत्स्वभावात्मकं विद्धि फलं पुरुषसत्तम ॥१९॥
एवं हठाच्च दैवाच्च स्वभावात्कर्मणस्तथा ।
यानि प्राप्नोति पुरुषस्तत्फलं पूर्वकर्मणाम् ॥२०॥
धातापि हि स्वकर्मैव तैस्तैर्हेतुभिरीश्वरः ।
विदधाति विभज्येह फलं पूर्वकृतं नृणाम् ॥२१॥
यद्ध्ययं पुरुषः किंचित्कुरुते वै शुभाशुभम् ।
तद्धातृविहितं विद्धि पूर्वकर्मफलोदयम् ॥२२॥
कारणं तस्य देहोऽयं धातुः कर्माणि वर्तते ।
स यथा प्रेरयत्येनं तथायं कुरुते वशः ॥२३॥
तेषु तेषु हि कृत्येषु विनियोक्ता महेश्वरः ।
सर्वभूतानि कान्तेय कारयत्यवशान्यपि ॥२४॥
मनसाऽर्थान्विनिश्चित्य पश्चात्प्राप्नोति कर्मणा ।
बुद्धिपूर्वं स्वयं वीर पुरुषस्तत्र कारणम् ॥२५॥
संख्यातुं नव शक्यानि कर्माणि पुरुषर्षभ ।
अगारनगराणां हि सिद्धिः पुरुषहैतुकी ॥२६॥
तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः ।
धिया धीरो विजानीयादुपायं चास्य सिद्धये ॥२७॥
ततः प्रवर्तते पश्चात्कारणैस्तस्य सिद्धये ।
तां सिद्धिमुपजीवन्ति कर्मजामिह जन्तवः ॥२८॥
कुशलेन कृतं कर्म कर्त्रा साधु स्वनुष्ठितम् ।
इदं त्वकुशलेनेति विशेषादुपलभ्यते ॥२९॥
इष्टापूर्तफलं न स्यान्न शिष्यो न गुरुर्भवेत् ।
पुरुषः कर्मसाध्येषु स्याच्चेदयमकारणम् ॥३०॥
कर्तृत्वादेव पुरुषः कर्मसिद्धौ प्रशस्यते ।
असिद्धौ निन्द्यते चापि कर्मनाशः कथं त्विह ॥३१॥
सर्वमेव हठेनैके दैवेनैके वदन्त्युत ।
पुंसः प्रयत्नजं केचित्त्रैधमेतन्निरुच्यते ॥३२॥

न चैवैतावता कार्यं मन्यन्त इति चापरे
अस्ति सर्वमदृश्यं तु दिष्टं चैव तथा हठः ॥३३॥
दृश्यते हि हठाच्चैव दिष्टाच्चार्थस्य संततिः ।
किंचिद्दैवाद् हठात्किंचित् किंचिदेव स्वभावतः ॥३४॥
पुरुषः फलमाप्नोति चतुर्थं नात्र कारणम् ।
कुशलाः प्रतिजानन्ति ये वै तत्त्वविदो जनाः ॥३५॥
तथैव धाता भूतानामिष्टानिष्टफलप्रदः ।
यदि न स्यान्न भूतानां कृपणो नाम कश्चन ॥३६॥
यं यमर्थमभिप्रेप्सुः कुरुते कर्म पूरुषः ।
तत्तत्सफलमेव स्याद्यदि न स्यात्पुराकृतम् ॥३७॥
त्रिद्वारामर्थसंसिद्धिं नानुपश्यन्ति ये नराः ।
तथैवानर्थसंसिद्धिं यथैवाऽऽत्मा तथैव ते ॥३८॥
कर्तव्यमेव कर्मेति मनोरेष विनिश्चयः ।
एकान्तेन ह्यनीहोऽयं पराभवति पूरुषः ॥३९॥
कुर्वतो हि भवत्येव प्रायेणेह युधिष्ठिर ।
एकान्तफलसिद्धिं तु न विन्दत्यलसः क्वचित् ॥४०॥
असंभवे त्वस्यहेतुः प्रायश्चित्तं तु लक्षयेत् ।
कृते कर्मणि राजेन्द्र तथाऽऽनृण्यमवाप्नुते ॥४१॥
अलक्ष्मीराविशत्येनं शयानमलसं नरम् ।
निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते ॥४२॥
अनर्थाः संशयावस्थाः सिद्ध्यन्ते मुक्तसंशयाः ।
धीरा नराः कर्मरता ननु निःसंशयाः क्वचित् ॥४३॥
एकान्तेन ह्यनर्थोऽयं वर्ततेऽस्मासु सांप्रतम् ।
स तु निःसंशयं न स्यात्त्वयि कर्मण्यवस्थिते ॥४४॥
अथवाऽसिद्धिरेव स्यादभिमानं तदेव ते ।
वृकोदरस्य बीभत्सोर्भ्रात्रोश्च यमयोरपि ॥४५॥
अन्येषां कर्म सफलमस्माकमपि वा पुनः ।
विप्रकर्षेण बुध्येत कृतकर्मा यथा फलम् ॥४६॥
पृथिवीं लाङ्गलेनेह भित्त्वा बीजं वपत्युत ।
आस्तेऽथ कर्षकस्तूष्णीं पर्जन्यस्तत्र कारणम् ॥४७॥

वृष्टिश्चेन्नानुगृह्णीयात् अनेनास्तत्र कर्षकः ।
यदन्यः पुरुषः कुर्यात्तत्कृतं सफलं मया ॥४८॥
तच्चेदं फलमस्माकमपराधो न मे क्वचित् ।
इति धीरोऽन्ववेक्ष्यैव नाऽऽत्मानं तत्र गर्हयेत् ॥४९॥
कुर्वतो नार्थसिद्धिर्मे भवतीतीह भारत ।
निर्वेदो नात्र कर्तव्यो द्वावन्यौ ह्यत्र कारणम् ॥५०॥
सिद्धिर्वाप्यथवाऽसिद्धिरप्रवृत्तिरतोऽन्यथा ।
बहूनां समवाये हि भावानां कर्मसिद्धयः ॥५१॥
गुणाभावे फलं न्यूनं भवत्यफलमेव च ।
अनारम्भे हि न फलं न गुणो दृश्यते क्वचित् ॥५२॥
देशकालावुपायांश्च मङ्गलं स्वस्तिवृद्धये ।
युनक्ति मेधया धीरो यथाशक्ति यथाबलम् ॥५३॥
अप्रमत्तेन तत्कार्यमुपदेष्टा पराक्रमः ।
भूयिष्ठं कर्मयोगेषु दृश्यमेव पराक्रमः ॥५४॥
यत्र धीमानवेक्षेत श्रेयांसं बहुभिर्गुणैः ।
साम्नैवार्थं ततो लिप्सेत्कर्म चास्मै प्रयोजयेत् ॥५५॥
व्यसनं वाऽस्य काङ्क्षेत विवासं वा युधिष्ठिर ।
अपि सिन्धोर्गिरेर्वापि किं पुनर्मर्त्यधर्मिणः ॥५६॥
उत्थानयुक्तः सततं परेषामन्तरपणे ।
आनृण्यमाप्नोति नरः परस्याऽऽत्मन एव च ॥५७॥
न त्वेवाऽऽत्माऽवमन्तव्यः पुरुषेण कदाचन ।
न ह्यात्मपरिभूतस्य भूतिर्भवति शोभना ॥५८॥
एवं संस्थितिका सिद्धिरियं लोकस्य भारत ।
तत्र सिद्धिर्गतिः प्रोक्ता कालावस्थाविभागतः ॥५९॥
ब्राह्मणं मे पिता पूर्वं वासयामास पण्डितम् ।
सोऽपि सर्वामिमां प्राह पित्रे मे भरतर्षभ ॥६०॥
नीतिं बृहस्पतिं प्रोक्तां भ्रातॄन् मेऽग्राहयन् पुरा ।
तेषां सकाशादश्रौषं मदमेतां तदा गृहे ॥६१॥
स मां राजन् कर्मवतीमागतामाह सान्त्वयन् ।
शुश्रूषमाणामासीना पितुरङ्के युधिष्ठिर ॥६२॥ इति

एवं च सत्यपि दैवादीनां फलसिद्धौ कारणत्वे तेषामदृष्टत्वेनापरीक्ष्यत्वात् पुरुषकार एव कर्तव्यतया समापतति। अत उदरभरणादिष्वपि तस्यैव मुख्यं कारणत्वं न दिष्टादीनामिति सिध्यति कौटिलीयेऽपि शमव्यायामिके अ. ९८, "दैवं मानुषं हि कर्म लोकं यापयति। अदृष्टकारितं दैवं तस्मिन्निष्टेन फलेन योगोऽयः। अनिष्टेनानयः। दृष्टकारितं मानुषम्। तस्मिन्योगक्षेमनिष्पत्तिर्नयः। विपत्तिरपनयः। तच्चिन्त्यम्। अचिन्त्यं दैवम्। इति। मनुरपि—

सर्वं कर्मेदमायत्तं विधाने दैवमानुषे।
तयोर्दैवमचिन्त्यं तु मानुषे वर्तते क्रिया॥ ७।२०५॥

एवं च शरीरयात्रोपयोगिनौ योगक्षेमावनादृत्य केवलपरलोकसाधकधर्ममात्रानुष्ठाने जगद्यात्रोच्छेदप्रसङ्गाद्गत्या अर्थकामानुबन्धिधर्मानुष्ठानमेव श्रेय इति सिद्धान्तः सिध्यति। एवं च यथा केवलार्थकामयोरनर्थकारित्वादश्रेयस्त्वमेवेति तस्य श्रेयस्त्वनिर्धारणाय दण्डनीतेरावश्यकता सिध्यति। यद्यपि वस्तुतस्तादृशस्वरूपपर्यालोचनमान्वीक्षिकीविषयः। तथापि तादृशपर्यालोचनानन्तरं शासनरूपेण तत्प्रणयनं नयापरपर्यायं तु दण्डाधीनमेवेति दण्ड एव तेन रूपेण धर्माधर्मप्रमापको भवतीत्यस्ति किल धर्माधर्मयोर्विषये दण्डनीतेः प्रामाण्यम्। अत एव "आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः" इत्यर्थशास्त्रसिद्धान्तः। तत्सिद्धं दण्डनीतेर्धर्मे प्रामाण्यम्।

अयं भावः—

राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः।
संभवश्च यथा तस्य सिद्धिश्च परमा यथा॥ मनु ८।१

इत्यत्र राजधर्मप्रतिपादनं प्रतिज्ञातं मनुना। राजशब्दोऽत्र न क्षत्रियजातिवचनः। किंतु अभिषिक्तजनपदपुरपालयितृवचनः। एवं च जनपदपुररक्षकधर्माणामेव प्रतिपादनं प्रतिज्ञायते। तत्रापि क्षत्रियस्यैव तत्र प्राधान्येनाधिकारः

प्रजानां रक्षणं दानमिज्याध्ययनमेव च।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः॥ मनु १।८९

इत्यत्र तद्धर्मत्वेनैव प्रजापालननिर्देशात्। आपत्तौ च चतुर्णामपि वर्णानां तत्राधिकारः। अत एव नारदः—

न कथंचन कुर्वीत ब्राह्मणः कर्म वार्षलम्।
वृषलः कर्म च ब्राह्मं पतनीये हि ते तयोः॥
उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते॥
रक्षणं वेदधर्मार्थं तपः क्षत्रस्य रक्षणम्॥

इति मध्यमकर्मणो रक्षणकृप्यायोः सर्वसाधारणतामाह । एवं च—

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥ मनु ८।२

इत्ययं विधिरपि प्राधान्येन क्षत्रियमधिकृत्य प्रवर्तमानोऽप्युपलक्षणतया पालनाधिकारिणमधिकृत्यैव प्रवर्तत इति पर्यवस्यति। एवं च पालनाधिकृतः प्रजापालनेनेष्टं भावयेदिति विध्यर्थः पर्यवसन्नः । तत्रेतिकर्तव्यताकाङ्क्षायां तु षाड्गुण्यप्रयोगादिकमनुष्ठायेत्येवं षाड्गुण्यादीनामेव स्मृत्युपदिष्टानामन्वयो भवति । एवं चाग्निहोत्रे प्रयाजादीनामिव षाड्गुण्यप्रयोगादीनां प्रजापालनाङ्गत्वं सिध्यात। तत्र प्रयाजादेरितिकर्तव्यतावत्षाड्गुण्यादीनामितिकर्तव्यतापि यदि स्मृत्युपदिष्टा स्यात्तदा तु सर्वेषामपि राजधर्माणां स्मृतिमूलकमेव प्रामाण्यं स्यात् । तदभावे तु कौटिलीयार्थशास्त्राद्यर्थशास्त्रं कामशास्त्रं चाऽऽलोच्यैव तदितिकर्तव्यतानिर्धारणमत्यावश्यकमित्यर्थशास्त्रकामशास्त्रयोरपि प्रामाण्यं राजधर्मे संभवति । किं च यथा यागस्य स्वरूपं द्रव्यदेवतात्मकमदृष्टमात्रफलकम् । तथा प्रजापरिपालनस्वरूपं तु त्रिवर्गसंपादनमेव । तं विना पालनासंभवात् । एवं च षाड्गुण्यप्रयोगादिना त्रिवर्गसंपादनमेव प्रजानां राज्ञा कर्तव्यमिति फलति । तत्र त्रिवर्गपरिज्ञानार्थं त्रय्यान्वीक्षिकीवार्तार्थशास्त्रादीनामङ्गत्वेन तत्र तत्राविरोधानुबन्धादिपर्यालोचनेन तत्र तत्रानुशासनप्रवर्तनमपि राज्ञां परमो धर्म इति सिध्यति। एवं प्रजापालनमिदं राज्ञो अदृष्टफलार्थमपि प्रजानां दृष्टफलकमिति पर्यवस्यति । तत्र प्रजानां त्रिवर्गस्य प्राधान्यात्तन्मूलकत्वाच्च राज्ञस्त्रिवर्गस्य राजधर्माणां दृष्टप्रधानत्वमदृष्टोपसर्जनत्वं च सिध्यतीति दृष्टादृष्टफलकत्वमेव राजधर्माणाम् । एवं च प्रजानां त्रिवर्गसिध्द्ये परस्परानुबन्धं वा परस्परानुपघातकत्वं वा पर्यालोच्य यदनुशासनं क्रियते तदपि धर्माधर्मप्रमापकं भवतीति तदंशे दण्डनीतेर्धर्माधर्मप्रमापकत्वं सिध्यति । तदुक्तं मनुना—

तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥ ८।१३

अत्र मन्वर्थमुक्तावलिर्यथा—

यतः सर्वतेजोमयो नृपतिस्तस्मादपेक्षितेषु यमिष्टं शास्त्रानुद्धेयं शास्त्राविरुद्धं निश्चित्य व्यवस्थापयत्यनपेक्षितेषु चानिष्टं नातिक्रामेत् ॥ इति ।

एतादृशनियमकरणे राज्ञोऽधिकार इत्यप्यग्रे चतुष्पाद्व्यवहारे राजशासनस्य धर्माद्यपेक्षयापि प्राबल्यमिति प्रदर्शनेन स्पष्टं स्यात् । अत एवोक्त

त्रिवर्गो हि समासक्तो राजधर्मेषु कौरव ।
मोक्षधर्मश्च विस्पष्टः सकलोऽत्र समाहितः ॥इति म. भा. शां. ५६।४

## ( दण्डाभावस्यानर्थसाधकत्वम् )

सेयं दण्डनीतिर्बुद्धकालादारभ्यैव भारतीयैः परित्यक्ता । केवलपारलौकिकफलप्ररोचनयैव तत्र दत्तक्षणा भारतीयास्तत एव कालाद्धर्मार्थकामरूपत्रिवर्गपरिभ्रष्टा दीनाश्च दास्यकर्मैव श्रेय इति मन्यमाना उदरशिश्नपरायणा भूत्वा "अर्थस्य पुरुषो दासः" इति न्यायेन यस्य कस्यापि यवनादेर्दास्यमेव परमोऽभ्युदय इति मन्यन्ते । न हि प्रजापालनतत्परेण धर्मनिष्ठेन राज्ञा यस्य कस्यापि बाह्यस्य छलेन शरणागतस्य नवकृत्वः परिरक्षणं करिष्यते यथा लोदीयवनस्य पृथ्वीराजेन कृतम् । तदिदमेव गमयति यद्राष्ट्रस्य प्रजानां च यत्किमपि भवतु । मया तु परलोककामेन पारलौकिकपरमैश्वर्याभिलाषुकेण तदेकफलं शरणागतरक्षणमेव विधेयमुपास्यतयेति । तस्यैवायं परिणामो यदिदानीमात्मीया एव तन्मतप्रविष्टा अस्मानेव समूलमुन्मूलयितुं प्रवृत्ताः । एवमेव ब्राह्मणादयोऽपि वैयक्तिकस्वार्थपरायणाः सन्तः पारलौकिकफलकामनयैव तादृशं धर्मं पुरस्कुर्वन्त. प्रवर्तन्ते । सूक्ष्मेक्षिकया पर्यालोचिते खल्वितिहासे इदमेव दृष्टिपथमायाति यद्वस्तुतो धर्मस्य श्रेयोरूपं विजहतामस्माकमिदानींतनावस्था संपन्ना । उक्तं च मनुना—

> "धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
> तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ॥ ८।१५
>
> वृषो हि भगवान्धर्मस्तस्य यः कुरुते ह्यलम् ।
> वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥" ८।१६

## ( इदानींतनपरिवर्तनवादस्य मूलान्वेषणा )

सोऽयं जगद्योगक्षेमनिर्वाहको दण्ड इदानीमस्माभिरधिगन्तव्यश्चेत्—

> अमाययैव वर्तेत न कथंचन मायया ।
> बुध्येतारिप्रयुक्तां च मायां नित्यं स्वसंवृतः ॥ ७।१०४
>
> नास्य छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ॥
> गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ ७।१०५

इति मनूक्तरीत्या स्वकीयविवरपिधानमेवाऽऽदौ कर्तव्यं स्यात् । तथाऽऽलोच्यमाने तु राष्ट्रे धर्मत्वेनाभिमतानां वर्णजात्यादिभेदानामेव प्रथमतः समीकरणं कर्तव्यतया समापतति तद्द्वारैव परकीयैः समाजस्वायत्तीकरणं विधीयते भेदात् । तथा ह्युपजापोपादानप्रकरणे ( अ. १३५ ) कौटिलीयार्थशास्त्रे—

" कुमारकान् विशिष्टछन्दिकया हीनछन्दिकानुत्साहयेयुः। विशिष्टानां चैकपात्रं विवाहं हीनेभ्यो वारयेयुः। हीनान्वा विशिष्टैरेकपात्रे विवाहे वा योजयेयुः। अवहीनान्वा तुल्यभावोपगमने कुलतः पौरुषतः स्थानविपर्यासतो वा व्यवहारमवस्थितं वा प्रतिलोमस्थापनेन वा निशामयेयुः। विवादपदेषु वा द्रव्यपशुमनुष्याभिघातेन रात्रौ तीक्ष्णान्कलहानुत्पादयेयुः। " इत्यादि।

एतेन स्पष्टमिदमवगम्यते यथेयं वर्णजातिविशिष्टसमाजरचना तदाचाराश्च धर्मत्वेनाभिमतास्त एवेदानीमस्माकं नाशाय संपन्नाः। विद्यानामधीतिबोधाचरणप्रचारा अपि परकीयैस्तथैव प्रचारिताः। येनास्मदीयसमाजरचनाविषये घृणा स्यात्। जागतिकक्षेत्रेऽपीदानीं स्वातन्त्र्य-समता-विश्वबन्धुतेति त्रयी मनुष्यमात्रस्य योगक्षेमसाधनत्वेनोपकारिणीति डिण्डिमायते। तदत्रावसरे त्रयीप्रोक्तधर्माधर्मविषये संदिहाना दण्डनीत्यनुसारेण योगक्षेमसाधनत्वेन समाजरचनायाः श्रेयस्त्वमनवबोधयन्तो नयानयरूपेण तस्याः पुनर्घटनमभिकाङ्क्षन्तो बहवः किलास्मदीया एवात्र प्रत्यवतिष्ठन्ते। अतस्तेषां मतानि पर्यालोच्य तद्व्युदासमन्तरा न धर्माधर्मनिर्धारणं सम्यग्भवतीति तत्र प्रयतामहे।

## ( धर्मविचारस्यानावश्यकता )

तथाहि " असंदिग्धो ह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः " इति भाट्टोक्त्या तस्यैव किल जिज्ञासा यः संदिग्धः सप्रयोजनश्च स्यात्। न हि धर्माधर्मत्वेन अभिमतानां विप्रतिपन्नानां क्रियाणां संदिग्धत्वं सप्रयोजनत्वं वा केनापि प्रतिपादयितुं शक्यम्। यत्र हि परस्परविरुद्धनानाधर्मावगाहि ज्ञानं तत्रैव सांदिग्धत्वम्। न च विमतासु क्रियासु तथा। अर्थकामानुबन्धित्वाभावात्। नह्यलौकिकेष्टसाधनत्वमात्रेण धर्मत्वम्। तादृशानिष्टसाधनत्वेनाधर्मत्वमिति कल्पयितुं शक्यम्। ' त्रिवर्ग इति तु स्थितिः ' इति मनुवचनात् श्रेयोरूपस्य धर्मस्य अर्थकामानुबन्धित्वेनैव धर्मत्वात्तद्विपरीतस्य चाधर्मत्वात्। नहि तादृशानुबन्धस्तासु क्रियासु प्रदर्शयितुं शक्यः। प्रमाणाभावात्। प्रत्यक्षतस्तु तादृशानुबन्धाभाव एव सिध्यति। नहि यज्ञादिकर्मणा कुत्राप्यर्थकामौ सिद्धौ दृश्येते। नाप्यनुमानेन तथा कल्पयितुं शक्यते। तत्साधकहेत्वभावात्। न च शब्दादपौरुषेयात्तथा कल्पना। शब्देनैव अलौकिकस्वर्गादिसाधनत्वबोधात्। नाप्यर्थापत्तिस्तत्र प्रसरति। तत्साधकानां व्याप्त्यादीनां तत्राभावात्। येनार्थेन यस्याऽऽपत्तिरापादनीया, तयोः कार्यकारणभावस्य नियामकस्वभावस्य वा सत्त्व एव तादृशार्थकल्पना सम्भवति। तं विनाऽनुपपत्तेरभावात्। यथाहि भोजनं विना पीनत्वमनुपपन्नं सद्भोजनमाक्षिपति तत्कार्यत्वात्। यथा वा जीवतो देवदत्तस्यावस्थितिं विनाऽनुपपन्नं जीवनमवस्थितिमाक्षिपति नियतस्वभावात्। तत्र दिवा भोजननिषेधे वा गृहे अवस्थितिनिषेधेऽप्यर्थादेव रात्रौ भोजनं गृहादन्यत्रावस्थितिश्चाऽऽक्षिप्यते। न च तथा क्रियाणामलौकिकेष्टसाधनत्वं शास्त्रेण बोधि-

तमप्यर्थकामानुबन्धं विनाऽनुपपन्नं भवति येन तदाक्षेपः स्यात्। अनुपलब्धिस्तु प्रत्युतार्थकामानुबन्धाभावमेव साधयन्ती क्रियाणामश्रेयस्त्वमेव बोधयति। अर्थकामानुबन्धस्तु अर्थकामानां प्रत्यक्षत्वात्प्रत्यक्षगोचरतायोग्योऽपि नोपलभ्यते चेन्नास्त्येवासावित्येव निश्चीयते। तदर्थकामानुबन्धित्वरूपैककोटेः कथमप्यवगन्तुमशक्यत्वात्, उभयकोटिकज्ञानाभावात्संदेह एव न संभवतीति कुतो जिज्ञास्यत्वम्। तथैव प्रयोजनमपि न पश्यामः। तथाहि यद्धि पशुपुत्रकलत्रस्वाराज्यसाम्राज्यादि अलौकिकफलत्वेन श्रूयते तस्यैव यदि पुरुषकारवशादिहैव जन्मनि प्राप्तेः संभावना। किमर्थं तर्हि पारलौकिकतादृशफलपणा कर्तव्या। न चैहिकवत् पुनर्जन्मन्यपि तथा प्राप्तिरस्त्वित्याशीस्तत्र कारणम्। अत्रेव परत्रापि पुरुषकारेण तत्सिद्धेः। अन्ततो गत्वा यस्य न तादृशं पौरुषं तस्येच्छायाः साफल्यसंपादनार्थमेतदित्येव वक्तव्यं भवति। एवं च दुर्बलानां कृते धर्मानुशासनमित्येव फलति। तदेवोक्तं लोकायतिकैः—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता॥ इति।

एवं च यदि केवलपारलौकिकफलसाधनत्वेनैव धर्मत्वं धर्मस्य तदा तु ऐहलौकिकार्थकामत्यागपूर्वकतादृशधर्माचरणेऽप्रवृत्तिरेव साधीयसी। तथैवाधर्माचरणे प्रवृत्तिरपि। एवं चैष्यत्फलत्वात् सांशयिकत्वाच्च तादृशधर्माधर्मयोरादरो न श्रेयस्कर इति सिध्यति।

ननु—"श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते॥"

इति काठकवचनाच्छ्रेयसो योगक्षेमसाधकत्वाभावः, प्रेयसश्च तत्साधकत्वमिति मन्दाधिकारिणं प्रेयः श्रेयश्च धृतिमन्तमिति प्रतिपाद्यते। अतः श्रेयोरूपस्य धर्मस्यार्थकामानुबन्धाभावेऽपि श्रेयस्त्वं भवतीति कथं पारलौकिकमात्रफलकानामादर इति चेन्न—एष्यत्फलत्वात् सांशयिकत्वाच्च। को ह्यबालिशो हस्तगतं परगतं कुर्यात्। वरमद्य कपोतः श्वो मयूरात्। वरं सांशयिकान्निष्कादसांशयिकः कार्षापणः। इति कामशास्त्रेऽपि एष्यत्फलकेषु सांशयिकेषु अनादरप्रदर्शनात्।

अयमत्राभिसंधिः—

"अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्॥"

इति मनूक्तरीत्या हि सर्वासां क्रियाणां काम एव मूलम्। तत्पूर्तिरेव क्रियासाध्या फलम्। सा च विषयाधीनैव। ते चेदैहिका एव तत्पूर्तयेऽलं तर्हि पारलौकिकतादृशविषयप्राप्त्यर्थमैहिकविषयत्यागो न प्रेक्षावत्प्रवृत्तिगोचरो भवितुमर्हति। तथा चाऽऽभाणकः—

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्॥
इष्टस्यार्थस्य संसिद्धौ को विद्वान्यत्नमाचरेत्॥ इति।

तत्सिद्धं काम एव परमपुरुषार्थः । अत एव आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यौपनिषदः सिद्धान्तः । स चार्थं कामो यथैहिकार्थसंपत्त्यैव संपन्नो भवति । तर्हि तु नास्त्यावश्यकता पारलौकिकानां कर्मणाम् । न चैतावता सर्वथा धर्माधर्मयोरनावश्यकता । ऐहिकार्थकामसंपादनार्थं तत्साधकत्वेन तदनुबन्धिनोस्तयोरावश्यकत्वात् । तच्चोपरिष्टादनुपदमेव विशदं भविष्यति ।

## ( पूर्वोक्तानुमानस्य दुष्टत्वम् )

एवं च विमताः क्रिया अलौकिकेष्टसाधनाः वेदबोधितेतिकर्तव्यताकत्वादित्यनुमानमपि सत्प्रतिपक्षितं नेष्टसाधनायालं भवति । तथाहि—विमताः क्रियाः, नालौकिकेष्टफलसाधनं योगक्षेमानिर्वाहकत्वात् । वृथाजलताडनवत् । यच्चालौकिकेष्टफलसाधनं सत्याहिंसादि । तस्य योगक्षेमनिर्वाहकत्वं तु प्रत्यक्षेणैव सिध्यति । एवं चालौकिकेष्टफलसाधनत्वव्यापकयोगक्षेमनिर्वाहकत्वं ततो निवर्तमानं स्वव्याप्यालौकिकेष्टफलसाधनत्वमपि निवर्तयतीति न व्यभिचाराशङ्कालेशोऽपि । न चाग्निहोत्रादिषु स्वर्गाद्यलौकिकेष्टसाधनेषु योगक्षेमनिर्वाहकत्वाभावात् व्यभिचार इति वाच्यम् । स्वर्गादीनां पारिभाषिकत्वेन पुरुषसंकेतरूपत्वात्सांशयिकत्वाच्च । " प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म " इत्यादिवाक्यैः श्रुत्यैव तेषां श्रेयस्त्वाभावावगमाच्च । अमृतत्वादीनां तु अग्निहोत्रादिक्रियाफलत्वस्य " न कर्मणा न प्रजया धनेन नायमात्मा प्रवचनेन लभ्यः " इत्यादि श्रुतिवाक्यैरेव निराकरणात् । " सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् " इत्यादिन्यायास्तु परम्परया यज्ञादीनां श्रेयोरूपात्मज्ञाने विनियोगं प्रतिपादयन्ति न तु तत्फलकत्वम् । तादृशफलस्य कर्मजन्यत्वाभावात् । स्पष्टं चेदं तत्तु समन्वयादिति सूत्रे शांकरभाष्ये । एवं च प्रतिपाद्यमानस्य फलस्य स्वरूपतः श्रेयस्त्वाभावादेव तत्साधनत्वेन विहितानामश्रेयस्करत्वमर्थादेव सिध्यति । एवं च श्रेयस्त्वं स्वर्गादिभ्यो व्यावृत्तं सत् कामपूरकेषु योगक्षेमसाधनेष्वेव पर्यवस्यतीति योगक्षेमनिर्वाहकानामेव क्रियाणामलौकिकेष्टसाधनत्वं सिध्यति । अत एव काम्यानां त्यागेन क्रियमाणानुदये नित्यैश्च संचितनाशे नैमित्तिकैश्च कर्मभिः प्रत्यवायपरिहारे स्वरूपस्थितिरेवाऽऽत्मनो मोक्ष इति भट्टपादानां सिद्धान्तः संगच्छते । नन्वेवमपि नित्यानां संध्यावन्दनादीनां योगक्षेमनिर्वाहकत्वाभावेऽपि अलौकिकेष्टसाधनत्वाद्व्यभिचार इति चेन्न । नित्यानां फलाभावस्याभिमतत्वात् । संचितनाशरूपफलस्य सत्त्वेऽपि तस्यानपेक्षितत्वेन तद्विषयेच्छानुदयादिष्टत्वमेव नास्तीति कुतस्तत्साधनत्वं संध्यावन्दनादीनाम् । अत एव—

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।

इति यज्ञादीनां स्वरूपावस्थितिरेव फलत्वेनोक्ता, सा च पूर्वोक्तरीत्येति न व्यभिचारशङ्कालेशोऽपि । न चाऽसिद्धत्वम् । नास्ति प्रमाणबाधः । एवं च यत्र सत्यादावलौकिकेष्टसाधनत्वं तत्र

योगक्षेमनिर्वाहकत्वस्य दृश्यमानत्वात् तन्निवृत्तौ अलौकिकेष्टसाधनत्वस्याप्यभावात् तुच्छमेव पूर्वोक्तानुमानम् ।

तत्सिद्धं काम एव परमः पुरुषार्थः । तत्साधनं चार्थाः । तेषां च कामपरिपूर्त्यर्थं या विनियोगपद्धतिः, या च संपादनपद्धतिः स एव धर्म इति फलति । तत्र संपादनं योगः । विनियोगश्च क्षेममित्यर्थानां योगक्षेमनिर्वाहकत्वमेव धर्मत्वमिति सिध्यति । तदुक्तं महाभारते शान्तिपर्वणि—१०९ अध्याये—

प्रभवाथाय भूतानां धर्मप्रवचनं कृतम् ।
यः स्यात्प्रभवसंयुक्तः स धर्म इति निश्चयः ॥९॥
धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः ।
यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः ॥१०॥
अहिंसाथाय भूतानां धर्मप्रवचनं कृतम् ।
यः स्यादहिंसासंयुक्तः स धर्म इति निश्चयः ॥११॥
श्रुतिधर्म इति ह्येके नेत्याहुरपरे जनाः ।
न च तत्प्रत्यसूयामो नहि सर्वं विधीय ॥१२॥ इति ।

अत एव "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इत्यपि वैशेषिकलक्षणमपि युक्तमुत्पश्यामः । न हि निःश्रेयसमात्रसाधकत्वं धर्मस्य कुत्राप्युक्तम् । अभ्युदयसाधकत्वस्यापि तत्राऽऽवश्यकत्वात् । तथाच न केवलमभ्युदयसाधकत्वमेव धर्मत्वमपि तु तत्रापि निःश्रेयससाधकत्वेनावश्यं भवितव्यम् । इदमेव चार्थकामानुबन्धित्वम् । "चोदनालक्षणोऽर्थो धर्मः" इति तु तत्स्वरूपवर्णनं सामान्यतः प्राकृतानामुपकाराय । नहि किं वाऽभ्युदयनिःश्रेयससाधनमिति स्वरूपतः सर्वैर्निश्चेतुं शक्यम् । नैतावता चोदितमेव तत्साधकं नान्यदिति वक्तुं पार्यते । अत एव "न च तत्प्रत्यसूयामो न हि सर्वं विधीयते" इति भीष्मोक्तिः संगच्छते । वेदेऽपि वाजसनेयसंहितायाम्—

"आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरंधिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्"

इति कण्डिकायां योगक्षेमाशीरेव प्रदर्शिता । ( शुक्लयजुर्वेदसंहिता अ. २२।२२ ) तत्सिद्धं योगक्षेमसाधकक्रियात्वमेव धर्मत्वं तद्विपरीतं चाधर्मत्वमिति ॥

## ( पुरुषार्थविचारः )

ननु न कामस्यैव परमपुरुषार्थत्वम्। किं तु मोक्षस्यैव तत्। तथाहि— ' पुरुषेणार्थ्यतेऽसौ पुरुषार्थः ' इति विग्रहे पुरुषेच्छाविषयस्यैव पुरुषार्थत्वात्तस्य च पुरुषेच्छाविषयीभूताखण्डनिरतिशयसुख एव पर्यवसानात्तदेव वस्तुतः पुरुषार्थ इति सिध्यति। कामस्य त्विच्छाविषयत्वेऽपि सखण्डत्वात्सातिशयत्वाच्च न परमपुरुषार्थत्वम्। तादृशस्य सुखस्य चामृतत्वं मोक्ष इत्यादिनामभिर्धर्मशास्त्रेषु स्पष्टमेवोपदेशात्तत्कथं कामस्य परमपुरुषार्थत्वमिति चेन्न—सत्यं पुरुषेच्छाविषयत्वेन पुरुषार्थत्वं तच्च तादृशसुखस्यैवेति। परंतु पुरुषेच्छाविषयस्य तस्य पुरुषप्रयत्नसाध्यत्वमस्ति न वा। नास्ति चेदकिंचित्करत्वात्तस्य नोपयोगः। अस्ति चेत्प्रयत्नसाध्येतरवस्तुवदनित्यत्वप्रसङ्गः। नित्यत्वं तु तस्याखण्डत्वादेवाभ्युपगन्तव्यम्। ' न स पुनरावर्तते ' इत्यादिश्रुतिभिरपि तथाऽवगम्यते। एवं च नित्यत्वादेव तत्र पुरुषप्रयत्नासाध्यत्वेन तादृशपुरुषार्थस्य पुरुषं प्रत्यकिंचित्करत्वमेवेति न स पुरुषप्रवृत्तिविषयो भवितुमर्हति। न च तस्य नित्यत्वेऽप्यनुपलम्भात् तदावरकं किंचिदस्तीति तन्निवृत्तये पुरुषप्रयत्नापेक्षा स्यादिति वाच्यम्। तदावरकाज्ञानस्य ज्ञानमन्तरा निवृत्त्यनुपपत्तेरन्योन्याश्रयप्रसङ्गात्। ज्ञानेन अज्ञाननिवृत्तिरज्ञाननिवृत्त्या च ज्ञानप्राप्तिरित्येकस्याप्यसिद्धेः। अन्यदेवाज्ञानातिरिक्तं तदावरकमिति चेत् किं तदिति वक्तव्यम्, मलविक्षेपाविति चेत्तयोर्वासनामूलत्वेन, वासनायाश्च कर्ममूलत्वेनान्ततः कर्मैव तदावरकमिति वक्तव्यम्। तथाच कर्मणा कर्मनाश एव मोक्ष इति पर्यवस्यति। तस्य च—

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।

इत्यनुसारेण भट्टमतरीत्या धर्मेणैव सिद्धत्वाद्धर्म एव परमपुरुषार्थ इति सिध्यति। स चार्थकामानुबन्धिक्रियात्मक इति काम एवान्ततः परमपुरुषार्थ इति सिध्यति न मोक्षः।

## ( कामस्य परमपुरुषार्थत्वम् )

अयं भावः—सर्वेषु सृष्ट्यारम्भवादेषु पूर्वजन्मासिद्धकर्मविपाकस्योपादानात् " यः कल्पः स कल्पपूर्वः " इत्यनादित्वेव संसारस्याभ्युपगम्यते। तथाच सृष्टेर्वासनापूर्वकत्वमपि "सोऽकामयत" "स ऐक्षत" इत्यादिश्रुतिषु श्रूयते। आधुनिकविज्ञानशास्त्रदृष्ट्यापि कर्मजन्यसंस्कारस्यैवोत्तरोत्तरपदार्थारम्भकत्वं निर्णीयते। सोऽयं संस्कारश्चेतनेषूपलभ्यमानो वासनेत्यभिधीयते। ततश्च वासनैव फलनिदानम्। तस्याश्चेदात्यन्तिको नाशः, न तर्हि जगदारम्भः स्यात्। अतश्च वासनायाः धर्मनिदानत्वात्तन्मूर्तिरेव फलं पश्यता समाम्नातेति। सैव च काम इति। स एव परमपुरुषार्थः, न वासनाक्षयः। अत एवोक्तम्—

अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ २।४ इति ।

इति मनुना । महाभारतेऽपि सप्तषष्ट्यधिकशततमेऽध्याये शान्तिपर्वणि—

नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति ।
नाकामः कामयानोऽस्ति तस्मात्कामो विशिष्यते ॥
कामेन युक्ता ऋषयस्तपस्येव समाहिताः ।
पलाशफलमूलादा वायुभक्षाः सुसंयुताः ॥
वेदोपवेदेष्वपरे युक्ताः स्वाध्यायपारगाः ।
श्राद्धयज्ञक्रियायां च तथा दानप्रतिग्रहे ॥
वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा ।
देवकर्मकृतश्चैव युक्ताः कामेन कर्मसु ॥
समुद्रं वा विशन्त्यन्ये नराः कामेन संयुताः ।
कामो हि विविधाकारः सर्वं कामेन संततम् ॥
नास्ति नासीन्नाभविष्यद्भूतं कामात्मकात्परम् ।
एतत्सारं महाराज धर्मार्थावत्र संस्थितौ ॥
नवनीतं यथा दध्नस्तथा कामोऽर्थधर्मतः ।
श्रेयस्तैलं हि पिण्याकाद् घृतं श्रेय उदश्वितः ॥
श्रेयः पुष्पफलं काष्ठात्कामो धर्मार्थयोर्वरः ।
पुष्पतो माध्विव रसः काम आभ्यां तथा स्मृतः ॥
कामो धर्मार्थयोर्योनिः कामश्चाथ तदात्मकः ।
नाकामतो ब्राह्मणाः स्वन्नमर्थात्
नाकामतो ददति ब्राह्मणेभ्यः ।
नाकामतो विविधा लोकचेष्टाः
तस्मात् कामः प्राक् त्रिवर्गस्य दृष्टः ॥ इत्यादि ॥

यद्यप्यत्र श्राध्दयज्ञादीनामपि काम्यत्वमुपवर्णितम् । तदपि—

"काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः"

इति मनूक्तरीत्या कामपूर्वकप्रवृत्तिप्रदर्शनार्थमेव न त्वर्थकामानुबन्धित्वेनोपादानार्थम् । एवं च सर्वक्रियाणा कामपूर्वकत्वात् काम एव परमपुरुषार्थ इति सिध्यति ।

## ( कामस्वरूपपर्यालोचनम् )

ननु कोऽयं कामः । इच्छारूपो वा भोगरूपो वा । नाऽऽद्यः । इच्छाया अनियतत्वेनकदाचिदनर्थापादकत्वात् । नहि रोगिणो भोजनेच्छा तस्यार्थाय प्रभवति । किंतु मरणरूपानर्थायैव स्यात् । तत्र च शारीरकशास्त्रानुसारेण वर्तनमेव श्रेयस्करम् । तथैव सर्वत्र व्यवहारे यदीच्छामात्रेण प्रवृत्तिस्वातन्त्र्यं स्यान्महतेऽनर्थायैवेति तत्र तत्र तत्तद्व्यवहारे तत्तच्छास्त्रमङ्गीकृत्यैव प्रवृत्तिर्विधेयेति शास्त्रमेवेच्छानियामकं सत् प्राबल्यं भजते । अत एवोक्तं श्रीमद्भगवद्गीतासु—

" तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ "

इति । यदि भोगरूपः । तत्रापि भोगस्य सुखानतिरेकात् दुःखरूपस्य च तस्य हेयत्वात्प्रवृत्तेः प्राक् ताद्रूप्येण ज्ञानमेव न स्यादिति न तस्य प्रवृत्तिप्रयोजकत्वं संभवति । अत एव न स्वतः पुरुषार्थत्वमिति चेन्न ।

द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते ।
स कामश्चित्तसंकल्पः शरीरं नास्य दृश्यते ॥

इति महाभारतवचनादनादिसिद्धभोगवासनैव काम इति तत्स्वरूपनिर्धारणात् ।

" कुर्वते कर्म भोगाय कर्म कर्तुं च भुञ्जते "

इति न्यायेन कर्ममूलको भोगो भोगमूलकं च कर्मेति बीजाङ्कुरवदनादित्वात् । तादृशी वासना चाऽऽकीटपतङ्गेभ्यः सर्वेषां स्वानुभवसंवेद्यैवेति नात्र विप्रतिपत्तिः । अत एव पश्वादीनामाहारशास्त्रानवगमेऽपि स्वाभाविकी स्वाभिमताहारप्रवृत्तिरनभिमताहारनिवृत्तिश्च दृश्यते । तथैव मनुष्याणामपीति व्यर्थमिदं शास्त्रपारतन्त्र्यम् । एवं च भोगवासनारूपकामस्य सर्वकर्मप्रवर्तकत्वात्तत्पूर्तिरेव फलत्वेन पुरुषार्थ इति पर्यवस्यति । अत एवेन्द्रियार्थसंयोगे या प्रीतिः स काम इति भोगरूपत्वं तस्योक्तम् ।

## ( भोगस्य परसापेक्षता )

स चायं भोगो यदि स्वात्मन्येव संभवेन्न जगदुत्पत्तिः स्यात् । अत एव " स एकाकी नारमत " " स आत्मानं द्वितीयमसृजत् " इत्युपनिषदि जगदारम्भवादः । तथा च भोगस्य भोगसापेक्षत्वात् भोगस्य च स्वातिरिक्तत्वात् स्वातिरिक्तभोग्यवस्तुजातस्यार्जनमपि अर्थरूपः पुरुषार्थ इति सिध्यति । एतेन " आत्मक्रीड आत्मरतिः " इत्युपनिषद्वादा व्याख्याताः । तादृशक्रीडारत्यादेर्भोगरूपत्वासंभवात् । " यत्र तु सर्वमात्मैवाभूत् तत्र केन कं पश्येत् केन कं विजानीयात् " इत्युपनिषदेव तस्य निराकृतत्वात् । तस्माद्भोगस्य भोग्यवस्तुसापेक्षत्वमपवादविनमेव । तस्माद् भोग्यवस्तुसंपादनरूपो योगो हि जीवनार्थमत्यावश्यक इति तत्साधकानां कर्मणामेव धर्मत्वेनोपादेयत्वं सिध्यति ।

## ( भोग्यव ुविचारः )

ननु किमिदं भोग्यत्वम् ? ।किं जीवननिर्वाहकत्वं भोग्यत्वमुत साक्षात्परम्परया वा यथाकथमपि पूर्वोक्तभोगजननार्हत्वम् ? । नाऽऽद्यः । वार्तातिरिक्तविद्यानां जीवननिर्वाहकत्वाभावेऽनुपादेयत्वप्रसङ्गात् । न च जीवनकण्टकशोधनार्थं सारासारविचारार्थं च तासामावश्यकतेति वाच्यम् । भोग्यवस्तूनां सर्वदा सर्वत्र सर्वेषामधिगमसौकर्ये कण्टकाभावादेव दण्डनीतेरनावश्यकत्वात् । पश्वादिवन्नैसर्गिकप्रवृत्तेरपि संभवेन सारासारविचारस्यानावश्यकत्वादेवाऽऽन्वीक्षिक्या अपि निष्प्रयोजनत्वाच्च। जीवननिर्वाहस्य निर्मर्यादत्वेन तत्त्वस्य दुर्निरूपणीयत्वात् । क्षेत्रादीनां साक्षात् जीवननिर्वाहकत्वाभावेनाभोग्यत्वप्रसङ्गात् । परम्परया जीवननिर्वाहकत्वे तु ब्रह्माण्डस्यापि तत्त्वापत्तेः । न चेष्टापत्तिः । तारकादीनां भोग्यत्वेन कैरप्यनङ्गीकारात् । रत्नादीनां जीवननिर्वाहकत्वाभावेऽपि भोग्यत्वस्याभ्युपगमात् । न द्वितीयः । स्वाप्निकपदार्थानां काल्पनिकत्वेऽपि भोगजनकत्वेन सर्वानुभवविषयत्वात् भोग्यत्वापत्तेः । सत्यपदार्थेऽपि भोजनादौ क्षुद्वासनाभावे भोगाभावेनाभोग्यत्वप्रसङ्गात् वासनानिवृत्तौ च ब्रह्माण्डस्याप्यभोग्यत्वप्रसङ्गात् । किंचैकस्यैव पदार्थस्यैकं प्रति हर्षजनकत्वमितरं प्रति च दुःखजनकत्वमपरस्यौदासीन्यजनकत्वं च नोपपद्येत भोगजननयोग्यतायां सत्यामपि । दृश्यते च तथा तस्मान्न भोगजननार्हत्वं भोग्यत्वम् । अत एवोक्तम्—

> अन्या मांसमयी योषित्काचिदन्या मनोमयी ।
> मांसमय्या अभेदेऽपि भिद्यते हि मनोमयी ।। पञ्चदशी ।।

न च तादृशसंवेदनापि भोग एवेति वाच्यम् । प्रवृत्तिविषयकामात्मकभोगस्यैवात्र प्रकृतत्वात् । दुःखमोहात्मकभोगस्य प्रवृत्तिविषयत्वाभावात् । नहि दुःखार्थं वा मोहार्थं कथमपि प्रेक्षावतां प्रवृत्तिः संभवति । तस्मादिन्द्रियार्थसंनिकर्षे या प्रीत्यात्मकसंवेदना सैवात्र भोगपदेन विवक्षितेति तादृशभोगजननार्हत्वं भोग्यत्वं नानुगतरूपेण निरूपयितुं शक्यम् । एवं यदा यस्य येन तादृशभोगस्तदा तस्य तं प्रति भोग्यत्वमित्येव वक्तव्यम् । तथा च पञ्चमहाभूतानां तज्जन्यपदार्थानां च सर्वेषामपि भोग्यत्वं स्यात् । युक्तं चैतत् । यद्यस्मादुत्पद्यते तस्य स्थितिलयावपि तस्मादेव भवत इति व्याप्त्या पञ्चभूतात्मकदेहस्यापि पञ्चमहाभूततत्कार्याधीनस्थितिकत्वात् महाभूततत्कार्याणामेव भोग्यत्वं स्यात् । तथा च भोगसंपादनं नाम पञ्चमहाभूतेभ्यः स्वाभिलषितपदार्थसंपादनमेवेति सिद्धान्तः सिध्यति । तदर्थं च महाभूतेषु स्वत्वस्थापनमपि सर्वेषामावश्यकम् । न च महाभूतानामनावृतत्वाद्वैपुल्याच्च न स्वत्वावश्यकता कस्यापीति वाच्यम् । प्रकृतिभूतानां तथात्वेऽपि विकृतकार्याणामेव साक्षाद्भोगजनकत्वेन स्वत्वावश्यकत्वात् । अयमेव चार्थपुरुषार्थः । स च कामपूरकत्वात्पुरुषेणार्थ्यत इति पुरुषार्थपदवाच्यो भवति । एवं च भोगाभिलाषुकाः सर्वे जीवा भोक्तारः । भोग्यं च पञ्चमहाभूतानि तत्कार्याणीति ।

तत्र च स्वत्वं विना निष्प्रतिबन्धभोगासंभवात् तदावश्यकता। तदर्थं चाऽऽन्वीक्षिकी दण्डनीतिश्चेत्युपयुज्यते।

## ( स्वत्वविचारः )

तदिदं स्वत्वं किंरूपं, कश्च तत्साधनोपाय इतीदानीं विचार्यते। इदानीं हि जगति भोग्यसंपत्तेरल्पैः स्वत्वाक्रान्तत्वाद्बहूनां जीवननिर्वाहोऽप्यशक्यः संजात इति तदर्थं महान् संघर्षो वरीवर्ति। तत्र राज्ञा साकं लोकस्य धनिभिर्निर्धनस्य स्वामिभिः सेवकस्य पुरुषैः स्त्रीणां प्रबलैर्दुर्बलानामिति संघर्षाकलितेऽस्मिन् जगति सुखस्वास्थ्यादीनां लोप एव समजनि। अस्य मूलनिदानं तु इदमेव स्वत्वामिति। तद्विचारोऽत्रावश्यमेव कर्तव्यतया समापतति। एतन्मूलका एव सोशियालिझम्, बोल्शेव्हिझम्, नाझीझम् इत्यादयः समाजस्वत्ववादाः प्रादुर्भूतास्तदर्थमेतद्विचार्यते किं वा स्वत्वं कश्च तत्साधनोपाय इति।

तत्र स्वत्वं नाम यथेच्छविनियोगाधिकारः। स चेह जगति दुर्लभः। तथाहि तादृशं स्वत्वं स्वामित्वमन्तराऽनुपपन्नम्। स्वामित्वं च स्वत्वं विनाऽनुपपन्नम्। न हि स्वत्वमन्तरा कोऽपि कस्यापि स्वामी भवति। न वा स्वामित्वमन्तरा कुत्रापि कस्यापि स्वत्वं भवति। एवं पतिपत्नीत्ववदुभयोरपि युगपदेवोत्पत्तिः स्वीकर्तव्या। तत्र पतित्वपत्नीत्वयोरुत्पत्तौ यथा विवाहादीनां गमकत्वम्, तथा स्वत्वस्वामित्वयोर्गमकं न किमपि संभवति। यद्यपि मन्वादिभिः स्वत्वगमकत्वेन दायादयः परिगणिताः। तथापि तेऽपि प्राथमिकस्वत्वं विना नोपपद्यन्ते। तथाहि—

> सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।
> प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च॥ मनु १०।११५

इति मनुवचने दायादीनां सप्तानां स्वत्वोत्पादकत्वमुपवर्णितम्। तत्र दायो नाम यद्धनं स्वामिसंबन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यते। तत्र च सिद्धे स्वामिनि तत्संबन्धादन्यस्य स्वत्वं स्यात्। स च स्वत्वं विना न संभवतीति तत्पूर्वपरम्परालोचनायामनवस्थाप्रसङ्गात् प्राथमिकस्वत्वस्यानुपपत्तेः। जयस्य तु बलमूलकत्वादन्ततो बलमेव स्वत्वप्रयोजकं स्यात्। तथा च वाटपाटच्चरैरवलुण्ठितस्यापि स्वत्वापत्तिः। क्रयादेरपि प्राथमिकस्वत्वं विनाऽनुपपत्तेः। अन्यथाऽस्वामिविक्रयस्यापि अदोषत्वप्रसङ्गः। एवमेव लाभप्रयोगकर्मयोगसत्प्रतिग्रहादिषु अनवस्थाप्रसङ्गादिदं प्रथमकस्वत्वस्यानुपपत्तिस्तदवस्थैव। अथ यदि व्यवहारानुसारेणानादिपरम्परया दायादीनां स्वत्वप्रयोजकत्वमङ्गीकर्तव्यम्। तदा तु कुत्रचिद्दायादिषु तस्य सामयिकत्वं जयादिषु बलमूलकत्वं क्रयादिषु व्यवहारानुकूलविनिमयमूलकत्वमिति न कुत्रापि स्वत्वपदार्थस्य सिद्धिः। किंच पञ्चमहाभूतेभ्यः खलु भोग्यसंपत्तिरुपार्जनीया। तत्र च दायादिस्वत्वप्रयोजकहेत्वभावात्स्वत्वासिद्धौ सुतरां तदुपार्जितपदा-

र्थेष्वपि तदसिद्धिः। न हि चोरितस्य धनस्य चौर्यज्ञाने दायादिना कस्यापि स्वामिनः स्वत्वसिद्धिः। पित्रादिभिश्चोरितस्य दायादिना पुत्रादिभिर्लभेऽपि चौर्यज्ञाने पुत्रादीनामनपराधित्वं स्यान्नाम। नैतावता तेषां तत्र स्वत्वं कथमप्यङ्गीकर्तुं शक्यम्। तथा च प्रकृतिभूतेषु भूतेषु स्वत्वासिद्धौ तत्कार्येष्वपि तदसिद्धिरिति न कस्यापि तत्र यथेच्छविनियोगाधिकारः। न च पञ्चमहाभूतानामनावृतत्वेऽपि ततः श्रमेण बुद्धिबलेन धनबलेन वा समुत्पादितायां भोग्यसंपत्तौ तत्तन्मूलकं स्वत्वं स्यादेवेति वाच्यम्। एवमपि चौर्यादिना संपादितभोग्यसम्पत्तावपि तथात्वापत्तेः। नन्वेवं जीवानां भोगासंभवेन स्वाभाविकभोगेच्छापूर्वकप्रवृत्तिमत्त्वं कथमुपपद्येतेति चेन्न। सर्वजीवस्वत्वाभ्युपगमेन तदुपपत्तेः। अत एव न यथेच्छविनियोगाधिकाररूपं स्वत्वम्। किंतु सर्वजीवनिर्वाहपूर्वकमवशिष्टस्यैव भोग्यत्वात् तदंशे यथेच्छविनियोगाधिकार इत्येव तदङ्गीकर्तव्यम्। एवं च भोग्यसंपत्तेर्बुद्धिबलेन वा धनबलेन वा शरीरबलेन वोपार्जने अपि प्रथमतः सर्वेषां जीवनानिर्वाहं सपाद्यैव सा संपत्तिरुपभोग्या न स्वेच्छया इति सिद्धान्तः।

अत एव स्वत्वमिदं लौकिकं वा शास्त्रैकगम्यं वेति संशयमुत्थाप्य शास्त्रैकगम्यत्वे व्यवहारलोपप्रसङ्गभिया लौकिकत्वं स्वत्वस्य प्रतिपादितं मिताक्षरायाम्। तत्तु शास्त्रविहितविनियोगाधिकाररूपम्। अत एव वास्तविकस्वत्वविचारे—

> सर्वं स्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम्।
> श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति।
> स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च।
> आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः॥ मनु १।१००।१०१

इति ब्राह्मणस्य स्वत्वमङ्गीकृतं मनुना। अत्र हि ब्राह्मणपदेन न जातिमात्रब्राह्मणो विवक्ष्यते। किंतु—

> उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।
> स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥ १।१०८
> ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।
> ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये॥ १।१०९

इति पूर्ववचनेषु निर्दिष्टस्य शाश्वतधर्ममूर्तेः सर्वभूतेषु निग्रहानुग्रहसमर्थस्य धर्मकोशरक्षकस्य ब्राह्मणस्यैव विवक्षा। अतो निरिच्छस्य यथाकथमपि शरीरधारणपर्याप्तसंतुष्टस्य निष्परिग्रहस्य ब्राह्मणस्य स्वत्वमङ्गीकृत्य तदुपदिष्टशास्त्रविहितमार्गेण विनियोगाधिकार एवेतरेषां स्वत्वमिति फलति। एतेन—मनुना ब्राह्मणस्यापि स्तेयस्य वक्ष्यमाणत्वादियं स्तुतिरिति कुल्लूकोक्तं परास्तम्। पूर्वोक्त-

ब्राह्मणस्य स्तेयासंभवात्। जातिमात्रस्य तत्संभवेऽपि स्वत्वाभावात्। तस्मान्मिताक्षरोक्तं सर्वं व्यवहारसौकर्यार्थमापाततो दृश्यमानव्यवहारमूलकमेव।

तत्र स्वत्वमेव तावन्निरूप्यते। किं शास्त्रैकसमधिगम्यं स्वत्वमुत प्रमाणान्तरसमधिगम्यमिति। तत्र शास्त्रैकसमधिगम्यमिति तावद्युक्तं गौतमवचनात्—स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोरिति। प्रमाणान्तरगम्ये स्वत्वे नेदं वचनमर्थवत्स्यात्। तथा स्तेनातिदेशे मनुः—

योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्।
याजनाध्यापनेनापि यथा स्तेनस्तथैव सः॥ इति।

अदत्तादायिनः सकाशाद्याजनादिद्वारेणापि द्रव्यमर्जयतां दण्डविधानमनुपपन्नं स्यात्स्वत्वस्य लौकिकत्वे। अपि च लौकिकं चेत्स्वत्वम्। मम स्वमनेनापहृतमिति न ब्रूयात्, अपहर्तुरेव स्वत्वात्। अन्यथाऽन्यस्य स्वं तेनापहृतमिति नापहर्तुः स्वम्। एवं तर्हि सुवर्णरजतादिरूपवदस्य वा स्वमन्यस्य वा स्वमिति संशयो न स्यात्। तस्माच्छास्त्रैकसमधिगम्यं स्वत्वमिति। अत्रोच्यते—लौकिकमेव स्वत्वं लौकिकार्थक्रियासाधनत्वात् व्रीह्यादिवत्। आहवनीयादीनां हि शास्त्रगम्यानां न लौकिकक्रियासाधनत्वमस्ति। नन्वाहवनीयादीनामपि पाकादिसाधनत्वमस्त्येव। नतत्। न हि तत्राहवनीयादिरूपेण पाकादिसाधनत्वम्। किं तर्हि प्रत्यक्षादिपरिदृश्यमानाग्न्यादिरूपेण। इह तु सुवर्णादिरूपेण न क्रियासाधनत्वं, अपि तु स्वत्वेनैव। न हि यदस्य स्वं न भवति तत्तस्य क्रयाद्यर्थक्रियां साधयति। अपि च प्रत्यन्तवासिनामप्यदृष्टशास्त्रव्यवहाराणां स्वत्वव्यवहारो दृश्यते। क्रयविक्रयादिदर्शनात्। किंच नियतोपायकं स्वत्वं लोकसिद्धमेवेति न्यायविदो मन्यन्ते। तथाहि लिप्सासूत्रे तृतीये वर्णके द्रव्यार्जननियमाना क्रत्वर्थत्वे स्वत्वमेव न स्यात्। स्वत्वस्यालौकिकत्वादिति पूर्वपक्षासंभवमाशङ्क्य द्रव्यार्जनस्य प्रतिग्रहादिना स्वत्वसाधनत्वं लोकसिद्धमिति पूर्वपक्षः समर्थितो गुरुणा "ननु च द्रव्यार्जनस्य क्रत्वर्थत्वे स्वत्वमेव न भवतीति याग एव न संवर्तेत" मलपितमिदं केनापि "अर्जनं स्वत्वं नापादयतीति विप्रतिपिद्धम्" इति वदता। तथा सिध्दान्तेऽपि स्वत्वस्य लौकिकत्वमङ्गीकृत्यैव विचारप्रयोजनमुक्तम्। "अतो नियतातिक्रमः पुरुषस्य न क्रतोः" इति। अस्य चार्थ एवं विवृतः—यदा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव द्रव्येण क्रतुसिद्धिर्न नियमातिक्रमार्जितेन द्रव्येणेति न पुरुषस्य नियमातिक्रमदोषः पूर्वपक्षे। राद्धान्ते त्वर्जननियमस्य पुरुषार्थत्वात्तदतिक्रमेणार्जितेनापि द्रव्येण क्रतुसिद्धिर्भवति। पुरुषस्यैव नियमातिक्रमदोष इति नियमातिक्रमार्जितस्यापि स्वत्वमङ्गीकृतम्। अन्यथा क्रतुसिद्ध्यभावात्। न चैतावता चौर्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम्। लोके तत्र स्वत्वप्रसिध्द्यभावात्। व्यवहारविसंवा-

दाच्च । एवं प्रतिग्रहाद्युपायके स्वत्वे लौकिके स्थिते ब्राह्मणस्य प्रतिग्रहादय उपायाः क्षत्रियस्य विजितादयः, वैश्यस्य कृष्यादयः, शूद्रस्य शुश्रूषादय इत्यदृष्टार्था नियमाः । रिक्थादयस्तु सर्वसाधारणाः " स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु " इत्युक्ताः । तत्राप्रतिबन्धो दायो रिक्थम् । क्रयः प्रसिद्धः । संविभागः सप्रतिबन्धो दायः । परिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकारः । अधिगमो निध्यादेः प्राप्तिः । एतेषु निमित्तेषु सत्सु स्वामी भवति । " ब्राह्मणस्याधिकं लब्धमिति " ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणम् " क्षत्रियस्य विजितम् " इत्यत्राधिकामित्यनुवर्तते । क्षत्रियस्य विजयदण्डादिलब्धमसाधारणम् । " निर्विष्टं वैश्यशूद्रयोः " इत्यत्राप्यधिकमित्यनुवर्तते । वैश्यस्य कृषिगोरक्षादिलब्धं निर्विष्टं तदसाधारणम् । शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तदसाधारणम् । एवमनुलोमजानां प्रतिलोमजानां च लोकप्रसिद्धेषु स्वत्वहेतुषु यद्यदसाधारणमुक्तम् " सुतानामश्वसारथ्यं " इत्यादि तत्तत्सर्वं निर्विष्टशब्देनोच्यते । सर्वस्यापि भृतिरूपत्वात् । " निर्वेशो भृतिभोगयोः " इति त्रिकाण्डीस्मरणात् । तत्तदसाधारणं वेदितव्यम् । " यदपि पत्नीदुहितरश्च " इत्यादि स्मरणम्, तत्रापि स्वामिसंबन्धितया बहुषु दायविभागितया प्राप्तेषु लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिवृत्त्यर्थं स्मरणमिति सर्वमनवद्यम् । यदपि मम स्वमनेनापहृतमिति न ब्रूयात्स्वत्वस्य लौकिकत्वे इति । तदप्यसत् । स्वत्वहेतुभूतक्रयादिसंदेहात्स्वत्वसंदेहोपपत्तेः । विचारप्रयोजनं तु—

" यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च " ॥ इति ।

शास्त्रैकसमधिगम्ये स्वत्वे गर्हितेनासत्प्रतिग्रहवाणिज्यादिना लब्धस्य स्वत्वमेव नास्तीति तत्पुत्राणां तदविभाज्यमेव । यदा तु लौकिकं स्वत्वं तदाऽसत्प्रतिग्रहादिलब्धस्यापि स्वत्वात् तत्पुत्राणां तद्विभाज्यमेव । " तस्योत्सर्गेण शुध्यन्ति " इति प्रायश्चित्तमर्जयितुरेव । तत्पुत्रादीनां तु दायत्वेन स्वत्वमिति न तेषां दोषसंबन्धः ।

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ॥
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥ इति ।

मनुस्मरणात् । अत्र च मिताक्षरायां स्वत्वस्य लौकिकत्वं लौकिकार्थक्रियाकारित्वादेव प्रतिपादितम् । तदपि सिद्धायां शास्त्रव्यवस्थायाम् । यदा हि शास्त्रेण वृत्तिनियमनं विधीयते, तदैव तत्तदुपजीविकायास्तेषां तेषां स्वत्वप्रयोजकत्वं नान्यथेति । तथा च शास्त्रतात्पर्यपर्यालोचनपरत्वेन मिताक्षराकाराणां सिद्धान्तः सूपपद्यते । यदा तु शास्त्रस्य मूलभूततत्त्वस्य चिन्ता तदा नैकस्याप्युपायस्य स्वत्वप्रयोजकत्वं सिध्यति । तथा सति जीवननिर्वाहलोपप्रसङ्गः । अतस्तदर्थं सर्वेषां सर्वत्र स्वत्वमङ्गीकृत्य पश्चात्सर्वेषां भोग्यवस्तुसंपादनार्थं प्रयत्नव्यवस्थायां यस्य यद्भोग्यवस्तुसंपादने विनियोगः

स्तस्य तादृशः प्रयत्नस्तद्भोग्यवस्तुनि स्वत्वप्रयोजक इत्यकामेनापि स्वीकर्तव्यम्। पाश्चात्यसमाजस्व-त्ववादेषु भोग्यसंपन्ने राष्ट्रीयस्वत्वाक्रान्तत्वेऽपि भृतिरूपेण दीयमाने द्रव्ये तु व्यक्तिस्वत्वमभ्युपगम्यते एव। एतावानत्र विशेषो यद्दीयमानं द्रव्यं व्यक्तेर्यथेच्छविनियोगार्हम्। अस्मन्मते तु उत्पाद्यमानं वस्तुजातं न व्यक्तेरिच्छया विनियोगार्हम्। किंतु सर्वजीवनिर्वाहं पर्यालोच्यैवावशिष्टस्यैव जीवन-विनियोग इति। अत्रैव च त्यागरूपं धर्मतत्त्वं प्राथमिकमुद्भवति। यत्त्वनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकाररूपपरिग्रहस्य स्वत्वप्रयोजकत्वम्, तदपि नृपानुज्ञयैव। तत्रापि क्षत्रियस्य विजितमिति वचनात् राजसत्वाक्रान्तत्वात्। अन्यथाऽऽरण्यकविभागतदधिकारितत्संपत्तिसंरक्षणविधानस्य वैयर्थ्यापत्तेः। तस्माद्व्यवहारसौकर्यार्थं नैसर्गिकजीवनेच्छाप्रयोज्यं जीवननिर्वाहप्रयोजकं स्वत्वं तु सर्वेषामविप्रतिप-न्नमेव। उक्तं च—

यावद्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति॥ इति।

तत्सिद्धं भोग्यवस्तुसंपादनसमर्थेनापि स्वनिर्वाहपर्याप्तमेव स्वत्वेन परिग्राह्यम्। अवशिष्टं त्वितरेषां कृते संरक्षणीयं विनियोक्तव्यं चेति। एवं च समाजस्वत्ववादानतिरिक्तमेव वैदिक-धर्मशास्त्रीयं स्वत्वं फलतः सिध्यति।

## ( ईशस्वत्ववादः )

एवमपि भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन न त्यागरूपस्य धर्मस्य प्रचारः संभवति। भोगेच्छायाः प्राबल्यात्। भोगस्य निरवधित्वात्। क्षेत्रकलत्रादीनां सुपाकत्वसौन्दर्यसद्गुणलो-भनादीनां भोग्यवस्तूनां कलहजनकत्वस्य तादवस्थ्यात्। नहि सुपाकमेकं क्षेत्रं सौन्दर्यसद्गुणवती स्त्री वाऽनेकेषां नाभिप्रेता भवति। स्वस्य तदलाभे इतरस्य तल्लाभे च पुनः कलहमात्सर्यद्वेषादीनां प्रादुर्भावः। किंच स्वत्वेनाभिमतस्य द्रव्यस्य यथेच्छविनियोगस्वातन्त्र्ये पूर्वोक्तकलहावसरे दुर्नीतौ वा तद्विनियोगसंभवेन पुनश्च दुःस्वनयत्वमेव जगतस्तदवस्थमेव। अतश्च विनियोगपद्धतिरपि निर्धारणीया स्यात्। सा च पाश्चात्यवादे राजशासनाधीना। तच्च राजशासनं लोकमताधीनं, तत्र येषां बहुमतं तद्विरुद्धानामितरेषां [illegible] अत्याचार एवेति क्व नु खलु सर्वस्वातन्त्र्यवादस्यावसरः। कथं वा [illegible] सुधानिर्विवादः। किंचेतरेषां कृते त्यागप्रसङ्गे इतरव्यवहा-रसंरोधन निरुद्ध एव भवति। तत्र नेदृशं शाठ्यं तदा तु शठं प्रति शाठ्यमिति न्यायेन [illegible] प्रादुर्भावः। [illegible] कृते [illegible] कर्तव्य [illegible] न [illegible] विचारदृष्टि [illegible]। [illegible] न [illegible] तदपि [illegible] पुनश्च तदवस्थैव मुद्धतः (?)।

दृश्यते चेयं पाश्चात्यजर्मनेतिहासात्। हिट्लरमहोदयात्पूर्वं बहुमतानुसारेण प्रचलितेऽपि राजशासने हिट्लरमहोदयेन तत् स्वायत्तीकरणं तद्विरोधकानामुपर्यत्याचाराश्च कृता इति नाविदि तमिदम् तथैव रशियादेशेऽपि लेनिनूस्टॅलिनूमहोदययोरितिहास एतद्विषये सुप्रसिद्ध एव। तथा च न कलहशान्तिः सर्वेषां स्वातन्त्र्यलाभो वा। किंच केषां किलेदं बहुमतम्। किमज्ञानां वा तज्ज्ञानां वा, सर्वसाधारणं वा? नाऽऽद्यः—अनर्थावहत्वात्। नान्त्यः--अनवस्थानात्। न द्वितीयः--तथाऽनङ्गीकारेणानुपलब्धेः। स्वीकृतेऽपि तथा पुरुषबुद्धीनां वैचित्र्यात् अनवस्थाप्रसङ्गात्। मतग्रहणसमये च व्यावहारिकार्थिकादिसंबन्धानादरस्य दुष्करत्वेन यथावन्मतग्रहणस्याप्यसंभवात्। किंच योऽयमितरजीवाना कृते त्याग आदरणीयस्तत्र कर्तव्यताबुद्धेरुत्पादः, उताधिकारबुद्धेः। (हक्केतिपरिभाषायाः) तत्राधिकारबुद्धेरुत्पादे तु परस्पराविश्वासमूलकशाठ्यप्रसङ्गसंभवः। कर्तव्यताबुद्धिस्तु स्वभोगालिप्सोर्जीवस्य दुरुपपादा। अत एव गोजाविमहिषादिश्वापदाना कृते न क्वापि त्यागबुद्धिरुदेति। यावत्स्वार्थमेव तेषां परिरक्षणं पाश्चात्यराष्ट्रे दृश्यते। न हि वृद्धा निवृत्तक्षीरा गौस्तत्र परिपालनार्हा। अयमेव न्यायो वृद्धेषु मानुषेष्वपि परिपाल्येत चेत्तत्र किमुत्तरम्? एतत्सर्वं पर्यालोच्यैव प्राचीनैरस्मत्पूर्वजैरान्वीक्षिकीसिद्धः सर्वान्तर्यामीशस्वत्ववादः स्वीकृतः सर्वभूतहितार्थाय। तदुक्तम्—

> ईशा वास्यमिदं सर्वं यत्किंच जगत्यां जगत्।
> तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥ इति ईशावास्य१मन्त्रः।

तत्रेशस्वरूपं तु "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च" बृ. उ. २।३।१ इत्यत्र बृ. उ. ३।७।२ इत्यत्र सर्वान्तर्यामिब्राह्मणे च समष्टिरूपेण सर्वान्तर्यामित्वेन च निर्दिष्टं ब्रह्माण्डमेव। अत एव—

> "सरित्समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमेदनन्यः"

इति भक्तिमार्गसिद्धान्तोऽपि सिध्यति। एवं च सर्वान्तर्यामिसमष्टिरूपपरमेश्वराराधनायैव जगदिदं समुत्पन्नमिति तदाराधनमेव परमं कर्तव्य मनुष्याणाम्। अतः कथमपि सपादितस्य भोग्यजातस्येशाराधनायैव विनियोगो न स्वार्थायेति तदवशिष्टमेव भोक्तव्यमिति नियमो धर्मशास्त्रदृष्ट्या सिध्यति। वेदेऽपि—

> "तं पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः।
> नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिवः॥"

इति वाजसनेयिसंहितामन्त्रेऽस्माकं धनपुत्रभ्रातृकलत्रादि सर्वं जडचेतनसाधारणं वस्तुजातं यज्ञायैवेति तमेव यज्ञं वयमनुगच्छेम इति प्रार्थिता देवाः। यज्ञश्च देवतोद्देशेन द्रव्यत्यागः।

न तु होमः । त्यक्तस्याग्नौ प्रक्षेपो होमः । इति यागहोमयोः स्वरूपभेदात् । तत्र होमस्वरूपस्यापि वेदेन प्रतिपादितत्वेऽपि न प्राधान्यम् । किंतु त्यागस्यैव । अत एव गीतासु—

" यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥
देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥
इष्टान्भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ ३।९–१३

इत्यादि, अत्र च यज्ञशब्देन देवतोद्देशेनाग्नौ द्रव्यत्यागात्मकहोमस्यैव ग्रहणमिति ये नाम मन्यन्ते। तेषां पाण्डित्यं तु न वयं खण्डयामः । परंतु युद्धात्परावृत्तस्यार्जुनस्य तत्र प्रवृत्त्यर्थं प्रवृत्तस्य भगवतो युद्धेन होमसंपादने कीदृशो ह्याशय इति न विद्मः । यागस्वरूपस्वीकारे तु—

" द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे " गी. ४।२८

इत्युक्तरीत्या

" ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।
वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ॥ " मनु ११।२३५

इति मनूक्तेर्युद्धेनापि तपोयज्ञसंभवात्तदर्थं कर्म समाचरेति युक्त एवोपदेशः । एवं च राष्ट्रीय-स्वत्ववादेऽपि यस्मिन्कर्मणि यस्य नियोगस्तेन तत्कर्म राष्ट्रार्थं यथाऽवश्यमेव कर्तव्यम् । फलं तु सर्व-राष्ट्रस्य । कर्तुस्तु केवलं स्वजीवननिर्वाह एव । तथाऽन्यापि स्वयोग्यतानुसारेण प्राप्तं कर्तव्यं परमेश्वरा-राधनाय कर्तव्यमेव न फलाशया । जीवनं तु समष्ट्या भविष्यत्येवेति तात्पर्यमत्र । इयान् विशेषो यदेकत्र राजदण्डभयादपरत्र कर्तव्यबुद्ध्या ।

" स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः " गी. १८।४६

इति भगवदुक्तेरप्ययमेव तात्पर्यम् ।

" यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । गी. १८।४६

इति पूर्वार्धे सर्वान्तर्यामिस्वरूपनिर्देशात् । तत्र राजशासनभयापेक्षया वयमान्वीक्षिकीसिद्ध-सर्वान्तर्यामिचेतनाराधनमूलिका कर्तव्यबुद्धिरिति युक्त एवायमीशस्वत्ववादः । अत्र चाधिकं प्रमाण-वचनजातमाकरेभ्योऽवगन्तव्यम् । विस्तरभयान्नेह प्रपञ्च्यते ।

## ( दुरवस्थापरिहारः )

नन्वेवमिदानींतनविनायासजीवनेनैव ब्राह्मणानां कर्तव्यनिष्ठालोपः स्यात् । तथा च राष्ट्र-हानिः । किंच, परमेश्वराराधनपक्षे सर्वेषां प्रवृत्तिः पारलौकिकफलायैव स्यात् । तथाच धूर्तानां बाह्यानां म्लेच्छयवनादीनामनायासेनैव जीवननिर्वाहस्तदुपरि तेषामाक्रमणं चेति प्रत्यक्षमेवेदानीं-तनपरिस्थित्या । किंच परमेश्वरस्वत्ववादे दैववादप्राबल्यमूलकाकर्मण्यतापि प्रसरेत् । यत्किल भोग्य-सम्पत्तेरुपार्जनं जीवननिर्वाहाय तत्र चेत्परमेशसत्तायाः कारणत्वं, तदा त्वलसोऽपि कश्चन परस्वपुष्टो भवेत् । स्वाभिमतभोग्यसम्पत्तेरुपार्जनाय स्वातन्त्र्यमपि न स्यात् । तद्वरं स्वातन्त्र्यात्यन्ताभावापेक्षया राजशासन-परस्परापेक्षादिनियमितस्वान्त्र्यवादपक्षः । इति चेन्न । बाह्यधूर्तशोधनार्थमेव राजदण्ड-स्वीकारात् धर्मकञ्चुकिशोधनार्थं च । अकर्मण्यतायास्तु कर्तव्यबुद्ध्यैव निरस्तत्वात् । भोग्यसम्पत्ते-रुपार्जनार्थं वृत्तिनियमनेऽपि तल्लाभस्य सर्वेषां सुकरत्वात् । अन्यथा राष्ट्रस्वत्ववादेऽपि तद्दोषस्य तादवस्थ्यात् । नहि राष्ट्रस्वत्ववादे सवः सर्वं कर्तुं शक्यम् । न वाऽकर्मण्यता । तदगत्या यस्मिन् कर्मणि यस्य नियोगः । राष्ट्रार्थं तस्मिन्नेव तेन व्यापारयितव्यमिति अभ्युपगन्तव्यम् । नन्वेवमपि वंशपरम्परानियमनं तु न भवतीति स एव व्यायामस्यावसर इति चेन्न । जातिविचारावसरे एतस्य विचारणीयत्वात् । जातीनां तत्तत्कार्यकारित्वयोग्यताभावेऽपि शासकस्य राष्ट्रजीवननिर्वाहार्थम् षामपि तत्कार्यकरणे विनियोगाधिकारात् । अत एव जातिमात्रब्राह्मणस्य विष्टिकर्मणि नियोज भिहितमर्थशास्त्रे महाभारतनीतौ च—

> जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः ।
> एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥
> अश्रोत्रियाः सर्व एव सर्वे चानाहिताग्नयः ।
> तान् सर्वान् धार्मिको राजा बलिं विष्टिं च कारयेत् ॥
> आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः ।
> एते ब्राह्मणचाण्डाला महापथिकपञ्चमाः ॥ म. भा. शां. ७६।४-६

तत्रैव पुनः—

> विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथंचन ।
> नियम्याः संविभज्याश्च धर्मानुग्रहकारणात् ॥ ११ ॥

इति। एवं चोपर्युक्तदुरवस्थापरिहारसंभवे नेशस्वत्ववादे कापि हानिः। राष्ट्रस्वत्ववादेऽपि कण्टकशोधनार्थं शासनसंस्थाया आवश्यकत्वं त्वकामेनाप्यूरीकर्तव्यम्। सौन्दर्यसद्गुणलोकैषणामूलककलहस्यान्यथा परिहारासंभवात्।

## ( समाजसंरक्षणे वासनानियमनस्याऽऽवश्यकता )

इदमत्र तात्पर्यम्—स्यान्नाम स्थूलभोग्यसंपत्तौ समाजस्वत्वस्वीकारेण समाजस्यानवसन्यवस्था। नैतावता समाजस्वास्थ्यं संभवति। स्थूलभोग्यसंपत्त्यपेक्षयापि सूक्ष्माया वासनारूपभोग्यसंपत्तेरवशेषात्। तस्याश्च साम्येन व्यवस्थापनस्याऽऽवश्यकत्वात्। न ह्येकस्य यत्र रुचिस्तत्रैवापरस्य। नापि वा सर्वत्र सौन्दर्यादिकल्पना समाना। न वा सर्वोऽपि भूभागः सर्वविधभोग्यसंपत्त्युत्पादकः। अत एव मृत्तैलोत्पादकभूभागविषये इदानीमपि राष्ट्राणां कलहो दरीदृश्यते। न च तैलं जीवननिर्वाहायात्यावश्यकम्। यन्त्रार्थं हि तदुपयुज्यते प्राधान्येन। तद्वरं महायन्त्रप्रवृत्तिनियमनम्। तथापि भोग्यसंपत्तेरतिलोभात् वासनायाश्च अनियन्त्रणान्न तत्सुकरं भवति समाजस्वत्ववादिनामपि। भवभावितादधिकतरं भोग्यमुत्पाद्य तदुपभोग एव परमं श्रेय इति समाजस्य ध्येयं यावन्न परिहृतं। न वा वासनानिग्रहो भवति। तावत्समाजस्वत्वस्वीकारेऽपि न स्वास्थ्यसंभावना। ईशास्त्ववादे तु परमेश्वरेणादृष्टवशादेवास्माकं जननात् तदिच्छानुसारेण तत्रत्यभोग्यसंपत्तिभोग एवास्माकमुचित इति स्वान्तःशान्तिस्वास्थ्यसंभवः। किंच—

तस्य वासनानियामकत्वाभावात् । अत एव न समुदितं त्रयम् । इदानीतनपाश्चात्यराष्ट्रवदनर्थावह-त्वात् । तस्मादेतदतिरिक्तमेव सारासारविचारात्मकमान्वीक्षिकीज्ञानं तत्त्वज्ञानापरपर्यायं वासनानियामकं विद्यात्वेनाभ्युपगन्तव्यम् । अत एव चाणक्येन—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥

इति तस्याः सर्वोपकारकत्वेन माहात्म्यं स्पष्टीकृतम् । एवं च भोग्यसंपत्तेर्यस्याः कस्या अपि अणुबॉम्सदृक्षाया उत्पादसंभवेऽपि भोगत्वेनाऽऽविष्कारविषये उपयोगविषये च नियन्त्रणमान्वीक्षिक्यैव कर्तुं शक्यम् । तामन्तरा वैज्ञानिकवासनानियन्त्रणासंभवात् । एतेन सर्वे भावा व्याख्याताः । कथंचन वैज्ञानिकैस्तादृशान्वेषणेनाऽऽविष्कारे कृतेऽपि नीतिज्ञाना वासनानियन्त्रणाया नोपयोगः स्यात्तस्या भोग्यसंपत्तेः । परं च तत्रापि तादृशानियन्त्रणाभाव एव । एवमेव भक्ष्यपेयादिभोग्यसंपत्ते-रपि गतिः । अतः शुद्धतत्त्वज्ञानात्मकान्वीक्षिकीप्रचार एव वासनानियामकत्वात्समाजस्वास्थ्यसंपादकः इति निपुणं परीक्षणीयं परीक्षकैः । न हि शारीरिकशास्त्रेण रोगनिवृत्त्युपायत्वेन मांसमद्यभक्षणं विहितमपि जीवननिर्वाहसाधनत्वेन तदङ्गीकर्तव्यमिति राजाज्ञा भवितुमर्हति । एवमेव सर्वत्र पर्यालोचनीयमान्वीक्षिक्या । अतः स्थूलराष्ट्रस्वत्ववादापेक्षया समष्टिरूपेण तदन्तर्यामीशस्वत्ववाद एव वासनानियामकत्वात्सुखस्वास्थ्यनिदानमिति सिध्यति ।

## ( भोक्तृभोग्यत्वविचारः )

किंच स्वस्वामिसंबन्धवद्भोक्तृभोग्यत्वसंबन्धोऽपि परस्परसापेक्ष एव । नहि भोग्यमन्तरा भोक्तृत्वम्, न वा भोक्तारमन्तरा भोग्यत्वम् । एवं च भोक्तृभोग्यत्वयोरन्योन्यसापेक्षत्वे स्त्रीपुरुषादिचेतन-निष्ठयोर्भोक्तृभोग्यत्वयोः परस्परसामानाधिकरण्यमपि सिध्यति । तथा च यस्य यन्निरूपितं भोक्तृत्वं तस्य तद्भोग्यस्य स्वयं तन्निरूपितभोक्तृत्वाद्भोग्यत्वमपि । यथा हि पुरुषो भोक्ता तथैव स्त्र्यपि भोक्त्रीति तन्निरूपितभोग्यत्वमपि पुरुषे वर्तते । तथैव स्त्रिया अपि स्वयं भोक्तृत्वं पुरुषनिरूपितभोग्यत्वं च । एवं चोभयोरपि भोक्तृत्वं भोग्यत्वं च सिध्यति । तत्र भोक्तृत्वेन भोग्यसंपत्तेरुपभोगार्थं प्रयतितव्यमुताहो भोग्यत्वेन भोगदानार्थं प्रयतितव्यमिति संदेहे भोगदानार्थमेव सर्वैः प्रयतितव्यमिति पक्ष एव श्रेयान् । भोक्तृत्वं मत्वा भोगसंपादनप्रयत्ने हि परस्परमहमहमिकयाऽधिकादधिकतरं भोगमेवाभिलषेत् भोक्ता । न तु भोग्यवस्तुनो भोक्तृत्वमूलकभोगदानम् । उपभोगदानपक्षे तु स्वात्मानं भोग्यं मत्वाऽधिकादधिकतरभोगदाने तु स्वयमप्युपभोगान् लब्ध्वा परानपि सुखिनः कुर्युर्जनाः । इदमेव त्यागस्य प्रेम्णो वासनानियन्त्रणस्य च मूर्तं स्वरूपं यदधिकादधिकतरपरोपभोगदानम् । अनेन च परस्परसंघर्षोत्पादकोऽधिकारवादोऽपि ( हक्कवाद ) निरस्तो भवति । इदानीं चाधिकारवादेन कीदृशो

जनानामन्योन्यसंघर्षः प्रचलतीति नातिरोहितं विदुषाम्। स्त्रीपुरुष–पितापुत्र–स्वामिभृत्यादीनामधिकारवादेनैव परस्परसंघर्षः प्रादुर्भवति। स च सर्वदुःखनिदानम्। तदपेक्षया कर्तव्यवादेन परस्परमधिकादधिकतरोपभोगदानायैव स्वात्मानं भोग्यं मत्वा सर्वेऽपि प्रवर्तेरन् चेत् सर्वेऽपि सुखिनो भूत्वा जगद्यात्रां क्षेमेणैव निर्वहेरन्। अत एव पुरुषस्य देवपशुत्वेनोपवर्णनं वेदे सगच्छते। यत्तु "आत्मनस्तु कामाय सर्वं प्रियं भवतीति" आत्मभोक्तृत्ववादमूलान्यौपनिषदवाक्यानि प्रदर्श्य भोक्तृत्ववादसमर्थनम्। तत्तु–उपनिषत्तात्पर्यानभिज्ञानात्। तथाहि यस्याऽऽत्मनो भोक्तृत्वं सर्वैरप्यभिमन्यते तस्याऽऽत्मनः स्वरूपं तु कैरपि न ज्ञायते। अतस्तदेव प्रथमत आलोचनीयम्। अत एव अन्ते "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति आत्मदर्शनं तदुपायविषयश्च विहिताः। यथा हि पशुपुत्रकलत्रवर्जितस्याऽऽत्मा देहरूपः। स एव च तद्युक्तस्तदभिमानित्वात्तद्रूपो भवति। एवं राष्ट्राभिमानित्वे राष्ट्ररूपः, ब्रह्माण्डाभिमानित्वे तु ब्रह्माण्डरूपोऽपि भवितुमर्हतीति भूमरूपाभिमानित्वमेव युक्तं सुखरूपत्वात्। "यो वै भूमा तत्सुखं यदल्पं तद्दुःखमिति" श्रुतेः। एवं च कुटुम्बाभिमानित्वे कुटुम्बस्य सुखेन सुखित्वं दुःखेन दुःखित्वमिव राष्ट्राभिमानित्वे तदीयसुखदुःखाभ्यां सुखित्वदुःखित्वे च स्वभावत एव स्याताम्। एवं जातिकुलाद्यभिमानित्वेऽपि। स चायमुत्तरोत्तरव्यापकाभिमानो यथा जनतायां प्रादुर्भवेत् तथैव व्यवहारनीतिरवलम्बनीया। सा च व्यापकाभिमाने व्याप्यस्य त्यागरूपेणैव संभवतीति स्वात्मानं भोग्यं मत्वा समष्टेः कृते अधिकादधिकतरभोगप्रदानमेव परमं कर्तव्यमित्येव सर्वव्यष्टीनामुद्देश्यं निश्चेतव्यम्। अत्र च त्यागभोगप्रेमदानादिधाराप्रधर्मार्थानामनार्थैनैव सिद्धिरिति समाजस्वत्ववादापेक्षया अधिकारवादापेक्षया चेशस्वत्ववादः कर्तव्यतावादश्च समाजसाम्यमुपकरोति। एतेन—

अत्रावसरे आधुनिकसमाजस्वत्ववादानां स्वरूपप्रदर्शनमपि किंचित्प्रदर्शयितुमर्हतीति तदर्थं श्री. गोविन्द,रामचन्द्र, राजोपाध्ये बी.ए. सातारा इति महोदयैः प्रेपितान्निबन्धात्तं भागमत्रोदाहरामः। निबन्धोऽयं महाराष्ट्रभाषामयोऽप्यत्र संस्कृतेन भाषान्तरित एवोदाह्रियते । स यथा—

## ( पाश्चात्यसमाजरचनायास्तत्त्वान तेषां समुत्कर्षश्च )

कानि किल पाश्चात्यसमाजरचनायास्तत्त्वानि कथं वा तेषां परिवर्तनमिति पर्यालोचनीयं चेत्पाश्चात्यानामितिहासे दृष्टिक्षेपः कर्तव्यः । भारतीय–समाजरचनायास्तत्त्वं तु आवर्षसहस्रेभ्य एकरूपमेव न परिवर्तितं दृश्यतेऽद्यावधि। इदानीं तु तैः साकं संघर्षेण तत्र कदाचित्परिवर्तनं स्यादिति संभाव्यते । तदिदं परिवर्तनमिष्टं वाऽनिष्टं वेति निर्धारणे तु पाश्चात्येतिहास एव तत्रानुमाने प्रमाणं स्यात् । पाश्चात्यसमाजरचनेतिहासेन तत्र तत्र कथं वा परिस्थित्यनुसारेण समुत्कर्षः समजनीत्यपि पर्यालोचयितुं शक्यं स्यात् । ततश्च स्वीयसमाजरचनातत्त्वानामपि मूल्यनिश्चयो भवेत्सुकरः ।

समाजस्य वन्यावस्थायां काम एव परमः पुरुषार्थो भवति । तत्रस्था व्यवहाराः सर्वेऽपि स्वेच्छामात्रेणैव प्रवर्तन्ते । अर्थात् तत्र बलमेव न्यायनिर्णायकत्वेन मन्यते । अत्यन्तप्राथमिकावस्थायां तु शारीरबलादेव वैयक्तिकव्यवहाराणां निर्णयः । यदा त्वग्रेऽपत्यप्रेमाज्ञाधारकत्वादिमनोवृत्तीनामुदयः, तदा स्वतःसिध्दमनावृतपरिग्रहमूलकं स्वत्वमेव बलमभिमतं भवति । तेन च सर्वापेक्षया बलिष्ठस्यैव भूपतित्वमिति स एव सर्वत्र स्वत्वं प्रस्थापयति । अर्थादेव तच्छासनमेव न्याय्य इति तस्याभिनिवेशो भवति । परंतु तस्य बलात्कारमूलकेन यदेकतन्त्रीयशासनेनेतरेषां यथेच्छव्यवहारस्य प्रतिबन्धो भवतीति ततः किंचिन्न्यूनबलास्तादृशशासनेन विरुध्य तत्स्वायत्तं यथा स्यात्तथा प्रयतन्ते । तत्र च साफल्ये त्वेकस्य शासनमनेकेषु बलिष्ठेषु प्रतिष्ठत इति बलिष्ठवर्गशासनपद्धतिः प्रभवति । इदमेव शासनप्रसरणं शासनसमुत्कर्षस्य प्रथमावतारः । इत्थं प्रचलिते खलु शासनसमुत्कर्षे इदमपि दृष्टिपथमायाति लोकानां यत् कामरूपपुरुषार्थे साधयितव्येऽर्थोऽप्यत्यन्तावश्यकं साधनमिति । किं बहुना कामो ह्यर्थाधीन एव। समाजस्य यस्यां कस्यामप्यवस्थायां यथाकथमप्यर्थस्यास्तित्वं तु वर्तत एव । परंतु समाजस्य वन्यावस्थाया यथा यथा समुदयो भवति तथा तथाऽर्थस्योत्तरोत्तरमधिकमेव माहात्म्यं दृष्टिगोचरो भवतीत्यन्ततस्तस्यापि पुरुषार्थत्वमायाति । ततश्चोत्तरोत्तरमर्थमाहात्म्यमेताद्भवति यदन्ततस्तस्यापि शास्त्रमेकं सिध्यति। ततश्च कल्पिततच्छास्त्रनियमानुसारेणैव समाजस्य सर्वेऽपि व्यवहाराः प्रवर्तन्ते ।

आंग्लदेशस्येतिहासपर्यालोचनायामिदमेव दृष्टिपथमायाति यत्प्रथमतो राजैव सर्वशासनप्रणेतेति । ततश्च तत्रत्यैस्तन्न्यूनबलवद्भिर्मिलित्वा राज्ञः सकाशात्तच्छासनाधिकारो बलादपहृतः । ततश्च केनचित्कालेन प्राकृतसमाजेषु विद्यमानैरुद्यमशीलैर्वाणिज्यवृत्तिमद्भिरग्रेसरैर्भूत्वा स्वातन्त्र्यसमतारूपत-

त्त्वपुरस्कारेण समाजक्रान्तिर्विहिता । तेषामयमाशयो यत्सर्वविधमैहिकं सुखं विषयोपभोगश्च मनुष्य-मात्राणामभिलषित इति तत्प्राप्तौ सर्वेषामधिकारः । तदनुसारेण तदविगमे त्वितरेषां तादृशाधिकारः केनापि नावष्टब्धव्य इति तत्र जागरूकता स्वीकर्तव्या । राजशासनस्य त्विदमेव कर्तव्यं यत्तथा नियन्त्रणं नाम । तथा च व्यक्तिशस्तादृशोपभोगप्रयत्ने सत्यनायासेनैव समाजस्यापि हितं भवति । एवमधिकारतत्त्वस्वीकारेण स्वतःसिद्धस्वत्ववादादधिकारवादे सङ्क्रमणं सञ्जातम् ।

सोऽयमधिकारतत्त्ववादोऽष्टादशशतके प्रसिद्धतमफ्रेंचराज्यक्रान्तौ प्रादुर्भवन् सर्वत्र जगति प्रसृतः । प्रथमतोऽयममृतमिव गुणकारित्वेन समतोऽपि कालान्तरेण खलु स्वीयं विषमयं स्वरूपं वमति स्म । प्रारम्भे स्वातन्त्र्यसमतातत्त्वयोरापातरमणीयत्वेऽपि अन्ततः समाजे विषमतोत्पादकत्व-मेवानुभूतम् । सृष्टौ हि मूलत एव विषमता वर्तते । दृश्यते चैको बुद्धिमानपरो निर्बुद्धिः । एकस्य परिस्थितेरानुकूल्यमपरस्य प्रातिकूल्यमित्यत्र सर्वत्र प्रसृताया विषमताया सर्वेभ्यः समानावसरप्रदानेन तत्र वृद्धिरेव स्यादिति नैसर्गिकमेव । नैसर्गिकगुणानुसारेण किंचिदधिकद्रव्यलाभे त्वेकस्य तद्बलाद्-द्रव्यबलाच्चोत्तरोत्तरं ततोऽप्यधिकाधिकद्रव्यलाभेनोत्तरोत्तरमतीव धनित्वमितरस्य तद्विपरीतं दारि-द्र्यमपि उत्तरोत्तरमधिकं भवतीति निश्चप्रचमेव । एवं चैकतः केचनातीव धनवन्तः । अन्यतश्च सहस्रावधिनिर्धनाः । येषामुपजीवनमप्यसुकरमिति विषमतावृद्धिः सञ्जाता । ततश्च निर्वृत्तिकानां निर्धनानां धनिभिः सह साधिकप्रवसायावष्टम्भादिद्वारा ( संप ) सर्वदा कलहः प्रवृत्तः । तत्र पुरुषाणामिव स्त्रीणामपि दैन्यावस्था सम्प्राप्ता । अन्ततो गत्वा ऐहिकसुखलाभायुद्दिष्टमेतेषां, तदपि दुष्प्रापं समजनि । एवं च समाजस्थैर्याभावेन परमार्थवार्ता वा आत्मोन्नतिवार्ता वा दूर एवावस्थिता । तथा चेतरसमाजस्य भोग्यसंपत्तिमपहृत्यापि इयमवस्था चेदस्य समाजस्य तदा जागरूकत्वेनेतरसमा-जेन तदपहरणं चेदवरुद्धं तदान्तःकलहो वा निर्वृत्तिकत्वं वा कियत् स्यात् । कथं चेतरसमाजैः सर्वोऽस्य समाजस्य निर्वाह इति तु कल्पनातीतमेव । अत एव चेदं प्रचलितं महायुद्धमिति नातिरोहितम् ।

एते सर्वेऽप्यनर्था अधिकारवादमूलका एवेति भूयोऽपि किंचिद्विचारयामः । अयमधिकारवादो हि अहङ्कारवृत्तिमूलक एव प्रादुर्भवति । ममायमधिकार इत्युक्ते अहमपि कश्चनास्मीति अहङ्कारवृत्तेः पुरस्कारो निश्चय एव । ततश्च व्यक्तीनामन्योन्यविरोधः । सोऽयं विरोधः समाजहिताहितदृष्ट्या ये केचन वर्गास्तेष्वपि प्रसरति । तत एव च समाजे प्रेम्णः शान्तेश्च भङ्गः । सर्वोऽपीतरान् पराक्रम्य स्वाभिवृद्धिसिद्धये प्रयतते । ततश्चाहमहमिका स्पर्धा, संघर्ष इत्यादि वृद्धिमायाति । अत्र ये परावर्तन्ते तेषामतीव क्लेशाः । येऽप्यग्रेसरास्तेषामपि जीवितं सुखशान्तिमयं स्यादित्यपि नास्ति । प्राप्तप-रिस्थित्यां तेऽपि पुनः कलहरता एव । एवमेव सातत्येन समाजान्दोलनं प्रचलति । ततश्च शान्त्या सुखेनस्थितिर्न तत्र लभ्यते । प्रत्युत धनिनां धनिकानामर्थलाभेन प्राबल्यं प्रभवति । वस्तुतस्तु

मनुष्यं कार्यप्रवणीकुर्वाणानां मनोवृत्तीनामुत्तमाधमभावनिर्णायकश्रेणिस्तु पाश्चात्यनीतिशास्त्रे एवं प्रतिपाद्यते । औदार्यदयापूज्यभावादिमनोवृत्तीनां श्रेणिः प्रथमोच्चतमा च । आत्मोन्नतेरिच्छेति द्वितीयोच्चतरा । स्वातन्त्र्यस्वस्वत्वायतिलोभापादकमनोवृत्तीनां तृतीयोच्चा । विषयसुखेच्छेति चतुर्थ्यधमा अधिकारवादेनाहंकारपुरस्कारेण च विकसितानां मनोवृत्तीनामवधिस्तु स्वातन्त्र्येच्छैव तृतीया श्रेणिः उपरितनश्रेणिद्वयं तु न तन्मर्यादाभूतम् । तस्य मानवतायाः पूर्णस्वरूपद्योतकत्वात् । अयमत्र सारांशो यदधिकारवादेन मानवतायाः पूर्णस्वरूपस्यावतार मार्ग एव रुद्धो भवति । एवं चोत्कर्षापेक्षया विषयसुखेच्छासमुद्देशेनापकर्षमूलिकाऽधोगतिरेव मानवानां भवतीति ।

तदेवं प्राथमिकी समाजरचना स्वतःसिद्धस्वत्वमधिकारबुद्धिश्चैतद्द्वयमूलिकैव । अयमेव "सरंजामशाही" वादः,सेनाग्रहारिशासनवादः। अत्र चाधिकृता अनधिकृतेष्वत्याहितमाचर्य,तान् निष्पीडयामासुः। तत एव व्यक्तिस्वातन्त्र्यतत्त्वोदयः। तच्च समेषां सममिति समतावादश्च। आंग्ललोकमहोदयः फ्रेंचरूसोमहोदयश्चैतयोः पुरस्कर्तारौ । पूर्वतनसमाजापेक्षयोत्कृष्टोऽप्ययं समाजो व्यक्तिस्वातन्त्र्यस्य स्वार्थात्मकत्वात् उपर्युक्तदुष्परिणामशाली संवृत्तः । अत एव लोकशासनवादः ( लोकशाही ) समुत्पन्नः । परं त्वन्ततः स धनिकशासनवादः संवृत्तः । वैयक्तिकस्वार्थमूलका बहवः किलान्तर्विरोधा एतस्मिन् समाजे प्रादुरभवन् । ततश्च स्वार्थस्यैव परमोच्चपरार्थत्वरूपसंपादने प्रयत्नाः प्राक्रम्यन्त । एवं च बहूनां बहुसुखमिति ध्येयवादः प्रादुरभूत् । अयमेवोपयुक्ततावादः । अस्योत्पादको 'बेंथाम' इति आंग्लतत्त्वज्ञः। अयं च समुद्देशो वैयक्तिकस्वार्थापेक्षया श्रेयस्करोऽपि बहुलानां हितबाहुल्यं कथं कुत्र चेति पर्यालोचनायां मूल्यमापनप्रमाणाभावान्नीतितत्त्वदृष्ट्या नायमुपयुक्तः सिद्धः । ततश्चेतोऽपि श्रेयस्कर उच्चतम आध्यात्मिकराष्ट्रवाद आविर्बभूव । तस्य चाऽऽविष्कर्ता 'हेगेल' इति जर्मनपंडितः । तस्यायमाशयः—व्यक्तिवद् राष्ट्रमपि कश्चन समष्टिरूपेण सजीवः प्राणी । तदर्थं च व्यष्ट्या स्वमायुस्तस्मै समर्पणीयम् । इदमेव परमपावनकर्तव्यम् । अत्रैव यथार्थस्वातन्त्र्यलाभः । समष्टेरात्मैव व्यष्टेः शुद्ध आत्मा । आध्यात्मिकदृष्ट्या हेगेलमहोदयस्येदं मन्तव्यं यथार्थमपि शास्यशासकयोर्मनसि अत्यन्तसाम्यभाव एव वस्तुतो यथार्थता तस्य । अत्र चेद्राज्ञः स्वार्थवशात्प्रजया सह विरोधसमुद्भवे तु प्रजानां न कापि गतिरिति दोषस्तदवस्थ एव । अन्यश्चायमत्र दोषो यद्राष्ट्राहेन वा राष्ट्रान्तरेण वा विरोधे कथं वर्तितव्यमित्यत्र हेगेलमहोदयः किमपि नाचष्टे । अतः परं बौद्धिकसुखवाद आध्यात्मिकव्यक्तिवादश्च प्रादुरभूताम्। उपर्युक्तस्याऽऽर्थिकव्यक्तिवादस्य बौद्धिकवादसंस्कर्ता अध्यात्मिकवादसंस्कर्ता च 'जॉन् स्टुअर्ट मिल्' महाशयः । केवलभौतिकसुखापेक्षया बौद्धिकसुखस्येतरेषां सुखित्वदर्शनेन सुखित्वमित्याध्यात्मिकसुखस्य च कीदृशं किल श्रेष्ठत्वमित्यपि तेन प्रदर्शितम् । आध्यात्मिकव्यक्तिवादमूलकराज्यमीमांसायाः पुरस्कर्ता तु 'टॉम-

सहिलूमीन्' नामाऽऽसीत्। अनेन तु हेगेलमहोदयस्य तत्त्वज्ञानमनुसृत्येमां मीमांसां विरच्य व्यक्तिवादराष्ट्रवादयोः समन्वयः संपादितः। राष्ट्रजीवनविकास एव व्यक्तिजीवनविकासस्यान्तर्भाव इति मतं तु तेन प्रस्थापितम्। जीवस्य स्वकर्तव्यप्रेरणा तु परमात्मप्रकाशादेव भवतीत्यपि तेन प्रतिपादितम्। समाजाराधनमेव व्यक्तेः कर्तव्यमिति नियमोऽपि तेनैव निवेदितः। जनानां शिक्षण-व्यवस्था, सुखसमुन्नत्योश्च पर्यालोचनमित्यादीनि शासकस्य कर्तव्यानीति तस्य मतम्। अयं चास्य सिद्धान्त एवमाशिष्यते यद्धनिकैर्निर्धनानां कृते दानेन स्वकीयधनस्य विनियोगः कर्तव्य इत्यादिषु निर्दन्येष्वपि निर्धनानां क्लेशहरणस्य नैते मूलग्राहिण उपायाः। अनायासेन धनसंपादनं, स्वसत्ता-वरुद्धं रिक्थं, अतिलाभप्रयोजकस्वार्थप्रेरणा इत्यादिकं आर्थिकविषमतोत्पादकं त्वेतत्समाजरचनायां तदवस्थमेव।

( समाजस्वत्ववादः )

तदनन्तरं समाजस्वत्ववादः स्वावतारमाविश्चकार। प्रथमतोऽयं भावनामयस्वरूप एवाऽऽसीत्। एतस्य पुरस्कर्तारस्तु "सेंट सायमन्, फ्लोरियर, रॉबर्ट् ओवेन्" इति त्रयः पण्डिताः। एतैश्च समाजे वर्तमानानां स्वत्वाधिकार–धर्मसंस्था–कुटुम्बपद्धतीनां परिवर्तनमन्तरा न समुचिता समाजरचना भवितुमर्हतीति प्रतिपादितम्। इयं च क्रान्तिर्युक्तिवादेऽऽनाश्रमरूपसंस्थासु प्रवेशद्वारा च मतपरिवर्तनेन संपादनीयेति समर्थितम्। अयं च विमर्शो 'मार्क्स् एंजल्' इत्यादिसमाजस्वत्ववादिनां न संमतः। एते च समाजस्वत्ववादस्य शास्त्रमेव प्राणैषुः। एतेषां शास्त्रीयसमाजस्वत्ववादस्य स्वरूपं तु निम्नलिखितम्।

( इतिहासस्याऽऽर्थिकमीमांसा )

(अ)—सृष्टेर्मूलनिदानस्य चैतन्यस्य मानवान्तःकरणस्थितोऽशो जीवात्मा। स च सर्वदाऽस्या बद्धावस्थाया मोक्षावस्थां जिगमिषुः प्रयतते। स च सत्वरमेव सत्यं नाकलयति किंतु क्रमेण। तत्र च तस्य विकासः। एवमेव सामाजिकोद्दिष्टानि एकस्य पश्चादपरमिति क्रमेण विपरिवृत्य विकसन्ति। इयं च हेगेल्महाशयस्य मीमांसा कार्ल् मार्क्स्महोदयेन भौतिकस्वरूपेण परिणामिता। तस्यामवस्थायां यथार्थिकी पद्धतिः समाजस्य मूलम्। तस्याश्च परिवर्तने सामाजिकोद्दिष्टान्यपि विपरिवर्तन्ते। येषां च पूर्वपद्धतिः सुखावहा, ते च तस्या एव परिरक्षणाय प्रयतन्ते। येषां च सा दुःखावहा ते तां परिवर्तितुमिच्छन्ति। एवं च वर्गसंघर्षः प्रादुर्भवति।

( मूलधनसमुच्चयवादे ( भांडवलशाही ) धनोत्पादनम् )

(आ)—यदा हि धनोत्पादनसाधनानि लघूनि आसन् तदुपरि यो व्याप्रियेत, तदुत्पाद्यमाने वस्तुनि तत्स्वत्वं च तद्व्यापारस्य प्रतिफलं तस्यैव तल्लाभः। यदा तु यन्त्रादिना साधनानां

पृथुत्वं, तदा परःसहस्रास्तत्र युगपदेव व्यापारयन्तो भोग्यवस्तुजातमुत्पादयामासुः । ततश्च भोग्यवस्तूनामुत्पादितानां स्वत्वं न व्यापारवतामुत्पादकानाम्। किंतु स्वल्पानां यन्त्रस्वामिनामेवेति श्रमार्जितवस्तूनां मूल्यात्कंचनांशं भृतिरूपेण श्रमजीविनां निर्वाहकमात्रं विभज्यावशिष्टं सर्वमपि लाभरूपं यन्त्रस्वामिनामिति व्यवस्था। ततश्च अन्तः संघर्षः प्रादुरभवत्।

## ( अवशिष्टलाभपरिणामः )

( इ )—इत्थं च श्रमजीविनां श्रमशक्तिक्रयेण भृतिविभजने तैरुत्पादितवस्तुजाते स्वत्वं तु यन्त्रस्वामिनामेव भवति। ततश्च भृत्यपेक्षया वस्तुजातस्य मूल्यमधिकमेवेति तत् सर्वं लाभरूपेण यन्त्रस्वामिनामनायासार्जितं स्वम्। एवं च वस्तूत्पादकानां साधनानां गुरुत्वानुसारेण यथोत्तरं लाभस्यापि गुरुत्वमित्येकतो धनिनां धनवृद्धिरन्यतश्च दरिद्राणां दारिद्र्यसमृद्धिरिति दरिद्राणा दुःखासंतोषयोः समुत्कर्ष एवोत्तरोत्तरं संजायते । स्वामिनस्त्वन्योन्यमन्तस्पर्धया वस्तुजातस्य मूल्यह्रासो मा भूदिति संभूयसमुत्थानेन प्रचण्डसंघान् संस्थाप्य मूल्यतादवस्थ्यं सपादयन्ति। भृत्यानां तु तादृशमूल्यदानाशक्त्या सत्स्वपि भोग्यजातेषु अर्धोपोषणप्रसङ्गः समापततीति दुरवस्था प्रभवति। अन्यच्च वस्तूनामाधिक्येन स्वदेशे विक्रयासंभवात् देशान्तरपर्यालोचनं तदर्थं, तत्र च स्वव्यापारतादवस्थ्याय बलादाक्रमणेन साम्राज्यस्थापनमिति मूलधनप्रमुखात्साम्राज्यवादः समुद्भवति । ततश्चैकत्र विद्यमानाना दुःखासंतोषदारिद्र्यार्धोपोषणादिक्लेशानां देशान्तरेऽपि प्रसरः । इत्येवं दुष्परिणामाना समूलमुन्मूलनार्थं कुत्रापि कस्यापि स्वत्वमेवोन्मूलनीयम्। स्वामिवर्गस्तु स्वस्वत्वोत्सर्गाय सुखेन नोत्सहते। तदर्थं च श्रमजीविभिर्भूतकैरेव क्रान्तिकारकैर्भूत्वा शासनसंस्था आत्मसात्करणीया।

## ( समाजस्वत्ववादिनां राज्यमीमांसा )

( ई )—समाजे मुख्यतो वर्गद्वयम् । एको बहुसंख्यः श्रमजीवी । अपरश्चाल्पसंख्यः परजीवी चेति। तत्र चाल्पसंख्यः श्रेष्ठ पदमासाद्य तत्संरक्षणाय राज्यशासनमनुशास्ति । तत्र च बहुसंख्यैः क्रान्तिकोलाहलेन वर्गभेदस्योच्चाटने कृते सर्वेषामपि श्रमजीवित्वसिद्धौ निखिलोऽपि समाजः समानवर्गत्वात्समानो भविष्यति। एवं च न कस्यापि स्वीयधनसंचयस्याऽऽवश्यकतेति न शासनसंस्थाया अपि।

सोऽयं कार्लमार्क्समहोदयस्य क्रान्तिकारकसमाजवर्गः प्रादुर्भवन्नेव व्यक्तिस्वत्ववादं परोपकारित्वेन समाजस्वत्ववादं च न्याय्यत्वेन परिणामयतीत्युभयोः समन्वयः साम्राज्यवादस्याऽऽश्रयेण भवितुमर्हति। तस्यास्य शास्त्रीयसमाजवादस्य न्याय्यसमाजस्वत्ववादरूपेण प्रतिष्ठापनं तु 'बर्नस्टाईन' इति जर्मनविदुषा कृतम्। तच्चेत्थम् —

इतिहासस्य मार्क्सकृता भौतिक्यार्थिकी च मीमांसा प्रमादप्रचुरा । न हि समाजोद्देशपरिवर्तने आर्थिकघटनामात्रं कारणम् । अन्यान्यपि कारणानि सुबहूनि वर्तन्ते । तत्र चाऽऽर्थिकघटनावदपरं लोकानां नीतिमत्तापि प्रधानकारणम् । नैतिकध्येयानुसारेणार्थविषयेऽपि नियमनं लोकानां संभवति । न ह्यतिशयेन धनी अतिदरिद्रश्चेति वर्गद्वयमेव समाजे वरीवर्ति इतरोऽप्येको वर्गो बुद्धिजीविनां मध्यमत्वेन जागर्ति । न हि धनोत्पादकयन्त्रादिसाधनानि अल्पसंख्यानां स्वत्वाक्रान्तान्येव संभवन्ति । संभूयसमुत्थाने हि मूलधनं नैकस्य संभवति । अनेकेषां विभागात् । तत्र विभागानामत्यन्तस्वल्पत्वे तु श्रमजीविनोऽपि तद्ग्रहणे प्रभवेयुः । एवं च श्रमजीविनामपि स्वामित्वसंभवे द्रव्यभूम्यादिभोग्यजातस्यापि तथैव विभागेन समाजान्तःपातिनिखिलवर्गाणामपि सर्वत्र स्वत्वप्रसरणं संभवति । एवं च न क्रान्तिद्वारैव समाजस्वत्ववादप्रतिष्ठापनस्याऽऽवश्यकता । किंतु सामाजिकजनताया लोकस्वामित्वस्य च विकासेनैव तत्साधनीयमिति तु सांप्रतम् । इयं च तत्त्वविचारप्रणालिका इदानीं मिल्ग्रीन इति महोदयद्वयस्य विचाराणां विस्तारातिशयेन आध्यात्मिकयुक्तिवादावष्टम्भेन च इंग्लंडदेशे प्रसराते । न्याय्यसमाजस्वत्ववादिनां कार्यक्रमस्तु अधोलिखित आसीत्—

(अ)—समाजान्तर्गतप्रतिव्यक्ति जीवननिर्वाहार्थमावश्यिकाऽन्यूना व्यवस्था करिष्यत इति शासनसंस्थया अङ्गीकरणीयम् ।

(आ)—शासनकरस्य भारो वरिष्ठवर्गे वर्धनीयः, । कनिष्ठे चाल्पः करणीयः ।

(इ)—वरिष्ठवर्गस्य मूलधनात् कंचनांशमुद्धृत्य कनिष्ठसमुत्कर्षो विधेयः ।

(ई)—औद्योगिकविभागेषु क्रमशः लोकस्वत्वं यथा स्यात्तथा व्यवस्थापयितव्यम् । अधिशाकटयन्त्रादिविभागेषु क्रमशो राष्ट्रस्वत्वमवस्थापनीयम् । इति ।

तस्याऽऽशयः । तद्वैपरीत्येन शासनसंस्थायां प्रणष्टायां स्वस्वामिभावादयो वर्गभेदाश्च स्वयमेव प्रणष्टा भवन्तीति बाकुनिनृपण्डितस्याऽऽशयः । अस्मादेवाराजकसंघवादस्यावतारः । ततश्च युगपदेव सर्वत्र कार्यावरोधेन ( संप ) शासनसंस्थाविनाशायोपक्रमः प्रचलितः । परं चायं मार्गो नितान्तमव्यवहार्य इति नामशेषः संजातः ।

## ( संघनिष्ठसमाजवादः–Guild Socialism )

तदनन्तरं संघनिष्ठसमाजवादनामकः संप्रदायः जी. डी. एच्. कोलप्रभृतिभिः कैश्चन तत्त्वज्ञैर्निर्मितः । तस्यायमाशयः ।

( अ )—समाजे शासनसंस्था भवतु नाम । परंतु धनानामुत्पादनविभजनाविनिमयादिकं कार्यं न तया स्वायत्तीकरणीयम् । किंतु पृथक् पृथक् तत्तव्द्यवसायकारिणां संघानां हस्ते रक्षणीयम् । धनोत्पादनसाधनं यन्त्रालयादिकं समाजस्वत्वाक्रान्तं स्यात् । साक्षाद्धनोत्पादनं तु तत्तव्द्यवसायनिष्ठसंघैरेव करणीयम् ।

( आ )—धनोत्पादनमिव ज्ञानार्जनं, संस्कृतिसंवर्धनं, धर्मः, लोकसेवा,इत्यादयो व्यवसाया अपि तत्तत्कार्यकारिसंघस्थापनद्वारा समाजसेवायां विनियोक्तव्याः । संघानां तु तत्तव्द्यवसायपर्याप्तं स्वातन्त्र्यमवश्यमेवाभ्युपगन्तव्यम् ।

( इ )—शासनसंस्थाधिकारस्तु तत्तत्संघानामन्योन्यमत्याचारप्रवृत्तिप्रतिबन्धः तत्तद्व्यवसायेऽन्यायनिरसनं, परस्परसंघर्षजन्याविमर्दनिवारणं चेत्यादिकार्यद्वारा समाजस्य साक्षात् सुखशान्तिप्रतिष्ठापनपर्याप्त एव ।

( ई )—समाजे आर्थिकं सामाजिकं राजनैतिकं वा किमपि बलं केन्द्रीभूतं मा भवतु ।

## (साक्षात्क्रान्तिकारिसमाजवादः)

अयं वादोऽत्यन्तस्तुतिपात्रं भूत्वा मध्ये संवर्धितः । परं च पूर्वतन ( इ. स. १९१८ ) महायुद्धानन्तरं रशियास्थैः बोल्शेव्हिकापरनामकैः समाजस्वत्ववादिभिः पूर्वशासनमाक्रम्य श्रमजीविशासनप्रस्थापनानन्तरं तु स लुप्तप्रायः । ततश्च क्रान्तिकारिसमाजवादः समुद्भूतः । नूतनस्यास्य वादस्य महताऽऽटोपेन सर्वत्र जगति प्रचारः संवृत्तः । मार्क्स एंजल्स् इत्यादिभिः क्रान्तिकारकसमाजवादस्य अनियन्त्रितश्रमजीविशासनस्य च तत्त्वत उपपत्तिरपि प्रदर्शिता । परंतु साक्षाव्द्यवहारेऽस्य प्रतिष्ठायाः श्रेयस्तु लेनिन् ट्रॉट्स्की इत्येतयोरेव । रशियादेशे क्रान्तिकारकसमाजवादिनां मध्ये पक्षद्वयमासीत् । एकस्य मते प्रथमतो बहुमतानुसारेण लोकशासनात्मिका क्रान्तिः प्रथमतो भविष्यति । ततश्च निखिलयूरोपखण्डवत् मूलधनशासनप्रभावः । ततश्च समाजस्वत्वशासनमिति ।

अस्य चाल्पसंख्यत्वात् " मॅन्शेव्हिक् " इति नाम । एतद्वैपरीत्येन बहुमतानुसारलोकशासनसमकाल एव समाजस्वत्वशासनात्मिका क्रान्तिः करिष्यते वा स्वयं भविष्यतीत्यपरस्य मतम् । अयं च बहुसंख्यत्वात् " बोल्शेव्हिक् " पदवाच्यः । एतत्पक्षद्वयमपि मार्क्सप्रणीततत्त्ववादादेव निर्गतम् । तत्र लेनिन् महोदयेन द्वितीयपक्षस्याग्रेसरत्वं स्वीकृत्य मार्क्सवादस्याभिवृद्धिः संपादिता । यद्यिदानीं मूलधनवादस्य प्राबल्यं सर्वत्र यूरोपखण्डे परिदृश्यते । तत्तु सत्वरमेव प्रणष्टं स्यात् । यतस्तत्र त्रयः किलान्तर्विरोधा वर्तन्त इति लेनिन्महाशयेन प्रदर्शितम् । ते च यथा—

( १ )—प्रतिसाम्राज्यमभिभूताभिभावकयोरन्योन्यविरोधः ।

( २ )—अभिभावकतत्तत्साम्राज्यशासकराष्ट्राणामप्यन्योन्यविरोधः ।

( ३ )—तत्तत्साम्राज्यशासकराष्ट्रान्तर्गतानां मूलधनवादिनां श्रमजीविनां च परस्परविरोधः । इति ।

एते त्रयोऽपि परां कोटिमुपागता युद्धप्रवर्तका भविष्यन्ति । तस्मिंश्च रणकुण्डे मूलधनवादिनामाहुतौ तादृशावसरलाभेन तत्तद्राष्ट्रान्तर्गतसमाजवादिभिः सर्वराष्ट्रीयसमाजशासनस्योपक्रमः कर्तव्य इति किल लेनिन्महाशयस्य अभिसंधिः । लेनिन्महाशयस्य सर्वत्र सस्यक्षेत्रे यन्त्रालये च समाजस्वत्वमभिमतम् । श्रमजीविनामपि तदभिमतमेवाऽऽसीत् । परंतु कृषकैस्तत्र विप्रतिपत्तिः प्रदर्शिता । अतश्चागत्या क्षेत्रे कृषीवलानां व्यक्तिशः स्वत्वं लेनिन्महोदयेनाप्यङ्गीकृतम् । यद्यपि कृषीवलानां श्रमजीविनां च शासनसंस्था प्रतिष्ठापनीयाऽऽसीत्तस्य तथापि तच्चालकत्वं न बहुसंख्यानां कर्षकाणां हस्ते किंत्वल्पसंख्यानां श्रमजीविनां हस्त एव भवत्विति तस्य मतम् ।

लेनिन्महोदयस्य सहकारिणौ ट्रॉट्स्कीस्टॅलिन् महोदयौ । तयोरप्यन्तर्मतभेदः । एतावुभावपि लेनिन्महोदयस्य पश्चात् बलिष्ठौ संपन्नौ । निखिलराष्ट्रेषु श्रमजीविनां संघटनादृते एकस्मिन्नेव राष्ट्रे यदि समाजस्वामित्वं प्रस्थापितमपि विहतं सत् नातिचिरं प्रतिष्ठामधिगच्छेदिति ट्रॉट्स्कीमहाभागस्य विचारः । स्टॅलिन्महोदयस्तु तद्विपरीतमेकस्मिन्नपि राष्ट्रे तत्प्रतिष्ठामधिगच्छेदिति पुरस्चकार । तदनन्तरं स्टॅलिन्मतस्य प्रभुत्वं संजातम् । ट्रॉट्स्कीमहाभागस्तु देशान्निर्वासितः पश्चादन्तं जगाम । स्टॅलिनस्तु सर्वराष्ट्रीयक्रान्तिसमुद्देशं परित्यज्य मूलधनवादिभिः, इंग्लंड अमेरिकाप्रभृतिभी राष्ट्रैः सह संधिं चकार । एवं च सर्वत्र क्रान्तिद्वारा समाजस्वाम्यस्य प्रतिष्ठा स्यादित्याशा तु क्रान्तिवादिनामपि [illegible] दुराशा जाता ।

धनसंपत्तेरुत्पादनमपि आर्थिकनियमानुसारेणैव भवति । न कोऽपि निरुद्योगो दृष्टिपथमायाति । इत्येवप्रकारेण स्टॅलिन्महोदयस्य कार्यं सर्वत्र प्रशस्यते । तथापि अद्यावधि न तत्रापि समाजस्वत्ववादः प्रतिष्ठामध्यगच्छद्दृढमूलत्वेन । आर्थिकव्यवस्थापदानि शासनसंस्थापदानि च न श्रमजीविनामायत्तानि । किंतु अनियन्त्रिताधिकारनियुक्तवर्गस्य स्वायत्तानि । अयं च वर्गः सर्वथा स्वतन्त्रो न कुत्रापि विषये उत्तरदायित्वं भजति । बुद्धिजीविनां श्रमजीविनां च जीवननिर्वाहे कश्चन विशेषः शनैः शनैः प्रादुर्भवति । अर्थविनियोजनमधिकृतवर्गायत्तमित्यधिकारस्य भोग्यसंपत्तेश्चाधिकोंऽशोऽधिकृतानां हस्तगतो भवति । कुलकनामकः सधनः कृषीवलवर्गः समुदितकृषो बलवान् संवृत्तः । मध्यमस्तु कर्षकवर्गः स्वक्षेत्रस्य स्वामित्वं पूर्ववदेव परिपालयति । न तद्धातुमुत्सहते । भोग्यसंपत्तेर्व्यक्तिस्वत्वाक्रान्तिरपि तदवस्थैव । न तत्तत्त्वं मूलतः प्रणष्टमस्ति । अद्यावधि शासनसंस्था वर्तत इत्यत एवानुमीयते यत्सांप्रतमपि मार्क्सतत्त्वदृष्ट्या तात्पर्यमिदमेव यत्तत्र स्वस्वामिभावो वर्गभेदाश्चेदानीमपि वर्तन्ते । लेनिन्प्रस्थापितः समाजस्वत्ववादपक्षः स्टॅलिन्महोदयस्य शासनप्रणाल्या तत्त्वतश्च्युत एव वर्तते । एवं च रशियादेशेऽपि समाजस्वत्ववादस्य क्रान्तिवादस्य च परागतिरेव वर्तते ।

धर्मविषये तु समाजस्वत्वशासनादतिरिक्तं नास्तिकशासनं न कुत्रापि पृथिव्यामस्ति । धर्मप्रभावस्य न्यूनीकरणार्थं ( ह्रासार्थं ) पुरातना देवालया धर्मपीठानि च मूलत एवोच्चाटितानि, धर्मोपाध्यायानां धर्मपीठानां क्रिस्तमन्दिराणां चाग्रहारादिकं सर्वं स्वायत्तीकृतम् । यद्यपि धर्मस्वातन्त्र्यमुद्घोषितं तथापि धर्मभावनाबीजानामुच्छेदायैव सातत्येन प्रयासः प्रचलति । स्त्रीपुरुषाणां लैंगिकनीतिबन्धनानां शिथिलीभावः । बालशिक्षणं न मातापितृस्वायत्तं किंतु शासनस्वायत्तम् । ततश्च धर्मो हि विषगुटिकेति मतं शालायां महताऽभिनिवेशेन पाठ्यते । धर्मोपासना तूपहासविषयो निर्वृत्तः । इत्येवमिदानींतना परिस्थिती रशियादेशस्य ।

( बलप्रधानतज्ज्ञशासनवादः )

यत्र किल समाजे भोग्यवस्तूत्पादकमहायन्त्रप्रवृत्तिस्तत्र भृत्याः स्वामिनश्चेति परस्परविरोधिवर्गद्वयमेव न भवति । मध्यमोऽप्येको वर्गस्तज्ज्ञानां भवति । स्वामिनस्तु धनवन्तोऽपि महायन्त्रनिर्माणसंचालनादिष्वनभिज्ञा इति बुद्धिजीविनां तज्ज्ञानां चालकानां संग्राहकाः । तदभावे कार्यसिद्धिरेव न स्यात् । अयं च चालकवर्गः स्वाम्याश्रितः स्वामिसकाशात् वेतनभागीति स्वामिभृत्ययोर्विवादे स्वामिपक्षमेवावलम्बते । एवं च पूर्वोक्ता समाजवादाक्रमणं इटालीजर्मनप्रभृतिषु स्वराष्ट्रेषु मा भूदित्येतदर्थमेतेन चालकवर्गेणाग्रेसरत्वं स्वीकृत्य कर्षकवर्गस्य भृत्यवर्गस्य चान्योन्योपजापं विधाय बलप्रधानतज्ज्ञशासनवादः ( फॅसिझम् ) प्रवर्तितः । एतस्य च प्रधानप्रणेतारौ मुसोलिनी, हिट्लरमहोदयौ । एतयोर्विचारप्रणाली चेत्थम्—

(अ)—फॅसिझमित्यस्य संप्रदायस्याभिधानम् । फॅसिझम्शब्दस्याभिधेयं तु वास्तविकं वयमेवास्माकं समर्था इति । अनेन च प्रभुत्वद्योतकशब्देन स्वाभिमानस्वावलम्बनस्वाधिकारादिस्वगतसद्गुणानां संक्षेपेण निदर्शनं भवति । एवं च स्वराष्ट्रधर्म इति तत्तात्पर्यं भवितुमर्हति। एवमप्यत्र पराक्रमस्य शस्त्रबलस्य च प्राधान्यं वर्तत एव । क्रान्तिकारकाणां समाजशासनविरोधि क्रान्तिप्रतिबन्धकं किमपि शास्त्रमप्यस्य प्राणायि । अस्मिंश्च संप्रदाये व्यक्तिस्वत्वं तु परित्यक्तमेव । एवमप्यार्थिकसाम्यसंपादकः समाजस्वत्ववादस्तु न संमतः । भोग्यवस्तूत्पादकानां साधनानां व्यक्तिस्वत्वं तु स्वीक्रियते । एवमपि तत्स्वत्वेन साकमेव स्वराष्ट्रसंगोपनस्येतिकर्तव्यताया नियन्त्रणमपि तत्राभिमतम्। तथा च स्वामित्वस्य समाजसेवायाश्च समन्वयोऽत्र संपाद्यते । वर्गयुक्तसमाजरचना तु नैसर्गिकत्वादत्राऽऽवश्यिका। अर्थसाम्यमिवानभिज्ञलोकशासनं तु मानवसंस्कृतेर्विकासं प्रतिबध्नाति। समाजे श्रेष्ठव्यक्तिसृष्टावेव मानवसंस्कृतेर्मानवसमाजस्य च विकास इति निरशेमहोदयस्यैवास्य संप्रदायस्याभिमतम्। इयान् विशेषो यत्निरशेमहाशय आध्यात्मिकविषयं धर्मं च तिरस्करोति । अयं च पुरस्करोतीति । तथापि राष्ट्रधर्मापेक्षया न कोऽपि धर्मो नितान्तश्रेष्ठ इति किल तत्त्वमस्य । धर्माधिकारापेक्षया बलाधिकारस्य परमोच्चं पदमित्यपि तस्याभिमतम् ।

## (राष्ट्रीयसमाजस्वत्ववादः) (नाझीझम् अथवा नॅशनल् सोशियालिझम्)

फॅसिझम् संप्रदाय इव नाझीझम् संप्रदायोऽपि कश्चन जर्मनदेशे निर्मितः । अस्य च विचारसरणिः प्रायः पूर्वोक्तैव । वैशिष्ट्यं त्विदमेव यच्छुद्धार्यवंशस्य श्रेष्ठत्वे परमो विश्वासः। अयं च संप्रदायो जर्मनदेशीयानां जन्मतः श्रेष्ठत्वं वंशशुद्धिश्चेति तत्त्वे महताऽभिनिवेशेन प्रतिपादयति मन्यते च । जर्मनदेशीयाः शुद्धार्यवंश्यत्वादितरेषु शासनाधिकारसमर्था इति श्रद्धाऽस्य संप्रदायस्य ।

धार्मिकविषयेषु तु संप्रदायद्वयेनापि जडवादविरोधी प्रचारः प्रारब्धः । ईश्वरविषयकास्तिक्यबुद्धेः प्रसारस्त्वस्य आन्दोलनस्य मुख्यं तत्त्वम् । राजकीयविषये तत्त्वानि तु निम्नलिखितानि—

(१) ईश्वर एव सर्वाधिष्ठानत्वाद्वस्तुतो राज्यकर्ता ।

(२) राष्ट्रं तु ईश्वरप्रतिनिधीनां लौकिकं स्वरूपम् ।

(३) अत एव प्रजापालनाधिकारो राष्ट्रस्यैव ।

(४) राष्ट्रप्रकृतस्य शान्तिबाधकारणानि राष्ट्रधुरीणैरवश्यमेवोच्छेदनीयानि ।

(५) यथा यथा लोकेषु नैतिकाधिकारस्य समाजसंरक्षणाधिकारस्य पात्रता वृद्धिमियात् तथा तथा शासनाधिकारः प्रदेयः ।

(६) अयं तु धार्मिकाः स्वीयपरार्थस्वयंशासनरतावबुद्धः तेषामपि तत्संपादनाधिकारः ।

(७) कृषीवला महायन्त्रस्वामिनः प्राड्विवाकाः, चिकित्सकाश्चेत्येवमादयो वर्गा भृत्यवर्गश्चेत्येतैः सर्वैः स्ववर्गे चेतरवर्गेषु च सहकारित्वेन व्यवहृत्य स्वस्ववर्गाभ्युदयः संपादनीयः। येन राष्ट्राभ्युदयोऽप्यनायासेन सिद्धो भवेत्।

(८) भोग्यवस्तुजातस्योत्पादनं विभजनं विनिमयश्चेत्येतेषां सर्वेषां राष्ट्रीकरणमकृत्वा शासनसंस्थाप्रतिनिधीनां व्यक्तिगततत्तद्व्यवसायप्रतिनिधीनां च सहकारित्वेनैव तत् सर्वं साधनीयम्।

(९) यत्किमपि रिक्थं सर्वजनीननिधिस्वरूपात्मकं ( Public trust ) विज्ञेयम्। तद्विनियोगस्तु राष्ट्रहिताविरोधेनैव विधेयः।

(१०) सोऽयं निधिस्तावानेव वर्धनीयो यावता सुसंघटितसमाजरचनायाः समाजसुखस्वास्थ्यस्य च बाधो न भवेत्। इत्थं समाजः सहकारिसंस्थास्वरूपात्मकः संपादनीयः शासनसंस्थया। इति।

जर्मनानामुपरि महापण्डितेन कॉन्टनामकेन प्रणीतस्य तत्त्वज्ञानस्य प्रभावो वर्तते। आध्यात्मिकतत्त्वज्ञानस्य प्रकाशस्तु तस्मादेव जर्मनानाम्। मनुष्याणामनुभवस्तु न केवलमिन्द्रियगम्यसत्यार्थस्य प्रतिबिम्बरूपः। तत्र हि आत्मनः स्रष्टृत्व ( वासनात्मक ) परिणामस्याप्यपेक्षणीयत्वात्। अनुभूतवस्तुनि आत्मा स्वीयरचनात्मकसंस्कारान् विरचय्य वैशिष्ट्यमादधाति। तच्च ततस्तेनैव रूपेण प्रतीयते तदेव ज्ञानस्य प्रामाण्यम्। अयं भावः—अनुभवकाले हि वासनावासितान्येवेन्द्रियाणि वस्तुषु व्याप्रियन्ते। ततश्च तादृशवासनावासितमेव वस्तुस्वरूपं प्रकाशते। तदेव प्रमात्वेन आत्माऽभिमन्यते। अतो न केवलं वस्तुस्वरूपप्रकाशनसामर्थ्यं ज्ञानस्य। अपि तु विशिष्टतत्तद्वासनावासितस्वरूपप्रकाशनसामर्थ्यमेव। निर्वासनेन्द्रियजन्यज्ञानेन कीदृशं वस्तुस्वरूपं प्रकाश्येतेत्ययमेवाध्यात्मविद्याया विषयः। अत एवानुभवजन्यज्ञानमर्यादामतिक्रम्यातीन्द्रियशक्त्या जीवनपर्यालोचनदृष्टिः राधेयेतीदमेवाध्यात्मविद्यायाः प्रधानं कार्यम्। इति कॉन्टमहोदयस्याऽऽशयः। ततश्च स्वातन्त्र्यकर्तव्ययोस्तात्त्विकः समन्वयस्तेन संपादितः। न हि स्वातन्त्र्यं नाम विवेकरहितः स्वैराचारः। किंतु नीतिधर्मेषु सक्रियः परमोत्कट आदरः स्वज्ञानानुसारि कार्यकर्तृत्वं चेति स्वातन्त्र्यस्य सारभूते द्वे तत्त्वे इति तेन प्रतिपादितम्। कर्तव्यस्य मूलानि तु परमोच्चस्वातन्त्र्यप्रधानसृष्ट्यन्तरेण निगडितानीति कर्तव्यमिदं शाश्वतिका शक्तिरेवेति बुध्या तत्परिपूर्तये सर्वस्वत्यागसन्नाहोऽवश्यमपेक्ष्यत इति तस्य शासनम्। निखिलमानवसमाजे उच्चतरस्वार्थं तन्मूल्यं यथार्थार्थतां चाधिगन्तुं निदानभूतायां शाश्वतशक्तौ श्रद्धोत्पादने समर्थमेव किल कॉन्टमहोदयस्य तत्त्वज्ञानम्।

जगति वर्तमाने इदानींतने महायुद्धे निखिलराष्ट्राणां स्वार्थस्तु वर्तत एव। एवमपि प्रकारान्तरेण वक्तुं पार्यते यत्पूर्वोक्तानां वादानामयं कलह इति। अमेरिकाप्रदेशे हि व्यक्तिरूपेण लोक-

शासनं नामान्तरेण मूलधनशासनवादः प्रचलति। इंग्लंददेशेऽपि तथा। परंतु उपर्युक्तो न्याय्यसमाजवादोऽपि तत्र संमिश्रो वर्तते। रशियादेशे क्रान्तिकारकसमाजवादस्य सत्त्वेऽपि तत्रत्यं शासनमधिकारवर्गीयत्तमादेशस्वरूपमस्ति। अयमेकः पक्षो युध्यमानराष्ट्रेषु। अत्र च विरोधितत्त्वावलम्बनोऽपि रशियादेशः राजकारणनिमित्तेन इंग्लंद, अमेरिकादेशाभ्यां सह संमिलितः। जर्मनजपानइटाली इत्येते देशा अपरपक्षीयाः। तत्रापि जर्मनइटाली इत्यनयोः शासनतत्त्वं नाझीझम् फॅसिझम् इति नाममात्रेण भिन्नमप्येकरूपमेव तत्त्वतोऽधिष्ठितम्। जपानप्रदेशे त्वयं वादो न रूढः किंतु इंग्लंदवदेव परिस्थितिः प्रायो दृश्यते। तथापि राजकारणार्थं स देशोऽपरपक्षे समाविष्टो वर्तते। अत्र च सर्वेषां राजकारणरूपस्वार्थस्तु स्वीयसाम्राज्यविस्तार एव। इत्थं युद्धघटनायाः परिस्थितिर्निखिलस्यापि विश्वस्य विनाशं विदधाति। किं बहुना सर्वराष्ट्रसंहारकालोऽयमाहोस्विदुपस्थित इति समग्रोऽपि लोकश्चिन्तासमुद्रमग्नो वर्तते।

उपरितनसर्ववादेषु प्रधानास्त्रय एव (१) व्यक्तिवादः, (२) समाजवादः, (३) राष्ट्रवादश्च। तत्राऽऽद्यस्य द्वितीयतृतीयाभ्यामन्त्ययोर्द्वयोरन्योन्यं सर्वेषां च सर्वमानवहितवादेन च विरोधो वर्तते। एषु सर्वत्र "नात्यन्तं गुणवत्किंचिन्न चाप्यत्यन्तनिर्गुणम्" इति न्यायेन केचन गुणाः केचिद् दोषाश्च वर्तन्ते। तत्र दोषपरिहारपूर्वकसर्वगुणानां संग्रहेणैतेषामखिलमानवहितवादेन समन्वयसंपादनमेव श्रेयस्करमिति तादृशसमाजरचना चेद्विधेया तर्हि कानि किलास्या रचनायास्तत्त्वानीत्यपि निर्धारणीयं भवति। तादृशनिर्धारणेन तादृशतत्त्वं यदि स्यात्संमतं सर्वेषां, मन्ये भवेत्किल करालपरिस्थितिपरिहारः। स्याच्च खलु जगतः सुखस्वास्थ्यालाभो व्रजेच्च परमाभ्युदयं जगदिति।

( कर्तव्यनिष्ठैव समाजरचनायास्तत्त्वम् )

परिभाषा। पूर्वोक्तमार्गद्वयादयं परिवर्तनदृष्ट्याऽधिकश्रेयस्करोऽतियशस्वी च । परंतु नायं समाजरचनामूलभूततत्त्वस्वरूपेणाभ्युपगमार्हः । सत्यं चाहिंसा चेत्येतयोः सामान्यधर्मयोः सामुदायिकाग्रहस्वरूपापादकोऽयं विशिष्टपरिस्थितावेव परिणामकारको न सर्वदोपयुक्तः। एते सत्याहिंसे खिस्तधर्मेऽपि वर्तेते । एवमपि तयोराचरणं पाश्चात्यसमाजे न सुशकमित्यत्र त्विदमेव निदानं यद्वैदिकधर्मवत् किमप्युदात्तमुच्चतरमुद्दिष्टं जीवितस्य न पुरतः पाश्चात्यानां धर्मेणोपस्थापितमस्ति । अत एव तेष्वासुरी संपत्तिर्भोगाभिलाषरूपैव प्राधान्येन मन्यते । एवं च भोगेच्छारूपस्वार्थस्यैव परमोद्देशत्वेनाभिमन्यमाना ह्येते पाश्चात्यास्तस्यैव व्यक्तिस्वार्थः, वर्गस्वार्थः, राष्ट्रस्वार्थ इति स्वार्थस्यैवोत्तरोत्तरमधिकाधिकसंघटितं स्वरूपमाविष्कुर्वन्ति । अनयैव स्वार्थबुध्द्या वास्तविकी लोकसत्ता तेषामुच्छिन्ना । ( सत्तेति शासनाधिकार इति परिभाषा )

व्यक्तिशः सर्वेषां यावच्छक्यधनसंपादने स्वातन्त्र्यं चेत्सर्वेऽपि धनिकाः सुखिनश्चोत्तरोत्तराधिक्येन भवेयुः। इत्ययमर्थशास्त्रसिद्धान्तो यथा भ्रान्तः, तथैव प्रतिव्यक्ति स्वार्थबुद्ध्या प्रदत्तमतसंग्रहेण समाजे योग्यो न्यायः प्रस्थापितः स्यादित्ययमपि राजनैतिकसिद्धान्तोऽपि भ्रान्त एव । एवं च भोगाभिलाषात्मकः स्वार्थ एव तत्र तत्र समाजहितस्यार्गला संवृत्तः । अनेनैव स्वार्थेन तत्त्वतः कर्तव्यनिष्ठायास्त्यागबुद्धेश्च प्रज्वालितोऽपि दीपो निर्वाप्यते। समाजवादे राष्ट्रवादे चांशतस्त्यागबुद्धेरुदयः प्रकाशते । परंतु सोऽपि विकृत एव बुद्धेर्भोगाभिलाषाक्रान्तत्वात् । एवं च सर्वपापनिदानं निखिलासुरसंपत्तेर्मूलं भोगतृष्णा यावन्न केनाप्युपायेनावरुध्यते, न तावत्किमपि तत्त्वज्ञानं समाजविनाशं निवारयितुमीष्ट इति निश्चप्रचमेव । अतश्च—

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।<br>
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥<br>
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।<br>
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ गी. २।६२

इति गीताशास्त्रोक्तकार्यकारणभावस्याव्यभिचारित्वेनोदाहरणं तु पाश्चात्यसमाजेतिहास एवेदानीं वरीवर्त्ति । सैवेयं भोगतृष्णा निवर्तनीया चेत्तत्स्थाने कर्तव्यनिष्ठास्थापनमेव श्रेयः । सैव किलोच्चतमप्रधानोद्दिष्टस्य स्वाराज्यस्य साधनमिति तत्त्वतः समाजहितकारिणी राष्ट्रहितकारिणी च । यदि तावत्सर्वेषामेकसमयावच्छेदेनैहिकं पारमार्थिकं च सुखं साधनीयं चेत् व्यक्तिशः सर्वैरपि व्यक्तिहितसमाजहितयोरविरोधेनैव कर्मानुष्ठातव्यम् । वस्तुतः परमार्थः खलु व्यक्तेः साध्यम् । तद्द्वारा च स्वीयपूर्णत्वसंपादनं च । समाजहितद्वारा च तस्याऽऽत्मनो विकासः । प्रपञ्चस्तु प्रथमः सोपानः । व्यक्तिस्तु यद्यपि समाजावयव एव तथापि तस्या मूलस्वरूपस्याऽऽत्मनोऽनुभूतिस्तु समाजमन्तर्गृहीत्वैव भवतीति समाजहितद्वारैव सा नान्यथा । एवं च प्रपञ्चे नैसर्गिकप्रवृत्तावपि समाजहितसाधन एव

वस्तुतः परमार्थस्तत्रैव च तदन्तर्गतत्वात्स्वहितमपि व्यक्तेः सिध्यति। समाजहितेन समाजस्थैर्य एव व्यक्तेरपि स्वहितसाधनावसरो भवति नान्यथा। समाजरूपशरीरसुस्थितावेव व्यक्तिरूपावयवसुस्थितिरिति नातिरोहितम्। एवं च व्यक्तिहितसमाजहितयोः प्रपञ्चपरमार्थयोश्च नान्योन्यं विरोधः। एतादृशप्रपञ्चसाधनं विना वा परमार्थसाधनमन्तरा वा न सर्वेषां हितमेकदैव कदापि भवितुमर्हति। किं बहुना ऐहिकसुखलाभोऽपि दुरापास्त एव स्यात्। तदुक्तम्—

"धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते" इति॥

एवं च कर्तव्यनिष्ठैव समाजरचनाया मूलभूतं तत्त्वम्। स्वधर्मापरनामधेयं शास्त्रोक्तं निश्चीयते। स्वधर्म इत्युक्ते स्वस्य विशिष्टं कर्तव्यमित्यर्थः। एवं चाधिकारतत्त्वस्य कर्तव्यनिष्ठाया परिणामे अहंकारवृत्तेः पुरस्कारोऽपि ( self-assertion ) संयमे ( self-restraint ) परिणमति। स्पर्धा च ( competition ) सहकारित्वे ( co-operation ) परिणमति। अहंकारसंयमो नाम स्वातन्त्र्याभाव इति स्यात्केषांचिद्बुद्धिः। परतु वस्तुगत्याऽऽलोच्यमाने यथार्थस्वातन्त्र्यं तु तत्रैव। उपर्युक्तं जर्मनतत्त्वज्ञस्य कॉण्टमहोदयस्यापि एवमेव मतम्।

कर्तव्यबुद्धेरुच्चमनोवृत्तिपोषकत्वात्सत्त्वगुणोद्बोधकत्वाच्चाऽऽत्मोन्नतिकारकत्वम्। तदुक्तं मनुना—

सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति॥ १२।९१
सर्वमात्मनि संपश्येत्सदसच्च समाहितः।
सर्वमात्मनि संपश्यन्नाधर्मे कुरुते मनः॥ १२।११८

इति। एवं चैतादृशदृष्टिसंपादनं तु न कर्तव्यनिष्ठामन्तरेण संभवतीति सैव ज्यायसी। समाजहितस्यापि सैव परम निदानम्। यदि समाजहितसिद्धये सर्वैर्व्यक्तिशः किमपि कर्तव्यं निष्ठापूर्वकमङ्गीकृतं भवेत् तदेव किल समाजहितं स्यान्नान्यथा। समाजहितार्थं रात्रंदिवं प्रयतमाना अपि पाश्चात्या न तत्र साफल्यमश्नुवत इत्यत्र निदानं तु कर्तव्यनिष्ठाया अभाव एवेति निश्चप्रचमेव। जॉनमोर्लेमहाशयस्यापीदं संमतमेव। इति।

(प्रकृतप्रबन्धपर्यालोचनम्)

उपर्युक्त-प्रबन्धे हि श्रीराजोपाध्येमहोदयैः पाश्चात्यानां प्रायः सर्वेषामार्थिकवादानां स्वरूपाणि प्रदर्श्य समासेन गुणदोषदृष्ट्या पर्यालोचितान्यपीति महदुपकृतं सनातनशास्त्रिमटो। एतेषां चार्थकाममूलकत्वात्पर्यालोचनमपि प्रायस्तथैव। एवमपि कर्तव्यनिष्ठाऽऽत्मोन्नतिरित्यनयोः पुरस्कारेण धर्ममोक्षयोरपि पुरस्कारः प्रतीयते। तत्राऽऽलोच्यते [illegible] साधनीभूताया: कर्तव्यनिष्ठायाः स्वरूपमर्थमूलकं कथ

संभवतीति न विघ्नः। तदत्र तत्स्वरूपविचारात्प्रागेतेषां वादानामपि स्वरूपं तत्सिद्धये पर्यालोचनीय-मिति प्रथमतो वादपरिगणना विधीयते, तद्यथा —

१ अनावृतपरिग्रहमूलकस्वत्ववादः।

२ बलमूलकस्वत्ववादः।

३ एकतन्त्रशासनपद्धतिः।

४ सेनाग्रहारिशासनवादः। ( सरंजामशाही )

५ सर्वसमतावादः।

६ अधिकारतत्त्ववादः।

७ समाजस्वत्ववादः।

८ मूलधनप्रभुत्ववादः। ( भांडवलशाही )

९ क्रान्तिकारकाराजकसमाजवादः।

१० संघनिष्ठसमाजवादः।

११ साक्षात्क्रान्तिकारकसमाजवादः।

१२ बलप्रधानतज्ज्ञशासनवादः। ( फॅसिझम् )

१३ राष्ट्रीयसमाजस्वत्ववादः। ( नाझीझम्=नॅशनल सोशिॲलिझम् )

एते सर्वेऽपि वादाः समाजसुखस्वास्थ्यार्थं प्रवृत्ता अपि न स्वकार्येऽद्यावधि साफल्यं गताः। तदत्र किंवा निदानं स्यादिति पर्यालोच्यमाने त्विदमेव प्रथमतो दृष्टिपथमायाति यत्सृष्टिगतजीवानां सुखस्वास्थ्यनिदान त्वर्थस्य योग्यव्यवस्थासंपादनमेवेति मन्यन्त एतद्वादप्रणेतारः। सत्यमर्थोऽप्येकः पुरुषार्थो जीवननिर्वाहकत्वादित्यत्र न केषामपि विप्रतिपत्तिः। तथापि स एव सुखस्वास्थ्यनिदान-मित्यत्र परमा विप्रतिपत्तिरनुभवसिद्धा। यत्र हि क्षयातिशयाविशुद्धयः, तत्र तात्कालिकप्रियसंवे-दनानुभवेऽप्यन्ततो दुःखमेवेति का नाम शान्तेर्वार्ता। न ह्यधिकाधिके उपभोग्यवस्तुलाभेऽधिकाधि-कमेव सुखं स्यादिति व्याप्तिः। वासनानामानन्त्यात्। भोग्यसंपत्तेः परिमितत्वात्परायत्तत्वात् परिचि-ताया दुःखजनकत्वस्य विशदमनुभूयमानत्वादलौकिकत्वाच्च शतशो व्यभिचारात्। तथाहि—उपभो-ग्यत्वं नामोपभोगेच्छाविषयत्वम्। उपभोगश्चेन्द्रियद्वाराऽर्थसंवेदनात्मकः। एवमपि भ्रान्त्या रत्नादिषु पाषाणत्वज्ञाने पिष्टोदके च क्षीरत्वज्ञाने सुखजनकत्वाभावस्तज्जनकत्वं चेति प्राकृतजनाश्वत्थामादिदृ-ष्टान्तेन ज्ञायत एव। तथा च न प्रत्यक्षार्थसंवेदना सुखाय वा दुःखाय वा अपेक्ष्यते। किंतु तत्त्वेन ज्ञानमात्रमिति सिध्यति। अत एव " चचाजी आजमेर गये " इति वाक्यपाठावसरे प्रमादेन केनचित् वाचकेन आज—मेर इत्यस्य पदच्छेदेन आज मरे इति वाचिते दुःखनिदानवार्ताज्ञानादपि दुःखमनु-भूयते। नात्रेन्द्रियार्थसंवेदना। यदि तु संवेदनेत्येत्यस्य सम्यग्वेदनेति नार्थः किंतु तत्त्वेन ज्ञानमि-

वस्तुतः परमार्थस्तत्रैव च तदन्तर्भतत्वात्स्वहितमपि व्यक्तेः सिध्यति । समाजहितेन समाजस्थैर्य एव व्यक्तेरपि स्वहितसाधनावसरो भवति नान्यथा । समाजरूपशरीरसुस्थितावेव व्यक्तिरूपावयवसुस्थितिरिति नातिरोहितम् । एवं च व्यक्तिहितसमाजहितयोः प्रपञ्चपरमार्थयोश्च नान्योन्यं विरोधः । एतादृशप्रपञ्चसाधनं विना वा परमार्थसाधनमन्तरा वा न सर्वेषां हितमेकदैव कदापि भवितुमर्हति । किं बहुना ऐहिकसुखलाभोऽपि दुरापास्त एव स्यात् । तदुक्तम्—

" धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते " इति ॥

एवं च कर्तव्यनिष्ठैव समाजरचनाया मूलभूतं तत्त्वम् । स्वधर्मापरनामधेयं शास्त्रोक्तं निश्चीयते । स्वधर्म इत्युक्ते स्वस्य विशिष्टं कर्तव्यमित्यर्थः । एवं चाधिकारतत्त्वस्य कर्तव्यनिष्ठायां परिणामे अहंकारवृत्तेः पुरस्कारोऽपि ( self-assertion ) संयमे ( self-restraint ) परिणमति । स्पर्धा च ( competition ) सहकारित्वे ( co-operation ) परिणमति । अहंकारसंयमो नाम स्वातन्त्र्याभाव इति स्यात्केषांचिद्बुद्धिः । परतु वस्तुगत्याऽऽलोच्यमाने यथार्थस्वातन्त्र्यं तु तत्रैव । उपर्युक्तं जर्मनतत्त्वज्ञस्य कॉण्टमहोदयस्यापि एवमेव मतम् ।

कर्तव्यबुद्धेरुच्चमनोवृत्तिपोषकत्वात्सत्त्वगुणोद्बोधकत्वाच्चाऽऽत्मोन्नतिकारकत्वम् । तदुक्तं मनुन

सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ १२।९१
सर्वमात्मनि संपश्येत्सदसच्च समाहितः ।
सर्वमात्मनि संपश्यन्नाधर्मे कुरुते मनः ॥ १२।११८

इति । एवं चैतादृशदृष्टिसंपादनं तु न कर्तव्यनिष्ठामन्तरेण संभवतीति सैव ज्यायसी । र हितस्यापि सैव परमं निदानम् । यदि समाजहितसिद्ध्ये सर्वैर्व्यक्तिशः किमपि कर्तव्यं नि मङ्गीकृतं भवेत् तदेव किल समाजहितं स्यान्नान्यथा । समाजहितार्थं रात्रंदिवं प्रयतमा पाश्चात्या न तत्र साफल्यमभुवत इत्यत्र निदानं तु कर्तव्यनिष्ठाया अभाव एवेति निश्च जॉनमोर्लेमहाशयस्यापीदं संमतमेव । इति ।

( प्रकृतप्रबन्धपर्यालोचनम् )

उपर्युक्त–प्रबन्धे हि श्रीराजोपाध्येमहोदयैः पाश्चात्यानां प्रायः सर्वेषामार्थिकवादा पाणि प्रदर्श्य समासेन गुणदोषदृष्ट्या पर्यालोचितान्यपीति महदुपकृतं सनातनशास्त्रिसदि । एते कामूलकत्वात्पर्यालोचनमपि प्रायस्तथैव । एवमपि कर्तव्यनिष्ठाऽऽत्मोन्नतिरित्यनयोः पुरस्कारे मोक्षयोरपि पुरस्कारः प्रतीयते । तत्राऽऽत्मोन्नतेः साधनीभूतायाः कर्तव्यनिष्ठायाः स्वरूपमर्थमूल

"दण्डन्यायव्यवस्थायां कारणं बलमेव तु"

इति कलिशासनमेव युक्तमुत्पश्यामः। न तत्र तत्त्ववादचिन्ता प्रसरति। अस्माकमपि दण्डस्वायत्तत्वे तथैव व्यवस्था भवितुमर्हति। एवं च यः कोऽपि तत्त्ववादो 'यस्य दण्डस्तस्य महिषः' इत्याभाणकानुसारेण सिद्धः स्यात्। तत्तु न युक्तम्। तदर्थं स्वेच्छया वासनानिग्रहार्थं धर्मव्यवस्थैवाऽऽदरणीया। किं च सर्वेष्वेतेषु वादेषु तत्तदनुयायिभिस्ते ते नियमा अवश्यमेव परिपालनीया इत्यत्र किं दृष्टं फलं प्रयोजकमुतादृष्टम्। तत्रादृष्टस्य सर्वथाऽनङ्गीकारात् दृष्टमेव प्रयोजकमित्यङ्गीकार्यम्। तच्च सर्वभूतहितं चेत्तस्यासंभवोऽनुपदमेवोक्तः। दण्डभीतिश्चेत्तदेवाऽऽयातमनूक्तम्—

सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः।
दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते॥ मनु ७।२२

तद्वरम्—विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥

इति धर्मशास्त्रोक्तविधिनिषेधानुवर्तनमिन्द्रियनिग्रहश्चादृष्टफलमूलकः। तस्माद् वार्ता दण्डनीतिश्चेति द्वे एव विद्ये इति दैत्यगुरुप्रोक्ते परिहृत्यापराऽपि धर्माधर्म (कर्तव्याकर्तव्य प्रतिपादिका कापि विद्याऽदृष्टफलद्वारैव तत्र तत्र प्रयोजकत्वेनाङ्गीकार्याऽकामेनापि। अन्ततो गत्वा तत्तद्वादप्रणेत्राचार्यग्रन्थेष्वपि ऐकान्तिकप्रामाण्यमभ्युपगम्य तदनुसारेण राष्ट्रार्थं वा समाजार्थं वा त्यागोऽवश्यं प्रतिपादनीयः। कर्तुस्तु तत्त्यागफलमदृष्टमेवाभ्युपेयम्। नो चेत्प्रसङ्गे सर्वस्वत्यागप्रवृत्तिरेवासंभवनीया। न हि मरणानन्तरं किमपि फलमनुभवितुं शक्यम्। तथा च राष्ट्रार्थं वा समाजार्थं वा मरणमप्यभ्युपगच्छतां सैनिकादीनां दृष्टफलप्रयोज्यत्वमसंभाव्यमेव।

तदुक्तमापस्तम्बेन—

"आम्रे फलार्थे सिक्ते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते। नो चेदनूत्पद्यन्ते नो धर्महानिः"

इति कर्तव्यनिष्ठाया निष्कामप्रवृत्तेः शासनम्। इदमेवैतद्वार्तावादानुयायिभिरप्यर्थव्यवस्थार्थं मार्क्सीयाचार्यैरनुशिष्टेऽपि शासने तत्र तादृशफलोत्पत्तेः स्वस्यालाभे कर्तव्यमिदमस्माकमिति निष्कामबुद्ध्यैव तदनुष्ठेयमिति मन्तव्यम्। अत एव गीतासु—

सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः॥ इति गी. १८।४८

त्येवार्थोऽभिधीयेत । तदा त्वर्थरूपभोग्यसंपत्तिं विनापि सुखाधिगमे संभवति नार्थस्य तादृशदेशेऽ
ऽर्थोऽयं प्रयासः । अत एव यथाकथमप्यर्थसंपत्तेर्व्यवस्थायामपि दुःखं त्वपरिहार्यमेव भवति । न हि
सौन्दर्यसद्गुणलोकप्रियणाद्यभिरुचीनां समता प्रयत्नशतैर्वर्षसहस्रैरपि सुसंपादा। अत एवोक्तं योगशास्त्रे
" परिणामतापसंस्कारैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः " ( यो. सू. २. पा. १५)
इति ॥ भगवद्गीतास्वपि—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः॥ गी. ५।२२

श्रीमद्भागवतेऽपि—

स्तेयं हिंसाऽनृतं दम्भः कामः क्रोधः स्मयो मदः ।
भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥
एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम् ।
तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥ ११।२३।१९

" दण्डन्यायव्यवस्थायां कारणं बलमेव तु "

इति कलिशासनमेव युक्तमुत्पश्याम । न तत्र तत्त्ववादचिन्ता प्रसरति । अस्माकमपि दण्डस्वायत्तत्वे तथैव व्यवस्था भवितुमर्हति । एव च यः कोऽपि तत्त्ववादो 'यस्य दण्डस्तस्य महिषः' इत्याभाणकानुसारेण सिद्ध स्यात् । तत्तु न युक्तम् । तदर्थं स्वेच्छया वासनानिग्रहार्थं धर्मव्यवस्थैवाऽऽदरणीया । किं च सर्वेष्वेतेषु वादेषु तत्तदनुयायिभिस्ते ते नियमा अवश्यमेव परिपालनीया इत्यत्र किं दृष्ट फल प्रयोजकमुतादृष्टम् । तत्रादृष्टस्य सर्वथाऽनङ्गीकारात् दृष्टमेव प्रयोजकमित्यङ्गीकार्यम् । तच्च सर्वभूतहित चेत्तस्यासभवोऽनुपदमेवोक्तः । दण्डभीतिश्चेत्तदेवाऽऽयातमनूक्तम्—

> सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ।
> दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ मनु ७।२२

तद्वरम्—विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥

इति धर्मशास्त्रोक्तविधिनिषेधानुवर्तनमिन्द्रियनिग्रहश्चादृष्टफलमूलकः । तस्माद् वार्ता च दण्डनीतिश्चेति द्वे एव विद्ये इति दैत्यगुरुप्रोक्ते परिहृत्यापराऽपि धर्माधर्म ( कर्तव्याकर्तव्य ) प्रतिपादिका कापि विद्याऽदृष्टफलद्वारैव तत्र तत्र प्रयोजकत्वेनाङ्गीकार्याऽकामेनापि । अन्ततो गत्वा तत्तद्वादप्रणेत्राचार्यग्रन्थेष्वपि ऐकान्तिकप्रामाण्यमभ्युपगम्य तदनुसारेण राष्ट्रार्थं वा समाजार्थं वा त्यागोऽवश्य प्रतिपादनीय । कर्तुस्तु तत्त्यागफलमदृष्टमेवाभ्युपेयम् । नो चेत्प्रसङ्गे सर्वस्वत्यागप्रवृत्तिरेवासमवनीया । न हि मरणानन्तर किमपि फलमनुभवितु शक्यम् । तथा च राष्ट्रार्थं वा समाजार्थं वा मरणमप्यभ्युपगच्छता सैनिकादीना दृष्टफलप्रयोज्यत्वमसभाव्यमेव ।

तदुक्तमापस्तम्बेन—

" आम्रे फलार्थे सिक्ते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते । नो चेदनूत्पद्यन्ते नो धर्महानि. "

इति कर्तव्यनिष्ठाया निष्कामप्रवृत्ते शासनम् । इदमेवैतद्वार्तावादानुयायिभिरप्यर्थव्यवस्थार्थं मार्क्सीयाचार्यैरनुशिष्टेऽपि शासने तत्र तादृशफलोत्पत्ते स्वस्यालाभे कर्तव्यमिदमस्माकमिति निष्कामबुद्ध्यैव तदनुष्ठेयमिति मन्तव्यम् । अत एव गीतासु—

सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः ॥ इति गी १८।४८

इत्युक्तम् । पुनश्च तत्रैवोक्तम्—

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥
यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ इति च । गी. २।४१–४४

अत्र चाद्दष्टफलापेक्षापि निषिद्धा किंपुनर्दृष्टफलापेक्षा । एतादृशव्यवसायात्मककर्तव्यबुध्युदयमन्तरा न कस्यापि वादस्य अवस्थितिः सुतरां दृष्टफलकस्य वादस्येत्यूह्यम् ।

## ( स्वत्वसिद्धिमीमांसा )

ननु तत्किमर्थगतविषमविभागद्वारा समुत्पन्ना दुःखपरम्परा तथैव प्रवर्तनीया ? न हि वयं तादृशपरम्परासातत्यं संविदामः । न वा तत्प्रतिकारम् । भोगार्थं भोग्यसंपत्तौ यथेच्छविनियोगाधिकाररूपं स्वत्वमेव प्रतिजानीमः । न च भोग्यवस्तुषु स्वत्वं कस्यापि संभवतीति वाच्यम् । वेतनरूपेण प्रदत्ते विनिमयसाधने त्वयापि तादृशस्वत्वाधिगमात् । ननु जीवननिर्वाहार्थत्वात्तथाऽभ्युपगमेऽपि नान्यत्र तथाऽभ्युपगम इति वाच्यम् । इदमेवान्याय्यत्वं भवतः । एकत्र स्वत्वप्रयोजकस्य जीवननिर्वाहस्यापरत्रापि संभवे स्वत्वानधिगमात् । अन्यत्र स्वत्वापहारप्रयोजकस्य पञ्चमहाभूतादौ स्वतः सिद्धत्वस्य इतरत्र वेतनादौ सिद्धत्वेऽपि स्वत्वापहारानभ्युपगमात् । नन्वेवं जीवननिर्वाहः कथमिति चेत् ईशस्वत्ववादे सुखं शयीथाः । तथाहि यादृशं हि वेतनादौ जीवननिर्वाहार्थं स्वत्वमभ्युपगम्यते तथैव भवदभिमतैतिहासिकप्रथमवन्यावस्थायामितस्ततो भ्रमन्नयं मानवोऽनावृतत्वाद्भूमिभागानां यत्र कुत्रापि वसन् वृत्तिं व्यदधात् । उत्तरोत्तरं मनुष्याणामभिवृद्धावितरैः प्रायः समाक्रान्ते भूविभागे तु यत्रैव यस्यावस्थानं तत्रैव तस्य स्वत्वं संजातम् । इदानीमप्यमिशकटादिषु धर्मशालादिषु च यस्य प्रथमतो यत्रावस्थानमनावृतदशायां तत्र तस्य तात्कालिकं स्वत्वं त्वभ्युपगम्यत एव सर्वैः । अत एव केचन तिष्ठन्तोऽपि महता विमर्देन विप्रवसन्तो दरीदृश्यन्ते । एवं चानावृतदशायां परिग्रह एव स्वत्वापादकत्वेनाभ्युपगन्तव्योऽकामेनापि । स चायं परिग्रहो न व्यक्तिशः स्वोदरपूरणार्थं क्रियते । स्वकस्यावलम्बिनां पुत्रकलत्रादीनामप्युदरपूर्तिरत्र विवक्षिता भवति । एवं च व्यक्तिस्वत्वं कुटुम्बस्वत्वमवस्थापयतीति दायविभागसिद्धिः ।

अयमेव याज्ञवल्क्यमिताक्षरोक्तः स्वत्वप्रयोजकव्यवहारः । एवमेवोत्तरोत्तरमनेककुटुम्बप्रसक्तावन्योन्यं संघर्षे च बलाधिक्यादेकस्य स्वमपरोऽधिगच्छेत्तदा जयमूलकस्वत्वव्यवहारः । तदा किल संघर्षजयाय बलाधिक्यापेक्षायां संहत्यानेककुटुम्बवसतौ ग्रामादिव्यवस्था समुत्पन्ना । तत्र च परस्परसंघर्षार्थं योद्धॄणामेकः संघातः । तेन स्वोदरपूरणार्थमपि प्रयतितव्यं दुर्बलरक्षणमपि विधातव्यमिति कार्यद्वयस्यासंभवे तु दुर्बलैः स्वधनात्कश्चिद्भागोऽनायासस्वत्वशाली प्रदत्त इत्यपि संभवति । एवमेवोत्तरोत्तरवृद्धावनावृतपृथ्वीभागायलाभे स्वल्पक्षेत्रेऽपि बुद्धिबलादधिकभोग्योत्पत्तिर्येषां तेषां बुद्धिज्ञानार्थमन्यैर्जीवननिर्वाहः स्वीकृतः स्वधनेनेति तेषामपि तत्र स्वत्वं संपन्नम् । एवं धनबलेन क्रयविक्रयादिना प्रयोगकर्मयोगादिना च तत्र तत्र स्वत्वसिद्धिः । इदानीं तु महायन्त्रनिर्माणकाले येषां बुद्धिबलं क्रेतुं सामर्थ्यमासीत्तैस्तत्क्रीत्वा शरीरबलमपि तथैव क्रीत्वा महायन्त्रालयान् निर्माय भोग्यवस्तुजातपूरः संपादितस्तेषां तत्र स्वत्वं नास्तीति कथंकारं न्यायेन प्रतिपादयितुं शक्यमिति विचारयन्तु विचक्षणाः । न हि दण्डशासनसंस्था न्यायान्यायावपर्यालोच्य यथेच्छशासनार्थं कुत्रापि प्रवृत्ता वा प्रवर्त्स्यते वा तथा प्रवृत्तौ च वाटपाटच्चरेभ्यः को वा विशेषः । केवलं बलाधिक्यादेव तथाकरणं तु न न्यायः । किंतु 'सर्वं बलवतो न्याय्यं' इत्याभाणकानुसरणमेव स्यात् । एतेन क्रान्तिवादाः सर्वेऽपि निरस्ताः । बहुमतशासनवादोऽप्यनयैव दिशा प्रत्याख्यायते । तथाहि बहूनां मतं यत्तदेव शासनं तस्य वा शासनमिति तदर्थः । तथा च लुब्धानां परधनलोलुपानां परोत्कर्षासहिष्णूनां मतं त्विदमेव स्याद्यदेते उत्कृष्टा अस्मत्सदृक्षा भवेयुरिति । तथा च किं तेषां मतानुसारेण यैर्बुद्धिबलात्, धनबलात् पौरुषबलाद्वा भोग्यसंपत्तिरुपार्जिता । सा एतैरपहरणीयेति न्यायो वा अयम् । शोभते चायं न्यायो यदमेरिकादिपरदेशस्थानां तन्मूलवास्तव्यानां विना कारणं सृष्टिसंशोधनमिषेण तत्र गत्वा विश्वासघातादिना तदुच्छेदकराणां पाश्चात्यानामेव । ये स्वयमेतादृशाः परद्रव्यापहारकास्ते भूतहितेच्छया यत्किमपि कुर्युरिति स्वप्नेऽपि नाऽऽलोचनीयं भारतीयैः । येषां शिक्षणप्रणाल्येवात्रत्यसंस्कृत्युच्छेदिका । मनसा कृष्णध्यानरतत्वेन कृष्णत्वेऽप्यत्रत्या शरीरमात्रकृष्णा मनसा गौराः कथं भवेयुरिति पर्यालोच्यैव संस्थापना शिक्षणस्य । तेषामिदानींसर्वभूतहितस्मरणमिदमननुभूतपूर्वमेव । एवमेव रशियाजर्मनादिदेशवासिनां नीतिः । साम्राज्यलोलुपाः किलेमे सर्वे इति ज्ञायत एव सर्वैः । तद्वेदिकाः सावधाना भवन्तु ।

नन्वेवमितरैर्जीवननिर्वाहः कथं विधेय इति चेदुच्यते । इभ्योपजीविकया । नन्वेवं पारतन्त्र्यं स्यादिति नेन्न । को वा भोगलोलुपो न परायत्त इह जगति । नहि भोगः स्वतन्त्रः परसापेक्षत्वात् । स्वातिरिक्तभोग्यमन्तरा भोगानुदयात् । अतश्च दरिद्रैः स्वभोगार्थं इभ्यरूपभोग्यायत्तैर्भवितव्यम् । इभ्यैश्च स्वभोग्यदरिद्रायत्तैरित्येव भोग्यसापेक्षतामूलकं पारतन्त्र्यं सर्वेषां जगति । न चैतावता इभ्यैरपि

स्वभोगेभ्यस्तिलाञ्जलिर्देयः । नन्वेवं दरिद्राणां रक्तनिष्पीडनेन इभ्यैः स्वविलासा जगदहितकरा जगत्क्षयावहाश्च सुखेन विधेया इति स्यादिति चेन्न । भोग्यसंपत्तेर्भोगपद्धतिनियमनेन विनियोग-नियमनेन वा नियम्यत्वात्सर्वेषाम् । तदेव किल शासनम् । तच्च राजदण्डाधीनमिति दण्डसंस्थाया कर्तव्यमिदमेव यद्भोग्यसंपत्तेर्यथायोग्यपद्धत्या विनियोगव्यवस्था । न हि मदीया गौर्मदीयं क्षेत्रं मम भार्यापुत्राविति कृत्वा तैः साकं स्वरो व्यवहारः कर्तव्यः । गोश्च परिपालनादिना दुग्धद्वारैव भोग्यत्वम् । क्षेत्रस्य सस्योत्पादकत्वेनैव । भार्यापुत्रयोः परिपालनादिना वंशाभिवृद्धिद्वारैवेति शास्त्रेण नियमनात् । दण्डसंस्थायाश्च शास्त्रोद्दिष्टप्रवर्तकत्वात् ।

ननु किमिदं शास्त्रं येन भोगपद्धतिर्निश्चेतव्या विनियोगो वा नियन्तव्य इति चेदुच्यते ।

## ( मानवतायाः शास्त्रत्वम् )

अस्ति किल मानवता नाम कश्चन धर्मो मनुष्यमात्रसाधारणः सनातनः पुरुषसमयापरि-कल्पितः यदनुसारेण सर्वेऽपि प्रायो व्यवहरन्ति । स च मनुष्यसाधारण इत्येव साधारणधर्मत्वेन व्यपदिष्टो धर्मशास्त्रे । तथाहि मनुः—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ इति । मनुः १०।६३

याज्ञवल्क्यः—वीरमित्रोदये परिभाषाप्रकाशे—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥ इति ।

देवलः—श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

दक्षः—यथैवाऽऽत्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता ।
सुखदुःखानि तुल्यानि यथाऽऽत्मनि तथा परे ॥

श्रीमद्भागवते—अहिंसा सत्यमस्तेयमकामक्रोधलोभता ।
भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥

एवमेव महाभारतादिषु ।

## ( मानवतामूलकं शास्त्रमपरिवर्तनीयम् )

इदमत्र विचार्यं किमर्थं शास्त्रपालनमिति स्वातन्त्र्यधनाधिकारिणामुद्योगेन भोगसंपत्तेः फलस्य प्राप्तौ । यदि दारिद्र्यदुःखमपरिहार्यं संसारे जीवनार्थमेव । नहि तु ...

बीजानि प्रथमतोऽन्वेष्टव्यानि । यत्र कलहस्तत्र न्यायदानार्थं राजनीतौ प्रायोऽष्टादश व्यवहारपदानि निर्दिष्टानि । तानि यथा—

तेषामाद्यमृणादानं[1] निक्षेपो[2]ऽस्वामिविक्रयः[3] ।
संभूय च समुत्थानं[4] दत्तस्यानपकर्म[5] च ॥
वेतनस्यैव[6] चादानं संविदश्च व्यतिक्रमः[7] ।
क्रयविक्रयानुशयो[8] विवादः[9] स्वामिपालयोः ॥
सीमाविवाद[10]धर्मश्च पारुष्ये[11] दण्डवाचिके ।
स्तेयं[12] च साहसं[13] चैव स्त्रीसंग्रहणमेव[14] च ॥
स्त्रीपुंधर्मो[15] विभागश्च[16] द्यूत[17]माह्वय[18] एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥ इति । मनुः ८ । ४–७

एतेषां व्यवहारपदत्वं तु—

"वि नानार्थेऽवसंदेहे हरणाद्धार उच्यते ।
नानासंदेहहरणाद् व्यवहार इति स्मृतः ॥"

इति कात्यायनवचनात्संदिग्धत्वे एव । स च संदेह एकधर्मिकनानाधर्मावगाहिज्ञानमेव । एवं चर्णादानादिष्वपि तादृशसंदेहस्वरूपप्रतिपत्तये तादृशज्ञानस्वरूपनिष्पत्तिरपेक्षिता । तत्र च वस्तुनः कस्यापि स्वत्वाभावे तस्यैव मानवताया गमकत्वे च कस्य किंवा ऋणं स्यात् इति संदेह एव नोदियात् । ननु तदर्थमेवास्माभिः स्वत्वमपाक्रियत इति चेन्न । भृत्यादिलब्धे स्वत्वाङ्गीकारात् । जीवननिर्वाहस्य सर्वापेक्ष्यत्वात् । तथा च स्वत्वेनाभिमतस्य कस्यचन वस्तुनः परस्मै ऋणत्वेन तस्य संकटनिवारणार्थं दाने तत्प्रत्यावर्तनकाले कलहसंभवः । तत्र दानं परदुःखनिवारणार्थं दयामूलकमिति साधारणधर्मरूपदयायामन्तर्भवति । अथवाऽहिंसायामन्तर्भावः । हिंसायाः प्राणवियोगरूपत्वमिव परदुःखपरस्वापहारादिस्वरूपत्वात् । तथा च दया वा अहिंसा वा सर्वोपकारित्वात्सर्वसाधारणं मानवताया गमकं भवति । स च न्यायस्तद्विरुद्धोऽन्यायः । एवमेव निक्षेपास्वामिविक्रयदत्तानपाकर्मवेतनादानादीनां " अर्था बहिश्चराः प्राणा हरता त हता हि ते "। इति न्यायेन परेषां बहिश्चरप्राणरूपार्थघातकत्वेन हिंसारूपत्वात् सर्वेषां वर्ज्यत्वम् । स्तेयादीनां तु

हिंसास्तेयोभयमूलकत्वादेवापराधत्वम्। वाचिकदाण्डिकपारुष्ययोस्त्विन्द्रियानिग्रहमूलकमिति सर्वेषामपराधानां यथायथं सामान्यधर्मविरोधादेवापराधत्वमिति सिध्यति। अत एव सामान्यधर्माणां न्यायमूलभूततत्त्वपुरस्कारेणापरिवर्तनीयोपदेशः। बहुमतानुसारेण तादृशतत्त्वनिर्णये तु न कुत्राप्यवस्थितिः। तत्रापि बहूनां बहुसुखमिति तत्त्वे त्वल्पानामल्पसुखापहारादेव हिंसा स्यात्। यदल्पत्वान्न तस्या दोषत्वम्। तर्हि तु द्यूताह्वयवाग्दण्डपारुष्यादीनामल्पत्वे न दुष्टतेति सम्यक् खलु शासनमनुशिष्टं स्यात्। ननु दण्डनीतौ चाणक्येन एतत्प्रजाप्रियमनुष्ठेयत्वेनोक्तम्। तथा हि—

> प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्।
> नाऽऽत्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्॥ इति। अर्थ १९

एवं च प्रजानां किं वा प्रियमस्तीत्यालोच्यैव व्यवहाराः प्रवर्तनीया इति चेत्तर्हि तु महत्पाण्डित्यमिदमर्थशास्त्रे। अस्ति च तत्र हितशब्दोऽपि। एवं च प्रजानामहितं च प्रियमपि राज्ञाऽनुष्ठेयमुत प्रजानां हितमेव प्रियमिति विशये तु को वा विचक्षणोऽहितप्रियानुष्ठानानुशासनमनुमन्येत तात्पर्यविषयमृते बहुमतवादिनः। ननु तर्हि कथमत्र निर्णय इति चेदित्थम्—प्रियं हितं चानुष्ठेयम्। अहितं प्रियं च नानुष्ठेयम्। किं तु अहितात्प्रजा रक्षणीया। यत्र च हिताहिते न स्तः। तत्र प्रियमप्यनुष्ठेयमिति तात्पर्यम्। अत एव व्यक्तिगतहिताहितप्रियाप्रियविषये यान्यनुशासनानि, तानि ( दिवाणी कायदा = सिव्हिल-लॉ ) इति पुरस्कृतानि। यानि तु समाजगतहिताहितप्रियाप्रियाणि तानि क्रिमिनल्-लॉ इति पृथक्कृतानि। एवं च सर्वेषां न्यायशासनानां धर्मशासनानां च मूलमेष साधारणधर्मो मानवतारूप इति सिध्यति। इन्द्रियनिग्रहस्यैव धर्ममूलत्वम्। तस्यास्य धर्मस्य सर्वथा सर्वत्र मूलमिन्द्रियनिग्रह एव। स एव च विनयाधायकः। विनयस्वरूपं चोक्तं मनुना—

> श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः।
> न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः॥ मनुः २।९८

इति। एवं चेन्द्रियजयफलम्—

> समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः।
> तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः॥ गी. १४।२४

इति भगवद्गीतोक्ता मनसः साम्यावस्था। सा चानायासेन सहजव्यवहारेण स्वत एव यथा संपन्ना स्यात्तथा शासनं सर्वं धर्मः। यत्र च तदभावे कामक्रोधलोभादिना किंचिदतिचरणं तत्र दण्डेन पुनस्तत्तदवस्थासनार्थं यानि शासनानि तानि दण्डशासनानि न्यायापरपर्यायाणि। तथा च सर्वशासनानां मूलभूत उद्देशं तु इन्द्रियनिग्रह एव प्रजानाम्। अत एव तस्य माहात्म्यं धर्मार्थकामशास्त्रेषु सर्वत्र प्रतिपाद्यते। तथा च मनुः—

इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम् ॥ २।८८
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं निगच्छति ॥ २।९३
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ २।९४
यश्चैतान् प्राप्नुयात्सर्वान् यश्चैतान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥ २।९५

इति । *कौटिलीयार्थशास्त्रेऽपि*—

विद्याविनीतो राजा हि प्रजानां विनये रतः ।
अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः । अर्थ. ५

विद्याविनयहेतुरिन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात् कार्यः । कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेषु अविप्रतिपत्तिरिन्द्रियजयः शास्त्रार्थानुष्ठानं वा । कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः ॥ इति ॥ तथा वात्स्यायनकामशास्त्रेऽपि—

एवमर्थं च कामं च धर्मं चोपाचरन्नरः ।
इहामुत्र च निःशल्यमत्यन्तं सुखमश्नुते ॥
किं स्यात्परत्रेत्याशङ्का कार्ये यस्मिन्न जायते ।
न चार्थघ्नं सुखं चेति शिष्टास्तत्र व्यवस्थिताः ॥
त्रिवर्गसाधकं यत्स्याद्द्वयोरेकस्य वा पुनः ।
कार्यं तदपि कुर्वीत न त्वेकार्थं द्विबाधकम् ॥ इति ।

*त्रिवर्गसाधनमिति । धर्मादीनां यदन्यतमं कार्यमात्मन इतरयोस्तु साधकं तत्कुर्वीत।* अयमुत्तमः पक्षो ह्यनुबन्धेऽन्तर्भूतः । द्वयोर्वैकस्येति । त्रयाणां यद्द्वयोरात्मन इतरस्य च साधकं तदपि कुर्वीतेति । अयं मध्यमः पक्षः । एकानुबन्धेऽन्तर्भूतः । एतदुभयमपि प्रागुदाहृतम् । यदेकस्याऽऽत्मन एव साधकं तदपि कुर्वीतेति । अयं जघन्यो निरनुबन्धेऽन्तर्भूतः । तद्यथा—पञ्चानां महायज्ञानां प्रवर्तनं धर्मो निरनुबन्धः । भूम्याद्यर्जनमर्थो निरनुबन्धः । परिचारिकायामभिप्रेतायां कामो निरनुबन्धः । अस्मिन्पक्षे परस्परस्यानुपघातकं प्रदर्शयन्नाह— न त्वेकार्थं द्विबाधकमिति । एक आत्मैवार्थः प्रयोजनं यस्य तदेकार्थं द्वयोर्बाधकं न कुर्यात् । अतिदानेन धर्मोऽर्थं बाधते कामं च बाधते । तपसा चात्यन्तासेवितेन कामं बाधित्वा शरीरक्षयादर्थमुपहन्ति । तथाऽर्थस्तावदात्यन्तिक उपादीयमानः पुरूरवस इव धर्मकामौ बाधते । कामस्तूत्तमवर्णाम दाण्डक्यस्येवान्यत्र वाऽत्यासेवित

उभयं बाधते। यदेकस्य साधकमन्यस्य बाधकं तत्पूर्वोत्तरबाधापेक्षया कुर्यात्। तच्च यथोक्तं प्रागिति।

अनेन चेदमवगम्यते यत्कामोऽप्यत्यासेवितो धर्मार्थयोर्बाधको भवतीति तदनुपघातेन सेवितव्य-श्चेत्तत्रापीन्द्रियनिग्रहस्याऽऽवश्यकता वर्तते। अत एव तत्र तत्र पारदारिकवैशिकादिप्रकरणेषु " न शास्त्रमस्तीति प्रयोक्तव्यम् " इत्यादेशो दरीदृश्यते कामशास्त्रे। तत्सिद्धं सर्वेषां शासनानां मूलमि-न्द्रियनिग्रह एव। अत एवोक्तं श्रीमद्भागवते सप्तमस्कन्धे—

षड्वर्गसंयमैकान्ताः सर्वा नियमचोदनाः।
तदन्ता यदि नो योगानावहेयुः श्रमावहाः॥ इति।

इन्द्रियेषु मनसोऽप्यन्तर्भावात्तन्निग्रहोऽप्यत्यावश्यकः। तन्मूलकत्वान्मनोनिग्रहस्य। तदुक्तं श्रीमद्भागवते—

दानं स्वधर्मो नियमो यमश्च श्रुतं च कर्माणि च सद्व्रतानि।
सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः॥ ११।२३

मनुरपि—

एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्।
यस्मिञ्जिते जितावेतौ भवतः पञ्चकौ गणौ॥ २।९२
इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम्।
तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्॥ २।९९
वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा।
सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम्॥ २।१००

इति। एवं चेन्द्रियनिग्रह एव सर्वार्थसाधक इति सिध्यति। एतदनुसारेण भोग्यसंपत्तेर्विनि-योगनियमने तु न किंचिदप्यत्याचरणम्।

## ( दण्डसंस्थास्वत्वविचारः )

नन्वेवं विजयेन लब्धस्य प्रदेशस्य स्वत्वं विजेतुर्न स्यात्। तत्त्वे तु इतरेषां स्वत्वापहारात्। विजयस्य स्वत्वापादकत्वं शास्त्रशिष्टमेव। तथाहि गौतमः— " स्वामी रिक्थक्रयसंविभागपरिग्रहा-धिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः " इति साधारणान् स्वामि-त्वप्रयोजकान् रिक्थादीनभिधाय तत्तद्वर्णानां विशेषाभिधाने क्षत्रियस्य विजितमित्यनेन विजयस्य स्वत्वप्रयोजकत्वमभिदधाति। तथा मनुरपि—" सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। इति। विजयस्य युद्धेन लोकानामुपरि अधिगमोऽपि तद्धने भूम्यादिषु पर्यवस्यति। इदानीं त्वेकस्य

क्षत्रियराजस्याभावात् सार्वजनीनदण्डसंस्थया संपादितेन विजयेन लब्धस्य सर्वजनीनस्वत्वशालित्वमेव। एवं च समाजस्वत्ववाद एव पर्यवसानमिति चेन्न। विजेतुर्विजिताधिकार एव स्वत्वाभ्युपगमात्। तद्यदि विजितस्य स्वत्वं स्यात् सर्वत्र तर्हि विजेतुरपि तदापत्तिः। तदभावे तु नापि विजेतुर्न विजितस्येति वैयक्तिकस्वत्वसिद्धिः। तदर्थमिदमत्र विचारणीयं किं भूप्रदेशस्य सर्वस्य भूपतिस्वत्वाक्रान्तत्वमुत वैयक्तिकस्वत्वाक्रान्तत्वम्। यदि भूपतेः स्वत्वं तदा तु करादानं भाटकस्वरूपं स्यात्। यदि च न तथा तदा पालकत्वाद्भूपतेर्भृतिरूपं स्यात्। तदत्र विचारे परमपूज्यमहर्षिअण्णासाहेब पटवर्धनमहोदयानां विचारा एवात्रोपक्षिपामः।

यद्यपीयं विचारमाला आंग्लभाषामयी, तथाप्यत्र महाराष्ट्रभाषायां रूपान्तरितैव प्रेषिताऽस्मत्सविधे श्रीराजोपाध्यायमहोदयैरिति तामेव कांचित्संस्कृतभाषान्तरितामत्र प्रकाशयामः।

## ( महर्षीणामण्णासाहेब पटवर्धनानां विचारप्रणाली )

वैदिकधर्मो हि न युद्धार्थमुत्तेजयति। किंतु तन्निवारणार्थमेव यावच्छक्यमनुशास्ति।

साम्ना दानेन भेदेन समस्तैरथवा पृथक्।
विजेतुं प्रयतेतारीन् न युद्धेन कदाचन॥ मनुः ७।१९८

विजयानन्तरं जितप्रदेशव्यवस्थापि मनूक्तैतदेव ज्ञापयति।

सर्वेषां तु विदित्वैषां समासेन चिकीर्षितम्।
स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम्॥ ७।२०२
प्रमाणानि च कुर्वीत तेषां धर्मान् यथोदितान्।
रत्नैश्च पूजयेदेवं प्रधानपुरुषैः सह॥ ७।२०३

इत्यनयोः श्लोकयोरुपन्यासः सर. टी. स्ट्रेंज महोदयेन स्वीये हिंदुधर्मशास्त्रग्रंथे ( दिनाङ् १। जून १८२० उपोद्घातः पृ. १०।११ ) इत्यत्र कृतः। अत्र प्रमाणानि चेति चशब्देन पूर्वश्लोकसंबन्धः सूच्यते। तथैवोभयश्लोकस्थचशब्दाभ्यामनयोः श्लोकयोः मनुस्मृतिः अ. ७ श्लोकं १८१-१८२ इति श्लोकाभ्यां संबन्धो गम्यते। तौ च यथा—

यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति प्रभुः।
तदाऽनेन विधानेन यायादरिपुरं शनैः॥ १८१
मार्गशीर्षे शुभे मासि यायाद्यात्रां महीपतिः।
फाल्गुनं वाऽथ चैत्रं वा मासौ प्रति यथाबलम्॥ १८२

अत्र च क्रियाकर्तृत्वं प्रभुपदवाच्यस्य महीपतिपदवाच्यस्यैव च गम्यते। ततश्चायमत्र निर्णयो न्याय्यतया निष्पद्यते यत् प्रजाया जितप्रदेशवास्तव्यजनस्य वा भूमिगतस्वामित्वाधिकारो जितेऽपि

प्रदेशे नापहर्तुं शक्य इति । यो हि भूप्रदेशो येन पुरुषेण श्रमेण संपादितः, तत्रत्यतृणकाष्ठादिकं निरस्य स्वच्छतया आवापार्हः कृतः, तत्र तस्यैव स्वत्वम् । एवं च भूमेः स्वत्वं यदा कदापि वैयक्तिकश्रमेण वा सामुदायिकश्रमेण वा जनस्यैव निष्पद्यते । अत एवोक्तं मनुना—

पृथोरपीमां पृथिवीं भार्यां पूर्वविदो विदुः ।
स्थाणुच्छेदस्य केदारमाहुः शल्यवतो मृगम् ॥ ९।४४

अत्र पृथोः स्वामित्वं न विजेतृत्वेन किंतु पृथिव्या बीजवापार्हसमीकरणेन । केदारमृगसाहचर्यात् । अत्र च विषये माऊन्स्टुअर्ट् एल्फिस्टन् महोदयस्य वृत्तनिवेदनं (रिपोर्ट) अवश्यमेवावलोकनीयम् । यद्धि पेशवेराज्यपराजयाल्लब्धमिदानीं मुंबईशान्ते समाविष्टं भूप्रदेशं विषयीकरोति । तच्च वृत्तनिवेदनं २५ आक्टोबर १८१९ खिस्ताब्दीयेतिवृत्तादत्र संगृहीतं यथा—"प्रजासु बहवः किल स्वक्षेत्राणां स्वामिन एवात्र । ते च प्रतिवर्षं नियमितं करमेव राज्ञे प्रयच्छन्ति । तेषां क्षेत्रेषु स्वत्वं वंशपरम्परया क्रयार्हं च भवति । यावत्करदानं क्रियते तावन्न कदापि तदपह्रियते । यदा तु करदानमवशिष्टं भवति तदा तदपह्रियते । एवमपि अवशिष्टकरदानानन्तरं पुनश्च तत्प्राप्तयेऽन्यूनत्रिंशद्वर्षपरिमितोऽवधिस्तैर्लब्धुं शक्यते । सोऽयं दीर्घकालीनः किलाधिकारस्तेषामस्ति । सोऽयं भागधेयः परिमित एव । परं च प्राक्तनमराठाराज्येऽन्येऽपि करास्तेषामुपरि अतिवाहिता आसन् । अनेन चेदमवगम्यते यदनेकविधकरादानेऽपि तेषामुपार्जनं क्षेत्रादुत्पन्नस्यार्धाधिकं स्यादिति"। (व्यंकट बापूजी वि. मुंबईप्रान्तीयदण्डसंस्था-वरिष्ठन्यायासनेतिवृत्तपरिशिष्टम् पुस्तकं १२ पृष्ठम् ५०) विजेतुर्न भूमिगतं स्वत्वमपि तु तत् उपार्जितस्योपरि करादान एव तस्याधिकारः । अयं च सिद्धान्तः स्टोक्समहोदयकृतहिन्दुधर्मशास्त्रे पृष्ठे ४४ एकस्मिन् परिच्छेदे विशदमेव प्रतिपाद्यते । तदित्थम्—नूतनप्रदेशजयानन्तरं जितानां द्रव्यगृहभूम्यादिषु करादानाधिकारात्मकं स्वामित्वमेव विजेतुः, न स्वत्वाधिकारः, पूर्वमीमांसायाः षष्ठाध्यायेऽप्येवमेव । न हि राजा सर्वां वसुधामितस्त्रष्टुमधिक्रियते । न वा कस्यचन प्रदेशस्याधिपतिरपि तं प्रदेशं कृत्स्नम् । यत्र कुत्रापि प्रदेशे वा ग्रामे वा गृहे वाऽवस्थितं भूम्यादिकं धनं कस्यचन स्वामिनः स्वत्वेनावरुद्धमेव भवति । राजा तु बलिभागमाहरेत् । दान च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनानुकूलो व्यापारः । न च राज्ञा कृत्स्नवसुधादाने तत्संभवति स्वस्वत्वाभावेन तन्निवृत्तेरभावात्सुतरां परस्वत्वापादनाननुकूल्येन तत्संपादकत्वासंभवात् । एवमा राजदत्तान्यग्रहारभूम्यादीनि तत्र तत्र वर्तन्ते । तत्रायमाशयो यदंशो करादानादिषु राज्ञः स्वत्वं एव अंगस्तेन प्रदत्त इति । एवं चोपार्जकस्य जीवननिर्वाहपर्याप्तं धनमवस्थाप्याधिकं तु प्रतिग्रहीताऽऽ देयेति । क्रयविक्रयाभ्यां तु विक्रेतुः स्वत्वं निर्गत्य क्रेतुरेव स्वत्वे पर्यवस्यति । अस्यामवस्थाय यदि सत्यमेव तीव्रः परलोकफलाभिलाषस्तर्हि स्वामिनः सकाशाद्भूमिं क्रीत्वैवानन्तरं देया । तदे मपार्थंदानफलभागित्वमिति ।

( व्यंकट. बापूजी वि. मुंबई प्रान्तीयदण्डसंस्था । वरिष्ठन्यायासनेतिवृत्तपरिशिष्टपुस्तक १२ पृ. ३८।३९ ),

अत्र च ये किल हिंदुधर्मशास्त्रनियमास्तद्विषये मि. माऊन्ट स्टुअर्ट एल्फिन्स्टन् महोदया एवं वदन्ति यद्दण्डसंस्थया स्वीयोपार्जने तदंशे वा स्थापितमप्यन्यस्य कस्यचन स्वत्वं न परम्परागत–परम्परासंक्रमणीय–प्रजास्वत्वस्यापहारकं भवितुमर्हति । अतश्च न दण्डसंस्थयापि तथा विधेयम् । यदा हि श्री. बाजीरावपेशवेमहोदयानामावश्यकताऽऽसीत् तादृशभूमेः। तदा तैरपि क्रयेणैवोपार्जिता ।

( व्यंकट बापूजी वि मुंबईप्रान्तीयदण्डसंस्था वरिष्ठन्यायासनेतिवृत्तं पुस्तकं १२ पृष्ठम् ५१ )

करादानप्रकरणे मनुरपि—

यथा फलेन युज्येत राजा कर्ता च कर्मणाम् ।
तथाऽवेक्ष्य नृपो राष्ट्रे कल्पयेत्सततं करान् ॥ ७।१२८
यथाऽल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः ।
तथाऽल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाऽऽब्दिकः करः ॥ १२९
पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः ।
धान्यानामष्टमो भागः षष्ठो द्वादश एव वा ॥ १३०
आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् ।
गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥ १३१
पत्रशाकतृणानां च चर्मणां वैदलस्य च ।
मृन्मयानां च भाण्डानां सर्वस्याश्ममयस्य च ॥ १३२
म्रियमाणोऽप्याददीत न राजा श्रोत्रियात्करम् ।
न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् ॥ १३३
यत्किंचिदपि वर्षस्य दापयेत्करसंज्ञितम् ।
व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम् ॥ १३७
कारुकाञ्छिल्पिनश्चैव शूद्रांश्चाऽऽत्मोपजीविनः ।
एकैकं कारयेत्कर्म मासि मासि महीपतिः ॥ १३८

एतैश्च मनुवाक्यैरिदमवगम्यते यद्राजा वाणिज्ये क्षेत्रसस्योत्पत्तौ समार्जिते चांशेन परिमिता आब्दिकाः कराः कल्पनीयाः । अतश्चेदमपि सिध्यति यत्र तत्र तत्र वस्तुषु राज्ञः स्वत्वम् । कितूपार्जकानामेवेति । भूम्यादिष्वपि उपार्जितसस्योपरि भागकल्पनान्न तत्र केनाप्यंशेन राज्ञः स्वत्वम् । न वा तथा स्वत्वस्थापनाधिकारः । एवं च राजस्वत्वस्थापनाधिकारे किमपि न प्रमाण–

मिति न तादृशाधिकारो मन्तव्यो भवति । अयं च सिद्धान्तः १८७५ खिस्ताब्दे मेमासि प्रथमदिने पुरस्कृतः। व्यंकट बापूजी वि. दण्डसंस्था मुंबई इतिवृत्तपरिशिष्टपुस्तके १२ इत्यत्र प्रतिपादितो वर्तते । वरिष्ठन्यायासनानुशासनमपि (ठराव) तथैव वरीवर्ति । नाद्यावधि विपरिवर्तनं तस्य । परिशिष्टपृष्ठे ५२ इत्यत्र वरिष्ठन्यायासनाध्यक्षा विद्वांस एवं वदन्ति—

" एतद्विषये पर्यालोचितेषु प्रमाणेषु महापात्र (प्रोफेसर) एच्. एच्. वुईल्सन् महोदयैः पुनः पुनः विचार्य यो हि राद्धान्तो निष्कासितः, स एव अस्माभिरपि प्रतिपाद्यते । स च यथा—
" पर्यालोचितासु किल हिन्दूनां प्राचीनसंस्थासु विचारिते च तेषां धर्मशास्त्रे राज्ञः स्वत्वाधिकारोऽस्तीत्यत्र ( Proprietary rights ) किमपि प्रमाणं न वर्तते । एवं च दण्डसंस्थाया अयं स्वत्वाधिकारो व्यावर्तकेन वैयक्तिकेन च स्वत्वाधिकारेण विसंगत एवेति नाधुनातनैः हिन्दुशासनशास्त्रपण्डितैरङ्गीकृतः " इति ।

भारतवर्षं शासति किल औरंगजेबनृपतौ भारतवर्षे तदानीं प्रचलितस्य हानीफासंमतस्य महम्मदीयशासनसिद्धान्तस्यानुसारेणापि तैरेव विद्वद्भिर्न्यायासनाध्यक्षै राजस्वत्वाधिकारमधिकृत्य निम्नलिखित एव निष्कर्षोऽनुमोदितः । ( पृ. ५६ तमे ) स यथा—" केनचन महंमदीयराज्ञा महंमदीयेतरः कश्चन प्रदेशो वा राज्यं वा शस्त्रबलाद्विजित्य तत्र च तद्देशीयानां वास्तव्यमनुज्ञातं चेत्तदानीं हानीफाशासनानुसारेणाधिकृतराजपुरुषद्वारा वा स्वयं नृपेण वा तत्रत्यो भूप्रदेशो विभज्य तेभ्यः प्रदेयः । तत्र चाऽऽब्दिककरोऽपि संग्राह्यः परिकल्पनीय इति कर्तव्यमेव तस्य राज्ञः । तथैव व्यवस्था इराकप्रान्ते स्वराजभागवसतौ ओमरनाम्नैन विहिताऽऽसीत् । एवं च विभक्तभूभागो यैः स्वीक्रियते, तेषामेव तत्र स्वत्वं निरन्तरं भवति । तच्च यावत्करदानमव्याहतं तावन्नापहर्तुं शक्यं केनापीति "

अनेन च मूलसंदर्भेण विशदोऽयं निर्णयः प्रतीयते यन्मूलतो महंमदीयेषु प्रदेशेषु न राजदण्डस्य स्वत्वाधिकार इति । प्रजानां भूमौ संपूर्णस्वत्वाधिकारस्तु हिन्दुधर्मशास्त्रानुसारेण पुनश्चाधस्तनहेतुनापि सिद्धो भवति । यदि कर्षकेण केनापि कारणेन क्षेत्रमकृष्टं चेद्राज्ञो दण्डाधिकारस्तत्र हिन्दुधर्मशास्त्रेणाङ्गीकृतः । न तु कर्षकस्य स्वत्वापहारेऽधिकारो राज्ञे प्रदत्तः । अत एव राजा केवलं भागधेयमात्रहारीति हिन्दुधर्मानुशासनम् । अत एव च ( कृष्णराव वि. रंगराव ४ मुंबई हाय. रि. १ ए. सी. जे ) इत्यभियोगे वरिष्ठन्यायासनेनैवं निर्णीतं यत्—अग्रहारधानुबन्धाप्रहारभूम्य उपहारा यद्यपि भूम्युपहारत्वेन व्यपदिश्यन्ते तथापि तेषां न तादृशोपहारत्वम् । किंतु भूम्युपार्जितस्यांऽऽशिकराजभागधेयस्यैव तदुपहारत्वमिति तु युक्तमुत्पश्याम इति ।

( रावजी नारायण मंडलीक वि. दादाजी बापूजी देसाई मामलेदार रत्नागिरी; इं. लॉ. रि. १ मुंबई पृ. ५२२ ता. ५ मार्च १८७५ ) इत्यस्मिन्नभियोगे मुंबईप्रान्तीयवरिष्ठन्याया-

सनेन पुनरप्येवं निर्धारितं यद्राज्ञा प्रदत्तस्याग्रहारग्रामस्य शासनपत्रे विना च स्वत्वाधिकारं विना चाग्रहारं यत्किमपि जलतरुपाषाणतृणकाष्ठनिधिनिक्षेपतदङ्गभूतवस्तुजातं प्रदत्तमित्युल्लेखेऽपि स तद्ग्रामस्थभूमिकायां यद्विषयको राजस्वत्वाधिकारः, तद्विषयक एवेति ज्ञातव्यम्। अतश्चैतादृश-शासनपत्रे स्पष्टमिदमुल्लेखनीयं यदेतादृशशासनपत्रेण यत्र विषये राज्ञः स्वत्वं तदेव दात्रा प्रतिग्रहीत्रे प्रदत्तमित्यर्थः सूचितः स्यात्।

( व्यंकट बापूजी वि. मुंबई सरकार परिशिष्ट व्हॉल्यूम १२ मुंबई हाय्. रि. पृ.५७।५९ ) कानडा फारेस्ट खटला इं. लॉ. रि. ३ मुंबई पृ. ५८३।५८४।५४२।५४६।५४७; कार्डो इत्यस्य भूमिविभागसंबन्ध्यनुशासननियमानां पुस्तकं १८८२ पृष्ठं ९३ ) इत्यादिषु शासननिर्णयेषु एवमेव संमतमस्ति यत्प्राचीनहिन्दुधर्मशास्त्रानुसारेण वा महंमदीयशास्त्रानुसारेण वा वापातिरिक्तभूविभागे दण्डसंस्थाया एव स्वत्वाधिकार इति। एवमप्यत्र विषये वयं सविनयमेवेवं सूचयामो यन्नात्र किमपि प्रमाणं हिन्दुधर्मशास्त्रेऽस्तीति। सर्वस्मिन्नपि भारतवर्षेऽग्रहारेषु वाऽनग्रहारेषु ग्रामेषु वापातिरिक्तभूभागे ग्रामस्थानामेव कर्षणाद्यधिकारपरम्परा निष्प्रतिबन्धेनैव अद्यावधि प्रवर्तिता लोकैः सामान्यतः। सोऽयं लोकानामधिकारो बाह्यानां विरोधको, न शासनसंस्थाया इत्यत्र वा अग्रहारतदितरग्रामस्थाया वापातिरिक्तभुवो यथेच्छं विनियोगाधिकारो राज्ञ एव निष्प्रतिबन्ध इत्यत्र वा किमपि प्रमाणं हिंदुधर्मशास्त्रे नोपलभामहे। दण्डसंस्थावश्यकतायाः प्रागपि भूपृष्ठे कश्चन मानवसमाजस्तस्य चोपभोग्यं रिक्थमासीदित्यैतिहासिकयथार्थकल्पनाया एवं सति बाध आपद्येत। व्यक्तिशो भूमिगतस्वत्वाधिकारो दण्डसंस्थायाः कार्यस्य यथार्थाधिकारस्य च मर्यादा चोभौ विषयौ परस्परानुबन्धिनावत्यन्तनिगडितौ चैतादृशौ यदेकस्य निर्णयमन्तरा नान्यस्य पूर्णो योग्यश्च निर्णयः कदापि भवितुं शक्यः। व्यक्तिस्वत्वराजस्वत्वयोश्चान्योन्यसंबन्धः कार्य-कारणयोरिव वा भाषाव्याकरणयोरिव वाऽनुबद्धः कथमपि दुरूह एव। भोग्यसंपत्तेर्जीवितस्य च परिपालनावश्यकताया भावना स्वभावतस्तत्प्रागेव भवति नान्यथा। इग्लंडशासनटीकायां व्हॉ. १८।१८४१ पृष्ठानि १४२।१४३।१४५।१५४ ) स्टीफनमहोदयस्य विचारसरणिरधो निर्दिष्टा मनसि कर्तव्या।

## ( स्टीफन्महोदयस्य शासनतत्त्वम् )

पृथिवीगतभोग्यसंपत्तिः पृथ्वी चेयं मनुष्येतरप्राणिनो वर्जयित्वा मनुष्यमात्राणां कृते परमेश्वरेण साक्षादुपहाररूपेण प्रदत्तं सामान्यरिक्थमेव। यदा किल पृथिव्या मानवा विरलाः स्वल्पाश्चाऽऽसन्। तदा तावत्सर्वमिदं रिक्थमनावृतमेव कस्यापि स्वत्वेनानवष्टब्धमासीत्। ततश्चाऽऽवश्यकतानु-सारेण सामान्यसंचयात् तत्सर्वेणापि सुलभमभूत् स्वोपभोगाय इत्येव सांप्रत परिकल्पनम्। एवं च सृष्ट्यारम्भकाले पार्थिवाः पदार्थाः पृथ्वी च सामान्यरिक्थस्वरूपा न कस्यापि स्वत्वेनावष्टब्धाऽनावृ-

तैव। तत्र चानावृतभूमिभागेऽपि प्रथमतश्छायाविश्रामादिकारणात् यस्य भूभागस्य येनोपयोगो विहितः, तस्य तत्र स्वत्वं स्वभावत एव लब्धमिति बलात्तदपहरणं न केवलमन्याय्यमपि तु सृष्टिनियमाविरुद्धमपि। यदा तु स भूभागः प्रथमेन त्यक्तो भवेत् तदा द्वितीयस्याऽऽक्रमणं तु न तथा भवति। यावत्सर्वमिदं भूमिभागो वा शाद्वलादिकं वा सर्वसाधारणमेवानावृतमासीत्। तावदेवोपरितननियमोऽपि प्रचलितः। कदाचित्तदानीं नगररूपेण जनानां वास्तव्यं चेत्तर्हि तु तस्याभिमतः परमपवादः स्यान्नियमस्य। तत्रैव किल तदा बीजावापार्थमावश्यकता स्यादेकस्वत्वावष्टब्धभूमिभागस्य। सा चाऽऽवश्यकता नगरसंकोचेऽवश्यमेव सफलिता भवेत्। एवमेव यदा निखिलोऽप्युपलब्धो भूमदेशो मानववास्तव्यः संजातः। तदा तद्वृद्धस्य मानवसमूहस्य वास्तव्यार्थं तस्यापूर्णत्वात् नूतनभूप्रदेशान्वेषणाक्रमणादिकं प्रावर्ततेति परदेशाक्रमणाविकारोऽयं मानवानामुपरितनजीवननिर्वाहतत्त्वानुसारेणैव संपद्यते। फोनीशन् , ग्रीक, जर्मन्, सिथियन् प्रभृतिभिरन्यैश्चोत्तरैरेतत्तत्त्वानुसारेणैवान्यत्र वास्तव्यं संपादितम्। यावदिदं निर्मनुजानां स्वल्पमनुजानां प्रदेशानां तत्र च वास्तव्यकृष्यादीनां च विषय एव आसीत्, तावत्सृष्टिनियममर्यादायामेव सर्वमिदं प्रावर्तत न तदुल्लङ्घनेन। परंतु यत्राऽऽदित आरभ्यैव मानववसतिः परिपूर्णा वर्तते न च स्वल्पावकाशः कश्चन भूप्रदेशो वर्तते। तत्र च बलादाक्रमणं पूर्वतनानां लोकानां तत्रत्यानां वैरभावावर्मैत्र्यव्यवहारादिभिर्वादेव केवलं निरपराधिनां निराश्रितानां च तेषां ततो बलान्निष्कासनशिरच्छेदनादिकमिदमिदानीं प्रवर्तमानं मनुष्यमात्रसुधारणापरनामधेयख्यातिद्वारा स्वनामश्लाघाकानामस्माकं कियद्वा भूषणास्पदमिति सूक्ष्मेक्षिकया आलोचनीयम्। यथा यथा लोकबाहुल्येन भूप्रदेशा यथोत्तरवृद्ध्या परिपूर्णाः। तथा तथा पूर्वतनलोकाननाक्रम्य नूतननिवासस्थानाधिगमनं तदन्वेषणं नातीव दुष्करतरमभूत्। पूर्वतनं वासस्थानं तु प्रथमत एवान्यैर्व्याप्तमिति तत्रैव निवासे हि भोग्यपदार्थोपार्जनन्यूनता नूतनोपभोग्यानां परिपूर्तेरभावश्च समजनि। एतादृशावस्थायां यदि केशानपि स्वरं नानुसरं चेज्जगदिदमरण्यमेवावतिष्ठेत्। मानवश्च हिंस्रभावत्वं भजेत। नास्ति स्वल्पैव स्थितिरिदानीम्। मनुष्याणां कर्तव्यसुखयोश्चान्योन्यग्रन्थिः परमेश्वरेण अतिदृढतया संपादितः। अत एव मनुष्याणामुदात्तत्वं वृद्धिं गतम्। अयं च परिणामो मनुष्याणां स्वाभाविकबुद्धिकर्मशक्त्योरुपयोगावसरलाभस्यैव।

तदित्थं सापेक्षता स्थितिपरिवर्तनस्य कारणम्। स्थितस्य निरन्तरोपभोगार्थं च लोकव्यवहारसमा समाजरचना। तदर्थं च राजाद शासनसंस्था, शासनानुशासनं दण्डानुशासनं धार्मिकानुशासनं सर्वजनीना साधारणेऽस्मादिपरम्परानुबद्धविधाना दृष्टिमालिका समाश्रयणीया समुद्भूता। अत्र चान्योन्यानुबन्धे विचारिते सत्याकरं धर्मनैव एवाङ्गं जीवननिर्वाहहेतुभूतशारीरिकश्रमव्यवस्थायै सर्वत्र इन्द्रियोऽस्तीति भागो लोकानां बुद्धिविकासार्थं सृष्टिसंशोधनद्वारा शास्त्रीयमूलतत्त्वान्वेषणार्थं धनुराद्यवस्थानायैव दृश्यन्ते।

## ( रिक्थस्य व्यक्तिस्वत्वे ग्रोशस्लॉक्प्रभृतीनां मतम् )

रिक्थस्य व्यक्तिस्वत्वे ग्रोशस्लॉक्प्रभृतिभिर्लेखकैरेवं मन्यते यद्भूमेर्बीजावापादिद्वारा प्रत्यक्षोपभोग एव शारीरिकश्रमाश्रभूतत्वात् सृष्टिन्यायतत्त्वानुसारेण स्वत्वाधिकारे व्यक्तेर्गमकः। प्रथमतो हि स्वापेक्षानुसारेणाधिकाविक्रमनुकूला यावन्तो भूविभागा उपलब्धाः, ते सर्वेऽपि व्यक्तिमात्रेण पारम्परिकस्वोपभोगार्थं स्वायत्तीकृताः। ते च भागास्तत्रत्यानां केषामपि पूर्वस्वत्वावष्टब्धा न स्युरित्येव पूर्वतनः समयः। एवं च भूमौ जङ्गमे च वस्तुनि प्राथमिकं स्वत्वं तस्यैवाभूयस्य प्रथमं स्वायत्तीकरणम्। तदिदं स्वत्वं निरन्तरोपभोगाधिकाररूपम्। नैरन्तर्यं चाधिकारस्य " मदुपयोगार्थं चास्य स्वायत्तीकरणमित्युद्देशः, मया यावदन्येन केनचिद्धेतुनाऽस्य वस्तुनस्त्यागोद्देशो न प्रदर्श्यते, तावन्मत्स्वत्वाक्रान्तत्वम्, सर्वमान्यशासनानुसारेणापि मत्त्यागानन्तरमेव सर्वजनीनोपयोगार्हत्वमन्योपभोगार्हत्वं चास्य वस्तुन इति। इत्थमेव स्थावरजङ्गमवस्तुषु सर्वेष्वपि निरन्तरं व्यक्तिस्वत्वं पर्यवस्यति। एवं स्वत्वाधिकारसिद्धौ तत्संक्रमणाधिकारतत्त्वमपि सिद्धं भवति। तदिदं स्वत्वं यदि यावज्जीवमेव स्यात्, मृत्युना चास्य परिसमाप्तिः स्यात्। तदा तु मरणानन्तरं व्यक्तेः सहकारिषु निकटसंबन्धिषु संततमेव महान् कलहः प्रादुर्भवेत्। यतः पूर्वोक्ततत्त्वानुसारेण तेषामेव तदुपभोगाधिकारः। तन्निरासार्थमेव प्रायः सर्वेष्वपि देशेषु अनुशासनमिदं वरीवर्ति यन्मुमूर्षुणा स्वीयं रिक्थं मृत्युपत्रद्वारा यस्मै कस्मा अपि प्रदेयमित्यधिकारः सर्वेषाम्। तदिदमनुशासनं सृष्टिशासनादधस्तनमवरं च। एतदनुशासनानुसारेण व्यवस्थाभावे तु तत्तद्देशीयशासनविधानानुसारेण तत्तद्दण्डसंस्थैव तद्रिक्थस्य दायभाक् भवति। अत्र चेदमेव निदानं यद्दायभागित्वेन कस्याप्यनुपस्थितौ तद्रिक्थस्य पुनरप्यनावृतत्वे कलहापत्तिः। तन्निवारणार्थमेव दण्डसंस्थात्मको दायादः मृत्युपत्र्यासनीय इति। मृत्युपत्रानुशासनाभावे तत्सत्त्वेऽपि तथाऽकरणे शासनविध्यनुसारेण वा कस्यापि दायादस्यानुपस्थितौ च तादृशरिक्थोपभोगस्याधिकारः कस्येति विवादोपस्थितावन्ततो बलमेव तदुपभोगाधिकारनिर्णायकं स्यादिति तन्निराकरणार्थमेव दण्डसंस्थाया दायादत्वमङ्गीक्रियते सर्वत्र। एतत्तत्त्वानुसारेण यत्र दण्डसंस्था राजायत्ता, तत्र राज्ञो दायादत्वाधिकारोऽन्तिमः। यत्र तु लोकायत्ता, तत्र तेषां सर्वजनीनत्वेनाधिकारः, नान्यस्य कस्यापीति सिध्यति। मृतस्य पुत्राणां वा समीपतरसंबन्धिदौहित्रादीनां वा यो ह्यप्रदत्तदायाधिकारः प्राप्नोति। सोऽपि येन स्वाभाविकोपभोगाधिकारेण रिक्थे स्वत्वं प्रस्थाप्यते। तेनैवाधिकारेणोत्तराधिकारिणः संबन्धे सत्येव। नान्यथा। अतश्च मृतस्य पुत्रा वा समीपसंबन्धिनो वा तद्गृहे लब्धजन्मा दासो वा ये केऽपि मरणावसरे तत्संनिहिता भवेयुस्त एव तस्याप्रदत्तदायाधिकारिणो भवन्ति। इत्थमयं स्वाभाविको व्यवहारो दीर्घेण कालेन तथैव प्रचलितः शासनविधित्वमुपपाद्यते। अत एव पुराणतमो वयोवृद्ध आब्राहामसाधुरेवमुद्गिरति स्मेत्युपलभ्यते यत् " यतो न

मृतस्य न किमपि संतानमीश्वरप्रदत्तमतश्च तद्गृहे लब्धजन्माऽयमन्यजातोऽपि तद्भृत्य एवास्य रिक्थस्य स्वामी संपद्यते " इति । स्वरिक्थं पश्चात्स्ववंशजैरेव सुलभमिति भावनैव खलु मानवानत्युत्तमनागरिकत्वेन समाजोपयोगिसामाजिकत्वेन संभावयति । तेन च कर्तव्योन्मुखता सर्वलोकपात्रता चोत्पद्यमाना पुरुषं प्रवर्तयति । स्वकृतपरिश्रमाणां फलं न स्वमृत्युना विलीनं भवति । किंतु स्वसंबन्धिनः स्वप्रेमास्पदा ये प्रेमरज्ज्वा स्वात्मानं बध्नन्ति,तानपि प्राप्स्यतीति स मृतात्मा यदा विश्वसिति। तदैव खलु कर्तव्यनिष्ठा पात्रता च भवेन्नान्यथा । एवमेव खलु स्वत्वतत्संक्रमणाधिकारयोरुपपत्तिरिति प्रायो विचारसरणिर्विचारचातुरी-चतुरधुरीणानाम्। परं त्वत एव विशदमिदमवगम्यते यत् स्वत्वाधिकारोऽयं सर्वत्र प्रदेशेष्वनुभूयते । तथाच शासनविषयोऽपि तथोपलभ्यन्ते । सोऽयं स्वत्वाधिकारः किल समाजव्यवहारमूलकलाभेष्वन्यत्तमः । एतल्लाभाधिगमार्थं विनिमयमूल्यमपि स्वाभाविकस्वातन्त्र्यस्यांशतस्त्यागरूपं व्यक्तिशः सर्वैरपि वितीर्यत एव । जीवितशरीरावयवयो रक्षणाधिकारवदयमप्यधिकारोऽद्ययावद्विशेषतः सावधानतयैव न केवलं सुरक्षितोऽस्ति इंग्लंददेशीयशासनसंस्थया। किंतु तत्तत्प्रसङ्गानुसारेण तदा तदा सुविशदैः समर्थैः शब्दैराघोषितोऽपि तत्रत्य शासनपत्रेण "मॅग्नाचार्टानामकेन " इति ।

इंग्लंददेशस्य शासनशास्त्रोपरि ब्लॅकस्टोननामकेन केनचन महाशासनकोविदेन काचन टीका विरचिताऽऽसीत् । स्टीफनमहोदयस्य टीका तु तस्या एव संशोधिता संवर्धिता च पुनरावृत्तिः। उपरितनाः सर्वेऽपि अवताराः पाश्चात्यशासनशास्त्रस्य तत्त्वनिदर्शका एव । एतैश्च रिक्थस्य तदानुषङ्गिकविषयाणां च योगक्षेमयोस्तत्त्वतः कीदृशी विचारसरणिरिति विशदीभवति । प्रथमतः कीदृक् खलु भूमिप्राप्तिः कथं च तत्र स्वत्वं तदुत्पन्नायां भोग्यसंपत्तौ च कथंकारं भोगाधिकारः कीदृशी च मानवसमाजरचना कया रीत्या दण्डसंस्थावश्यकता कीदृग्विधं शासनतन्त्रं किंच कीदृशं च धर्मसंप्रदायानुशासनम् । इहलोके जीवितस्य वा संसारस्य वा को नाम सामान्यत उद्देशः शासनानुशासनयोः किंवा परमं तत्त्वम् । कीदृशं च लक्ष्यमित्येतेषां प्रदर्शनार्थमेव किलोपर्युक्तान्यवतरणानि सविस्तरमत्र प्रदत्तानि । एतेन प्राचीना वाऽर्वाचीना वा ये केऽपि पाश्चात्या ज्यूमहंमदीयादयोऽपि शासनदृष्ट्या वा धर्मदृष्ट्या वा न्यायदृष्ट्या वा भूमिस्वत्वाधिकारे तदानुषङ्गिकेष्वितरेषु च विषयेषु निम्नलिखितानेव निर्णयांस्तत्त्वनियमापरनामधेयान् कुत्रचित्प्रत्यक्षमेव क्वचिद्गर्भितार्थत्वेन वा संमन्यन्ते इत्युक्तौ न कोऽपि प्रत्यवाय इति सिध्यति । ते च यथा—

(१) जीवननिर्वाहार्थमत्यावश्यकानामत्युपयोगिनां च वस्तूनां गृहशाद्वलेन्धनादीनां सातत्येनाऽऽवापार्थं संग्रहस्य प्रथमत आवश्यकता, तदर्थं चाऽऽवापार्हायां तदनर्हायां वा भूमावादौ तज्जन्यजङ्गमपदार्थेषु च स्वत्वसंपादनस्य तत्संरक्षणस्य चाऽऽवश्यकता । तदर्थमेव च लोकप्रवृत्तेः स्वाभाविकत्वम् ।

( २ ) तादृशस्वत्वसंपादनाधिकारो वा तत्संरक्षणाधिकारो वा शान्त्या यथायोग्यपरिश्रमेणैवाधिगन्तव्यः । न कस्यचन घातेन वा बन्धेन वा याचनया वा ।

( ३ ) तादृशपरिश्रमेषु सामान्यतो लाभार्थपरिश्रमाणां क्वचित् प्रसङ्गवशात् लब्धपरिरक्षणश्रमाणां लाभावसरे च संपादकस्य जीवितं शरीरावयवाश्चेतरे चाधिकारा न नश्येयुरित्येतदर्थं च कृतानां परिश्रमाणामन्तर्भावः ।

( ४ ) तदित्थं श्रमजीविनामन्योन्यसहकारित्वेन वा संभूयसमुत्थानकारित्वेन वा संघटितस्वरूपेण वा या किल संसृष्टिर्वास्तव्याद्भवति । ततश्च सैव समुदायस्वरूपात्मिका । संपन्ने च तथा स्वरूपे इतस्ततो भ्रमणमपि वृत्त्यर्थं परिसमाप्यते । कस्मिंश्चिद्भूभागे चैकत्र संवासस्थानमपि भवति ततः । तदेव च परिस्थित्यनुसारेण खेट–खर्वट–वाटी–ग्रामनरादिसंज्ञां भजते । एवं लब्धस्य वा लब्धव्यस्य वा स्थानस्य गुणदोषविशेषाद्वैषम्यमपि नैसर्गिकमेव । एवं च विभिन्ननानाविधव्यक्तीनां तत्र तत्र पृथक् विभागोऽपि विषम एव संपद्यते । एवमेव तत्रत्यहितसंबन्धानामुपभोगानां च व्यक्तिशोऽपि वैषम्यमेव । सोऽयं व्यक्तीनामेकत्र संवासो हितसंबन्धमूलको वोपभोगमूलको वा नान्यत्किमपि प्रबलं कारणमपेक्षते ।

( ५ ) एते च श्रमजीविनां संघा नैसर्गिकशरीरबलाद्वा स्वाभाविकबुद्धिसामर्थ्याद्वा योग्यतानुसारेण श्रमविभागं श्रमसंयोगं च परिकल्प्य सामान्यतः सर्वेषामुद्दिष्टसाध्यसिद्ध्यर्थं प्रयतन्ते ।

( ६ ) तत्र च येषां सर टी स्ट्रेंजमहोदयस्य वक्तव्यानुसारेण ( हिन्दुधर्मशास्त्रम्–पु.१ पृ. १५४ ) जन्मत एव ज्ञानमार्गप्रतिबन्धः सामाजिकजीवनस्यात्युपयोगिनो विषयाश्च दुरधिगमाः। तथा ये चाऽऽन्ध्यात् बाधिर्यात् मूकत्वाद्वाऽन्यैश्च कारणैर्दुर्बलाः, तेषां तादृशश्रमेभ्यः पर्युदासोऽपि सिध्यति। तत एव च सामाजिकरिक्थलाभभागित्वेनापि प्रत्याख्यानं स्वाभाविकमेव । एवमपि तेषां जीवननिर्वाहस्त्ववश्यमेव सामाजिकरिक्थांशं निष्कास्य विधातव्यो भवति ।

( ७ ) तदनन्तरं तत्र संसृष्टौ परस्परोपमर्दनिवृत्तिपूर्वकसंरक्षणार्थं दण्डसंस्थापि प्रादुर्भवति । तत्र कार्यकारिणां तादृशसंसृष्ट्युपयोगिश्रमजीवित्वादेव सामाजिकरिक्थविध्यंशादेव वेतनादिरूपेण द्रव्यं विभज्य जीवननिर्वाहः संपाद्यते ।

( ८ ) दण्डसंस्थायाः कार्यं तु प्राधान्येन संरक्षणोपाययोजनैव। तच्च सांघिकेष्वेव निर्वाचनद्वारा वा नियोजनद्वारा वा पर्यायद्वारा वाऽन्यैर्नैतादृशेनोपायेनैव प्रायः संपाद्यते ।

( ९ ) भूम्यादिस्थावराणां जङ्गमानां वा पदार्थानां परिमाणविस्तरादिविषये परम्पराभोगतत्सदृशाधिकारद्वारा यत्स्वत्वं श्रमजीविनां तेषां निष्पद्यते । तच्चाऽऽदित एव सांघातिकं वा समष्टिरूपं वा भवति । तच्च तेषां स्वयं शासकत्वेन वा शासकसाधारण्येन वा सर्वेषां भवति न तु व्यक्तिशः संघसदस्यत्वेन ।

( १० ) तत्र च शासनविषयोऽपि समाजस्य सांघिकसंमतिस्वरूपा वा समष्टिसंमतिस्वरूपा वा। तत्र बहुमतत्वमेकमतत्वमित्याद्यकिंचित्करम्। सैव च राज्यव्यवस्था। तस्यां च वैयक्तिकसमतिरंशभाक् भवति।

( ११ ) एतादृशविध्यनुसारेण वर्तनमर्थादेव स्वतन्त्रमैच्छिकम्। ये तु न तथा प्रवर्तन्ते ते हि दण्डद्वारा बलात्प्रवर्तन्ते।

( १२ ) कारणवशादत्यन्तमल्पाल्पाः संघाः प्रादुर्भवन्ति। अत्यन्तावश्यकतानुसारेण वा समाजस्य रिक्थकार्ययोर्व्यवस्थानुसारेण वैतादृशसंघनिर्माणं सहजमेव। तथैव रिक्थस्यापि विभजनम्। कश्चन विभागो राष्ट्रव्यवस्थोपयोगी, अपरश्च सामाजिकनित्यकर्मोपयोगीति। ते चाल्पसंघाः परिस्थित्यनुसारेण स्वाभाविकसुगमपद्धत्यनुसारेण वा कदाचित् किंचित्तत्त्वानुसारेण वा कुटुम्बादिसंज्ञां लभन्ते रिक्थांशसहभागित्वं च भजन्ते। तद्व्यवस्थापकस्य मुख्यसदस्येतरघटकैः सह तद्रिक्थेन सार्धं च तादृश एव संबन्धो भवति यथा राज्यव्यवस्थापकस्येतरैस्तद्रिक्थेन सहेति। मृते च तस्मिन् तदुत्तराधिकारित्वे तद्रिक्थे च तथा सामाजिकसमष्टिरिक्थे चेतराणां प्रवेशनियमोऽप्यनायासेन सहज एव सम्यक्तया सिद्धो भवति।

( १३ ) तर्कानुमानयुक्तिवादोपभोगपरम्परादिप्रमाणैः पर्यालोचितेऽपि कथमपि राज्ञः कस्मिन्नपि भूविभागे न स्वत्वाधिकार इत्येव सिध्यति। एवं च वंशपरम्पराधिकारो वोत्तराधिकारः, मृत्युपत्रम्, शासकस्यान्तिमाधिकारः, अग्रजन्मेत्यादिविषयकाणां नियमानां राष्ट्रस्य घटनात्मकशासनविधिषु न कुत्राप्यवसरः।

( १४ ) समाजघटकत्वेन व्यक्तिशः संपादितान्यपि कृत्यानि नैतिकानि वा सामाजिकानि वा बौद्धिकानि वा राजकीयानि वा सर्वजनीनानि यानि कान्यपि विषयोपभोगलालसासमाधानार्थमेव संपाद्यन्ते सर्वैः। तत्र च स्वार्थ एव मूलम्। तेन च वैयक्तिकभोगेच्छायास्तत्पुरस्कारस्य च वृद्धिर्यावच्छक्यम्। परिणामतश्चैतेषां कृत्यानां परव्यावर्तकत्वादंशतो नानाप्रकारैः परहितविघातकत्वमेव। ( नानुपहत्य भूतानि भोगः संभवतीति न्याय एव ) इदं च सर्वसंमतम्। तथापि मृत्युपत्रोत्तराधिकारान्तिमाधिकारप्रभृतीनां नियमानां, एतादृशविघातकव्यक्तिवादविकासप्रतिबन्धकत्वमपेक्षितमपि न तथा संपाद्यते। प्रत्युत भूम्यादिसामाजिकमूलधनवृध्या निधिनिचयार्थं मानवानां भौतिकसुखातिरिक्तोच्चतमसुखप्राप्तये परस्परसहकारित्वेन श्रमेण निर्मितायाः संघटितायाः समष्टिसमाजरचनाया विघटनार्थत्वमेवेत्यत्र तु न किमप्यवधानं कस्यापि।

( १५ ) एवमन्योऽपि महानयं प्रमादो भवति यत् व्यक्तिशोऽधिकाधिकमेव सुखं यथा लभ्येत तथा प्रयतितव्यं सर्वैरिदमेव जीवनसारसर्वस्वमिति सर्वैर्मतम्। एवमेव बुद्धेः शक्तेश्च व्ययेन शास्त्राणां कलानां चाभिवृद्धिद्वारा तत्साध्यमवश्यमेव पूर्णतया संपादनीयमित्यपि मतम्। परं त्विदं

नाऽऽलोच्यते यदेतादृशरीत्या भूमिभौमपदार्थानामावापो निरन्तरं वायुप्रकाशयोरिव न निरवधिरसंख्यश्चेति । एतदनालोचनप्रमादेनैवान्ततो गत्वा वैयक्तिकस्वार्थस्य विषयसुखाभिलाषस्य चानुपमा वृद्धिर्भवति । ततश्चान्ते " सर्वं बलवतो न्याय्यम् " इति न्यायेन बलतत्त्वमेव सर्वघातकमुदेति । ततश्च साम्राज्यतृष्णा, उपयुक्ततावादः, सौकर्यवादश्चेत्येवमादयो विषया आपातरमणीयाः प्रिया भवन्ति । अनेन च कोलाहलेनेदानीं पाश्चात्यप्रदेशेषु समाजो वा याथातथ्येन, समष्टिरित्थं वा राष्ट्रत्व वेत्येवमादीना गन्धवार्ताऽपि न श्रूयते ।

## ( श्रीमेनमहोदयानां मतम् )

एवमेव " हिन्दुधर्मशास्त्रं तद्व्यवहारश्च " इत्यस्मिन् ग्रन्थे ( स. १९०६ पृ. २९३ ) श्रीमेनमहोदयोऽपि निम्नलिखितान् विचारानाविष्करोति । ते च यथा—" यस्य किल हिन्दूनां दायविभागपद्धतिर्ज्ञातव्या स्याच्चेनाऽऽदौ आग्लदायभागकल्पना वा तच्छासनकल्पना वा निःशेषतः सर्वाः परित्यक्तव्याः । ताश्च न- केवलमनुपयुक्ताः प्रत्युत विघातका अपि वर्तन्ते । आंग्ले हि रिक्थस्वत्वमनिर्बन्धं स्वतन्त्रमेवैकाकि वर्तते । तच्च कदाचिदविभक्तमपि भवितुमर्हति । परंतु प्रथमतस्तद्विपरीतमेव विभक्तं स्वतन्त्रं चेति मन्यते । एवमेव प्रसङ्गविशेषाद्विशेषसमयानुसारेण तत्सनिर्बन्धमपि । हिन्दूना तु प्रथमत एव तदविभक्त सप्रतिबन्धमस्वतन्त्र च भवति कारणविशेषमन्तरा सर्वत्रापि वस्तुनि तत्तथैवेति समयः । कदाचित्कस्यचिद्रिक्थं विभक्तं स्वतन्त्रमपि स्याच्चेत्तदपि पश्चात्तनवंश्येषु पुनश्च सयुक्तसामयिकस्वरूपतामधिगच्छेदपि । यत्र च स्वामी स्वरिक्थं यथेच्छं व्ययितुं वा विनियोक्तु वाऽर्हति इत्येतादृशमप्रतिबन्ध स्वतन्त्रं स्वत्व त्वपवादभूतमेव क्वाचित्कम् । सोऽयं प्रतिबन्धः पितुः पुत्रस्य भ्रातृणामन्योन्य स्त्रीणां तूत्तराधिकारिण इति । सपादकस्य रिक्थे स्वायत्ततायामपि तद्वंशजाना तु न तथा किं त्वन्ये प्रतिबन्धास्तत्रोत्पद्यन्ते । पाश्चात्येषु तु रिक्थस्य सर्वथा वैयक्तिकत्वमेवेति नियमः । एवमप्यनयोः पद्धत्योरन्योन्यविरोधप्रदर्शनेन प्रदर्शितेऽपि भेदे मूलोद्गमस्तु सर्वथैकरूप एवेति निश्चितप्रायमेव । इयान् विशेषो यद्भारते भूतकालीना पद्धतिरद्यावधि प्रचलिता वर्तते । आग्ले तु यो ह्यन्योन्यसंबन्ध आसीद्द्वयोः पद्धत्योः स इदानीं विच्छिन्नः । एवं च द्वयोर्महदन्तरमिदानी संपन्नम् । प्राचीनविदुषा सुदर्शाः केचनान्योन्यसबन्धनिदर्शका विशेषा एवेदानीमवशिष्टाः । इति । सर एच्. एस् मेनमहोदयस्तु प्राचीनानुशासनमितिस्त्रीयशासनपुस्तके ( १८९१ ) पृ २५७—२५८, इत्यत्राधोलिखितान् विचारानाविष्करोति । ते च यथा—" उपरि चर्चित मानवाना स्वाभाविकस्थितिवर्णनं निराक्षेपमपि प्रत्यक्षतयोपलभ्यप्रमाणैस्तथा विरुद्ध यथा तद्वितथमपि भवति । उपर्युक्ताभिरुपपत्तिभिर्वर्णिताना कृत्याना हेतूना च व्यक्तिगतत्वमपि यः कोऽपि ब्रूयात् । यः कोऽपि व्यक्तिश एव समाजशासनमनुमन्यते । सिकताकणवत्किल व्यक्तयः । समाजशासनं तु तादृशाना

सिकताकणानां प्रकम्पमानः सेतुः । तथापि बलाद्धितकारकव्यवहारमर्यादया ( शिस्त ) स समाज-रूपेण पाषाणवत्परिणमतीति हॉब्सुमहोदयो मन्यते । विश्रामार्थं वा छायासंसेवनाय कश्चन भूमेः कंचनभागमधिवसतीति ब्लॅकस्टोनूमहोदयः चित्रयति । रोमनानां नैसर्गिकानुशासनेभ्यो यासामुपप-त्तीनामाविष्कारस्तासु सर्वास्वप्ययमेवैको दोषो बाधकः ।

( १ ) रोमनानां नैसर्गिकव्यवहारविषयकानुशासने व्यक्तिविषयकं यद्वृत्तं निवेदितं तेन प्राचीनसमाजशासनाद्व्यक्तिमुन्मुच्य तस्याः सुधारणासंपादनमेवानेन व्यवहारशासनेन विहितं महदिति ।

( २ ) रोमनानां व्यवहारानुशासनं तु नैसर्गिकशासनाद्भिन्नम् । प्राचीनानुशासनं तु व्यक्तिविषये न किमपि मन्तव्यं न जानातीति भूयोऽपि निवेद्यते ।

( ३ ) प्राचीनानुशासनस्य न व्यक्त्या साकं संबन्धो न वा प्रतिमनुष्यम्, किंतु कुटुम्बेन वा संघातेन वा । प्रथमतो राष्ट्रशासनस्य सजातीयाल्पसंघाते प्रचारार्थं किमपि नाऽऽसीत्साधनम् । अनन्तरं तु तत्रापि प्रचारः । एवमपि व्यक्तिविषयको दृष्टिपातस्तु तस्य पूर्णावस्थायां निष्पादिताच्छा-सनशास्त्राद्भिन्न एव । मनुष्याणामायुर्जन्मना मृत्युना च मर्यादितमिति न जानाति तच्छास्त्रम् । तदिदमायुस्तत्पूर्वजानामेवास्तित्वस्य विस्तारः पश्चात्तद्वंश्येषु प्रवहतीति मन्यते तच्छासनशास्त्रम् । ( पृष्ठे २५७–२५८ )

( ४ ) सामयिकसंयुक्तस्वत्वमेव प्राचीना वास्तविकी पद्धतिः, न व्यक्तिस्वत्वम् । व्यक्तिगत-शासनस्य वा वस्तुगतशासनस्य वा विशेषगमका ये किल रिक्थप्रकाराः, ते च कुटुम्बस्य वा सजातीयसंघातस्य वाऽधिकारसहचारिण एव । रोमनशासनशास्त्रेण चेदानीमेतादृशी बुद्धिरुत्पादिता यद्व्यक्तिस्वत्वमेव खलु वस्तुतः सदातनी व्यवस्था सामुदायिकस्वत्वं तु अपवाद इति । अत एव वास्त-विकस्वत्वव्यवस्थाज्ञाने रोमनशासनशास्त्रं न किमपि साहाय्यं करोति । रिक्थस्य मूलावस्थायां वैयक्तिकानुशासनाभ्यासानन्तरं यासां कल्पनानामुद्बोधो भवति तत्सङ्गतोऽत एव चित्ताकर्षकः स्वत्व-प्रकारो हिन्दुषु दृश्यते भारते ।

( ५ ) भारतीयग्रामसमाज एव संघटित आदिसमाजः । तत एव स सहाधिकारिव्यक्ति-समुदायोऽपि । तत्र च व्यक्तीनामन्योन्यसंबन्धस् स्वत्वाधिकारे तथा निगदितः, यथा स पृथङ्नि-र्देष्टुमशक्यः ।

( ६ ) एतयोः पृथक्करणवर्तनेनैवाधिकारिणा महान्तः शासनप्रकाराः संवृत्ताः ।

( ७ ) एते च ग्रामसमाजा अतिप्राचीना इति मन्यते ।

( ८ ) एतेषां या काचिद् व्यवहाररीतिः स्वल्पा न नवीनैः प्रकारैरवश्यं शक्या । एतादृशी भक्तिय सवा... विनाशसिद्धिसाधा वर्ते । बहूनि भङ्गुरिक्थप्रकाराणि नवप्रकाराण्यपीनि

तया निर्वाहितानि। एवमपि न कोऽपि व्यत्ययस्तस्याः। न वा विपरिवर्तनमामूलम्। यया शासनसंस्थयेयं शासनस्य मूलत्वेन परिकल्पिता, सैव शासनसंस्था सर्वापेक्षया हितप्रदा संवृत्ता। (पृ. २६१.)

(९) भारते हि पृथक् स्वत्वं सामुदायिकस्वत्वभवनानुसारि भवति। (पृ. २६१) पितुर्मरणानन्तरमपि तद्रिक्थं क्वचिदेव विभज्यते। तदिदं रिक्थमनेकपरम्परापर्यन्तमप्यविभाज्यं भवति। प्रतिपरम्परं घटकानां व्यक्तिशो दायभागस्य न्याय्योऽधिकारः।

(१०) तस्य च सामयिकरिक्थस्य संचालकत्वं वा व्यवस्थापकत्वं वा प्रायो घटकनिर्वाचितस्यैव पुरुषस्य। क्वचित्तु श्रेष्ठस्य वा ज्येष्ठशाखाया ज्येष्ठप्रतिनिधेर्वा।

(११) संयुक्तदायादानामयं समुदाय एकरिक्थभागिनामयं सजातीयः संघो हि भारतीयग्रामसमाजस्य सामान्यतो निदर्शनम्। तथापि बान्धवसंबन्धापेक्षया वा सहभागित्वसंबन्धापेक्षयाऽत्रास्ति कोऽपि विशेषः।

(१२) स चायं विशेषो यदस्य संघस्य संघटितसमाजत्वमस्ति। येनायं सामुदायिकनिधीनां व्यवस्थां, अन्तस्थशासनव्यवस्थां सुस्थितिसंपादनं, (बंदोबस्त) न्यायदानं, सर्वजनीनकरादानं, चेत्येवमादीनि कार्याणि योग्याधिकारिनियोजनद्वारा सम्यक्तया कर्तुं न प्रमाद्यति। यद्यपि खेटे खर्वटे ग्रामे च भूस्वामिनां कर्षकाणां कुटुम्बान्येकत्र वर्तन्ते नगरे तु न तादृशानि। तथापि प्रतिकुटुम्बमेतावान् शाखाविस्तारो भवति यत्तद्घटकानां भूस्वामिनां श्रमजीविनां च साह्याय्यं विनापि कृषिसंबन्धीनि सर्वाणि कार्याण्येकोऽपि तत्कुटुम्बव्यवस्थापकः स्वयमेव भूस्वामी सन्नपि विधातुं पारयतीत्युपलभ्यते सर्वत्र।

(१३) क्षेत्राग्रहारस्य (जमीनदारी) ग्रामाग्रहारस्य वा (जहागिरी) अधिकारा यद्यपि समेषां समाः, सामुदायिकरूपेण यद्यपि च न्यूनाधिकभावेन विभागः, तथापि तेषामत्यन्तपूर्णतया पार्थक्यं तु न कदापि भवति। तत्रोदाहरण यथा कश्चन ग्रामाग्रहारी कदाचित् स्वाधिकारान् विक्रीणीयाद्वा आधिरूपेण निक्षिपेद्वा तथापि तत्र प्रथमतो ग्रामसंमतिरपक्ष्यते। क्रेतुश्च पुनस्तत्स्थानापन्नत्वात्तदीयकर्तव्यपरिपालनमत्यावश्यकं भवति।

(१४) कस्यचन कुटुम्बस्य निर्वंशत्वे तु तदीयो दायः पुनः सामयिकनिधौ निक्षिप्यते। (पृ. २६३–२६४)

(१५) भारतीयग्रामसमाजोऽयं न रोमनकुटुम्बेन साकं तुलामारोपणीयः, किं तु रोमनजेन्सपद्धत्या वा रोमनवंशपरम्परापद्धत्या वा (घराणें) ग्रामाग्रक्रेता हि कुटुम्बव्यवस्थापकस्थानापन्नो रोमनलोकानां दत्तक इव स भवति।

(१६) दत्तकविधानस्य मृत्युपत्रप्रामाण्यावस्थापनस्य वा शासनानुसारित्वसंपादनाय यथा रोमनसमितिः (comitia-curiata) (स्वात्मानं बन्धुत्वेन मन्यमानानां महासंघानां समितिः;

रोमनलोकानां संयुक्तं राज्यं वा ) दायादानामनुमितिविषये विशेषाभिनिवेशं प्रकटयति स्म, तथैवात्रापि क्रेतुः समाजघटकत्वार्थं सर्वसंमेतराावश्यकतेति स्मारयति सा तां रोमनपद्धतिम्। (पृ. २६४–२६५ )

(१७) ग्रामस्थलोकानां परस्परं पैतृकसंबन्धकल्पना, स्वत्वाधिकारस्य स्वामित्वाधिकारस्य चान्योन्यं संकीर्णता, अन्तस्थव्यवस्थार्थे च स्वयंस्फुरिता योजनाः, इत्यादिषु विषयेषु रशियास्थो ग्रामो भारतीयग्रामसमितेः प्रायः पुनरावृत्तिरेव दृश्यते। द्वयोरयमेव विशेषो यत्सहाधिकारिणां योऽन्योन्यसंमिश्रिताधिकारविभागः, स तु रशियादेशे तत्तत्कालावधिकः। भारते तु स परिपूर्णतया निर्मर्यादकालमेव प्रचलितो भविष्यति।

(१८) सर्व्हिया, क्रोशिया, आस्ट्रियान्तर्गतसाल्व्होनिया इति प्रदेशेषु सर्वेऽपि ग्रामस्थाः सर्वमपि कृषिक्षेत्रमेकत्रैव श्रमेण कर्षन्ति। तदुपार्जितं च प्रतिवर्षं प्रतिगृहं च विभजन्ते। स च विभागः कदाचिदावश्यकतानुरूप एव भवति। कदाचित्तु विशिष्टपुरुषं प्रति कश्चिदंशमुद्धृत्य भवति। अत्र चेदमेव तत्त्वं यत्कुटुम्बरिक्थस्य ( मिळकत, स्थावर ) न कदापि विभागार्हत्वमिति। (पृ.२६६–२६७–२६८)

(१९) अनेन चेदं ज्ञायते यद्रिक्थे स्वत्वाधिकारस्य स्पष्टतया विकासो हि संघान्तर्गत एव संजातः। प्रथमतस्तु निखिलमिदं रिक्थमादिकुटुम्बनिदर्शनानुसारेण संघटितस्य महतः समाजस्यैव न तु व्यक्तेर्वा कुटुम्बस्य वैकैकस्य। दायाधिकारस्वार्जिताधिकारयोर्भेदस्तु भारतीयधर्मशास्त्रमेव स्फुटं जानाति।

(२०) एवमेव जर्मनजानपदाना भूमिगताप्रतिबन्धस्वत्वाधिकारो न परस्मै दातुं शक्यः। एवमपि परहस्तकरणेऽपि सामान्यतो महद्वैवासोकर्यम्। किं च सोऽपि पितृपरम्परयैव नान्यथा। (पृ. २८१)

(२१) भारतीयधर्मशास्त्रानुसारेण पुरुषसंतानसंमतिमन्तरा परस्मै स्वत्वाधिकारदानं ॲंग्लोसॅक्सनपद्धतिमन्तरा जर्मनजानपदैरपि निषिद्धमेव मन्यते। (पृ.२८)

(२२) अत्र चेदमवधेयं—यत्परायत्तपदार्थानां स्वायत्तीकरणार्थं प्रयत्ने लोकानां कानि वा कारणानि के च तत्र हेतवः, एवं कौटुम्बिकसंघातरूपेण वासव्ये लोकानां प्रथमतः को वा हेतुः इति प्रश्नद्वयस्योत्तरे पाश्चात्यानुशासनशास्त्रनितरशासनशास्त्रसाहाय्यमन्तरा न समर्थमिति। इत्येवं सर एन्. एस्. मेनमहोदयाना विचाराः।

अत्र चेदमपरमावेदनीयं यत्–पाश्चात्यानुशासनपण्डिता वा शास्त्रग्रन्थकारा नोपर्युक्तसांघातिकरिक्थ भागिनो भारतीयग्रामस्य सांघातिक समाजरूपेण रचनायां किं वा कारणं समुत्पन्नमित्यस्योत्तरं तु नाद्यावधि प्रयच्छन्ति। भारतीय ग्रामरचना सर्वथा सांघाति-

ककुटुम्बरूपेण वा संयुक्तकुटुम्बरूपेण वा विराचता सांघातिकानांवेरूपेण वा, संयुक्तधन-रूपेण वा स्वरिक्थं धारयन्ती सर्वा अपि व्यवस्था विधातुं पारयति। भारते हि सांघा-तिकग्रामो वा संयुक्तकुटुम्बव्यवस्था वा न यदृच्छामात्रेण समुत्पन्ना । राष्ट्रस्य वा समाजस्य वा संघ-टना यदि सम्यक्तया विधेया चेन्निरामयशाश्वतमूलतत्त्वानुसारेणैव सा भवितुमर्हतीति तदर्थं तादृ-शतत्त्वान्वेषणाय प्राचीनतमैर्महर्षिभिर्भारते अनुत्पथमेव प्रयतितम्। तस्यैवायं परिणामः । तैरारोपि-तस्य मूलस्य मानवस्वभावज्ञानसंपूर्णताया निर्गतानां तत्त्वानामेव शाश्वत आश्रयः। तैस्तु योगज-सामर्थ्यादिदमेवाऽऽलोचितं यद्वैयक्तिकस्वत्वं च मानवानां स्वाभाविकेन्द्रियप्रवणताप्रवृत्तिश्चेत्ये-तद्द्वयं तु मानवजातेरतिश्रेयसां हितसंबन्धानामन्ततो विघातकमेव भवति । ततश्च सुदूरात् सत्यप-रिज्ञानानुसारिणीनां व्यावहारिकमर्यादानामाक्रमणे मानवानां प्रवृत्तिरुपरुध्यते । एवं च मर्त्यशरीरस्य प्रतिदैनिकावश्यकतायास्तद्बन्धनेभ्यश्च मानवजीवात्मानमुन्मुच्य तस्य च नित्यस्वक्रियाशक्तिर्ज्ञानश-क्तेः सर्वव्यापकशक्तेश्चेहैव जन्मनि पुनः प्राप्तये सामर्थ्यसंपादन.हि तेनैव व्यक्तिस्वत्ववादेन बाध्यते । तथैव मानवजीवनार्थमावश्यकानां भूम्यादिस्थावरजङ्गमवस्तूनां निधेरपि परिमितत्वात् तदुपयोगो मानवेन पूर्वोक्तसाध्यसाधन एव विधेय इत्येवमेव किलेश्वरस्य योजना। अत एव च भोग्यसंपत्तेः परिमितत्वाद्यदि वैयक्तिकस्वत्ववादप्रवृत्तिः स्यात्तदा तु मानवानां हिंस्रश्वापदत्वं प्रसज्येतेत्यपि पुरातनैर्महर्षिभिरालोचितम् ।

तदुक्तं मनुना १२ अध्याये

विभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् ।<br>
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ ९९<br>
सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।<br>
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ १००<br>
वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राऽऽश्रमे वसन् ।<br>
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥ १०२<br>
सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः ।<br>
सर्वमात्मनि संपश्यन्नाधर्मे कुरुते मनः ॥ ११८<br>
एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।<br>
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥ १२५<br>
धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।<br>
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ १२।१०९

अयमत्राभिसंधिः — भूमेस्तदितरभोग्यसंपत्तेश्च स्वत्वाधिकारः, ग्रामः, कुटुम्बम्, संभूयसमुत्थानमित्यादीनां विषये विद्यमानायाः संसृष्टिरचनाया नियमास्तु हिन्दुधर्मशास्त्रे अबाधि-

तानां निरूपितानां नैतिकानां मानसिकानां च वैदिकतत्त्वानां मूलाधारेणैव प्रणीताः । सर्वशक्तेः सर्वाधीशस्य सर्वभूतात्मकस्याजरामरस्य सर्वव्यापकस्य परमात्मन उच्चतमज्ञानक्रियाशक्त्योर्विकासः स्वात्मनि क्रमेण यथा स्यात्, यथा चेहैव जन्मनि तत्पात्रता संपद्येत, तदर्थं तथैव सर्वा व्यावहारिकाः पारमार्थिकाश्च क्रिया यथाशक्त्यनायासेनैव भवेयुरित्येतदर्थमेव हिन्दुधर्मशास्त्रस्य प्रणयनं वर्तते । बाह्यास्तु विषयाः क्षणिका वृत्तिक्षोभकाः क्षणिकसंस्कारशालिनस्तात्कालिकमेव क्षणिकं समाधानं विदधते । एतादृशविषयसाहाय्यमन्तरापि विषयसंवेदनानां तत्स्पृहायाश्च शमनं समाधानं च संपादनीयम्, तथैव तादृशसंपादितशक्तिद्वाराऽलौकिकस्य प्रशान्तस्य सर्ववृत्तिविलयस्यानुपम-सुखस्यापरोक्षानुभवमपि सुदीर्घकालममर्यादमनुभवितुं मानवः समर्थो भवेदित्येव च हिन्दुधर्मशास्त्र-प्रणयनहेतुः । अत एव च बाह्यसंसारेऽपि पार्थक्यं वा भेदो वा व्यावृत्तिर्वा, दूरवर्तित्वं वाऽन्या वा तत्सदृक्षाः कल्पना मनुष्यमात्राणां मनसि न पदमादध्युः, आहिते च तस्मिन् नियमनमपि भवेत् । तथैव निखिलव्यवहारेषु स्वपरभावमपहाय यथा चैकात्म्यभावना वा तादात्म्यभावना वोदियात् । तथा वर्तनमेव योगाभ्यासनिदानं निश्चितम् । तेन विना तु पदमात्रमपि तत्राऽऽक्रमणमशक्यमेव । अत एव रिक्थस्वत्वं वंशपरम्परा दायादत्वं परायत्तीकरणं स्वार्जनमित्याद्युपायैर्लब्धधनविषये तथैव स्वगतेषु सर्वजनीनेषु वाऽन्येषु कर्तव्यकर्मसु प्रायो हिन्दुधर्मशास्त्रनियमास्तादृशा एव वर्तन्ते येन प्राथमिकोपर्युक्तविषये मानवानामुन्मनस्कता सपद्येत । समुपलभ्येत च साहाय्यमुपर्युक्तसाध्यसाधने । वैयक्तिकस्वत्वादुत्पद्यमाना दुष्परिणामाः स्वार्थप्रवृत्तयश्च हिन्दुधर्मशास्त्रेणाभिज्ञाता एव पूर्णतया । अतश्च तेषां व्यवहारे प्रादुर्भावो मा भूदित्येतदर्थं परिणामकारका योग्या उपाया अपि नियोजिता हिन्दुधर्मशास्त्रेण पर्याप्ततया । हिन्दुधर्मशास्त्रस्य तु प्रमाणभूतो मौलो ग्रन्थस्तु वेद एव । तत्त्वानि तु सत्यं स्वार्थत्यागोऽहंकारवृत्तिविलयश्चेति । एतान्येव समस्तव्यवस्थापकमूलघटकानभिव्याप्य वर्तन्ते । मनुष्येतरप्राणिनामुपरि मानवेन यथेच्छमधिराज्यमनुशासनीयमीश्वरप्रदत्तमिति सिद्धान्तस्तु प्रत्याख्यात एव हिन्दुधर्मशास्त्रेण । अयं च सिद्धान्तो व्यक्तिस्वत्वभावनापोषकः, ध्येयभूतसमतावृत्तेरावश्यिकाया विपर्यासको बाधकश्च । पशुष्विव पुत्रक्षेत्रकलत्रादिष्वपि भोग्यवस्तुषु चैवं सत्यनिवार्या स्वत्वशासनेच्छा भवितुमर्हति । यया मानवेषु भेदविघटनवैमनस्यादिकमुत्पाद्यते । तदिदं सर्वं पर्यालोच्यैव स्त्रीपुरुषाणामविच्छेद्यो विवाहसंस्कारसम्बन्धो विहितः । अत्र च विषये इदमप्यालोचितं यद्विजातीय-रक्तसंबन्धात्र वंशः प्ररोहति, एकरक्तसंबन्धात्तु वंशोच्छेद इति निसर्गपर्यालोचनेनैव नियमाः प्रणीताः । यथावत् परिश्रमोऽनावृतोपभोगश्चेतद्द्वयमेव सर्वभोग्यसंपादनकारणमित्यपि पर्यालोच्य तथा विहितम् । तत्र चोपार्जने यैः श्रमसाहाय्यं विहित तेषां समस्तानामेव तदुपभोगाधिकारस्तस्यान्यव्यवस्थाधि-कारश्चेत्यत्राप्यवसरः भवतः । अर्जितसंरक्षणाधिकारस्तु साघातिकस्वत्वाधिकारिण एव । तेनापि तत्संरक्षणं न स्वेच्छया अपि तु संसृष्टिघटकानां सर्वसाधारणेच्छाया वा सर्वसमतेर्वाऽनुसारेण योजि-

तैर्निश्चितैश्च साधनैर्वा पद्धत्या वाऽनुष्ठेय सर्वैरपि सदस्यैः सिद्धं च सपादनीयमित्यपि तेन शास्त्रे-णाभ्यनुज्ञातम् । इत्येव प्रकारेण विघटनाकारणानि सुदूर निरस्तान्यकिंचित्करत्व सपाद्य । आत्मनः सनातनत्वादेव महाविद्याया योगशास्त्रस्य वास्तवत्व सनातनत्वम् । न ह्येते केवल प्रमेयभूते वा कल्पनासृष्टिकल्पिते वा मनोराज्यविलसिते वा । किन्त्वनुष्ठानविषये प्रत्यक्षानुभवगोचरौ । महति खल्वस्मिन्विश्वरूपविद्यालय एवैतेऽभ्यसनीये अभ्यसिते च । एतयोः सुलभताया उच्चतमलाभस्य च निदर्शन प्राचीनकाल एव पुरातनैर्महर्षिभिर्भारते तदितरत्र च लोकाना पुरत उपक्षिप्तमेव । अत एव मनुः—

> धर्मेणाधिगतो यैस्तु वेदः सपरिवृंहणः ।
> ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ १२।१०९

## ( म. अण्णासाहेबपटवर्धनमहोदयानामुपर्युक्तविचारप्रणालीपर्यालोचनम् )

अत्र च स्वत्व लोकानामेव भूम्यादिषु न जेतुः । तच्च यदा कदाचिदनावृतत्वेन भूभागस्याऽऽवश्यकतानुसारेण वास्तव्ये कृत एव लोकानाम् । तदपि न व्यक्तिशः किंतु समष्टिरूपेणैव । वास्तव्यावश्यकता तु लोकबाहुल्यात्परस्परविमर्दप्रसङ्ग एव । सा च समष्टिः कुटुम्बरूपाप्यादौ तत्तद्विमर्दावसरानुसारेण ग्रामरूपा सपन्ना । अतः समाजरचनाया मूल ग्रामसस्था वा कुटुम्बसस्था वा । तच्च स्वत्वमपि तदा तथा परिणतमिति तदेव मूल समाजस्य । अतश्च समाजरचना समष्टि-रूपा साघातिकी योग्यैव । तथापि व्यक्तीना जीवननिर्वाहादिकमर्जनश्रमादिक च पर्यालोच्यैव सपादितरिक्थभागहारित्वम् । क्रयविक्रयादिव्यवहारा सर्वेऽप्यनयैव रीत्या । एतादृशसघातसघटन तु वैयक्तिकवैमनस्यादिदोषनिरसनद्वारा सर्वभूतात्मत्वरूपसमतासपादनार्थम् । तदेव च जीवितसाफल्यम् । वेदा योगानुशासन च तत्र प्रमाणमनुभवात्मकमित्यादि यन्न्यायार्थशिमतान्यपि प्रदर्श्य प्रदर्शितम । तद्युक्ततममेव । पर त्विदमत्राऽऽलोचनीय व्यक्तिस्वत्ववादे यासा विघटकाना कामक्रोधादिभावनाना-मुदयो भवति । स च समष्टिस्वत्ववादे कथ वा नोदियात् । जन्मत एव यत्र त्वमहमिति भेदबु-द्धिरुदेति विषयभोगलालसा च व्यक्तिमात्रावलम्बिनी । सा तु केवल रिक्थस्वत्वस्य तथा समष्टिरू-पानुशासनमात्रेण नष्टा चेत्र पुरापि क्षत्रियाणा युद्धादिक लोकाना कलहादिक स्यात् । श्रूयते च पुराणेतिहासादिषु तथा कलहः । न हि सर्वभूततादात्म्यसपादनमेवेतिकर्तव्यता देहधारणस्येति निर्धारणमात्रेण कामक्रोधादिवृत्तीना विलयः । तथा सति प्राचीना सर्वेऽपि मुक्ता एवेति मन्यन्य स्यात् । किं च प्राथमिकस्वत्व ह्यनावृतपरिग्रहादेवेत्यकामेनाप्यूरीकर्तव्यम् । तथा व्यवहारात् । नैतावता वस्तुतस्तत्र यथेच्छविनियोगाधिकाररूप स्वत्व कस्यापि सभवति । पुरस्तादप्येतदुक्तमेव । तद्वर् परमेशस्वत्ववादमवलम्ब्य तदाराधनाय तादृशकर्माणि तन्निष्ठासपादन तदवशिष्टभोग एव

समाधानं चेति । न च समष्टिस्वत्वे परस्परसापेक्षत्वेन तथैव व्यवहारादनायासेनैव कामक्रोधादिवृत्तीनां नियमनं स्यादिति वाच्यम् । व्यष्टिसत्वेऽपि भोगवासनामूलकत्वेन प्रवृत्तेर्भोगस्य च भोग्यसापेक्षत्वात्तस्य च परत्वात्परायत्तत्वाच्च तथैव नियमनसंभवेन समानयोगक्षेमत्वात् । ननु भोगवासनाया लोभकारकत्वान्मूलत एव विघटकत्वेन तादृशवृत्तीनां नियमनासंभव इति चेत् । समष्टिस्वत्ववादेऽपि तथा संभवात् । तथाहि—स्वत्वस्य समष्टिगतत्वेऽपि भोगस्य व्यक्तिनिष्ठत्वेन तद्वासनायाश्च विषयविशेषालम्बनत्वेन तत्तद्विषयविशेषस्पृहाया नियन्तुमशक्यत्वे न कथं कलहप्रसङ्गः । न वा कथं समताऽसंभवः । यत्तु सर्वेषामपि तथात्वे कस्यापि भोगसंभावनाभावप्रसङ्गादगत्याऽन्योन्योपकारभावनोदये तयैव भावनया तदितरवासनानियमनं स्यादिति मतम् । तत्तु तदैव व्यवहारस्थानमालभेत यदा परोपकारकरणं मे परमो धर्म इति बुद्धिरुदियात् । भोग्यस्य परत्वेन तदुपकारबुद्धिरुदयेऽपीतरत्र सर्वत्र तथा बुद्धेरनुदयः प्रतीयत एव । किंच परोपकारबुद्धेर्निदानं प्रेमविषयत्वमेव न भोग्यत्वम् । पुत्राद्यर्थं मात्रादीनां तथा त्यागदर्शनात् । न हि पुत्राद्यर्थं त्यागावसरे यथा स्वीयवासनानियन्त्रणं मात्रादिभिः क्रियते, तथा भोग्येऽपि परस्यार्थे । यत्र तु परस्परभोग्यत्वबुध्या स्वार्थमूलकः प्रेमा दम्पत्यादिषु तत्र किंचिद्भोगन्यूनतायामपि परस्परवैमनस्यादिकमेतादृशं दृश्यते यदन्ततो संबन्धविच्छेदोऽपि गरीयान् श्रेयस्करश्च भवति । किं बहुना नैसर्गिकरचनानुसारेण देहादीनां समानानां भोग्यत्वेऽपि रचनाविशेषविषये संजातायाः स्पृहाया नियमनस्याशक्यत्वेन महान्तोऽनर्था भवन्तीति विदितमेव व्यवहारज्ञानाम् । तत्रापि चातुर्यादिगुणविशेषतदभावमूलके प्रियाप्रियत्वे प्रत्यहमेव दृष्टचरे । एवं च निरपेक्षप्रेमागमन्तरा भोगसापेक्षत्वमात्रेण स्वभोगत्यागस्तु सर्वथाऽसंभवनीय एव । शासनमात्रेण तादृशत्यागनिदानस्य प्रेम्णः समुत्पत्तिरप्यसंभवनीया ।

किं च समष्टिव्यवस्थापकगुणागुणा अपि तत्र कलहादिनिदानं भवन्ति । कस्मिंश्चिद्ग्रामसंघाते सर्वेऽपि निर्गुणाः स्युः । तत्र च वास्तव्यार्थं कश्चिद्गुणवान् गुणमात्रावलम्बिजीवितनिर्वाहसापेक्षः समायातश्चेत्तनत्या ग्रामसिंहास्तस्मिंस्तथैव वर्तेरन्नित्यत्र किं गमकम् । प्रत्युत तद्व्यवस्थापकोऽपि तस्मिन् कदाचित् द्रुह्येत् । न च गुणिना तेन ग्रामरीतिमवलम्ब्यैव वर्तनीयमिति न द्रोहापत्तिरिति वाच्यम् । एवं च गुणिनां सदाचारिणां च मूर्खायत्तत्वापत्तिः । यदि व्यवस्थापकेनैव तादृशसंघस्य सारासारयोग्यायोग्यविवेकिना भवितव्यमित्यभ्युपगम्येत । तदा तु तस्य सर्वभूतप्रियत्वं सर्वभूतहितत्वं सर्वसमत्वं चापेक्षितं भवति । विरलविरलाश्चैतादृशा व्यवस्थापकाः । किं च तस्य तत्त्वेऽपि " दृष्टो हि धर्मव्यतिक्रमः साहसं च महताम् " इति न्यायेन तत्त्वप्रच्युतौ पुनश्च कलहापत्तिः । इदमेवात्र तात्पर्यं यावन्न कर्तव्यनिष्ठोदेति न वा क्रोधलोभादिवासनानां निग्रहः, न वा " नात्यन्तं गुणवत्किंचिन्न चाप्यत्यन्तनिर्गुणम् " इति न्यायेन जगदन्वेषणार्हा रागद्वेषातीता साम्यदृष्टिः, न वा स्वीयभोगाभिलाषत्यागः, यद्दर्शनलाभसंतुष्टत्वं न व्यवस्थापकस्य भवति, ताव-

यथाकथमपि व्यवस्थापिता रचना कंचित्कालमुपयुक्ततया भासमानाऽप्यन्ते कलहापादिकैव संपद्यत इत्यत्र न विशयलेशोऽपि। तद्वर प्रथमत एव निवृत्तिमार्गाश्रयणद्वारा निर्वेदसमुत्पत्तिविधानम् " न जातु कामः कामानामुपभोगेन शाम्यति " इति न्यायेन यावन्न निर्वेदपाठाः प्रजासु प्रचार्यन्ते, केवलमर्थकामावेव पुरुषार्थौ मत्वा तदनुसारेणैव सुस्थितिसंपादनार्थं प्रयत्यते न तावत्सुस्थितेः कथमप्याशेति निश्चप्रचमेव।

## ( प्राचीनेतिहासशैली )

अत एव वैदिकधर्मवाङ्मये सृष्टेरारम्भो नारदादीनां संसारोदासीनानां निवृत्तिमार्गस्यैव परमस्वं मन्यमानानां विरक्तानामुत्पत्त्यैव प्रदर्शितो न वन्यावस्थायाः। युक्त चैतत्। वृक्षादीनां फलेष्वेव बीजोपलम्भात् संसारफलस्य सर्वात्मकभावस्यापि संसारबीजत्वपरिकल्पनं नान्याय्यम्। एवमेव पूर्व कृतयुगमिति वर्णनम्। यत्र " कृतकृत्याः प्रजा जात्या तस्मात्कृतयुगं विदुः " इति तदुपवर्णनेनापि तदेव गम्यते। तादृशप्रजानां चरितमेवाऽऽदर्शः संसारफल च भवति। न तु कामक्रोधाद्याक्रान्तानामुदरशिश्नपरायणानामयतनानाम्। न हि ध्येयमन्यदादर्शश्चान्यः प्राक्तनचरितं च वन्यमिति सिद्धान्तेन प्रजानां ध्येयप्राप्तिः कदापि संभवति। साक्षादाचरणद्वारैव खलु ध्येयं संपादनीयम्। तस्य च संभवासंभवसंशये वन्येतिहासादसंभवनिश्चये कथकारं प्रजानां ध्येयप्रवृत्तिरिति विभावयन्तु विचक्षणाः।

किंच प्रथमतः सृष्टेर्निर्मनुष्यत्वम्। ततश्चाऽऽकस्मिकी तत्समुत्पत्तिः, ततो वन्यावस्था, ततो वृद्धिः, पश्चाज्जीवनकलहसंभावना, तदनन्तरमनावृतपरिग्रहः, अनन्तरं स्वत्वम्, पश्चात्कुटुम्बसंस्था ग्रामसंस्थेत्यादिपरिकल्पनं सर्वथा निर्मूलमेव पाश्चात्यानामुत्प्रेक्षामात्रम्। न हि मानवबीजमन्तरा मानवसृष्टिः। तथात्वे त्वधुनापि तथापत्तेः। दृष्टानुसारी हि तर्कः--उक्त हि--

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमो दर्शनान्तरदर्शनात्॥ इति॥

न हि तथा कार्यकारणभावो वा नियामकस्वभावो दृश्यते जगति। न च दर्शनान्तरदर्शनमपि। एतदभावेऽपि तर्कस्य प्रामाण्ये तु यत्किमपि तर्क्य स्यात् तर्क्यते च पाश्चात्यैर्डार्विनप्रभृतिभिः वानरबीजसमुद्भवत्वं मानवानाम्। प्रत्युत प्राचीनदेहाद्यस्थ्यादिभिरिदमेव सुतर्क्य यत्प्राचीनमानवसृष्टिरतीव बलसंपन्ना सुसंस्कृता स्वोच्चतमा चेत्युत्खननादिभिः।

न चार्थापत्त्या तथा सुतर्कमिति वाच्यम्। अर्थापत्तौ हि तदेवाऽऽक्षिप्यते येन विनाऽनुपपत्तिः। भोजनं पुष्टेरनुपपन्नत्वादेव सामान्यतो 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रिभोजनतर्कः। तत्रापि

वाताहारादिना सर्पाणामिव मनुष्याणामपि पुष्टिसंभवे तु न रात्रिभोजनतर्कः प्रामाणिकः। अत एवैतादृशार्थापत्तिप्रामाण्ये विप्रतिपत्तिर्दर्शनानाम्। तदतिरिक्तार्थापत्तिस्त्वनुमानमेव। न च परिग्रहस्य स्वत्वकारणत्वं वन्यावस्थां विनाऽनुपपन्नम्। इदानीमपि धर्मशालादिषु स्थलपरिग्रहस्य यावत्प्रयोजनं स्वत्वापादकत्वात्। अरण्यादिषु नद्यादिषु च काष्ठतृणजलादिपरिग्रहस्यापि तथात्वात्। नैतावतेदानीं सर्वेषां परिग्रहकाणां वन्यावस्था कल्पयितुं शक्यते। लाभक्रयविक्रयादीनामिदानीमिव पूर्वमपि तादवस्थ्यमित्येव दृष्टानुसारिणी कल्पना ज्यायसी। न कदाचिदनीदृशं जगदिति न्यायेन प्रवाहरूपस्यानादित्वायो हि मानवदेहः स मानवदेहपूर्वक इत्येव व्याप्तेः संभवात्। इतस्ततो भ्रमणमप्यवर्षणोपघातोपद्रवबलवद्विग्रहादिनापि संभवति न केवलं वन्यत्वादेव। तस्मान्न्यायासनस्थानामप्येतेषां स्टीफन्–ब्रैकस्टोन–सर एच्. एस्. मेनप्रभृतीनामिदं वर्णनं कथमपि न्यायतत्त्वप्रतिपादनार्थं गृहीतकक्ष्यमेवेति विभावनीयं विचारशीलैः।

यदि यथार्थ एव जगदुत्पत्तेरितिहासः पर्यालोचनीयस्तर्हि जगदुत्पत्तिक्रमपर्यालोचना परमावश्यकी। तदालोचनायां त्वादौ सर्गविसर्गस्थानपोषणोतीनां पर्यालोचनीयत्वं भवति। एतेषां च स्वरूपं चेत्थम्—श्रीमद्भागवते द्वितीयस्कन्धे—

भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः।<br>
ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः॥ ३॥<br>
स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः।<br>
मन्वन्तराणि सद्धर्म ऊतयः कर्मवासनाः॥ ४॥

तत्रैव द्वादशस्कन्धे—

अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः।<br>
भूतमात्रेन्द्रियार्थाना सम्भवः सर्ग उच्यते॥ ११॥<br>
पुरुषानुगृहीतानामेतेषां वासनामयः।<br>
विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम्॥ १२॥<br>
वृत्तिर्भूतानि भूतानां चराणामचराणि च।<br>
कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा॥ १३॥

इति। अनेन च सर्गविसर्गलक्षणेनेदं गम्यते यत्सृष्टेर्वासनामयत्वाद्वासनैककारणत्वाद्वा वासनाक्रमपर्यालोचनैव सृष्टिक्रमसिद्धिरिति। तत्र च वासनाक्रमः प्रथमत आलोचनीयः। तथाहि—द्विविधा किल सृष्टिरीशनिर्मिता निसर्गनिर्मितापरनामधेया, जीवनिर्मिता च वासनानिर्मितापरनामधेया। तत्र प्रथमायाः स्वरूपं मनुस्मृतिप्रारम्भे पञ्चमश्लोकादारभ्य द्वात्रिंशच्छ्लोकपर्यन्तं सम्यगेव समासेन प्रदर्शितम्। आसीत् तावत्तमोरूपमासीदित्यनेन सृज्यमानजगदाकारसर्जनानुकूलशक्त्यपरनामधेयतत्तद्वासनात्मकं किमपि

चिज्जडाविवेकाक्षममव्याकृतमासीत किमपि द्रव्यमितिगम्यते । ततस्तत्तद्वासनानुकूलविपरिणामप्रसक्तौ महदादिक्रमेण सर्वस्थावरजङ्गमपदार्थानां तत्तत्क्रियानुकूलशक्तिशालिनां पदार्थानामुत्पत्तिः । अत्र च मानवानामपि समुत्पत्तिर्ब्राह्मणक्षत्रियवैश्यशूद्रात्मकानां तथैव कर्मविवेकोऽपि । एवं नामरूपकर्मात्मकजगदुत्पत्तावपि न प्रभवः सम्यगभिवर्धनार्ह इति स्वायंभुवमनोरुत्पत्तिरग्रे त्रयस्त्रिंशत्तमे प्रदर्शिता

तपस्तप्त्वाऽसृजद्यं तु स स्वयं पुरुषो विराट् ।
तं मां वित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः ॥ ३३।अ.१

अनेन चेदं प्रतिभाति यत् डार्विनमहोदयस्य नैसर्गिकविकासवाद इवास्य सर्गस्य समुद्भव इति । परमिदमत्राऽऽलोचनीयं यद्विकासवादेऽपि यस्य कस्यापि विकासो यतः कुतोऽपि भवति वा प्रतिनियतस्वभावानामेव वा ? यदि यतः कुतोऽपि स्यात्पाषाणेऽपि चैतन्यविकासापत्तिः । एवं च योऽयं कार्यकारणभाव इदानींतनानां वैज्ञानिकानां दत्तजलाञ्जलिः स्यात्समग्रोऽपि सः । तदकामेनापि प्रतिनियतस्वभावानामेव विकासोऽभ्युपेयः । सोऽयं विकासो न कलिकायाः पुष्पमिव पूर्वाकारमनुपमृद्य संपद्यत इत्यूरीकरणीयम् । एवं च परिणाम एवेत्यभ्युपेयम् । स चायं परिणामो यदि कार्यकारणभावमूलक एव । तदा तु कारणे कार्यानुकूला शक्तिरपि वासनासंस्कारान्यतरापरनामधेया स्वीकर्तव्यैव । एवं च बीजरूपेण सर्वेषां नित्यत्वात्स्थूलाकारस्य चाऽऽविर्भावतिरोभावात्मकत्वापत्त्या सर्वस्यापि जगतः प्रवाहरूपेणानादित्व एव पर्यवसानम्। एवं चेयं सृष्टिर्यद्यपि निसर्गनिर्मिता, तथापि बीजरूपोपवर्णनपरत्वमेव तस्या अभ्युपगमनीयम् । अग्रे च मनुनापि स्वायंभुवेन तथैव सृष्ट्युत्पादनादपीयं बीजभूता वासनात्मिकेति गम्यते । सृष्टस्य पुनः सर्जनायोगात् । एवं च स्थूलाकारस्वरूपाविर्भावात् प्राक् तदनुकूलसंस्कारप्रादुर्भाव एव । स च यथाक्रममेवोपवर्णितः ।

तत्र च—

तपो वाचं रतिं चैव कामं च क्रोधमेव च ।
सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः ॥२५॥

इति रतिकामक्रोधादिमनोवृत्तीनामपि सर्जनाम्नानात् तत्तदनुकूलशक्तीनामनादित्वमेवेति गम्यते । ततश्च—

कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयत् ।
द्वंद्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः ॥२६॥

इत्यनेन सर्वेषां द्वंद्वानां सुखदुःखरागद्वेषक्षुत्पिपासाकामक्रोधादीनामपि शक्तिरूपेणाऽऽविर्भावोऽङ्गीकर्तव्यः । अत एव—

यं तु कर्मणि यस्मिन्स न्ययुङ्क्त प्रथमं प्रभुः ।
स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः ॥२७॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
यद्यस्य सोऽदधात्सर्गे तत्तस्य स्वयमाविशत् ॥२८॥

इत्येताभ्यां स्वभावनियमनमपि संगच्छत उपवर्ण्यमानम् । अयमेवात्र विशेषो यदिदमित्थं परमेश्वरेण निर्मितत्वादीशसृष्टित्वेन व्यपदिश्यत ईश्वरवादिभिः । अनीश्वरवादिभिस्तु तस्यैव मूलभूतसर्वकर्दमात्मकद्रव्यस्य परिणाम उत्क्रान्त्यपरनामधेय इति । अत एव ऊतिरूपकर्मवासनानामेव सर्वतो वरीयस्त्वमिति सर्वेऽपि दार्शनिका मन्यन्ते ।

ततश्चैतस्यैव सर्गस्य स्थित्यर्थं "मन्वन्तराणि सद्धर्मः" (भा० स्कं० २।४) इति व्याख्यानुसारेण सद्धर्मरूपमनोरुत्पत्त्या पुनश्च तत्तद्धर्मनियततत्तत्पदार्थानां स्थूलरूपेण समुत्पादितायां सृष्टौ—

अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
पतीन्प्रजानामसृजं महर्षीनादितो दश ॥३४॥
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥३५॥

धर्मरूपपूर्णपरिणामत्वात् पूर्णरूपा मरीच्यादिमानवसृष्टिः प्रथमत एव समुत्पादिता । विकासवादिनामप्येतदभ्युपगन्तव्यम् । दुग्धस्य दध्यादिरूपेण परिणामप्रारम्भे हि आन्तिमपरिणामः पूर्णरूपो घृतमेव प्रादुर्भवति । एवमत्रापि पूर्णः पुरुष एवान्तिमो परिणामः । तत्पूर्वतनास्तु परिणामा अकिंचित्करा एव न निदर्शनार्हाः । एवं च प्रथमतः प्रजापतयस्ततो देवास्तदनन्तरमेव यक्षराक्षसाद्या आपिपीलिकान्ताः जरायुजाण्डजस्वेदजोद्भिज्जाश्चत्वारो जीवनिकाया इति । तत्र मानवानां जरायुजत्वादतज्जन्यप्रजापत्यादीनामेव पूर्वसृष्टिरिति युक्तमेव प्रतिभाति । विस्तरस्तु तज्ज्ञैरन्यत्र विज्ञेयः ।

अत एव श्रीमद्भागवते तृतीयस्कन्धे विंशत्यध्याये—

तदा मनून् ससर्जान्ते मनसा लोकभावनान् ॥४९॥
तेभ्यः सोऽस्यसृजत्स्वीयं पुरं पुरुषमात्मवान् ।
तान् दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ॥५०॥
अहो एतज्जगत्स्रष्टः सुकृतं बत ते कृतम् ।
प्रतिष्ठिताः क्रिया यस्मिन्साकमन्नमदामहे ॥५१॥

इति पूर्वसृष्टप्राणिनामाशीरुपपद्यते । यदि च वन्यो वानरकल्प एव कश्चन मनुष्यः प्रजापतिः स्यात्तदा त्वियमाशीरनुपपन्नैवेति विदांकुर्वन्तु सुधियः ।

इदमपि सर्वमभ्युपेत्यवादेनैव । केवलं सृष्ट्यारम्भ एव परिकल्पनीयश्चेदेतादृशोऽपि परिकल्पयितुं शक्यः । न तु वन्याप्रबुद्धजडमूढमनुष्यमात्रादेव । अतः परं जीवनिर्मितसृष्टिस्तु गृहभूमिप्रासादयन्त्रादिरूपा जीवेन स्वबुद्धिपरिकल्पिता स्ववासनानिर्मिता च प्रत्यक्षत एव प्रत्यहमुपलभ्यत इति नाधिकं तत्र विवेचनीयमित्यलं प्रसक्तानुप्रसक्त्याऽकिंचित्करया । कार्यकारणभावस्वभावादिपर्यालोचनं तु प्रमाणप्रतिबिम्बे प्रागेवाभिहितम् ।

## ( तदयं निष्कर्षः )

स्वत्वकारणभूतानां दायलाभक्रयादीनामनादौ सृष्टौ परम्पराप्राप्तत्वादेवानादित्वमिति न समष्टिस्वत्ववादो युक्तः । प्रत्युतोत्पत्त्यनन्तरं स्थितिलयाविव व्यष्टिस्वत्वानन्तरं पुनः समष्टिस्वत्वं ततश्च भूयोऽपि व्यष्टिस्वत्वमित्यनादिरेवेयं परम्परा सहजप्रेमबद्धकुटुम्बसंस्थावशात्तद्विस्तारवशाच्च भवतीति प्रसिद्धमेव । नात्रान्यतरविधस्वत्वव्यवस्थापनेन सुस्थितिसंभावना । सा तु वासनानियमनमात्रेणैवेति तदर्थमावश्यकाः सामान्यधर्मास्तदनुगुणाचारविधयश्चेति सिद्धं योगक्षेमनिर्वाहकाणामेव क्रियाणामलौकिकेष्टसाधनत्वम् । नान्यासां जपहोमयज्ञादीनामदृष्टमात्रफलानां क्रियाणाम् । तादृशयोगक्षेमनिर्वाहकत्वादेव सर्वान्तर्यामिपरमेशस्वत्ववादः, रिक्थविनियोगपद्धतिनियमनं भोगपद्धतिव्यवस्थापनं चेति ।

अत्र " वार्ता च दण्डनीतिश्चेति द्वे एव विद्ये इत्यौशनसाः " इत्यौशनसवादमिव केवलार्थसंपत्तेः समाजस्वत्वाङ्गीकारेण नियमनमभिकाङ्क्षमाणा इतरव्यवहारेषूदासीनास्तत्रैव सुस्थितिर्जगत इति मन्यमानाः कार्लमार्क्समहोदयमतानुसारिणः प्रत्यवतिष्ठन्ते । अतस्तन्मतमपि पर्यालोचनीयमापतति इति प्रथमतो महाराष्ट्रभाषान्तरितकॅपिटलसारग्रन्थात्तत्संक्षेपविवरणप्रकरणमेव वाचकानां पुरतः संस्कृतभाषान्तरितमुपस्थापयामः । येन प्राचीनपण्डिता अपि तत्सरणिमवगाहेरन् । नव्याश्च मान्यथाकरणमाशङ्केरन् । तद्यथा—

## ( कॅपिटलसारग्रन्थस्य संक्षिप्तविवरणम् )

मानवजीवनार्थं विक्रेयाणां भोग्यवस्तूनामधिगमस्य हेतुभूतानामार्थिकपद्धतीनां वाऽऽर्थिकयोजनानां वा जिज्ञासैवार्थशास्त्रस्य प्राधान्येन विषय इति ह स्माह खलु मार्क्समहाभागः । जिज्ञासायां चैतस्यां द्वित्रा विषयाः प्रथमत एव मनसि कर्तव्या यज्जीवनार्थं विना मूल्यमपि प्राप्यमाणानां वायुजलमातापितृप्रेमादीनामेतत्सदृक्षाणां चानेकेषां वस्तूनां लाभपर्याप्तिस्तु ( पुरवठा ) नार्थशास्त्रस्यैतस्य विषयः । किंतु विक्रेयवस्तूनां परिपूरणमेव । कदाचिदुपर्युक्तानामपि वस्तूनां महापत्तनेषु

विक्रेयत्वप्रसक्तौ तु तेषामपि समावेशोऽत्र भवितुमर्हति। एवं च वस्तूनां विक्रेयत्वे सति तत्परिपूरणार्थं विद्यमानानामार्थिकयोजनानामेवात्र विचार इति ज्ञेयम्। धर्मदायः, उपहारः, स्तेयमित्यादिप्रकारैः प्राप्यमाणानां वस्तूनां पूर्णं त्वर्थादेव नार्थशास्त्रस्य विषयः। किंतु क्रयविक्रयवेतनादिप्रकारैर्लभ्यानां क्रेयवस्तूनामेव विचारः। रिक्थस्वत्वस्य धनोत्पादनपरिश्रमप्रेरकत्वात्तस्यापि चर्चाऽत्र भवितुमर्हति। धर्मदायोपहारादिभिर्विना मूल्यं लभ्यमानानां वस्तूनामर्थशास्त्रबहिर्भूतत्वेऽपि यथार्थिकव्यवहारापाय-कारकत्वं स्यात्तदा तेषामपि विचारः कर्तव्यतया समापतति।

## ( व्यवहारविषयत्वेन धनस्य चातुर्विध्यम् )

धनस्य ह्युत्पादनमुपभोगो विभागो विनिमयश्चेति चतुष्प्रकारं व्यवहारो भवति। यद्यपि याचकस्य राज्ञश्चानायासमपि भोग्यधनप्राप्तिर्भवति, तथापि सामान्यतोऽयं नियम एव यद्विनाऽऽयासं न कथमपि धनाधिगम इति। अतस्तदुत्पादनमाद्या कक्षा व्यवहारस्य। उत्पादनं च सामर्थ्यसंपा-दनमन्तरा न भवति, सामर्थ्यं च नोपभोगमन्तरेति उपभोगरूपेयं द्वितीया कक्षा। किंच धनोत्पाद-कत्वेन तत्पूर्वतन—तदुपयोगिनां वस्तूनामावश्यकता त्ववश्यमेवेति तदर्थं व्ययोऽप्युपभोगात्मकत्वादुप-भोगकक्षासाधकः। एवं चोपभोगात्मकोऽयं द्वितीयो विभागोऽप्यवश्यमेवाङ्गीकर्तव्यः। एतत्कक्षाद्वय-मध्यवर्तिनौ द्वितीयौ द्वौ प्रकारौ। उत्पादनं यथा नोपभोगमन्तरा एवमुपभोगोऽपि विना विभागं विना विनिमयं च नैव संभवतीति एतयोः पूर्वद्वयमध्यवर्तित्वम्। अत्रायं विभागविनिमयशब्दयोरर्थ-विशेषः। दास्यार्थं दीयमाना भृतिर्वा वेतनं वा भूस्वत्वेन दीयमानो लाभः, गृहभाटकं वा, महायन्त्रा-त्संपाद्यमानो लाभः। मूलधनगता वृद्धिरित्यादयो हि विभागशब्दार्थाः। अत्र हि धनोत्पत्त्यनन्तरं तद्धनं येन केनाप्युपर्युक्तान्यतमप्रकारेण व्यक्तेः समुदायस्य वा स्वत्वं भजत इति विभाग एवायम्। अत्र च मुख्यतोऽनुशासनं वा रूढिर्वा समयबन्धो वा निदानमिति ज्ञेयम्। विनिमयस्त्वन्योन्यव्यव-हारः, एकं वस्तु दत्त्वा तदर्थं तन्मूल्यमेवेतरवस्तुग्रहणम्। अत्र साक्षाद्वा ( रोखी ) ऋणरूपेण वा ( उधारी ) क्रियमाणाः सर्वेऽपि क्रयविक्रयव्यवहारा अन्तर्भवन्ति। विभागविनिमययोर्विभागो हि महान् गरीयान्। किं बहुनाऽऽर्थिकोत्पादनपरिश्रमान् विभाग एवोत्तेजयति। अत एवोत्पादनादप्य-स्यैव महतीमेवाभिशशंस रेकार्डोमहोदयः। तस्य त्वयमेव महान्प्रमादो यद्विभागपद्धतिमेनां नैसर्गिकीं त्रिकालाबाधितां चासौ मेने। वस्तुतस्तु विभागपद्धतयोऽप्यैतिहासिकक्रमेण विपरिवर्तन्त इति मार्क्स-महोदयः ( क्रिटिक् ऑफ पोलिटिकल् इकॉनमि ) इति स्वग्रन्थस्य प्रस्तावनायां स्फुटीचकार।

## ( विभागप्रकाराः )

अग्रहारिसमाजरचनायाः पूर्वं हि सर्वत्र दासभाव एव प्रचलित आसीत्। दासास्तु तदानीं स्वामिस्वायत्ता एव। तेषामेव समस्ता अपि धनोत्पादनायासाः। एवमप्युपार्जिताद्धनात् कोऽपि

भागस्तेषां स्वत्वाधिकृतः । तेषां जीवननिर्वाहस्तु सर्वथा स्वाम्यायत्त एव । स्वामिनस्तु निखिलस्याप्युपार्जितस्य स्वत्वभाजः । तदनन्तरमग्रहारिसमाजरचना प्रवृत्ता । तदानीं तु भूदासाः कर्षका अग्रहारिक्षेत्राण्याकृष्योपार्जितं सर्वमप्यग्रहारिणे वितरन्ति स्म । तद्विनिमयेऽग्रहारिणो हि तेभ्यः पृथक्क्षेत्रं विभज्य प्रददुः । तदुपार्जितं च तेषामेव भूदासानाम् । इदानीं तु मूलधनवादिसंभूयसमुत्थसमाजे स्वयं विभागप्रकारः पुनरपि परिवर्तितः । इदानीं हि भूस्वामिनः स्वत्वार्थे कर्षकसकाशाद्धनरूपेण कर्षणोपार्जितभागं वा राज्ञः करमिव लभन्ते । ये तु मूलधनमेकत्र संग्राह्य क्षेत्रादिषु वा यन्त्रादिषु वा व्यापारयन्तो व्यवसायिनस्तेऽपि मूलधनोपरि वृद्धिं वा लाभं वा विन्दन्त्येव । ये तु क्षेत्रे वा यन्त्रालये वाऽधिकरणेषु शरीरेण वा मनसा वाऽऽयस्यन्ति तेऽपि भृतिं वा वेतनं वाऽधिगच्छन्ति ।

## ( विनिमयस्य विभागावलम्बित्वम् )

धनविनिमयो हि धनविभागावलम्बी । यदा स्वल्पस्यैव क्षेत्रस्य कर्षणं स्वायत्तं, यदा च हस्तव्यवसायोऽपि लघुः, तदा तु कर्षका वा हस्तव्यवसायिनो वा स्वसंपादितं वस्तु स्वयमेवाऽऽपणे विक्रयार्थमानयन्ति । प्रचण्डसंभूयसमुत्थानकाले तु कर्षका वा हस्तव्यवसायिनो वा श्रमजीविनः स्वसंपादितं मूलधनिहस्ते समर्प्य तत्सकाशात्केवलं भृतिमात्रं लभन्ते । मूलधनी तु श्रमजीविसंपादितं वस्त्वापणे विक्रीणाति । कदाचिद्यदि सर्वाण्यपि धनोत्पत्तिसाधनानि समाजस्वत्वायत्तानीति समाजस्वत्ववादिमतवत्समाजरचना स्यात्, तदा तु सर्वेषामपि भृतकत्वादुत्पादितक्रयविक्रयव्यवहारः सर्वोऽपि शासनसंस्थायत्तो भवेत् । इतोऽपि कदाचिदेवमपि संभाव्यते यन्नाऽऽवश्यकता किल भृतिवेतनादिभरणप्रकाराणाम्, किंतु यावद्बुद्धि यावच्छक्ति च सर्वैरुत्पादनीयं भोग्यजातम्, यावदावश्यकं च सर्वैर्विभज्य भोक्तव्यम् । एवं च विभागविनिमययोरन्तरमेव विनष्टं स्यात् ।

इदानीं किल मूलधनद्वारा संभूयसमुत्थानरूपसमाजव्यवस्थायां क्षेत्रभाटक—लाभ—वेतनान्यतमरूपेण धनविभागस्तु व्यक्तिमात्रेण सुलभ एव । द्रव्यरूपेण वस्तुरूपेण वा प्राप्तोऽयं धनांशो क्रयविक्रयात्मकविनियोगद्वारा अपेक्षितावश्यकानामन्येषां वस्तूनां लाभे सर्वैरपि विनियुज्यत एव । ततश्च भोग्यसंपत्तेः सर्वेषां पर्याप्तये वस्तुमात्रस्य मूल्यमेव गुरुतरं व्यवहारसाधनं संपन्नम् एवं तदिदं मूल्यं कथं वा निश्चेयमित्येव महान्खल्वर्थशास्त्रस्य विषयः । अत एव कॅपिटलग्रन्थस्य तृतीयखण्डे प्रवर्त्यमानापि सा चर्चा ज्यूलियन्—बूर्खार्डट् इत्यनेन प्रथमप्रकरण एव सा चर्चिता स्वीये संक्षिप्तकॅपिटलग्रन्थे (.पीपल्स् मार्क्स्) अस्मिन्नपि सारग्रन्थे सा प्रथमप्रकरण एव विहिता ।

## ( वेतननिर्धारणविचारः )

तत्राऽऽदौ मूल्यनिर्धारणं कथं भवतीति प्रश्ने वस्तूत्पादनव्ययं तदुपरि किंचिल्लाभं च निश्चित्य तदेव मूल्यस्य निर्धारणं भवतीति तदनुसारेण वस्तुविक्रयो भवति । परं त्वेतयोरपि निश्चयः प्रथमतो-

विधेयः। तत्राऽऽदावुत्पादनव्ययनिर्धारणार्थं तद्घटकत्रयस्य विचारः कर्तव्यो भवति। ते च घटका यथा — मूलधनस्वामिभिर्देयं भूस्वामिनो भाटकम्। उत्पाद्यवस्तूनां समवायिघटकद्रव्यं साधनानीतराणि च क्रेतव्यानीति तदर्थो व्ययः। भृत्यानां वेतनव्ययश्चेति।

एतत्त्रितये वेतनव्ययस्यातिशयत्वात्स एवाऽऽदौ चर्चितव्यः मूलधनिनस्तु भृत्यानामावश्यकता तु वर्तत एव। यावत्किल मूलधनं तावतामेव भृत्यानामावश्यकता। तदनुसारेणैव च बहूनां भृत्यानां नियोजनं भवति। मूलधनं तु कदाचिद्द्रव्यरूपेण कदाचिद्वस्तुरूपेण। द्रव्यरूपत्वे तु तस्य वेतनमपि द्रव्यरूपेणवेति तदा भृत्यास्तु द्रव्यस्य साक्षादनुपभोग्यत्वादपेक्षितविक्रेयवस्तुक्रयणद्वारैव तदुपभोग्यं भवति। वेतनाकारस्तु भृत्यस्वामिनोरन्योन्यसंघर्षद्वारैव निश्चीयते। मूलधनस्याऽऽधिक्ये भृत्यानामत्यपेक्षायामपि तावतामलभे च वेतनाकारो वर्धते। अपेक्षितापेक्षया त्वाधिक्ये च भृत्यानां वेतनाकारः परिहीयते। मूलधनस्येयत्ता त्वापणे वस्तुविक्रयपरिमाणेनावगम्यते। ततश्च वेतनाकारविनिर्णयः। इत्येवमन्योन्याश्रयः। मूल्यनिश्चयप्रमापणे ह्युत्पादनव्ययलाभयोरेकत्र लाभ (बेरीज) एव निदानम्। उत्पादनव्ययघटकभृत्याकारस्तु आपणमूल्यादिति परस्परसापेक्षनिर्धारणत्वान्नैकस्यापि निश्चय इत्यापत्तिः प्रसज्जते।

## ( लाभविचारः )

द्वितीयोंऽशस्तु मूल्यस्य निर्धारणे उपयुक्तो लाभः। तस्यापीयत्ता कथं निर्धारणीयेति विचारे मूलधनस्वामी उत्पादनव्ययानन्तरं तदुपरि यदधिकं किंचिद्ग्राह्यत्वेनाऽऽपादयति स लाभ इति किल संभवति। परं नैतत्र विचारसहम्। यो हि विक्रेता स चान्यदा क्रेतापि संभवति। न हि विक्रेतुः सर्वापि भोग्यसंपत्तिः स्वायत्ता। कश्चन विक्रयव्यवसायी, अन्यश्च श्रमजीवी, इतरश्चाधिकारीति व्यवसायभेदेऽपि जीवनार्थमावश्यकवस्तुपरिग्रहाय तेषां परावलम्बित्वात् स्वव्यवसायसिद्धवस्तुषु उत्पादनव्ययातिरिक्ताधिकमूल्यग्रहणेऽप्यन्यत्र पुनस्तस्यैव व्ययीकरणादन्ततो न लाभो नाम कश्चनाधिगतो भवति। यथा कश्चन संदेशपत्रविभागाधिकारी स्वीयश्रमार्थं विनिमयरूपेण किंचिद्वेतनं द्रव्यरूपेण लभते। तच्च नाणकरूपं न साक्षादुपभोक्तुं शक्यमित्युपभोगार्थमावश्यकं तण्डुलादिकं क्रीणीयात्। तत्र चाधिकारी स्वीयश्रमविक्रेता तण्डुलादिक्रेता च भवति। तदा च यदि विक्रेता स्वविक्रेयवस्तुषु प्रतिशतमधिकं पञ्चकमपेक्षेत, तदा क्रयावसरे तदेव पुनः प्रतियच्छेदिति लाभत्वेन किं वा कस्यावशिष्यात्। एवं च लाभोऽयं कथं निष्पद्यते इति प्रश्नस्त्वनुत्तर एव। ततश्चोत्पादनव्ययः, लाभः, मूल्यमिति समीकरणात् मूल्यस्यानिर्धारणमेव।

अत्र केचिदपेक्षामूलकमेव मूल्यमिति वदन्ति। तथा हि— अपेक्षाधिक्ये वस्तुन्यूनतायां च मूल्यं वर्धते। अपेक्षान्यूनत्वे वस्त्वाधिक्ये च तद् ह्रसते इति किल व्यवहारो दृष्टचर एव। तस्माद्-

पेक्षैव मूल्यनिदानमिति । एतन्न युक्तम् । अपेक्षाया वस्तुनश्च साम्यावस्थायां मूल्यानिर्धारणप्रसङ्गात् । न हि विना मूल्यं किमपि लभ्यते । तत्र साम्यावस्थायां मूल्यवितरणं त्वावश्यकमेव । तस्मात्क्षय-वृध्योरन्तराले साम्यावस्थायां अपेक्षावस्तुनोर्यद्विनिमयसाधनार्थं किमपि दीयते तदेव मूल्यमिति निश्चेयं भवति । तस्माद्न्यूनाधिक्यावश्यकतापर्याप्त्योरनुसारेण जायमानयोर्वृद्धिह्रासयोर्विचारसन्ततैव यदि मूल्यनिर्धारणं विचारणीयं, तर्हि तु कथं वा विनिमयमूल्यमपि निश्चेयमिति विचार एव कर्तव्यः स्यात् ।

( क्रय्यपदार्थाः — विक्रीमाल )

सारग्रन्थस्य तृतीयं प्रकरणं हि मूलकॅपिटलग्रन्थस्य प्रथमखण्डस्थमाद्यं प्रकरणम् । यथा मौतिकसृष्टेर्विज्ञानार्थं पदार्थविज्ञानशास्त्रे मृत्पिण्ड एवाऽऽदौ परिगृह्यते, यथा वा शारीरकशास्त्रे शरीररचनापरिज्ञानाय कश्चनावयवो वा पेशी वा परिगृह्यते । एवमेव संभूयसमुत्थायिसमाजपरि-ज्ञानार्थं क्रय्यवस्तुमूल्यनिश्चयार्थं च क्रय्यवस्तुना स्वरूपस्य पृथक्करणमेवाऽऽदाववगन्तव्यामिति तत एव प्रारब्धः स्वीयो ग्रन्थः कार्लमार्क्समहोदयेन । यतो हि सत्यपि धनोत्पादने धनविभागे च सर्वेषां भोग्यवस्तूपलाभात्प्राक् जायमानो विनिमयव्यवहारः सभूयसमुत्थमूलधनसमाजे मुख्यतः क्रयविक्रयाभ्यामेव भवति । तस्माद्भोग्यवस्तूपलाभस्य परिपूरणं समाजे कथं भवतीत्येतत्परिज्ञानार्थ-मादौ क्रय्यवस्तुमूल्यनिर्धारणपर्यालोचनाऽत्यन्तमावश्यकी ।

( तद्विचारसरणिः )

क्रय्यपदार्थस्य रूपज्ञानार्थं मार्क्समहोदयेन भौतिकशास्त्रस्य प्रयोगशालास्वाद्रियमाणा पद्धति-रेवावलम्बिता । कियता तेजःसंयोगेन जलस्य बाष्पीभवनमित्येतस्योत्तरं तु न महानसस्थतैलतुल्यो-त्सिच्यमाने पयस्यधिगन्तुं शक्यं किल यथावत् । कदाचिन्महानसस्थवायोर्न्यूनत्वाधिक्याभ्यां वा तदौष्ण्यन्यून्याधिक्याभ्यां वा तैलचुल्याः ( स्टोह ) औष्ण्यमापनाशक्त्या वा तैलस्य चुल्या केन-चिद्दोषेणौष्ण्यस्य वैयर्थ्यसंभावनाया वा तदौष्ण्यपर्याप्तेरभावाद्वा नायं प्रयोगो महानसे साध्यते किंतु प्रयोगशालायामेव । तत्र हि तन्मापकसाधनानां याथातथ्यं भवति । जलस्याऽऽदौ उष्णतामापनमि-यदिति निश्चीयते । ततो वातावरणस्य समशीतोष्णत्वं संपाद्यते । इत्येवं परिस्थितौ किल कियत्यंशे जलस्य बाष्पीभवनमिति यथावदेव प्रयोगशालाया निश्चीयते । परंतु सांसारिका व्यवहारा न प्रयोगशालायां प्रमीयन्ते । यस्मिन्नंशे किल बाष्पीभवनं जलस्य प्रयोग-शालायां तथैव व्यवहारेऽपि तस्मिन्नंशे एव भविष्यतीति न नियमः । एवमपि प्रयो-गशालायां प्रमितो नियमो व्यवहारेऽपि मार्गदर्शको भवति । एवमेव क्रेयवस्तुमूल्यनिर्धारणे-

ऽपि । अत एव तदन्वेषणायां सिड्नेहुक्महोदयेन मार्क्समहोदयविषय एवमुक्तं यदियमग्रहारपद्धतिः संपूर्णतया प्रणष्टा । परंतु व्यक्तिस्वातन्त्र्यनियामिका आर्थिकी स्वायत्तव्यवस्था न प्रचलिता, राष्ट्राणामन्योन्यसीमानो दृष्टिपथादत्यस्ताः प्रतिव्यवसायं मूलधनसंभूयसमुत्थानपद्धत्यैवोत्पादनं प्रभावशालि, आवश्यकतापरिपूर्त्योश्च समत्वमित्यादिकमभ्युपेत्यैव क्रेयवस्तुस्वरूपस्य पृथक्करणं प्रारभतेति ।

## ( हरिणानां मानवानां च विशेषः )

मूलधनेनाभ्युत्थायिनः समाजस्य समग्रापि संपत्तिः क्रेयस्वरूपेति मार्क्समहोदयस्योक्तेरयमेवार्थो यन्मानवसमाजोऽयमन्योन्यावलम्बी वर्तत इति । एकस्मिन्नपि शाद्वले चरतां हरिणसहस्राणामपि न परस्परावलम्बित्वम् । व्यक्तिमात्रमपि तत्र स्वभावत एवोत्पन्नानि शष्पाणि स्वातन्त्र्येण भुनक्ति । तेषां शष्पाणामेकत्रोद्गमादेव हरिणानामप्येकत्र संचारो भक्षणं च । नैवं मनुष्याणाम् । तैस्तु भोग्यसंपत्तिः स्वयमेवोत्पादनीया । न ग्रासवदनायासेनोत्पन्ना भोग्यसंपत्तिस्तैर्लभ्या । तच्चोत्पादनं नैकेन व्यक्तिमात्रेण स्वावश्यकं सर्वं संपादयितुं शक्यम् । यथा कस्मिंश्चित्कुटुम्बे स्त्रिया गृहकार्यं सूत्रनिष्कासनं चेति कार्यद्वयमपि न व्यक्तिमात्रस्य कृते । किंतु समग्रकुटुम्बार्थे । एवं पुरुषकार्यमपि क्षेत्रकर्षणादिकं कुटुम्बार्थे एव । न हि कर्षणेनार्जितं सस्यमेक एवोपयुनक्ति । एवं च कुटुम्बसंस्थायामन्योन्यसापेक्ष्यं परस्परसहकारित्वं च सिध्यति । एवमेव ग्रामव्यवस्थायामपि कुम्भकार–लोहकार–तक्ष–तन्तुवाय–तुन्नवाय–नापित–तैलिक–शबर–श्वपच–चर्मकारप्रभृतीनां सर्वेऽपि व्यवसाया न स्वमात्रप्रयोजनाः किंतु सर्वस्यापि ग्रामस्यार्थे । कर्षकस्तु धान्येन तान् बिभर्ति । ते चान्योन्योपयुक्तपदार्थसंपादनार्थं परिश्रमानारभन्ते । परस्परसापेक्षत्वमन्योन्यसहकारित्वं चैवं स्फुटमेव । सर्वेऽपि स्वस्वपरिश्रमान् विनिमिमन्ति । अत्र च पुरा किल विनिमयो नाणकस्वरूपेण नाभवत् किंतु साक्षाद्वस्तुद्वारैव । सोऽयं रूढो मार्गः प्राक्कालिकः । यावद्वर्षं कुम्भकारेण कुम्भा अपेक्षिता देयाः कर्षकेभ्यः । नापितेन तथैव कर्षककुटुम्बघटकानां श्मश्रुकर्म कर्तव्यम् । खले धान्यनिष्पत्त्यनन्तरं कर्षकेण तेषां परिश्रमाणां वार्षिकं मूल्यं धान्यरूपेण देयमित्यासीदत्रापि प्रदेशे पूर्वतनो व्यवहारः । अस्य च स्वरूपं विनिमयात्मकम्, न क्रयविक्रयात्मकम् । मूलधनपद्धतौ तु नाणकरूपेणैव सर्वेऽपि व्यवहारा इति धनविचारे तस्य क्रेयवस्तुत्वं विशेषतो मनसि निधेयम् ।

## ( श्रमजन्यता हि विनिमयस्य साधारणो धर्मः )

यद्यप्यापाततः पदार्थानां क्रयविक्रयौ नाणकद्वारैव भवत इति प्रतीयते, तथापि सूक्ष्मदृष्ट्या पर्यालोचिते हि व्यवहारे वस्तूनामेव भोग्यानामन्ततस्तावितिं सुज्ञेयं भवति । कश्चित्तैलिको नाणकं दत्त्वा वस्त्रं क्रिणीयात्सौचिकसकाशात् तुन्नवायस्तु तेनैव नाणकेन धान्यं कर्षकात् । सोऽपि

कृषीवलस्तेनैव नाणकेन पुनश्च तैलं तैलिकादिति परम्परार्थां भोग्यवस्तुविनिमय एव भवतीति स्पष्टमेव प्रतिभाति। एवं च नाणकमिदं मध्ये केवल भारभूतमेव। विनिमयस्तु साक्षाद्वस्त्रधान्यतैलानामेव। स चायं विनिमयो न पूर्वकाल इव वार्षिकसमयबन्धरूपरूढ्या। किंतु सदृशवस्तूनां दानादानाभ्यामेव। तच्च वस्तुसादृश्यं कथं परिमेयम्? क्रेयपदार्थास्तु सर्वेऽप्युपयोगमूल्या एव। उपयोगमूल्यत्वाभावे हि विनिमयमूल्यमपि तेषामसंभवि। तत्र लोहवस्त्रगोधूमाद्युपयुक्तनानाविधवस्तूनामुपयोगमूल्यं तु प्रतिरूपमेतावद्भिन्नभिन्नम्, यद्वस्तूनां सादृश्यतुलनायां तस्यानुपयोगित्वमेव स्यादिति नोपयोगमूल्यं क्रेयवस्तूनां साधारणो धर्मो भवितुमर्हति।

वस्तुद्वयस्य दैर्घ्यं ह्रस्वत्वं वा गुरुत्वं लघुत्वं वा यथा सुतोलं न तथोपयोगमूल्यद्वयम्। तत्परित्यागे तु साधर्म्यमिदमवशिष्यते यद्वस्तूनां मानवश्रमजन्यत्वम्। यद्यपि श्रमाणामपि प्रतिवस्तुविभिन्नत्वान्न साधर्म्यम्। एवमपि मानसिकेन शारीरकेण श्रमेण शरीरव्ययस्य सर्ववस्तुसंपादनसाधारण्यात् तादृशपरिणाम एव साधारणो धर्मो विनिमयस्येति सिध्यति।

## ( मूल्यस्वरूपम् )

उपयोगमूल्यनिर्माणार्थमेव किल मानवानां शरीरह्रासः श्रमेण। तत्परिपूर्तिं विना भूयोऽपि उपयोगमूल्यनिर्माणपरिश्रमा नैव भवितुमर्हन्ति। क्रेयवस्तुनिर्माणं तु न केवलं स्वात्मार्थम्। अतस्तत्रोपयोगमूल्यमपि तु विनियोगमूल्यमेव। परंतु विनियोगमूल्यं तु तदेव स्याद्यदि पूर्वं स्वगतं मूल्यं स्यात्। वस्तुनिर्माणार्थं क्रियमाणैः परिश्रमैः खलु यावान् शरीरह्रासः, तत्परिपूर्त्यैव पुनश्चोत्पादनश्रमसौकर्यं चेत्तावदेव मूल्यं तद्वस्तुन्यन्तर्भूतामित्यवश्यं परिकल्पनीयं भवति। यतो हि अन्यश्चेत्कश्चिद्वस्तुनिर्माणार्थं प्रयतेत चेत्तेनापि तावानेव स्वशरीरह्रासः कर्तव्यः स्यात्। यदि च तदेव वस्त्वानिर्मायान्यद्वस्तु पूर्ववस्तुकर्तृसापेक्षं तावच्छक्तिह्रासकारि च निर्मिमीयात्तदा तूभयोरपि शक्तिह्रासस्य साम्यादुभयोरपि वस्तुनोर्विनिमयेनोभावपि स्वीयशक्तिह्रासस्य परिपूर्तिं विदध्याताम्। एवं चेदं सिध्यति यदा ह्युपयोगमूल्यानि श्रमेण समुत्पाद्यन्ते तदैव तेषां स्वगतमपि मूल्यं निष्पद्यते। तदेव किल विनिमयरूपेणाऽऽविर्भवतीति विनियोगमूल्यमिति निगद्यते।

## ( श्रमकाल एव श्रममापनम् )

अत्रायं प्रश्नः समुदेति यच्छ्रममापनमपि कथं कर्तव्यम्। नहि सर्वेषां श्रमाणां सादृश्यम्। केचन मानसिकाः केचन शारीरकास्तत्रापि कलावशाद्विविधतेति कथमेतेषामैकरूप्यम्, येन विनिमयसौकर्यं स्यात्, न हि लोहकार-सुवर्णकार-तक्ष-ग्रामतक्षादीनां श्रमाः सर्वेऽप्येकरूपाः। न वाध्यापक-संशोधककार्यमेतेस्तुल्यरूपमिति कथंकारं श्रमाणामेकरूपेण विनिमयसाधनत्वं

मापनीयमिति । अत्रोच्यते—अस्ति किल कालरूपं मापकं येन विनिमयसौकर्यं स्यात् । प्रत्यहं जीवननिर्वाहोपयुक्तभोजननिद्रादिवेलामतिहायैवावशिष्टो भागः कालस्योदरपूर्तिव्यवसायार्थं धनोपार्जनाय वोपयुज्यते । यथा हि भोजनादिकमत्यावश्यकमेवमेव गृहवस्त्रादिकमपीति तन्निर्माणार्थं सर्वैः श्रमाः कर्तव्या एव । तदर्थं च सर्वस्यापि समाजस्य कश्चन मर्यादितः कालव्ययः स्यादेव । यदि वस्त्रनिर्माण एव सर्वोऽपि कालो व्ययितव्यः कथं वाऽन्ननिर्मितिः । कथं वा गृहसंपादनमिति तत्र तत्र कार्ये विभज्यैव कालं प्रवर्तितव्यम् । सोऽयं विभागोऽपि कालस्य केन विधेयः, को वा समाजधुरीणस्तत्र प्रभवेत् सर्वेषां कालविभागनिर्णये इति शङ्का स्यात् । अत्र च संभूयसमुत्थमूलधनवादिनः समाजो हि व्यक्तिस्वातन्त्र्यवादिष्वान्यकेरेव प्रभुत्वमित्याह । अतश्च यस्मै यो व्यवसायो रोचेत यावान्वा कालव्ययः कर्तव्यतया निश्चीयेत येन केनचित् । तेन तथा विधेयमिति तेषामुत्तरमायाति प्राधान्यात् । परं तु यदाकदाचित्सर्वेषामतिमनोहरप्रासादनिर्माण एव रुचिः स्याच्चेत् तदाऽन्ननिर्मितिरभावप्रसङ्गेन प्रासादमधिवसतोऽपि समाजस्य विनाऽन्नं मरणापत्तिः कथं न स्यादिति चेन्न । कस्मिन्धनोत्पादने कियान्वा कालव्ययो विधेय इत्यत्रास्ति प्रमाणमापणः । यदि प्रासादनिर्माण एव कालापव्ययः स्यान्न स्याद्वाऽन्ननिर्मितिः । तदा तु प्रासादानां बाहुल्याद्ल्पार्घता, अन्नस्य दुर्लभत्वान्महर्घता चेत्यापत्तौ अन्नपूर्तेरपेक्षयाऽन्नापेक्षाया आधिक्ये च तदुत्पादनमेव लाभकारीति विनाऽनुशासनमेव सर्वस्यापि समाजस्य तत्र प्रवृत्तिः स्यादेव । एवं चेदमत्र तात्पर्यं यच्छ्रममापनस्य साधनमत्युत्कृष्टमिदमेव यत्कालयापनम् । इदमेव मूलधनवादिसमाजोऽबुद्धिपुरःसरमुपयुज्यते ।

## ( सामाजिकदृष्ट्याऽऽवश्यकाः श्रमाः )

इदमत्र भवान्प्रष्टव्यो मूलधनवादी यदि कालयापनादेव श्रममापनम् । तर्हि तु कश्चनालसः रात्रिंदिवमालस्येनैव यापयति चेत् स किमधिकश्रमशाली वा तच्छ्रमादेव मूल्यनिष्पादनं भवतीति वा मन्तव्यम् ? नो चेदिदमेव वक्तव्यं स्यात्समाजसापेक्षवस्तुनिर्माणार्थं हि ये श्रमा अपेक्षिताः, तदर्थं यत्कालयापनम्, तदेव किल समाजसापेक्षकालयापनमिति तदेव किल मूल्यमापनसाधनं भवितुमर्हति । त एव च सामाजिकदृष्ट्या आवश्यकाः श्रमाः । वस्त्रयन्त्रालयाभावे हि हस्तव्यवसायेन वस्त्रवानार्थं यत्कालयापनं तदेव किल मूल्यमापनसाधनमासीत् । इदानीं तु हस्तव्यवसायस्य घण्टाकाले यन्त्रेण वस्त्रं निर्मीयते इति हस्तव्यवसायघण्टिका यन्त्रस्यैकघटिका च तुल्या इति घण्टिकाकालयापनमेकघटिकाकालयापनतुल्यमिति तच्छ्रमाणामपि तुल्यतापत्तिः स्यान्मूल्यमापनदृष्ट्या । इदानीं हि यन्त्रद्वारैव तावो वस्त्रनिर्माणमिति यन्त्रघटिकैव सामाजिकावश्यकतां धत्ते । यथा यथा हि वैज्ञानिकानुसंधानबलात् यन्त्रनिर्मिती तथा तथा श्रमवेतनानां

न्यूनता भवति । एवं च क्रेयवस्तुमूल्यमपि न्यूनतां भजते । स्पष्टं चेदं हस्तव्यवसायापेक्षया यन्त्रनिर्मितवस्तुनोऽल्पार्धत्वेनेति नाधिकं विनिवेयमस्ति ।

इदमत्र तात्पर्यं यत्र प्रत्युपयोगमूल्यं मूल्यास्तित्वं संभवति । किंतु यदुपयोगमूल्यं श्रमजन्यम् तस्यैव तदिति विनिमयमूल्यमपि तस्यैव । न तु वायुजलसदृशानामनायासजन्यानां वस्तूनामिति ज्ञेयम् ।

## ( क्रेयरहस्यम् )

श्रमजन्यानामेवोपयोगमूल्यानां मूलधनवादिसमाजे क्रेयस्वरूपताप्राप्तिरिति तु पूर्वमेवोक्तम् । परं च क्रेयस्वरूपताप्राप्तौ तु वस्तूनां काचिद्गूढता वा विपर्यस्तता वा प्राप्नोति इत्याह स्म मार्क्समहोदयः । प्रतिव्यक्ति हि धनोत्पादनश्रमावश्यकता, स्वेतरश्रमजन्यफलोपभोगश्च । आर्थिकदृष्ट्या हि समाजव्यवस्थायां दास्यरूपेण वाऽग्रहारिरूपेण वा भारतीयग्रामसंस्थारूपेण वा यथाकथमपि सत्यां धनोत्पादनं तु रूढपरस्परावलम्बनेनैव । तैलिकेनेतरार्थं तैलं निष्पादनीयम्, सौचिकेन वस्त्रसीवनं, कृषीवलैः सस्योत्पादनम्, ततश्च समाजघटकत्वात्सर्वैः स्वेतरश्रमफलानामुपभोग इत्येवं परम्परागतमेव वर्तते । तैलवस्त्रादीनां विनिमयो हि धनोत्पादनार्थं क्रियमाणस्य सामाजिकसहकार्यस्यैव नैसर्गिकः परिणामः ।

## ( विपरीतदृश्यम् )

एवमपि मूलधनवादिसमाजे एतद्विपरीतं दृश्यते । तत्समाजे हि व्यक्तिस्वातन्त्र्यमेव समाजव्यवस्थाया मूलाधारः । एतच्च व्यक्तिस्वातन्त्र्यतत्त्वमर्थशास्त्रज्ञानां मनस्येतावद्दृढमूलं वर्तते येन वस्त्रादिनिष्पादकानां सामाजिकश्रमाणां समाहार एव तेन च रज्ज्वा सर्वेऽप्येकत्र समाजे ग्रथिता इति यथार्थतत्त्वमपि ते नालोचयन्ति । प्रत्युत सर्वा अपि व्यक्तय इतरेभ्यः स्वतन्त्राः स्वयंभुवश्चेतीव मन्यन्ते । विनिमयो हि वस्तूनां सामाजिकश्रमजन्यत्वादेवेति सत्यमप्यपरिज्ञाय विनिमयेन वस्तूत्पादकानां व्यक्तीनामन्योन्यसंबन्ध इति ते संगिरन्ते । स चायं संबन्ध आधिभौतिकवस्तुमूलकत्वादाधिभौतिक इत्यपि मन्यन्ते । न तु सामाजिकश्रममूलकत्वात्सामाजिक इति । अयमेव खलु महान् दोषो मूलधनवादिसमाजे इति मार्क्समहोदयस्य मतम् ।

## ( भ्रमोपपत्तिः )

तमिमं भ्रमं विस्पष्टयितुमुदाहरणद्वयमाददे मार्क्समहोदयः । चाक्षुषप्रत्यक्षज्ञानं हि चक्षुरिन्द्रियज्ञानतन्तुभ्यः प्रेरणावशात्समुत्पद्यमानस्य प्रकाशकिरणस्य बाह्यवस्तुपर्यन्तं गत्वा तत्प्रतिबिम्बसहितस्य पुनः प्रतिनिवर्तनाद्भवतीति शास्त्रीयः सिद्धान्तः । तदिदं चक्षुरिन्द्रियस्य प्रकाशकिरणस्य परिणाम इत्यपरिज्ञाय बाह्यवस्तूनामेवायं निसर्ग इति यथा प्राकृता मन्यन्ते । तथैव वस्तूनां विनिमयोऽपि वस्तुगतस्वाभाविकगुणादेवेति तन्निर्मातॄणामपि तथैवान्योन्यमाधिभौतिकः संबन्ध इति खलु

भ्रम्राम्यन्त्यर्थशास्त्रज्ञाः । अस्मिन्नुदाहरणेऽपरितोषादुदाहरणान्तरमाह मार्क्समहोदयः । अपरितोष-निदानं त्विदमेव यच्चक्षुरिन्द्रियबाह्यवस्तुनोर्द्वयोः संबन्धे मध्ये ज्ञानकिरणगमनागमनरूपो मध्यस्थः कश्चन पदार्थो वर्तते । न तु तथा वस्त्रादिवस्तूनां विनिमये । अतश्चोदाहरणान्तरं तु धार्मिकव्यवहारगतमेव सांप्रतमिति । स्वर्गपातालनरकादिलोकानां वस्तुगत्याऽस्तित्वमेवेति न कोऽपि प्रतिजानाति । वस्तुतस्त्वेते लोका मनुष्यमस्तिष्ककल्पना एव । एवमपि तथा परिकल्पनानन्तरं तेषां स्वातन्त्र्येणास्तित्वं स्वतःसिद्धकर्तृत्वं चास्तीति परिकल्प्यते । ततश्च तत्रत्यानां देवादित्वेन परिकल्पनं तदनन्तरं तेषां विवाहादिकं स्वीयपापपुण्यगणनाव्यवहारः, तेभ्यश्च भोग्यसंपत्तेरभितो याचना, दुःखपरिहारार्थं करुणाभ्यर्थना चेत्यादिव्यवहारः प्रादुर्भवति । वस्तुतस्त्वेतत्सर्वं कल्पनामयमेवेति स्वकल्पनाक्रीडैवैतत्सर्वम् । एवमेवार्थशास्त्रज्ञा अपि वस्तुगतगुणमूलकत्वं विनिमयस्येति मन्वानास्तथैव परिक्रीडन्तीत्याह स्म मार्क्समहाभागः ।

### ( यूथसमाजयोर्वैशिष्ट्यम् )

मूलधनवादिसमाज एवैतादृशो भ्रम इत्यत्र निदानं त्विदमेव यदत्र वस्तुनिर्माणं विक्रयार्थमेवेति रूढः प्रचारः । वस्तुनिर्माणं ह्यत्रामुकस्य व्यक्तेरर्थे इति नोद्देशः । किंतु यस्य कस्यापि ग्राहकस्यार्थ इति । एवं च निर्माता द्रव्यमात्रं पश्यति न ग्राहकव्यक्तिम् । तथैव ग्राहकोऽपि क्रय्यवस्त्वेव पश्यति न विक्रेतारम् । एवं च व्यक्तीनामपरिचयादन्योन्यसाहचर्यसहकार्यादिकं समाजावश्यकं न परिज्ञायते किंतु यूथवत् परस्परनैरपेक्ष्यं स्वातन्त्र्यं चेति भाव्यते । वस्तुतस्तु नैतादृशं स्वातन्त्र्यं वा नैरपेक्ष्यं समाजस्य । किंतु यूथस्यैव । यूथं केवलं समुदाय एव । समाजस्तु परस्परसापेक्षवास्तव्यः समुदायः । व्यक्तिशः स्वातन्त्र्यं यूथे हि हरिणानां न तथा मनुष्याणाम् । समाजघटकव्यक्तीनामर्थोत्पादने परस्परावलम्बित्वादेव सजीवशरीरमिव समाजरचनापि संघटिता चात एव सजीवा कार्यक्षमा च भवति । यथाहि सजीवशरीरस्य एकस्मिन् कस्मिंश्चिदवयवे विनाकारणमनपेक्षितायासोधिक्ये पङ्गुत्वं वा बधिरत्वं वाऽन्यद्विकृतं भवति । तथैव समाजघटकव्यक्तीनामपि श्रमवेलाऽनावश्यकवस्त्रनिर्माणे व्ययिता चेदावश्यकवस्त्रपरिपूर्तेरभावप्रसङ्गेन पूर्वोक्तस्यापेक्षापरिपूर्तिसिद्धान्तानुसारेण विपर्यस्ततुलावदन्नसंपादनन्यूनता प्रासादनिर्मितेराधिक्यं चेत्यापत्तिः स्यात् । श्रमवेला तु न निरवधिः किंतु मर्यादिता, अतस्तस्या विभज्य विनियोगस्तत्तन्नानाविधावश्यकभोग्यवस्तुनिर्माणपरिश्रमे करणीयो भवति ।

मूलधनवादिसमाजे हि सामाजिकपरिश्रमाणां स्वरूपद्वैविध्यम् । यस्य कस्यापि धनोत्पादकश्रमस्य सामाजिकापेक्षापूरकत्वात्सामुदायिकश्रमविभागे स्थानप्राप्तिरावश्यकी । अर्थात्समाजोपयोगित्वात्तस्य यस्याः कस्या अपि समाजापेक्षायाः पूरकत्वमित्येकं स्वरूपम् । तस्यैव च कर्तुः सर्वापेक्षा-

पूरकत्वमिति द्वितीयं स्वरूपम्। तक्षा तु तक्षणकर्मजन्यानि वस्तून्येव पूरयति। तावतैव समाजसकाशान्नानाविधापेक्षितवस्तूनां लाभस्तस्य भवति। एवं च यदा विनिमयव्यवहारः परम्परारूढैर्बन्धनान्युत्सृज्यानिर्बन्धस्पर्धया क्रयविक्रयस्वरूपतामापद्यते, तदा हि मानवोऽपि मानवं विस्मरति। सामाजिकपरस्परावलम्बनमपि न मनसि तिष्ठति। व्यक्तिशः सर्वेऽपि स्वतन्त्रतया भासन्ते। केवलं क्रय्यपदार्था एवैन्द्रजालिकपदार्था इवेतस्ततः समाजे नृत्यन्तो भासन्ते। श्रमजीविनां समाजे तु व्यक्तीनां श्रमसमयः सर्वोऽप्येकरूपो मर्यादित इत्यतस्तस्य समाजे विभजनं सर्वदैव भवति। अत एव च समाजस्य जीवनमपि सिध्येत्।

यत्तु क्रूसोमहोदयस्योदाहरणम्। तदपि कल्पनामात्रं कादम्बरीस्वरूपम्। रॉबिन्सन्क्रूसो इति महाभागो महानर्थशास्त्रज्ञो व्यक्तिस्वातन्त्र्यवादी च। तत्सदृक्षा व्यक्तयोऽर्थशास्त्रदृष्ट्या पूर्णतया स्वावलम्बिनो हि कादम्बर्यादिष्वेव शोभन्ते। न तु परस्परसापेक्षसमाजजीवन इति न तदुदाहरणं भवति। एवमपि तज्जीवनपर्यालोचने त्विदमेव दृष्टिपथमायाति यत्तेनापि श्रमसमयस्य मर्यादितत्वमालोच्य क्षेत्रकर्षण—गृहनिर्माण—नौकाबन्धनादिकार्येषु नियम्य विभजनमेव विहितमास्ति।

## ( विविधाः समाजप्रकाराः )

इदं च सामाजिकपरस्परावलम्बनमग्रहारिसमाजे सहजमेव दृश्यते। तत्र हि भूदासानामग्रहारिणां चार्थिकमन्योन्यावलम्बित्वं प्रत्यक्षतो व्यवहारान्नावलयितुं शक्यम्। भूदासैरग्रहारिणां क्षेत्राणि कृष्ट्वा सप्ताहे कानिचन दिनानि समार्जितं सस्यं सर्वमप्यग्रहारिभ्यो देयम्। अग्रहारिभिश्च तेषामुदरभरणायोपरप्रायां कांचिद्भूमिं दीयमानां भूदासैः कृष्ट्वाऽवशिष्टसप्ताहदिनेषु लब्धं सर्वमपि ग्राह्यम्। एतदन्योन्यावलम्बनप्रदर्शनार्थमेव मार्क्समहोदयेनोपर्युक्तं कृषीवलोदाहरण गृहीतम्। अत्र च कृषीवलकुटुम्बे क्रियमाणानि सस्यनिष्पादन पशुपालनं सूत्रनिष्कासनं वस्त्रवानमित्यादीनि कार्याणि न तत्संपादितवस्तूनां विक्रेयस्वरूपता संपादयन्ति। निखिलानामपि तेषां कुटुम्बात्मकाखण्डसमाजकार्यत्वात्। इदमेव सामाजिकमार्थिकपरस्परावलम्बित्वं विशदयितुं मार्क्समहोदयेन पूर्णतया स्वतन्त्रा समस्थितीनां मानवानामेका वसतिः परिकल्पिता। तत्र च धनोत्पादकानि साधनानि सर्वेषां स्वत्वाक्रान्तानि। किंच साकल्येन सर्वस्यापि समाजस्य श्रमवेला श्रमशक्तिश्च विभज्य धनोत्पादनकार्ये विनियुक्ता। एवं च सर्वेषामपि श्रमाणां सामाजिकस्वरूपतापत्तिः संपद्यते। तथा च समार्जितं धनमपि समेषामेवेति तस्य कश्चनांशं भाविनो धनोत्पादनस्य कृतेऽवशेषयित्वाऽवशिष्टोऽशः सर्वोऽपि प्रतिव्यक्ति अंशत उपभोगाय दीयते। अस्य च कल्पितसमाजस्य मूलधनवादिसमाजेन साकं तोलनार्थमिदमपि मार्क्समहाशयेन कल्पितं यदशभागोऽपि धनस्य श्रमवेलानुसारेव स्यादिति। एवं च श्रमवेलायाः किल द्विविध उपयोगः सामाजिकापेक्षानुसारेण विभज्य विनियोग

इत्येकः । श्रमपरिमाणानुसारेण भोग्यधनविभागश्चेति द्वितीयः । तथा चात्र समाजे धनोत्पादन-धनविभागयोर्विषये व्यक्तीनामन्योन्यसामाजिकसंबन्धोऽपि स्फुटो भवति ।

## ( श्रममूल्यसिद्धान्तस्य प्रधानोपयोगः )

मूल्यं तु श्रमादेव भवतीति सिद्धान्तोपरि मार्क्समहाशयस्यातीव भारः । नायं सिद्धान्तो नूतन एव मार्क्ससंशोधितः । पूर्वमपि रिकार्डो, ॲडम्स्मिथ इति महोदयाभ्यामभ्ययमुक्त एव । एत-दुपज्ञ एवायम् । तदानीं त्वस्य द्विविध उपयोगः । वस्तूनां मूल्यं हि यथापेक्षायाः परिपूर्तेश्च सिद्धान्तानुसारेण सिध्यति । अपेक्षाधिक्ये वर्धते । परिपूर्तेराधिक्ये तु ह्रसति । एवमपि तयोः सम-भावेऽपि वस्तूनां मूल्यं तु भवत्येव । इदमेव साम्यं मूल्यवृद्धि-ह्रासयोर्मध्यबिन्दुः । तदेव च यथार्थ-मूल्यमित्यर्थशास्त्रज्ञाः । तच्च मूल्यं तदैव लभ्येत यदा तद्वस्तु जलादिवदनायासलभ्यं न स्यात् । एवं चापेक्षितवस्तूनां श्रमजन्यत्व एव मूल्यं श्रमजन्यानां विना मूल्यमलाभात् । एवं च वस्तूनां विनि-मयोऽपि श्रमजन्यानामेव । न हि विनायासलभ्यजलादिदानेन किमपि वस्तु परहस्ताल्लब्धुं शक्यम् । सोऽयं विनिमयो न व्यक्तिद्वयस्य । किंतु संख्यानां व्यक्तीनां प्रत्यहं भवति । तथा च सर्वत्र श्रम-जन्यानामेव विनिमय इति दर्शनात् श्रमा एव सामाजिकापेक्षिता मूल्यप्रमापका इति सिद्धान्तसिद्धि-रित्येक उपयोगः श्रममूल्यसिद्धान्तस्येति वर्गविशेषा ( परिनिष्ठिता ) अर्थशास्त्रज्ञाः ।

अपरश्चोपयोगो धनोत्पादकश्रमैर्विनापि समाजे धनभागिनां धनविभागोऽन्याय्य इति सिद्धान्त-प्रतिपादनायापि रेकार्डोमहोदयेन श्रममूल्यसिद्धान्त उपयोजितः । रेकार्डोमहोदयस्तु स्वीयानुमानं साधकबाधकहेतुपर्यालोचनया पूर्णतया निगमय्यापि अग्रहारिणो भूभाटकग्रहणमिदमन्याय्यत्वाद-पहरणीयमिति साक्षान्न प्रतिपादयति । परं चाग्रे हेन्रीजार्जमहाशयेन तु तथा स्पष्टतया निवेदितम् । मार्क्समहाशयेन तु रेकार्डो संशोधितः सिद्धान्तो यथावत्संग्राह्य परिपोषितः । रेकार्डो, ॲडम्स्मिथ इति द्वावपि न्यूनाधिकभावेन व्यक्तिस्वातन्त्र्यवादिनौ । श्रमशब्देन व्यक्तिशः श्रमग्रहणमेव तयोरभिमतम् । तथाच सामुदायिकया अर्थोत्पादनक्रियया समाजोऽ-प्येकरूप एकशरीरश्च सामाजिकश्रमा अपि तथैवैकस्वरूपाः एवं च समाजस्य सर्वाऽपि श्रमवेला श्रमशक्तिश्च मर्यादिता समाजव्यवहारार्थं विभज्यते । व्यक्तिशः पार्थक्यं पृथक्श्रमाश्चेत्ययं भ्रम इत्यादिकं तु मार्क्समहोदयोपज्ञमेव ।

## ( लाभसंशोधनम् )

मूल्यं तु श्रमजन्यमिति तु सिद्धम् । परंतु लाभः कुत उत्पद्यत इत्ययं प्राथमिकः प्रश्नो मार्क्स-महोदयेन शीर्षकस्य चतुर्थे पञ्चमे च प्रकरणे चर्चितः । एतद्विषयकः सिद्धान्त एव मार्क्स महो-

वयेन प्रामुख्येन संशोधितः । लाभश्च मूल्यं तद्वृद्धिश्चेत्यनयोर्विशेषस्त्वग्रे स्फुटीभविष्यति । अत्र सामान्यत एव शब्दप्रयोग इति ज्ञेयम् ।

क्रयविक्रयव्यवहारे हि समानानामेव वस्तूनां विनिमयो भवति इत्यालोचितं पूर्वमेव । तथैव क्रेतुर्विक्रेतृत्वं विक्रेतुश्च क्रेतृत्वं पर्यायेण भवतीति गृहीतेऽप्यधिके मूल्ये न कस्यापि लाभावसर इत्यपि पूर्वमेव निवेदितम्। एवं लाभः (नफ़ा) कथं भवतीत्याशङ्का तदवस्थैव। उपभोगार्थमुपयोगमूल्यानां क्रये तूपभोगेनैव तेषां परिक्षीणत्वान्न तत्र लाभावसरः। लाभश्च सर्वदा विक्रेतुरेव भवति न क्रेतुः । विक्रेता च प्रथमतः क्रेता भवति । क्रय्याणां ग्राहकत्वात् कश्चन वृन्ताकगोणीं क्रीत्वैव विक्रीणीयात्परस्मै । एवमेव क्रयविक्रयव्यवहारः । तत्र कथं वा लाभवृध्योरवसर इत्याशङ्कायां यदुत्तरितं मार्क्समहाशयेन । तदेव तस्य महत् संशोधनम् ।

## ( श्रमाः श्रमशक्तिश्च )

इदं तु सत्यं यत्समानवस्तूनामेव क्रयविक्रयव्यवहारे विनिमय इति । एवमपि स्याच्चेत्किमपि तादृशं क्रय्यं यस्य यद्रूपान्तरस्य वा क्रयणानन्तरं पुनश्च विक्रयात्पूर्वं मूल्यवृद्धिः स्यादित्यालोचिते तु मार्क्समहोदयेन श्रमशक्तिरूपस्तादृशः पदार्थः संशोधनेनाधिगतः । श्रमतच्छक्त्योस्तु महान् विशेषः । नूतनोऽयं संशोधितोऽपि सिद्धान्तो मार्क्समहाशयेन समासेनैव चर्चितः । सावधानतयाऽऽलोचने त्वयं सुगम एव । कश्चन तन्तुवायः स्वनिर्मितं वस्त्रमापणे विक्रीणाति । तदा रूपान्तरेण श्रमानेव विक्रीणाति । एवमेव यन्त्रालये भृत्यानां श्रमविक्रयो भवति नवेति ? यदि च यन्त्रस्वामिनः सकाशाद्भृतिं लभन्ते तद्विनिमये यन्त्रस्वामिने किंवा प्रतियच्छन्ति ? श्रमस्तु अव्यक्तत्वान्न प्रतिदातुं शक्यः । रूपान्तरं क्रय्यवस्त्वात्मकमिति चेत् तत्तु पूर्वमेव स्वाम्यायत्तम् । न तु भृत्येन प्रतिदत्तम् । अर्थात्तत्र श्रमशक्तेरेव प्रतिदानं भवतीत्यङ्गीकरणीयमित्याह मार्क्समहोदयः। तस्याश्च मूल्यं भृतिः । सा च कियतीत्याशङ्का । अपेक्षापरिपूर्त्योः साम्ये श्रममूल्यसममेव वस्तुनो मूल्यमित्ययं नियमोऽत्रापि संगच्छते । वस्त्रविक्रयावसरे ग्राहकाणामाधिक्ये विक्रेता मूल्याधिक्य कुर्यात् ग्राहकन्यूनतायां च न्यूनतामपि मूल्यस्य विदध्यात् साम्ये तु साम्यमित्येव न्यूनाधिकभावेऽप्यन्ततस्तन्मूल्यं श्रममूल्यसदृशमेव प्रायो भवति । एवं च श्रमशक्तिमूल्यमप्यनयैव रीत्या निश्चेयं स्यात् । परं च श्रमशक्तेः श्रममूल्यं नाम किम् ? वस्त्रमूल्यं च वस्त्रनिर्मितिपरिश्रमः । एवं च श्रमशक्तिमूल्यमपि श्रमशक्तिपरिरक्षणश्रम एव स्यात् । श्रमशक्तिपरिरक्षणं चान्नवस्त्राद्युपभोगेन । तच्चान्नवस्त्रादि इतरपरिश्रमजन्यम् । तथाचेतरपरिश्रममूल्यकान्नवस्त्रादिमूल्यदानेन स्वजीवनं निर्वोढुं तद्द्वारा च स्वीयश्रमशक्तिं परिरक्षितुं भृत्यो यथा समर्थो भवेत्तदेव तस्य श्रमशक्तेर्मूल्यमित्यङ्गीकरणीयम् । एवं च जीवनपर्याप्ता भृतिरिति तात्पर्यम् । अत्र च भृत्यानामाधिक्ये भृतेर्न्यूनता तन्न्यू-

नत्वे भृतेराधिक्यं साम्ये साम्यमिति नियमस्य पूर्ववदेव सत्त्वेऽप्यन्ततो जीवनपर्याप्तिप्रायैव सा भृति-र्भवतीति नातिरोहितं वाणिज्यव्यवसायगणकानाम् । जीवनरीतिस्तु देशकालपरिस्थित्यनुसारेण भिन्नभिन्ना नैकरूपा । यथा आंग्लभृत्यानां जीवनरीतिः, न तु सैव चीनदेशीयभृत्यानाम् । अतस्त-त्पर्याप्तिरपि विभिन्नरूपा भृतिभेदकरी भवितुमर्हति नैतावता पूर्वोक्तनियमो बाध्यते । सर्वेषां जीवन-निर्वाहार्थमेव श्रमशक्तेर्विक्रेयता भवति । एवं च जीवनपर्याप्ता भृतिरेव प्रायः श्रमशक्तेर्मूल्यमिति तद्दानबन्धेनैव भृत्यः स्वीयां श्रमशक्तिं विक्रीणाति यन्त्रस्वामिने इति सिद्धम् ।

## ( लाभसमस्या )

सेयं लाभसमस्या कथं तावत्परिपूरणीया । श्रमशक्तिद्वारा यन्त्रालयस्वामिनो लाभः स्यादि-ति चेन्न । प्रथमतस्तावद्यन्त्रालयस्वामिना क्रय्यवस्तूत्पादनार्थं व्ययः करणीयो भवति । स चायं व्ययो भृत्यवेतनम्, यन्त्रक्रयः, भूमिभाटकं, वस्तूपादानकार्पासादिद्रव्यक्रयः, इत्यादिद्वारा नानाविधो भवति। एवं चोत्पादनकार्यार्थं दीयमानं मूल्यं व्ययितव्यमादौ । तदिदं मूल्यं पुनश्च प्रापणीयम् । भृत्यानां षड्घटिकापर्यन्तमायासेन व्ययितं मूल्यं प्राप्यत इत्यभ्युपेतं चेत्तावता तु व्ययितमेव लब्धं स्यान्नाधिकम् । अधिकं तु लभ्यत एव यन्त्रालयस्वामिना । अत एव तत्र तत्र यन्त्रालयोद्घाटनं प्रचरति । नो चेन्न कोऽपि तत्र प्रवर्तेत । आपणस्थसिद्धवस्तूनामेव वा वाणिज्यं प्रसरेत् । एताव-व्ययापेक्षया सिद्धमेव मूलधनं गृहे रक्षितं वा स्यात् । एवमेव यदि निश्चीयेत सर्वैरपि यन्त्रालय-स्वामिभिस्तदा तु सिद्धवस्तुलाभ एवासुकरः स्यात् । अथ तावत्सार्धशतवर्षेभ्यः सर्वैरपि यन्त्रालय-वृद्धिः क्रियते । सा च विना लाभमनुपपन्नैव स्यात् । तस्मात्तद्वृद्धेर्निदानं लाभ एवेति यन्त्रालय-स्वामिनोऽपि स्वयमभ्युपगच्छन्ति । तस्मात्कथं वाऽयं लाभः समुदेतीत्यवश्यमेव विचारणीयम् ।

## ( भृत्यानां विना वेतनमायासः कदा ? )

यथा हि पूर्वमुक्तं यदुत्पादनव्ययस्य परिपूर्तिर्यथा स्यात्तथा मूल्यनिष्पत्तिस्तु षड्घटिकापर्यन्त-श्रमेण भृत्यस्य भवतीति । परंतु भूयोऽपि यदि भृत्याः षड्घटिकापर्यन्तं श्रमशक्तेर्व्ययं कुर्युस्तदा तूपादानद्रव्ययन्त्रह्रासादीनां व्ययः स्यात् । परंतु मूल्यमपि पूर्ववदेव सिध्येत् । अथवाऽधिकं स्यादि-त्येव विचारणीयम् । मार्क्समहोदयस्त्वत्र महान्तं विशेषं प्रतिपादयति । प्रथमतः षड्घटिकासु निष्पन्नं मूल्यं वेतनसहितसर्वोत्पादनव्ययसमसंख्यं सिध्यति । पुनश्च षड्घटिकासु श्रमशक्तेर्भृत्यानां विद्यमानत्वात् तस्याश्च प्रतिदिवसं संपूर्णतया स्वामिना क्रीतत्वात्तयैव श्रमशक्त्या पुनरपि निष्पादितं मूल्यं पूर्वतुल्यमपि भृत्यानां पूर्वघटिकाजन्यश्रममूल्येनैव निर्वाहादवशिष्टमिदं श्रममूल्यमधिकमेव स्वामिस्वायत्तं भवतीत्यपरषड्घटिकासु भृत्या विना मूल्यमेव व्यापार्यन्ते । भृत्यैस्तु प्रत्यहं सर्वापि

स्वीया श्रमशक्तिः स्वामिने विक्रीता। सा च दैनंदिननिर्वाहपर्याप्तमूल्येनैव। तत्र प्रथमषड्घटिकास्वेव निष्पादितम्। एवं चापरषड्घटिकाश्रममूल्यमेव स्वामिनां लाभो वृद्धिर्वेति सिध्यति।

## ( संख्याद्वारा स्पष्टीकरणम् )

मार्क्समहोदयेन संख्याद्वारा स्पष्टीकरणं कृतं पूर्वमेव निर्दिष्टम्। तदेवात्र समासेन सुगमपद्धत्या निर्दिश्यते। भृत्यानां दैनिकं वेतनं रूप्यकद्वयमभ्युपेयते। स्वामिनापि तदनुमोदितम्। अनेन च वेतनेन भृत्येन निखिलापि स्वीया श्रमशक्तिः स्वामिने विक्रीता। ततश्च स्वामी षड्घटिका वा द्वादश घटिका वा कथमपि व्यापारयतु भृत्यम्। मूल्यं तु तस्या रूप्यकद्वयमेव प्रदेयं भवति। एवं च भृत्येन षड्घटिकापर्यन्तं व्यापृतम्। तत्रैव चोपादानद्रव्यव्ययो रूप्यकपरिमितः, यन्त्रह्रासभाटकादिकं रूप्यकपरिमितं, भृत्यभृतिस्तु रूप्यकद्वयपरिमिता। एव रूप्यकचतुष्टयपरिमितं मूल्यं षड्घटिकाभ्यन्तरे निष्पन्नं भवति। पुनश्च षड्घटिकापर्यन्तं तस्य व्यापारश्चेत्तथैव तन्निष्पन्नं स्यात्। तत्र पश्चान्निष्पन्नमूल्यमध्ये यन्त्रह्रासोपादानद्रव्यभूभाटकादिव्ययो रूप्यकद्वयपरिमितो न्यूनीकृतः। अवशिष्टं तु रूप्यकद्वयं वेतनव्ययः। स च पूर्वषड्घटिकाभ्यन्तर एव निष्पन्न इति न पुनः प्रदेयो भवतीत्यतः स एव लाभः। एवं च प्रथमषड्घटिकापर्यन्तं व्ययिता श्रमशक्तिः स्ववेतननिष्पादिका। अपरषड्घटिकापर्यन्तं व्ययिता तु स्वामिलाभनिष्पादिका। एवं चेतराणि द्रव्याणि नाधिकमूल्योत्पादकानि। केवला श्रमशक्तिरेव तादृशी यस्या अधिकादधिकोपयोगे स्वमूल्यसंपादनेन साकमितरदप्यधिकं मूल्यं निष्पादयति। स एव लाभः ( नफ़ा )

## ( अकिंचनानां स्वतन्त्राणां च भृत्यानां तदर्थमावश्यकता )

तादृशलाभसंपादनार्थं च भृत्यानां परिस्थितिर्द्विविधाऽपेक्ष्यते। आद्या तेषां स्वातन्त्र्यस्थितिर्यथा ते स्वीयां श्रमशक्तिं निष्प्रतिबन्धं विक्रीणीयुः। द्वितीया चाऽऽकिंचन्यम्। येन जीवननिर्वाहोऽपि विना श्रमशक्तिविक्रयमशक्यः स्यात्। तच्च आकिंचन्यमितरधनोत्पादनसाधनराहित्यमेव नान्यत्। दासभावप्रथायां दासानां स्वाम्यायत्तत्वाच्छ्रमशक्तिविक्रये पारतन्त्र्यमेव। अग्रहारपद्धतावपि कर्षकाः सप्रतिबन्धा इति श्रमशक्तेर्विक्रये न प्रभवः। व्यक्तिस्वातन्त्र्यवादप्रवृत्तौ तूभयोरपि पद्धत्योर्निरासात् स्वीयश्रमशक्तिविक्रयिणो बहवो भृत्याः सुलभाः, मूलधनस्वामिनः। तथैव साधनान्तरराहित्येऽपि भृत्यानां सौलभ्यं भवति। यस्य च सविधे धनोत्पादनसाधनं तुरीवेमादिकं वर्तते तादृशस्तन्तुवायः कथं परस्मै स्वश्रमशक्तिं विक्रीणीयात्। एवं च भृत्योपरि शासनस्य वा रूढेर्वा प्रतिबन्धो न स्याच्चेन्न वा साधनान्तरं चेत् तदैव स भृत्यस्तां शक्तिं विक्रीणीयात्। तत एव भृत्यसौलभ्यम्। तादृशाश्चेत्सहस्रशोऽपेक्षिताधिका भवेयुस्तदा तु जीवननिर्वाहार्थं स्पर्धाजन्यसंघर्षसंभवेन वेतनाकारोऽपि

न्यूनान्न्यूनतरो भवितुमर्हति । मूल्यनिर्माणं तु पूर्ववदेवेत्यधिकादधिकतमो लाभो भवति तथा स्वामिनाम् । भृत्यानां श्रमशक्तेस्तु स एव व्ययः । एवमपि तन्मूल्यं न्यूनतरमिति वैषम्यमापद्यते । अयमेव मूलधनवादः । ( भांडवलशाही )

## ( मूलधनवादस्यैतिहासिकत्वम् )

उपर्युक्तस्य भृत्यानां परिस्थितिद्वैविध्यस्य नानादित्वं न वा पूर्वोतिहाससिद्धत्वं नापि नैसर्गिकत्वं नतरां परस्परसापेक्षतामूलकं सामाजिकत्वम् । एवं नैव सर्वावस्थासु समाजस्योपलब्धिरस्य परिस्थितिद्वयस्य । किंतु मध्य एव किंचित्कालमस्यैतिहासोपलम्भादैतिहासिकक्रमागतमेव तदिति सिध्यति। दासभावपद्धत्यग्रहारपद्धत्योर्ह्रासानन्तरमेव खल्वस्याः परिस्थितेरुदयः। तदैवाऽऽपणे तादृशानां भृत्यानामतीव सौलभ्यं संपन्नम् । यत्र किल प्रथमत एव मूलधनवादस्य प्रादुर्भावः, तत्र इंग्लंददेशे आदौ प्राकृतानां क्षेत्रादिस्वगतव्यवसायेभ्यो निष्कासनेनाकिंचनत्वं संपादितम् । तदनन्तरमेव ते भृतका भूत्वा यन्त्रस्वामिसविधे स्वोदरभरणार्थमुपतस्थुः । एवं च वैतनिको भृत्य एव लाभकारी मूलाधारो मूलधनस्य परिस्थितिविशेषे निर्मीयत इति ह स्माह मार्क्समहाशयः । एवं च मूलधनवादोऽयं न नैसर्गिकः, न वा सामाजिकः किंत्वितिहासक्रमागत इत्येव उत्पत्तिविनाशशालीति स्पष्टमेवाभिहितं तेन । अत्र च नैसर्गिक—सामाजिक—ऐतिहासिकशब्दानां अर्थविशेषा मार्क्समहाशयोक्ता न विस्मरणीयाः ।

## ( भृत्यानां तारतम्यम् )

यद्यपि भृत्यानां बुद्धिकौशलतदभावाभ्यां तारतम्यं भवति न हि सर्वेऽपि कुशला वा मूढा वा । केचित्कुशलाः केचित्तु आदिष्टकारिणो मूढाः । एवं च तारतम्येन भृतेरपि तारतम्यं भवत्येव । तथापि नैतावता श्रमशक्तेः संपादनव्ययतुल्या भृतिरिति सामान्यसिद्धान्तस्य बाधः । येन कौशल्यं संपादितं तेन तत्संपादनार्थं कश्चित्कालः किंचिद्द्रव्यं च व्ययितं स्यादेव । तदनुसारेण तस्याः श्रमशक्तेरुत्पादनमूल्यं वर्धितमेव । अतस्तद्वेतनमप्यधिकं वर्धत इति न कोऽपि दोषः ।

## ( चरं स्थिरं च मूलधनम् )

मूलधनस्य मार्क्समहाभागोक्तवर्गीकरणपद्धतेर्वर्गशोऽर्थशास्त्रज्ञानां वर्गीकरणपद्धतेश्च मूलत एव सविशेषत्वादुभयोरप्यर्थशास्त्रदृष्टिर्विभिन्ना भवति । तत्र मार्क्समहोदयोक्ता वर्गीकरणपद्धतिर्यथा पूर्वोक्तरीत्या षट्सु घटिकासु भृत्येन व्ययितायाः स्वीयश्रमशक्तेस्तथोत्पादनसाहित्ययन्त्रादिह्रासस्य च मूल्यं निष्पन्नवस्तुषु सिद्धं भवत्येव । अपरासु षट्सु घटिकासु तथैव सिध्यति । तथापि श्रमशक्तेर्मूल्यं प्रथमं

वेतनरूपेण भृत्यो लभते। द्वितीयं च तन्मूल्यं लाभरूपेण स्वामी लभते। तत्र वस्तूत्पादनोपयोगि सिद्धवस्तुमूल्यं मूलधनं स्थिरम्। सर्वत्र तादवस्थ्यात्। लाभरूपेण प्राप्तं तु श्रमशक्तिव्ययजन्यं मूल्यरूपं मूलधनं चरमेव। तस्य सर्वदैकरूपत्वाभावात् श्रमशक्तिमूल्यापेक्षया तद्व्ययजन्यमूल्यस्याधिक्याच्च। इदमेव लाभरूपम्। उत्पादनोपयोगिमूलधनात्तु तद्व्ययतुल्यमेव मूल्यं प्रतिलभ्येत नाधिकम्। अतस्तत्स्थिरं मूलधनमिति मार्क्सनिवेदनम्। कस्मिंश्चिद् व्यवसायेऽवान्तरव्यवसायशाखा अपि भवन्ति। यथा वस्त्रनिर्मितिव्यवसाये कार्पासधूननं सूत्रनिष्कासनं वस्त्ररञ्जनमित्यादयो व्यवसायशाखाः। एतासु च स्थिरचरमूलधनयोः प्रमाणं विभिन्नमपि भवितुमर्हति। कस्मिंश्चिद्विभागे स्थिरस्याऽऽधिक्यमपरस्मिंश्चरस्य। एवं चरं मूलधनं भृत्या एव। तैरेव लाभः संपन्नो भवति। तथा च यत्र विभागे भृत्याधिक्यं तत्र लाभोऽप्यधिक इति सिध्यति।

## ( लाभसामान्यप्रमाणम् )

यन्त्रालयस्वामिनां गणनापद्धतिस्तु नोपर्युक्तरूपेण। किंतु सर्वासामपि व्यवसायशाखानामेकीकरणेन। समग्रमपि स्थिरं चरं च मूलधनमेकीकृत्य लाभस्य सामान्यतो निर्धारणं तैः क्रियते। ततश्च प्रतिशतमियान् लाभ इति निर्णीयते। व्यवसायस्यैकस्य यो नियमः, स एवानेकेषु व्यवसायेषु व्यवसायशाखासु च संगच्छते। तत्र लाभस्य चरमूलधनजन्यत्वाच्चरस्य च भृत्यात्मकत्वाद्यत्र व्यवसाये भृत्याधिक्यं तत्र लाभाधिक्यमवश्यमेव स्यात्। परं तु साक्षाद्व्यवहारे तु नैतादृशं प्रमाणमुपलभ्यते। प्रत्युत लाभस्य सर्वत्र सामान्यत एकरूपतैव भवति। किमत्र निदानमित्यालोच्यमाने इदमेव प्रतिभाति यदापणव्यवहार इति। अनेकशाखानां मूलधनस्य लाभस्य च सामान्यस्वरूपनिर्धारणं तु सर्वैः क्रियत एव। तत्राप्यनेकव्यवसायकारिणो भिन्नभिन्नाः स्वामिनोऽन्योन्यसहकारमकृत्वा पृथक्तया व्यवहरन्ति। एवमपि मूलधनस्य लाभस्य च सामान्यस्वरूपं तु सिध्यत्येव। तदत्राऽऽपणव्यवहारान्नान्यत्कारणम्। यद्यपि भृत्यरूपचरधनाधिक्ये लाभाधिक्यं भवति। तथापि लाभाधिक्ये त्वन्यतः स्थिरधनस्याऽऽवापो भवति। एवं च स्थिरधनस्याऽऽवश्यकतापेक्षया आधिक्ये तु वेतनाकारोपादानद्रव्यप्रभृतीनां वृद्धिर्ग्राहकाणां च न्यूनता च। तथा सति मूल्यस्यापि न्यूनता। मूल्यन्यूनतायां लाभोऽपि न्यूनः। ततश्च क्रमेण स्थिरधनावापोऽपि प्रत्यावर्तते। एवं च लाभाकारस्य सर्वदांशात्मकन्यूनाधिक्येऽपि सामान्यत आवापोद्वापयोर्मध्यबिन्दुरेव तस्य सामान्यस्वरूपं सिध्यति। तथा च चरधनस्यैकत्र व्यवसाये आधिक्येऽन्यत्र न्यूनत्वेऽपि च लाभे नातिशयो विशेषः। एतच्च मूलधनविभागानां क्रयविक्रयव्यवहारे ( शेअर बाजार ) सुगममेव।

## ( मूलधनवादिनां मूलधनस्य वर्गीकरणपद्धतिः )

मूलधनस्य वर्गीकरणपद्धतिस्तावन्मूलधनस्वामिनां वर्गीयार्थशास्त्रज्ञानां ( क्लासिकल अर्थज्ञ ) नैतादृशी। मूलधनस्वामिनस्तु जीवतां भृत्यानां श्रमशक्तिः, उपादानद्रव्यं, यन्त्रसामग्री,

इत्याद्युत्पादनसाहित्यं मूलधनं च न पृथक्तया परिगणयन्ति । किंतु मूलधने द्वैविध्यं परिकल्पयन्ति । यच्च मूलधनं प्रत्यहं विनश्य सलाभं पुनः पुनरुत्पद्यते सोऽयमेकः प्रकारः । द्वितीयश्च तस्यैव प्रत्यहं ह्रासः, नोत्पत्तिश्च । परं त्वन्ते नाशो निरुपयोगिता चैतादृशः । प्रथमः चरधनं द्वितीयश्च स्थिरधनमिति तैर्निगद्यते । कस्मिंश्चिद्यन्त्रालये यन्त्राणां मूल्यं रूपकाणां दश सहस्राणि, शतं चोपादानद्रव्यस्य, शतं भृतिः, इत्येवमस्तीत्यभ्युपगमनीयम् । तत्रैकस्मिन् दिवसे व्याप्रियेत चेदुपादानमूल्यं विनष्टं शतम् । भृतिं शतं गता । एवमपि यन्त्रसामग्री तु तदवस्थैव । न सा समग्रा नष्टा । किंतु शतरूप्यकपरिमितः तस्या ह्रासः परिकल्पनीयः । एवं चोपादानद्रव्यस्य श्रमशक्तेश्च प्रत्यहं व्ययेऽपि यन्त्रसामग्र्याः पूर्वोक्तह्रासपरिकल्पनेऽपि शतं दिवसानां तस्यास्तादवस्थ्यमेव । उपादानं श्रमशक्तिश्च प्रत्यहं व्ययिताऽपि उत्पादितलाभेन पुनः क्रियते । नैवं यन्त्रसामग्री । तस्याः प्रत्यहं ह्रासेऽपि न क्रयः । किं त्वन्ते विनाशः पुनश्च संपूर्णतया क्रयः । एवं च यन्त्रस्थं मूलधनं तदवस्थमिति तत्स्थिरम् । अपरं च प्रत्यहमुत्पत्तिविनाशशालित्वाच्चरमिति निगद्यते ।

( श्रमस्य परिणामः )

विंशतिस्तूपादानद्रव्यस्य, ( ४० ) चत्वारिंशल्लाभो वा वृद्धिः । अत्र च मार्क्समहोदयश्चत्वारिंशद्वेतनोपरि चत्वारिंशत् वृद्धिरिति मत्वा लाभप्रमाण शतं प्रति शतमिति मन्यते । मूलधनस्वामी तु न तथा मन्यते किंतु चत्वारिंशदेव लाभ इति लाभाकारोऽपि शतं प्रति चत्वारिंशदिति मन्यते । एवं चास्माल्लाभान्मूलधनस्य वृद्धिं ( व्याज ) भूभाटकमित्यादिकं व्ययं न्यूनीकृत्यावशिष्टस्यैव लाभत्वेन परिगणनां करोति ।

## ( दृष्टिकोणस्य द्वैविध्यम् )

मूलधनस्य द्विविधवर्गीकरणे यो हि विशेषस्तस्य मूलं तु द्विविधो दृष्टिकोणः । मूलधनस्वामी हि लाभोऽधिक उत्पादनव्ययापेक्षया कथं स्यादिति दृष्ट्यैव मूलधनव्यवहारमवेक्षते । एतद्विरोधेन लाभस्तु भृत्यवर्गादेव भवन्नपि मूलधनस्वामिभिरपह्रियत इति सत्याविष्करणं मार्क्सदृष्टिः । इत्येवं दृष्टिभेदादेवायं वर्गीकरणभेदः ।

## ( कार्यसमयाभिवृद्धिः )

श्रमशक्त्यात्मकचरमूलधनादधिगम्यमानो लाभोऽधिकादधिको विनाऽऽयासं यथा स्यात्तदर्थं मूलधनस्वामिनोऽनेकानुपायान् युञ्जन्ति । तत्रैका योजना तु कार्यसमयाभिवृद्धिः । भृत्यैः षड्घटिकापर्यन्तमपि कृतेन कार्येणोत्पादनव्ययस्य श्रमशक्तेश्च मूल्यपरिपूर्तिर्भवत्येव । ततोऽधिककालं कृतेन कार्येणोपादानद्रव्यादीनां व्ययस्य परिपूर्तिस्तु भवत्येव । परंतु नूतनश्रमशक्तेर्व्ययस्याभावात् पूर्वश्रमशक्तिव्ययेनैव संपूर्णश्रमशक्तिमूल्यस्य सिद्धत्वाच्चाधिकसमयं कृतेन कार्येणाधिकं निष्पद्यमानं मूल्यं तु मूलधनस्वामिनो विना व्ययं लभन्ते । एवमेवोत्तरोत्तरमष्ट घटिका वा दश वा द्वादश वेति समयवृद्धावुत्पद्यमानं मूल्यमधिकमेव स्यादिति तल्लाभार्थं कार्यसमयमभिवर्धयन्ति । श्रमशक्तिमूल्यं हि वेतनं यदि समयानुसारेण प्रतिघटिकं वर्धेत तदा तु नैवं स्यात् । तत्तु प्रातिदिननियतमपि जीवननिर्वाहमात्रपर्याप्तमेव दीयते । ततश्च घटिकानां न्यूनत्वमधिकत्वं वा कथमपि भवतु । श्रमशक्तिमूल्यं तु तदेव । ततश्चाधिकसमयानुसारेणाधिकलाभाधिगमः सुकरो भवति । तत्रापि पलमपि विना कार्यं व्यर्थं न स्यादिति रीत्या कार्यकरणं लाभाधिक्यकारण भवति । एवमेव वेतनमपि जीवननिर्वाहपर्याप्तप्रमाणापेक्षया भृत्याधिक्ये न्यूनीकृतं लाभाधिक्यस्य हेतुः । परंतु विनिमयसाम्यमेव मूलधनवादे मार्क्समहोदयेनाभ्युपेतमिति नात्र तद्विस्तरः ।

## ( उत्पादनशक्तेर्वृद्धिः )

लाभाधिक्ये द्वितीय उपाय उत्पादनशक्तेरभिवृद्धिः । यन्त्रद्वारा वा वैज्ञानिकोपपत्त्या वा भृत्येषु कार्यातिभारमासाद्य पूर्ववच्छ्रमशक्तिव्ययेनापि मूल्याधिक्यमुत्पादयितुं शक्यते । ततश्च

पूर्वं श्रमशक्तिमूल्यसंपादनार्थं यत्र षड्घटिकाः पर्याप्ताः। तत्रेदानीं पञ्चैव घटिकाः पर्याप्ता भवन्ति। एवं च सामान्यतः कार्यवेला यदि दश घटिकाः। तत्र घटिकाचतुष्टयजन्यमेव मूल्यं पूर्वमधिगतं स्वामिभिः, इदानीं तु घटिकापञ्चकजन्यमित्यधिको लाभः। एवमेव यन्त्राणां साहाय्येनोत्पादनशक्तिवृद्धौ वस्तुनिष्पत्तिरपि वर्धते ततोऽलाभाधिक्यम्। इदमत्र मनसि निधेयं यदुत्पादनशक्तिवृद्धावपि वेतनवृद्धिः स्यादेवेति न नियमः। वेतननिर्धारस्तु अपेक्षापरिपूर्तिपरिस्थित्यनुसारेणैव भवतीति।

## ( लाभप्रकाराः )

कार्यसमयाभिवृध्या जायमाना लाभाभिवृद्धिस्तु मार्क्समते स्वतन्त्रो लाभ इति ( अॅब्सोल्यूट् सर्प्लस व्हॅल्यू ) इति निगद्यते। यतो हि दशघटिकानन्तरमेकादशघटिकायां वा द्वादशघटिकायां वा निर्मीयमाणो लाभः पूर्वनिष्पन्नलाभात्पूर्वसमयाद्वा पृथगेव भवति। समयाभिवृद्धिमन्तरा श्रमशक्तिवर्धनमात्रेण निष्पद्यमानो लाभः सापेक्षलाभ इति मार्क्समते निगद्यते। ( रिलेटिव्ह सर्प्लस् व्हॅल्यू ) अत्र च न समयाभिवृद्धिः किं तु मूल्यवर्धनमात्रं भवति। भृत्यानामुत्पादनसामर्थ्याभिवृध्या च वेतनाकारोऽपि न्यूनो भवति। यत्र हि व्यवसाये साक्षाद्भोग्यवस्तुनिर्माणं, तत्रोत्पादनसामर्थ्यवृद्धौ वस्तूनामापणे मूल्याकारस्य न्यूनता भवति। ततश्च वेतनाकारन्यूनताऽपि। इतश्चाधिकादधिकं विनिमयमूल्यं लाभं चाधिगन्तुं वस्तूनां स्वल्पार्घत्वं साधयितुमुत्सुकाः कथं भवन्ति यन्त्रालयस्वामिन इत्यपि सुगमं स्यात्। वेतनात्मकश्रमशक्तिमूल्यमधिगन्तुमपेक्षितस्य समयस्य ह्रासे हि अवशिष्टः समयोऽनायासमेव लाभाधिगमायोपयोक्तुं शक्य इत्येव तत्र लक्ष्यं यन्त्रालयस्वामिनाम्।

## ( प्रमाणाभिवृद्धिः प्रकारपरिवर्तनं च )

श्रमजीविनामुत्पादनशक्तेर्वृध्यात्मकं सापेक्ष्यलाभाभिवृद्धेः परमं साधनं तु मूलधनोत्पादनशक्तेरुद्गभूतमेव। यदा हि मूलधनस्वामी उत्पादनव्यवसाये सन्नद्धस्तदा प्रथमतः प्रचलितान् हस्तव्यवसायानेव स्वायत्तीकर्तुमुपचक्राम। इयानेव विशेषो यत्पूर्वं प्रतिगृहं स्वायत्तसामग्र्या स्वायत्तसाधनाश्च व्यवसायिनो सिद्धान् पदार्थानापणे स्वयमेव विक्रीणन्तश्चेदानीं ते श्रमजीविनो मूलधनस्वामिनां यन्त्रालयमागत्य स्वामिस्वायत्तसामग्र्या स्वामिस्वायत्तसाधनैश्च तानेव पदार्थान्निष्पाद्यमानान् स्वामिस्वायत्तान् विधाय भृतिं गृहीत्वा गृहमायान्ति। मूलत एकैकभृत्यस्थाने इदानीमनेके भृत्या एकत्रसंमील्योत्पादयन्ति। तदिदमुत्पादनपद्धतेः परिवर्तनमादौ संख्यारूपप्रमाणात्मकमासीत्। पश्चाच्चनैः शनैर्विधाविशेषस्वरूपतामापन्नम्।

मार्क्सीयविचारपद्धतौ कॅपिटलग्रन्थस्य विवेचने च हेगेलोक्तविरोधविकासपद्धतेः प्रामुख्येणावलम्बः। तस्याश्च विशेषस्वरूपमत्र सुस्पष्टतयैव विज्ञायते। शीतमप्यादौ जलमौष्ण्यसंपर्कादुष्णं

भवति। औष्ण्यसंपर्काधिक्ये चाधिकमेवोष्णम्। सेयमौष्ण्यवृद्धिर्जलस्यान्ततो विवक्षितप्रमाणपर्यन्तमाप्ता पश्चाज्जलस्य जलत्वमेव विनाश्य बाष्पं करोति। अत्रेदं परिवर्तनं न केवलप्रमाणात्मकं किं तु प्रकारात्मकमेव। एवमेव यस्याः कस्या अपि घटनायाः प्रथमतः प्रमाणपरिवर्तनं पश्चात्प्रकारस्वरूपे परिणमतीति हेगेलोक्तविरोधविकासवादस्य प्रमुखः सिद्धान्तो मार्क्सेनात्रोपयोजितः ॥

तथा चाऽऽदौ स्वगृहे स्वातन्त्र्येणैकाकिनो व्यवसायकारिणः श्रमजीविनो यन्त्रालयस्वामिना संगृह्य स्वीयव्यवसायगृहमानीताः। एकाकिनो यदुत्पादनं तदनेकेषां विहितम्। सोऽयं प्रमाणात्मकः परिवर्तः। एतावतापि श्रमजीविनामुत्पादनशक्तिः संवृद्धा। आलयसाधनप्रभृतीनामेकत्रोपयोगेनोत्पादनव्ययोऽपि भृत्यसंख्यापेक्षया न्यूनः संवृत्तः। एवं क्रमेणान्ततः समुदायशक्तिरेका नूतनैव शक्तिः संपन्ना। सोऽयं प्रकारात्मकः परिवर्तः। एवं चानेकेषां सहकारेण समुत्पन्नेयं नूत्ना शक्तिः। सोऽयं सहकारो यथावद्भवति न वेति निरीक्षणार्थं निरीक्षकभृत्यवर्गोऽप्येको नूतनः समुत्पन्नः।

## ( व्यष्टेः समष्टौ रूपान्तरम् )

भृत्यानां सहकारेण पुराणहस्तव्यवसायेनैव धनोत्पादनं हि मूलधनेन वस्तूत्पादनस्य प्राथमिकं स्वरूपम्। अस्मिन् सहकरणे एव श्रमविभागपध्दतिरपि रूढा। आदौ तस्या द्वैविध्यम्। कश्चन शकटो निष्पादयितव्यश्चेदादौ तक्ष–लोहकार–चर्मकाररञ्जकादीनां श्रमा उपयुज्यन्ते स्म। तत्रायं विशेषो यदेते सर्वेऽपि व्यवसायिनः स्वगृहस्था एव तत्तत्सामग्रीमधिगम्य कार्यमकुर्वन्। मूलधनस्वामिना त्वेतान् सर्वान् स्वीयश्रमगृहमानीय महान् शकटकार्यालय उद्‌घाटितः। ततश्च महानयं व्यवसायः संवृत्तः। एवमेव लेखनपत्र–सीसकाक्षरसूचीप्रभृतीनि वस्तूनि गृह एवोत्पादयतां व्यवसायिनामेकत्रीकरणेन तत्तन्महव्यवसायानामवान्तरव्यवसायशाखा निर्माय तत्तव्यवसायिनो हस्ते समर्प्य श्रमविभागेन व्यवसायः प्रारब्धः। पूर्वोक्तं सूचीव्यवसायोदाहरण तु एतत्समकक्षमेव। अनया च रीत्या व्यवसायिनामुत्पादनशक्तेर्वृद्धिः संजाता। साधनेष्वप्युपयुक्तः परिवर्तः। एवं च वैयक्तिकोत्पादनपेक्षया सामुदायिकोत्पादनप्रकारोऽयं नूतन एव प्रक्रान्तः।

भोग्यसंपत्तेः सामुदायिकोत्पादनोपक्रमे तदुपयोगिनामुत्कृष्टसाधनानामपेक्षायां च तेषामपि सामुदायिकनिष्पादनार्थं व्यवसायालयाः प्रादुर्भूताः। साधनानामुत्तरोत्तरमुपयुक्तसमुत्कर्षसिद्धौ तत्रैवाऽऽलये यन्त्राण्यपि निष्पन्नानि। यन्त्रनिर्माणानन्तर तु सामुदायिकव्यवसायस्वरूपं तु नितरां परिवर्तितम्। पुराणेषु साधनेषु व्यवसायिनामिच्छा च कौशलं चेत्येवोत्पादनावलम्बनमासीत्। व्यवसायिनस्तु व्यवसायालये भृत्या अपि स्वायत्तसाधनाः। यन्त्रोदये तु साधनस्वायत्ता यन्त्रालयस्वामिवशा अपि संपन्नाः

वस्त्रव्यवसायोऽपि बाहुल्येन समुत्कर्षमभजत् । ततोऽनुपदमेव यदा वस्त्रयन्त्रालयमवृद्धिः, तदा त्वष्टलक्षपरिमितास्तन्तुवाया युगपदेव निर्वृत्तिका अभवन् । एवं च पश्चादनुधावता महाप्रवाहप्रपातेनेव महता वन्यहस्तियूथेनेव वा यन्त्रसाधनेन कुत्राप्याश्रयमलभमानानां मानवानां क्षणमपि विस्रम्भावस्थानमशक्यमेवेदानीं संपन्नम् । इदं त्ववितथमेव यन्मूलधनवादपद्धत्या कुल्या–सेतु–नौकोष्ठ (गोदी) गिरिबिल (बोगदे) महाप्रासादनिर्माणेन मानवजातेः सौकर्यं संजातम् । तथापि नायमुद्देशस्तस्याः पद्धतेः कदाप्यासीदस्ति वा । यन्त्रादिधनोत्पादनसाधनानां वस्त्रादिभोग्यवस्तूनां चोत्पादनक्षेत्रे यन्त्रप्रवेशाद्बहवः किल कारवो निरुद्योगिनः संपन्नाः । ते च कुल्याकरणादिषु स्वल्पवेतनेनालभन्त । यन्त्राणां भोग्यधनस्य चाऽऽवश्यकता यन्त्रवेगवत्त संवृद्धा । तत्र चाधिकमूलधननिक्षेपो न लाभकरः । इत्येवमालोच्यैव दीर्घकालं स्वल्पलाभकारिषु कुल्याकरणादिकार्येषु मूलधननिक्षेपः प्रवृत्तः । किंच यन्त्रद्वारैकत्र निर्वृत्तिकत्वप्रसक्तावन्यत्र धानिकबाहुल्यमपि भवति । तस्य च निर्वृत्तिकाना गृहकार्येषु योजने पर्यवसानम् । तत्र च श्रमरीतिमर्यादाया अभावात् व्यवसायालये तु शासनानुशासनद्वारा मर्यादास्थापनेन संरक्षणलाभाच्च गृहकार्येषु तस्यासंभवाच्च दासभावस्यायं नूतन एव प्रकारः समुदेति यद्गृहकार्ययोजनं नाभेति चित्रमेतद्यन्त्रयुगे ।

(लाभाकारस्य न्यूनता)

यथा यथा यन्त्रवृद्धिर्लाभाकारस्तथा तथा ।
क्षीयत इति मार्क्सेन महासिद्धान्त उच्यते ॥

तस्येयमुपपत्तिः—

आपणस्य वशीकारे स्पर्धा संजायते यतः ।
स्वल्पार्घत्वं च वस्तूनां तदर्थं साध्यमेव हि ॥
एतदर्थं तावदत्र भृतकैर्वेतनेन च ।
वस्त्वाधिक्यं च संपाद्यमिति दीर्घं प्रयत्यते ॥
भृत्योत्पादनशक्तिस्तु वर्धनीया प्रयत्नतः ।
यन्त्राणि तदपेक्षाणि पूर्वोत्कृष्टतराणि च ॥
संपाद्यानि ततो वस्त्वाधिक्यं भवति नान्यथा ।
पूर्वयन्त्रापेक्षयाऽत्र नूतयन्त्रे व्ययो महान् ।
तथापि वृद्धी स्थिरस्य (स्थिरं मूलधनं) हीनता हि चरस्य च ॥
तेन यन्त्रसमुत्कर्षो नान्यथा क्वापि संभवेत् ।
चरांशश्च भृत्यानां भृतिरेव निगद्यते ।

यन्त्रेणोत्पादनोत्कर्षः साध्यते नात्र संशयः ॥
उपादानपदार्थानां समृद्धिश्चात एव हि ।
वृद्धिः स्थिरस्य रिक्थस्य यथा संजायते तथा ॥
न चरस्य च रिक्थस्य लाभस्तु चररिक्थतः ।
दृष्टपूर्वस्ततो यन्त्रवृध्या रिक्थस्य हीनता ॥
चरस्य तेन लाभस्याप्याकारः परिहीयते ।
सोदाहरणमेवेदं मार्क्सेन विनिवेद्यते ॥

लाभाकारः १०० ÷ चरं मूलधनं १००, स्थिरं मूलधन ५०, सर्वमेकीकृत्य मूलधनं (स्थिरं ५० + चरं १००) १५०, लाभश्च १०० स्यात्। एवं च लाभाकारः ६६⅔ इति स्यात्। परं तु चरधनं १००, लाभाकारः १००, स्थिरधनं च यदि ४००, सर्वमेकीकृत्य (स्थि. ४०० + च. १००) ५०० संपद्येत। तत्र लाभाकारः १०० परिमितः, अतो वृद्धेराकारः प्रतिशतं विंशतिः २० (टक्के) स्यादिति।

## (लाभवृद्धौ प्रयत्नः)

अत्र च लाभाकारस्य स्थिरत्वमभ्युपेतं मार्क्समहोदयेन उदाहरणार्थम्। साक्षाद्व्यवहारे तु यन्त्रादीनामुपयोगो लाभाकाराभिवृध्यर्थमेव विधीयते व्यवसायालयस्वामिभिः। लाभाकाराभिवृद्धिश्च भृत्यानामुत्पादनशक्त्यभिवृद्धिरेव। तथा चैकतो भृत्यसंख्याह्रासेन लाभाकारन्यूनीकरणप्रवृत्तावन्यतो भृत्यानामुत्पादनशक्तेरभिवृध्या प्रतिमनुष्यं लाभाकाराभिवृद्धये प्रयत्यते। रीत्यन्तरेणेदमेवोच्यते चेत्स्वामिनां लाभाभिवृध्यर्थं भृत्यानां कार्यघटिका भृत्यसंख्याह्रासेन न्यूना भवन्ति। तद्वैपरीत्येन पुनः तत्रैव घटिकासु भृत्यानामुत्पादनसामर्थ्यमभिवर्ध्यमानं दृश्यते। इत्येवं स्पर्धायामन्ततो लाभाकारोऽवतरन्न्यूनतम एव स्यादिति मार्क्समतं प्रतिभाति। परं त्वन्ततोऽयं लाभः शून्याकारमापद्यमानः समूलमुन्मूलयिष्यति न वा मूलधनवादमित्यत्र मार्क्समतं निःसंदेहं नोपलभ्यते इति मॉरिस्डॉब्महोदयो निवेदयते। डॉब्महोदयमते मार्क्समहोदयो न मूलधनवादस्य ज्योतिर्विद् किं तु गतिसिद्धान्तविदेव। इत्येवमालोचने तु यन्त्रवृध्या लाभाकारं ह्रासितुमेव मूलधनवादिनां प्रवृत्तिर्भवतीति निवेदनमात्रेणालम्। मूलधनस्वामिनां वर्गो हि भूयोऽपि लाभाकारमभिवर्धयितुं यानेवोपायानुपयुञ्जन्ति, तत्रत्य एकोऽयमुपायो यल्लाभाकाराभिवर्धनं नाम। किं च मूलधनस्वामिनो हि लाभाकाराभिवर्धनापेक्षयाऽपि व्ययावशिष्टं केवललाभं (वट्ट नफा) वर्धयितुमेव प्रयतन्ते। शतं १०० प्रति पञ्चेति ५ लाभापेक्षया शतद्वयं प्रति २००; नव ९ त्रिशतीं ३०० प्रति त्रयोदश १३; पञ्चशतीं ५०० प्रति विंशतिः, इत्येवमन्ते लाभप्राप्तिस्तु तेषामभिमतैव। यतो जायमानो हि मूलधनसंचयो न मूलध-

नन्यूनतामापादयति । लाभस्यैव मूलधनत्वप्राप्तेः । एवं च तदाकारचिन्तनापेक्षया तत्स्वरूपदर्शनतत्त्वमेव तेभ्योऽप्यधिकमाकर्षकं भवति । वृध्याकारसंवर्धनं हि यथा लाभाकारसंवर्धनस्योपायस्तथा स्थिरं मूलधनमप्यधिकाधिकस्वल्पार्थं जायमानं लाभाकारस्याभिवर्धने साहाय्यकमाचरति । परं स्वेतरत्वापेक्षया केवलमूलधनसंवर्धनं लाभाकारह्रासेऽपि लाभसंवर्धनं च प्राधान्येन कर्तव्यपथमारोहति मूलधनस्वामिनाम् ।

## ( भृत्या एव भृत्युपार्जकाः )

केवलमूलधनसंवर्धनस्य योऽयं प्रकारो मूलधनवादे, स एव धनसंचयः ( अक्युम्युलेशन् ) इति मार्क्ससंमतम् । सोऽयं संचयो न पर्जन्यवदाकाशादागच्छति । स्वामिनां कृते भृत्यैर्विना मूल्यं व्ययितासु कासुचिद्घटिकासु संपद्यमाना वृद्धिरेव पौनःपुन्येन मूलधने संमीलिता धनसंचयं संपादयति । न केवलं वृद्धिरेव स्वामिभ्यः समर्प्यते भृत्यैः । स्वीया भृतिरपि संपाद्य समर्प्यते । या किल स्वीयश्रममूल्यमिति स्वामिसकाशाद्गृह्यते तत्पूर्वं सा प्रतिसप्ताहं वा प्रतिमासं क्रियमाणं कार्यभावी स्वामिने समर्प्यैव गृह्यमाणत्वात् न व्यक्तिशः स्वसंपादितस्वामिधनरूपा । यद्यपि व्यवहारस्तथा दृश्यते यत्स्वामिधनं भृत्या भृतिरूपेण लभन्त इति । तथापि तस्यार्थ इयानेव यत् प्रथमतो भृत्याः श्रमेण स्वीयश्रममूल्यं सलाभं स्वामिनेऽर्पयन्ति पश्चात्तत एव गृह्णन्तीति । तत्र च लाभं स्वामिनो विनाऽऽयासं लुण्ठन्तीति । एवं च यत्स्वीयं धनमिति दीयते तदपि भृत्यसंपादितलाभादेव ।

अत्रायं प्रश्नो विचारणीयो यन्मूलधनवादप्रवृत्तेः प्राक्मूलधनस्वामिनां हस्ते किमपि धनमासीन्न वा । नो चेदुद्योगादानप्रारम्भयन्त्रादिसामग्रीसंपादनं न वा प्राथमिकवेतनदानमपि स्यात् । तदन्तरा मूलधनमूलकसंभूयसमुत्थानासंभवात् । आसीच्चेत्कुतः ? किं स्वनिर्वाहशेषात्, आहोस्विच्चौर्यलुण्ठनात् । अत्रार्थशास्त्रज्ञास्तावदित्थमेव प्रतिपादयन्ते यत्किंचिदर्थकार्यं [illegible] यैः स्वार्जितं किंचित्संरक्षितं त एव मूलधनस्वामिनः संवृत्ताः । यैस्त्वविचारेण यथेच्छं जीवनं निर्वाह्य किमपि नावशेषितं ते भृत्याः संजाता इति । नैषा समुपपत्तिरित्याह मार्क्समहोदयः । न विना [illegible] । इंग्लंडदेशे यत्र प्रथमत इयं मूलधनपद्धतिः प्रवृत्ता, तत्राऽऽदौ मूलधनाधिपत्याय कृषकाणां क्षेत्राण्येव बलाद्गृहीतानि आसन् । तत्प्रभावशासनद्वारा मूलधनमपि बलात्कारे[illegible] मार्क्समहोदयेन [illegible] दर्शितम् ।

## ( [illegible] )

[illegible] मूलधनवर्धने [illegible] मूलधनवादपद्धतौ [illegible] त्रिविधः [illegible] । मूलधनस्वामिनां च [illegible]

भृत्यानां भृतेश्च प्रत्यहमुपभोगेन अवसादादितरोदरनिर्वाहसाधनस्य चाभावात्, न्यूनादपि न्यूनेन वेतनेन श्रमकरणप्रसङ्गाच्च प्रत्यहं मूलधनस्वामिनां द्वारेऽवस्थानं स्वीयश्रमशक्तिविक्रयायापरिहार्यमेव भवति। एतद्वैपरीत्येन स्वामिनः प्रत्यहं स्वामित्वादेव सलाभं धनमर्जयन्ति। ततश्चोपभोगार्थं कंचिद् भागमवशेष्य अवशिष्टं निखिलमपि पुनर्मूलधनत्वेन परिणामयन्ति स्वामिनः। एवं धनित्वमकिंचनत्वं चेत्येवं प्रतिनियतोत्पादनसंबन्धः समाजे निरन्तर एव। अकिंचनस्य धनित्वप्राप्त्यवसरस्तु प्रायः कदापि नावतरति।

## ( ऐतिहासिकत्वं नैतिकत्वं च )

श्रमजीविनां धनोपभोगेन कदाचित्सुखास्वादादिकं स्यात्। एवमपि व्यवसायस्वामिनां दृष्ट्या तु तैलाङ्गारपाषाणादिना यन्त्रस्य कार्यक्षमतावत् भृत्यानामपि अन्नाच्छादनादिना सा निरन्तरं भवेदित्येव तेषां तद्दानम्। एवं च कार्यसमये भृत्याः स्वामिनां कृते आयस्यन्त्येव। परंतूपभोगकालेऽपि स उपभोगो न स्वात्मार्थमपि तु स्वाम्यर्थ एव। उपभोगेन स्वाम्यर्थं नूतन श्रम शक्तिसंपादनात्। नैतावदेव किं तु स्वाम्यर्थं भृत्यसंतानपरम्पराया अपि निर्माणात्। तथा च केषांचिदल्पसंख्यानां धनिकानां धनिकत्वपरिपालनायैव सातत्येन बहुसंख्यानां संपूर्णा जीवनयात्रेत्येव मूलधनसमाजरचनायाः प्रवृत्तिः। वृद्धिलाभादिना धनसंचयोपक्रमे चाधिगतवृद्धिलाभादीनां पुनः पुनर्मूलधनेन संयोगो भवति। ततश्च मूलधनस्योत्तरोत्तरं वृद्धिरेव। आदौ तावद्व्यवसाये मूलधनं धनिकेन स्वकष्टार्जितमित्यभ्युपेत्यापि प्रतिदिनं धनिकोपभोगमूल्येन कैश्चिद्दिनैस्तद्विनष्टमेव स्यात्। तदनन्तरं तु धनिकोपभोगोऽपि लाभादिभ्य एव। मूलधनमपि लाभादिनैवेति श्रमजीविनां श्रमबलादेव धनिकस्य मूलधनवादमूलकसमाजस्य च पुष्टिर्भवति। इत्थं स्वात्मपोषणाय विनाऽऽयासमन्येषामायासो न नीतिमूलको वा नीत्यात्मको वा नीतिपरिपोषको वेति मार्क्समहोदयेन स्पष्टीकृतम्। परं तु मूलधनवादस्य नीत्यवलम्बाभावेऽपि ऐतिहासिकदृष्टेरवलम्बः संभवतीति द्वादशप्रकरणस्यान्ते तेन स्वयमेव समर्थितम्। स्वार्थाय प्रयतमानैरपि मूलधनवादिभिः समाजस्य धनोत्पादनसामर्थ्यं तु परिवर्धितमेव येन समाजरचनाया अत्युत्कृष्टा समुन्नतिः सुशका संपन्ना। इदमेव मूलधनवादस्य कार्यं यन्मानवानामुत्पादनसामर्थ्यस्य संवर्धनं नाम। एवं चैतस्य कार्यस्य परिसमाप्त्यवन्ते सर्वाण्यपि धनोत्पादनसाधनानि समाजस्वायत्तानि विधेयानि। एवमेव समाजस्वत्वस्थापनं सांप्रतमिति सूचयति मार्क्समहोदयः। मूलधनवादेन हि मानवानां सुखाभिवृद्धिर्वा समाजस्य नैतिकावलम्बो वेत्यादिकं किमपि न विहितम्। परंतु केवलं समाजस्य धनोत्पादनशक्तेः संवर्धनमात्रं कृतम्। एतच्च यैरैतिहासिककारणैः सुविधमभूत् तैरेव कारणैस्तस्य ह्रासोऽपि सुविधो भवतीति। तद्यदि मानवसमाजो न विनाशनीयस्तर्हि तु धनोत्पादनसामर्थ्यरूपकार्यपरिसमाप्तौ मूलधनवादस्य विनाशोऽप्यवसर एव विधेय इत्याह मार्क्समहाभागः।

## ( मूलधनवादस्य जन्मकालिकं मानवदुःखम् )

"प्राथमिकं धनसंचयस्य रहस्यम्" इत्यस्मात्प्रकरणादारभ्य सप्तमप्रकरणपर्यन्तं मूलधनवादस्य प्रारम्भे जायमानो धनसंचयो मूलधनस्वामिनां न स्वकष्टार्जितो धनभागः कार्पण्यमूलकव्ययादवशिष्टः। किं तु वराकाणां स्वीयक्षेत्रेभ्यो बलादुद्धूय यल्लुण्ठनं तदेव प्राथमिकं मूलधनम्। एतच्चांग्लेतिहासेन प्राथमिकेन हृदयद्रावकेन मार्क्समहोदयः प्रतिष्ठापयति। तात्कालिकानां दरिद्राणां वराकाणामुपद्रवक्लेशादीनां यदुपवर्णनं हृदयद्रावं विद्राव्य निवेदितं मार्क्सेन, तत इदमवगम्यते यदियं प्रेरणा मार्क्सजीवनकार्यस्य न शास्त्रीयविचारमात्रेण पाण्डित्यौत्सुक्येन वा। किंतु मानवजातिविषयिका या किल नैतिकी करुणा मार्क्समहोदयस्यान्तःकरणे, तत एवैतत्कार्यप्रेरणेति दरीदृश्यते। तत एव च जगद्व्यवहारस्य न केवला व्याकरणापेक्षा। किं तु तस्य परिवर्तनमपि मार्क्सस्यापेक्षितम्। तच्च न केवलया करुणया वा हृदयद्रावकैर्विलापैर्वा मानसिक्या दुःखचिन्तया भवितुमर्हति किं तु तदर्थमितिहासक्रमागतानां भौतिकसिद्धान्तानामाकलनमादौ विधेयम्। ततश्चानुकूलस्थानपर्यालोचनं यथेष्टम्। अनन्तरं परिवर्तनविधानसमर्थो जगति कीदृशः सामाजिको वर्ग इत्यादिकमालोच्य स वर्गस्तत्र कार्ये प्रवर्तनीय इत्याह मार्क्सः।

संवृद्धा । एवं चोत्पादनं सामुदायिकं स्वत्वं तु वैयक्तिकं मुष्टिमितानामेवेत्येवं परिस्थितिराविर्भूता । एवं क्रमेण प्रवृत्तावन्ते तत्रापि धनोत्पादनशक्तिवृद्धेरतः परमसंभव एव । एवं च स्वीयमरणसाधनं तथैव मूलधनवादपद्धत्या स्वोदरे संप्रसुतम् । श्रमजीविनां निष्पीडनेन अभियानप्रवृत्तिरपरिहार्यैव । तथा यया सार्धं संघटना श्रमजीविनां, तस्याः संहाराय त एव समर्थास्तां संहरिष्यन्तीति मार्क्स-सिद्धान्तः । समाजव्यवस्थायाः संरक्षकं कवचं धनोत्पादनवृध्द्युपयोग्यपि यदा तदवरोधं कुरुते तदा तस्य शकलीकरणमेव साधीय इति विरोधविकाससिद्धान्तो मार्क्सेन विंशतितमप्रकरणे स्पष्टीकृतः ।

## ( नाणकैः सामुदायिकत्वमपिधीयते )

नाणकरूपार्थिकप्रकारस्य मार्क्सोक्ता शास्त्रीया चैतिहासिकी चोपपत्तिः क्लिष्टाऽपि सर्वत्रार्थशास्त्रेषु तथैव प्रतिपादनादत्रापि तथैवाऽऽदर्तव्या । नाणकपरिकल्पनेन लोकानां बुद्धिपरिवर्तनं व्यवहारे कथंकारं भवतीति प्रतिपादनमेव मार्क्सोक्तो विशेषः । मानवेतरसृष्टौ हि मधुमक्षिकादीन् विहाय सर्वत्र जीवननिर्वाहो न सामुदायिकसहकार्येण परस्परावलम्बनः । न हि शाद्वलेषु चरतां हरिणानां यूथमेकत्र संचरदपि परस्परावलम्बि । मानवसमाजस्य तु धनोत्पादनकार्यमन्योन्यसापेक्षमेव । यथा हि शरीरावयवाः परस्परसहकार्येण परस्परावलम्बनेन च स्वीयधारणपोषणद्वारा शरीरस्यापि धारणपोषणे विदधते, तथैव मानवव्यक्तिरपि परस्परसहकार्येण परस्परावलम्बनेन च स्वीयधारणपोषणद्वारा समाजस्यापि धारणपोषणे विधत्ते । इदं चान्योन्यसहकार्यमन्योन्यावलम्बनं च पितृप्रधानकुटुम्बसंस्थायां स्पष्टतयैव दरीदृश्यते सर्वेषां हिताय सर्वैः प्रयतनीयमित्येव तत्र परिपाठः । न तु प्रतिव्यक्ति पृथक्तया । एवं च प्रतिव्यक्ति फलदायिनोऽपि तेषामायासा न विनिमयस्वरूपतां ददामि प्रतिगृह्णामीत्येवं प्रकारेण व्यवहारविषयतामावहन्ति । तथा च धनोत्पादनकार्येण मानवसमाजे यदैक्यं प्रस्थापितं, तत्र तस्य सुविशदतयैव प्रत्ययः । व्यावहारिकद्रव्यद्वारा विनिमयपद्धतौ च तदैक्यं वा सहकार्यं वा परस्परावलम्बनं वाऽदृश्यप्रायं सदन्ते नाणकव्यवहारेण निःशेषतया विलुप्तं भवति । अन्ततस्तु प्रातिव्यक्ति स्वावलम्बित्वं स्वयंपूर्णत्वं चाऽऽभासते । मूलधनवादपद्धतौ च नाणकान्येव महानवलम्बः । अत एव च व्यक्तिस्वातन्त्र्यं मूलधनवादे सर्वत्र प्रसरतीत्यत्र प्रमुखं निदानं तु नाणकद्वारा संप्राप्तं विनिमयसौकर्यं विनिमयपध्दतिश्चेति निश्चीयते मार्क्समहोदयेन ।

## ( नाणकानां सांकेतिकं धनत्वम् )

नाणकवन्तो ह्यात्मानं धनिनो मन्यन्ते । वस्तुगत्या सामाजिकदर्शनेनाऽऽलोचिते तु नाणकानां न स्वयंसिद्धं धनत्वम् । किं तु सांकेतिकं धनचिह्नत्वमेव प्रतीकरूपत्वं वा । यदा तु नाणकसंख्या परिमिता चलनव्यवहारोऽपि न्यूनस्तदा क्रयविक्रयव्यवहारे तेषामपर्याप्तत्वात्तादृशव्यवहारस्यन्यनत्वं

पदार्थाः स्वल्पार्घा भासन्ते । तद्विपरीत्ये तु पदार्थानां महर्घता प्रतीयते । एवमपि पदार्थमूल्यं नाणकपरिमाणादेव निश्चीयत इत्युक्तिस्तु भ्रान्तैव । नाणकानां स्वरूपत एव कृत्रिमत्वेन पत्ररूपेणापि परिमाणवृद्धेः संभवात् । इदानींतनवचनपत्रवत् ( नोट ) । एवं च नाणकं हि विनिमयव्यवहारे माध्यस्थमेव भजते । वस्तुगत्या पर्यायेणापि विनिमयव्यवहारस्तु वस्तूनामेवान्योन्यं भवति । तथा च क्रेयवस्तूत्पादनार्थं क्रियमाणाः श्रमा एव क्रेयवस्तूनां मूल्यस्य नियामका इत्येव सिद्धान्तः । तदनुसारेणापेक्षापरिपूर्तितत्त्वानुसारेणेदं मूल्यं कदाचिन्न्यूनतामधिकतां च भजते । विनिमयव्यवहारस्तु साक्षात्पदार्थरूपेण क्रियमाण एतं सिद्धान्तं सुविशदमेव व्यञ्जयति । नाणकपरिमाणस्य वृध्दौ वा न्यूनतायां वा सर्वेषां पदार्थाना श्रमशक्तेश्च मूल्यमपि युगपन्न्यूनाधिकभाव भजते । पदार्थानां मूल्याकारे नाणकस्वरूपे क्षीयमाणे वा वर्धमाने श्रमशक्तिमूल्याकारोऽपि तथैव क्षीयते वर्धते च । नैतावता महर्घता वा स्वल्पार्घता । यदा तु पदार्थानां वा पदार्थश्रमशक्त्योर्वाऽन्योन्यसापेक्षत्वेन मूल्याकारो ह्रसते वर्धते वा, तदैव खलु स्वल्पार्घत्वं महर्घत्वं चेति मनसि करणीयम् । क्रयविक्रयव्यवहारे वा विनिमयव्यवहारे वा ऋणरूपः कश्चन प्रकारः प्रादुर्भवति । सोऽपि पदार्थोत्पत्तौ वा तदुपभोगे वाऽपेक्ष्यमाणकालकारणक इत्यप्यत्र मार्क्सेन प्रदर्शितम् ।

## ( वाणिज्यस्य मूल्यानुत्पादकत्वम् )

अतिविचित्रमिदमापातत आलोचिते प्रतिभाति यन्मार्क्समहोदयो वाणिज्येन वस्तूनां किमपि नूतन मूल्यं न निर्मीयत इति । यथा हि व्यवसायालये श्रमजीविनां वस्त्रनिर्माणमावश्यकं, तथैव तस्याऽऽपणे विक्रयोऽप्यावश्यक एवाऽऽपणिकानाम् । उभयोरपि श्रमाणां सामाजिकपरिस्थित्यनुसारेणाऽऽवश्यकतया श्रमजीविना श्रमा एव मूल्यनिष्पादका नाऽऽपणिकानामित्यत्रोक्तौ को वाऽभिप्रायो मार्क्समहोदयस्येत्यालोचनीयम् ।

## ( आवापोद्वापौ गणितं च )

वस्तूनामितस्तत आवापोद्वापविषये आयव्ययगणितविषये च यन्मतं मार्क्समहोदयस्य, ततोऽपि तद्विचारसरणिः स्पष्टतरा भवति । यथा ह्युत्पादकश्रमाणां यस्यां कस्यामपि समाजव्यवस्थायामावश्यकता, तथैवोत्पादितवस्तूनां भोगस्थानपर्यन्तमानयनकार्यमप्यावश्यकमेव । अतश्चाऽऽपोद्वापाभ्यां वस्तूनां मूल्यवृद्धौ न मार्क्सस्य विप्रतिपत्तिः । आयव्ययगणनार्थं क्रियमाणो व्ययोऽप्यस्यां मूलधनवादपद्धतौ न मूल्यवर्धकः । परंतु समाजस्वत्ववादानुसारेण जायमानायां समाजसंघनायां तु सामुदायिकोत्पादनस्य सामान्यात्तदायव्ययलेखनेनाऽऽर्थिकोत्पादनस्य नियोजनं नियन्त्रणं सुसंपादमवश्यमेव स्यादित्येव मार्क्सस्याऽऽशयः ।

## ( वाणिज्यमूलधन न क्रान्तिकारकम् )

वाणिज्यप्रयोजकं मूलधनमौद्योगिकं च मूलधनमित्यनयोः मूलधनयोर्मूलधनत्वेन साधर्म्येऽपि तत्रास्ति कश्चित्सूक्ष्मो विशेषो मार्क्समतेन । वाणिज्यं हि न मूल्यं वर्धयतीति तेनैवोक्तम् । किंच न वाणिज्यमूलधनं समाजक्रान्तिं संपादयितुं पारयतीत्यपि तेनोक्तम् । तत्तु पुरातनीं समाजरचनामधः पातयितुं वा भञ्जयितुं वा शक्नुयात् । एवमपि नूतनसमाजव्यवस्थां निर्मातुं न तत्समर्थमित्येव तयोर्वैशिष्ट्यमिति मार्क्साशयः । आपाततस्त्विदमसमीचीनमिति प्रतिभाति । वाणिज्यमूलधनादेव व्यापाराभिवृद्धौ वस्तूनां विक्रयाधिक्ये चोत्पादनशक्तेरप्यभिवृद्धिस्ततश्च समाजव्यवस्थायाः परिवर्तनमित्येवं परम्परया व्यापारमूलधनस्यापि क्रान्तिकारकत्वे कथं तदभावोक्तिः मार्क्सस्योपपद्यत इति चेत्तत्रायमभिसंधिर्यत् मूलधनवादपद्धतौ यद्यपि वाणिज्यमूलधनस्य उत्पादनशक्तिवृद्धौ प्रेरकत्वं, तथापि दासभावपद्धतेः प्राग्विद्यमानस्य समाजस्योत्पादनशक्तेरभिवृद्धौ वाणिज्यमूलधनस्य नातीवोपयुक्तता । किं बहुना मूलधनवादपद्धतेः समुत्कर्षस्य समाप्त्यनन्तरं तु तस्यैव वाणिज्यमूलधनस्योत्पादनसामर्थ्याभिवृद्धौ प्रतिबन्धकत्वमेव भवति । परंतु समृध्यमानमुत्पादनसामर्थ्यं तं प्रतिबन्धमपसार्य क्रान्तिं संपादयत्येव । इदमेवात्र प्राधान्येन वक्तव्यमस्ति यदुत्पादनसामर्थ्याभिवृद्धिरेव मुख्यतः समाजक्रान्तिमापादयतीति सिद्धान्तोऽयं सार्वकालिक इतिहासे । न तथा वाणिज्यमूलधनम् । न हीतिहासप्रमाणेन तस्य क्रान्तिकारकत्वं कुत्रापि काले समुपलभ्यते ।

## ( वृद्धिर्लाभश्च )

आपातत एवैतौ शब्दौ भिन्नार्थकौ । उभयमपि श्रमजीविनां श्रमेभ्योऽनायासमेव निष्पद्यते इति मार्क्सेन प्रदर्शितम् । अत्राप्यैतिहासिकत्वेन सामाजिकत्वेन न जायमानं वैशिष्ट्यमेव मार्क्साभिप्रेतम् । नाणकरूपमूलधनस्य स्वत्वं वा यन्त्राद्युत्पादनसाधनानां स्वामित्वं वा न मन्या-

भिवृद्धौ साहायकमाचरतः। किंतु धनोत्पादकाः श्रमा एव तत्र साहाय्यमाचरन्तीत्येव तस्य वक्तव्यमस्ति। इति।

इति कॅपिटलग्रन्थसारस्य संक्षिप्तं विवरणम्।

( अत्र विचारणीया विषयाः )

उपर्युक्तानुवादे हि मार्क्समहोदयेनार्थं पुरस्कृत्य ये किल विचाराः प्रदर्शितास्तेषामयमेव सारांशो यज्जगति किलैतस्मिन् सर्वेषामुपभोगार्थमेव प्रवृत्तत्वात्तस्य च भोग्यसंपत्तिमन्तराऽसंभवात्, तस्याश्च श्रममन्तराऽधिगन्तुमशक्यत्वात्, तदुत्पादकश्रमाणां च सर्वथा भृत्यायत्तत्वात्, तेषां भृत्यानां च स्वाम्यायत्तत्वे यन्त्रायत्तत्वे च स्वामिवर्गस्य विनाऽऽयासमुपभोगप्राप्तिः। ततश्च समाजे भोग्यसंपत्तेर्विभागविषमतायां वस्तुगत्या भोग्यसंपत्त्युत्पादकानां भृत्यानां केवलायासमात्रलाभः, स्वामिनां च भोग्यसंपत्त्युपभोगः। एवं चैकस्य वर्गस्य परम्परया दारिद्र्यं दासभावश्चेतरस्य स्वामित्वं धनित्वं चेति मानवनिर्मितमिदं वैषम्यमेव सर्वदुःखनिदानम्। तदपेक्षया वरं सर्वेषां सामाजिकत्वेन निखिलभोग्यसंपत्तेः सामाजिकस्वत्वापादनेन सर्वेषां श्रमजीवित्वसंपादनेन साम्यावस्थापनम्। एवं चार्थमूलकसाम्यावस्थायां सर्वेषामुपभोगार्थं समाजोपयुक्तश्रमैर्भोग्यसंपत्तेरुपार्जकत्वेनोपभोगाधिकारः स्यात्। अत्र विषमतायां मूलं तु मूलधनं यन्त्रप्रवृत्तिश्चेत्येतद्द्वयमेव। तत्र यन्त्राणां विरोधविकासपद्धत्या भोग्यसंपत्तिसमुत्कर्षस्यालंभावे नाशः स्यात्कदाचित्। परं त्वादौ मूलधनस्वामित्वापहारेण स्वामिनां समाजोपयुक्तश्रमकार्ये विनियोगस्त्वत्यावश्यक इति तदर्थं भृतैः क्रान्तिं संपाद्य तद्द्वारा दण्डसंस्थाऽऽत्मसात्करणीया। ततश्च मूलधनस्वत्वविनाशेन साम्यावस्थासंपादने न सर्वत्र विनिमयादिव्यवहारोऽपि श्रमद्वारैव सिध्येत्। एवं चान्ते समाज एव समाजसुखदुःखोपार्जक इति तन्निवारणसंपादनेऽपि स एव प्रभुरिति कः कस्यापराध्येत्। एवं च न धर्मस्य वा देवस्य वाऽन्यस्य कस्यचिच्छ्रद्धेयतत्त्वस्याऽऽवश्यकता सुखोपादाने दुःखहाने वेति सर्वं सुखमयमेव सिध्येत्। अन्ते च कदाचिदेवंरीत्या विश्वकुटुम्बसंस्थासंपत्तौ तु " नैव राज्यं न राजाऽऽसीन्न दण्डो न च दाण्डिकः " इत्यपि भारतोक्ता कार्तयुगीना व्यवस्था संभवेत्। एवं चोपभोगार्थं सर्वैः संमील्य श्रमाः कर्तव्याः समाजोपयुक्ताः। धनसंचयस्तु केषामपि न भवेत्। उपभोगोऽपि संमील्यैकत्र समान एव। यन्त्रप्रवृत्तिस्तु समाजसापेक्षतायां समाजस्वायत्तैव। मानवकृतमर्थवैषम्यमिवेतरदपि जातिवंशदेशसंस्कारादिजन्यं वैषम्यं दुःखावहमिति त्याज्यमेवेति फलति।

अत्र चोपभोगार्थिभिः समाजोपयुक्तश्रमैरेव भोग्यसंपत्तिमुत्पाद्योपभोक्तव्यमिति यन्मूलभूतं तत्त्वमुररीकृतम्। तत्र को वा समाजः कश्च तदुपभोगः किंच तदुपयुक्तत्वमित्येव प्रथमतो विचारविषयतामापद्यते।

## ( समाजलक्षणविचारः )

तत्र परस्परावलम्बनमूलकसहकार्यजन्यभोग्यसंपत्त्युत्पादकसंघत्वं समाजत्वमिति मार्क्समहोदयः। सहकार्यजन्यभोग्यसंपत्त्युत्पादकत्वं तु वनपर्वतयन्त्रखन्यादिषु अचेतनानां पदार्थानां संभवतीत्यतः परस्परावलम्बनेति। अवलम्बनं चात्र भोगापेक्षा। तेन न तत्रातिव्याप्तिः। नो चेदङ्गारपाषाणरत्नमणिमुक्ताप्रवालादीनामुत्पादकत्वेनापेक्षितस्य तत्कारणीभूतपञ्चमहाभूतात्मकतत्तत्पदार्थसंघस्यापि समाजत्वापत्तिः। केवलतत्त्वे तु हरिणादियूथस्यापि परस्परभोगसापेक्षत्वात् समाजत्वापत्तिस्तद्वारणाय भोग्यसंपत्त्युत्पादकत्वमिति। एकस्य द्वयोर्वा तत्त्वे न समाजत्वमिति संघेति। पक्षिणामपि परस्परभोगापेक्षामूलकनीडादियत्किंचिद्भोग्यसंपत्त्युत्पादकत्वात्तत्रातिव्याप्तिवारणाय सहकार्येति। न च तत्राप्यस्ति स्त्रीपुंव्यक्त्योर्नीडाद्युपयोगिघासादिसमूहरूपं सहकार्यमिति वाच्यम्। सहकार्यशब्देन संकेतपूर्वकसहानुष्ठानस्य विवक्षितत्वात्। तथा च तादृशसंघत्वं मनुष्यसंघस्यैवेति तदुपयुक्तश्रमकरणं परमं कर्तव्यमिति। एतच्च लक्षणं प्रायः सर्वजीवसृष्टावतिव्याप्तम्। तथा हि मानवसृष्टौ यथोपभोगार्थं भोग्यसंपत्त्युपार्जनशक्तिस्तथैव जीवसृष्टावपीति जन्तुशास्त्रज्ञानामुद्घोषः। यथा हि मानवाः कृत्रिमोष्णतामधिगच्छन्ति, आयुधानि च प्रवर्तयन्ति, वस्त्राच्छादनं चोपयुञ्जन्ति, दास्यमपि कारयन्ति, स्वसहवासेन स्वेतरप्राणिनां परिचयमुत्पाद्य तेभ्यः सकाशात् स्वीयभोग्यसंपत्तिं दुग्धादिकामधिगच्छन्ति, स्वबालकानां परिपोषणपालनश्रमानारचयन्ति, वियोगसंयोगे दुःखसुखे संविदन्ति तथैव मानवेतरजीवसृष्टावपि व्यवहारः। केषुचित् कीटकेषु पक्षिषु पिपीलिकादिषु च तथोपलम्भात्। एते हि प्राणिनः संघशक्त्या परिक्लिद्यमानाभ्य ओषधीभ्यः समुपजायमानैः कीटकैः समुपार्जितामुष्णतामनुभवन्ति। मधुमक्षिकास्तु सूक्ष्मैः शर्कराकणैः स्वल्पैश्च काष्ठकैर्मारितान् जन्तूनुत्सारयितुं संमार्जनमिव तेषामुपयोगं विदधते। कृमयस्तु शत्रुभ्यः परिरक्षणं कुर्वन्तीति न विशयविषयः। मूषकपिपीलिकादयो बिलानि रचयन्तो दृष्टचरा एव। नीडादिपूर्णतासंपादनं पक्षिणां सर्वविश्रुतमेव। कश्चन प्राणी स्वसमीपमागतस्य रिपोरुपरि स्वशरीरस्थितान् शङ्कून् तीक्ष्णाग्रान् बाणानिव विक्षिपति ( साळ इत्याख्यः )। प्रायो बहवः कीटका वस्त्रमावरणान्यपि विभिन्नान् पदार्थान् संगृह्य कौशेयेन तन्तुना संग्रथ्य परिदधते। कश्चन कृमिः ( Cater piller ) ऊर्णावस्त्राचन्तून् संगृह्य तद्वस्त्रमुपयोजयति। अपरे च खादितानां कृमीणां चर्माणि वेष्टयन्ति। पिपीलिकासु च दासभावोऽपि जागर्ति। केचन कृमयः परिचयमारचय्य केभ्यश्चन कृमिभ्यः समुपलभ्यमानं मध्विव मधुरं चिक्कणं च रसमास्वादयन्ति। किं बहुना तादृशकृमीणां परिपालनाय गोष्ठान्यप्यारचय्य तेषां चिन्तामावहन्ति ते। तात्पर्यमिदमेव यन्मनुष्याणामिवेतरजन्तूनामपि सचेतनत्वाद्बुद्धिपूर्वकस्वस्वभोग्यसंपत्त्युत्पादकत्वमस्त्येव सहकारित्वेनेति न मानवसमाजस्येदं लक्षणं भवितुमर्हति। ननु मानवानामुपयुक्तसर्वकारित्वाज्जन्तूनां च कतिपयविशेषकार्यकारित्वादुभयोर्भेद इति चेन्न। समुत्पद्यमानो जीवः

समग्रोऽपि भोगायैव जातत्वाद्भोगोपार्जनाय प्रयतत इति तु निर्विवादम् । तथा च यस्य शरीरस्य यो यो भोग आवश्यकस्तदुपार्जने तत्तज्जन्तूनां बुद्धिशक्तिः कर्मशक्तिश्च निसर्गदत्तैव वर्तत इति किमेतावता मानवानां वैशिष्टयम् । यो हि मनुष्याणां प्रासादस्तदेव पिपीलिकानां वल्मीकं पक्षिणां च नीडम् । न हि मनुष्या धान्यभक्षका इति व्याघ्रैस्तथा भवितव्यमिति नियमः । अत एव " आहारनिद्राभयमैथुनानि सामान्यमेतत्पशुभिर्नराणाम् " इति जेगीयते । यत्तु संघद्वारा कार्यकारित्वं तदपि पशुपक्ष्यादिजीवसृष्टौ समानमेवोपलभ्यते । विशेषश्चैतावानेव यन्मनुष्याणां संघाः कृत्रिमाः, इतरेषां तु सहजाः । तत्र परस्परसापेक्षभोगमूलकसहकारित्वमपि दृश्यते । उपसंघा अपि तथैव वर्तन्ते । अस्ति चात्र संशोधनसिद्धमेकमुदाहरणम् । अस्ति किल नोव्हास्कोशियाप्रदेशे हॅलिफॅक्सनगरस्य पूर्वस्यां दिशि सार्धशतक्रोशार्धाभ्यन्तरे सेवलद्वीपनामकं निर्जनमेकविंशतिक्रोशार्धपरिमितदैर्घ्यं सार्धशतक्रोशार्धपरिमितहृस्वत्व च किंचन द्वीपम् । तत्र चेशवीये १५२० संवत्सरे काश्चन गाः काश्चन महिषीः कांश्चिदश्वान् कांश्चित्सूकरांश्च परितत्यजुः पोर्तुगीजाः । १६८६ संवत्सरे तु बहूनां गवां प्रत्यानयनम् । १७३८ संवति तत्र गवामभाव एव संपन्नः । १८१४ संवति सूकराः सर्वेऽपि मृताः । अश्वानां तु जीवतामितिहासोऽतीव बोधप्रदः । १७५३ संवत्सरे बोस्टननगरस्थेन थॉमस हॅनकॉक इत्यनेन पुनश्चाश्वा गावोऽजाः सूकराश्च केचन तत्र नीताः । अमेरिकास्थराज्यक्रान्तिसमये त्वश्वान् विहाय सर्वेऽपि प्राणिनो मृताः । ततश्च गिल्बननामकः कश्चन १८६५ संवत्सरे तत्र गतः । तेन च तत्रत्यानामश्वसंतानानामितिहास उपवर्णितः । तत्र चावशिष्टानां चतुःशतसंख्याकानामश्वानां षडुपसंघाः संपन्नाः । तेषां गोचरभूमिरपि विभिन्नैवाऽऽसीत् । यदि कदाचित्केनचित्तेषां चोदनेनैकत्रीकरणं कृतं चेत्पुनरपि प्रत्यावृत्य स्वीयसंघे एवान्ततोऽवस्थानं संपद्यते तं च षडुपसंघाः सहभोजनं सहविवाहं चान्योन्यं विधातुं नोत्सुका आसन्निति । एतेन चेतिहासेनेदमवगम्यते यन्मनुष्याणामिवेतरप्राणिनामपि नैसर्गिकसाजात्यमूलकसंघोपसंघकल्पनादृश्यते इति । अधिकं चात्र गो. म. जोशीमहोदयकृते हिन्दुसमाजरचनाशास्त्रे द्रष्टव्यमपि चातुर्वर्ण्यविवेचने स्फुटीभविष्यति । एवं च स्वोपभोगसंपादनसामर्थ्यमिदं संघद्वारा वा स्पर्धया वा यापः सर्वप्राणिसाधारणमेव । किं बहुना मानवेतरप्राण्यपेक्षया स्वेच्छया यद्विरचितं समयनियमं [illegible] च मानवसंघकार्यं यथा दुःखाय प्रभवति न सुखाय वा जगत्कल्याणाय । न तथा मानवेतराणाम् । नैसर्गिकत्वात्सहजत्वाच्च । तस्मादल्पः कश्चन विशेषो मानवानां येन मानवतायाः प्रारम्भः स्यात् ।

अत एवोक्तं मार्कण्डेय पुराणे—

> ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे ।
> विषयाश्च महाभाग यान्ति चैवं पृथक् पृथक् ॥

दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथा परे ।
केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥
ज्ञानिनो मनुजाः सत्यं किं नु ते नहि केवलम् ।
यतो हि ज्ञानिनः सर्वे पशुपक्षिमृगादयः ॥
ज्ञानं च तन्मनुष्याणां यत्तेषां मृगपक्षिणाम् ।
मनुष्याणां च यत्तेषां तुल्यमन्यत्तथोभयोः ॥
ज्ञानेऽपि सति पश्यैतान् पतङ्गाञ्छावचञ्चुषु ।
कणमोक्षादृतान् मोहात्पीड्यमानानपि क्षुधा ॥
मानुषा मनुजव्याघ्र साभिलाषाः सुतान्प्रति ।
लोभात्प्रत्युपकाराय नन्वेतान् किं न पश्यसि ॥ इति .

तस्मात्कोऽपि विशेषोऽवश्यमेवोरीकरणीयो मनुष्यत्वप्रयोजकः ।

वयं तु ब्रूमो नान्यः कश्चन विशेष ऋते जगत्कारणसंशोधनात् । यदुपलभ्यते ततो जीविकानिर्वाहो हि मानवेतरेषाम् । मानवानां तु तदुपलब्धिकारणसंशोधनद्वारा निखिलजगत्कारणसंशोधनम् । एवं च सर्वकारणसंशोधने कारणं तु मानवानां बुद्धिबलमेव । तेन च संशोधनप्रवृत्तावन्ततो जगति समुपलभ्यमानानां सर्वेषां कार्याणामुत्पादनशक्तिशालिसूक्ष्मद्रव्यकल्पना विधेया भवति । यस्य यावत्संशोधनं तेन तद्द्रव्यस्य किंचिन्नामापि प्रदेयं भवति । एवं च भिन्नभिन्नदृष्ट्या प्रवृत्तानां संशोधकानां प्रक्रियानुसारेण नामभेदेऽपि कारणीभूतकार्यशक्तिशालिद्रव्यविषये तु न मतभेदः । इदानीं तु विद्युत्कणानामुपरि ( इलेक्ट्रॉन् ) बुद्धिस्थैर्यं संशोधकानाम् । ततोऽपि सर्वशक्तिशालिचेतनद्रव्यकल्पना तु नात्यन्तमसंभाव्येति केषांचित्तर्कः । एतादृशसर्वशक्तिमत् सर्वकार्यकारणकारणीभूतं द्रव्यमेव भोक्ता भोग्यं चेति वैदिकानां डिण्डिमः । अत एव "त्रयं वा इदं नाम रूपं कर्म" "तदेतत्त्रयं सदेकमयमात्मा" इत्यात्मत्वेन तस्योपवर्णनं शतपथब्राह्मणे । तस्यैवास्याऽऽत्मन आराधनं सर्वैः क्रियते कर्तव्यं चेति स्वत्वमपि भोग्यवस्तुषु वस्तुगत्या तस्यैव न जीवानाम् । एवं च जीवानामहंकारस्पर्धाद्वेषादीनां ह्रासान्नान्तःकरणचौर्यमूलकस्य सर्वदुःखनिदानस्य वैषम्यस्य प्रसङ्गः । तद्वरं समाजस्वत्ववादापेक्षया ईशस्वत्ववादोऽयं (आत्माइटिझम्) तदिदमेव मानवसमाजलक्षणं समुचितं सिध्यति यत्सर्वेशसमाराधनानुकूलबुद्धिशक्तिमत् सघत्वमिति ।

## ( समाजस्वत्ववादे दोषविचारः । )

नन्वेव नामान्तरेण समाजस्वत्ववाद एवाभ्युपगत इति चेन्न । समाजस्य व्यक्त्यनतिरेकात् । व्यक्तीनां चान्तःकरणचौर्यमूलकस्पर्धासूयारागद्वेषलोभमोहाद्याक्रान्तत्वेन यथावत्सर्वेषां संतोषसंपा-

न सामान्यानतिरिक्तम् । तथा च चित्तचोराणामेतेषां त्याग एव परीक्षाकारणं न भोगः । स च परपरितोषरूपसर्वेशाराधनेनैवेति नान्यथा । ननु विनिमयव्यवहारे नाणकरूपकृत्रिमद्रव्यप्रचारे च तथा संभवेऽपि वस्तुविनिमये न तथा संभव इति चेन्न । वस्तूनामप्युत्तममध्यमकनिष्ठरूपाणां सत्त्वात् । उत्तमोत्तमवस्त्वपहारस्य तत्रापि संभवात् । तथा चोपभोगवैषम्यतादवस्थ्येन "परसंपत्प्रकर्षो हि हीनसंपदं पुरुषं दुःखाकरोति" इति न्यायेन दरिद्राणां श्रमजीविनां दुःखस्य समूलमुन्मूलनासंभवात् । भृतिवैषम्यं च श्रमतारतम्यादङ्गीकृतमेव समाजवादेऽपि । तदपेक्षया धनिनां बुद्धिपूर्वकधनसंग्रहेऽङ्गीकृत्यापि स्वत्वं व्ययपद्धतिनिर्धारणेन यथेच्छविनियोगनियन्त्रणमेव वरम् । नो चेन्नान्यत्किमप्ययं स्वत्वापहारो नाम बलात्पाटच्चरतामतिहाय ।

## ( यावन्निर्वाहवेतनविचारः )

यत्तु यावज्जीवनिर्वाहमपि वेतनं नाधिगम्यते श्रमजीविभिरिति । तत्र निर्वाहो नाम जीवनयापनम् । तच्च न भोगमन्तरेति यावदिष्टभोगमेव वेतनं स्यात् । भोगेच्छा चेन्न नियमिता तर्हि तु कथमपि भोगपर्याप्त्यसंभव एव । सा चेन्नियमिता तदा त्विदानीमपि दीयमानं वेतनं प्राथमिकशिक्षकेभ्योऽप्यधिकं कथं तावन्नालं जीवननिर्वाहाय । इदं तु सत्यं यत्प्राथमिकशिक्षका अपीदानीं यावज्जीवननिर्वाहं वेतनं न लभन्ते । परं तु तथापि तेषां जीवनयात्रा श्रमजीविभ्यः किंचिदपि सभ्यतया भवति । नहि धनिनां प्रासादा इव श्रमजीविनां गृहाणि कदापि भवितुमर्हन्ति । न हि दण्डसंस्थापि तादृशीमवस्थां संपादयितुं शक्नोति । स्पष्टतममेवैतत्संत्रिणां गृहेभ्यो दण्डशासननिर्मितेभ्यः ( पोलिस लाईन ) उटजकल्पान्येव तानि । तथापि स्वच्छतादिना तत्र विश्रामयोग्यता भिल्लादीनामुटजेष्विवेति श्रमजीविनामयं दोषो यत्स्वच्छताद्यभाव इति । किं च श्रमजीविषु स्त्रीपुंसयोर्द्वयोरपि वेतनभाक्त्वेन प्रतिमासमन्यूनमेकत्र कुटुम्बे षष्टिरूप्यकाण्यागच्छन्ति । न तथा शिक्षकस्य वा ग्रामलेखकस्य वाऽन्यस्य स्वल्पाधिकारस्य । एवमपि न पर्याप्तिरिति कथनं तु राजकारणकुशलानां क्रान्तिवादिनां क्रान्तिसंपादनार्थमान्दोलननिदानमेव । नन्वेवं श्रमजीविनां श्रमेणोपार्जितस्य द्रव्यस्य यथेच्छं विनाऽऽयासमुपभोगः कर्तव्यो धनिभिरिति तात्पर्यं स्यात् । तथा चानीतिव्यवहारस्य द्रव्योन्मादेन प्रवृत्तिः केन वार्येतेति चेन्न । सर्वेश्वरस्वत्ववादेऽपि "लाभाच्च सप्तमो भागः" इत्यादिशासनैर्यथेच्छविनियोगाधिकारस्य नियमितत्वात् । महायन्त्रप्रवृत्तेः सर्वपापनिदानस्योभयवादिसंमतस्योपपातकत्वेन निषिद्धत्वात् । प्रवृत्त्यपेक्षायां च तस्या दण्डसंस्थया तत्र तत्र यन्त्रालये तत्तद्व्यवसायिसंघानामेव नियुक्त्यापि भोग्यसंपत्त्युत्पादनसंभवेन पूर्वोक्तदोषपरि-

द्नाशक्तत्वात्। ननु भवन्मतेऽपि तादृशशक्तिशालिपदार्थस्यामूर्तत्वेनाऽऽराधनासंभवादन्ततोगत्वा तव्द्यक्तिरूपसमाजस्यैवाऽऽराधना कर्तव्या भवति ।

अत एव—अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी । (गीता अ. १२)

इत्यादीन्याराधकलक्षणानि । तथा च समाजस्य व्यक्त्यनतिरेकत्वे लोकानां दुराराध्यत्वेन सर्वजीवसंतोषासंभवस्तुल्य एवेति चेन्न । समाजवादमतीयाराधनाया भोक्तृत्वाहंकारमूलकत्वेन भोगफलकत्वेन च वैषम्यावहत्वात् । सर्वेश्वरस्वत्ववादिमतीयाराधनाया भोग्यत्वाहंकारमूलकत्वेन त्यागफलकत्वेन च साम्यावस्थापादकत्वात्। न ह्यहं भोक्तेत्यभिमानेन परेषां सुखाय कोऽपि प्रयतेत । यदि चाहं भोग्य इत्यभिमानेन भोगदानाय प्रवृत्तिः स्यात् तदा तु सर्वेषां भोगप्राप्तौ संतोषोऽपि संभवति । स्पर्धासूयाकामक्रोधादीनामपि ह्रासेन चान्ते सर्वस्वत्यागः पर्यवस्यति । एवं च सर्वथा त्यागार्थप्रवृत्तिरेव जगत्कल्याणकारिणी न भोगप्रवृत्तिरिति सर्वमवदातम् । भोगप्रवृत्तिमूलका दोषास्तु पूर्वोक्ता अत्राप्यनुसंधेयाः । समाजस्वत्ववादे ह्यधिकारनियुक्ताः पुरुषा अपि स्वभोगमूलकप्रवृत्तिमत्त्वादुपभोगस्पर्धायां नान्तःकरणचौर्यभाजो वोत्कोचभाजो वा न भविष्यन्ति । सत्यपि उत्कोचदण्डशासने सर्वत्रेदानीमपि उत्कोचाः प्रवर्तन्त एवेति नाविदितम् । अत एवोक्तमर्थशास्त्रे कौटिलीये—

यथा ह्यनास्वादयितुं न शक्यम् ।
जिह्वातलस्थं मधु वा विषं वा ॥
अर्थस्तथा ह्यर्थचरेण राज्ञः ।
स्वल्पोऽप्यनास्वादयितुं न शक्यः ॥
मत्स्या यथाऽन्तःसलिले चरन्तः ।
ज्ञातुं न शक्याः सलिलं पिबन्तः ॥
युक्तास्तथा कार्यविधौ नियुक्ताः ।
ज्ञातुं न शक्या ध मादादानाः ॥
अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम् ।
न तु प्रच्छन्नभावानां युक्तानां चरतां गतिः ॥

इति । (कौ. अर्थ. ३०)

युक्त धनमित्यानित्यत्वान्मनुष्याणाम् । अश्वसधर्माणो हि मनुष्या नियुक्ताः कर्मसु विकुर्वते । स्यात् कदाचिद्दृष्टान्तेरेकसहस्रो मनुष्य एतद्दानादः । एवमपि मानुषाणां स्वभाववर्णनमिदं

न सामान्यानतिरिक्तम् । तथा च चित्तचोराणामेतेषां त्याग एव परीक्षाकारणं न भोगः । स च परपरितोषरूपसर्वेशाराधनेनैवेति नान्यथा । ननु विनिमयव्यवहारे नाणकरूपकृत्रिमद्रव्यप्रचारे च तथा संभवेऽपि वस्तुविनिमये न तथा संभव इति चेन्न । वस्तूनामप्युत्तममध्यमकनिष्ठरूपाणां सत्त्वात् । उत्तमोत्तमवस्त्वपहारस्य तत्रापि संभवात् । तथा चोपभोगवैषम्यतादवस्थ्येन "परसंपत्प्रकर्षो हि हीनसंपदं पुरुषं दुःखाकरोति" इति न्यायेन दरिद्राणां श्रमजीविनां दुःखस्य समूलमुन्मूलनासंभवात् । भृतिवैषम्यं च श्रमतारतम्यादङ्गीकृतमेव समाजवादेऽपि । तदपेक्षया धनिनां बुद्धिपूर्वकधनसंग्रहेऽङ्गीकृत्यापि स्वत्व व्ययपद्धतिनिर्धारणेन यथेच्छविनियोगनियन्त्रणमेव वरम् । नो चेन्नान्यत्किमप्ययं स्वत्वापहारो नाम बलात्पाटच्चरतामतिहाय ।

## ( यावन्निर्वाहवेतनविचारः )

यत्तु यावज्जीवनिर्वाहमपि वेतनं नाधिगम्यते श्रमजीविभिरिति । तत्र निर्वाहो नाम जीवनयापनम् । तच्च न भोगमन्तरेति यावदिष्टभोगमेव वेतनं स्यात् । भोगेच्छा चेन्न नियमिता तर्हि तु कथमपि भोगपर्याप्त्यसंभव एव । सा चेन्नियमिता तदा त्विदानीमपि दीयमानं वेतन प्राथमिकशिक्षकेभ्योऽप्यधिकं कथं तावन्नालं जीवननिर्वाहाय । इदं तु सत्यं यत्प्राथमिकशिक्षका अपीदानी यावज्जीवननिर्वाहं वेतनं न लभन्ते । परं तु तथापि तेषां जीवनयात्रा श्रमजीविभ्यः किंचिदपि सभ्यतया भवति । नहि धनिनां प्रासादा इव श्रमजीविनां गृहाणि कदापि भवितुमर्हन्ति । न हि दण्डसंस्थापि तादृशीमवस्थां संपादयितु शक्नोति । स्पष्टतममेवैतत्सत्रिणां गृहेभ्यो दण्डशासननिर्मितेभ्यः ( पोलिस लाईन ) उटजकल्पान्येव तानि । तथापि स्वच्छतादिना तत्र विश्रामयोग्यता भिल्लादीनामुटजेष्विवेति श्रमजीविनामयं दोषो यत्स्वच्छताद्यभाव इति । किं च श्रमजीविषु स्त्रीपुंसयोर्द्वयोरपि वेतनभाक्त्वेन प्रतिमासमन्यूनमेकत्र कुटुम्बे षष्टिरूप्यकाण्यागच्छन्ति । न तथा शिक्षकस्य वा ग्रामलेखकस्य वाऽन्यस्य स्वल्पाधिकारस्य । एवमपि न पर्याप्तिरिति कथनं तु राजकारणकुशलानां क्रान्तिवादिनां क्रान्तिसंपादनार्थमान्दोलननिदानमेव । नन्वेवं श्रमजीविनां श्रमेणोपार्जितस्य द्रव्यस्य यथेच्छ विनाऽऽयासमुपभोगः कर्तव्यो धनिभिरिति तात्पर्यं स्यात् । तथा चानीतिव्यवहारस्य द्रव्योन्मादेन प्रवृत्तिः केन वार्येतेति चेन्न । सर्वेश्वरस्वत्ववादेऽपि "लाभाच्च सप्तमो भागः" इत्यादिशासनैर्यथेच्छविनियोगाधिकारस्य नियमितत्वात् । महायन्त्रप्रवृत्तेः सर्वपापनिदानस्योभयवादिसमतस्योपपातकत्वेन निषिद्धत्वात् । प्रवृत्त्यपेक्षाया च तस्या दण्डसंस्थया तत्र तत्र यन्त्रालये तत्तद्व्यवसायिसघानामेव नियुक्त्यापि भोग्यसंपत्त्युत्पादनसंभवेन पूर्वोक्तदोषपरि-

हारस्य सुसंपादत्वात्। सर्वेशवादे हि भोगदानस्यैव परमश्रेयस्त्वेनेतरेतरभोगदानस्पर्धया तथा दोषासंभवात्।

## ( उपयुक्ततावादपर्यालोचनम् )

ननूपयुक्तत्वाद्यन्त्राणां तत्प्रवृत्तिनिरोधो न युक्त इति चेत्केयमुपयुक्तता नाम। किं जीवननिर्वाहानुकूल्यमुत यथेच्छभोग्यसंपत्त्युत्पादकत्वमाहोस्वित् सर्वश्रेयस्करत्वम्। नाऽऽद्यः। पूर्वतनसमाजानां तदभावेऽपि जीवननिर्वाहस्यास्मदादिसत्तया सिद्धत्वात्। नापि द्वितीयः। यथेच्छभोग्यसंपत्त्युत्पादकत्वादेव जीवननिर्वाहासौकर्यस्य जायमानत्वात्। भोग्यसंपत्तेर्बाहुल्ये हि भोगेच्छाभिवृद्धिस्तया चोत्तरोत्तरमपरितोषस्ततश्च दुःखबाहुल्यमित्यनर्थपरम्पराप्रसक्तिः। अभ्युपगम्यते चैकत्र दारिद्र्यमन्यत्र धनित्वं चोत्तरोत्तरमुपचीयमानं महान् दोष इति समाजस्वत्ववादिभिरपि। किं च हस्तव्यवसायादिनापि तादृशसंपत्तेरधिगमस्तु सुकर एव। अत एव न तृतीयः। श्रेयस्करत्वस्य सर्वथाऽसंभवस्य उभयवादिसंमतत्वात्। यत्तु सर्वेषां समाजोपयुक्तश्रमैरेव जीवनं योग्यं न विनाऽऽयासमालस्येन वा दुर्व्यसनेन वा निद्रया वेति, तत्रेदमालोचनीयं किमिदं समाजोपयुक्तत्वं नाम। किं समाजजीवनयात्रानिर्वाहकत्वं वा समाजपरिरक्षणक्षमत्वं वा समाजसमुत्कर्षसंपादकत्वं वेति। नाऽऽद्यः। रङ्गादिपदार्थानां जीवनयात्रानिर्वाहकत्वाभावेन वस्त्रादिषु तदुपयोगरूपव्यवसायस्य समाजानुपयोगित्वप्रसङ्गात्। महायन्त्रादिषु च जीवनयात्रानिर्वाहकवस्त्राद्युत्पादकत्वेन तद्व्यवसायस्य समाजोपयुक्तत्वप्रसङ्गात्। अत एव न द्वितीयः। परिरक्षणस्य जीवननिर्वाहोपयोग्यन्नवस्त्रादिनैव सिद्धत्वात्। तन्नाशकमहायन्त्र ॲटमब्रॉब् इत्यादिव्यवसायस्यापि शत्रुविनाशरूपोपयोगसंभवेन समाजोपयुक्तत्वप्रसङ्गात्। न चेष्टापत्तिः। नाशकस्य परिरक्षकत्वेऽभ्युपगम्यमाने सर्वत्रोपयुक्तत्वसंभवेनोपयुक्तत्वानुपयुक्तत्वविवेकस्यैव असंभवात्। मूलधनस्यापि तु परम्परया समाजोपयुक्तत्वप्राप्तौ तन्नाशप्रयत्नस्य वैयर्थ्यापत्तौ समाजस्वत्ववादस्यैवोच्छेदप्रसङ्गात्। न तृतीयः। समुत्कर्षस्यावध्यंशे नित्यसाकाङ्क्षत्वेन निरूपयितुमशक्यत्वात्। भोगसौकर्यं वा भोग्यसंपत्तिबाहुल्यं वा समुत्कर्ष इत्यभ्युपगम्यमाने तल्लक्षणे भोगस्येच्छामूलकत्वेन इच्छायाश्च दुष्पूरत्वेन च तन्मूलकभोगस्यापि निर्मर्यादत्वात्। बहूनां किल कलानां गानवादननृत्याद्यनुकरणात्मिकानां केवलभावनामात्रोद्दीपकत्वेन समाजसमुत्कर्षानाधायकत्वाद्वैयर्थ्यप्रसङ्गात्। प्रत्युत सत्याहिंसाऽस्तेयब्रह्मचर्यापरिग्रहाणां समाजजीवनयात्रानिर्वाहकत्वात्, समाजपरिरक्षणक्षमत्वात्, समाजसमुत्कर्षसंपादकत्वाच्च यथार्थतया समाजोपयुक्तत्वेन तत्प्रतिष्ठाकारणीभूतधर्माधर्मव्यवस्थाया एव समाजोपयुक्तत्वमगत्या अङ्गीकरणीयमकामेनाप्यन्ततः। धर्मशास्त्रीयविधिनिषेधानां सर्वेषामत्रैव तात्पर्यात्। तदुक्तम्—

पड्वर्गसंयमकान्ताः सर्वा नियमचोदना
तदन्ता यदि नो योगानावहेयुः श्रमावहाः ॥ भा. स्कं. ७

इति । अन्यच्च—

दानं स्वधर्मो नियमो यमश्च श्रुतं च कर्माणि च सद्व्रतानि ।
सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः ॥ भा. ११।२३।४६

किं चैतादृशधर्माचरणसिद्धमनोनिग्रहं विना कृता या कापि समाजव्यवस्थाऽऽर्थिकी वा सामाजिकी समाजसंकेतसिद्धा । न साऽलं स्यात्सर्वेषां सुखाय वा शान्तये वा । तत्र नियुक्ताधिकारिणामेव लोभाद्याक्रान्तत्वे पुनश्च वैषम्यदुःखादीनां प्रसङ्गात् । प्रत्युतैतादृशी केवलार्थकाममूला समाजरचना नाम महदेव किल संभूयसमुत्थानं जगतो महानर्थायैव संभवेत् । न हि देशवंशाकृत्यादीनां निसर्गजा मर्यादास्तन्मूलकं वैषम्यं वा केनापि समूलमुन्मूलयितुं शक्यम् । ततश्च व्यक्तीनां संभूयसमुत्थानापेक्षयाऽप्येतत्समाजसंभूयसमुत्थानं सर्वेषामेव क्षयाय चाहिताय च स्यात् ।

अत एवोक्तं विनयाधिकारे कामन्दकीये—

आत्मानं प्रथमं राजा विनयेनोपपादयेत् ।
ततोऽमात्यान् ततो भृत्यान् ततः पुत्रांस्ततः प्रजाः ॥

इत्यादि । स च संयमो न केवलेनार्थेन वा कामेन । किंतु ईशस्वत्वमूलकधर्मेणैवेति सिध्यति धर्मस्यापि योगक्षेमनिर्वाहकत्वम् । ततश्चालौकिकेष्टसाधनत्वम् । एतद्वैपरीत्येन केवलसापेक्षता-मूलकदर्शने तु भगवद्गीतोक्तासुरसंपत्तिरूपत्वादनर्थावहत्वमेव कुतः पुनर्योगक्षेमसाधनत्वमिति सुविचार्यमेव सूक्ष्मया प्रज्ञया विचक्षणैः । तदुक्तं भगवद्गीतासु

असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ इत्यादि (अ. १६)

अत एव मनुनापि—

धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥

अर्थकामवादिनां मतान्यनूद्यान्ते त्रिवर्गस्यैव श्रेयस्त्वेनाऽऽवश्यकता सिद्धान्तिता । न वयमप्यर्थकामौ तिरस्कुर्मः । किंतु वस्तुगत्या धर्ममूलकयोरेव तयोस्तत्त्वं व्यवस्थापयामः । तथा च धर्ममूलकयोस्तयोरादेयत्वे तदितरयोरर्थादेव हेयत्वं सिध्यति । अत एव

"धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ"

इति कामस्य धर्माविरुद्धस्य भगवद्रूपत्वमुक्तं गीतायाम् । तस्मान्न व्यवसायस्य समाजोपयुक्तत्वनिर्णयः कामेन वाऽर्थेन वा संभवतीति तादृशोपयुक्तत्ववर्णनमिदं समाजस्वत्ववादिनां स्वीयसंभूयसमुत्थानायैवेति नात्र विशयलेशोऽपि ।

( धर्मस्यैव समाजोपयुक्तत्वनिर्णायकत्वम् । )

अयं भावः—

इज्याचारदमाहिंसातपःस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥

इति याज्ञवल्क्योक्त्यनुसारेण

एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥ १२।१२५

इति मनुस्मृत्यनुसारेण वाऽऽत्मवत्सर्वभूतेषु समतादर्शनमेव परमपुरुषार्थ इति सत्यपि सिद्धान्ते फलरूपे तत्साधनानुष्ठानं विना न तदुपलब्धिरिति निर्विवादमेव । साधनानि तु योगशास्त्रोक्ताः पञ्च यमा पञ्च नियमाश्चेत्यपि निर्विवादमेव । न हि

"अहिंसा सत्यमस्तेयब्रह्मचर्यापरिग्रहा यमाः,
शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः"

इति योगशास्त्रोक्तयमनियमरूपसाधनमन्तरा कथमपि कस्यापि पुरुषार्थस्य सिद्धिः । अर्थकामयोरपि तदावश्यकत्वात् । अन्यथा त्विदानींतनानामिव सुक्तासुक्तमार्गैस्तदधिगमे तु नैकस्यापि स्वास्थ्यं वा सुखमधिगन्तुं शक्यमिति त्वालोचितमेव । एवं च या चेदानींतनी मानवता तत्र तत्र पुरस्क्रियते तस्या अपि—

" अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ "

स्वरूपेण यत्राऽऽगताय प्राघूर्णिकायेतरेन्द्रियसंतोषसंपादनमिव रतिप्रदानमपि कर्तव्यत्वेनोपवर्ण्यते। इत्यहो धृष्टता दुष्टाना समाजहितवादिनामपि प्रच्छन्नसमाजशत्रूणां स्वार्थान्धानाम्। एवं च येन व्यवसायेन समाजस्य यमानियमरूपमानवतायां प्रवृत्तिः संपद्येत तस्यैवोपयुक्तत्वमिति सिध्यति। ततश्च दण्डानुशासनमपि तथैवोपयुक्तं स्याद्यथा च पूर्वोक्तमानवतायाः सुप्रतिष्ठा भवेत्। एवं च योगक्षेमावहस्य धर्मस्य निवृत्तिरूपत्वात् तदनुष्ठापकदण्डस्यापि निवर्तकत्वमेवोपयुक्तं न प्रवर्तकत्वमिति युक्तमेव। अत एव दण्डसंस्थाया अपि नियामकत्वं सिध्यति। तथा च दण्डसंस्थयाप्यर्थकामविषयेऽपि यान्यनुशासनानि प्रणेयानि तान्यपि निवृत्तिफलकान्येव यमनियमयोः पर्यवसन्नान्यपेक्षन्ते। नाधुनातनवत् सूकरप्रजा इव यथाकथंचिदविचारितरमणीयानि लोकसंख्याप्रमाणानि। अत एव च न कस्या अपि दण्डसंस्थाया धर्मपरिवर्तनाधिकारो वा धर्मस्य परिवर्तनार्हत्वं वेति व्यर्थोऽयं परिवर्तनवाद ऐतिहासिकानाम्।

## ( परिवर्तनवादिनां वक्तव्यम् )

इदं तु सत्यं यत्सन्ति किल कानिचन वचनानि धर्मशास्त्रेऽर्थशास्त्रे चाऽऽपाततः परिवर्तनवादिनां मतसमर्थकानि।

यथा—अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः॥ मनु. १।८५
प्रतिमन्वंतरं चैषा श्रुतिरन्या विधीयते।
युगे युगे च ये धर्मास्तेषु तेषु च ये द्विजाः।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः॥

इति मन्वादिधर्मशास्त्रे।

चतुर्वर्णाश्रमस्यायं लोकस्याऽऽचाररक्षणात्।
नश्यतां सर्वधर्माणां राजधर्मः प्रवर्तकः॥
धर्मश्च व्यवहारश्च चरितं राजशासनम्।
विवादार्थश्चतुष्पादः पश्चिमः पूर्वबाधकः॥

इति कौटिलीयार्थशास्त्रे ५८ अध्याये—

धर्मश्च व्यवहारश्च चरितं राजशासनम्।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः॥

इति पराशरमाधवीये व्यवहारकाण्डे नारदस्मृतावित्येवमादिभ्यो वचनेभ्यो राजदण्डस्य सर्वधर्मप्रवर्तकत्वाद् युगभेदेन च धर्मभेदस्य धर्मशास्त्रसिद्धत्वादिदानीमपि राजदण्डद्वारा योगक्षेमानु-

कूलधर्मशास्त्रप्रणयनं नाशास्त्रीयं वा नानर्थावहमिति धर्मपरिवर्तनवादिभिरुच्यते। किंच धर्मपरिवर्तनमिदं न्यायकुसुमाञ्जलिकारैरुदयनाचार्यैरप्यनुमोदितमेव। तद्यथा—

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः संप्रदायस्य मीयताम्॥ ३॥

द्वितीयस्तबकः।

पूर्वं हि मानसाः प्रजाः समभवन्। ततोऽपत्यैकप्रयोजनमैथुनसंभवाः। ततः कामावर्जनीयसन्निधिजन्मानः। इदानीं देशकालाद्यव्यवस्थया पशुधर्मादिव भूयिष्ठाः। पूर्वं चरुप्रभृतिषु संस्काराः समाधायिषत। ततः क्षेत्रप्रभृतिषु। ततो गर्भादितः। इदानीं तु जातेषु लौकिकव्यवहारमाश्रित्य। पूर्वं सहस्रशाखो वेदोऽध्यगायि। ततो व्यस्तः, ततः षडङ्ग एकः। इदानीं तु क्वचिदेका शाखेति। पूर्वममृतवृत्तयो ब्राह्मणाः प्राद्योतिषत। ततोऽमृतवृत्तयः। संप्रति प्रमृतसत्यानृतकुसीदपाशुपाल्यश्ववृत्तयो भूयांसः। पूर्वं दुःखेन ब्राह्मणैरतिथयोऽलभ्यन्त। ततः क्षत्रियातिथयोऽपि सवृत्ताः। ततो वैश्यावेशिनोऽपि। संप्रति शूद्रान्नभोजिनोऽपि। पूर्वममृतभुजः। ततो विघसभुजः। ततोऽन्नभुजः। संप्रति अघभुज एव। पूर्वं चतुष्पात् धर्म आसीत्। ततस्तनूयमाने तपसि त्रिपात्। ततोऽम्लायति ज्ञाने द्विपात्। संप्रति जीर्यति यज्ञे दानैकपात्। सोऽपि पादो दुरागतादिविपादिकाशतदुःस्थोऽश्रद्धामलकलङ्कितः कामलोभादिकण्टकशतजर्जरः, प्रत्यहमपचीयमानवीर्यतया इतस्ततः स्खलन्निवोपलभ्यत इति। एभिश्च कुसुमाञ्जलिवाक्यैः सुविशदमेव परिस्थितिप्रदर्शनपूर्वकं धर्मपरिवर्तनं व्यज्यत इति नातिरोहितम्। एवं च जन्मसंस्कारविद्याशक्तिस्वाध्यायकर्मणां ह्रासेऽपि यदि कार्तयुगीना एव धर्मा इदानीमपि कालेयपरिस्थितावनुष्ठेयाश्चेत्कथं वा हिताय वा योगक्षेमाय वा प्रजाधारणाय वा प्रभवेयुरिति सुनिपुणमपि निभालयन्तो विवेकिनो नान्यां गतिमुत्पश्यन्तीति कालेयीं परिस्थितिमनुसृत्य धर्मपरिवर्तनमवश्यमेव राजदण्डद्वारा प्रणेयमिति परिवर्तनवादिनां मतम्।

## ( परिवर्तनवादपर्यालोचनम् )

अत्र ब्रूमः—सत्यं जन्मसंस्कारादीनां ह्रासाद्धर्मस्यापि ह्रासः संवृत्तः। अग्रेऽपि तथैव संपत्स्यत इति। न हि कारणनाशे कार्यसत्ता कस्यापि संमता। तत्किम्? इदानीं प्रचीयमानस्याधर्मस्यैव परिरक्षणाय पुनश्चाधर्मस्य धर्मत्वसमयः परिकल्पनीयः परिकल्पितोऽपीष्टफललाभाय प्रभवेद्वा। आहोस्विद्राक्षसैः सह संघर्षे समुपलग्नेऽस्माभिरपि राक्षसैर्भवितव्यम्। तथा जातेऽपि राक्षससंघर्षोऽयं शान्तिमापद्येत वा। उत्तरोत्तरं प्रवर्धमानोऽयं जगदन्ताय प्रभवेत्सुन्दोपसुन्दन्यायेनेत्येव सुधीभिरभिध्येयं सुधीभिः। वयं तु पश्यामो न विना दैवीं संपदमस्योपशमः

केनापि विधातुं शक्यः । न हि प्रचीयमानौ रागद्वेषौ रागद्वेषाभ्यामुपशाम्यतः । प्रत्यक्षमेवेदमिदानीं ॲटमबॉम्द्वारा युद्धोपशमेऽपि युद्धबीजानामभिवृद्धिरेव संजातेति तस्मादस्योपशमाय वयं देवा भवेम चेत्तदैव खलु यथार्थमेव जगत्कल्याणं संपद्येत । अत एव सर्वरोगभेषजमिदं यमनियमाद्येव मानुषहितार्थमुद्घोषणीयं परिपालनीयं चास्माभिः । यत्तु ह्रासप्रतिपादकवचनैर्धर्मस्याधर्मत्वमधर्मस्य धर्मत्वमित्येवं परिवर्तनं समर्थ्यते, तत्तु वञ्चनामात्रमित्येवोद्घोषयामः । न हि कार्तयुगीनो धर्मोऽन्यत्र युगेऽधर्मः संवृत्त इति तत्र वचने प्रतिपाद्यते । नापि तद्गता फलदानशक्तिस्त्रेतादौ प्रणष्टा । अनुष्ठानाशक्त्याऽनुष्ठानाभावेन तत्प्रचारविलोपेऽपि तत्सदृशफलदायिक्रियान्तरबोधनेन मूलतस्तद्रक्षणात् । न हि कृतयुगे वर्तमाना तपःशक्तिस्त्रेतायां प्रणष्टा । किंत्वनुष्ठानाशक्त्या तदभावेऽपि यज्ञज्ञानदानादिना तत्संपादनं स्यादित्येव धर्मशास्त्रीयवचनानामभिप्रायः । न हि कृतयुगेऽतिथिः प्रतिग्रहीतुर्वा दुर्लभत्वेन आतिथेयी दानाद्यनुष्ठानाभावेऽपि तद्गता धर्मशक्तिः प्रणष्टा वा धर्मशक्तिस्तत्रोद्भूता वेति केनापि प्रेक्षावता कल्पयितुं शक्यम् । एतादृशाशक्तिमूलकधर्मसंकोचस्तु शास्त्रसंमत एवेति प्रतिपादितमेव प्रमाणप्रतिबिम्बे । इदानीमपि सौकर्यार्थं किंचिदाचारान्तरं परिकल्पनीयं चेत्तदपि यदि यमनियमादिसाधनद्वारा इष्टप्राप्तिसमर्थं चेदवश्यमेव परिकल्पनीयं शिष्टैः । परंतु यमनियमादिसाधनसंपत्तिस्तेनावश्यमेव स्यादित्यत्र प्रमाणं त्ववश्यमेवापेक्ष्यतेऽस्माभिः । न हि जनमतसंग्रहस्तत्र प्रमाणमिति तु साटोपमुद्घोषयामः ।

यत्त्वर्थशास्त्रीयं वचनमुपन्यस्तं तदपि प्रमादपूर्वकमेव । तस्य व्यवहारविषयकत्वेन प्रकृतेऽनुपयुक्तत्वात् । तथा च पराशरमाधवीये व्यवहारकाण्डे—

"ननु धर्मादीनां पादत्वमयुक्तम् । प्रतिज्ञोत्तरप्रमाणनिर्णयानां व्यवहारपादत्वात् । यतो याज्ञवल्क्यः प्रतिज्ञादीनि प्रकृत्याऽऽह—

चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः । या. स्मृ. २।८

बृहस्पतिरपि—पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः ।
क्रियापादस्तृतीयस्तु चतुर्थो निर्णयः स्मृतः ॥ इति ।

नायं दोषः । धर्मादीनां प्रकारान्तरेण पादत्वोपपत्तेः । योऽयं निर्णयाख्यश्चतुर्थः पादोऽभिहितः स धर्मादिभिश्चतुर्भिर्निष्पद्यते । तदाह बृहस्पतिः—

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुष्प्रकारोऽभिहितः संदिग्धेऽर्थे विनिर्णयः ॥ इति ।

तस्मान्निर्णयहेतुतया धर्मादीनां व्यवहारपादत्वं भविष्यति । तेषां च निर्णयहेतुत्वं कात्यायनेन प्रपञ्चितम् ।

दोषकारी तु कर्तृत्वं धनस्वामी स्वकं धनम् ।
विवादे प्राप्नुयाद्यत्र स धर्मेणैव निर्णयः ॥ इति ।

दोषकारी वाक्पारुष्यादिकारी। यस्मिन्विवादे व्यवहारे चरित्रराजशासननैरपेक्ष्येण धर्माभिमुखः सन्नधर्माद्भीतः स्वकीयं दोषकर्तृत्वं स्वयमेवाङ्गीकरोति। यत्र धनस्वामी व्यवहारादिप्रयासमन्तरेणाधर्माभिमुखाद्धनापहारिणः स्वकीयं धनं प्राप्नोति । तत्र दोषकारिणो धर्माभिमुख्यमेव निर्णयहेतुः । व्यवहारस्य निर्णयहेतुत्वं स एवाऽऽह—

स्मृतिशास्त्रं तु यत्किंचित्प्रथितं धर्मसाधकैः ।
कार्याणां निर्णयार्थे तु व्यवहारः स्मृतो हि सः ॥ इति ।

यत्र धर्मशास्त्रकुशलैर्विद्वद्भिरर्थिप्रत्यर्थिनोरग्रे निर्णयार्थे धर्मशास्त्रं प्रख्यापितं भवति स निर्णयो व्यवहारजन्यः ।

चरित्रनिर्णयमाह स एव—

यद्यदाचर्यते येन धर्म्यं चाधर्म्यमेव वा ।
देशस्याऽऽचरणं नित्यं चरित्रं तद्धि कीर्तितम् ॥ इति ।

शास्त्रोक्तधर्मानपेतं धर्म्यं तद्विपरीतमधर्म्यं तदुभयं देशाचारानुसारेण यत्र स्वीक्रियते तत्र चरित्रं निर्णयहेतुः । राजशासनस्य निर्णयहेतुतामाह स एव—

न्यायशास्त्राविरोधेन देशदृष्टेस्तथैव च ।
यद्धर्मं स्थापयेद्राजा न्याय्यं तद्राजशासनम् ॥ इति ।

न्यायशास्त्रमिति व्यवहारप्रतिपादकं स्मृतिशास्त्रम् । तस्य च देशाचारस्याविरोधेन राजा यमनुशास्ति स निर्णयो राजशासनजन्यः । यथोक्तानां धर्मादीनां चतुर्णां मध्ये पूर्वस्य पूर्वस्य बाध्यत्वमुत्तरोत्तरस्य बाधकत्वं च बृहस्पतिना प्रपञ्चितम्—

शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयो धर्मस्तेनापि हीयते ॥
देशस्थित्याऽनुमानेन नैगमानुमतेन च ।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते ॥
विहाय चरिताचारं यत्र कुर्यात्पुनर्नृपः ।
निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तया ॥ इति ।

बाध्यते । केरलदेशादौ वेश्यागमने साक्षिभिरापादितेऽपि देशाचारवशान्नायं राज्ञा दण्ड्यते तत्र चरित्रेण व्यवहारस्य बाधः। सत्यपि तादृशे देशाचारे त्वयैवं न कर्तव्यमिति राजा चेदनुशास्ति तदा राजाज्ञया चरितस्य बाधः'' इति ।

अनेन चेदं स्पष्टमवगम्यते यद्विवादनिर्णयावसर एव राज्यशासनस्य धर्माद्यपेक्षया प्राबल्यमिति। ननु धर्मविरोध्यनुशासनप्रणेतृत्वाभावे राज्ञः कथं तावदनुशासनेन धर्मबाध इतिचेन्न ।

वैश्यशूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत् ।
तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदं जगत् ॥ मनु ८।४१८

इत्यादिसामान्यकर्तव्यपरिपालनार्थं दृष्टार्थेषु धर्मेषु राज्ञोऽप्यनुशासनप्रणेतृत्वात् । तथा च वैश्यधर्मे वृद्धिप्रयोगे चक्रवृध्यादीनां ग्रहणाग्रहणविषये राजशासनमेव प्रमाणं न वैश्यानुष्ठानपरम्परा वा धर्माणामनुज्ञा वेति तु स्पष्टमेव शास्त्रज्ञानाम्। एतादृशधर्मविरोध्यनुशासनस्य प्रवर्तकत्वं तु राज्ञः शास्त्रसंमतमेव। एतेनारण्यखन्याकरादिव्यवस्थापि व्याख्याता। तत्रापि राजशासनस्यैव स्वातन्त्र्येण नियामकत्वात् । यत्तु वेश्यागमनादिदेशाचार उदाहृतः। स त्वापाततोऽभ्युपगमवादेनैव । न हि धर्मविरुद्धदेशाचारादीनां प्रामाण्यं शास्त्राभ्यनुज्ञातम्। ''देशजातिकुलधर्माश्चाऽऽम्नायैरविरुद्धाः'' इति गौतमसूत्रेण तत्प्रामाण्यस्य प्रत्याख्यानात्। तस्मादेवमत्रोदाहर्तव्यम्—कस्यापि गृहे विनाऽनुज्ञां न प्रवेष्टव्यमिति शिष्टाचारेऽपि धनायासेधार्थं राजाज्ञया प्रवेशे तत्र विवादे समुपस्थिते, शिष्टाचारापेक्षया तत्र राजशासनस्य प्राबल्यान्निर्णय इति । एवं च तत्ताद्विषयकानुशासनानां कुत्रचिद्विवादे धर्मादिभिर्विरोधे तु राजशासनानुसारेणैव निर्णय इत्येवैतद्वचनतात्पर्यम् । न तु राज्ञां धर्मविरोधिशासनप्रणयने। न हि तत्ताद्विषयानुशासनाना साक्षाद्धर्मविरोधः। येन तादृशं तात्पर्यं कल्पयितुं सुशकमिति सुधीभिर्विभावनीयम्। कौटिलीयार्थशास्त्रवचनस्याप्ययमेवाऽऽशयः। अत एवाग्रे धर्मादिस्वरूपस्य स्पष्टप्रतिपत्त्यर्थं—

अत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ।
चरित्रं संग्रहे पुंसां राज्ञामाज्ञा तु शासनम् ॥
राज्ञः स्वधर्मः स्वर्गाय प्रजाधर्मेण रक्षितुः ।
अरक्षितुर्वा क्षेप्तुर्वा मिथ्यादण्डमतोऽन्यथा ॥
दण्डो हि केवलं लोकं परं चेमं च रक्षति ।
राज्ञा पुत्रे च शत्रौ च यथादोषं समं धृतः ॥
अनुशासद्धि धर्मेण व्यवहारेण संस्थया ।
न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत् ॥

संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम् ।
यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिश्चयेत् ।
शास्त्रं विप्रतिपद्येत धर्मं न्यायेन केनचित् ॥
न्यायस्तत्र प्रमाणं स्यात् तत्र पाठो हि नश्यति ॥

इति विवादनिर्णयोपयोगित्वेन सत्यस्यैव धर्मशब्देनाभिधानं संगच्छते । यत्र तु धर्मशास्त्रेण विरोधस्तत्र तु शास्त्रानुसार्येव निर्णयः। यत्र च न्यायविरोधस्तत्र न्यायानुसरणमेवेति ।

अत एव—केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः ।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ।
स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ॥

इत्यादीनि वचनान्यपि संगच्छन्ते । तत्सिद्धं न कुत्रापि राज्ञो नूतनधर्मप्रणेतृत्वं वा धर्माननुबन्ध्यनुशासनप्रणेतृत्वं वेति धर्मपरिवर्तने शास्त्रानुकूल्यप्रतिपादनमिदं प्राकृतदृष्टीनां धूलिप्रक्षेप एव । तस्मात्परिवर्तनवादोऽयं न शास्त्रप्रमाणको न वा युक्तियुक्त इति सिद्धम् ।

## ( अदृष्टार्थकधर्मपर्यालोचनम् )

नन्वेवं योगक्षेमनिर्वाहकधर्माणामहिंसादीनां सिद्धेऽप्यलौकिकेष्टसाधनत्वे यज्ञादीनामदृष्टमात्रार्थकत्वेन योगक्षेमानिर्वाहकाणां का गतिरिति चेदत्र ब्रूमः—पूर्वोक्तानुमानेन तेषामलौकिकेष्टसाधनत्वाभावे सिद्धेऽपि यदि कश्चिद्वेदश्रद्धालुर्मन्त्रशक्तिद्वारा तेषां योगक्षेमनिर्वाहकत्वं दृष्टिगोचरतामानयेत् तदैव तेषां प्रामाण्यं स्यात् । नेतरथा । इदं सत्यं यत्—

कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥

इति मनुवचनात्तेषां कर्मणां काम्यत्वेन कामपरिपूर्तेश्च प्रत्यक्षानुभवगोचरत्वेन च कामपूर्तिसंपादनमिदं ब्राह्मणायत्तमिति तैरेव तत्र प्रयतनीयम् । न तु दण्डसंस्थया । तदिदं ब्राह्मं तेजो यदि कामपूर्तिद्वारा प्रत्यक्षगोचरतामावहेत्तदैव दण्डसंस्थया तत्परिपाल्येत । अन्यथा काम्यस्य कर्मणो धर्मशास्त्रेऽपि निषिद्धत्वान्न तत्र प्रवृत्तौ दण्डापेक्षा । एवं च सर्वतः खल्वयं भारो ब्राह्मणानां शिरस्येव पतति । धर्मकोशगुप्त्यर्थमेव तेषामवतारात् । नो चेत्तादृशकर्मणां विलोपेऽपि न धर्महानिः । न वा योगक्षेमासौकर्यमिति नातीव तत्प्रामाण्यव्यवस्थापने दण्डनीत्या प्रयतनीयम् । एवं चाहिंसाद्यनुबन्धिनां तदनुपघातकानां च धर्माणां धर्मशास्त्रोक्तानां सर्वथा प्रामाण्यं दण्डनीतिदृष्ट्यापि सिध्यति ।

तत्प्रकारश्चाग्रेचातुर्वर्ण्यादिप्रतिबिम्बेषु भोग्यसंपत्तिनियमने ईशाराधनप्रकारप्रस्तावे च स्फुटीकरिष्यते। तथा च दण्डनीतिदृष्ट्यापि धर्मस्याऽऽवश्यकता स्पष्टमेव प्रतीयते ।

( उपजापादिमूलकपरिवर्तनविचारः )

यत्तु जन्मत एवोच्चनीचत्वादिभेदविशिष्टजातिघटितसमाजरचनायां क्षेपावमानासूयादिक्षय-लोभविरागहेतूनां सद्भावाच्छत्रुकृतोपजापसौकर्येण विनाशावश्यंभाव इति तन्निराकरणाय तादृश-समाजरचना तन्मूलभूतो धर्मश्च परिवर्तनीय इति मन्यन्त इदानींतना इति । तत्र ब्रूमो यत्सत्यमेव भारतवर्षे भिन्ना जनाः परपक्षमाश्रित्य स्वानेव घातयन्तीत्यत्र तु न विवादः । परं च तन्निदान-त्वेनोपवर्ण्यमानमिदं समाजरचनावैशिष्ट्यं धर्मव्यवस्थां च न वयं संप्रतिपद्यामहे । किं तु सत्यधर्मतत्त्व-परिपालनाभाव एव । न हि प्रकृतीनां क्षयलोभविरागहेतूनां दण्डनीतिशास्त्रोपदिष्टानां मध्ये कुत्रापि तादृशसमाजरचनाया वा धर्मस्य वा कारणत्वेन परिगणना आर्यचाणक्येनोपवर्णिता । तथाहि—

अवक्षेपेण हि सतामसतां प्रग्रहेण च ।
अभूतानां च हिंसानामधर्म्याणां प्रवर्तनैः ॥
उचितानां चरित्राणां धर्मिष्ठानां निवर्तनैः ।
अधर्मस्य प्रसङ्गेन धर्मस्यावग्रहेण च ॥
अकार्याणां च करणैः कार्याणां च प्रणाशनैः ।
अप्रदानैश्च देयानामदेयानां च साधनैः ॥
अदण्डनैश्च दण्ड्यानां दण्ड्यानां चण्डदण्डनैः ।
अग्राह्याणामुपग्राहैर्ग्राह्याणां चानभिग्रहैः ॥
अनर्थ्यानां च करणैरर्थ्यानां च विघातनैः ।
अरक्षणैश्च चौरेभ्यः स्वयं च परिमोषणैः ॥
पातैः पुरुषकाराणां कर्मणां गुणदूषणैः ।
उपघातैः प्रधानानां मान्यानां चावमाननैः ॥
विरोधनैश्च वृद्धानां वैषम्येणानृतेन च ।
कृतस्याप्रतिकारेण स्थितस्याकरणेन च ।
राज्ञः प्रमादालस्याभ्यां योगक्षेमवधेन च ।
प्रकृतीनां क्षयो लोभो वैराग्यं चोपजायते ॥
क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम् ।
विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम् ॥

इति कौटिलीय. अर्थ. अ. १०३ ।

संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम् ।
यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिश्चयेत् ।
शास्त्रं विप्रतिपद्येत धर्मं न्यायेन केनचित् ॥
न्यायस्तत्र प्रमाणं स्यात् तत्र पाठो हि नश्यति ॥

त एवं विवादनिर्णयोपयोगित्वेन सत्यस्यैव धर्मशब्देनाभिधानं संगच्छते । यत्र तु धर्मशास्त्रेण विरोधस्तत्र शास्त्रानुसार्येव निर्णयः। यत्र च न्यायविरोधस्तत्र न्यायानुसरणमेवेति ।

अत एव—केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः ।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ।
स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ॥

इत्यादीनि वचनान्यपि संगच्छन्ते । तत्सिद्धं न कुत्रापि राज्ञो नूतनधर्मप्रणेतृत्वं वा धर्माननुबन्ध्यनुशासनप्रणेतृत्वं वेति धर्मपरिवर्तने शास्त्रानुकूल्यप्रतिपादनमिदं प्राकृतदृष्टीनां धूलिप्रक्षेप एव । तस्मात्परिवर्तनवादोऽयं न शास्त्रप्रमाणको न वा युक्तियुक्त इति सिद्धम् ।

## ( अदृष्टार्थकधर्मपर्यालोचनम् )

नन्वेवं योगक्षेमनिर्वाहकधर्माणामहिंसादीनां सिद्धेऽप्यलौकिकेष्टसाधनत्वे यज्ञादीनामदृष्टमात्रार्थकत्वेन योगक्षेमानिर्वाहकाणां का गतिरिति चेदत्र ब्रूमः—पूर्वोक्तानुमानेन तेषामलौकिकेष्टसाधनत्वाभावे सिद्धेऽपि यदि कश्चिद्वेदश्रद्धालुर्मन्त्रशक्तिद्वारा तेषां योगक्षेमनिर्वाहकत्वं दृष्टिगोचरतामानयेत् तदेव तेषां प्रामाण्यं स्यात् । नेतरथा । इदं सत्यं यत्—

कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥

इति मनुवचनात्तेषां कर्मणां काम्यत्वेन कामपरिपूर्तेश्च प्रत्यक्षानुभवगोचरत्वेन च कामपूर्तिसंपादनमिदं ब्राह्मणायत्तमिति तैरेव तत्र प्रयतनीयम् । न तु दण्डसंस्थया । तदिदं ब्राह्मं तेजो यदि कामपूर्तिद्वारा प्रत्यक्षगोचरतामावहेत्तदेव दण्डसंस्थया तत्परिपाल्येत । अन्यथा काम्यस्य कर्मणो धर्मशास्त्रेऽपि निषिद्धत्वान्न तत्र प्रवृत्तौ दण्डापेक्षा । एवं च सर्वतः खल्वयं भारो ब्राह्मणानां शिरस्येव पतति । धर्मकोशगुप्त्यर्थमेव तेषामवतारात् । नो चेत्तादृशकर्मणां विलोपेऽपि न धर्महानिः । न वा योगक्षेमासौकर्यमिति नातीव तत्प्रामाण्यव्यवस्थापने दण्डनीत्या प्रयतनीयम् । एवं चाहिंसाद्यनुबन्धिना तदनुपघातकानां च धर्माणां धर्मशास्त्रोक्तानां सर्वथा प्रामाण्यं दण्डनीतिदृष्ट्यापि सिध्यति ।

त्रादीनां तदनुपघातकत्वात् योगक्षेमाविरोधाच्च । न द्वितीयः । धर्मत्वेन परिकल्पनायां प्रमाणाभावात् । योगक्षेमसाधनत्वस्य हेतोः पूर्वोक्तधर्मप्रमाणत्वान्न तद्व्यतिरिक्तानां धर्मत्वकल्पने प्रामाण्यम् । अन्ततो गत्वा परिवर्तनवादिना वैयक्तिकयोगक्षेमावेव लक्षीकृत्य परिवर्तनं विधेयम् । तच्च समाजोपघातकत्वादनवस्थितत्वाच्च न न्याय्यमिति दण्डसंस्थया निवारणीयमेव । किंचालब्धलाभो योगः, लब्धपरिरक्षणं च क्षेममिति तयोर्लक्षणे कथंकारं तावन्न सत्यादिधर्मैर्वैयक्तिकयोगक्षेमौ निर्वहत इति तु परिवर्तनवाद्येव जानीयात् । न च म्लेच्छैः सह संघर्षे तदीयशिल्पादिविज्ञानार्थं तत्रोपजापादिनीतिकार्यार्थं च तद्देशगमनादिकमिदानीं निषिध्यमानमेव धर्मत्वेन परिवर्तनीयं राष्ट्रीययोगक्षेमसाधकत्वादिति वाच्यम् । क्षत्रियधर्मे दण्डनीत्यादौ तस्यानिषिद्धत्वात् । तदपि च सत्यादिधर्मपूर्वकमेव न तु स्वेच्छया । अन्यथा विषयलोलुपतया गौराङ्गयुवतिविलासार्थं तु तत्रापि तस्य निषेधात् । विशदमेवैतदग्रे शुद्धिप्रतिबिम्बे प्रतिपादयिष्यामः ।

अयमत्राभिसंधिः—राष्ट्रीययोगक्षेमार्थं वृत्तिनियमने भोगेच्छानियमने च यत्र कर्मणि ये दीक्षितास्तेषां तत्कार्यकरणं परमो धर्म एव नाधर्म इति किल शास्त्रसिद्धान्तः । अत एव समाजोपयोगिना सर्वकर्मणा तपस्त्वेनोपवर्णनं मनोः—

ब्राह्मणस्य तपो ज्ञानं, तपः क्षत्रस्य रक्षणम्
वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ॥ ११।२३५

अत्र तपःशब्देन स्वधर्मवृत्तित्वमेव भारतोक्तं निगद्यते । तपो विद्या च विप्रस्येति श्लोकव्याख्याने कुल्लूकेन तथोक्तत्वात् । युक्तं चैतत् । योगभाष्योक्तस्य द्वन्द्वसहनरूपस्य तपसोऽत्रैवान्तर्भावात् । ततश्च स्वकार्यनिरतत्वे हि रागद्वेषादीनां संयमादेव सर्वस्यापि समाजोपयोगिकार्यस्य धर्मत्वे न कस्यापि दुष्टत्वम् । अनियुक्तेन तथानुष्ठाने तु महानधर्म इत्येव फलति । तथा च न कुत्रापि परिवर्तनावश्यकतेति वृथा प्रलापोऽयं परिवर्तनवादः । न हीच्छा नाम धर्मः । तस्या ब्रह्मणापि पूरयितुमशक्यत्वात् ।

अत एव—यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ गीता अ. १८

इति भगवद्गीतायां स्वकर्मणा सर्वान्तर्यामिण आराधने सर्वेषां सर्वसिद्धिरिति सिद्धान्तितम् । एतेन धर्मस्य फलतो निवर्तकत्वमेव न प्रवर्तकत्वमिति सिध्यति । यदीच्छैव धर्मस्तदा तु यस्य कस्यापि धर्मस्यानुशासनं वैयर्थ्यमेवाऽऽवहेत् । एवं चेच्छानियन्त्रणद्वारा कर्तव्यकर्मप्रवर्तकत्वमेव धर्मस्य प्रवर्तकत्वमित्यभ्युपगमे फलतो निवर्तकत्वमायाति । एवं राजशासनस्यापीति सर्वेषां शास्त्राणां निवृत्तौ पर्यवसानम् । यत्त्वाम्नायस्य क्रियार्थत्वात्प्रवर्तकत्वम् । तदप्यनयैव रीत्या । अत एव श्रीमद्भागवते—

अत्र विरागहेतुषु केषांचित् स्वभावमूलकत्वं केषांचित् दण्डदोषमूलकत्वं केषांचिदसूयामूलकत्वमिति धर्ममूलकत्वाभावान्न तत्परिवर्तनमत्यावश्यकं मन्यामहे। न हि धर्मेण गुणवच्छूद्रादपि जातिश्रेष्ठोऽपि ब्राह्मणो यत्र कुत्रापि कार्ये नियोक्तव्यो वा समाननीयो वेत्युपदिष्टम्। जातिमात्रोपजीविनां ब्राह्मणादीनां विष्ट्यादिषु नियोज्यत्वस्य पूर्वमेवाभिधानात्। यत्तु जातिमूलकं श्रैष्ठ्यं तदपि यत्र जातिप्रयोज्यमेव किंचित् कार्यं तत्रैव नान्यत्र। युक्तं चैतत्। न हि जातिमानप्यश्वः पङ्गुश्चेत्तावतापि वहनार्ह इति केनापि मन्येत। तस्मादहिंसादिधर्मपरिपालनपूर्वकस्वधर्माचारेणेशाराधनसन्नद्धः सर्वोऽपि श्रेष्ठ एव। अत एव स्वश्रैष्ठ्यमङ्गीकुर्वता ब्राह्मणेन वा क्षत्रियेण वा वैश्येन वा स्वीयासाधारणधर्मैः परमेशाराधनाय बद्धपरिकरैर्भवितव्यम्। ब्राह्मणेन ज्ञानद्वारा क्षत्रियेण स्वबलपूर्वकन्यायप्रतिष्ठापनद्वारा वैश्येन च धनद्वारा शूद्रेण च यथासमयं समुत्पन्नसर्वकर्मद्वारा चेति न कुत्रापि श्रेष्ठकनिष्ठभावापत्तिः। जातिकार्येषु विवाहादिकार्येषु च सर्वेषां स्वातन्त्र्येऽपि परमेशाराधनकाले सर्वेषां साम्यात्। परमेशाराधनं च सर्वान्तर्यामित्वेन सर्वभूतहितत्वमेव नान्यदित्युक्तं पूर्वमेव। इतरे च भेददोषा नीतिशास्त्रीयदण्डोपनयनादिद्वारा दण्डसंस्थयैव निराकरणीयाः। अन्यथा तु यस्यां कस्यामपि समाजरचनायां क्रुद्धलुब्धावमानितासूयितादीनां सहजसौलभ्यात्तत्रापि पारतन्त्र्यादिकं केन वार्येत। तस्मादहिंसादिधर्मप्रतिष्ठैव तन्निराकरणोपायः। स च दण्डायत्तः। तदर्थं च दण्डसंस्थया विद्याविनयप्रचारः प्रजासु सुविधेयः। अविद्याऽविनयश्च सर्वापत्तीनां हेतू। "अविद्याविनयः पुरुषव्यसनहेतुः। अविनीतो हि व्यसनदोषान्न पश्यति" इत्यर्थशास्त्रात्। (अ ११९) तथैव कामादिरुत्सेकः स्वाः प्रकृतीः कोपयति। अपनयो बाह्याः। तदुभयमासुरी वृत्तिः" इत्यप्यर्थशास्त्रम्। (अ १२८) तस्माद्विद्यया विनयं प्राप्य पात्रत्वमापन्ना प्रकृतयो न कदापि भेदमापादयितुं शक्या इत्यपि हेतोः प्रजासु पूर्वोक्तधर्माणामधीतिबोधाचरणप्रचाराः प्रचारयितव्या दण्डसंस्थयेत्येव सिध्यति।

## ( परिवर्तनपदार्थविचारः )

किंच किमिदं परिवर्तनं नाम। किं धर्मत्वेन प्रमितानां क्रियाणामधर्मत्वव्यवस्थापनं वोत नूतनतयैव कासांचित् कल्पितानां क्रियाणां धर्मत्वबोधनं वा। नाऽऽद्यः। धर्मत्वेन प्रमितौ ह्यधर्मत्वव्यवस्थापनस्याप्रामाणिकत्वप्रसङ्गात्। न च योगक्षेमासाधनत्वेन हेतुना तत्सिद्धिः। योगक्षेमयोर्व्यक्त्यपेक्षया विवक्षितत्वेऽनवस्थाप्रसङ्गात्। राष्ट्रापेक्षया विवक्षायां तु पूर्वोक्तरीत्या तत्साधनत्वेन प्रमितानां सत्यादिधर्माणां सिद्धौ तदतिरिक्तस्यैवाधर्मत्वासिद्धेः। एवं च व्यक्तिधर्माणां राष्ट्रधर्मोपमर्दकत्वे वा योगक्षेमानुबन्धित्वे वा तथा परिवर्तनं स्यात्। न च तत्संभवति। राष्ट्रीययोगक्षेमनिर्वाहकसत्यादिधर्माणां तन्मूलकभोगसंपत्तिविनियोगभोगेच्छानियमनयोश्च यथावत्परिपालने व्यक्तिधर्माणाममिहो-

चरेद्धर्मान् । न ह्यपौरुषेयत्वेनाभिन्नयोर्वितथावितथत्वभेदो युज्यते, वितथत्वे चेतरस्यापि वितथत्वप्रसङ्गात् । अदृष्टसाधनमाह–नक्षत्रेति । नक्षत्राण्यश्विन्यादीनि चन्द्रसूर्यौ प्रसिद्धौ । तारा ग्रहा अङ्गारकादयः पञ्च । तेषां चक्रमिव चक्रं सन्निवेशविशेषो द्वादशराशिविभक्तं तस्य लोकार्थं नाऽऽत्मार्थं बुद्धिपूर्वकमिवेति पूर्वकस्येव यथा कश्चित्पुरुषो बुद्धिपूर्वं प्रवर्तते तद्वदेते सूर्यादयो नक्षत्रेण युज्यमाना अन्यथाऽन्यथा प्रवर्तमाना दृश्यन्ते न च तथैवेतीवार्थः । तथा ह्येषां न लोकस्येदं करिष्याम इति प्रवृत्तिः । सा च शास्त्रान्तरे बहुप्रकारोक्ता । दर्शनादिति वचनात् प्रत्यक्षप्रमाणसिद्धेति दर्शयति । तस्यां च प्रवृत्तौ लोकस्य शुभाशुभात्मकं फल द्विविधम् । साधारणमसाधारणं च । तत्र साधारणं सुभिक्षदुर्भिक्षादि । तच्च ग्रहचारे द्रष्टव्यम् । असाधारणं तु प्रतिसत्त्वं प्रतिनियतं लाभालाभसुखदुःखादि । तच्च जातके द्रष्टव्यम् । सैव द्विधा प्रवृत्तिः कारणान्तरमदृष्टं गमयति । तच्च लोकस्य शुभाशुभात्कर्मणः । अन्यथैषामेकरूपाणां कारणान्तरानिरपेक्षाणा सदा प्रवृत्तिरप्रवृत्तिर्वा स्यात् । कालानियम इति चेन्न । सोऽपि कारणनिरपेक्षः सर्वदा स्यात् । तस्मादस्ति तत्प्रवर्तकमदृष्टमिति चरेद्धर्मान् । उक्तं च—

नक्षत्रग्रहपञ्जरमहर्निशं लोककर्मविक्षिप्तम् ।
भ्रमति शुभाशुभमखिलं प्रकाशयन् पूर्वजन्मकृतम् ॥ इति.

वर्णाश्रमेति । वर्णा ब्राह्मणादयः । आश्रमा ब्रह्मचर्यगार्हस्थ्यादयः । तेषामाचारः स्वधर्मः । तस्य स्थितिर्व्यवस्था । सैव लक्षणं यस्या लोकयात्रायाः । सा सा लोकायतिकैर्मा भूदव्यवस्थायां मात्स्यो न्याय इति दृष्टार्थं वर्णिता " संवरणमात्रं त्रयीति लोकयात्राविदः " इति । ता च लोकविश्वासार्थमाचरद्भिः कथं नाऽऽचरितो धर्मः । दृष्टार्थश्च यद्यदृष्टार्थोऽपि स्यात्को- विरोधः । एतेन " न धर्मांश्चरेत् " इति प्रतिज्ञाया अभ्युपगमबाधां दर्शयति । यच्चोक्तं–एष्यत्फलत्वादिति । तद्दृष्टेऽप्यस्तीति दर्शयन्नाह हस्तगतस्येति । तुल्ये भविष्यत्फलत्वे सति नैकत्र प्रवृत्तिरन्यत्र निषेध इति युक्तियुक्तम् । न कदाचित्तत्र दृष्टमिति चेत्कथं तर्हि लोकवैचित्र्यम् । न हि सर्वत्र समानादृष्टात्कारणादैश्वर्यादिफललाभः । नापि स्वाभाविकं कर्म । सदा सिध्यासिद्धिप्रसङ्गात् । इति ।

अनेन च वात्स्यायनसूत्रभाष्येण सुविशदैव धर्मसत्ता प्रतीयते । तथा च धर्माचरणं कामशास्त्रस्य नाविप्रतिपन्नम् । नन्वेवं पारदारिकवैशिकाधिकरणयोः का गतिरिति चेदत्रोच्यते । यस्य कस्यापि विषयस्य जिज्ञासाप्रतिज्ञायां शास्त्रेण साङ्गोपाङ्गमेव विचार्यते । तत्र च केषांचिद्धर्मविरुद्धानामपि विषयाणामङ्गोपाङ्गत्वेन विवेचनं तु न परिहार्यम् । यथा ह्यारोग्यमुद्दिश्य प्रवृत्तेन वैद्यकशास्त्रेण धर्मविरुद्धमद्यमांसाद्यपि तदुपायत्वेन प्रतिपाद्यते । नैतावता तत्सेवनमत्यावश्यकमिति चोद्यते । तथैव कामशास्त्रेऽपि कामप्रवृत्तिसंभावनामभिलक्ष्य तत्र कथं वर्तितव्यमित्येतदर्थमेव

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः

इत्युक्तम् । किंच तत्रैव—

धनं च धर्मैकफलं यतो वै
ज्ञानं सविज्ञानमनुप्रशान्ति ।
गृहेऽपि युञ्जन्ति कलेवरस्य
मृत्युं न पश्यन्ति दुरन्तवीर्यम् ॥ इत्यप्युक्तम् ।

तत्सिद्धं धर्मो हि न परिवर्तनार्ह इति ।

( कामशास्त्रदृष्ट्यापि धर्मस्याऽऽवश्यकता ) .

कामशास्त्रेऽपि त्रिवर्गस्यान्योन्यानुपमर्देन सेवनमेव सिद्धान्तितम् । यदन्येऽन्यत्फलकत्वा-त्सांशयिकत्वाच्च न धर्मं चरेदित्युक्तं तत्तु पूर्वपक्षत्वेन । अत एवाग्रेऽनुपदमेवोत्तरः पक्षः प्रदर्शितः । तद्यथा—

शास्त्रस्यानभिशङ्कनीयत्वात्, अभिचारानुव्याहारयोश्च क्वचित्फलदर्शनात्, नक्षत्र-चन्द्रसूर्यताराग्रहचक्रस्य लोकार्थं बुद्धिपूर्वकमिव प्रवृत्तेर्दर्शनात्, वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्रायाः, हस्तगतस्य च बीजस्य भविष्यतः सस्यस्यार्थे त्यागदर्शनात् चरेद्धर्मानिति वात्स्यायनः ॥ अधि १।२।३१.

अथैतदनुव्याख्यानं शास्त्रस्येति । धर्मस्यालौकिकत्वात्तदभिधायकं शास्त्रं युक्तम् । तच्चार्थे शङ्कनीयं न । तत्र पूर्वमभिशङ्कनीयम्, " किमिदं सत्यं मिथ्या वेति । पुरुषा हि रागादिभिरविद्यया चोपद्रुता वितथमपि ब्रुवन्ति । अपौरुषेयं च वेदाख्यं पुरुषसंबन्धाभावाददुष्टमनभिशङ्कनीयम् । यथोक्तम्—

यस्याङ्के शिर आधाय लोकः स्वपिति निर्वृतः ।
स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः ॥

इत्युक्तदिशा प्रत्युत परिवर्तनवादं पुरस्कृत्य स्वीयार्थकामसाधनतत्परा एते न कथं विनाशमागच्छेयुः । न हि शुद्धब्राह्मण्यं विना धर्मप्रसरः । न च तं विना जगतः सुखस्वास्थ्यमिति तु निश्चप्रचमेव । अत एवाऽऽहुर्भगवन्तः शंकरभगवत्पादा गीताभाष्योपक्रमणिकायां " ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः, तदधीनत्वाद्वर्णाश्रमधर्माणाम् " इति । इदानीं तु ब्राह्मण्यसंरक्षकपरिषदिति नामापि श्रुतिभेजायमानं परिवर्त्य ब्राह्मणपरिषदिति जलाञ्जलिदानायैवेति स्पष्टमेव तत्परिषद्विनाशेन । एतत्सर्वमभिप्रेत्यैवाऽऽह भगवती परमकारुणिकी श्रुतिः —

" स नैव व्यभवत् । तच्छ्रेयोरूपमत्यसृजत धर्मम् । तदेतत्क्षत्रस्य क्षत्रं यद्धर्मः । तस्माद्धर्मात्परं नास्ति । अथो अबलीयान् बलीयांसमाशंसते धर्मेण । यथा राज्ञैवम् । यो वै स धर्मः, सत्यं वै तत् । तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति । धर्मं वा वदन्तं सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति" ॥ इति ॥ बृ. आ. १।४।१४ ॥

अत्रत्यं शांकरभाष्यं यथा—

" स चतुरः सृष्ट्वापि वर्णान्नैव व्यभवदुग्रत्वात्क्षत्रस्यानियताशङ्कया । तच्छ्रेयोरूपमत्यसृजत । किं तत् ? धर्मम् । तदेतच्छ्रेयोरूपं सृष्टं क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ । उग्रादप्युग्रम् । यद्धर्मो यो धर्मः । तस्मात्क्षत्रस्यापि नियन्तृत्वाद्धर्मात्परं नास्ति । तेन हि नियम्यन्ते सर्वे । तत्कथमित्युच्यते । अथो अप्यबलीयान् दुर्बलतरो बलीयांसमात्मनो बलवत्तरमप्याशंसते कामयते जेतुं धर्मेण बलेन । यथा लोके राज्ञा बलवत्तमेनापि कुटुम्बिक एवम् । तस्मात्सिद्धं धर्मस्य बलवत्तरत्वात्सर्वनियन्तृत्वम् । यो वै स धर्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणः सत्यं वै तत् । सत्यमिति यथा शास्त्रार्थता । स एवानुष्ठीयमानो धर्मनामा भवति । यस्मादेवं तस्मात्सत्यं वदन्तं व्यवहारकाल आहुः । समीपस्था उभयविवेकज्ञा धर्मं वदतीति प्रसिद्धं लौकिकं न्यायं वदतीति । तथा विपर्ययेण धर्मं वा लौकिकं व्यवहारं वदन्तमाहुः सत्यं वदति शास्त्रादनपेतं वदतीति । एतद्यदुक्तमुभयं ज्ञायमानमनुष्ठीयमानं चैतद्धर्म एव भवति । तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च सर्वानेव नियमयति । तस्मात्स क्षत्रस्यापि क्षत्रम् । अतस्तदभिमानोऽविद्वांस्तद्विशेषानुष्ठानाय ब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभिमन्यते । तानि च निसर्गत एव कर्माधिकारनिमित्तानि " । इति ।

एतदुपरि सुरेश्वराचार्यवार्तिकमप्येतदर्थमेव । अनेन चेदं स्पष्टमेवावगम्यते यद्धर्मस्यैव सर्वनियन्तृत्वात्सर्वप्रभुत्वं सत्यादनतिरिक्तत्वं च । युक्तं चैतत्सत्य एव सर्वधर्माणामन्तर्भावात् । तदुक्तं महाभारते शान्तिपर्वणि १६२ तमेऽध्याये युधिष्ठिर उवाच—

तयोरधिकरणयोरुपदेशः। रागप्राप्तस्य नियमनात्। अत एव प्रारम्भे विभज्य कालमन्योन्यानुबन्धं परस्परस्यानुपघातकं त्रिवर्गं सेवेतेत्यादेशः कामशास्त्रे। तत्सिद्धं धर्माचरणं कामशास्त्रसंप्रतिपन्नमिति।

## ( उपसंहारः )

तदेव कामस्यैव परमपुरुषार्थत्वमित्यभ्युपगमेऽपि धर्मतत्त्वस्य सत्याहिंसादेः सर्वत्र परिपालनमत्यावश्यकमेव। तद्विना न कस्यापि पुरुषार्थस्य सिद्धिः। पुरुषार्थशब्दस्य पुरुषमर्थेन संयुनक्तीति व्युत्पत्तौ हि, क्रियावाचकत्वमेव। तां विना कस्यापीच्छाविषयस्याधिगन्तुमशक्यत्वात्। सा च क्रिया न पूर्वोक्तसत्याहिंसादि विना सिध्यतीति सर्वत्राऽऽर्थिकव्यवस्थायां सामाजिकव्यवस्थायां वा तेषां परिपालनस्यावश्यंभावाद्धर्मस्यापि सप्रयोजनत्वं सिध्यति। तत्र क्रियात्मकानां धर्माणां केषांचित्सत्यमूलकत्वं केषांचित्तपोमूलकत्वं केषांचिदीश्वरप्रणिधानमूलकत्वमित्येवं यथायथमूह्यम्। न च तासामपि क्रियाणां परिवर्तनार्हत्वम्। क्रियाणां फलजनकत्वसामर्थ्यस्याव्याहतत्वात्। पुरुषसंकेतेन तदपाकरणस्यासंभवात्। न हि कार्तयुगीना क्रिया इदानीमपि केनचन यथावदनुष्ठिता यथाशास्त्रं नालं फलायेति वक्तुं शक्यम्। शक्त्यभावेन तदनुष्ठानं तु न परिवर्तनम्। किं तु ह्रास एव। नैतावता तद्विपरीतं क्रियमाणं कर्म धर्मफलाय प्रभवेत्। स्पष्टमिदं वर्तमानया भारतीयावनत्या। यदि च पूर्वकाल इवेदानीमपि सत्यादिधर्माणां परिपालनेन सर्वान्तर्यामिसमाराधनाय भारतीयाः प्रजाः संनद्धा भवेयुः। भोग्यत्वेन स्वात्मनो भोगदानमेव परमं धर्मं मन्येरन्। तदा तु न कदाप्यस्माकमेतादृशी दुर्दशा स्यात्। न हि त्यागमन्तरा भोगसिद्धिः। ब्राह्मणैर्ज्ञानद्वारा प्रजासमाराधनं क्षत्रियैरन्यायनिवृत्त्यर्थं वैश्यैर्धनपूर्वकं शूद्रैश्च यथायथं स्वव्यवसायमूलकमित्येवं त्यागपूर्वकभोगदानेन समाराधितः सर्वान्तर्यामी कथं वा दुःखरूपपारतन्त्र्यगर्तेऽस्मान् पातयिष्यति। तदत्र परमधर्मविमुखा वयं विषयलोलुपतया प्रवृत्ताः स्वीयभोगे भेदेन परवशतामापन्ना इति नायमपराधो धर्मस्येति सुधीरमुद्घोषयामः। कुत्र ते ब्राह्मणा येषां पूर्वजा उत्पथगामिनं वेनं निवारयामासुः। अन्ते च भस्मसाच्चक्रुः किमेतैर्म्लेच्छादीनां निग्रहो नैव विधेय इति कुतश्चिदुपलब्धं वा धर्मशासनम्। क्व गतः स स्थापत्यवेदो वा धनुर्वेदो वा। ययोरवशेषः समराङ्गणसूत्रधारादिग्रन्थेष्विदानीमप्युपलभ्यते। "ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति धर्माज्ञामपि न दृष्टिपथमानयन्ति।

> क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः।
> ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम्॥

इति मनोरादेशमपि नाऽऽलोचयन्ति। न चान्यामापत्तिं स्वीयस्वजीवनमेतेषां किं दुःखाकरोति।

कल्याणं कुरुते वाढं धीमान्न ग्लायते क्वचित् ।
प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्मादवाप्यते ॥ १५ ॥
धर्मार्थहेतोः क्षमते तितिक्षा क्षान्तिरुच्यते ।
लोकसंग्रहणार्थं वै सा तु धैर्येण लभ्यते ॥ १६ ॥
त्यागः स्नेहस्य यत्त्यागो विषयाणां तथैव च ।
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा ॥ १७ ॥
आर्यता नाम भूतानां यः करोति प्रयत्नतः ।
शुभं कर्म निराकारो वीतरागस्तथैव च ॥ १८ ॥
धृतिर्नाम सुखे दुःखे यथा नाप्नोति विक्रियाम् ॥
तां भजेत सदा प्राज्ञो य इच्छेद्भूतिमात्मनः ॥ १९ ॥
सर्वथा क्षमिणा भाव्यं तथा सत्यपरेण च ।
वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः ॥ २० ॥
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहं च दानं च सतां धर्मः सनातनः ॥ २१ ॥
एते त्रयोदशाकाराः पृथक् सत्यैकलक्षणाः ।
भजन्ते सत्यमेवेह वृंहयन्ते च भारत ॥ २२ ॥
नान्तः शक्यो गुणानां च वक्तुं सत्यस्य पार्थिव ।
अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः ॥ २३ ॥
नास्ति सत्यात्परोधर्मो नानृतात्पातकं परम् ।
श्रुतिर्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत् ॥ २४ ॥
उपैति सत्याद्दानं हि तथा यज्ञाः सदक्षिणाः ।
त्रेताग्निहोत्रं वेदाश्च ये चान्ये धर्मनिश्चयाः ॥ २५ ॥
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २६ ॥ इति. ॥

अनेन च त्रयोदशविधसत्याकारेण सर्वस्यापि धर्माचरणस्य संग्रहात्सत्यस्यैव धर्मत्वं यदुक्तं बृहदारण्यके तदुपपद्यत एव । न हि सत्यभाषणमेव सत्यम् । किंतु कर्मणा मनसा गिरा च सर्वथैकरूप्यं यदा सत्त्वावलम्बनेन संपद्येत तदेव किल सत्याकाराणां संप्राप्तिरिति सिध्यति।

एतेनेदानींतनसत्यप्रयोगा व्याख्याताः ।

सत्यं धर्मं प्रशंसन्ति विप्रर्षिपितृदेवताः ।
सत्यमिच्छाम्यहं श्रोतुं तन्मे ब्रूहि पितामह ॥ १ ॥
सत्यं किं लक्षणं राजन् कथं वा तदवाप्यते ।
सत्यं प्राप्य भवेत्किं च कथं चैव तदुच्यताम् ॥ २ ॥

भीष्म उवाच—

चातुर्वर्ण्यस्य धर्माणां संकरो न प्रशस्यते ।
अविकारितमं सत्यं सर्ववर्णेषु भारत ॥ ३ ॥
सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः ।
सत्यमेव नमस्येत सत्यं हि परमा गतिः ॥ ४ ॥
सत्यं धर्मस्तपो योगः सत्यं ब्रह्म सनातनम् ।
सत्यं यज्ञः परः प्रोक्तः सर्वं सत्ये प्रतिष्ठितम् ॥ ५ ॥
आचारानिह सत्यस्य यथावदनुपूर्वशः ।
लक्षणं च प्रवक्ष्यामि सत्यस्येह यथाक्रमम् ॥ ६ ॥
प्राप्यते च यथा सत्यं तच्च श्रोतुमिहार्हसि ।
सत्यं त्रयोदशविधं सर्वलोकेषु भारत ॥ ७ ॥
सत्यं च समता चैव दमश्चैव न संशयः ।
अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता ॥ ८ ॥
त्यागो ध्यानमथाऽऽर्यत्वं धृतिश्च सततं दया ।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥ ९ ॥
सत्यं नामाव्ययं नित्यमविकारि तथैव च ।
सर्वधर्माविरुद्धेन योगेनैतदवाप्यते ॥ १० ॥
आत्मनीष्टे तथाऽनिष्टे रिपौ च समता तथा ।
इच्छाद्वेषं क्षयं प्राप्य कामक्रोधक्षयं तथा ॥ ११ ॥
दमो नान्यस्पृहा नित्यं गाम्भीर्यं धैर्यमेव च ।
अभयं रोगशमनं ज्ञानेनैतदवाप्यते ॥ १२ ॥
अमात्सर्यं बुधाः प्राहुर्दाने धर्मे च संयमः ।
अवस्थितेन नित्यं च सत्येनामत्सरी भवेत् ॥ १३ ॥
अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च ।
क्षमते समतः साधुः साध्वाप्नोति च सत्यवाक् ॥ १४ ॥

विद्यात्वमभिमन्यन्ते तदधीनास्तथेतराः ॥४॥
आन्वीक्षिकी त्रयी वार्ता सतीर्विद्याः प्रचक्षते ।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ॥५॥
दण्डनीतिर्यदा सम्यङ्नेतारमधितिष्ठति ।
तदा विद्याविदः शेषाः सर्वा विद्या उपासते ॥६॥
त्रयी विद्यैव विद्यात्वमर्हत्येवेतरा न तु ।
धर्माधर्मप्रधानत्वाद्वस्तुमात्रप्रदर्शिका ॥७॥
दण्डनीतिर्निरालम्बा जगद्विप्लवकारिका ।
सालम्बत्वे तदालम्बस्त्रयीविद्यैव निश्चिता ॥८॥
वार्ता तु तदधीनैव न तु विद्यात्वमर्हति ।
एकैवाऽऽन्वीक्षिकी विद्या सर्वविद्याप्रवर्तिका ॥९॥
तां विना सर्वकार्येषु जगदान्ध्यं प्रसज्यते ।
इन्द्रियाणि मनश्चैव नान्यज्ज्ञानस्य साधनम् ॥१०॥
तैर्यज्ज्ञातं तदेवास्य जगतस्तत्त्वमुच्यते ।
तेषु सम्यग् व्यापृतेषु सुखशान्तिः प्रवर्तते ॥११॥
प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥१२॥
प्राणिनां जीवनं श्रेयः प्रेयश्चेति सुनिश्चितम् ।
वार्ताधीनं तदस्तीह विद्या सैका ततः स्मृता ॥१३॥
वार्तायां लुप्यमानायां धर्मो भवति निष्फलः ।
*धर्मे विलुप्ते दण्डोऽपि दुष्प्रचार इति स्फुटम् ॥१४॥*
तदा चाऽऽन्वीक्षिकी श्रेष्ठा वार्ता वेति न निश्चितम् ।
तथापि वार्ताप्राधान्यं सुविचार्यं मनीषिभिः ॥१५॥
इत्येवमादिपक्षेषु गरीयान् कतमः स्मृतः ।
इति शङ्कास्थले चात्र विशदोऽयं विनिर्णयः ॥१६॥
परस्परावलम्बित्वात्सर्वाः सर्वोपकारिकाः ।
तस्माद्विद्यात्वमेतासां चतसृणां सुनिश्चितम् ॥१७॥
धर्माधर्मप्रधाना हि त्रयी विद्या प्रकीर्तिता ।
अर्थानर्थप्रधाना च वार्ता विद्या स्मृता पुनः ॥१८॥

किमिदं सत्यं स्याद्वा यत्र नैकोऽप्याकारः स्पष्टतयाऽऽविर्भवति। किमत्र निदानमिति गवेषणायामिदमेव भाति यत्सत्तत्त्वानवलम्ब इति। अत एव शास्त्रविरुद्धाचरणा देशास्तत्र तत्र समुन्मिषन्तीति नातिरोहितं विदुषाम्। त्रयोदशविधसत्याकारपरिणतो हि न कुतश्चन बिभ्यति न वा हर्षशोकप्रियाप्रियादिविकारविकृतः। प्रत्युतान्यायवर्तिनो जनस्य निग्रहीता निर्भयश्च सर्वभूतहितरतश्च स्यात्। एतच्च परिस्थित्यनुसारेण यथासंभवं यथायथमूह्यं विचक्षणैः।

एतादृशसत्यस्य स्वरूपतो ज्ञानं च नाऽऽगमादृते संभवतीति सिध्यति किल चोदनालक्षण एव धर्मः। न पुरुषबुद्धिपरिकल्पितः। एतेनाहिंसादीनां यमनियमानां धर्मतत्त्वमूलानामपि स्वरूपतो वेदैकगम्यत्वमेव सिध्यति। न हि प्राणवियोगमात्रेण हिंसा। तथा चेद्युद्धस्य धर्मत्वाभावापत्तेः। क्षत्रियाणां तु स्वधर्म स इत्यनुशास्ति श्रुतिः। स्मृतिरपि च

"धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते" इति॥

एवमस्तेयस्वरूपमपि प्रमत्तोन्मत्तादिभूतोपद्रवकारिणा धनिकाना धनापहारं बोधयन्त्या स्मृत्या वेदैकगम्यमेव।

असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति।
आत्मानं संक्रमं कृत्वा कृत्स्नधर्मविदेव सः॥

इति स्मृतिः। म. भा. शान्ति। एवं सर्वेषां यमनियमादीनां स्वरूपाणि वेदैकगम्यानीति न कुत्रापि पुरुषबुद्धेरवकाशः। एतदधीतिबोधाचरणप्रचारास्तु दण्डाधीनाः।

"यत्र श्यामो लोहिताक्षो दण्डश्चरति पाप्महा।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति॥

इति मनुस्मरणात्। सर्वथा तु दण्डनीतिरपि धर्ममूलैव जगच्छ्रेयोवहा न तु स्वेच्छामूलिकेत्यवधेयम्। एतच्च सर्वमपि अस्मत्कृतनीतिसुधायां समासेनोपवर्णितमिति तामेवात्रोपक्षिपामः—

(नीतिसुधा)

धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः॥ १॥
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती।
विद्याश्चतस्र इत्याहुः समाजस्थितिहेतवः॥ २॥
एकैवाऽऽन्वीक्षिकी विद्या सर्वविद्योपकारिका।
इतरास्तदधीनत्वान्न तु विद्यास्पदं पुनः॥ ३॥
इत्याहुरेके त्वपरे दण्डनीतेः प्रधानतः।

विद्यात्वमभिमन्यन्ते तदधीनास्तथेतराः ॥४॥
आन्वीक्षिकी त्रयी वार्ता सतीर्विद्याः प्रचक्षते ।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ॥५॥
दण्डनीतिर्यदा सम्यङ्नेतारमधितिष्ठति ।
तदा विद्याविदः शेषाः सर्वा विद्या उपासते ॥६॥
त्रयी विद्यैव विद्यात्वमर्हत्येवेतरा न तु ।
धर्माधर्मप्रधानत्वाद्वस्तुमात्रप्रदर्शिका ॥७॥
दण्डनीतिर्निरालम्बा जगद्विप्लवकारिका ।
सालम्बत्वे तदालम्बस्त्रयीविद्यैव निश्चिता ॥८॥
वार्ता तु तदधीनैव न तु विद्यात्वमर्हति ।
एकैवाऽऽन्वीक्षिकी विद्या सर्वविद्याप्रवर्तिका ॥९॥
तां विना सर्वकार्येषु जगदान्ध्यं प्रसज्यते ।
इन्द्रियाणि मनश्चैव नान्यज्ज्ञानस्य साधनम् ॥१०॥
तैर्यज्ज्ञातं तदेवास्य जगतस्तत्त्वमुच्यते ।
तेषु सम्यग् व्यापृतेषु सुखशान्तिः प्रवर्तते ॥११॥
प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥१२॥
प्राणिनां जीवनं श्रेयः प्रेयश्चेति सुनिश्चितम् ।
वार्ताधीनं तदस्तीह विद्या सैका ततः स्मृता ॥१३॥
वार्तायां लुप्यमानायां धर्मो भवति निष्फलः ।
धर्मे विलुप्ते दण्डोऽपि दुष्प्रचार इति स्फुटम् ॥१४॥
तदा चाऽऽन्वीक्षिकी श्रेष्ठा वार्ता वेति न निश्चितम् ।
तथापि वार्ताप्राधान्यं सुविचार्यं मनीषिभिः ॥१५॥
इत्येवमादिपक्षेषु गरीयान् कतमः स्मृतः ।
इति शङ्कास्थले चात्र विशदोऽयं विनिर्णयः ॥१६॥
परस्परावलम्बित्वात्सर्वाः सर्वोपकारिकाः ।
तस्माद्विद्यात्वमेतासां चतसृणां सुनिश्चितम् ॥१७॥
धर्माधर्मप्रधाना हि त्रयी विद्या प्रकीर्तिता ।
अर्थानर्थप्रधाना च वार्ता विद्या स्मृता पुनः ॥१८॥

नयानयौ दण्डनीत्यामान्वीक्षिक्यां विवेचनम् ।
तत्त्वानां जगतः सर्वं ताभिः श्रेयः प्रसाधयेत् ॥१९॥
सुखं वाञ्छति सर्वोऽपि तद्धेतुश्चार्थसाधनम् ।
तत्साधकं क्रियाज्ञानं धर्मज्ञानमिति स्मृतम् ॥२०॥
तस्माद्धर्मार्थयोर्ज्ञानं यतः प्राप्नोति मानवः ।
विद्यानां तद्धि विद्यात्वं चतसृष्वेव तत्स्फुटम् ॥२१॥
तस्माच्चतस्र एवेह विद्या लोकोपकारिकाः ।
तासां सम्यक् परिज्ञाने श्रेयः प्रेयश्च विन्दति ॥२२॥
श्रेयःप्रेयःसाधनेन ह्यात्मानं यो बुभूषति ।
तेनैतासां परिज्ञानं साधनीयं प्रयत्नतः ॥२३॥
विद्या ददाति विनयं विनयो ह्यर्थदायकः ।
सुखस्य हेतवश्चार्था विनीतात्मा ततो भवेत् ॥२४॥
अविनीतस्य सर्वेऽपि नश्यन्त्यर्थाः प्लवङ्गवत् ।
सन्तोऽपि न स्वभोगाय दुःखायैव भवन्त्युत ॥२५॥
प्रकीर्णे विषयारण्ये धावन्तं विप्रमाथिनम् ।
ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदन्तिनम् ॥२६॥
एकैकोऽपि विनिघ्नन्ति विषया विषसंनिभाः ।
किं पुनः पञ्च मिलिता विनीतात्मा ततो भवेत् ॥२७॥
पतङ्गमत्स्यभ्रमरमतङ्गजमृगा इमे ।
एकैकविषयास्वादान्नश्यन्ति निपतन्ति च ॥२८॥
पञ्चोपसेवी पुरुषो न कथं निपतेत्पुनः ।
सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ॥२९॥
तच्चार्थसाधनाधीनं ते चार्थाः पञ्च खादयः ।
यस्मादुत्पद्यते जन्तुस्तत एवोपजीवति ॥३०॥
खादिपञ्चोद्भवो जन्तुः पुनस्तान्येव वाञ्छति ।
तस्मात्खं वायुरग्निश्च जलं भूमिस्तु पञ्चधा ॥३१॥
अर्था मता नृणां श्रेयोऽर्हा नान्य इति स्फुटम् ।
यदधीनास्तु ते सर्वे स सौख्यभाग्भवेत् ॥३२॥
न सन्ति येषां ते नित्यं दुःखदारिद्र्यभाजनम् ।
तत्साधनं हि नरेण विदुषा समीक्षणम् ॥३३॥

विवरं कामक्रोधादिमूलकोऽविनयः स्मृतः ।
नास्य छिद्रं परः पश्येच्छिद्रं विद्यात्परस्य तु ॥३४॥
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ।
इति नीतिविदां वादः सर्वशास्त्रेषु निश्चितः ॥३५॥
देशं कालं वयः शक्तिमर्थानां च बलाबलम् ।
कार्याकार्यपरिज्ञानं सम्यगावेक्ष्य यत्नतः ॥३६॥
प्रसङ्गात्कामक्रोधादेर्दलन परिशीलनम् ।
इत्येवमादिकर्तव्यप्रवृत्तिर्विनयो मतः ॥३७॥
विद्यायत्तः स विज्ञेयः तस्माद्विद्याः सदाऽभ्यसेत् ।
शुश्रूषा श्रवण चैव ग्रहण धारणं तथा ॥३८॥
विज्ञानमूहापोहश्च तत्त्वावेशस्तु सप्तमः ।
विद्योपाया मता एते तैर्विना सा न लभ्यते ॥३९॥
विद्याभावे न विनयस्तदभावे कुतः सुखम् ।
वाग्मानेण च पाण्डित्यं कपिचापल्यवत्स्मृतम् ॥४०॥
तेन विद्याविनीतश्चेच्छुकः किमपराध्यति ।
न तत्स्वस्त्रीयभोगाय परदास्याय केवलम् ॥४१॥
परत्र चोपतापाय शुकपञ्जरबन्धवत् ।
शाठ्यं परार्थग्रहणे पाण्डित्यस्य फलं भवेत् ॥४२॥
न सोऽर्थः स्थिरतां याति शाठ्यसंचारकः पुनः ।
तस्माद्विद्या सैव ज्ञेया विनयान्नापसर्पति ॥४३॥
विद्याविनीतः पुरुष इह लोके महीयते ।
बहवोऽविनयान्नष्टा राजानो रावणादयः ॥४४॥
वनस्था अपि राज्यानि विनयात्प्रतिपेदिरे ।
तस्मात्कामक्रोधलोभमानभूतावमाननम् ॥४५॥
हर्षातिरेक इत्येवं शत्रुषड्वर्गमुत्सृजेत् ।
नैषामात्यन्तिको नाशः कदाचिदपि संभवेत् ॥४६॥
स्वार्थघातेन शत्रुत्वे निरुद्धिः परिकीर्तिता ।
विद्याविनयसंपन्नो भुवने याति पात्रताम् ॥ ४७ ॥
पात्रे श्रियः प्रतिष्ठा हि निश्चला परिकीर्तिता ।
विद्याविनीतेन तदा जगच्छ्रेयोऽवलोकनम् ॥४८॥

कर्तव्यं नियमेनैव तद्विना न सुखोदयः ।
विभिन्नाः सृष्टयो बह्व्यः पञ्चभूतविनिर्मिताः ॥४९॥
तासां प्रकृतिभेदेन विभिन्ना रुचयो मताः ।
स्वभावादेव कोऽप्यत्र पारतन्त्र्यं न वाञ्छति ॥५०॥
स्वातन्त्र्येण सुखावाप्तिरिति सर्वविनिश्चयः ।
सुखावाप्तिस्तु सर्वेषामर्थाधीनेति निश्चितम् ॥५१॥
महाभूतान्यत्र चार्थास्तदुत्पन्नाश्च सृष्टयः ।
अर्थापेक्षा च सृष्टीनामर्थानां सृष्ट्यपेक्षिता ॥५२॥
एवं परस्परापेक्षा न स्वातन्त्र्यं क्वचित्स्थितम् ।
यद्यप्यर्थाः सुखोपायास्तथापि तु व्यवस्थया ॥५३॥
यथेच्छसेवने ते च मारका न तु तारकाः ।
स्वातन्त्र्येच्छा तथान्योन्यापेक्षा चार्थव्यवस्थितिः ॥५४॥
परस्परविरुद्धानां त्रयाणां या व्यवस्थितिः ।
स एव सुखहेतुः स्यान्नान्यः कश्चन सिध्यति ॥५५॥
आहारे च विहारे च स्वातन्त्र्यं परिकीर्तितम् ।
व्यवहारे चार्थलाभे न स्वातन्त्र्यमिति स्थितिः ॥५६॥
व्यवहारस्तु सर्वोऽयमन्योन्यापेक्षया भवेत् ।
अर्थलाभोऽपि न तथा सर्वेच्छाविषयत्वतः ॥५७॥
स्वातन्त्र्यं तत्र चान्योन्यकलहादिसमुद्भवः ।
तदुत्पत्तौ तु भूतानां मात्स्यन्यायेन जीवनम् ॥५८॥
तच्च नेष्टं यतः सर्वो जन्तुर्जीवितुमिच्छति ।
तस्मात्स्वतन्त्रता नास्ति व्यवहारार्थलाभयोः ॥५९॥
किन्तु नार्थेषु स्वामित्वं कस्यापीह प्रसिध्यति ।
[illegible] भूतादीनां न निसर्गतः ॥६०॥
दानादिकेषु दृष्टाः स्वामित्वस्य प्रमापने ।
[illegible] पुनः ॥६१॥
[illegible] पुरुष[illegible] ।
[illegible] प्रसिध्यति ॥६२॥
[illegible] ।
[illegible] सिध्यति ॥६३॥

कलादिवुद्धिसाध्ये तु द्रव्ये स्वत्वाप्रसिद्धितः ।
तन्निष्ठवुद्धिकार्येऽपि प्रसिध्येत्तत्कथं पुनः ॥६४॥
भूतानां सृष्टिरेषा तु न कस्यापि प्रयत्नतः ।
स्वभावादेव सा दृष्टा ह्यथवा चेशनिर्मिता ॥६५॥
जीवसृष्टिस्तु भूतानामालम्बेनैव वर्तते ।
भूतस्वत्वाप्रसिद्धौ च सृष्टिस्वत्वं न चोरवत् ॥६६॥
एवं स्वभाववादे वा चेशवादेऽपि वा पुनः ।
स्वामित्वं नेह कस्यापि भूतेष्वत्र प्रसिध्यति ॥६७॥
स्वभावादेव सर्वेषां भोगेच्छा त्विह दृश्यते ।
जीवभोगार्थमेवेह भूतसर्गविनिर्मितिः ॥६८॥
तस्माद्यद्यच्छ्रमेणेह जीवनोपार्जितं भवेत् ।
स्वामित्वं तत्र तत्तस्य त्वङ्गीकार्यं मनीषिभिः ॥६९॥
इत्याहुस्ते च मन्यन्ते मात्स्यन्यायेन जीवनम् ।
निसर्गबलमूलं हि स्वामित्वं तैर्मतं पुनः ॥७०॥
अर्थानामर्जने कष्टं बलमूलं हि वर्तते ।
तच्च बुद्धेर्बलं कुत्र शारीरं कुत्रचित्पुनः ॥७१॥
क्वचिद्धनबलं चैव नेतरद्बलमस्ति ह ।
येषां न किंचिद्बलमस्ति लोके ।
जिजीविषा तैर्न कदापि कार्या ॥
न्यायो हि मात्स्यः प्रसरेद्विशुद्धः ।
तत्संमतौ चौर्यमपि प्रसिध्येत् ॥७२॥
तस्मान्न युक्तोऽयं पक्षो योगक्षेमभयावहः ।
स्वामित्वमेव सर्वेषामङ्गीकार्यं मनीषिभिः ॥७३॥
ईशवादे न कस्यापीत्येवं मान्यं गतिद्वयम् ।
सर्वस्वामित्वसंमत्या येन केनाप्युपार्जितम् ॥७४॥
सर्वस्यार्थे तु तत्तेन व्ययितव्यं न चेच्छया ।
ईशवादे त्वीश्वरस्य स्वामित्वं न तु देहिनः ॥७५॥
तेन तस्याऽऽराधनाय व्ययितव्यं न चेच्छया ।
सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् ॥७६॥

इतीश्वरस्वरूपं तु श्रुतिशास्त्रे विनिश्चितम् ।
सर्वभूताराधनाय व्यपस्तस्य न चेच्छया ॥७७॥
वादद्वये फलैक्यं तु प्रसिध्यति न दुष्टता ।
इह भारतभूमौ तु मतो वादस्तथाऽन्तिमः ॥७८॥
यज्ञ एव प्रधानोऽत्र न तु स्वोदरपूरणम् ।
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥७९॥
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ।
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ॥८०॥
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ।
इत्यादि बहुशस्तत्र गीताशास्त्रे प्रकीर्तितम् ॥८१॥
यज्ञेन यज्ञमित्यादिः श्रुतिरेषा सनातनी ।
देव सवितः प्रसुव चेत्याशीः श्रुतिषु श्रुता ॥८२॥
ममात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।
इत्यासुर्यं मतं शास्त्रे नरकस्य प्रसाधनम् ॥८३॥
तं पत्नीभिरित्येवमादौ वेदे तथैव च ।
सर्वेषामेव यज्ञार्थं विनियोगो निगद्यते ॥८४॥
भक्तिशास्त्रेऽपि भूतानामवमानो न चेष्टभाक् ।
दोषभाक् प्रत्युत प्रोक्तः श्रेयः प्रेयो विघातकः ॥८५॥
अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा ।
तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥८६॥
यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।
हित्वाऽर्चा भजते मौढ्याद्भस्मन्येव जुहोति सः ॥८७॥
द्विषतः परकाये मा मानिनो भिन्नदर्शिनः ।
भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥८८॥
अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे ।
नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥८९॥
अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् ।
यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥९०॥
आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ।
तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥९१॥

इति भागवते शास्त्रे कापिलं गतमुत्तमम् ।
भक्तिमार्गेऽपि सर्वस्य भूतार्थं विनियोजनम् ॥९२॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥९३॥
सर्वविश्रुत एवायं गीताशास्त्रस्य डिण्डिमः ।
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ॥९४॥
सिद्धलक्षणमेवेदं साधकस्य तु साधनम् ।
तस्मात्सर्वात्मना स्वत्वं न कस्यापीति निश्चितम् ॥९५॥
परमाराधनार्थाय सर्वेषां संग्रहः स्मृतः ।
एवं चेदं द्रव्यजातं यावद्बलमुपार्जितम् ॥९६॥
सर्वस्वरूपसंतुष्ट्यै योक्तव्यमिति निर्णयः ।
बुद्धेर्बलं द्रव्यबलं शारीरं बलमेव च ॥९७॥
इति त्रैविध्यमेवात्र बलस्य परिकीर्तितम् ।
अन्योन्यनिरपेक्षाणि नैव कार्यकराणि वै ॥९८॥
परस्परापेक्षितत्वे व्यवस्था चेयमत्र तु ।
केचिद्बुद्धिबलादेव केचिद्धनबलादपि ॥९९॥
आत्मानमत्र सेवन्ते केचिच्छरीरमाश्रिताः ।
सर्वाणीमानि सर्वत्र दृश्यन्ते च यदृच्छया ॥१००॥
तथापि व्यवहारार्थं व्यवस्था त्वियमाश्रिता ।
ये तु बुद्धिबलादेव भूतात्मानमतोषयन् ॥१०१॥
ते वै ब्राह्मण इत्याख्यां लब्धवन्तः पुरातनीम् ।
शारीरं मुख्यतो गौणं बौद्धं संश्रित्य ये पुरा ॥१०२॥
अभजन् परमात्मानं ते जीवाः क्षत्रतां गताः ।
धनार्जनेन यैस्त्वत्र परमात्मा वशीकृतः ॥१०३॥
तेषां वैश्यत्वनिर्णीतिः स्यात्पुरातनकालिकी ।
अङ्गीकृतोऽयं सिद्धान्तः परमाराधनात्मकः ॥१०४॥
परं कार्यव्यवस्था तु न काचिदपि स्वीकृता ।
ब्राह्मणादिपराधीनास्ते जीवाः शूद्रतां गताः ॥१०५॥
नाङ्गीकृतोऽयं सिद्धान्तः परमाराधनात्मकः ।
न ब्राह्मणादिवश्यत्वं यैर्वा देहंभरैः पुनः ॥१०६॥

ते जीवा म्लेच्छतां याताः सर्वजीवनिपीडकाः ।
एवं चान्योन्यसापेक्षाः सर्वे जीवा भवन्ति वै ॥१०७॥
भूतोपकारका नित्यं मात्स्यन्यायविभञ्जकाः ।
म्लेच्छानां तु बहिष्कारः सर्वथा परिकीर्तितः ॥१०८॥
तदर्थं दण्डनीतिस्तु नान्यथा साऽप्यपेक्ष्यते ।
परस्परोपकार्यत्वाज्जीवसंघट्टनं भवेत् ॥१०९॥
निरपेक्षाः स्वतन्त्राः स्युः परस्परनिपीडकाः ।
इन्द्रियाणां हितार्थाय जीवोऽर्थानभिवाञ्छति ॥११०॥
न च सर्वेऽपि सर्वार्थान् प्राप्नुवन्ति कदाचन ।
एकोऽप्यर्थे न लब्धे तु संघर्ष इतरैः सह ॥१११॥
प्राप्नुयात्तन्निवृत्त्यर्थं सर्वेषां सहकारिता ।
स्वेदजादिविसृष्टौ तु न संतोषमवाप ह ॥११२॥
ब्रह्मा तदाऽसृजत्सृष्टिं मानवानां पुरातनीम् ।
तां दृष्ट्वा हीतरे जीवाः समागत्य प्रसादतः ॥११३॥
ब्रह्माणमञ्जलिं बद्ध्वा प्रोचुर्हर्षप्रपूरिताः ।
अहो एतज्जगत्स्रष्टः सुकृतं बत ते कृतम् ॥११४॥
प्रतिष्ठिताः क्रिया यस्मिन्साकमन्नमदामहे ।
इत्याशीः स्वेदजादीनां मानुषेन्नं प्रपूरिता ॥११५॥
मात्स्यं न्यायं समालम्ब्य को वा तोषः परात्मनः ।
तस्मात्सर्वात्मना सर्वैर्यावद्बुद्धिबलोदयम् ॥११६॥
भूताराधनमेवेह कर्तव्यं नान्यथा क्वचित् ।
येषां दृष्टा भ्रमं चक्रे कान्तासु कनकेषु च ॥११७॥
तासु तेष्वप्यनासक्तः साक्षाद्वर्गो नराकृतिः ।
एवं सुभाषिते प्रोक्ता याऽस्माकमुक्तिः पुरातनी ॥११८॥
सा साध्या वेदनेनैव मार्गेणेतरथा न तु ।
ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ॥११९॥
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ।
वेदार्थोऽस्मिन्नयं त्यागभोगप्रसाधकः ॥१२०॥
भूपते यानिभागाया योगक्षेमो मयाहृतः ।
एवं कष्टनिवृत्ती निर्णयोऽपि प्रसिध्यति ॥१२१॥

असंतोषोऽपि भूताना विनश्यति न संशयः ।
अलसानां शठानां च विनाऽऽयासं विलुण्ठनम् ॥१२२॥
तेषामपि परार्थत्वाद्विलुप्यति न संशयः ।
मानवानां च सर्वेषां परमाराधनं त्विह ॥१२३॥
सिद्धं परमकर्तव्यं देहबुद्धिधनैरपि ।
तत्कर्तव्यव्यापृतानां सर्वेषां भोगदायतः ॥१२४॥
नान्ये भोगमिहार्हन्ति लुण्ठनं तु कुतः पुनः ।
तस्मात्सर्वैः प्रयत्नेन धनबुद्धिशरीरतः ॥१२५॥
श्रेयः प्रसाधनं कार्यं भूतानामिह निश्चयात् ।
अन्यथा त्वाचरन् शाठ्यान्म्लेच्छः स्याद्दुर्जनः पुनः ॥१२६॥
स साधुभिर्बहिष्कार्यो राजदण्डप्रवर्तकैः ।
केवलं देहभोगाय द्रव्याणामिह निर्मितिः ॥१२७॥
नेशस्याऽऽराधनार्थाय तस्माद्भोगं प्रसाधयेत् ।
इति येषां मतं तावत्तैरपीयं व्यवस्थितिः ॥१२८॥
अङ्गीकार्या स्वभोगाय नान्यथा भोगयोग्यता ।
सर्वारम्भा हि भोगाय कलहा भोगमूलकाः ॥१२९॥
तन्मूलको विनाशश्च भूतानामिह दृश्यते ।
किंच भोगेन या तृप्तिः सा न किंचिच्चिरंतनी ॥१३०॥
पुनरप्युपभोगाय यतन्ते त्विह जन्तवः ।
भोगेन वर्धते भोगो न प्रशाम्यति कर्हिचित् ॥१३१॥
स चेज्जीवितसाफल्यं कलहोऽपि तथा भवेत् ।
ईर्ष्यामात्सर्यदम्भादिगुणवृद्धिः क्रमेण तु ॥१३२॥
जगत्क्षयाय प्रभवेद्भोगवार्ताऽपि नो भवेत् ।
तस्माद्व्यवस्था सर्वेषां भूतानां जीवनाय तु ॥१३३॥
सर्वैरवश्यं स्वीकार्या चातुर्वर्ण्यात्मिका ध्रुवा ।
निरुद्योगत्वनाशाय वृत्तीनां यन्त्रणापि च ॥१३४॥
अवश्यमङ्गीकर्तव्या योगक्षेमसुखावहा ।
त्यागपूर्वकभोगस्य सिद्धान्ते स्वीकृते पुनः ॥१३५॥
नियन्त्रणा तु वृत्तीनामर्थादेव प्रसिध्यति ।
चातुर्वर्ण्यव्यवस्थेयं श्रेयः प्रेयः प्रसाधनम् ॥१३६॥

अभयादिगुणोत्कर्षाज्जगदानन्ददायिनी ।
चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः ॥१३७॥
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु ।
तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत् ॥१३८॥
स्वधर्मे संदधानो हि प्रेत्य चेह च नन्दति ।
व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः ॥१३९॥
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ।
ईशाराधनसंकेतादन्योन्यापेक्षया ध्रुवः ॥१४०॥
षड्वर्गसंयमाच्चैव नियमो धर्म ईरितः ।
षड्वर्गसंयमैकान्ताः सर्वा नियमचोदनाः ॥१४१॥
नियमाराधनेनैव संयतात्मा ततो भवेत् ।
अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित् ॥१४२॥
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ।
कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ॥१४३॥
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ।
क्रोधादीनामप्यवस्था तथैवेति सुनिश्चितम् ॥१४४॥
एषामात्यन्तिको नाशो न कदाचिदिति स्फुटम् ।
अतः संयममाश्रित्य नियमेन यथोदितम् ॥१४५॥
व्यापारयेदिन्द्रियाणि परमाराधनाय वै ।
विशेषतो वृद्धसेवा संयमायैव केवलम् ॥१४६॥
तस्माद्वृद्धान्निषेवेत ततः प्रज्ञागमो मतः ।
वृद्धाश्च मातापितरौ तथैव ज्ञानदो गुरुः ॥१४७॥
त्रयाणां सेवनादेव श्रेयः प्रेयश्च विन्दति ।
पित्रोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा ॥१४८॥
तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते ।
तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ॥१४९॥
न तैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् ।
त एव हि त्रयो लोकास्त एव त्रय आश्रमाः ॥१५०॥
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ।
सर्वे तस्याऽऽदृता धर्मा यस्यैते त्रय आदृताः ॥१५१॥

अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ।
त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते ॥१५२॥
एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते ।
इति मानवशास्त्रेऽपि वृद्धसेवाविधिः स्मृतः ॥१५३॥
तस्माद्वृद्धान्निषेवेत धर्मकामार्थसिद्धये ।
वृद्धावमानी सततं यथेच्छं स्वमते स्थितः ॥१५४॥
न स सिद्धिमवाप्नोति न प्रज्ञां न सुखं परम् ।
कदाचिदवमत्यैतान् कामाचाररता अपि ॥१५५॥
दृश्यन्ते सुखिनो लोके सुखं तच्चाऽऽसुरं मतम् ।
येन माता पिता वापि त्वाचार्यश्चापि पूर्वजः ॥१५६॥
नाऽऽराधिताः खलेनेह सेशमाराधयेत्कथम् ।
नाधर्मश्चरितो लोके सद्यः फलति गौरिव ॥१५७॥
शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ।
पापं कर्म कृतं किंचिद्यदि तस्मिन्न दृश्यते ॥१५८॥
तत्पुत्रेषु च पौत्रेषु नप्तृष्वपि च दृश्यताम् ।
अधर्मेणैधते लोके ततो भद्राणि पश्यति ॥१५९॥
ततः सपत्नान् जयति समूलं च विनश्यति ।
तस्मात्सन्मार्गमुत्सृज्य खलाभ्युदयदर्शनात् ॥१६०॥
अन्यमार्गाश्रयो नाम समाजमरणावहः ।
न तेन वृद्धो भवति येनास्य पलितं शिरः ॥१६१॥
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ।
विप्राणां ज्ञानतो ज्यैष्ठ्य क्षत्रियाणां तु वीर्यतः ॥१६२॥
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ।
देशकालार्थतत्त्वज्ञा ज्यैष्ठ्यमेवं समाश्रिताः ॥१६३॥
तस्यापि च समायोगात्प्रज्ञालाभः सुपुष्कलः ।
एवं क्रियां च विनयं समालभ्य हितेप्सुभिः ॥१६४॥
उत्थानं सर्वदा कार्यं योगक्षेमप्रयोजकम् ।
योगो ह्यलब्धलाभोऽत्र क्षेमं लब्धस्य रक्षणम् ॥१६५॥
तयोर्लाभः श्रमेणेह व्यायामेन च दृश्यते ।
आरब्धानां च कार्याणां फलसंप्राप्तिलक्षणः ॥१६६॥

प्रयत्नो यः स व्यायामो नीतिज्ञैः परिकीर्त्यते ।
कर्मणो फलभोगाय यः प्रयत्नस्त्वपेक्षितः ॥१६७॥
शमः स इति ह प्रोचुः नीतिशास्त्रविचक्षणाः ।
योगक्षेमार्थमेवेह प्रवृत्तिः प्राणिनां सदा ॥१६८॥
सा न शक्या विनायासं तस्माद्यत्नं समाचरेत् ।
उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ॥१६९॥
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।
अलब्धं चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः ॥१७०॥
रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत् ।
दैवमेके परे कर्म स्वभावमपरे पुनः ॥१७१॥
कालं केचित्तथा योगक्षेमसाधनमाश्रिताः ।
फलसिद्धिः क्वचिद्दैवात्कर्मणो वापि कुत्रचित् ॥१७२॥
स्वभावात्कालवशतो दृश्यते नात्र संशयः ।
स्वभावमाश्रित्य च कालयोगम् ।
वपेद्यथावत्किल कर्मबीजम् ॥
न चोपरेपूप्तमिहेष्टलाभम् ।
न चाप्यकाले प्रददाति बीजम् ॥१७३॥
सर्वं कर्मेदमायत्तं विधाने दैवमानुषे ।
तयोर्दैवमचिन्त्यं स्याद्विधाने मानुषे क्रिया ॥१७४॥
दैवे पुरुषकारे च सर्वं परिसमाप्यते ।
लोकयात्रा विना ताभ्यां दृश्यते न कदाचन ॥१७५॥
तथाप्यदृष्टकारित्वाद्दैवचिन्ता निरर्थिका ।
अथानयौ तदायत्तौ तत्र नो मनसो गतिः ॥१७६॥
तस्मात्पौरुषमालम्ब्य इष्टहेत्वर्थलाभतः ।
नयानयौ चिन्तनीयौ योगक्षेमार्थसिद्धये ॥१७७॥
योगक्षेमप्रसक्तानामिन्द्रियाणां तु सर्वदा ।
कामक्रोधादिसंबन्धात्पतनं संभवेद्ध्रुवम् ॥१७८॥
इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं जगत् ॥१७९॥

वाग्दण्डयोश्च पारुष्यमर्थदूषणमित्यपि ।
संमोहः स्मृतिनाशश्च संभवन्ति प्रकोपतः ॥१८०॥
पानमक्षाः स्त्रियः सूना दिवास्वापो मदस्तथा ।
वृथा पर्यटनं वादः संभवन्ति हि कामतः ॥१८१॥
असतां प्रग्रहः कामः कोपश्चावग्रहः सताम् ।
व्यसनं दोषबाहुल्यादत्यन्तमुभयं मतम् ॥१८२॥
तस्मात्कोपं च कामं च व्यसनारम्भमात्मवान् ।
परित्यजेन्मूलहरं वृद्धसेवी जितेन्द्रियः ॥१८३॥
द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः ।
तं यत्नेन जयेल्लोभं तज्जावेतावुभौ स्मृतौ ॥१८४॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥१८५॥
गीताशास्त्रेऽपि भगवानेवमेवाऽऽह सर्वशः ।
योगक्षेमप्रसक्तेन त्याज्यमेतत्त्रयं ततः ॥१८६॥
आलस्यमल्पसंतोषो दीर्घसूत्रित्वमेव च ।
एतान् दोषान् त्यजन् प्राज्ञः सर्वेष्टफलसिद्धिभाक् ॥१८७॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि कालः प्रतीक्षेत कृतमस्य न वा कृतम् ॥१८८॥
अकाले हि कृतं कर्म सद्योनाशमवाप्नुयात् ।
कालस्यातिक्रमे तावत्कालः पिबति तद्रसम् ॥१८९॥
यथाकालं समुत्थाय ह्यारम्भानारभेत वै ।
दूरदृष्टिं समाश्रित्य ततः फलमवाप्नुयात् ॥१९०॥
सहायाः साधनोपाया विभागो देशकालयोः ।
विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥१९१॥
इति पञ्चाङ्गमालोक्य कार्यारम्भं विचिन्तयेत् ।
अनालोक्य तु पञ्चाङ्गं कार्यारम्भं करोति यः ॥१९२॥
अन्ते मध्ये च सर्वत्र पङ्के गौरिव सीदति ।
स्वभावतो विचित्राणां साहाय्यं स्वार्थहेतुतः ॥१९३॥

विना स्वार्थं न कोऽप्यत्र कस्यचिद्धितमाचरेत् ।
तस्मात्परार्थमालम्ब्य परमाराधनात्मकम् ॥१९४॥
तद्द्वारैव निजौ सम्यग् योगक्षेमौ प्रसाधयेत् ।
समदुःखसुखो जन्तुर्मित्रतां लभते ध्रुवम् ॥१९५॥
साहायकं तु तस्यैव निर्विकारं निगद्यते ।
अपरे स्वार्थवशतः साहाय्यमपि कुर्वते ॥१९६॥
तथापि तन्निर्विकारं कदाचिदपि नो भवेत् ।
अगत्या तद्ग्रहे तत्र यावत्कार्यं तु संग्रहः ॥१९७॥
कार्यावसाने तस्यापि त्यागः साम्ना विचिन्तयेत् ।
यत्र यस्य तु सामर्थ्यं तदर्थं तस्य संग्रहः ॥१९८॥
अन्यत्र तु नियुञ्जानः स्वार्थाद्भ्रष्टो भवेत्पुनः ।
अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् ॥१९९॥
अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ।
आयत्यां च तदात्वे च समदुःखसुखः पुमान् ॥२००॥
कार्यक्षमो विनीतश्च संग्राह्यः सर्वथा मतः ।
एवं सहायान्संपाद्य विनीतात्मा जितेन्द्रियः ॥२०१॥
आरम्भानारभेताऽऽशु योगक्षेमप्रसाधकान् ।
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ॥२०२॥
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ।
वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा ॥२०३॥
सर्वान् संसाधयेदर्थान् अक्षिण्वन्योगतस्तनुम् ।
धर्ममर्थं च कामं च व्यवहारार्थसिद्धये ॥२०४॥
तत्तत्कालोचितं गृह्णन् योगक्षेमौ प्रसाधयेत् ।
नैकत्रात्यन्तसंसक्तिः कदाचिदपि श्रेयसी ॥२०५॥
पुरुषार्थास्तथाऽऽत्मानं तानाश्रित्य प्रपीडयेत् ।
न धर्मो न च कामो वा तथाऽर्थोऽपि न केवलः ॥२
श्रेयःश्रेयोग्रहः सम्यक् त्रिवर्गस्तु यथा भवेत् ।
इमं लोकममुं चैव त्रिवर्गात्प्रतिपद्यते ॥२०७॥
एकैकसेवने नित्यं भवार्थानां निपीडनम् ।
न जातु कामः कामानामुपभोगेन शाम्यति ॥२०८

हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥२०९॥
एकस्यापि न पर्याप्तं तदित्यतितृपं त्यजेत् ।
विषयाणां परित्यागात्संयमो न कदापि हि ॥२१०॥
त्यागमात्रेण मनसः शान्तिं नाप्नोति कर्हिचित् ।
तस्माज्ज्ञानेन संयम्य भोगेन परिपालयेत् ॥२११॥
इन्द्रियाणि मनश्चैव न त्वन्या विद्यते गतिः ।
त्यागपूर्वकभोगस्तु संभवेदेवमेव हि ॥२१२॥
त्रिवर्गसेवनं तस्मात्कार्यं नित्यं मनीषिभिः ।
भोगेच्छामूलकं विश्वं सदेवासुरमानवम् ॥२१३॥
भोगेन वर्धते नित्यं भोगादेव विलीयते ।
आदावन्ते च मध्ये च भोगेच्छैव प्रधानतः ॥२१४॥
चराचरस्य जगतः कारणं तु निगद्यते ।
परमात्मा हृषीकेश आत्मारामोऽपि सर्वशः ॥२१५॥
एकाकी स्वस्वरूपे तु यदा नारमत स्वयम् ।
तदाऽभ्यलपताऽऽत्मानं बहुरूपेण संस्थितम् ॥२१६॥
स एव सृष्टेरारम्भो वासनोपक्रमः स्मृतः ।
स वासनात्मा विषयोपरक्तः ।
गुणप्रवाहेण विभक्तवीर्यः ॥
नामानि रूपाणि च जन्मकर्मभिः ।
चर्यां नटस्येव तनोति विद्वान् ॥२१७॥
एवं चराचरं विश्वं भोगेच्छामूलकं मतम् ।
भोक्ता तु पुरुषः प्राणो भोग्यं सर्वं ततः परम् ॥२१८॥
प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् ।
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥२१९॥
भोक्तृभोग्यत्वसंबन्धः सर्वेषां तु परस्परम् ।
सर्वे सर्वस्य भोक्तारः सर्वं सर्वस्य भोजनम् ॥२२०॥
सर्वे सर्वेभ्य उत्पन्नाः सर्वे सर्वोपकारकाः ।
न कश्चिन्निरपेक्षोऽत्र वासनाक्रमवर्जितः ॥२२१॥

पृथिव्यादीनि भूतानि भूतानां मधु कीर्तितम् ।
भूतजातं तु भूतानां मधुत्वेन निगद्यते ॥२२२॥
चराचरं जगत्सर्वमन्योन्यमधु कीर्तितम् ।
आरण्ये बृहदाख्याते स्पष्टं वाजसनेयिनाम् ॥२२३॥
तस्माद्भोक्तृत्वभोग्यत्वसंवन्धोऽयं परस्परम् ।
सर्वस्य भूतजातस्य नापह्नोतुं हि शक्यते ॥२२४॥
योऽपि भोक्ता भोग्यजाते परमादरमावहेत् ।
सोऽपि नो भोग्यजाताय किंतु भोगाय केवलम् ॥२२५॥
यच्च भोग्यं वस्तु जातं भोगं नार्पयति क्वचित् ।
तत्र त्वनादरो दृष्ट आवालपशुपक्षितः ॥२२६॥
यथा पतिः स्त्रियो भोक्ता स्त्री तथा पत्युरेव च ।
एवं चराचरं सर्वं भोक्तृभोग्यत्वलक्षणम् ॥२२७॥
एवं निसर्गतः सिद्धे भोक्तृभोग्यत्वलक्षणे ।
राद्धान्ते परिणामोऽत्र द्विधा हि परिदृश्यते ॥२२८॥
व्यष्टिरूपेण चाऽऽत्मानं भोक्तारं योऽभिमन्यते ।
स्वातिरिक्तं वस्तुजातं भोग्यत्वेनैव पश्यति ॥२२९॥
तदा परेषामिच्छाया विघातं तु पदे पदे ।
करोति तेन दुःखानि विचिनोति च सर्वशः ॥२३०॥
यदा समष्टिरूपेण भोग्यमात्मानमिच्छति ।
तदा परेच्छातृप्त्यर्थं यतते सुखमेधते ॥२३१॥
परस्परापेक्षितानां भूतानामिह सर्वदा ।
व्यवहारः प्रचलति गिरिकन्दरशब्दवत् ॥२३२॥
सुखं वा यदि वा दुःखं नरो यद्यत्प्रपद्यते ।
न तत्परेभ्यः स्वस्यैव कर्मणः फलमेव तु ॥२३३॥
तस्माद्भोगप्रदानाय यतेतेह विचक्षणः ।
भोगादानं कदापीह न कुर्यान्मनसि क्वचित् ॥२३४॥
भोगप्रदाने भोगानामादानमिह सिध्यति ।
भोगादाने नैव भोगा न शान्तिर्न सुखं चिरम् ॥२३५॥
व्यष्टेः समष्टौ तु लयः सहजः परिदृश्यते ।
व्यष्टौ समष्टेस्तु लयः कदाचिदपि नो भवेत् ॥२३६॥

तरङ्गाः सागरे यान्ति न तरङ्गेषु सागरः ।
तथाऽपि सागरा भोगास्तरङ्गान् प्राप्नुवन्ति हि ॥२३७॥
नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्न तु ।
सर्वभूतेषु मित्रत्वमावहेत प्रयत्नतः ॥२३८॥
न जातु कस्यचिद्द्रोहमाचरेद्बुद्धिमानिह ।
आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम् ॥२३९॥
एवं भोग्यत्वमालोक्य भोगानाचिनुयान्नरः ।
भोगैश्च लोकसंतोषं परमाराधनं हि तत् ॥२४०॥
लोकाराधनसेवायाः फलं स्वस्यैव जीवनम् ।
मार्गेणानेन सततं योगक्षेमौ प्रसाधयेत् ॥२४१॥
न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ।
अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥२४२॥
न लोकवृत्तं वर्तेत वृत्तिहेतोः कथंचन ।
सत्यधर्मार्यवृत्तेषु शौचे तिष्ठेत्प्रयत्नतः ॥२४३॥
एवं समाहितमतिः सुविनीतो जितेन्द्रियः ।
ईहेत धर्मकामार्थानुपायैस्तु यथाविधि ॥२४४॥
विनयविजितचित्तः साधु सर्वेन्द्रियार्थः ।
करणविहितकार्यः शक्तिमान् सूक्ष्मदर्शी ॥
निजजनपरितोषं वैरनिर्यातनं च ।
झटिति कलयतीह प्राप्यते चार्थकामैः ॥२४५॥ इति ।

अत्र च यद्यपि चातुर्वर्ण्यं कार्यपरतया निर्दिष्टम् । तथापि जन्मसिद्धत्वं चास्य नापलप्यते इयान् विशेषो यज्जन्मसिद्धत्वेऽपि तस्य कार्यप्रसङ्गे कार्यकारित्वेनैव संग्रहान्नीतिविदा तत्तत्कार्यसामर्थ्यमालोच्यैव तत्र तत्र विनियोक्तुं सांप्रतम् । न तु केवलजातिमात्रेण । यदि च जात्यभिनिवेशस्तदा तु तत्तज्जात्यभिमानिभिस्तत्तत्कार्यसामर्थ्यसंपादनेन परमेशाराधनसंनद्धैर्भवितव्यम् । इतरथा तु केवलमाहारविवाहाद्यदृष्टफलककार्येष्वेवं तदभिमानः सावसरः । न तु परमेशाराधनात्मकसमष्टिकार्ये । एवं च जात्युत्कर्षप्रकाशाय कार्यसामर्थ्यसंपादनमेव परमोपाय इति तत्रैव प्रयतनीयम् अतः परं तस्यैव विचारः प्रामुख्येन करिष्यते । यथा जन्मसिद्धमिदं चातुर्वर्ण्यं कर्मानपेक्षं वा कर्मसापेक्षमेव वा जगद्यात्रानिर्वाहकं भवत्युत वा नास्त्यपेक्षा तस्येति तदर्थं चातुर्वर्ण्यप्रतिबिम्बमादर्शयामः ।

इति निगदितमेतच्छास्त्रपुञ्जं विलोक्य ।
सकलजनहितं यन्नीतितत्त्वं सुधायाम् ॥
समुपनयतु चैतन्मानसं भारतानाम् ।
सुपथमुपचितं वै धर्ममोक्षार्थकामैः ॥१॥
गुणदोषावुभावेतौ भासेते तद्गतामिह ।
गुणदोषोभयातीतो दुर्लभोऽत्र विचक्षणः ॥२॥
मा धारयन्त्वत्र च दोषदृष्टिं मुधा बुधा लोकविचक्षणा ये ।
मा चानुगृह्णन्तु गुणैकदृष्ट्या यथायथं तत्त्वमिदं विचार्यम् ॥३॥
वसुपद्वसुभूशाके तपस्यस्यासिते रवौ ।
पण्डिताख्यो देवकृष्णो भद्राया पूर्तिमादधे ॥
अनेन नयतत्त्वेन सर्वलोकोपकारिणा ।
प्रीयतां देवदेवेशो मर्यादापुरुषो हरिः ॥४॥

श्री संतोजि महाराजादि प्रचाल्यमान सनातनधर्मोज्जिविनीसभा संपादिते
पण्डितोपाह्वकेशवसूनुदेवकृष्णशर्मणा विरचिते
धर्मादर्शे नीतिप्रतिबिम्बः ॥

॥ श्रीः ॥

# ॥ धर्मादर्शः ॥

## चातुर्वर्ण्यप्रतिबिम्बः (३)

समुद्भूतो दशरथाच्चरन्नेकरथः पुनः ।
सीतारामो विजयते सुप्तशक्तिप्रबोधकः ॥१॥

## (उपोद्घातः)

तदेवं सिद्धे खलु दण्डनीतेर्धर्मप्रामाण्ये तदनुसारेण धर्मार्थकामरूपत्रिवर्गस्यान्योन्यानुबन्धित्वं परस्परानुपघातकत्वं च व्याख्येयम् । तच्च यदि चातुर्वर्ण्यसमाजव्यवस्थामन्तराऽपि सिध्येत्, तर्हि निष्प्रयोजनेयं समाजव्यवस्था स्यात् । न चादृष्टार्थकधर्मक्रियाणां तत्तज्जात्युद्देशेन विहितत्वात्तदर्थं साऽऽवश्यिकेति वाच्यम् । तादृशक्रियाणां योगक्षेमसाधनत्वाभावेनाकिंचित्करत्वात् । यास्त्वहिंसादयः सर्वसामान्यधर्मत्वेन विहितास्तासां शास्त्रैकगम्यत्वेऽपि जात्युद्देशेन विधानाभावाच्चातुर्वर्ण्यव्यवस्था निरपेक्षत्वात् । यत्तु भोग्यसंपत्त्युत्पादकत्वेन भोगसंविभागानुकूलत्वेन च तादृशव्यवस्थायाः समादरणीयत्वं प्रतिपाद्यते कैश्चित् । तदातितुच्छम् । तादृशव्यवस्थामन्तराऽप्यन्यदेशीयसमाजव्यवहाराणामव्याहतत्वात् । न हि तत्र तत्र प्रदेशे न वा भोग्यसंपत्त्युत्पादनम्, न वा भोगसंविभागः । एवमपि पृथक् चातुर्वर्ण्यव्यवस्था तु न कुत्राप्यपेक्ष्यते । तत्किमिति भारतवर्ष एव तादृशी व्यवस्था परिपालनीया । येन योगक्षेमासौकर्यं स्यात् । तद्वरं मानवतापरिपालनमेव श्रेयः । भोग्यसंपत्त्युत्पादनादिकं तु परस्परापेक्षया स्वभावत एव भविष्यति । अतश्चाकिंचित्करीयं समाजव्यवस्थेति जोघुष्यते किलेदानीं सर्वैरस्मदीयैरपि । वैदिकमतानुसारिदण्डनीत्यां तु समाजरचनेयं तत्र तत्र जोघुष्यते । तत्किमत्र तात्पर्यम् । अथवा तच्छास्त्रस्याज्ञानमिदमाहोस्विच्छास्त्रकाराणां समाजशास्त्रानभिज्ञत्वम् । किंवाऽस्ति किलादृष्टमात्रार्थकजातिविहितकर्मणामपि योगक्षेमसाधनत्वम् । इत्येवं पर्यालोचनमन्तरा न धर्मतत्त्वं सिध्यतीति तदर्थं किंचित्प्रयतामहे ।

सत्यं नान्यत्र प्रदेशे एतादृशी समाजव्यवस्था । तथापि सर्वव्यवहारसौकर्यं वर्तत एव । अत्र वैदिकदण्डनीतौ तु—

व्यवस्थितार्थमर्यादः कृतवर्णाश्रमस्थितिः ।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ॥
जित्वा च पृथिवीं विभक्तवर्णाश्रमां स्वधर्मेण भुञ्जीत ।
चा. अर्थशास्त्रे १४४ अध्याये ।

तत्र तत्र वर्णाश्रमव्यवस्थासमुद्घोषः श्रूयते । न च तादृशनीतिकाराणां तच्छास्त्राज्ञानं कल्पयितुं सांप्रतम् । तदतिरिक्तानां मनुष्यस्वभावानुसारिणां दण्डनीतितत्त्वानामद्यावधि कैरप्यदर्शितत्वात् । तादृशतत्त्वप्रचारार्थं साधनाधिक्यमेवेदानीं तत्र तत्र प्रतीयते न तु नूतनतत्त्वोद्घोषः । न च भारतवर्षातिरिक्तदेशानामज्ञानम् ॥

" देशदैवतसमाजोत्सवविहारेषु च भक्तिमनुवर्तेत "

(चा. अ. १४५ अ.) इत्यत्र देशदैवतोत्सवभक्तेरनुवर्तनविधानात् । नाह वैदिकधर्मातिरिक्तधर्ममन्तरा देशदैवतभेदो भवितुमर्हति । तस्मादेतादृशी कल्पना वावदूकप्रजल्पनमेव । तस्मादस्ति किंचित्तत्त्वं तन्मूलमित्यवश्यमेवाभ्युपेयम् ।

## ( चातुर्वर्ण्यस्य मूलभूतं तत्त्वम् )

वयं तु ब्रूमो न त्यागादन्यत्किमपि तत्त्वं मूलभूतं भवितुमर्हति । वर्णाश्रमव्यवस्था हि धर्मत्वेन तत्र तत्र प्रतिपाद्यते । धर्मश्च तपोज्ञानयज्ञदानैश्चतुष्पात्समग्रो विधीयते । तत्रापि कलौ युगे दानस्यैव माहात्म्यं तदेकपात्त्वान्मनुना परिकीर्त्यते ।

चतुष्पात्सकलो धर्मः सत्यं चैव कृते युगे ।
नाधर्मेणाऽऽगमः कश्चिन्मनुष्यान् प्रति वर्तते ॥ मनु १।८१

अत्र कुल्लूकः—सत्ययुगे सकलो धर्मश्चतुष्पात्सर्वाङ्गसंपूर्ण आसीत् । धर्मे मुख्यपादासंभवात् " वृषो हि भगवान् धर्मः " इत्याद्यागम वृषत्वेन कीर्तनात् तस्य पादचतुष्टयेन संपूर्णत्वात् सत्ययुगेऽपि धर्माणां सर्वाङ्गैः समग्रत्वात्संपूर्णत्वपरोऽयं चतुष्पाच्छब्दः । अथवा तपः परमित्यत्र मनुनैव तपोज्ञानयज्ञदानानां चतुर्णां कीर्तनात्तस्य पादचतुष्टयेन संपूर्णत्वात् पादत्वेन निरूपिताः सत्ययुगे समग्रा इत्यर्थः । तथा सत्यं च कृतयुगमासीत् । सकलधर्मश्रेष्ठत्वात्सत्यस्य पृथग् ग्रहणम् तथा न शास्त्रातिक्रमेण धनविद्यादेरागम उत्पाद्यैर्मनुष्यान् प्रति संपद्यते । इति ।

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाऽऽहुर्दानमेकं कलौ युगे ॥ मनु १।८६

यद्यपि तपःप्रभृतीनि सर्वाणि सर्वयुगेष्वनुष्ठेयानि । तत्रापि सत्ययुगे तपः प्रधानं महाफलमिति ज्ञाप्यते । एवमात्मज्ञानं त्रेतायुगे, द्वापरे यज्ञः, दानं कलौ । इति कुल्लूकः ।

अनेन चेदं स्पष्टमवगम्यते यत्सत्यं दानं चेति द्वयमेव कलौ प्रधानो धर्मः। तत्र दानं नाम स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनानुकूलो व्यापारः। स च स्वीयत्वेनाभिमतभोग्यसंपत्तिविषयक एवेत्यन्ततो गत्वा त्यागे पर्यवस्यति। अत एव भोगदानमेव परो धर्मो न भोगग्रहणमिति पूर्वमेव विवेचितम्। अत एव च सर्वेषां धर्माणां त्याग एव पर्यवसानम्।

"त्यागेनैके अमृतत्वमानशुः"

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज॥

इति श्रुतिस्मृतिभ्यां परमोच्चत्यागरूपस्यैव प्रतिपादनात्। एवं भोगदानमिदं त्यागमन्तरा न संभवतीति तस्योत्तरोत्तरमभ्युत्कर्षलाभायैव तन्मूलकवर्णाश्रमव्यवस्था विहितेति निश्चीयते।

## (त्यागस्य समाजव्यवस्थामूलत्वे पूर्वपक्षः)

ननु न त्यागस्य समाजव्यवस्थामूलत्वं संभवति। आत्यन्तिकत्यागस्य कर्तुमशक्यत्वात् स्वभावविरोधात् सृष्टिवैफल्यप्रसङ्गात् तादृशत्यागस्य कुत्राप्यदर्शनाच्च। तथाहि—त्यागो हि भोगस्य भोग्यस्योभयोर्वा संभवति। तत्र भोगस्य भोगेच्छामूलकत्वाद्भोगोपकारकत्वेन भोग्योपादाने प्रवृत्तेश्च भोगेच्छानिवृत्तावेव त्यागनिवृत्तिर्नान्यथेति सुविशदमेव। भोगेच्छा च सुखेच्छैव न दुःखेच्छा। प्रवृत्तिकारणीभूतभोगेच्छाया विवक्षितत्वात्। दुःखात्मकभोगस्य तु नास्त्येवेच्छा कस्यापि जन्तोरिति न तदर्थं त्यागाद्युपदेशसंभवः। स्वभावत एव द्वेषस्य दुःखानुशयित्वात्त्यागोपपत्तेः। तस्मात्

"सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः"

इत्युक्त्यनुसारेण स्वभावत एव प्रवर्तमाना सुखात्मकभोगेच्छा विना सुखानुभवं नोपपद्यत इति तदर्थं तदनुभवोऽपि प्राक्तनः कल्पनीयः। स च वृत्तिव्याप्यस्वरूपेण विषयात्मक एवेति विषयेन्द्रियसंप्रयोगजन्य एव स्वीकर्तव्यः। अन्यथा विषये प्रवृत्त्यसंभवः। एवं च

द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते।
स कामश्चित्तसंकल्पः शरीरं नास्य दृश्यते॥

इति महाभारतवचनानुसारेण विषयेन्द्रियसम्पर्कजन्यानन्दानुभवात्मकः काम एव सर्वेषां प्रवृत्तिगोचरः पुरुषार्थ इति फलति। प्रीतेरानन्दात्मकत्वात्। एवं चैतादृशपुरुषार्थप्रवृत्तिरियं

"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः"

इति गौतमसूत्राद्वा

"अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः"
"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः"

इति पातञ्जलसूत्राभ्यां वा अविद्यापरपर्यायमिथ्याज्ञानमूलिकैवेति तन्नाशादेव निवर्तेत। तन्नाशश्च तत्त्वज्ञानात्। तच्च नाविद्यानिवृत्तिमन्तरेति परस्पराश्रयदोषान्न तादृशप्रवृत्त्युपरम इत्यनादिरेवेयं प्रवृत्तिरनन्ता चेत्यकामेनाप्यूरीकर्तव्यम्। एवं च भोगेच्छाया रागमूलकत्वे दुःखनिवृत्तेश्च द्वेषमूलकत्वे सिद्धे तन्मूलकक्रोधादीनामप्यनादित्वमिति न कस्याप्यात्यन्तिकस्त्यागः संभवति संसारे इत्यतस्तेषां सर्वेषामविरोधसंपादनेनैव संसारयात्रेयं निर्वोढव्येति सिध्यति। तत्र सर्वेषां रागद्वेषादीनां समानविषयकत्वासंभवात् प्राक्तनकर्मवशाद्वा स्वभावाद्वा प्रतिव्यक्ति वैचित्र्यात् सर्वेषां व्यक्तिस्वातन्त्र्यमवलम्ब्यैव समाजरचना विधेया। तथा च द्वेषविषये स्वभावतस्त्यागसंभवेऽपि रागविषये त्यागो न संभवतीति न त्यागमूलकत्वं समाजरचनायाः संभवति।

स्वभावविरोधादपि न त्यागस्य समाजरचनामूलत्वम्। रागिण एव शक्तस्य स्वभोग्यातिसर्जनमेव खलु त्यागः। न द्वेषमूलको वा वैराग्यमूलको वाऽशक्तिमूलकः। तथा सति वृक्षादीनां क्लीबानामलसानां च त्यागित्वापत्तेः। एवं च भोगमूलकत्वमेव त्यागस्य स्वभाव इति सिध्यति। अत एव—

देयस्य चापरिच्छित्तिर्दत्तस्यैवानभिज्ञता।
ददतो हर्षवृद्धिर्यस्स त्याग इति कीर्तितः॥

इति भावप्रकाशने तृतीयेऽधिकारे त्यागस्वरूपं निरूपितम्। स चायं त्यागो भोगमूलकत्वात् भोगफलत्वाच्च भोगात्मक एवेति तन्मूलकत्वं समाजरचनाया निरूप्यमाणमपि भोगमूलकत्व एव पर्यवस्यति। एवं च

त्यागः स्नेहस्य यस्त्यागो विषयाणां तथैव च।
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा॥ म. भा. शां. १६२।१७ इति

भोगविरुद्धत्यागस्य कदाप्यसंभवात्। आत्यन्तिकत्यागस्य च त्यागस्वभावविरुद्धत्वाच्च न त्यागस्य समाजरचनामूलत्वम्। अत एव—

नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥

इति मोहमूलकस्य दुःखमूलकस्य च त्यागस्य तामसत्वं राजसत्वं चोपवर्णितं संगच्छते भगवद्गीतायाम्।

किंच सत्यपि भोगाभिलाषे यदि त्यागः स्वनुष्ठेयः स्यात् सृष्टिवैफल्यमेव प्रसज्येत। नहि भोगेच्छामन्तरेण प्राणिनां सृष्टिः संभवति। सृष्टिश्च कर्मरूपा न भोगेच्छामन्तरेण। अत एव सृज्यमानप्राणिकर्मवशादादौ संकल्पः परमेश्वरस्यापि "तदैक्षत बहु स्यां प्रजायेयेति" पञ्चदश्यामपि—

कुर्वते कर्म भोगाय कर्म कर्तुं च भुञ्जते।
नद्यां कीटा इवाऽऽवर्तादावर्तान्तरमाशु ते॥
व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम्॥ इति॥

तस्मात्—ज्ञानपूर्वा भवेल्लिप्सा लिप्सापूर्वाऽभिसंधिता
अभिसंधिपूर्वकं कर्म कर्ममूलं ततः फलम्॥

म. भा. शां. मो. २०६।६ इति महाभारतवचनात्

संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः।
व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः॥ मनु २।३

इति मनुवचनाच्च सर्वकर्मणां संकल्पमूलकत्वात्सृष्टेरपि संकल्पमूलकत्वं सिध्यति। स च संकल्पो भोगविषयक एवानादिरावर्तमानो लिप्सामुत्पादयति भोग्यस्येति तदर्थमेव भोग्यरूपा सृष्टिरुत्पादिता।

तदुक्तम्—तद्भोगाय पुनर्भोग्यभोगायतनजन्मने।
पञ्चीकरोति भगवान् प्रत्येकं वियदादिकम्॥

इति भोगायैव भोग्यसृष्ट्युत्पादनमुपवर्ण्यमानं पञ्चदश्यामुपपद्यते। यदि पूर्वोक्तात्यान्तिकत्यागस्यैव समाजरचनामूलत्वं स्यात्तदा तु सृष्टेरुपभोगफलकत्वमिदं निरुच्यमानं व्यर्थमेव स्यात्। ननु येषां किल नाविद्यादिनिवृत्तिस्तेषामेवोपभोगार्थमिदमिति नैतावता न त्यागमूलकत्वमिति कल्पनं सांप्रतम्। अनेकविधदुःखमयसंसारानुभवेन विरक्तानामपि बहूनां त्यागित्वदर्शनादिति चेन्न। तादृशत्यागिनां कृते समाजरचनाया वैफल्यात्। न च संसारिणाऽपि तथात्यागिना भवितव्यमित्येतदर्थमेव समाजरचनायास्त्यागमूलत्वमिति वाच्यम्। त्यागसंसारित्वयोः परस्परविरोधस्य पूर्वमेवोपपादनात्। संसारस्य दुःखजनकत्वे गृहीत एव द्वेषविषयत्वेन त्यागसंभवात् तदभावे च संसारात् समाजरचनायाश्च संसारनिर्वाहकत्वात्त तद्द्वेषमूलकत्यागहेतुत्वमिति स्पष्टमेव।

किंच त्यागिनामपि क्षुधातृषानिवारणार्थमन्नपानाद्युपादानमुपलभ्यते। नहि सहजद्वंद्वमिदं क्षुत्तृडात्मकं यावज्जीवं केनापि समुच्छेत्तुं शक्यम्। अत एव—

"सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान्"

इत्यादि गृहस्थाश्रममाहात्म्यं तत्र तत्र जेघुष्यते।

"शरीरयात्रापि च ते न प्रसिध्येदकर्मणः"

इति भगवद्गीतायामपि । तयदि शरीरमात्रनिर्वाहकभोग्यसंपत्त्युपादानमावश्यकमेव सर्वेषाम् । तत्कथं नामाऽऽत्यन्तिकत्यागसंभावनेति सुधीभिरालोचनीयम् । तस्माद्या काऽपि रचना भवतु समाजस्य, तत्र सर्वत्र भोगमूलकत्वमेवाभ्युपेयमगत्येति सिध्यति ।

तदेवं भोगेच्छायाः स्वाभाविकत्वे तन्मूलकानां क्रोधलोभद्रोहेर्ष्यासूयामात्सर्यादिविकाराणामपि स्वाभाविकत्वेन त्यक्तुमशक्यत्वाद्यथायथं व्यवहारोपयोगित्वमेवाभ्युपेयम् । तथा च तादृशविकार-निग्रहात्मकानुशासनमूला या कापि समाजरचना अस्वाभाविकत्वाद्धेयैवेति सिध्यति ॥

## ( व्यक्तिप्रधानसमाजवादः )

नन्वेवं भोगमूलकसमाजरचनाया भोगस्य प्रतिव्यक्ति वैचित्र्यात् व्यक्तेश्च भोगस्वातन्त्र्यात् साधुत्वासाधुत्वविवेकहीनत्वं स्यादिति चेन्न । साधुत्वासाधुत्वविवेकस्य निर्णेतुमशक्यत्वादिष्टापत्तेः । न हि कुत्रापि केनापि पदार्थानामेकान्तेन साधुत्वं वाऽसाधुत्वं निर्णेतुं शक्यम् । न हि केऽपि भोग्याः पदार्थाः सर्वथा हेया वोपादेया इति कथमपि निर्णयः संभवति । सर्वेषां प्रकृत्युपादानत्वेन त्रिगुणात्मकत्वात् । एवं च बुद्धेरपि त्रिगुणात्मकत्वेन तत्परिणामस्य भोगात्मकानन्दवृत्तेरपि तत्त्वेन स्वानुगुणभोग्योपादानेन सर्वेषामपि यथावत्सर्वेभ्यो भोगोपलम्भे किं वा त्याज्यं ग्राह्यं वा स्यायेन कस्यचित्साधुत्वं कस्यचिदसाधुत्वं परिकल्प्येत । अत एवोक्तं भगवद्गीतायाम्—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ अ. १८

महाभारतेऽपि—

नात्यन्तं गुणवत्किंचिन्न चाप्यत्यन्तनिर्गुणम् ॥ इति

नन्वेव मद्यपानादिष्वपि सुखसाधनत्वेन प्रवृत्तिर्दुर्निवारेति चेन्न । इष्टापत्तेः । नहि मद्यपान-मेकान्तेनाहितकारकमेवेति निश्चेतुं शक्यम् । आरोग्यशास्त्रे तदुपादेयत्वोपदेशात् । यत्तु धर्मशा-स्त्रेण तत्प्रतिषेधनम् । तदपि न सर्वेषाम् । किंतु द्विजातिविषयकमेव तदिति सुविशदमेव । एवं च भोग्यसंपत्तेः सदसत्त्वनिर्णयोऽप्य भोगाधीन एवेति यदा यस्य यस्माद्भोगस्तदा तं प्रति तत्साधु इत्येवाभ्युपेयम् । तथा च सदसत्त्वमपि पदार्थानां काममूलकमेवेति काम एव सर्वारम्भमूलम् ।

नन्वेवं व्यक्तिविशेषाद्भोगविशेष इति सिद्धौ भोगे व्यक्तिस्वातन्त्र्यमेव स्यात् । तदुपगमे च सर्वेषां स्वातन्त्र्यसिद्धौ कुतः पुनः समाजसिद्धिः । एवं च समाज-रचनातत्त्वनिर्धारणे प्रवृत्तानां समाजाभावसाधकत्वापत्तिरिति चेन्न । भोगस्य समाजरचनामूलत्वे भोग्यसंपत्तिसापेक्षत्वेन भोग्ये च मनुष्याणामप्यन्तर्भावाद्यदा यस्य भोगो यत्पुरुषसापेक्षः,

तदा तस्य तेन सह योगक्षेमनिर्वाहकत्वेन सहयोगक्षेमनिर्वाहकत्वरूपसमाजस्य संभवात् । यथा हि पुरुषस्य भोगः स्त्रीसापेक्षस्तथा स्त्रिया अपि भोगः पुरुषसापेक्ष इत्युभयोरपि सहयोगक्षेमनिर्वाहकत्वेन कुटुम्बरूपसमाजसंस्थासिद्धिः स्यादेव। न चैवं व्यक्तिस्वातन्त्र्यबाधः। यावदुपकारमेव परस्परसापेक्षतास्वीकारेण भोगाप्राप्तावुभयोरपि पृथक् भवने स्वातन्त्र्यात् ।

नन्वेवं व्यक्तिस्वातन्त्र्ये परस्परभोगमूलकसंघर्षसमुत्पत्तौ नियामकाभावादसत्याद्यनीतिप्रवृत्तौ चान्ततो गत्वा बलमेव नियामकं स्यात् । ततश्च सर्वं बलवतो न्याय्यमिति न्यायेन मात्स्यन्याय-प्रवृत्तौ दुर्बलपरिरक्षणं न स्यादिति चेन्न । दुर्बलानां बलवद्भोग्यत्वस्यैव न्यायात् । तदभावे च तेषां विनाशे न कापि परिदेवना । नहि पशवो दुर्बला इति मानवैर्न हन्यन्ते न वाऽऽग्रास्यन्ते । किंवा मृगैरपराद्धं मानवानां येषां शब्दादिविप्रलम्भेन मृगया क्रियते । तस्माद्दुर्बलघातोऽयमना-दिरनन्त एवाद्यावधि प्रचलितो वर्तते । तदपाकरणं चेद्दुर्बलैर्बलवतां भोग्यत्वमेव स्वीकर्तव्य-मित्येवं स्वभोगार्थं प्रबलैस्तेषां परिपालनं विधीयेत । ये तु संघप्रधानसमाजरचनायाः पुरस्कर्तारस्ते-षामप्ययं मात्स्यन्यायो दुष्परिहर एव । तत्रापि प्रबलसंघस्य दुर्बलसंघाक्रमणादिकमव्याहतमेव वर्तते । एवं च संघविनाशापेक्षया व्यक्तिविनाशस्य लाघवादेव तदुपादानमनुमतं स्यात् । नहि पश्वादीनां बलादन्ययोगक्षेमसाधनं भवति । सृष्टिरपीयं बलादेव धार्यते तत्सर्वत्र जीवने बलस्यैव हेतुत्वात्तदभाव एव रोगादिप्रादुर्भावेनान्ते मरणदर्शनाच्च बलमेव योगक्षेमनिर्वाहकमकामेनाप्यूरीक-र्तव्यम् । संघवादे च बलस्यापि संघीकरणेन महाननर्थापात इति तदपेक्षया व्यक्तिप्राधान्यवादेन समाजपरिकल्पनमिदं श्रेयोवहमित्येव सिध्यति । अत्रैव च समाजरचनायां वस्तुगत्या यथावत्स्वा-तन्त्र्यं समता च सिध्यति न संघवादे । संघपारतन्त्र्येण स्वेच्छाया नियमनात् । समता च संघ-वादे नाममात्रमेव । नहि सर्वेषां सर्वकार्यकर्तृत्वसामर्थ्येऽपि तादृशकर्तृत्वं तत्र संभवति । संघभोगार्थं प्रवृत्तौ नियम्यनियामकभावस्यावश्यंभावात् । तमन्तरेण संघरचनाया अनिर्वाहात् ।

नच भोगादिवत् प्रेमादीनामपि विकाराणां सहजत्वात्तदनुसारेण संघे स्वार्थत्यागादीनां स्वेच्छापूर्वकत्वेन दुःखाजनकत्वान्न पारतन्त्र्यमिति वाच्यम् । प्रेम्णोऽपि भोगमूलकत्वाद्यावदुपभोगमेव तदुपलम्भेऽप्येकान्तेन तथाऽसंभवादन्ते संघपारतन्त्र्यदुःखस्यानिवार्यत्वात् । अत एव स्वमरणसंभाव-नायां स्वसंततिमारणेनापि स्वात्मा संरक्ष्यते श्वापदैरपीति मर्कटकथाऽत्रानुसंधेया । अत एव नीतिविदोऽपि—

आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥

इत्याहुः । युक्तं चैतत् । स्वात्मनः सर्वातिशयप्रेमास्पदत्वात् । तदर्थे पृथिवीत्यागोऽपि श्रेयः किमुत संघत्यागः । सर्वथा तु स्वात्मभोगार्थमेव सहजा प्रवृत्तिः । न परार्था भवितुमर्हतीति सर्वथा संघवादोऽयं समयसिद्धो न नैसर्गिक इति हेय एव ।

## ( संघप्रधानसमाजरचनावादः )

अत्रापरे संघप्रधानसमाजरचनावादिनः प्रत्यवतिष्ठन्ते । सत्यं भोगस्य परसापेक्षत्वेऽपि व्यक्तिनिष्ठत्वात्तदनुरोधेन व्यक्तिप्राधान्यं सेत्स्यति । नैतावता सर्वेषां भावविकाराणां परिसमाप्तिः । भोग्यस्याऽऽनन्त्येन भोगानन्त्यात् । तथाहि भोग्यं च वस्तुजातं स्थावरजङ्गमादि सर्वमेव जगदित्यन्ततः पर्यवस्यति । तत्र भोग्यजाते सोपाधिकः प्रेमापि नापह्नोतुं शक्यः । एवं यत्र यस्य प्रीतिस्तयाऽऽकृष्टः स सर्वमपि स्वीयं त्याज्यं मत्वा यावत्तेन तन्मयो भवतीति नातिरोहितम् । नो चेद्बाल्ये मात्रादिभिः क्रियमाणं बालसंगोपनमापामरं दृष्टिगोचरो न स्यात् । नहि तत्र तदानीं विद्यमाना प्रीतिः प्रत्युपकारसापेक्षा भवितुमर्हति प्रत्युत दुःखापादकत्वाद्द्वेषानुशयिनी स्यात् । परंतु स्वीयखाद्यपेयस्वापादिनियन्त्रणं स्वेच्छापरिकल्पितं सोढ्वापि बहुतरायासपरिपालनपूर्वकं बालपरिपालनं क्रियमाणं दृश्यते न तन्निरपेक्षप्रेमान्तरा भवितुमर्हति । न च तत्रापि कोमलशरीरस्पर्शालापादिजनितानन्दसंवेदनात्मकभोगलाभात्तथा प्रवृत्तिरिति वाच्यम् । तस्य बालकर्तृकत्वाभावेनान्योन्यसापेक्षभोगत्वाभावात् । नैसर्गिकबालशरीरस्य कोमलालिङ्गनालापादिसुखजनकत्वेऽपि बालस्य बुद्धिपूर्वं तत्र प्रवृत्त्यभावेन तन्निरपेक्षत्वात् । तिरश्चामप्येतद्दृश्यते । एवमेवेतरत्रापि पश्वादिभोग्यसंपत्ती तत्कर्तृकभोगाभावेऽपि तज्जन्यभोगाभिलाषसत्त्वेन निरपेक्षभोगसंभावनायां तत्संगोपनेन संघसिद्धिर्दुर्निवारैव । एवं च भोगमूलकप्रेमैव संघोत्पादकमिति सिध्यति । एवं च न परस्परसापेक्षभोगमूलकत्वं संघस्याव्यभिचारेण सिध्यतीति न व्यक्तिप्राधान्यं समाजस्य भवितुमर्हति ।

एवं च स्वभावमूलकत्वमपि समाजरचनायाः सिध्यति । स्वोत्पत्तिकाले स्वाभिलषितभोगसंपादने प्रायः सर्वेषामपि अशक्तत्वात् । तत्र च स्वाभाविकं वात्सल्यमेव परेषां तत्परिपालनकारणमिति तदनुसारेण सर्वेषां जन्मत एव कुटुम्बसंस्थान्तःपातित्वात्तत्संस्थामध्य एव कंचित्कालं संवर्धनाच्चान्ते तादृशकुटुम्बप्रेमा तीव्रतरप्रतिद्वद्विविकारमन्तरा न केनाप्युच्छेत्तु शक्य इति निसर्गत एव कुटुम्बसंस्था सिध्यति । केनचित्कारणेन कुटुम्बाद्भेदेऽपि मातृवात्सल्यस्य मनुष्येष्वापामरं दर्शनादपि न कुटुम्बसंस्थाविपातः । अत एव तिरश्चामपि संघवृत्त्या जीवनं दृश्यते ।

किं च भोगसाधनानां संपत्तौ संग्रहे संरक्षणे च सर्वत्र सर्वेषां परसापेक्षत्वादपि संघवादः सिध्यति । न हि सर्वमपि भोग्यजातं येन केनाप्येकेन संपादयितुं संग्रहीतुं संरक्षितुं वा शक्यम् । तत्र चेत्परसापेक्षता, न सा प्रीतिमन्तरा भवितुमर्हति । सा चेत्सोपाधिकाऽपि सहजैवेत्यपि निश्चेतुं

शक्यम् । न हि कृत्रिमा प्रीतिस्तत्र कार्ये समर्था भवति सर्वदा । तस्याश्च सहजत्वं तदैव यदि भोगैक्यं स्यात् । यथा दम्पत्योर्लैङ्गिकोपभोगोऽन्योन्यसापेक्षोऽपि न भिन्नः । परस्परमीलनेनैककालभावित्वात् । तथा भोग्यजातभेदेऽपि तत्सापेक्षभोगस्य सर्वेषामेकरूपत्वेन सामान्यतस्तत्परिपालनायैव सर्वेषां प्रयत्नः स्वाभाविक एव । अत एव पुत्रसुखेनापि संतुष्यतः पितरौ । एवमन्येषामपि भोग्यानां भोगे संतोषश्चेत्सर्वेषां भवति । तदा तु स्वाभाविकत्वमेव संघमूलकसमाजरचनायाः सिध्यति । एवमेव ग्रामदेशादिरूपेण संघरचना भोगैक्ये भावयन्ती दुर्निवारैव । यत्र तु भोगभेदः प्रेमाभावो वा प्रेमविच्छेदो वा केनचित्कारणेन परिदृश्येत, तत्र तु संघभेदः स्यादेव । एवमपि न कापि हानिः । संघस्वातन्त्र्यस्याभ्युपगमात् । कलहाद्युपस्थितावपि न केवलं बलादेव निर्णयः । संघस्थानेकव्यक्तीनां परस्परसहकार्यकारित्वेन मतभेदसंभवात्संधिविग्रहादिषाड्गुण्यद्वारापि कलहोपशमसंभवात् । तदसंभव एव बलमूलकनिर्णयप्रसरान्न व्यक्तिप्रधानसमाजवत्सर्वस्वहानिः ।

किंच भोगस्य रुचिवैचित्र्येण वैचित्र्यात् सहजप्रेमासक्तकुटुम्बसमाजेऽपि भोगभेदसिद्धौ परस्परसापेक्षत्वाद्रुचिनियमनमनायासेनैव यथा सिध्यति । तथैव दयादाक्षिण्यपरोपकारादिगुणोत्कर्षोऽपि मानुष्यतानिदानं तत्रैव प्रादुर्भवति न व्यक्तिप्रधानसमाजे । एवमेव स्पर्धासूयादिमानुषताविरोधिगुणानां नियन्त्रणापि संघपद्धतावेव सिध्यति नान्यथा । एवं च मानवतासमुत्कर्षसाधकत्वात्संघस्य तादृशनियमनं यदाऽऽवश्यकं तदा तु संघप्रधानसमाजरचनैव सर्वथा जगदानन्ददायिनीति सुविस्पष्टमेव ।

किंच भोगार्थं प्रयतमानानां जीवानां भोग्यसंपत्तेरलब्धलाभो लब्धपरिरक्षणं रक्षितविवर्धनमप्यावश्यकमेव । तच्च सर्वथा निर्भयावस्थायामेव । सा च संघमन्तरा न कदापि भवतीति सर्वथा संघप्रधानसमाजरचनैव योगक्षेमावहेति सिध्यति ।

### ( संघप्रधानसमाजवादस्य तात्त्विकोपपत्तिः )

इदमत्र तात्पर्यम्—यत्सर्वेषामपि जन्तूनां इष्टप्राप्त्यनिष्टपरिहारार्थं या किल प्रवृत्तिरुपलभ्यते, न सा इष्टानिष्टज्ञानमन्तरा भवितुमर्हति । ज्ञानेच्छाकृतीनां समानविषयकत्वेन कार्यकारणभावात् । तथा चेष्टानिष्टज्ञानानन्तरमेव तत्प्राप्तिपरिहारेच्छायां प्रवृत्तिनिवृत्ती स्याताम् । तत्र चेद्विषयेन्द्रियसंनिकर्षानन्तरं पदार्थसंवेदनायामेवेष्टानिष्टत्वज्ञानमभ्युपेयेत । तथा सति प्राथमिकी प्रवृत्तिर्विना ज्ञानमेवाभ्युपेया स्यात् । तथा चोपर्युक्तकार्यकारणभावो व्यभिचरितः स्यात् । तस्मात्प्रवृत्तिप्रयोजकमिष्टानिष्टत्वज्ञानमिदं सहजमेवेति अगत्या स्वीकर्तव्यम् । न च बाल्येऽङ्गारादिसौन्दर्यमोहितो बालस्तानादातुं प्रवर्तमानः पश्चाद्दाहादिना निवर्तत इति नौत्पत्तिकमिष्टानिष्टत्वज्ञानमिति वाच्यम् । अङ्गारप्रकाशाकृष्टः किल प्रवर्तमानो बालस्तत्रेष्टत्वमभिसंधायैव प्रवर्तत इत्यतस्तत्रापि स्वेष्टत्वज्ञानादेव

प्रवृत्तेः । बाह्यगतानिष्टत्वज्ञानात्पश्चान्निवृत्तेश्च । किंच पदार्थज्ञानानन्तरमेव खलु तत्संवेदनायामिष्टानिष्टत्वग्रहश्चेत्स्तन्यपानादिप्रवृत्तिरेव न स्यात् । न च तत्रापि मात्रादिभिः प्रथमतो बलादेव विषयेन्द्रियसंनिकर्षः साध्यते । ततश्चेष्टानिष्टत्वग्रहे प्रवृत्तिरिति वाच्यम् । विषयेन्द्रियसंनिकर्षानन्तरं तत्रेष्टानिष्टत्वग्रहो नाम तद्विषयकरागद्वेषौ । तौ च पूर्वानुभवाभावात्स्वाभाविकावेवेत्यवश्यमङ्गीकर्तव्यम् । नो चेत्केवलसंवेदनमेव स्यात् । न तु तत्र रागद्वेषान्यतरग्रहणम् । तथा च तद्ग्रहणस्य सर्वानुभवविषयत्वादौत्पत्तिकं वा तद्ग्रहणं प्राक्तनसंस्कारवशाद्वेत्येव वक्तव्यम् । तत्र प्राक्तनजन्मनीदानीं बहूनामविश्वासादौत्पत्तिकत्वमेवाभ्युपेत्य प्रवृत्त्युपपत्तिः संपादनीया । तत्सिद्धं रागद्वेषयोः स्वाभाविकत्वम् । तत्र रागो रतिर्द्वेषोऽरतिः । तत्र रतिस्वरूपं यथा भावप्रकाशने—

मनोनुकूलेष्वर्थेषु सुखसंवेदनात्मिका ।
इच्छा रतिः सा द्विधा स्याद्रतिप्रीतिविभागतः ॥
तयोः साधारणो भेदः सप्तधा परिकीर्तितः ।
निसर्गसंसर्गोपमाभियोगाध्यात्मस्वरूपतः ॥
अभिमानाच्च विषयात्सप्तधा सांप्रयोगिकी ।
रतेरेव भवेत्प्रीतिरेवमाभ्यासिकी भवेत् ॥
प्रीतिः प्रियात्मा प्रायेण रतिरिच्छात्मिकैव तु ।
स्थान द्विनिष्ठं तद्रूपं मनोऽधिष्ठाय वर्तते ॥ इति

साहित्यदर्पणेऽपि—

रतिर्मनोनुकूलेऽर्थे चेतसः प्रवणायितम् ॥ इति ।

एवं च मनोनुकूलेऽर्थे सुखसंवेदनात् तद्विषयकत्वेन सत्त्वस्य तद्वासनावासितत्वमेव रतेः स्वरूपं सिध्यति । एवमननुकूलविषयसंपर्केण दुःखोद्गमात्तद्वासनावासितत्वमेव सत्त्वस्यारतेः स्वरूपं सिध्यति । तत्रानुकूलत्वाननुकूलत्वनिर्णयस्तु यद्यपि संवेदनानन्तरमेव तथापि बालस्य तरुणकन्यासंस्पर्शेऽपि तद्विषयकरतेरनुत्पत्तेः तद्वासनैव तत्कालसमुद्भवा तादृशानुकूलत्वसंवेदननिदानमित्यङ्गीकरणीयम् । एवमननुकूलसंवेदनेऽपि । एवं च यः कोऽप्यनुभवः सुखदुःखविषयकः सर्वोऽपि रत्यरतिवासनावासितान्तःकरणानामेव भवति इत्यवश्यमङ्गीकरणम् । यथाहि रसोद्बोधो रत्यादिवासनावासितान्तःकरणानामेव, न श्रोत्रियजरन्मीमांसकादीनामिति प्राक्तनी चेदानींतनी च वासना रसास्वादहेतुत्वेनाभिमता । तथैव सुखदुःखानुभवोऽपि रत्यरतिवासनावासितान्तःकरणानामेव नोदासीनानां निरीहाणामिति तद्वदत्र सुखदुःखानुभवनिदानमित्यनुपेयम् । तदुक्तं धर्मदत्तेन—

सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।
निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसंनिभाः ॥ इति ॥

अत्रेदं तत्त्वम्—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥

इति भगवद्गीतावचनानुसारेण वा,

सत्त्वं रजस्तमश्चैव त्रीन् विद्यादात्मनो गुणान्
यैर्व्याप्येमान्स्थितो भावान्महान् सर्वानशेषतः ॥
यो यदैषां गुणो देहे साकल्येनातिरिच्यते
स तदा तद्गुणप्रायं तं करोति शरीरिणम् ॥ १२।२४।२५

इति मनुवचनानुसारेण वा सर्वस्यापि जगतस्त्रिगुणात्मकत्वाच्चेतसोऽपि त्रिगुणात्मकत्वं सिध्यति। तत्र रागद्वेषनिदानभूतरत्यरत्यात्मकवासनानामपि सहजत्वमेवेति तन्मूलकप्रीत्यप्रीति-विषादानुभवोऽपि सहज एव सर्वेषां भवति। रतेरेवाभ्यासादिनोद्बोधे प्रीत्यात्मकत्वम्। भावप्रकाशन-वचनात् "रतेरेव भवेत्प्रीतिरेवमाभ्यासिकी भवेदिति"। एवमेवारतेरपि द्वेषात्मकत्वं ज्ञेयम्। अत एव गुणानामपि प्रीत्यप्रीतिविषादात्मकत्वं सिध्यति। विषादस्तु इष्टप्राप्त्यनिष्टपरिहारोपाया-भावजन्यो मानसो भावः। तदुक्तं साहित्यदर्पणे—

उपायाभावजन्मा तु विषादः सत्त्वसंक्षयः।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत्॥

इति। अत्र चोपायाभावो नाम तदप्रतिपत्तिरेव। न तु सर्वथा कृत्यसाध्यत्वम्। तथा च सत्यपि उपाये तदज्ञानमिदं तमसः कार्यमिति विषादस्य तमोगुणात्मकत्वं सिध्यति। अत एव—

सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतौ।
एतद्व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः ॥२६॥
तत्र यत्प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत्।
प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत् ॥२७॥
यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः।
तद्रजः प्रतिपं विद्यात्सततं हारि देहिनाम् ॥२८॥
यत्तु स्यान्मोहसंयुक्तमव्यक्तं विषयात्मकम्।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥२९॥

इति मनुनापि तमसोऽज्ञानात्मकत्वं सत्त्वरजसोस्तु प्रीत्यप्रीत्यात्मकत्वमुपवर्णितं संगच्छते। एवं च सर्वेषामपि स्थावरजङ्गमानां भावानां त्रिगुणात्मकत्वेऽपि प्रतिनियतकाले तत्तदात्मनि तत्त-

द्विकारोद्बोधकत्वेऽपि न सर्वत्र सर्वदा सर्वविकारोद्बोधकत्वम् । युगपद्वृत्तित्रयस्याऽऽविर्भावयितुम-शक्यत्वात् । अन्यथा कण्टकादीनामुष्ट्रादिदेहे प्रीतिजनकत्वान्मानवदेहेऽपि तज्जनकत्वापत्तेः । अतश्च विषयेन्द्रियसंनिकर्षेऽपि स्वाभाविकान्तःकरणगततत्तद्वासनाप्रादुर्भाव एव तत्तद्विकाराणां तादृ-शानुभवविषयत्वं नान्यथेति अन्तःकरणगततत्तद्वासनानामौत्पत्तिकत्वं सिध्यति । तदुक्तं सांख्य-तत्त्वकौमुद्याम्—

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥१२॥

एतदुक्तं भवति—प्रीतिः सुखम्, प्रीत्यात्मकः सत्त्वगुणः, अप्रीतिर्दुःखम्, अप्रीत्यात्मको रजो-गुणः, विषादो मोहः, विषादात्मकस्तमोगुण इति । ये तु मन्यन्ते— न प्रीतिर्दुःखाभावादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्यदिति । तान् प्रति आत्मग्रहणम् । नेतरेतराभावाः सुखादयः, अपि तु भावाः । आत्मशब्दस्य भाववचनत्वात् प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः । एवमन्यदपि व्याख्ये.. । भावरूपता चैषामनुभवसिद्धा । परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरु-भयासिद्धिरिति भावः । स्वरूपमेषामुक्त्वा प्रयोजनमाह—प्रकाशप्रवृत्तिनियमार्था इति । अत्रापि यथासंख्यमेव । रजः प्रवर्तकत्वात्सर्वत्र लघु सत्त्वं प्रवर्तयेत्, यदि तमसा गुरुणा न नियम्येत । तमोनियतं तु क्वचिदेव प्रवर्तयतीति भवति तमो नियमार्थम् । प्रयोजनमुक्त्वा क्रियामाह अन्यो-न्याभिभवाश्रयजननमिथुनवृत्तयश्चेति । वृत्तिः क्रिया, सा च प्रत्येकमभिसंबध्यते । अन्यो-न्याभिभववृत्तयः— एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते ।

तथाहि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते । एवं रजः सत्त्वतमसी अभिभूय घोराम् । एवं तमः सत्त्वरजसी अभिभूय मूढामिति ।

अन्योन्याश्रयवृत्तयः—यद्यप्याधाराधेयभावेन नाऽऽश्रयार्थो घटते, तथापि यदपेक्षया यस्य क्रिया स तस्याऽऽश्रयः । तथाहि सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति । रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः । तमः प्रकाशप्रवृत्तिमाश्रित्य नियमेनेतरयोरिति ।

अन्योन्यजननवृत्तयः—अन्यतमोऽन्यतममपेक्ष्य जनयति । जननं च परिणामः । स च गुणानां सदृशरूपः । अत एव न हेतुमत्त्वम् । तत्त्वान्तरस्य हेतोरभावात् । नाप्यनित्यत्वं तत्त्वान्तरे लयाभावात्—

अन्योन्यमिथुनवृत्तयः—अन्योन्यसहचरा अविनाभाववर्तिन इति यावत् । चः समुच्चये । भवति चात्राऽऽगमः—

अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः ।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ॥

तमसश्चापि मिथुने ते सत्त्वरजसी उभे ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ॥
नैषामादिः संप्रयोगो वियोगो वोपलभ्यते ॥ इति ।

प्रकाशप्रवृत्तिनियमार्था इत्युक्तम् । तत्र के त इत्थंभूताः कुतश्चेत्यत आह—सत्त्वं लघु प्रकाशकमिति ।

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥

सत्त्वमेव लघु प्रकाशकमिष्टं सांख्याचार्यैः । तत्र कार्योद्गमने हेतुर्धर्मो लाघवं गौरवप्रतिद्वंद्वि, यतोऽग्नेरूर्ध्वज्वलनं भवति । तदेव लाघवं कस्य चित्तिर्यग्गमने हेतुर्भवति यथा वायोः । एवं करणानां वृत्तिपटुत्वे हेतुर्लाघवम् । गुरुत्वे हि मन्दानि स्युरिति सत्त्वस्य प्रकाशकत्वमुक्तम् ।

सत्त्वतमसी स्वयमक्रियतया स्वस्वकार्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते अवसादात्प्रच्याव्य स्वकार्ये उत्साहप्रयत्नं कार्येते । तदिदमुक्तमवष्टम्भकं रज इति ।

कस्मादित्यत उक्तं चलमिति । तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम् । रजस्तु चलतया परितस्त्रैगुण्यं चालयद्गुरुणाऽऽवृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यत इति ततस्ततो व्यावर्त्य तमो नियामकमुक्तं गुरु वरणकमेव तम इति ।

एवकारः प्रत्येकं भिन्नक्रमः संबध्यते सत्त्वमेव रज एव तम एवेति ।

नन्वेते परस्परविरोधशीला गुणाः सुन्दोपसुन्दवत्परस्परं ध्वसन्ते इत्येव युक्तं प्रागेव तेषामेकक्रियाकर्तृताया इत्यत आह—प्रदीपवच्चार्थतो वृत्तिरिति । दृष्टमेतत् यथा वर्तितैलेअनलविरोधिनी अथ च मिलिते सहानलेन रूपप्रकाशलक्षणं कार्यं कुरुतः । यथा वा वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणलक्षणकार्यकारिणः । एवं सत्त्वरजस्तमासि मिथो विरुद्धान्यप्यनुवर्त्स्यन्ति च स्वकार्यं करिष्यन्ति च ।

अर्थतः पुरुषार्थत इति यावत् । यथा वक्ष्यति—

"पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम्" इति ।

अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति । तेषां च परस्पराभिभाव्याभिभावकभावान्नानात्वम् । तद्यथा—एकैव स्त्री रूपयौवनकुलसंपन्ना स्वामिनं सुखाकरोति तत्कस्य हेतोः । स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात् । सैव सपत्नीर्दुःखाकरोति तत्कस्य हेतोः, ताः प्रति तस्या दुःखरूपसमुद्भवात् । एवं पुरुषान्तरं तामविन्दमानं सैव मोहयति, तत्कस्य हेतोः । तंप्रति तस्या मोहरूपसमुद्भवात् । अ.या च स्त्रिया सर्वे भावा व्याख्याताः ।

तत्र, यत्सुखहेतुस्तत्सुखात्मकं सत्त्वम् । यद्दुःखहेतुस्तद्दुःखात्मकं रजः । यन्मोहहेतुस्तन्मोहात्मकं तम इति । सुखप्रकाशलाघवानां त्वेकस्मिन्युगपदुद्भूतावविरोधः सहदर्शनात् । तस्मात्सुखदुःखमोहैरिव विरोधिभिरविरोधिभिरेकैकगुणवृत्तिभिः सुखप्रकाशलाघवैर्न निमित्तभेदा उन्नीयन्ते । एवं दुःखोपष्टम्भकत्वप्रवर्तकत्वैः । एवं मोहगुरुत्वावरणैरिति सिद्धं त्रैगुण्यम् । इति ।

एतेन च सांख्यकारिकाविवरणेन सर्वेषां भावानां त्रिगुणात्मकत्वं सिद्धम् । एवमपि ते ते भावाः स्वस्वकार्यकरणे स्वानुरूपमेव कारणमपेक्षन्ते इति सत्त्वात्मककार्यकरणे सत्त्वगुणापेक्षा । एवं रजोगुणतमोगुणात्मककार्यकरणे तत्तद्गुणापेक्षेति यत्र यदा यद्गुणोद्बोधस्तत्र तदा तद्गुणकार्यम् । एवं चान्तःकरणस्थरतिवासनोद्बोध एव प्रीत्यास्वादः । अरतिवासनोद्बोधे दुःखास्वादः । तदुपायाज्ञानवासनोद्बोधे विषादास्वाद इति केनचित् कारणेन तत्तद्वासनानामनुद्बोधे तु पदार्थसंसर्गेऽपि एकस्याप्येकस्मादेव पदार्थात्कालभेदेन प्रीत्यप्रीतिविषादानुभवोऽपि सिध्यति । तदिदं वासनोद्बोधकारणं कदाचिद्धर्माधर्मादिकं कदाचिद्देशकालादिकं कदाचित्पिण्डगतवैशिष्ट्यं जात्यपरनामधेयमिति सिध्यति । तदुक्तं विद्वत्तोषिण्याम्—

ननु त्रिगुणमविवेकीत्यादिना सर्वस्य त्रिगुणात्मकत्वाभिधानात्सर्व एव भावाः सुखदुःखमोहात्मका इत्यायातम् । एतच्च न घटते । नहि यद्यदा यस्य सुखात्मकं तत्तदा तस्य दुःखात्मकं मोहात्मकं चेत्यध्यक्षमीक्ष्यते । यदि सर्व एव भावाः सुखदुःखमोहस्वभावा भवेयुस्तर्हि सर्वेषामविशेषेणैव सर्वेषु भावेषु सर्वात्मकं विज्ञानं स्यान्न तूपलभ्यमानं प्रतिवस्तु व्यवस्थितम् । तथा चाऽऽहुर्विवेचकाः—यदि पुनरेत एव सुखादिस्वभावा भवेयुस्ततः स्वरूपत्वाद्धेमन्तेऽपि चन्दनः सुखः स्यात् । न हि चन्दनः कदाचिदचन्दनः । तथा निदाघेऽपि कुङ्कुमपङ्कः सुखो भवेत् । न ह्यसौ कदाचिदकुङ्कुमपङ्क इति । एवं कण्टकः क्रमेलकस्य सुख इति मनुष्यादीनामपि प्राणभृतां सुखः स्यात् । न ह्यसौ कांश्चित्प्रत्येव कण्टक इति । तस्मादसुखादिस्वभावा अपि चन्दनकुङ्कुमादयो जातिकालावस्थाद्यपेक्षया सुखदुःखादिहेतवो न तु स्वयं सुखादिस्वभावा इति रमणीयमिति ।

एवं प्राप्ते प्रतिविधत्ते—अत्र च सुखदुःखमोहा इति । अत्र गुणस्वभावनिरूपणप्रस्तावे चेदं ध्येयमिति शेषः । परस्परविरोधिनो ये सुखदुःखमोहास्ते सर्वत्राविशेषेण वर्तमाना अपि नाकस्मादुद्भवन्ति येन सर्वान्प्रत्यविशेषेण ते आगच्छेयुः । अपि तु स्वस्वोद्भवे निमित्तानि कल्पयन्ति । अपेक्षन्ते इत्यन्वयः । निमित्तानि च न यानि कानिचित् । अपि तु स्वस्वानुरूपाणि स्वस्वप्रादुर्भावानुगुणानि सुखदुःखमोहात्मकानीति । तत्र सुखं स्वोद्भवे धर्मापेक्षं सुखात्मकं सत्त्वरूपं निमित्तमपेक्षते । दुःखं च स्वोद्भवेऽधर्मापेक्षं दुःखात्मकं रजोनिमित्तमपेक्षते । मोहश्च स्वप्रादुर्भावेऽधर्मापेक्षं मोहात्मकं तमो निमित्तमपेक्षत इत्यर्थः । जातिकालादयोऽपि निमित्तसहकारिणो ज्ञेया इति ।

ये तु पदार्थानां सुखदुःखाद्युत्पादकत्वमनुकूलतया वा प्रतिकूलतया वा संवेद्यत्वेनाभिमन्यन्ते न तत्स्वभावत्वम् । तेषामपि तत्तत्प्रकारकसंवेदनस्य कादाचित्कत्वनिर्वाहाय पूर्वोक्तजातिकालादृष्टादीनां सहकारिकारणत्वमवश्यमेवाभ्युपेयम् । अन्यथा एकस्यैव पदार्थस्यैकं प्रत्येव कदाचित्सुखजनकत्वं कदाचिद्दुःखजनकत्वं कदाचिन्मोहजनकत्वं च प्रत्यक्षमनुभूयमानमनुपपन्नं स्यात् । तत्र तत्तद्वासनाप्रादुर्भावे उपर्युक्तजातिकालादीनां कारणत्वेऽपि वासनायाः कारणत्वं सर्वैरप्यङ्गीकरणीयमेव । तदभावे प्रतिकूलत्वानुकूलत्वग्रहस्य सर्वथाऽसंभवात् । तत्सिद्धं सर्वत्र सुखदुःखादिवासनासत्त्व एव तत्तत्पदार्थसंसर्गे सुखदुःखमोहादीनां प्रतीतिरिति । तथा च पिण्डगतवैशिष्ट्यद्वारा समुद्भूतरत्यरतिवासनासामान्यद्वारा स्वभावसामान्यसिद्धौ तादृशस्वभावसामान्येन योगक्षेमनिर्वाहाय तत्तत्संघरचनाऽन्यौत्सर्गिकी न केनाप्यपह्नोतुं शक्या । एवं च संघप्रधानसमाजरचनैव स्वाभाविकी योगक्षेमनिर्वाहिका न व्यक्तिप्रधानसमाजरचनेति सिध्यति ।

नन्वेवं करुणाभयजुगुप्साविस्मयादिभावानामप्युपलम्भात् तत्तद्भावोद्बोधकत्वेन पदार्थानां तत्तदात्मकत्वमपि स्यादिति चेन्न । रत्यरतिविरत्यात्मकेषु भावेषु सर्वेषामन्तर्भावात् । तथा हि—

> भावः स्याद्भावनं भूतिरथ भावयतीति वा ।
> पदार्थो वा क्रिया सत्ता विकारो मानसोऽथवा ॥

इति भावप्रकाशनवचनात्पदार्थजन्यश्चित्तस्य परिणाम एव भाव इति वक्तव्यम् । स चायं चेतोवृत्तिरूपः परिणामो विकासविस्तरक्षोभविक्षेपरूपैर्वा क्षेपविक्षेपमोहैकाग्र्यरूपैर्वा चतुर्विध एवानुभवविषयः सर्वत्र विषयसंनिकर्षजन्यः । तत्र विकासविस्तरयो रतिमूलकत्वाद्रतावन्तर्भावः । क्षोभविक्षेपयोस्त्वरतिमूलकत्वात्तत्रान्तर्भावः । मोहैकाग्र्ययोस्तु विरताविति न त्रिगुणात्मकत्वं चित्तस्य वा पदार्थानां क्वचिदपि व्यभिचरति । तत्र शृङ्गारे हास्ये च रतेरेव प्राधान्यात्तन्मूलकविकासरूपा चित्तवृत्तिः । वीरेऽद्भुते च विस्तरस्य प्राधान्यात्तस्य रतिमूलकत्वात्तद्रूपा चित्तवृत्तिरपि न रतिं व्यभिचरति । बीभत्से भयानके च क्षोभस्य प्राधान्यात्तस्य चारतिमूलकत्वादरतावन्तर्भावः । तथैव रौद्रे करुणे च विक्षेपस्य प्राधान्यात्तस्याप्यरतिमूलकत्वात्तत्रैवारतावन्तर्भाव इति सुविशदमेव । विरतिस्तु यथासंभवं तत्र तत्र भावेऽतिशयसंकोचादिना तत्तद्भावसहकारिणीति न काचिदनुपपत्तिः । दोषदर्शनादिना सर्वेभ्योऽपि विषयेभ्यश्चित्तस्य विरतिस्तु शमापरपर्याया वैराग्यादिना योगसाधनीभूता सत्त्वगुणोद्बोधात्परमानन्दकारिणीति उपरतिशब्देनाभिधीयते । न विरतिशब्देनेति नात्र तदुपादानम् । एवं च व्यभिचारिणोऽपि प्रायो रत्यरतिमूलकचतुर्विधविकारजन्या इति तत्रैवान्तर्भवन्तीति नातिरोहितं विदुषाम् । लक्षणादिप्रदर्शनपूर्वकं तत्र तत्रान्तर्भावप्रदर्शनं तु न विस्तरभयादत्रोदाह्रियते । एवं च सर्वथा त्रिगुणात्मकत्वं न कुत्रापि व्यभिचरतीति नानेकभावात्मकत्वं पदार्थानामपि तु

प्रीत्यप्रीतिविषादात्मकत्वमेव । अत एव दशरूपके चतुर्णामेव रसानां प्राधान्यमितरेषां च तत्रैवान्तर्भाव इति निरूपितम । तद्यथा—

स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः ।
विकासविस्तरक्षोभविक्षेपैः स चतुर्विधः ॥ ४३ ॥
शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात् ।
हास्याद्भुतभयोत्कर्षकरुणानां त एव हि ॥ ४४ ॥

अतस्तज्जन्यता तेषामत एवावधारणम् । ४ प्रकाशः । काव्यार्थेन विभावादिसंसृष्टस्थाय्यात्मकेन भावकचेतसः संभेदेऽन्योन्यसंचलने प्रत्यस्तमितपरविभागे सति प्रबलतरस्वानन्दोद्भूतिः स्वादः । तस्य च सामान्यात्मकत्वेऽपि प्रतिनियतविभावादिकारणजन्यत्वेन संभेदेन चतुर्धा चित्तभूमयो भवन्ति । तद्यथा शृङ्गारे विकासः, वीरे विस्तरः, बीभत्से क्षोभः, रौद्रे विक्षेप इति । तदन्येषां चतुर्णां हास्याद्भुतभयानककरुणानां स्वसामग्रीलब्धपरिपोषाणां त एव चत्वारो विकासाद्याश्चेतसः संभेदाः । अत एव

शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ॥ इति ।

हेतुहेतुमद्भाव एव संभेदापेक्षया दर्शितो न कार्यकारणभावाभिप्रायेण तेषां कारणान्तरजन्यत्वात् ।

शृङ्गारानुकृतिर्या तु स हास्य इति कीर्तितः ॥

इत्यादिना विकासादिसंभेदैकत्वस्यैव स्फुटीकरणादवधारणमप्यत एवाष्टाविति संभेदानां भावात् " इति । भावप्रकाशनेऽपि—

शृङ्गार उदभूत्साम्नो वीरोऽभूद्वितितो ऋचः ।
अथर्ववेदतो रौद्रो वीभत्सो यजुषः क्रमात् ॥
सामानि स्मरतस्तस्य स्वरूपव्यक्तिरात्मनः ।
या चेयमिच्छा जगतां सिसृक्षोः परमात्मनः ॥
विषयाक्ता रतिः सैव शृङ्गार इति गीयते ।
इच्छा क्रियात्मिका ज्ञातिस्तस्यैव स्मरतो ऋचः ॥
उत्साहात्मा विषयिणी वीर इत्युच्यते बुधैः ।
स्मरतोऽथर्वमन्त्राणां सत्त्वद्धिंसात्मिका मतिः ॥
या क्रियोपहिता क्रोधात्स रौद्र इति कथ्यते ।
क्रियारूपा प्रवृत्तिर्या तस्यैव यजुषां स्मृतेः ॥

फलावसानिकी सैव बीभत्स इति गीयते ।
शृङ्गारस्यानुकरणं हास्य इत्यभिधीयते ॥
वीरस्य कर्म यद्वीरं सोऽद्भुतः परिकीर्तितः
क्रूरक्रिया या रौद्रस्य सैव स्यात्करुणाह्वया ॥
बीभत्सस्यापि यत्कर्म स भयानक ईरितः
प्राधान्यं जनकत्वेन जन्यत्वेनाप्रधानता ॥ इति ।

एवं च प्राधान्येन विकासविस्तरक्षोभविक्षेपात्मिकाश्चित्तस्य चतुर्धा भूमयो भवन्ति । तत्रापि शृङ्गारवीरहास्याद्भुतेषु रतेरेव प्राधान्यात्तद्विषयस्य संरम्भाविषयत्वविकृतत्वादिनैवोत्साहहास्यादिजननाच्च रतिमूलता । एवं करुणरौद्रबीभत्सभयानकेष्वरतिविषयस्यैव चित्तवैक्लव्यतैक्ष्ण्यादिना शोकक्रोधादिजनकत्वादरतिमूलता । विरतिस्तु दैन्यविषादादिसंचारिभावजनकत्वेन रत्यरत्योरेवोपकरोतीति सर्वेषामप्येकोनचत्वारिंशद्भावानां रत्यरतिविरत्यात्मकत्वं साक्षाद्वा परम्परया वोरीकरणीयम् । एतेषामास्वादने काव्यशास्त्ररीत्या तु रसत्वमन्यथा तु भावत्वमित्यनुसंधेयम् । अत एवोक्तं भावप्रकाशने—

अन्येऽपि भावा ये केचित्तत्तदर्थानुषङ्गिणः
प्रवेक्ष्यान्ति च तत्रैव विज्ञेयास्ते विचक्षणैः ॥ इति ॥

तत्सिद्धं त्रिगुणात्मकत्वमेव भावानां चित्तस्य चेति । तत्र काव्यादिषु यथा कस्यचन स्थायिनो भावस्योपवर्णनेन तदात्मकत्वं नायकादीनां प्रतिपाद्यते । तथैव व्यवहारेऽपि रामयुधिष्ठिरादीनां तत्तद्भावप्राधान्येनैवोपलम्भात् तदात्मकत्वेन तत्स्वभावत्वं सिध्यति । एवं च स्वभावस्यैव स्थायित्वात्तस्यैव शब्दोपहितत्वेनोपवर्णने स्थायिभावत्वम् । मनुष्यक्रियाणामपि सर्वत्र रत्यरतिप्रयोज्यत्वेन तत्तन्मूलकस्थायिभावस्य स्वभावापरपर्यायस्य कस्यचिदवश्यमेवोपगन्तव्यत्वेन तन्मूलकसंघनिर्माणमिदं नास्वाभाविकमिति संघप्रधानसमाजरचनैव ज्यायसी । एतादृशस्वभावपर्यालोचनं तु न रत्यरतिविशेषपर्यालोचनमन्तरा संभवति । आपाततः प्रतीयमानाया रतेः स्थायित्वासंभवात् । अत एव व्यावहारिकरतेः सप्तधा विभाग उपवर्णितो भावप्रकाशने । निसर्गतः, संसर्गतः, उपमातः, अभियोगतः, अध्यात्मस्वरूपतः, अभिमानतः, विषयतश्चेति समुत्पद्यमाना कारणभेदात्सप्तधा भिन्ना रतिः । तत्र निसर्गाध्यात्मस्वरूपजन्यरतेरेव स्वभावात्मकत्वं वा स्वभावगमकत्वं वा वक्तव्यम् । अन्यासां त्वौपाधिकत्वेनोपाधिनाशान्नाशसंभवादस्थायित्वेन च न स्वभावगमकत्वम् । एवमरतेरपि सप्तप्रकारसंभावात्ततोऽपि स्वभावः परिचेतुं शक्यः । तथा च स्वभावत एव सर्वेषां संघप्रवृत्तिरुपलभ्यमानेदमेव गमयति यत्संघप्रधानसमाजरचनैव श्रेयस्करीति ।

किं च स्वभावमूलकभोगपद्धतिभेदोऽपि संघभेदकरः। भोग्यवस्तुनि भोगेच्छामूलकरतेः सामान्येऽपि तव्द्यक्तिविशेषभोगरीतिस्तु तत्र तत्र भिद्यमाना समाजभेदमापादयति । परेषां स्वदारावलोकनसंभाषणादिकमेकत्र भूषणास्पदमप्यन्यत्र तन्नानुमन्यते । एवं तासां सन्मानादिकम्। तथा च तत्तव्द्यावहारिकरीतिभेदस्तत्तत्संघस्य भेदमापादयति। एवं भोग्यवस्तूनां सौलभ्यदौर्लभ्यमूलकभोगरीतितारम्यात् व्यवहारभेदः संघभेदश्च स्यात्। एवं भोगविघातसंभावनायां प्रतीकारप्रकारोऽपि संघभेदनिदानम्। एते च व्यवहाराः सर्वेऽपि तत्तत्संघसमयपरिकल्पिता इति संघनीतिपदभाजो भवन्ति। तेषां सर्वेषां भेदमूलं तु नान्यद्रुचिभेदात्संभवतीति सत्यपि सर्वत्र प्रीतिसामान्ये संघभेदाः संभवन्ति। सोऽयं संघसमाजः समुत्पद्यमानो व्यक्त्यन्तर्भावमासाद्यैव संभवतीति व्यक्तिशक्तीनां संघशक्तौ समावेशात् स्वसमयाचारनियमितत्वाच्च द्वेषमात्सर्यासूयादीनामवसरलाभासंभवेन न मात्स्यन्यायप्रवृत्तिः। ततश्च प्रबलानां दुर्बलानां च सर्वेषां योगक्षेमौ सिध्यत इति न काऽप्यत्रानुपपत्तिः। प्रत्युत प्रेमदयादाक्षिण्यादिसद्गुणपरिपोष एव।

अत्रायं विशेषो यत्स्वाभाविकी प्रीतिरियं यथाऽऽत्मनि सर्वेषां न तथा परस्मिन्निति प्रीतेर्निरुपाधिकत्वं सोपाधिकत्वं च सिध्यति। "मा न भूवं हि भूयासमिति प्रेमाऽऽत्मनीक्ष्यते" इति निरपेक्षं निरुपाधिकं च प्रेम यथाऽऽत्मशरीरे न तथा परस्मिन्। परेषां स्वात्मोपकारकत्वेन प्रेमास्पदत्वात्। एवं च पत्निपुत्रादिषु दृश्यमानं प्रेम स्वात्मोपकारकत्वेन स्वात्मत्वमुपचर्यैव नान्यथा। सोऽयं स्वात्मत्वोपचारो यथा स्त्रीपुत्रादिषु तथा देशग्रामगृहादिस्थावरेष्वपि संभवतीति तादृशममत्वाभिमानमूलकप्रेम्णाऽपि कश्चन संघः प्रादुर्भवितुमर्हतीति नातिरोहितम्। एवं चैतादृशसंघस्वाभिमानो भोगविघातप्रतीकारार्थमेव तत्र तत्रोपयुज्यते। एवं च प्राधान्येन समाजरचनाया भोगमूलकत्वेऽपि भोगप्रयोजकानामुपर्युक्तकारणानां भेदेन संघभेदः प्रतिकारबुद्ध्या च समाजैक्यमिति समाजरचना प्रादुर्भवति।

अत्रेदं चिन्तनीयम्—सत्त्वरजस्तमसां यदि प्रीत्यप्रीतिविषादात्मकत्वमेव। तदा विना सत्त्वोद्रेकं कुत्रापि सुखं नोपलभ्येत। दृश्यते च रजोगुणानामपि राजसवस्तुनि प्रेमातिशयस्तज्जन्यं च सुखम्। एवं तामसानामपीति नैकान्तेन प्रीत्यप्रीतिविषादात्मकत्वं तेषां गुणानां सिध्यति। न च राजसतामसयोरपि तदितरगुणसान्निध्यमस्त्येवेति सहकारिकारणवशात् सुखप्रयोजनसत्त्वगुणाविर्भावेनैव तत्र सुखप्रतीतिः। अन्यथा केवलराजसत्वे सर्वत्र सर्वदा प्रवृत्तिप्रसङ्गः। संभूयकार्यकारित्वं चैतेषां प्रागुक्तमेवेति वाच्यम्। राजसत्वेन तामसत्वेन चाभिमतानां वस्तूनामपि त्रिगुणात्मकत्वे तत्तदात्मकत्वव्याघातप्रसङ्गात्। न च प्राधान्येन तत्तद्व्यपदेशः। एवमपि सर्वेभ्यः सुखदुःखमोहोत्पादाद्विशेषानवबोधेन हानोपादाननियन्त्रणासंभवात्। इति चेत्सत्यम्। तथापि तु सुखेच्छाया निरतिशयाख-

ण्डसुखगोचरत्वेन सत्त्वगुणमन्तरा तत्परिसमाप्तेरभावेन सत्त्वगुणाभिवृध्यर्थमेव तादृशनियमनमुपपद्यते। अत एव सुखस्यापि सात्त्विकराजसतामसत्वेन त्रैविध्यमुपवर्णितम्। तदुक्तं भगवद्गीतायाम्—

यत्तदग्रे विषमिव परिणामेऽमृतोपमम्।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्॥
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम्।
परिणामे विषमिव तत्सुखं राजसं स्मृतम्॥
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः।
निद्रालस्यप्रमादोत्थं तत्सुखं तामसं स्मृतम्॥

एतच्चाग्रे स्पष्टं भविष्यति।

सर्वथा तु संघमूलकसमाजरचनैव योगक्षेमसाधिकेति सिद्धम्।

## (संघप्रधानसमाजरचनासमालोचनम्)

तदेवं संघप्रधानसमाजरचनावादिनां मतेन योगक्षेमनिर्वाहोपपत्तिः सिध्यति। अत्रेदं समालोचनीयम्। यत्सत्यं किल नैसर्गिकप्रीतिमूलकसंघसिद्धिः संभवति। तथापि तस्याः सुखेच्छामूलकत्वात्सुखोपभोगफलकत्वाच्च तदनुसारेणैवावस्थितिः स्यात्। सुखोपभोगस्तु संघपरिकल्पितसामयिकव्यवहारपद्धत्यैव। सा च परिकल्पना किं सर्वेषां सर्वं सुखमिति मूलतत्त्वानुसारेण वा बहूनां बहु सुखमिति तत्त्वानुसारेण वा। नाऽऽद्यः सर्वेषां सर्वविधसुखाधिगमस्याशक्यत्वात्। स्वभाववैचित्र्यात्। नान्त्यः- बहूनां कृतेऽल्पैः स्वसुखाय तिलाञ्जलिर्देय इति दण्डकस्य बलमूलकत्वेन नैसर्गिकत्वाभावादेव नैसर्गिकोपभोगेच्छानुसारेणाल्पैरपि प्रयत्ने कर्तव्ये संघर्षस्य दुष्परिहरत्वात्। किं बहुना एकस्यापि यत्र संघे नोपभोगलाभस्तत्र विघटनसंभवेन तन्मूलकसंघभेदसिद्धौ संघर्षसमुत्पादो दुर्वार एव।

एवं चैतादृशसंघर्षे समुत्पन्ने तन्निवारणं न बलादृते संभवतीति बलोपासनेन संघानां प्रबलदुर्बलभावे दुर्बलपरिरक्षणं न केनापि कर्तुं सुशकमित्यगत्या व्यक्तिप्रधानसमाजरचनायामिव संघप्रधानसमाजरचनायामपि मात्स्यन्यायप्रवृत्तिः केन वा वारणीया। अन्ततो गत्वा दुर्बलानां प्रबलोपजीवित्वमेव पर्यवस्यतीति दुर्बलैः संघैः प्रबलानां कृते स्वोपभोगसमर्पणमेव कर्तव्यं स्यात्। एतादृशसंघसंघर्षापेक्षया व्यक्तिसंघर्ष एव श्रेयान्। यत्र व्यक्तिनिरासेनैव संघर्षोपशमः। न वा संघर्षविनाशकसाधनानामभिवृद्धिः। न वा बहूना नाशः।

किं चोपभोगेच्छामूलकसमाजरचनायामुपभोगार्थं निर्भयावस्थापरपर्यायं स्वास्थ्यमपेक्ष्यते। तच्च संघर्षसमुत्पत्तिसंभवे सर्वथाऽशक्यप्रायमेव। कस्य कदा केन वा संघर्षो भवेदित्यत्र नियमा-

भावेन सर्वदा सर्वैः स्वबलसंरक्षणमेव कर्तव्यं स्यात्। भोग्यजातापहरणजन्यभयस्य सर्वदा संभवात्। तदर्थं दण्डनीतिमवलम्ब्य दण्डशासनसंघाविष्कारे तु दुरतिक्रम एव मात्स्यन्यायः। भोग्यजातसंपादनाय क्रियमाणा आयासा व्यायामापरपर्यायाः, भोगलाभाय चापेक्ष्यमाणः शमश्च संपादनीयश्चेत्तत्र षाड्गुण्यमप्युपयोजनीयं स्यात्। एवं प्रतिसंघं प्रवृत्तौ कथंकारं स्याच्छमव्यायामसंपादनमिति पर्यालोचनीयं विद्वद्भिः। सर्वथा तु न मात्स्यन्यायभङ्गः। इयान् विशेषो यद्व्यक्तिप्राधान्ये प्रतिव्यक्ति संघर्षे व्यक्तेरेव जीवनं वा मरणं वा संघप्राधान्ये तु तत्संघस्य। सर्वथा तु न मनुष्यमात्रस्य जीवनं निष्कण्टकं भवितुमर्हतीति भोगमूलकसमाजरचना व्यक्तिप्रधाना वा संघप्रधाना न मनुष्याणां स्वाभीष्टलाभाय घटते। यदा तु सर्वेषां स्वोत्तमभोगसाधने भोगे च निष्कण्टकः पन्था यया पद्धत्या समुन्मीलितः स्यात्। सैव किल पद्धतिः समाजरचनापदव्यपदेश्या भवितुमर्हति नान्येति सुधीभिरालोचनीयम्। अन्यथा हि वाटपाटच्चरसमाजापेक्षयाऽत्र विशेषाभावाद्भोगपरिलुण्ठनप्रवृत्तिरेव सर्वत्र समूलमुन्मीलिता भवेद्दण्डशासनसंघद्वारेति निश्चप्रचमेव। इतिहासोऽत्र प्रमाणतया पर्यालोचनीयः। तत्तत्काले विद्यमानानां तत्तत्समाजरचनानां यदिदं परिवर्तनमनुस्यूतमनुभूयत इतिहासात्। तदिदं विनाऽसौकर्यं विना च संघर्षं न कदापि भवितुमर्हति। यत्र तु यन्त्रोन्मेषकाले भोग्यजातसंपादनाय परिवर्तनं दृश्यते तत्रापि तु पूर्वस्थितौ वर्तमानभोग्यसंपत्तावपरितोषो नूतनभोग्यजाताभिलाषस्तन्मूलकपरवृत्तिच्छेदेन द्रव्यापहरणमित्यादि भोगेच्छाप्राबल्यमूलकमेव संघप्राबल्यसंपादनकारणमिति न कापि समाजरचना प्राबल्यदौर्बल्यमूलकसंघर्षमतिक्रामति। इयान् विशेषो यद्यदा यावत्तादृशभोग्यसंपत्तेरधिगमः, तदा तावत्तत्र सर्वेषां प्रियत्वम्। यदा तु तत्संघमध्य एव भोगानां न्यूनाधिकभावमूलकः संघर्षस्तदा तु तत्पद्धतिपरिवर्तनम्। तच्च कुत्रचित् बलात्, क्वापि सुखाशया, अन्यत्र वैरनिर्यातनार्थमित्यादि तु परिस्थितिभेदाद्भिन्नम्। तस्माद्भोगमूलिकाः सर्वा अपि समाजरचना संघर्षापादकत्वेन कामक्रोधलोभाद्यभिवर्धकत्वेन चाऽऽसुर्यो जगत्क्षयावहा इति हेया एव। या तु भोगत्यागमूलिका कामादिवाड्विनियमनेन जगद्योगक्षेमावहा सैव तु रचना यथावत्समाजरचनेत्येव श्रेयान् पन्थाः।

## ( विश्वकुटुम्बवादः )

अन्यपरे विश्वकुटुम्बवादपुरस्कारेण पूर्वोक्तापत्तिनिवारणमभिमन्यमानाः सर्वथा स्वीयत्वेन विश्वस्मिन् प्रेमातिशयाभिमानमाविर्भावयन्तः प्रत्यवतिष्ठन्ते। तेषामयमाशयः—यज्जन्मत एव मात्रादिषु पुत्रादिविषये निरपेक्षप्रेमदर्शनात् तन्मूलकस्वीयभोगत्यागदर्शनाच्च निरपेक्षप्रेम्णैव त्यागसत्त्वमित्यवश्यमेव वक्तव्यम्। न हि त्यागो नाम विषयत्यागः। तस्य सर्वथाऽसंभवात्। पञ्चमहाभूतान्यपहाय तदात्मकशरीरस्यान्यत्रावस्थानस्य कुत्राप्यनुपलब्धेः। किंतु प्रेम्णा स्वीयभोगातिसर्जनमेव

परेभ्यस्त्यागः। यथा माता पुत्रार्थे स्वीयान् भोगानतिसृजति निरपेक्षवात्सल्यात् तथैव ममत्वेनाभिमतभोग्यजातिभ्योऽपि स्वीयभोगातिसर्जनं न दुर्घटमिति सर्वत्र स्वीयत्वाभिनिवेशो यथा भवेत्तथा रचनायां तु परस्परसंघर्षनिराकरणपूर्वकप्रेमातिशयसमुद्भवेन सर्वेषामपि भोगसिद्धिरनायासेनैव सेत्स्यति। तदर्थं च सर्वत्र भोग्यसंपत्तौ सर्वेषां स्वत्वमभिमन्तव्यम्। तच्चाऽऽदावनादिवासनावशान्न स्वाभाविकं संभवतीति मानवताशास्त्रशिक्षणद्वाराऽनादिवासनानिरसनेनाध्यात्मस्वरूपजन्यप्रीत्याविर्भावेन पश्चात्समुदेष्यतीति प्रथमतः स्वत्वापहारस्य दर्शनेऽपि पश्चात्तस्यैवोपयुक्तत्वात् नात्यन्तमनौचित्यम्। निसर्गजन्यप्रीतेरिवाध्यात्मस्वरूपदर्शनजन्यप्रीतेरपि निरत्ययत्वेन व्यवहार्यत्वात्। अत एव वेदवादेऽपि भक्तिसांप्रदायः सर्वेषां परमेश्वरस्वरूपतां निरूप्य तत्र निरतिशयनिरपेक्षप्रीतिशासनमनुशास्ति। एतादृशप्रेमाविर्भावाय प्रथमतस्तच्छिक्षायै पितृशासनवत् बलात्प्रवर्त्यमानं शासनमपि न दुःखाय किंतु परिणामे सुखायैवेति तद्द्वारा विश्वकुटुम्बशिक्षा सुविधेया।

## ( विश्वकुटुम्बपद्धतिपर्यालोचनम् )

स्यादेतदेवं यदि सर्वत्र निरतिशयप्रेमाविर्भावो भवेत्। न तु स संभवति। स्वगतभोगलालसायाः प्राबल्यात्। विश्वकुटुम्बवादस्यापि भोगैकमूलकत्वात्। प्रीतिहेतूनां तत्रासंभवात्। यो हि भोगाय प्रवर्तमानः स्वगतभोगविघाते विना भोगनिर्वेदं कथं वा प्रवृत्तः स्यात्। प्रवृत्तिं प्रति सुखसाधनत्वज्ञानमेव निदानमित्यत्र न केषामपि विप्रतिपत्तिः। तत्र विश्वकुटुम्बवादे भौतिकभोगातिरिक्तसुखस्याभावेन भौतिकभोगानां च भौतिकभोग्यसंपत्तिमन्तरोपार्जयितुमशक्यत्वेन च तस्याश्च स्वायत्तताभावे भोगस्याप्यसंभवेनान्ततस्तदपहारोऽयं न पाटच्चरत्वमूलतामपजह्यात्। न च प्रेमातिशयात्स्वगतभोगत्यागसंभावना। परस्मिंस्तादृशप्रेमातिशयस्यासंभवात्। स्वीयभोगसाधनत्वरूपोपाधिजन्यस्य प्रेमातिशयस्य यावदुपाधि सत्त्वस्यैव औत्सर्गिकत्वेन निरत्ययत्वासंभवात्। न च तदभावे स्वभोगस्यापि प्रतिपत्तिः। व्यष्टिगतभोगस्य साधनत्वमपि व्यष्टावेव पर्यवस्यतीति तत्साधनत्वेनाभिमतव्यक्तावेव तादृशप्रेमातिशयाविर्भावेन स्वभोगसंपत्तौ सर्वत्र तादृशप्रीतेरसंभवात्। किं च स्वस्मिन् या निरुपाधिका स्वभावत एव प्रीतिर्न सा सुखसाधनत्वेनाभिमतेषु परेषु इति तु स्वभावोऽयमाकीटपतङ्गं सर्वेषां प्राणिनाम्। अत एव किलाऽऽत्मनि प्रेमस्वरूपतामानन्दस्वरूपतां चानुमिन्वते केचनौपनिषदाः। तदुक्तं संक्षेपशारीरके—

> प्रेमाऽनुपाधिरसुखात्मनि नोपलब्धः
> स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः॥
> प्रेयःश्रुतेरपि ततः सुखतानुमानम्
> नैयायिकोऽपि न दृगात्मनि निह्नुवीत॥ इति

अत्र च वादे दूरगातमरूपाध्यात्मवस्तुनोऽसंप्रतिपत्तेरपि न तादृशप्रेमा परस्मिन् संभवति । केवलं स्वात्मसुखानुपपत्त्यैव परस्मिन् सुखसाधनत्वेन तादृशप्रेमातिशयः संपादनीयः । स च यावत्सुखसाधनत्वसंप्रतिपत्तिः कदाचित्संभवेत् । तादृशसंप्रतिपत्तिस्तु व्यवहारे सुखसाधनीभूतव्यक्तावेव पर्यवस्यतीति कदाचित् कासुचिद्व्यक्तिषु तथा प्रेमातिशयस्य संभवेऽपि नानौपाधिकं प्रेमसातत्यं कुत्रापि सिध्यति ! येनाभीष्टसिद्धिः स्यात् ।

नच भक्तिसंप्रदाय इवात्रापि तादृशप्रेमाविर्भावसंभावना । भक्तिसंप्रदाये सर्वत्र सर्वगताखण्डानन्दरूपपरमात्मात्मकाध्यात्मवस्तुस्वरूपोपगमनवदत्र कस्याप्याध्यात्मवस्तुनोऽनङ्गीकारेण तत्संभावनाया दूरापास्तत्वात् । न च सामान्यमानवतारूपाध्यात्मवस्तुनोऽत्राप्युपगमात् तदालम्बनेन तथा संभावना स्यादिति वाच्यम् । तादृशस्वरूपस्य निर्वक्तुमशक्यत्वात् । न च तत्स्वानुभवात्स्वतः सिद्धम् । स्वानुभवस्य व्यक्तिगतवासनावासितत्वेन वासनानां चैकरूपत्वाभावेन वैचित्र्यात् । न हि परैराचरितेनानिष्टेन स्वगतदुःखसंवेदनात्तदेव परस्मिन्नाचरणीयमिति सिद्धान्तः संभवति । इष्टानिष्टत्वयोर्व्यक्तिगतवासनाभेदेन भेदात् । कदाचित्स्वानिष्टेनापि परसंतोषसंभवात् । दृश्यते च तथा भोगवैचित्र्यम् । किं च तादृशमानवताया अभिनिवेशो हि शासनमात्रेणैव संपादनीयोऽत्र वादे । न हि भक्तिसंप्रदायवद्धर्मकर्माचरणमत्र किंचिदस्ति । सर्वप्रवृत्तेर्भोगमूलकत्वाच्छासनस्यापि भोगिकमूलकत्वेन अनवस्थाया दुष्परिहरत्वात् । भक्तिमार्गे तु अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहादिपरिपालनार्थं काचनाऽऽचारप्रणालिका धर्मत्वेनाभिमन्यमाना जागर्ति । तथैव यदि भवदभिमतप्रेमातिशयाविर्भावाय शासनेन काचनाऽऽचारप्रणालिका प्रवर्त्यते चेन्न सा संसारदोषाविष्कारेण व्यष्टिगतभोगनिर्वेदमन्तरा संभवतीति तदुपगमे तु भोगमूलकत्वं समाजरचनाया व्याहन्येत । न च नास्मन्मतेऽपि निर्मर्यादो भोगः सर्वेषाम् । अतश्च सर्वेषां समानभोगाधिकारोपगमेऽपि तत्रान्योन्यसंघर्षनिवारणाय काचन मर्यादावश्यमेव भविष्यति । सा च कदाचिच्छासनेन कदाचिल्लोकरुचेच्छामूलकसमयबन्धेनेति न काचिदनुपपत्तिरिति वाच्यम् । तादृशमर्यादाया वासनानियामकत्वस्य कुत्राप्यदर्शनात् । न हि अनादिकालारभ्य जागर्त्यप्यसत्यहिंसादिशासने जगति असत्यहिंसादीनामभावः परिदृश्यते । न वा तत्र भवदभिमतमानवतारूपाध्यात्मस्वरूपं नास्ति । न वा तत्प्रचारार्थमद्यावधि जगति शिक्षा न प्रवर्तिता । एवमपि तत्तनेदमेव गमयति यत्स्वभावो दुरतिक्रम इति । न चाद्ययावत्कुत्राप्यसत्याहिंसादिकारणीभूतभोग्यसंरक्षणस्य निदानस्वत्वस्य विनाशाभावेन परसंपत्प्रकर्षमूलकदुःखपरिणाम एवायमस्तन्तु शासनेन प्रयतत एव तादृशस्वत्वापहारे दुःखनिदानभूतभोग्यसंपत्तेस्तारतम्याभावेन पूर्वोक्तान्यायस्य सुखेनैव परिहार इति वाच्यम् । सर्वं परवशं दुःखं सर्वमात्मवशं सुखमित्युक्तरीत्या भोगजनितदुःखनाशो बलात्क्रियमाणस्य स्वत्वापहारशासनस्याहाराभाविकत्वात्तत एव तद्दर्शनः । अत एव भगवतो गदा भोग्यसंरक्षणार्थं कर्मकारिणो चेतने स्वत्वमुपगन्तव्यं भवति ·

समाजस्वत्ववादेऽपि । अधिकं चात्र समाजस्वत्ववादपर्यालोचनादवगन्तव्यम् । प्रपञ्चितं चैतन्नीतिप्रतिबिम्ब इति ।

ननु नायं विषयः शब्दप्रमाणगम्यः । शब्दस्य तत्राप्रसरात् । तथाहि शब्दो हि व्यवहारादिना गृहीतशक्तिक एव पदार्थप्रमितौ प्रभवति । प्रीतिस्त्वौत्सर्गिको मानसो भावः स्वसंवेद्यः । तत्र बाह्यव्यवहारेणानुमितिश्चेत्सापि नाव्यभिचरितहेतुजन्या भवितुमर्हति । तादृशहेतोरनुपलम्भात् । यत्तु स्नेहादिकार्यलिङ्गात्प्रेम्णोऽनुमानम् । तदपि शठादिसाधारणमिति नैकान्तेन प्रेमानुमापकम् । नापि तन्मूला मुग्धप्रलापादिव्यवहारास्तदुन्नायकाः । तेषामपि पूर्वोक्तशठादिषु व्यभिचारात् । तस्मात्केवलकार्यकारणभावादिना तत्सिद्धेरभावेऽपि प्रत्यक्षतया सर्वसंवेद्यत्वेन तत्सिद्धिरस्त्येव । अत एवेदानीं रशियादेशे तादृशो व्यवहारोऽपि सुसंबद्ध एवेति व्यर्थमिदं कल्पनाजालमितिचेन्न । रशियादेशे प्रवृत्तस्य व्यवहारस्य निदानं प्रेमैवेतान्यच्छत्रुपराजयद्वारा भोग्यसंपत्प्रकर्षसाधनमित्यत्र विनिगमनाभावात् । संभवति हि तीव्रतररागद्वेषादिनापि तात्कालिकं संघटनं सहकार्यप्रयोजकं प्रेमाभासनिबन्धनम् । नैतावता तत्र निरुपाधिकप्रेमसत्ता केनापि कल्पयितुं शक्या । अस्ति च व्यवहारिको न्यायः "हेतुतः शत्रुमित्रे भवतः" इति । नैतावता तन्मित्रत्वं निरुपाधिकप्रेममूलमिति वक्तुं शक्यम् । सुव्यवस्थादिकं तु तत्तद्राष्ट्रोत्कर्षकाले तत्तद्राष्ट्रियव्यवस्थास्वपि दृश्यते । नैतावता तासां व्यवस्थानां स्वाभाविकत्वं केनाप्यभ्युपेयते । शासनवशात्संकटभयाच्च कंचित्कालं सुव्यवस्थायामपि अपकर्षकाले तद्विघटनात् । इतिहासश्चात्र प्रमाणमिति नाधिकं विवेचनीयम् । न हि रोमनराष्ट्रोत्कर्षकाले स्वत्वापहारेऽपि न सुस्थितिः । न वा जर्मनराष्ट्रेऽपि नासीत्सा । केवलं सामग्रीन्यूनत्वेन अपकर्षादेव तेषां व्यवस्था न समीचीना, रशियादेशस्यैव समीचीनेति कल्पनमिदमुदराशिश्नपरायणतामेव गमयति । यदि च चिरकालसंरक्षणात्मकसामर्थ्यमेव समाजस्य सर्वोत्कर्षे गमकं स्यात्तदा तु चातुर्वर्ण्यात्मकसमाजेनाद्ययावन्नानाविधा यातना अनुभूयापि यत्संरक्षणं कृतम्, तत एव तत्समाजव्यवस्थायाः समीचीनत्वं सिध्यति । राज्यक्रान्तिद्वारा जायमानेऽपकर्षे न केवलं समाजव्यवस्थाया असमीचीनत्वमेव कारणम् । रणे जयश्रियाः प्रकर्षतन्त्रत्वेन सामग्रीप्रकर्षाभावेऽपि अपकर्षसंभवात् । तस्मान्नैकान्ततः प्रकर्षाप्रकर्षौ समाजव्यवस्थागमकाविति रशियादृष्टान्तेन स्वभाविकप्रेमाविष्कारोऽयं मन्दबुद्धिपरिकल्पित एव । नोचेत्पुनरपि परदेशाक्रमणव्यायामोऽयं रशियादेशस्य निष्कारण एव प्रसज्येत । यदि च परदेशस्थानां हितायैव परोपकारबुद्ध्यैति परिकल्प्येत । तदा तु मानवानां सर्वेषां हिताहितज्ञानमिदं रशियादेश एव संग्रथितम्, येषां हिताहितसंरक्षणं कर्तव्यं ते सर्वेऽपि तत्र विषये मूढा अशक्ताश्चेत्यपि परिकल्पनीयं स्यात् । को हि प्रेक्षावानेतादृशीं परिकल्पनामनुसंदध्यात् विना परप्रत्ययनेयबुद्धिम् । अत एव " संवरणमात्रं त्रयीति लोकयात्राविदः " इति दण्डनीतेर्दण्डकः । राष्ट्रियसंपत्तेः केन्द्रीकरणेन व्यष्टिगतमूलधनवादस्य ( भांडवलशाही ) समष्टिगतमु-

लधनवाद एव पर्यवसानमिति पश्यामः । तथा च प्राबल्यमूलकपरपीडनमप्यपरिहार्यमेवेति न दुर्बलानां कृते कापि व्यवस्थेह संभवति । अन्ततः प्रबलानां भोग्यतामङ्गीकृत्यैव जीवितव्यं दुर्बलैरित्येव सिध्यति । तच्चायुक्तं सर्वस्वातन्त्र्यवादिनामिति न यथार्थतया स्वातन्त्र्यं समता विश्वबंधुत्वं च कुत्रापीदानीमुपलभामहे । कौटिल्यमूलकताद्दशप्रलापानां त्वन्ततो गत्वा दुर्बलदास्यभाव एव पर्यवसानम् । तस्माद्यत्र भोग्योपार्जने भोगे च पूर्णतया सर्वेषां स्वातन्त्र्यं, यत्र च वस्तुगत्या प्रेमभावः, वस्तुगत्या च साम्यसंपादनमेवं च संकटकाले संरक्षणसामर्थ्यं चाऽऽविर्भूतं स्यात्ताद्दशी समाजरचनैव तत्पदव्यपदेश्या भवितुमर्हति नान्येति सुधीरमालोचनीयं सुधीभिः ।

## ( प्रेम्णस्त्यागपर्यवसायित्वम् )

एतच्च सर्वमपि तदैव सुसंपादं स्याद्यदि प्रेम्णस्त्यागपर्यवसायित्वं स्यात् । तदर्थं च प्रेमस्वरूपमेवादावालोचनीयम् । तत्र मनोऽनुकूलेषु अर्थेषु सुखसवेदनात्मकेच्छेव रतिः । सा च रतिप्रीतिभेदेन द्विधा । तत्र रतेरिच्छात्मकत्वम् । प्रीतेश्च प्रियत्वापरपर्यायमनोऽनुकूलत्वरूपत्वमिति पुरस्तादेव स्वप्रकाशनवचनानुसारेण निरूपितम् । इदमत्राऽऽलोचनीयं यदिदं स्वात्मनि प्रियत्वमाकीटपतङ्गमालोच्यते तत्किं मूलकमिति । किमत्र विषयेन्द्रियसंनिकर्षजन्यसुखसंवेदनवत्स्वात्मनि सुखसंवेदनाद्वा नैसर्गिकत्वाद्वा सुखात्मकत्वाद्वा । तत्र विषयवत्स्वात्मनः स्वातिरिक्तत्वाभावेन नेन्द्रियसंनिकर्षजन्यः सुखास्वादः संभवतीति नाऽऽद्यः पक्षः समुचितः । नैसर्गिकत्वपक्षस्तु निसर्गस्य सुखरूपत्वाङ्गीकारमन्तरेणासंभवी । न हि निसर्गस्य सुखरूपत्वाभावेऽपि सुखसाधनत्वमात्रेण तत्र मनोऽनुकूलत्वापरपर्यायं प्रियत्वं संभवति । मनोऽनुकूलत्वानुभूतिमन्तरा सुखसाधनत्वग्रहासंभवात् तद्ग्रहमन्तरा च मनोऽनुकूलत्वग्रहासंभवादन्योन्याश्रयापत्तेः । न च मनोऽनुकूलत्वमेव सुखसाधनत्वमिति वाच्यम् । तथा सति सुखानुभूतिं विना तत्साधनत्वग्रहासंभवेन प्रवृत्तेरप्यसंभवात्प्राथमिकी मनसः प्रेरणा तन्मूलकेन्द्रियप्रवृत्तिश्च न स्यात् प्रवृत्तिं प्रतीष्टसाधनत्वज्ञानस्यैव कारणत्वात् । न चैकस्य तथानुभवेऽपरस्य तदुपदेशाद्वस्तुनि सुखसाधनत्वग्रहे प्रवृत्तिः स्यादिति वाच्यम् । प्रथमानुभवस्य निर्हेतुकत्वप्रसङ्गात् । न च तस्यापि तत्पूर्वानुभवमूलकत्वमिति वाच्यम् । तथा सत्यनाद्युपदेशद्वारैवेष्टसाधनत्वग्रहस्तन्मूलिका च प्रवृत्तिरित्यङ्गीकर्तव्यम् । तदङ्गीकारे च सर्वासां प्रवृत्तीनां पूर्वपूर्वोपदेशमूलकत्वादुपदेशस्याप्यनादिपरम्परैवागत्या स्वीकरणीया स्यात् । तदङ्गीकारे च किमपराद्धं वेदापौरुषेयत्ववादिभिरिति विभावनीयम् । तथा च सर्वासां प्रवृत्तीनां ताद्दशानादिपरम्परोपदेशात्मकवेदवाक्यमूलकत्वमेव सिध्यति । तथा चोक्तं मनुना—

सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवाऽऽदौ पृथक् संस्थाश्च निर्ममे ॥ १।२१ । इति ।

तथा च ब्रह्मसूत्रम्

शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥

अ. १ पा. ३ अ. ९ सू. २८ ॥ अस्यार्थः—

देवतानां विग्रहवत्त्वे वैदिके वस्वादिशब्दे देवतावाचिनि विरोधः स्याद्वेदस्याऽऽदिमत्त्वप्रसङ्गादिति चेन्नास्ति विरोधः। कस्मात्? अतः शब्दादेव जगतः प्रभवादुत्पत्तेः। प्रलयकालेऽपि सूक्ष्मरूपेण परमात्मनि वेदराशिः स्थितः स इह कल्पादौ हिरण्यगर्भस्य परमात्मन एव प्रथमदेहिमूर्तेर्मनस्यवस्थान्तरमनापन्नः सुप्तप्रबुद्धस्येव प्रादुर्भवति। तेन प्रदीपस्थानीयेन सुरनरतिर्यगादिप्रविभक्तं जगदभिधेयभूतं निर्मिमीते। कथं पुनरवगम्यते शब्दात्प्रभवति जगदिति। प्रत्यक्षानुमानाभ्याम्। प्रत्यक्षं श्रुतिः। प्रामाण्यं प्रत्यनपेक्षत्वात्। अनुमानं स्मृतिः। प्रामाण्यं प्रति सापेक्षत्वात्। ते हि शब्दपूर्वां सृष्टिं दर्शयतः। "एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄन् तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शास्त्रमभिसौभगेत्यन्याः प्रजाः" इति श्रुतिः। तथाऽन्यत्रापि—स मनसा वाचं मिथुनं समभवत् (बृ. १।२।४) इत्यादिना तत्र तत्र शब्दपूर्विका सृष्टिः श्राव्यते। स्मृतिरपि—

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥ इति ॥

उत्सर्गोऽप्ययं वाचः संप्रदायप्रवर्तनात्मको द्रष्टव्यः। अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासंभवात्। तथा—

नामरूपे च भूतानां कर्मणां च प्रवर्तनम्।
वेदशब्देभ्य एवाऽऽदौ निर्ममे स महेश्वरः॥ इति ॥
सर्वेषां च स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवाऽऽदौ पृथक् संस्थाश्च निर्ममे ॥ इति च ॥

तदेवमिष्टसाधनत्वग्रहस्यानादिपरम्परोपदेशमूलकत्वात्तादृशोपदेशात्मकवाक्यपरम्पराप्यनादिरेव सिध्यति। तादृशस्य च वाक्यसमूहस्य वेदपूर्वकालिकस्यानुपलम्भाद्वेद एवानादिरिति तन्मूलिका एव सर्वाः प्रवृत्तय इत्यपि सिध्यति।

ननु न सर्वासां प्रवृत्तीनामिष्टसाधनत्वज्ञानमूलकत्वम्। अनादिसिद्धस्य प्रतिक्षणपरिणामिनः प्रकृतितत्त्वस्य परिणामप्रवृत्तेस्तादृशज्ञानमूलकत्वाभावात्। जडस्य तस्य तादृशज्ञानासंभवात्। तत्परिणामभूतबुद्धीन्द्रियाणामपि जडत्वेन तादृशज्ञानपूर्वकप्रवृत्त्यसंभवात्। किंतु स्वाभाविकमेव किल तेषां विषयप्रवणत्वं जलस्येव निम्नतागामित्वमिति। तथा च श्रुतिः—

पराञ्चि खानि व्यतृणत्स्वयंभूः ।
तस्मात्पराङ् पश्यति नान्तरात्मन् ॥ इति

एवं च विषयेषु स्वतः प्रवृत्तैरिन्द्रियैः समर्पितेषु तत्संवेदनानन्तरमेवेष्टानिष्टत्वप्रमितौ तत्साधनत्वं गृह्यत इति नानायुपदेशपरम्परावश्यकतेति चेत् । अत्र ब्रूमः—

स्यादेतदेवं यदि जडवाद एवोरीक्रियेत । न तु स संभवति । सुखदुःखाद्यनुपलम्भप्रसङ्गात् । न चोपलब्धिरपि जडस्यैव परिणामः । अनुपपत्तेः । तथाहि यदि जडादपि चेतनशक्तिहीनाच्चैतन्यं स्यात् । सर्वस्यापि कार्यकारणभावस्य विलोपप्रसङ्गात् । न हि कार्यविशेषस्य कृते कारणविशेषस्य ग्रहस्तदा संभवति । तदुत्पादकशक्त्यभावेऽपि कार्यकारणभावोपगमात् । न च तथोपलभ्यते कारणविशेषोपादानप्रवृत्तेरेव सर्वत्र दर्शनात् । न च सा कार्यकारणयोरुत्पाद्योत्पादकभावं विना संभवति । स चायमुत्पाद्योत्पादकभावः कारणे कार्योत्पादानुकूलशक्तिमन्तराऽनुपपन्नस्तच्छक्तिं ज्ञापयति । सा च न वस्तुस्वरूपातिरिक्ता । न हि दाहानुकूला प्रकाशानुकूला वा दहनशक्तिर्दहनस्वरूपातिरिक्ता । तस्माज्जडगता चैतन्योत्पादिका शक्तिरवश्यमङ्गीकर्तव्या । तदङ्गीकारे च तादृशशक्तिस्वरूपमेव जडस्वरूपमिति जडत्वव्याघातः । जडत्वोपलम्भात्तदनुकूलशक्तिकल्पने तु चैतन्योपलम्भानुपपत्त्या चेतनत्वव्याघातः । उभयविधशक्तिपरिकल्पनं तु तिमिरतेजोवत्परस्परविरोधादेकत्र परिकल्पितुमशक्यम् । तत्रागत्या पदार्थद्वयकल्पनायां जडस्य प्रवृत्त्यादिकार्यमिदं चेतनभोगार्थमेवेति अभ्युपगन्तव्यम् । जडस्य भोगासंभवेन निरर्थकप्रवृत्त्यापत्तेः । अत एव ।—

संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥

इति सांख्यकारिकायां जडातिरिक्तचेतनपुरुषसिद्धिरुपपादिता । तत्र घटपटादिभोग्यवस्तुवत् सुखदुःखयोरपि भोग्यत्वेन जडत्वाज्जडधर्मत्वमेवेति प्रवृत्तिसामानाधिकरण्यमेव। तथा च प्रवृत्तेरिव सुखदुःखयोरपि निसर्गत एव संभवान्निसर्गात्मकत्वम् । तथाऽपि निसर्गस्यापि फलोन्मुखीकरणाय चेतनस्य संनिध्यपरपर्यायः संयोगोऽपेक्ष्यत एव । तं विना प्रवृत्त्यनुपपत्तेः । न च तत्रापि चेतनसांनिध्यपूर्वकत्वेऽपि प्रवृत्तेरिष्टसाधनताज्ञानपूर्वकत्वं तु नास्त्येवेति वाच्यम् । प्रीत्यप्रीतिविषादात्मकत्वाज्जडस्य तत्पूर्वकत्वस्यापि स्वाभाव्यात् । न च प्रीत्यप्रीत्यात्मकत्वेऽपि ज्ञानस्य पुरुषनिष्ठत्वान्न जडस्य तत्पूर्वकत्वोपपत्तिः । वृत्त्यात्मकज्ञानस्यापि तदात्मकत्वात् । न च वृत्तेस्तदात्मकत्वेऽपि चैतन्यात्मकज्ञानस्य तन्निष्ठत्वाभावेन न सामानाधिकरण्यमिति वाच्यम् । वृत्तिसारूप्याच्चेतनस्य उपचरितसामानाधिकरण्येन उपपत्तेः । अन्यथा तु कर्तृभोक्तृस्वार्थपरिच्छेदात् कर्तुश्च भोगार्थं प्रवृत्तिमत्त्वात् पूर्वोक्तमते स्वर्गादिविषयकामनाकर्तृत्वेन कर्तुर्भोक्तृत्वाच्च न ज्ञानेच्छाप्रवृत्तीनां सामानाधिकरण्यं व्यभिचरतीति

औत्सर्गिकप्रवृत्तिवादे उत्सर्गस्यैव सुखदुःखमोहात्मकत्वेन स्वात्मन्युपलभ्यमानः प्रेमापि स्वाभाविक एवेति तत्संरक्षणादिप्रवृत्तिरियं न सुखसाधनत्वेनापि तु सुखात्मकत्वेनैवेति. प्रीत्यात्मकत्वमपि तस्य स्वाभाविकमेव ।

नन्वेवं निसर्गस्याप्रीत्यात्मकत्वात् दुःखरूपत्वेन हेयत्वमपि स्यात् । तथा च स्वात्मसंरक्षणादिप्रवृत्तिरिव तत्त्यागप्रवृत्तिरपि स्यात् । न च सा परिदृश्यते । न हि कोऽपि जन्तुर्मरणाय प्रयतते । तस्मादकिंचित्करमेव कल्पनाविलसितमिति चेन्न । दुःखरूपतानुभवे हानप्रवृत्तेरप्युपलम्भात् । न च प्रत्यहं दुःखोपलम्भेऽपि तथाप्रवृत्तेरनुपलम्भः । हानस्वरूपाज्ञानेन तथाऽनुपलम्भोपलब्धेः । तथाहि प्रत्यहं संसारतापनिष्टप्ताःप्राणिनस्ततो निवृत्तिमप्यभिवाञ्छन्ति । परंतु त्यागरूपाया निवृत्तेः स्वरूपाज्ञानात् दुःखनिदानभूतसृष्टेरन्यत्र गन्तुमशक्यत्वाच्च न निवर्तन्ते । न च मृत्युरूपोपायसंभवात्कुतो न तत्र प्रवृत्तिरिति चेयत्किंचित्सुखोपभोगाभिलाषेण तत्राप्रवृत्तेः । यदा तु—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥

इति गीताशास्त्रानुसारेण वा

" परिणामतापसंस्कारैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः "

इति पातञ्जलयोगदर्शनानुसारेण वा निखिलस्यापि ब्रह्माण्डान्तर्गतस्पर्शजन्यभोगस्य दुःखरूपतामध्यवस्यति । तदा तु तद्धानाय समुत्सुको जन्तुर्दृष्टानुश्रविकविषयवितृष्णस्तद्धानोपायोपादान एव प्रयतते । तच्च हानं न विषयप्रदेशाद्दूरतरगमनेन विषयत्यागात्मकम् । तस्यासंभवात् । जगदुपादानभूतपदार्थस्य सर्वव्यापित्वेन तदतिरिक्तप्रदेशाभावात् । किं तु वशीकारपूर्वकसकलसंसारकर्मानुवर्तनमेव तद्धानमिति सिध्यति ।

अत एव—इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥

इत्यादिवचनानि तादृशहानमेवोपदिशन्ति । पदार्थत्यागो वा कर्मत्यागो वाऽनैसर्गिकत्वादेवासंभवी ।

अत एव—न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥

इति प्रकृतिपारतन्त्र्यं प्रदर्श्य

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥

इति त्यागस्वरूपमपि गीताशास्त्रे प्रदर्शितम् । अत एव नैसर्गिकप्रीतेस्त्यागपर्यवसायित्वं व्यवहारेऽप्यंशतो मातापित्रोर्वात्सल्येन पुत्रार्थे त्यागात्परिदृश्यते । तत्सिद्धं त्यागपर्यवसायित्वं प्रेम्ण इति । सोऽयं त्यागः सुखदुःखोपहतात्मनामुदराशिश्नपरायणानां कदाप्यसंभवीति तेषां भोगेच्छामूलकाः सर्वेऽपि व्यवहारास्त्यागिभिरेव व्यवस्थापनीयाः, यथा ते त्यागपर्यवसायिनो भवेयुः । अत एव मनुः—

कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥

इति कामाकामस्वरूपपर्यालोचकपूर्वकं कामात्मनां शनैरकामात्मत्वसंपादनमेव श्रेय इति मन्यमानः शास्त्रमिदं मानवमिति प्रणिनाय । यस्य च पर्यवसानमपि—

एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥

सर्वसाम्यरूपब्रह्मसंपत्तौ प्रदर्शयामास ।

वस्तुतस्तु " सुखानुशयी रागः, दुःखानुशयी द्वेषः, स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः " इति योगशास्त्रीयव्याख्यानुसारेणाऽऽलोच्यमाने रागद्वेषाभिनिवेशरूपक्लेशानां स्वरूपे सर्वत्र पूर्वानुभवमन्तरेणोत्तरत्र तथा वृत्तेरनुदयात् " मा न भूवं हि भूयासम् " इति वृत्तेश्च मरणत्रासानुभवजन्याभिनिवेशरूपत्वाच्चानादित्वमेव सर्वासां वृत्तीनां सिध्यति । इतश्च पूर्वानुभवोपपत्त्यर्थं जन्मान्तरमप्यनुमीयते । एतेषां सर्वेषां क्लेशत्वं च दुःखरूपत्वादेव । अत एव हेयत्वमपि । ननु रागस्य सुखानुबन्धित्वात्कथं हेयत्वमिति चेदित्थम् । रागो हि सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्द्धस्तृष्णा लोभः स राग इति पातञ्जलदर्शनभाष्योक्त्या सुखेच्छारूपो रागः सुखाप्राप्तौ स्वरूपविघातात्क्रोधरूपेण परिणमते । ततश्च संमोहादिपरिणामान्तराण्युत्पाद्यान्ते विनाशाय भवतीति तस्य दुःखरूपत्वाद्धेयत्वमेव । एवं द्वेषाभिनिवेशयोरपि । तथा चोक्तम्—

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥

इति गीतायाम् ।

एतेन रागद्वेषाभिनिवेशात्मनामनुभवो हि तत्तद्वासनावासितत्वान्न यथावद्वस्तुस्वरूपाकलने समर्थ इत्यपि सिध्यति । तथा चैकस्यापि वस्तुनः प्रतिपुरुषमनुभूतिभेदः । ततश्च वैचित्र्यमिति सुखाय प्रवर्तमानोऽपि पुरुषो यथावत्सुखस्वरूपानाकलनान्मोहमापद्य विनष्टो भवति । तदिदं यथावद्वस्तुस्वरूपव-

र्शनं तन्मूलकं सुखं तत्साधनं च सुखदुःखमोहानाकलितान्तःकरणस्यैव भवितुमर्हतीति तादृशाः पुरुषा एव किल समाजरचनायाः स्वरूपाविष्कारे समर्थाः। अतश्च तैर्विरचितायाः समाजरचनायाः सर्वोपकारकत्वं सिध्यति। सुखदुःखमोहाभिनिविष्टास्तु स्ववासनावासितमेव सुखदुःखस्वरूपं पुरस्कृत्य समाजमाकलयितुं प्रयतन्ते ततश्च केषांचनोपरि बलादेवतद्रचितनियमानामाक्रमणमिति न मात्स्यन्यायनिवृत्तिर्भवति। एवं च बलादाक्रमणमिदं संघर्षमुत्पाद्य समये सर्वनाशाय प्रभवतीति नोपयुक्तता किल तादृशपुरुषविरचिता समाजरचना। सुखदुःखाभिनिवेशरहितास्तु जीवानां यथावदभिलषितसुखस्वरूपमाकलय्य तत्प्राप्त्युपायानेव—पुरस्कुर्वन्तः परिणामे सुखसंपत्तिलाभमाभिमुकुर्वते। तदिदं परिणामेऽमृतोपमं सुखमेव परमपुरुषार्थ इति तस्यैव यथावदुपलब्धिः श्रेयस्त्वेनाभिमन्यन्ते। इतरस्तु सुखं तात्कालिकेन्द्रियप्रीत्युत्पादकत्वात्प्रेय इति हेयत्वेनाभिमन्यन्ते। अतश्च यथावत्प्रीतेरपि पतङ्गस्य रूपप्रीतेरिव सर्वत्यागपर्यवसायित्वमेव भवति। सैव च प्रीतिः श्रेयःसंपादकत्वादत्र स्वाभाविकी न तु विषयनिष्ठा सुखसाधनत्वाद्युपाधिजनिता। अतश्च सैव पुरुषार्थ इति। तस्याश्च स्वाभाविकत्वादेव स्वात्मविषयकत्वमिति। स चायमात्मा किं देहेन्द्रियादिसंघातरूपो वा तदतिरिक्तः कश्चन पदार्थरूपो वेत्यन्यदेतत्। सर्वथा तु सुखात्मकत्वेन स्वात्मगतप्रीतिर्न व्यभिचरतीति तस्यास्त्यागपर्यवसायित्वमेव सिध्यति। यत्तु विषयेन्द्रियसंनिकर्षजन्यानन्दात्मकसंवेदनं कामापरपर्यायं सुखं तदपि स्वात्मगतप्रीतिवासनाजन्यत्वात् स्वात्मन्येव पर्यवस्यतीति न तद्भिन्नम्। एवं च विषयाणामभिव्यञ्जकत्वेऽपि तत्र सुखाभिनिवेशोऽयमकिंचित्कर एव। अत एव तस्य त्यागो न विषयाणाम्। एवं च विषयेषु सुखाभिनिवेशत्याग एवात्र त्यागपदार्थः। स च स्वगतप्रीतेः परिणामरूपो यथा संपद्येत तथैव समाजरचना योगक्षेमावहेति सिध्यति। अत एव मनुनापि सर्वस्यापि जगद्व्यवहारस्य काममूलकत्वं प्रदर्श्य तन्मूलभूतकामाभिनिवेशनिराकरणं विधीयते—

> तेषु सम्यग्वर्तमानो गच्छत्यमरलोकताम्।
> यथा संकल्पितांश्चेह सर्वान् कामान् समश्नुते॥ २।५॥

इति श्लोकेन। अत्र तेषु इत्यनेन—

> संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः।
> व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः॥२।३॥

इत्यत्रोक्ताः सर्वाः क्रिया ग्राह्याः। अत्र मन्वर्थमुक्तावलिर्यथा—संप्रति पूर्वोक्तं फलाभिलाषनिषेधं निगमयति तेषु सम्यग्वर्तमान इति। नात्रेच्छा निषिध्यते किं तु शास्त्रोक्तकर्मसु सम्यग् वृत्तिर्विधीयते। बन्धहेतुफलाभिलाषं विना शास्त्रीयकर्मणामनुष्ठानं तेषु सम्यग्वृत्तिः। सम्यग्वर्तमानोऽमरलोकताममरधर्मकं ब्रह्मभावं गच्छति। मोक्षं प्राप्नोतीत्यर्थः। तथाभूतश्च सर्वेश्वरत्वादिहापि लोके सर्वान्

भिलषितान् प्राप्नोति । तथा च छान्दोग्ये—स यदा पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति " इत्यादि ॥ ५ ॥

अभ्युपेत्यापि विषय संपर्कजन्यकामात्मकसुखमेव परमपुरुषार्थं ब्रूमः । यदि विषयसुखमेव परमं श्रेयस्तर्हि विषयाणामुत्पत्तिविनाशशालित्वेनानित्यत्वात्स्वप्रयत्नेन तदुपार्जनस्य निरन्तरस्याभ्युपगमेऽपि अनेकसाधनसामग्रीसाध्यत्वेन बह्वायासजन्यत्वात्क्लेशकरत्वात् परायत्तत्वात् तदपहारभीतिग्रस्तत्वाच्च न निरन्तरसुखोपभोगः संभवति । तदपेक्षया यदि स्वायत्तोपार्जनं तेषामितरसाधनानधीनं संभवेत्तदा तु कस्य वा प्रेक्षावतस्तत्साधने प्रवृत्तिर्न स्यात् । तादृशं स्वायत्तमुपार्जनं स्वान्तःकरणसामर्थ्यसंपादनद्वारा प्रकृत्यापूरसाहाय्येन सर्वेषां संभवतीति शास्त्राणामुद्घोषः । सोऽयं सत्यो वाऽसत्य इति प्रतीत्यर्थमपि केश्चिदेव प्रयतेत चेत्तदा तु तत्सत्यत्वमिथ्यात्वप्रतीतिः स्यात् । यदि प्रतीत्या सत्यत्वं सिध्येत्तदा तु तदनुसारेणैव सर्वेषां प्रवृत्तिर्विधेया स्यात् । येस्त्वद्य यावत्तत्प्रतीतिः संपादिता, तेषां सर्वेषां तत्र मतैक्यमेव । न च ते सर्वेऽपि विप्रलम्भका धूर्ता इति वक्तुं शक्यम् । रागद्वेषराहित्यात् । निःस्वार्थत्वात् । नहि अस्मान् विप्रलभ्य तेषां कश्चन स्वार्थः साधनीय इति कल्पयितुमपि शक्यं विनोदराशिश्रपरायणेभ्यः । न वा ख्यात्यादिकमपि तत्र प्रवृत्तिकारणम् । निष्फले दुःखैकफले च तादृशप्रवृत्तेरनुपपत्तेः । तस्मात्तत्प्रतीत्यनुसारेण शास्त्रैकवर्त्मना गन्तव्यमित्येव श्रेयस्करमिति सिध्यति पराक्रान्तं चात्र कुसुमाञ्जलावुदयनाचार्यैः—

विफला विप्रवृत्तिर्नो न दुःखैकफलापि वा ।
दृष्टलाभफला नापि विप्रलम्भो हि नेदृशः ॥८॥

इति कारिकाव्याख्यान इति तत एवावगन्तव्यम् । अन्तःकरणसामर्थ्यद्वारा प्रकृत्यापूरेण यथाभिलषितपदार्थानां स्वायत्तसंपादनं यथा भवति तथोपपादितं योगशास्त्रे । तद्यथा—

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥४।१॥

देहान्तरिता जन्मना सिद्धिः । ओषधीभिरसुरभवनेषु रसायनेनेत्येवमादिः । मन्त्रैराकाशगमनाणिमादिलाभः । तपसा संकल्पसिद्धिः कामरूपी यत्र तत्र कामग इत्येवमादि । समाधिजाः सिद्धयो व्याख्याताः । तत्र कायेन्द्रियाणामन्यजातीयपरिणतानाम्—

जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ ४।२ ॥

पूर्वपरिणामापाय उत्तरपरिणामोपजनस्तेषामपूर्वावयवानुप्रवेशाद्भवति । कायेन्द्रियप्रकृतयश्च स्वं स्वं विकारमनुगृह्णन्त्यापूरेण धर्मादिनिमित्तमपेक्षमाणा इति ।

निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु —

ततः क्षेत्रिकवत् ॥ ४।३ ॥

नहि धर्मादि निमित्तं प्रयोजकं प्रकृतीनां भवति। न कार्येण कारणं प्रवर्त्यत इति। कथं तर्हि वरणभेदस्तु ततः क्षेत्रिकवत्। यथा क्षेत्रिकः केदारादपां पूरणात् केदारान्तरं पिप्लावयिषुः समं निम्नं निम्नतरं वा नापः पाणिनाऽपकर्षति, आवरणं त्वासां भिनत्ति। तस्मिन् भिन्ने स्वयमेवाऽऽपः केदारान्तरमाप्लावयन्ति। तथा धर्मः प्रकृतीनामावरणमधर्मं भिनत्ति। तस्मिन् भिन्ने स्वयमेव प्रकृतयः स्वं स्वं विकारमाप्लावयन्ति। यथा वा स एव क्षेत्रिकस्तस्मिन्नेव केदारे न प्रभवत्यौदकान् भौमान् वा रसान् धान्यमूलान्यनुप्रवेशयितुम्। किं तर्हि मुद्गगवेधुकश्यामाकादींस्ततोऽपकर्षति। अपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति। तथा धर्मो निवृत्तिमात्रे कारणमधर्मस्य। शुद्ध्यशुद्ध्योरत्यन्तविरोधात्। न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवतीति। अत्र नन्दीश्वरादय उदाहार्याः। विपर्ययेणाप्यधर्मो धर्मं बाधते। ततश्चाशुद्धिपरिणाम इति। तत्रापि नहुषाजगरादय उदाहार्याः, इति।

एतेन सुखदुःखमोहादिविकाराणां स्वाभाविकत्वेऽपि तत्तदनुकूलपदार्थानां सेवनेन तत्तद्विकारस्य दृढत्वं प्रतिकूलविकाराणां तदनुकूलपदार्थपूरणाभावेन निराकरणं च भवितुमर्हतीति सिध्यति। तत्रापि स्वभावतो वर्तमानस्यैव तस्य तस्य विकारस्य परिपोषो विरुद्धावरणात्मकं विकारं भित्त्वैव जायते। तद्भेदश्च तादृशपदार्थोपभोगेन सिध्यतीति गम्यते।

स चायमावरणभेदः प्रकृतिपरिपोषश्च जन्मौषधिमन्त्रतपःसमाधिभिः पञ्चविधैः कारणैर्भवतीति जन्मसिद्धस्य तस्यौत्पत्तिकत्वेन मनुष्यप्रयत्ननिष्पाद्यत्वाभावात्। समाधिसिद्धस्य व्यवहारानुपयोगित्वादौ औषधिजन्यस्य मन्त्रजन्यस्य तपोजन्यस्य च त्रिविधस्य पुरुषप्रयत्नसाध्यत्वं सिध्यति। तत्रौषधादिना तादृशदेहादिपरिवर्तनप्रयत्न इदानीमपि रसायनशास्त्रद्वारा पाश्चात्त्यैः क्रियत एव। पूर्वमपि पारदादिद्वारा तथा प्रयत्नः संपादित एवेति रसेश्वरदर्शनादवगम्यते। मन्त्रैस्तु तथा परिवर्तनं देहादेर्भवतीति मन्त्रशास्त्रादवगम्यत उपलभ्यते च कदाचित्कश्चित्। द्विविधेऽप्यस्मिन्न स्वाभाविकत्वं सर्वजनसाधारण्येनाधिगमसौकर्यं चेत्यगत्या तपसैव तादृशप्रकृत्यापूरः सर्वसाधारण्येन सुलभ इति पर्यवस्यति। नहि तादृशमौषधं समुपलभ्यते। समुपलब्धमपि न सर्वजनेभ्यस्तत्त्वधिगमम्। दृश्यते चेदानीमपि चिकित्साशास्त्रसिद्धान्यौषधानि बहुव्ययायाससाध्यानि द्ररिद्रादिसर्वजनसुलभानि नैव भवन्तीत्यनुमीयते न तादृशमौषधमुपलब्धमपि सर्वजनोपकाराय प्र.वेदिति। मन्त्रसिद्धिस्तु दीर्घकालपर्यन्तं यमनियमाद्यनुष्ठानक्लेशाननुभूयैव जायमाना न प्रत्यहमपेक्षितजीवनानिर्वाहानुकूलेति कश्चित्कदाचित् कस्यचिदेवेति सर्वजनसाधारणी। तपसस्तु योगक्षेमनिर्वाहानुकूलत्वेन प्रत्यहं यथाशक्ति सर्वैरपि यथावदनुष्ठातुं शक्यत्वात्संभवति सर्वसाधारण्यम्। न च तपसोऽपि पञ्चाग्निसाधनादेर्बह्वायाससाध्यत्वात् योगक्षेमविघातकत्वाच्च न सर्वोपयुक्तत्वमिति वाच्यम्। तपःशब्दस्यात्र नियतकर्माचरणनियताहारविहारादिलौकिककर्मपरत्वात्। तथा चोक्तं मनुना—

यस्मिन् कर्मण्यस्य कृते मनसः स्यादलाघवम् ।
तस्मिंस्तावत्तपः कुर्याद्यावत्तुष्टिकरं भवेत् ॥
तपोमूलमिदं सर्वं दैवमानुषकं सुखम् ।
तपोमध्यं बुधैः प्रोक्तं तपोन्तं वेददर्शिभिः ॥
ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।
वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ॥
ऋषयः संयतात्मानः फलमूलानिलाशनाः ।
तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ॥
औषधान्यगदो विद्या दैवी च विविधा स्थितिः ।
तपसैव प्रसिध्यन्ति तपस्तेषां हि साधनम् ॥
यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् ।
सर्वं तु तपसा साध्यं तपो हि दुरतिक्रमम् ॥ ११।२३७।२३८ इति ।

यद्यप्येतेषां श्लोकानां प्रायश्चित्तप्रकरणपठितत्वात्कृच्छ्रचान्द्रायणादिप्रायश्चित्तपरत्वमेवो-न्नीयते सर्वैः । तथापि "ब्राह्मणस्य तपो ज्ञानम्, इति स्वकर्मनिर्देशः, औषधादिसिद्धिश्च प्रति-पाद्यमाना सततेकर्माचरणात्मकमेव संयममूलकं तप इति मनोरभिप्रायोऽपि स्पष्टतया प्रतीयमानो नापह्नोतुं शक्यः । प्रमाणान्तरसिद्धार्थानुवादकस्यार्थवादस्य "अग्निर्हिमस्य भेषज" मित्यादेः स्वार्थे प्रामाण्याभ्युपगमात् । तस्मात्प्रत्यहं नियतकर्माचरणात्मकं तपोऽपि तादृशप्रकृत्यापूरसादकं भवतीति सिद्धम् ।

प्रकृते च समाजरचनाविषयेऽर्थकाममूलकत्वपरिकल्पने परस्परविरोधिनां परस्परोपघातकानां च मनोविकारात्मकभावानां प्राधान्ये सर्वेषामभिमतार्थसिद्धिर्मात्स्यन्यायप्रादुर्भावान्न कदापि भवितुम-र्हतीति तादृशन्यायनिराकरणमेव कर्तव्यतया समापतति । तच्च न निरपेक्षकर्तव्यनिष्ठामन्तरा भवितुमर्हति । सा च न फलाभिलाषत्यागमन्तरेति रागद्वेषाभिनिवेशत्याग एव समाजरचनामूलभूत तत्त्वमिति निरपवादमेव सिध्यति ।

( उपयुक्ततावाददृष्ट्यापि त्यागस्याऽऽवश्यकता )

उपयोगो नाम समाजस्थित्यनुकूलपरिणामजनकत्वम् । स च परिणामस्तत्तत्स्वाभाविकमनो-विकारानामनुसरणे तु न कदापि भवितुमर्हति । स्वभावोपघातस्य वस्तुनाशात्मकत्वात् । नाशो हि मरणम् । न च तत्कस्यापीष्टम् । ततश्च यावच्छक्ति स्वीयमनोविकारपरिपोषायैव सर्वेषां प्रवृत्तिः । तथा च सर्वत्र सर्वे प्रवर्तिते पुनश्च मात्स्यन्यायेन बलमेव निर्णायकं स्यात् । तत्परिहारश्च

सर्वेषामभिमतः। स च तदैव भवितुमर्हति यदा बलवन्तः स्वीयरागद्वेषाभिनिवेशप्रहाणपूर्वकमेव सर्वेषां संरक्षणाय बद्धपरिकरा भवेयुः। नो चेत्तेषामपि स्वार्थवशात्प्रवृत्तौ मात्स्यन्यायपरिपोषणेन सर्वेषामशान्तिरेव स्यात्। अतश्च बलवद्भिः रागद्वेषाभिनिवेशत्यागपूर्वकं सर्वेषां परिपालनमेव कर्तव्यतयाऽभिमन्तव्यम्। तच्च सर्वेषां तत्तन्मनोविकारसंरक्षणपूर्वकमेव भवितुमर्हति। नान्यथा। न च दम्भादिमनोविकाराणां समाजविघातकत्वात्कथं परिपालनं कर्तव्यमिति वाच्यम्। तेषामपि कण्टकशोधनादावुपयोगात्। न हि जगति समुत्पन्नपदार्थानां वा समुपलभ्यमानानां भावानां वाऽऽत्यन्तिकानुपयोगित्वं वा सर्वथा दुष्टत्वं वा। तथा चेत्तेषामुत्पत्तिर्वा स्थितिर्वा कदापि न स्यात्। नात्यन्तं गुणवत्किंचिन्न चाप्यत्यन्तनिर्गुणमिति न्यायात्। स चायमुपयोगः कस्य कदा कुत्र वा भवितुमर्हतीति निपुणेन चक्षुषा सुदीर्घमालोच्य तत्र तत्र कार्ये तत्तद्भावभावितानां विनियोग एव समुचितः। अत एव "अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः" इति न्यायविदां सिद्धान्तः। एवं च तत्तद्भावपरिपोषणमप्यावश्यकमेव समाजस्थित्यै। अत्र च न केवलं तात्कालिकभावाविष्कारस्तथोपयुक्तो भवति यथा स्वाभाविक इतरभावाभिभवेन मूलत एव परिपुष्टः। अतश्च तादृशभावस्थिरीकरणाय इतरभावोत्पादकपदार्थानां परिहार्यत्वं स्वभावपरिपोषकक्रियाणां च कर्तव्यत्वमवश्यमेवाङ्गीकर्तव्यम्। एवं च सर्वेषां जनानां स्वभावपरिपोषणावसरलाभेन सुखित्वसंपत्तावितरसंघर्षपरिहारोऽपि सुस्थिरः स्यात्। एवं च जगति तत्तद्भावैकनिरतानां पुरुषाणां यथासमय सर्वत्राऽऽवश्यकत्वाद्भद्रे तेषां संततिद्वारा परिपूरणमपि यथा स्यात्तथा संपादनीया समाजरचना। तच्च परिपूरणमावश्यकतानुसारेणैवेति परिपूरणावश्यकतयोः परिमाणं यथा परिमाणपद्धतिं नातिक्रामेत्तथापि प्रयतनीयम्। एवं च वाणिज्ये यथाऽऽवश्यकतानुसारेण पदार्थनिष्पत्तिपरिपूरणेऽपेक्ष्येते तथा समाजेऽपि तत्तद्भावनिष्ठानां पुरुषाणामुत्पत्तिपरिपूरणे अपेक्षाननतिक्रमेण सातत्येन यथा संभवेताम्, तथैव समाजरचना विधेया स्यात्। अत्र च सर्वेषामौत्पत्तिकस्वस्वभावनिष्ठा संपादनीया चेत्तर्हि तु तात्कालिकरागद्वेषमूलकपरस्वभावकर्मादावभिरुचिर्जायमाना निरोद्धव्या भवति भैक्ष्याभिरुचिवदऽऽर्जुनस्य। सा चाऽऽन्वीक्षिकीद्वारा जगतोऽनादिसिद्धवस्तुस्थितिप्रकाशनद्वारैव नान्यथेति आन्वीक्षिकीसिद्धतत्त्वज्ञानस्याप्युपयोगः समाजस्थितयेऽवश्यमङ्गीकरणीयः। तच्चेदं तत्त्वज्ञानं तत्तद्भावपरिपोषकमेव तेषां कृते स्यादिति तत्त्वज्ञानमपि व्यवहारानुकूलं प्रकृतिभेदाद्भिन्नं भवति। अत एव धर्मव्याधाख्याने मांसविक्रयात्मकधर्मघृणायां प्रदर्शितायां व्याधेन स्वधर्म इत्येव तस्य प्रतिपादनं हिंसात्मकत्वं जगतः प्रदर्श्य विहितम्। तथैव पतिव्रतयापि। तुलाधारजाजलिसंवादे तुलाधारेणापि स्वाचारस्य धर्मत्वव्यवस्थापनमेवमेव कृतम्। अत्र च सर्वेष्वप्याचारेषु या किल प्रवृत्तिस्तदेकनिष्ठा परिदृश्यते, न सा स्वेतरभावविषये तात्कालिकोपजायमानाभिरुचिनिरोधमन्तरा संभवति। न च निरोधोऽपि शास्त्रीयज्ञानमन्तरा न च शास्त्रमपि सृष्टितत्त्वाकलनमन्तरा रागद्वेषाभिनिवेशग्रस्तस्वबुद्धिपरिकल्पनया। एवं

चत्यागबुद्धिरियं स्वभावपरिपोषकत्वात्कर्तव्यनिष्ठामुत्पादयन्ती रागद्वेषाभिनिवेशानवरोधयतीति सर्वथा समाजोपकारकत्वात्समाजरचनामूलमिति सिध्यति । अत एव शंपाकगीतायां त्यागमाहात्म्यमुपवर्णितम् । तद्यथा—

भीष्म उवाच—

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शंपाकेनेह मुक्तेन गीतं शान्तिगतेन च ॥२॥
अब्रवीन्मां पुरा कश्चिद्ब्राह्मणस्त्यागमाश्रितः ।
क्लिश्यमानः कुदारेण कुचैलेन बुभुक्षया ॥३॥
उत्पन्नमिह लोके वै जन्मप्रभृति मानवम् ।
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ॥४॥
तयोरेकतरे मार्गे यदेनमभिसन्नयेत् ।
न सुखं प्राप्य संहृष्येन्नासुखं प्राप्य संज्वरेत् ॥५॥
न वै चरसि यच्छ्रेय आत्मनो वा यदीशिषे ।
अकामात्मा हि सदा धुरमुद्यम्य चैव हि ॥६॥
अकिंचनः परिपतन् सुखमास्वादयिष्यसि ।
अकिंचनः सुखं शेते समुत्तिष्ठति चैव ह ॥७॥
आकिञ्चन्यं सुखं लोके पथ्यं शिवमनामयम् ।
अनमित्रपथो ह्येष दुर्लभः सुलभो मतः ॥८॥
अकिंचनस्य शुद्धस्य उपपन्नस्य सर्वतः ।
अवेक्षमाणस्त्रीन् लोकान्न तुल्यमिह लक्षये ॥९॥
आकिंचन्यं च राज्यं च तुलया समतोलयम् ।
अत्यरिच्यत दारिद्र्यं राज्यादपि गुणाधिकम् ॥१०॥
आकिंचन्ये च राज्ये च विशेषः सुमहानयम् ।
नित्योद्विग्नो हि धनवान्मृत्योरास्यगतो यथा ॥११॥
नैवास्याग्निर्न चारिष्टो न मृत्युर्न च दस्यवः ।
प्रभवन्ति धनत्यागाद्विमुक्तस्य निराशिषः ॥१२॥
तं वै सदा कामचरमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः ॥१३॥

धनवान् क्रोधमोहाभ्यामाविष्टो नष्टचेतनः।
तिर्यगीक्षः शुष्कमुखः पापको भ्रुकुटीमुखः ॥१४॥
निर्दशन्नधरोष्ठं च क्रुद्धो दारुणभाषिता।
कस्तमिच्छेत्परिद्रष्टुं दातुमिच्छति चेन्महीम् ॥१५॥
श्रिया ह्यभीक्ष्णं संवासो मोहयत्यविचक्षणम्।
सा तस्य चित्तं हरति शारदाभ्रमिवानिलः ॥१६॥
अथैनं रूपमानश्च धनमानश्च विन्दति।
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः ॥१७॥
इत्येभिः कारणैस्तस्य त्रिभिश्चित्तं प्रमाद्यति।
प्रसक्तमना भोगान् विसृज्य पितृसंचितान् ॥१८॥
परिक्षीणः परस्वानामादानं साधु मन्यते।
तमतिक्रान्तमर्यादमाददानं ततस्ततः ॥१९॥
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः।
एवमेतानि दुःखानि तानि तानीह मानवम् ॥२०॥
विविधान्युपपद्यन्ते गात्रसंस्पर्शजान्यपि।
तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ॥२१॥
लोकधर्ममवज्ञाय ध्रुवाणामध्रुवैः सह।
नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ॥
नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भव ॥२२॥
इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम्।
शंपाकेन पुरा मह्यं तस्मात्त्यागः परो मतः ॥२३॥ (म.भा. शां.मो. १७६)

अत्र च यद्यपि भोग्यसंपत्तेः स्वरूपतस्त्याग एव प्रशस्यते तथापि तस्य कामनिर्वृत्तिमन्तराऽनुपपत्तेः कामत्याग एव पर्यवसानम्। अत एव "अकामात्मापि सदा धुरमुद्यम्य चैव ह" इत्यकामात्मनोऽपि मनोवृत्तितादूप्याभिमानात्संसारदुःखभार इति स्वभावत आत्मनो निष्कामत्वं प्रदर्शितम्। एवं च एतादृशात्मस्वरूपपर्यालोचनपराणां मनोविकाराणामपि त्यागादिकार्यकारित्वेन जगन्निरपेक्षस्वानन्दसाम्राज्याधिरूढत्वाज्जगत्यावश्यकता वर्तत एव। किं बहुना एतादृशा निरपेक्षा एव भोग्यसंपत्तिव्यवस्थासंपादनेन जगत्स्वास्थ्यं निष्पाद्य योगक्षेमावहं मार्गं प्रस्थापयितुं समर्था इति त्यागिन एव समाजरचनाधिकारो न भोगिनामिति सिध्यति। अत एव "अथ यदि ते कर्मविचि-

कित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः—यथा ते तत्र वर्तेरन्, तथा तत्र वर्तेथाः" इत्यौपानिषदमनुशासनं संगच्छते। एवमेवाभ्याख्यातेष्वपि। इदमेव शुद्धं ब्राह्मण्यं यस्य रक्षणेन किल रक्षितः स्याद्वैदिको धर्म इत्याहुः शंकरभगवत्पादा गीताशास्त्रस्योपोद्घातप्रस्तावे। अत एव चातुर्वर्ण्यसृष्ट्यनन्तरं "स धर्मं व्यसृजत्" इति सर्वतो बलवद्धर्मस्य सृष्टिरभिहिता बृहदारण्यके। गीताशास्त्रं च सर्वमपि त्यागपरमिति सर्वजनीनमेव। एवं च त्यागवृत्तेः परां काष्ठामाचरन्तोऽपि केचन निदर्शनीभूता अपेक्ष्यन्ते समाजे। त एव हि मात्स्यन्यायनिराकरणे समर्था इति सिध्यति।

एवं चेदानींतनानामर्थकामोपहतात्मनां केवलमर्थसाम्यसंपादनप्रयत्नेन क्रियमाणा समाजरचना कथं वा मात्स्यन्यायनिराकरणेन समाजसुखस्वास्थ्याय प्रभवेदिति तु त एव जानन्ति। सत्यमर्थोऽपि जगत्यनर्थकारकः। तस्य नियन्त्रणमप्यावश्यकमेव। नैतावता स एव सर्वसुखनिदानमित्यभ्युपगन्तुं शक्यम्। किंतु अर्थस्योत्पादनविभजनयोरिव विनियोगस्यापि नियन्त्रणावश्यकत्वात्तस्य च चित्तवृत्तेर्नियन्त्रणं विनाऽनुपपन्नत्वात्तस्य च भोगेषु दोषदृष्ट्युत्पादनमन्तराऽशक्यत्वात्तादृशदोषदृष्ट्युत्पादकशास्त्रमप्यवश्यमेवाभ्युपेयम्। एवं चैतादृशशास्त्रमूलिका समाजरचनैव यथावत्समाजरचना नान्येति सिद्धम्। तथा चैतादृशां कामक्रोधाद्यनुपहतचित्तवृत्तीनां विषयनिरपेक्षाणां त्यागिनां यज्जीवननिर्वाहादिकं सातत्येनानुष्ठीयमानं कर्म, तदेव तपः सर्वसुखनिदानम्। तावदेव स्वत्वं भोग्यजाते प्राणिनाम्। अत एव

यावद् भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति॥

इत्यपि स्वत्वानुशासनमुपपद्यते। नैतावता भोग्यसंपत्त्युत्पादनसामर्थ्यं तत्संग्रहविनिमयादिसामर्थ्यं वा केषांचित्स्वाभाविकमपनोद्यते। अपि तु स्वाभाविकतत्सामर्थ्यपरिरक्षणेन तत्कार्यकारित्वेनैव च तदुपार्जितभोग्यजातविनियोगपद्धतिनियन्त्रणद्वारैव समाजपरिरक्षणमभिहितं धर्मशास्त्रे वृत्तिनियमनेन व्ययनियन्त्रणेन च। अधिकं चात्र पश्चाद्विस्तरेण वक्ष्यते।

प्रकृते तु त्यागवृत्तिरियं समाजसंरक्षणक्षमेति तस्याः परिरक्षणं तदुपयोगिविद्याध्ययनबोधाचरणप्रचारद्वाराऽत्यन्तमेवाऽऽवश्यकम्। तथैव मात्स्यन्यायनिवारणानुकूलकर्मशक्त्युद्बोधकचित्तवृत्तीनामन्यासां च तत्तत्कार्यानुकूलमनोवृत्तीनामपि तत्तदुपयोगिविद्याध्ययनप्रचारादिद्वारा परिरक्षणमत्यावश्यकमेव। न केवलं परिरक्षणमेव किं तु सातत्येन समाजे तत्तत्कार्यानुकूलशक्तिमत्पिण्डोत्पत्तिरपि यथा भवेत्तथैव समाजघटना सुविधेया स्यात्। तच्च न नूतनदेहोत्पादेन मानवानां सुकरं स्वायत्तं वा। किं तु विद्यमानदेहानामेव पर्यालोचनेन यत्र यस्य भावस्याऽऽविर्भावः संभवति तस्य तथैव परिरक्षणेन ततश्च तादृशपिण्डोत्पाद एव यथा स्यात्तथा नियमनेन च

समाजपरिरक्षणं स्वायत्तं भवति। मात्स्यन्यायविभञ्जकभावोऽपि त्यागमूलक एव। अतश्च त्यागस्यैव समाजरचनामूलत्वं सिध्यति। एवं चोपयुक्तता सर्वेषां भावानां तदुपकारकपिण्डानां च वर्तत इति भोगाभिलापरहिताः सर्वेऽपि समानाः, न तत्रोच्चनीचभेदः शास्त्रदृष्ट्या व्यावहारिकदृष्ट्या तु विभिन्नकार्यकारित्वाद्वासमानोऽपि अकिंचित्कर एवैहिकपारमार्थिकभोगसाम्यादिति सर्वथोपयुक्ततावादेऽपि त्यागस्याऽऽवश्यकता सिध्यति।

## ( त्यागिन एव दण्डाधिकारः )

तदेवं मात्स्यन्यायनिराकरणस्याऽऽवश्यकताया सिद्धायां तदुपयोगिदण्डस्याप्यावश्यकता सिध्यति। किं बहुना विना दण्डं दण्डनीतिं च यत्किमपि शास्त्रं वा कर्म वाऽनुष्ठीयमानं न कथमपि फलेग्रहित्वमावहतीति पुरस्तादेवोपपादितं नीतिप्रतिबिम्बे। तथा च दण्डप्रणयनमप्यावश्यकमेव। स चायं दण्डो व्यक्तित्वायत्तो वा समाजस्वायत्तो वा यथाकथमपि प्रणीयमानो न प्रणेतृपुरुषेच्छापूरकत्वेन कुत्रापि विहितः। नहि दण्डो वा दण्डसंस्था वा कस्यापि स्वायत्तं रिक्थम्, येन वंशपरम्परया यथेच्छविनियोगाधिकारः स्यात्। न वा समाजहिताहितनिर्धारणमपि स्वेच्छया स्वबुद्धिविभवानुसारेण वा केनाप्येकेन वा बहुभिर्वा कर्तुं शक्यम्। हिताहितोपयुक्तमनोविकाराणामतिसूक्ष्मत्वेन शास्त्रमन्तरा प्रमातुमशक्यत्वात्। दृश्यस्थूलजगद्व्यवहाराणां सूक्ष्मातिसूक्ष्ममनोविकारमूलकत्वात्। स्थूलसृष्टेरपि सूक्ष्मसृष्टिपूर्वकत्वेन तद्गतकर्मविपाकानां शास्त्रमन्तरा कथमपि प्रमितेरसंभवात्। ता विना स्थूलकर्मणामपि हिताहितत्वप्रमित्यसंभवाच्च। उक्तं च गीताशास्त्रे—

> अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
> अव्यक्तनिधनान्येव तत्र का परिदेवना॥ इति।
> अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।
> रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके॥ इति च।

अत एव च—

> अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।
> परं भावमजानन्तो ममाव्ययमनुत्तमम्॥

इत्यपि तत्रैवोक्तम्। नहि वस्तुस्वरूपं बाह्यस्थूलदृष्ट्या भासमानमेव वस्तुसत्। किंतु अन्वयव्यतिरेकसिद्धतद्गतसूक्ष्मगुणधर्मात्मकमेव वस्तुसदिति तदेव हिताहितत्वेनोपयुज्यते। नो चेन्नौषधादिपु समानाकारेषु कथमपि भेदः स्यात्। नहि भस्मादीनि रसायनानि समानाकाराण्यपि तद्गतगुणदोषविशेषमन्तरा विभिन्नानि भवितुमर्हन्ति। एवं चान्वयव्यतिरेकसिद्धतत्तद्गुणदोषस्वरूपमेव वस्तुस्वरूपमगत्या स्वीकरणीयम्। तदेव खलूपयुज्यते न बाह्यं भासमानमपि समानाकार साम्येन उपयुज्यते

प्रेक्षावद्भिः। तथा च मात्स्यन्यायनिराकरणाय प्रणीयमानो दण्डोऽपि न बाह्यं भासमानं समानाकारमवलम्ब्यैव प्रणेतुं शक्यः। मूलभूतभावभेदमूलकविभिन्नकार्यकारित्वात्सृष्टेस्तथा प्रणयने स्वास्थ्यासंभवात्। अतश्च जगत्तत्त्वाकलनपूर्वकमेवार्थकामौ यथा सर्वेषां निष्पद्येयाताम्, तथैव तत्प्रणयनमत्यावश्यकम्। तच्च जगत्तत्त्वावबोधकशास्त्रज्ञानमन्तरा दुर्घटमिति शास्त्रज्ञानपूर्वकमेव तत्प्रणयनं जगद्योगक्षेमावहम्। नतु स्वेच्छया वा अज्ञजनसमूहेच्छया वेति सिध्यति। तदुक्तम्—

सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना।
न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च॥ ७।३०
शुचिना सत्यसंधेन यथाशास्त्रानुसारिणा।
प्रणेतुं शक्यते दण्डः सुसहायेन धीमता॥ ७।३१इति मनुना।

अत्र च "यथाशास्त्रानुसारिणा" इति पदेन यत्किल शास्त्रानुसरणं विधीयते, तदिदं शास्त्रं नाम धर्मार्थकामविषयकमेवेत्यर्थकामयोरपि कर्मविपाकशास्त्रद्वारा हिताहितत्वमध्यवसायैव प्रचारः श्रेयस्करः। अतश्चार्थकामावपि कर्मविपाकापरपर्यायधर्मशास्त्रानुसारिणावेव संमतौ। तथा च त्रिवर्गस्य परस्परानुबन्धोऽपि परस्परानुपमर्दोऽपि च सिध्यति। इदमेव दण्डप्रणेतुः सम्यग्दर्शनम्। तथा चोक्तं मनुना—

यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति॥ ७।२५

नीतिशास्त्रेऽपि—

दण्डनीतिर्यदा सम्यङ् नेतारमधितिष्ठति।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते॥ कामं. नी.२।९। इति।

एवं च सर्वथा दण्डनेतुः सम्यग् दर्शनं वा तत्र दण्डनीतेः सम्यगधिष्ठानं वा न पूर्वोक्तशास्त्रदृष्टिमूलकत्वमतिक्रामतीति कर्मविपाकशास्त्रमेव सर्वव्यवहारमूलभूतं सिध्यति। तत्र पूर्वोक्तभावपर्यालोचनमावश्यकमिति पिण्डगततत्तत्स्थायिभावपर्यालोचनद्वारा सर्वेषां भावानां परस्पराविरोधेन परस्परोपकारकत्वेन च कार्यकारित्वं यथाऽव्याहत प्रचलेत्तथा काचन घटनैव समाजरचनापदव्यपदेश्या भवितुमर्हति नान्येति सिद्धम्। एवं च दण्डनेतुरपि विषयासक्तिनिषेधेनार्थात्कामक्रोधलोभादिराहित्यपूर्वकाहं ममाभिनिवेशत्याग एवाऽऽवश्यक इति मनुना सूचितत्वात्त्यागिन एव दण्डाधिकारो न भोगिनां विषयलुब्धानामहं ममाभिमाननिविष्टानामित्यपि सिध्यति। तादृशाभिनिविष्टानां तथाधिकारलाभे किं वा समाजस्य हितं वाऽहितं वा सिध्यतीदानींतनपरिस्थितिपर्यालोचकानां प्रेक्षावतां सुविशदमेव। नात्र किमप्यधिकं विचारणीयम्। सर्वथा राज्याधिकारदानघोषणायामेव केवलायामन्योन्यमहमहमिकया योऽयं संघर्ष इदानीं प्रचलति। न तत्र राज्यं

नाम स्वपरम्पराभोग्यं स्वायत्तं रिक्थमित्यभिनिवेशमन्तरा किमपि मूलमन्यत्पश्यामः। सेयं राज्य-दानघोषणापि "सुपुष्पितः स्यादफलः फलवांश्च दुरारुहः" इति कणिकनीतिमेवानुसरतीति नात्राधिकं विवेचनीयम्। सर्वथा तु रागद्वेषाभिनिवेशत्यागिनामनासक्तानामेव दण्डाधिकारो नान्येषामित्यविप्रतिपन्नमेव।

(त्यागमूलककर्मशक्तेरावश्यकता)

न केवलं त्यागबुद्धिमात्रेण जगतो योगक्षेमौ संभवतः। परकीयत्यागबुद्धिमाश्रित्य राष्ट्रकर्तृकपरस्वापहारादिप्रसङ्गात्। यथाहि भारतीयानां विषयतुच्छताबुद्धिरिदानीं परदास्यथैव संपन्ना तथैव सर्वत्र प्रसङ्गः स्यात्। एवं च दण्डनीतेर्निरुपयोगित्वमेवाऽऽपद्येत। यदि लुब्धानां शठानां यथाशास्त्राननुष्ठायिनां यथेच्छवर्तिनां हस्ते सर्वमपि भोग्यजातमधिगतं स्यात्पुनश्च मात्स्यन्यायेन दुर्बलजीवनमनुपपन्नमेव स्यात्। तस्माद्दण्डनीतिरियं जगद्योगक्षेमावहा चेत्प्रसाधनीया, तदा त्यागबुद्धिरिव कर्मशक्तिरप्यपेक्षिता। नो चेत्पुनरपि सर्वस्वहान्यापत्तिस्तदवस्थैव। अत एव—

ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥

इति त्यागपूर्वकभोगसिद्ध्यर्थं विषयाभिलाषनिवृत्त्यर्थं च भोग्यजाते जगति ईशस्वत्वमुपप्रदर्श्य—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥

इत्यौपनिषदानुशासनं कर्मविषयकमुपपद्यते। अन्यथा तु सर्वथा रागिणामेव कर्माधिकारे पूर्वोक्तमात्स्यन्यायदुःस्थितिस्तदवस्थैव स्यात्।

सेयं कर्मशक्तिरपि स्वभावसिद्धैव जगन्निदानमित्यप्यविप्रतिपन्नमेव सर्वेषामास्तिकानां नास्तिकानां च। नहि चतुर्विधभूतात्मकं तादृशभूतनिदानकं चेदं जगन्नानाविधवैचित्र्यस्वभावात्मकानेकपदार्थघटितं तां विना भवितुमर्हति। कारणभेदमन्तरा कार्यभेदासंभवात्। नहि कारणानां न्यूनाधिकमिश्रणमात्रेण तादृशभेदोपपत्तिः। निष्क्रियाणां परस्परानुपकारकाणां तेषां तिलतण्डुलवत्केवलं संसृष्ट्युपपत्तावपि विभिन्नकार्यानुत्पादकत्वात्। अत एव "चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते" इति भौतिकवादमेव पुरस्कुर्वतां नास्तिकानामपि भूतेषु स्वाभाविकीं क्रियाशक्तिमङ्गीकृत्य तज्जन्यः कर्मविपाकापरनामधेयो रसायनक्रियात्मकः कश्चन परिणामोऽवश्यमेवाभ्युपगमनीयो भवति। बौद्धजैनाद्यागमेषु तु सोऽयं कर्मविपाको महताऽऽटोपेन निरूपितः। आस्तिकदर्शनेषु च सर्वत्र तथैवा-

इहास इत्यपि नातिरोहितं विदुषाम् । अत एव जडाया अपि प्रकृतेः प्रतिक्षणपरिणामित्वं परमाणुष्वपि च कर्मसातत्यमङ्गीकृतम् । ये तु केवलचैतन्यतत्त्ववादिनः, तेऽपि चेतनस्यानेकाकारपरिणामोपपत्तये मायात्मकचेतनशक्तिमङ्गीकृत्यैव जगदुत्पत्तिस्थितिलयानुपपादयन्ति । मायायाश्चाघटितघटनाकारित्वेऽपि कार्यकारणभावसंबद्धसृष्टिपर्यालोचनया तथैव कार्यकारित्वमुन्नीयते । अन्यथा प्राणिनां व्यावहारिकप्रवृत्तिनिवृत्त्यनुपपत्तेः । तथा च मायायामेव तादृशकर्मशक्तेरङ्गीकारमन्तरा जगतोऽनुपपत्त्या कर्मात्मकत्वं तस्या अवश्यमङ्गीकरणीयम् । अत एव पौराणिकाः—

सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका ।
माया नाम महाभाग ययेदं निर्ममे विभुः ॥ भाग.

इति मायायाः शक्तिरूपत्वं निरूपयन्ति । एवं च कर्मात्मकमायाशक्तेर्विक्षेप एव सर्वेयं प्रपञ्चरचना । अत एव—

कालं कर्म स्वभावं च मायेशो मायया स्वया ।
आत्मन्यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥ भाग.

इति कालकर्मस्वभावादिकारणसहकारमेव जगन्निर्माणं तैरभिहितम् । न हि चेतनस्य केवलस्य निरञ्जनस्य निष्क्रियस्य परिणामः कोऽपि कदापि भवितुमर्हति । अत एव—

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥

इति भगवद्गीतायां प्रकृत्यपरपर्यायमायाया हेतुत्वं प्रतिपादितमुपपद्यते । सोऽयं मायापरिणामः सांख्यसंमतप्रकृतिपरिणामवत्कार्यकारणभावनियत एवाभ्युपेयः । न तु स्वप्नवदैन्द्रजालिकवद्वाऽनियत इति कर्मशक्तिरपि स्वभावसहकारेणैव परिणाममुत्पादयन्ती स्वभावनियता सिध्यति । अत एव सत्कार्यवादोपपत्तिः । एवं च स्वभावकर्मणोश्च परस्परनियतत्वात्स्वभावानुसारि कर्म, कर्मानुसारी च स्वभाव इति सिध्यति । ये तु कार्यकारणभावविचक्षणा विना कारणं कार्योत्पादासंभवात् कार्योत्पत्तेः प्राक् कारणनिष्पत्तिमभिमन्यमानाः कर्मणश्च समवायिकारणत्वेन द्रव्यस्य क्षणं निष्क्रियत्वमभ्युपगच्छन्ति । तेऽपि तदुत्तरक्षणे तु कर्मनिष्पत्तिमङ्गीकुर्वन्त्येव । तथा च कर्मनिष्पत्त्यैव जगद्वैचित्र्यं निर्वाहयन्ति । सोऽयं कर्मविपाकस्तु पीलुषु वा पिठरेषु वा संस्काररूपेण गुणस्वरूपेणादृष्टरूपेणाऽऽत्मनि वा कथमपि भवतु । पदार्थानां स्वाभाविककर्मवैचित्र्यमन्तरा जगद्वैचित्र्यानुपपत्तिस्तु सर्वेषामप्यभिमतैवेति जगद्वैचित्र्यनिर्वाहार्थं कर्मशक्तिस्तद्गतवैचित्र्यं च सर्वैरप्यभ्युपगतमेव । तथा च जगदन्तःपातिमनुष्यदेहगतभाववैचित्र्यं तत्कर्मशक्तिवैचित्र्यं चेदमनुभूयमानं तदुत्पादकस्वाभाविककर्मशक्तिपरिणाम एवेत्यकामेनाप्यूरीकर्तव्यम् ।

## ( शास्त्रस्य स्वाभाविककर्मशक्तिबोधकत्वम् )

नन्वेतादृशकर्मशक्तिसिद्धावपि तस्यास्त्यागमूलत्वं तु सर्वथा न संभवति । तथाहि त्यागो हि नाम रागद्वेषाभिनिवेशराहित्यमिति हि पूर्वमुपपादितम् । न च तादृशराहित्ये प्रवृत्तिनिवृत्ती संभवतः । सर्वस्यापि कर्मणो रागद्वेषाभिनिवेशपूर्वकत्वात् । तथा चोक्तम्—

" क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः "
" सति मूले तद्विपाको जात्यायुर्भोगाः "

इति योगसूत्रयोः । तथा च सर्वस्यापि कर्मणः क्लेशमूलकत्वे कथं वा तद्राहित्ये जगद्व्यवहारनिदाने दण्डे प्रवृत्तिः स्यात् । न च स्वगतप्रवृत्तिनिवृत्त्यसंभवेऽपि प्रतिक्षणपरिणामशालिप्रकृतितत्त्वस्य स्वतःसिद्धप्रवृत्तिशक्तिप्रतिबन्धस्य कारणाभावात् देहादीनां च प्रकृतिपरिणामत्वेन प्रकृत्यात्मकत्वात् निरन्तरकर्मकारित्वमेवेति न कर्मप्रवृत्तिः केनापि निरोद्धुं शक्येति वाच्यम् । तादृशकर्मप्रवृत्तेः स्वाभाविकत्वेन शासितुमशक्यत्वात् विधिनिषेधगोचरत्वाभावात् । एवं चैतादृशरागद्वेषाभिनिवेशरहिताना कृतार्थानां कर्माकर्मशास्त्राधिकाराभावात् कथं वा दण्डाधिकारोऽप्युपपन्नः स्यात् । तथा चोक्तं भगवद्गीतायाम्—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥३।१७
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥३।१८

इति । अत्र च पूर्वश्लोके प्रतिपादितस्य शास्त्रीयकर्मचक्रस्यानुवर्तनाभावेऽघायुत्वजीवनवैफल्ययोः प्रतिपादनेन कर्मानुष्ठानस्यावश्यकर्तव्यताबोधनात् सर्वेषां तदापत्तावनात्मविदो रागद्वेषाभिनिवेशवत एव तत्राधिकारो नान्यस्याऽऽत्मविद इति सिद्धान्तप्रदर्शनार्थमेवैतयोः श्लोकयोः प्रवृत्तिरिति भाष्ये शंकरभगवत्पादैरुपपादितम् । एवं च रागद्वेषाभिनिवेशरहितानां कर्माधिकाराभावात् कथं दण्डप्रणयनाधिकारः कथं वा तत्र प्रवृत्तिरिति चेदत्रोच्यते—

सत्यमनात्मविद एव कर्माधिकारो न त्वात्मविदां त्यागिनाम् । शास्त्रस्य तदविकारिकत्वात् । परं त्विदमत्राऽऽलोचनीयं यदिदं शास्त्रं नाम किमपि विधिनिषेधबोधकं, तस्य पूर्वोक्तस्वाभाविककर्मविपाकदर्शनमूलकत्वं वा यथेच्छसमयबन्धरूपत्वं वा । यदि यथेच्छसमयबन्धरूपत्वं स्यात्, शास्त्रत्वमेव न स्यात् । स्वभावसिद्धकर्मशक्तिविपाकस्य पुरुषेच्छानधीनत्वात् । न ह्यग्निस्पर्शे दाहो मा भवत्वितीच्छायामपि तथा भवितुमर्हति । न वाऽग्निपरिखायां तप्तखदिराङ्गारपरिपूरितायां तदुत्तरे पतितासावधानशत्रुसैन्याक्रमणार्थमुद्घोषितेऽपि तदतिक्रमणशासने सेनापतिनाऽग्नेर्दाहक्रिया प्रतिरुद्धा

भवति । स्वभावस्य दुरतिक्रमत्वात् । अतश्च शासनमपि परिकल्पनीयं चेत् पदार्थगतस्वाभाविककर्मशक्तिमालोच्यैव परिकल्पनीयं भवति । अत एव क्रिया हि द्रव्यं विनयति नाद्रव्यमिति शास्त्रसिद्धान्तः । अत्र च या कापि क्रिया यत्किमपि द्रव्यं विनयतीति नार्थः । तथा सति वस्त्रादिवद् काकस्यापि विमलीकरणप्रसङ्गात् । तथा च यस्य कस्यापि द्रव्यस्य स्वभावशक्तिमालोच्य तदनुगुणेतरद्रव्यसंपर्के एव तत्र क्रियाशक्तिपरिणामो भवतीत्यङ्गीकर्तव्यम् । न हीदानीमपि रसायनशास्त्रज्ञा यस्य कस्यापि द्रव्यस्य येन केनापि मिश्रणेन स्वेष्टं साधयन्ति । किंतु पदार्थगतस्वाभाविकक्रियाशक्तिपर्यालोचनार्थं प्रथमतस्तथा मिश्रणप्रवृत्तावपि यत्र स्वाभिमतपरिणामः सिध्यति तत्र तादृशीं स्वाभाविकीं कर्मशक्तिं निर्धार्यानन्तरं तादृशकार्यकारणभावपूर्वकमेव तत्तदभिमतपदार्थनिष्पादनमाविष्कुर्वते । एवं पदार्थस्वभावपर्यालोचनमेव शास्त्रविषयः । तन्मूलकावेव प्रवृत्तिनिवृत्त्युपयोगिनौ विधिनिषेधौ सर्वत्र प्रणीयेते इति किल शास्त्रप्रणयनपद्धतिः । तथा च पदार्थस्य पदार्थान्तरेण सह संपर्के स्वाभाविकतद्गतक्रियाशक्तिपरिणामालोचनमावश्यकं चेद्भौतिकशास्त्रे तर्हि मनुष्यदेहगतपरिणामानामपि तथैव स्वाभाविकक्रियाशक्तिमूलकत्वं भौतिकत्वादकामेनाप्यङ्गीकर्तव्यम् । तथा च मानवदेहे प्रादुर्भवन्तो रागद्वेषाभिनिवेशात्मका भावरूपाः परिणामा अपि तदभिव्यञ्जकदेहोत्पादककर्मशक्तिपरिणामा एव । न हि प्रतिपिण्डं मतिवैचित्र्यं रुचिवैचित्र्यं बुद्धिवैचित्र्यं चान्यथा संभवति । तथा च कर्मशक्तिपरिणामपर्यालोचनमावश्यकमेवाऽऽदौ । अनन्तरं च स्वाभिमतभावाविर्भावकपिण्डोत्पादनार्थं तदनुगुणपदार्थसंपर्कजन्यकर्मपरिणाममालोच्य तत्तत्पदार्थसंपर्कस्य तत्तत्क्रियापद्धतेश्च विधिनिषेधयोः प्रणयनं कर्तव्यमित्येव शास्त्रीयः पन्थाः। तादृशपर्यालोचने तु प्रथमत एव कर्मविभागश्चतुर्धा परिगणितः शास्त्रे । तथाहि—

कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ यो. सू. ४।७

चतुष्पात् खल्वियं कर्मजातिः—कृष्णा, शुक्लकृष्णा, शुक्ला, अशुक्लाऽकृष्णा चेति । तत्र कृष्णा दुरात्मनाम्, शुक्लकृष्णा बहिःसाधनसाध्या, तत्र परपीडानुग्रहद्वारेण कर्माशयप्रचयः । शुक्ला तपःस्वाध्यायध्यानवताम् । सा हि केवले मनस्यायत्तत्वादबहिःसाधनाधीना न परान् पीडयित्वा भवति । अशुक्लाऽकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति । तत्राशुक्लं योगिन एव फलसंन्यासात् अकृष्णं चानुपादानात् । इतरेषां तु भूतानां पूर्वमेव त्रिविधमिति योगभाष्यम् । अत्र दुरात्मना कर्मणः कृष्णत्वप्रतिपादनात्—

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म तत्तामसमुदाहृतम् ॥

इति गीताशास्त्रोक्तं तामसमेव कर्म कृष्णत्वेनाभिमतमिति गम्यते । यद्वा निरत्ययफलो हि शुक्ल इति वाचस्पत्यव्याख्यानात् ऐकान्तिकेष्टफलसाधनत्वेनाभिमतं कर्मैव शुक्लमिति, तद्विपरीतम-

निष्टफलसाधनत्वेनाभिमतं कृष्णमिति, च गम्यते। सा चाव्यभिचरितेष्टफलसाधनता शास्त्रबोधिता बहिःसाधनानधीना मनोमात्रायत्ता शुक्लत्वप्रयोजिका। सैव बहिःसाधनाधीना परपीडानुग्रहसंपादनद्वारा इष्टानिष्टोभयफलजनकत्वात्कृष्णत्वशुक्लत्वप्रयोजिका। या त्वनिष्टसाधनता शास्त्रबोधिता नियतानिष्टफलजनकत्वात्कृष्णत्वप्रयोजिका। एवं च तमोमूला दुःखफलिका हिंसादिः कृष्णा, रजोमूला दुःखोपसर्जनसुखफलिका यागादिः शुक्लकृष्णा, सत्त्वमूला सुखमात्रफलिका स्वाध्यायादिः शुक्ला, गुणाहेतुका सुखदुःखफलशून्या संप्रज्ञातसमाध्यादिरशुक्लाकृष्णेति बोध्यम्। अत्र चेष्टसाधनत्वेन विहितेष्वपि कर्मसु बहिःसाधनसापेक्षत्वनिरपेक्षत्वाभ्यां शुक्लकृष्णत्वं शुक्लत्वं चेति द्वैधं प्रदर्शितम्। तत्र कर्मसंन्यासिनां बहिःसाधनसाध्यकर्मप्रवृत्तेरसंभवान्न कृष्णः कर्माशयः। योगानुष्ठानसाध्यस्य कर्माशयफलस्येश्वरे समर्पणान्न शुक्लः कर्माशयः। अत एवाशुक्लाकृष्णं कर्म तेषाम्। इतरेषां तु त्रिविधमिति सूत्रतात्पर्यम्।

अत्रेदमालोचनीयम्—यदि कर्मफलस्यावश्यंभाविनोऽपीश्वरसमर्पणमात्रेण न स्वात्मनिष्ठकर्माशयप्रचयः। तर्हि तु बहिःसाधनसाध्यकर्माशयफलस्यापीश्वरसमर्पणेन स्वात्मनि फलानुदयादशुक्लकृष्णत्वं स्यादेव तस्य कर्मणः। न च परपीडानुग्रहकारित्वेन परस्मिन् तत्तत्पीडानुग्रहादिफलोत्पादादेव तत्र तत्प्रचय इति वाच्यम्। सर्वस्यापि फलस्येश्वरसमर्पणेन स्वात्मनिष्ठकर्माशयप्रचयस्य कथमप्युपपादयितुमशक्यत्वात्। तत्सिद्धं परमेश्वरार्पणबुद्ध्याऽनुष्ठीयमानस्य शास्त्रविहितस्य कर्मणः स्वात्मनि फलोत्पादकत्वाभावादेव शुद्धत्वमिति। तदुक्तं गीतायाम्—

> कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
> मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥
> योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय।
> सिध्यसिध्योः समो भूत्वा समत्वं योग उच्यते॥

इति। तत्रैवान्यत्र—

> एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा धनंजय।
> कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥ इति।
> यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
> हत्वापि स इमान् लोकान् न हन्ति न निबध्यते॥

इति च। अनेन चेदं स्पष्टमेवावगम्यते यच्छास्त्रविहितकर्मणोऽपि रागद्वेषाभिनिवेशराहित्येन यथावदनुष्ठानं संभवतीति। अत्र चेयमुपपत्तिः। पञ्चापि क्लेशाः प्रसुप्ततनुविच्छिन्नोदारात्मकावस्थाचतुष्टयेन चतुर्विधाः। तत्र प्रसुप्तावस्थापन्नस्य तन्ववस्थापन्नस्य च विनाशो नाविद्याविनाशमन्तरा भवितुमर्हति।

सर्वेषामुत्तरेषामविद्याक्षेत्रत्वात्। तस्याश्च विनाशो विवेकख्यात्यैवेति योगदर्शनसिद्धान्तः।तथापि उदारावस्थापन्नानां तनूकरणं तु क्रिया योगद्वारा ध्यानेन च भावितुमर्हति । क्रियायोगश्च तपःस्वाध्यायेश्वरप्राणिधानानि। ध्यानं च "देशबन्धश्चित्तस्य धारणा,तत्र प्रत्ययैकतानता ध्यानम्"इति योगसूत्राभ्यां कस्मिंश्चिद्वाह्ये विषये नाभिचक्रे वा हृदयपुण्डरीके वा मूर्ध्नि ज्योतिषि नासाग्रे जिह्वाग्रे मूर्तिव्यूहानुसारेण परिकल्पितायां परमेश्वरमूर्तौ वा वृत्तिमात्रेण चित्तस्य बन्धे ततस्तदेकप्रत्ययावगाहित्वमेव । विच्छिन्नावस्थानां तु तेषामेकत्रोद्भूतत्वादन्यत्र चानुद्भूतत्वादुदारत्वं प्रसुप्तत्वं चोभयमेव भवति । तत्र प्रसुप्ते सूक्ष्मत्वादेव " ते प्रतिप्रसवहेयाः सूक्ष्माः " इति प्रतिप्रसवहेयत्वम्। उदारस्य तु क्रियायोगेनैव तनूकरणं ध्यानेन च हेयत्वमित्युक्तमेव । तत्र· सर्वेषामपि कर्मणां यदि परमाराधनपरत्वं स्यात्तदा तु तत्र सर्वत्र परमेश्वरानुसंधानपूर्वकानुष्ठानमात्रेण यथायोग्यक्रियायोगसंभवादनायासेनैव रागद्वेषाभिनिवेशानां तनूकरणं प्रसिध्यतीति रागद्वेषाभिनिवेशराहित्यं सिध्यति । नात्र राहित्यं नाम चेतसि तदत्यन्ताभावः । किंतु भोगोन्मुखीभूतानां तेषां तादृशभोगोत्पादकशक्तिक्षय एव । विषयदोषदर्शनादिना विरतिस्तु पुरस्तादेव प्रदर्शिता । एतादृशशक्तिविनाशपूर्वकमेव कर्मणामनुष्ठानं जगद्योगक्षेमावहं मात्स्यन्यायनिवारकमिति तादृशानुष्ठानसमर्थानामेव दण्डाधिकारस्तद्द्वारा च समाजरचनाधिकार इति सिद्धं समाजरचनायास्त्यागमूलकत्वम् । अत एव नीतिप्रतिबिम्बे सर्वत्रेश्वरस्वत्वं तदाराधनायैव च भोग्यसंपत्तेर्विनियोगः, तादृशाराधनानुकूलबुद्धिशक्तिमत्संघत्वं समाजत्वमिति-समाजलक्षणं सर्वान्तर्यामी समष्टिरूपेण सर्वस्वरूप एव च परमेश्वर इत्यादिकं प्रतिपादितं नात्र विस्मर्तव्यम् । यदि चैतादृशः शक्तिक्षयो न संभवेत्, तदा वैराग्यासंभवेन ब्रह्मजिज्ञासाधिकारस्याप्यसंभवादुत्तरमीमांसावैयर्थ्यं योगशास्त्रस्य वैफल्यं गीताशास्त्रोपदेशस्यानुपयुक्तत्वं चाऽऽपद्येत । तथा च कर्ममूलानां चेतसो भावानां सर्वेषामपि स्वरूपतो नाशस्यासंभवात् भोगोत्पादानुकूलशक्त्यपचयसंपादनेन कार्यकारित्वं यथा स्यात्तथैव काचनानुष्ठानपद्धतिरुपादेयेति सुदीर्घमालोचनीयं समाजरचनाचातुरीचतुरैः । तत्र भावानां सर्वेषामौत्सर्गिकत्वेन तत्तत्समाजोपयुक्तकार्यकारित्वात्परिरक्षणमपि स्थायिरूपेणाऽऽवश्यकमित्यतस्तेषां परस्परानुपघातकत्वेन संभूयकार्यकारित्वमपि संपादनीयं भवति समाजरचनायाम् । न केवलं तादृशकार्यकारित्वमेव, किं तु तादृशकार्यकारिपिण्डोत्पत्तिसातत्यसंपादनेन समाजापेक्षापरिपूर्तिसातत्यमपि संपादनीयं भवति। एतादृशी समाजरचनैव यथावत्समाजरचना नान्या काचन समयबन्धपरिकल्पिता कृत्रिमा तात्कालिकरागद्वेषातिरेकनिबन्धना भोगप्रधानेति निश्चप्रचमेव ।

## ( समाजस्याऽऽलम्बनत्वनिरासः )

ननु यदि रागद्वेषादिक्लेशतनूकरणार्थमेव सर्वान्तर्यामिणः परमेश्वरस्याऽऽलम्बनत्वमालम्बनीयम्। तर्हि तस्याव्यक्तत्वेनानाकलनीयत्वादालम्बनत्वासंभवः । यथाकथंचिच्छास्त्रवासनावासित-

दृष्ट्या तत्परिकल्पनेऽपि तस्य यथावत्स्वरूपाकलनमशक्यमेव । तदपेक्षया तदुत्पन्नस्य स्थूलस्याऽऽकलनीयस्य समाजस्वरूपस्यैवाऽऽलम्बनत्वमस्तु । न ह्यालम्बनस्वरूपविशेष एव क्लेशतनूकारो नान्यथेति कश्चन नियमः । अत एव " यथाभिमतध्यानाद्वा " इत्यपि यथाभिमतपदार्थोऽप्यालम्बनत्वेनोपदिश्यते योगशास्त्रे । तथा चैकस्मिन् यथाभिमते चित्तस्य बन्धे तत्र प्रत्ययैकतानतात्मकध्यानसिद्धौ क्लेशतनूकारोऽप्यनायासेनैव स्यादिति वरं परमेश्वरस्वरूपस्याव्यक्तस्यानाकलनीयस्याऽऽलम्बनत्वापेक्षया समष्टिरूपस्य समाजस्यैवाऽऽलम्बनत्वमिति परमेश्वरप्रीत्यर्थमिव समाजप्रीत्यर्थमेव सर्वकर्मकरणं योग्यमिति योग्य एवायं समाजस्वत्ववादः । किं च यथाकथंचित् बाह्यक्रियाकरणेन यथावत्परमेश्वरप्रीतेरुत्पादोऽपि न प्रत्येतुं शक्यः । समाजप्रीत्यर्थं कर्मकरणे तु समाजप्रीतेः सुप्रत्येयत्वात्तदनुसारेण दम्भादीनामुच्छेदः सुकरः स्यात् । न तथा परमेश्वरस्वत्ववाद इति समाजस्वत्ववाद एव श्रेयान् । अत एव सर्वभूतदयायाः श्रेयःसाधनत्वमुपदिष्टं शास्त्रे । तथा चोक्तं श्रीमद्भागवते—

नातिप्रसीदति तथोपचितोपचारै-
राराधितः सुरगणैर्हृदि बद्धकामैः ।
यत्सर्वभूतदयया सदलभ्ययैको
नानाजनेष्ववहितः सुहृदन्तरात्मा ॥ इति ३।९।१२

अतश्च परमेशस्वत्ववादेऽपि सर्वभूतदयाया भावनमत्यावश्यकमेवेति समाजघटकव्यक्तिषु परस्परमैत्रसंपादनमेवाऽऽवश्यकम् । तदर्थं समष्टिरूपसमाजप्रतीकमेवाव्यक्तप्रतीकापेक्षया समुचितमिति चेन्न ।

समाजप्रीत्यर्थं वा परमेश्वरप्रीत्यर्थं वैकस्मिन्नालम्बने चित्तस्य स्थैर्यमुभयोरप्यपेक्षितमित्यत्र यदि न विप्रतिपत्तिस्तदा तु तदेवाऽऽलोचनीयं यच्चित्तस्थैर्यमिदं कथं वा स्यादिति । चित्तविक्षेपकानां निरासमन्तरा तु न तत्सुलभमिति तेषां पर्यालोचनमप्यावश्यकमेव । ते च चित्तविक्षेपका योगदर्शने यथा—

व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ १।३०

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ १।३१

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ १।३२

अत्र भाष्यम्—अथ केऽन्तरायाः, ये चित्तस्य विक्षेपकाः । के पुनस्ते कियन्तो वेति व्याधिस्त्यानेति नवान्तरायाश्चित्तस्य विक्षेपाः । सहैते चित्तवृत्तिभिर्भवन्त्येतेषामभावे न भवन्ति पूर्वोक्ताश्चित्तवृत्तयः । व्याधिर्धातुरसकरणवैषम्यम् । स्त्यानमकर्मण्यता चित्तस्य । संशय उभय-

सर्वेषामुत्तरेषामविद्याक्षेत्रत्वात्। तस्याश्च विनाशो विवेकख्यात्यैवेति योगदर्शनसिद्धान्तः।तथापि उदारावस्थापन्नानां तनूकरणं तु क्रिया योगद्वारा ध्यानेन च भवितुमर्हति । क्रियायोगश्च तपःस्वाध्यायेश्वरप्रणिधानानि । ध्यानं च "देशबन्धश्चित्तस्य धारणा, तत्र प्रत्ययैकतानता ध्यानम्" इति योगसूत्राभ्यां कस्मिंश्चिद्बाह्ये विषये नाभिचक्रे वा हृदयपुण्डरीके वा मूर्ध्नि ज्योतिषि नासाग्रे जिह्वाग्रे मूर्तिव्यूहानुसारेण परिकल्पितायां परमेश्वरमूर्तौ वा वृत्तिमात्रेण चित्तस्य बन्धे ततस्तदेकप्रत्ययावगाहित्वमेव । विच्छिन्नावस्थानां तु तेषामेकत्रोद्भूतत्वादन्यत्र चानुद्भूतत्वाद्युदारत्वं प्रसुप्तत्वं चोभयमेव भवति । तत्र प्रसुप्ते सूक्ष्मत्वादेव " ते प्रतिप्रसवहेयाः सूक्ष्माः " इति प्रतिप्रसवहेयत्वम् । उदारस्य तु क्रियायोगेनैव तनूकरणं ध्यानेन च हेयत्वमित्युक्तमेव । तत्र· सर्वेषामपि कर्मणां यदि परमाराधनपरत्वं स्यात्तदा तु तत्र सर्वत्र परमेश्वरानुसंधानपूर्वकानुष्ठानमात्रेण यथायोग्यक्रियायोगसंभवादनायासेनैव रागद्वेषाभिनिवेशानां तनूकरणं प्रसिध्यतीति रागद्वेषाभिनिवेशराहित्यं सिध्यति । नात्र राहित्यं नाम चेतासि तदत्यन्ताभावः । किंतु भोगोन्मुखीभूतानां तेषां तादृशभोगोत्पादकशक्तिक्षय एव । विषयदोषदर्शनादिना विरतिस्तु पुरस्तादेव प्रदर्शिता । एतादृशशक्तिविनाशपूर्वकमेव कर्मणामनुष्ठानं जगद्योगक्षेमावहं मात्स्यन्यायनिवारकमिति तादृशानुष्ठानसमर्थानामेव दण्डाधिकारस्तद्द्वारा च समाजरचनाधिकार इति सिद्धं समाजरचनायास्त्यागमूलकत्वम् । अत एव नीतिप्रतिबिम्बे सर्वत्रेश्वरस्वत्वं तदाराधनायैव च भोग्यसंपत्तेर्विनियोगः, तादृशाराधनानुकूलबुद्धिशक्तिमत्संघत्वं समाजत्वमितिसमाजलक्षणं सर्वान्तर्यामी समष्टिरूपेण सर्वस्वरूप एव च परमेश्वर इत्यादिकं प्रतिपादितं नात्र विस्मर्तव्यम् । यदि चैतादृशः शक्तिक्षयो न संभवेत्, तदा वैराग्यासंभवेन ब्रह्मजिज्ञासाधिकारस्याप्यसंभवादुत्तरमीमांसावैयर्थ्यं योगशास्त्रस्य वैफल्यं गीताशास्त्रोपदेशस्यानुपयुक्तत्वं चाऽऽपद्येत । तथा च कर्ममूलानां चेतसो भावानां सर्वेषामपि स्वरूपतो नाशस्यासंभवात् भोगोत्पादानुकूलशक्त्यपचयसंपादनेन कार्यकारित्वं यथा स्यात्तथैव कायनानुष्ठानपद्धतिरुपादेयेति सुदीर्घमालोचनीयं समाजरचनाचातुरीचतुरैः । तत्र भावानां सर्वेषामौत्सर्गिकत्वेन तत्तत्समाजोपयुक्तकार्यकारित्वात्परिरक्षणमपि स्थायिरूपेणाऽऽवश्यकमित्यतस्तेषां परस्परानुपघातकत्वेन संभूयकार्यकारित्वमपि संपादनीयं भवति समाजरचनायाम् । न केवल तादृशकार्यकारित्वमेव, किं तु तादृशकार्यकारिपिण्डोत्पत्तिसातत्यसंपादनेन समाजापेक्षापरिपूर्तिसातत्यमपि संपादनीयं भवति । एतादृशी समाजरचनैव यथावत्समाजरचना नान्या काचन समयबन्धपरिकल्पिता कृत्रिमा तात्कालिकरागद्वेषातिरेकनिबन्धना भोगप्रधानेति निष्पन्नमेव ।

( समाजस्याऽऽलम्बनत्वनिरासः )

ननु यदि रागद्वेषादिक्लेशतनूकरणार्थमेव सर्वान्तर्यामिणः परमेश्वरस्याऽऽलम्बनत्वमालम्बनीयम् । नहि तस्यान्यरूपेणानाकलनीयत्वाद्वालम्बनत्वासंभवः । यथा कथंचित्ज्ञानवासनावासित-

दृष्ट्या तत्परिकल्पनेऽपि तस्य यथावत्स्वरूपाकलनमशक्यमेव । तदपेक्षया तदुत्पन्नस्य स्थूलस्याऽऽकलनीयस्य समाजस्वरूपस्यैवाऽऽलम्बनत्वमस्तु । न ह्यालम्बनस्वरूपविशेष एव क्लेशतनूकारो नान्यथेति कश्चन नियमः । अत एव " यथाभिमतध्यानाद्वा " इत्यपि यथाभिमतपदार्थोऽप्यालम्बनत्वेनोपदिश्यते योगशास्त्रे । तथा चैकस्मिन् यथाभिमते चित्तस्य बन्धे तत्र प्रत्ययैकतानतात्मकध्यानसिद्धौ क्लेशतनूकारोऽप्यनायासेनैव स्यादिति वरं परमेश्वरस्वरूपस्याव्यक्तस्यानाकलनीयस्याऽऽलम्बनत्वापेक्षया समष्टिरूपस्य समाजस्यैवाऽऽलम्बनत्वमिति परमेश्वरप्रीत्यर्थमिव समाजप्रीत्यर्थमेव सर्वकर्मकरणं योग्यमिति योग्य एवायं समाजस्वत्ववादः । किं च यथाकथंचित् बाह्यक्रियाकरणेन यथावत्परमेश्वरप्रीतेरुत्पादोऽपि न प्रत्येतुं शक्यः । समाजप्रीत्यर्थं कर्मकरणे तु समाजप्रीतेः सुप्रत्येयत्वात्तदनुसारेण दम्भादीनामुच्छेदः सुकरः स्यात् । न तथा परमेश्वरस्वत्ववाद इति समाजस्वत्ववाद एव श्रेयान् । अत एव सर्वभूतदयायाः श्रेयःसाधनत्वमुपदिष्टं शास्त्रे । तथा चोक्तं श्रीमद्भागवते—

> नातिप्रसीदति तथोपचितोपचारै-
> राराधितः सुरगणैर्हृदि बद्धकामैः ।
> यत्सर्वभूतदयया सदलभ्ययैको
> नानाजनेष्ववहितः सुहृदन्तरात्मा ॥ इति ३।९।१२

अतश्च परमेशस्वत्ववादेऽपि सर्वभूतदयाया भावनमत्यावश्यकमेवेति समाजघटकव्यक्तिषु परस्परमैत्रसंपादनमेवाऽऽवश्यकम् । तदर्थं समष्टिरूपसमाजप्रतीकमेवाव्यक्तप्रतीकापेक्षया समुचितमिति चेन्न ।

समाजप्रीत्यर्थं वा परमेश्वरप्रीत्यर्थं वैकस्मिन्नालम्बने चित्तस्य स्थैर्यमुभयोरप्यपेक्षितमित्यत्र यदि न विप्रतिपत्तिस्तदा तु तदेवाऽऽलोचनीयं यच्चित्तस्थैर्यमिदं कथं वा स्यादिति । चित्तविक्षेपकानां निरासमन्तरा तु न तत्सुलभमिति तेषां पर्यालोचनमप्यावश्यकमेव । ते च चित्तविक्षेपका योगदर्शने यथा—

व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ १।३०

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ १।३१

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ १।३२

अत्र भाष्यम्—अथ केऽन्तरायाः, ये चित्तस्य विक्षेपकाः । के पुनस्ते कियन्तो वेति व्याधिस्त्यानेति नवान्तरायाश्चित्तस्य विक्षेपाः । सहैते चित्तवृत्तिभिर्भवन्त्येतेषामभावे न भवन्ति पूर्वोक्ताश्चित्तवृत्तयः । व्याधिर्धातुरसकरणवैषम्यम् । स्त्यानमकर्मण्यता चित्तस्य । संशय उभय-

कोऽस्मिंश्च विज्ञानं स्यादिदमेवं नैवं स्यादिति। प्रमादः समाधिसाधनानामभावनम्। आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः। अविरतिश्चित्तस्य विषयसंप्रयोगात्मा गर्धः। भ्रान्तिदर्शनं विपर्ययज्ञानम्। अलब्धभूमिकत्वं समाधिभूमेरलाभः। अनवस्थितत्वं यल्लब्धायां भूमौ चित्तस्याप्रतिष्ठा। समाधिप्रतिलम्भे हि तदवस्थितं स्यात्। इत्येते चित्तविक्षेपा नव योगमला योगप्रतिपक्षा योगान्तराया इत्यभिधीयन्ते ॥३०॥ दुःखेति। दुःखमाध्यात्मिकमाधिभौतिकमाधिदैविकं च। येनाभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तद्दुःखम्। दौर्मनस्यमिच्छाभिघाताच्चेतसः क्षोभः। यदङ्गान्येजयति कम्पयति तदङ्गमेजयत्वम्। प्राणो यद्बाह्यवायुमाचामति स श्वासः। यत् कौष्ठ्यं वायुं निःसारयति स प्रश्वासः। एते विक्षेपसहभुवः। विक्षिप्तचित्तस्यैते भवन्ति। समाहितचित्तस्यैते न भवन्ति ॥३१॥

अथैते विक्षेपाः समाधिप्रतिपक्षास्ताभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्याः। तत्राभ्यासस्य विषयमुपसंहरन्निदमाह--तत्प्रतिषेधार्थमिति। विक्षेपप्रतिषेधार्थमेकतत्त्वालम्बनं चित्तमभ्यसेत्। यस्य तु प्रत्यर्थनियतं प्रत्ययमात्रं क्षणिकं च चित्तं तस्य सर्वमेव चित्तमेकाग्रं नास्त्येव विक्षिप्तम्। यदि पुनरिदं सर्वतः प्रत्याहृत्यैकस्मिन्नर्थे समाधीयते तदा भवत्येकाग्रमिति। अतो न प्रत्यर्थनियतम्। योऽपि सदृशप्रत्ययप्रवाहेण चित्तमेकाग्रं मन्यते। तस्य यद्येकाग्रता प्रवाहचित्तस्य धर्मस्तदैकं नास्ति प्रवाहचित्तं क्षणिकत्वात्। अथ प्रवाहांशस्यैव प्रत्ययस्य धर्मः, स सर्वः सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा प्रत्यर्थनियतत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः। तस्मादेकमनेकार्थमवस्थितं चित्तमिति। यदि चित्तेनैकेनानन्विताः स्वभावभिन्नाः प्रत्यया जायेरन्। अथ कथमन्यप्रत्ययदृष्टस्यान्यः स्मर्ता भवेत्, अन्यप्रत्ययोपचितस्य च कर्माशयस्यान्यः प्रत्यय उपभोक्ता भवेत्। कथंचित्समाधीयमानमप्येतद्गोमयपायसीयन्यायमाक्षिपति। किंच स्वात्मानुभवापह्नवश्चित्तस्यान्यत्वे प्राप्नोति। कथम्, यदहमद्राक्षं तत्स्पृशामि यच्चास्प्राक्षं तत्पश्यामीत्यहमिति प्रत्ययः सर्वस्य भेदे सति प्रत्ययिन्यभेदेनोपस्थितः। एकप्रत्ययविषयोऽयमभेदात्माऽहमिति प्रत्ययः कथमत्यन्तभिन्नेषु चित्तेषु वर्तमानः सामान्यमेकं प्रत्ययिनमाश्रयेत्। स्वानुभवग्राह्यश्चायमभेदात्माऽहमिति प्रत्ययः। न च प्रत्यक्षस्य माहात्म्यं प्रमाणान्तरेणाभिभूयते। प्रमाणान्तरं च प्रत्यक्षबलेनैव व्यवहारं लभते। तस्मादेकमनेकार्थमवस्थितं चित्तम् ॥३२॥ इति।

अनेन च भाष्यसंदर्भेण स्पष्टमिदं प्रतीयते यदेकमेव चित्ततत्त्वमनेकार्थावगाहि सद्विक्षिप्तं भवति तस्य चैकस्मिन्नर्थे स्थिरीकरणमेव खलु चैकाग्र्यम्। एवं च तादृशानेकार्थविषयकत्वं तस्य प्रतिषिध्य स्वाभिमतैकतत्त्वावगाहित्वमवश्यमेव संपादनीयम्। तच्च समाजस्वरूपात्मकं न कदापि भवितुमर्हति। समाजस्य व्यक्त्यनतिरिक्तत्वात् व्यक्तिसंघस्यैव च समाजत्वेन व्यक्तिबाहुल्यादेव तद्विषयकचित्तस्य विक्षिप्तत्वात्। ननु न व्यक्तिसंघ एव समाजः, किंतु परस्परापेक्षव्यक्तिसंघस्य

समाजरूपताङ्गीकारेण परस्परापेक्षाजन्योपकारविशेषविशिष्टमेकमेव समाजस्वरूपं तृणरज्जुवत्सिध्यति। अत एव विशिष्टकार्यकारिता । न ह्येकेन तृणेन गजो बध्यते । परस्परमिलितानां तृणानां तु रज्जुरूपतापन्नत्वाद्गजबन्धनशक्तिः प्रत्यक्षमनुभूयमाना न केनाप्यपलपितुं शक्या । एवमेव व्यक्तिशो विशिष्टकार्यकरणसामर्थ्याभावेऽपि परस्परोपकारव्यक्तिसंघद्वारा तत्कार्यसंपादनमनुभूयमानमिदमेव गमयति यत्समाजस्य व्यक्त्यतिरिक्तत्वमिति । एवं च तादृशसमाजरूपैकतत्त्वावलम्बेनापि क्लेशातनूकारासिद्धौ किमर्थमिदं तदन्तर्यामिस्वरूपानुधावनम् । तस्मात्समाजसत्त्ववादेनापि सर्वार्थसिद्धौ व्यक्तीनां समाजोपकारकत्वेनैव विनियोगो यथा भवेत्तथा समाजरचना समुचितैवेति चेन्न । किमिदं विशिष्टकार्यकारित्वं व्यक्तं वाऽव्यक्तम्? नाऽऽद्यः, तादृशकार्योत्पत्तिमन्तरा तस्याप्रतीतेः । अथ कार्योत्पत्तिरेव तदनुमापिका, तथा सति कार्यान्यथानुपपत्त्या कल्प्यमानेयं विशिष्टकार्यकारिताऽप्रत्यक्षैवेति अव्यक्तस्वरूपतामेवावगाहते । तथा च सर्वान्तर्याम्यव्यक्ततत्त्ववदस्या अप्यालम्बनत्वं दुष्करमेवेति न वस्तुतत्त्वनिराकरणपूर्वकमवस्तुनः परिकल्पनं समाजरचनामूलं भवितुमर्हति । न चास्या वस्तुसत्त्वमपि । व्यक्तिसमूहस्यैव तच्छक्तिसमूहस्यैव तत्र तादृशकार्यकारित्वात् । शक्तिसमूहस्यापि शक्तिव्यक्त्यनतिरेकात् । एकत्वप्रत्ययस्तु वनयूथपङ्क्त्यादिवत् । अत एव व्यस्तस्वरूपेण तासां विज्ञानेनैकत्वबुद्धिरुदेति । नापि संहत्य कार्यकारित्वादेकशक्तिपरिकल्पनं वैकपदार्थपरिकल्पनं वा संभवति । संघातघटकव्यक्तिशक्त्या वा व्यक्त्या वा तत्कार्योपपत्तेः । यथा हि गृहनिर्माणे शिल्पिनां तत्तद्व्यक्तिशक्त्या तत्तत्कार्यसिध्यनन्तरं तादृशावयवकार्याणां संहत्य रचनाया गृहरूपैकपदार्थनिर्माणेऽपि न तत्र समुदायो वा तच्छक्तिर्वा प्रतीयते तथैव वृक्षादिसमस्तरूपाणामेव व्यक्तिशः कार्यकारित्वेन न तत्रापि विशिष्टैकस्वरूपकल्पना वा शक्तिकल्पना वा कर्तुमुचिता । न चैवमवयविनामप्यवयवसंघातरूपत्वापत्तौ नावयवी नामावयवेभ्यः कश्चनान्यः पदार्थः सिध्येदिति वाच्यम् । अवयवानामन्योन्यं गुणाधानेन वा दोषापनयनेन वा स्वरूपोपमर्दनपूर्वकमेवावयव्यारम्भकत्वेन तत्र तदतिरिक्तैकपदार्थसिद्धेः । न चैवं संघाते घटकानां व्यक्तीनामन्योन्यं स्वरूपोपमर्दः । तस्मान्न परमाणुपुञ्ज एवावयवी । न च तथा प्रकृते । व्यक्तीनां स्वरूपत एवोपलम्भात् । तस्मान्न सघातो नाम कश्चन पदार्थो व्यक्तिभ्योऽतिरिक्तः । नापि तच्छक्तिर्व्यक्तिशक्त्यतिरिक्ता येनैकं स्वरूपं सर्वासां व्यक्तीनां चित्तस्याऽऽलम्बनं स्यात् । सर्वं चैतद्वनवादे विवेचितं भट्टपादैः । तद्यथा—

यदा व्यक्त्यतिरेकेण ग्राह्यत्वादन्यताऽऽकृतेः ।
वनवन्नास्त्यनैकान्त्यात्तत्रासंबद्धता कथम् ॥
साधनं चेन्मयोच्येत युज्यते व्यभिचारिता ।
दूषणत्वाधिया त्वेतदसंबद्धत्वमुच्यते ॥

घटितत्वात्। सहकार्यस्य च व्यक्तेरिच्छायत्तत्वेन व्यक्तिसापेक्षत्वात् व्यक्तिव्यवहाराणां च भोगमूलकत्वेन रागद्वेषमूलकत्वात् तत्परिवर्तनेन च समाजस्यापि परिवर्तनान्नित्यत्वासंभवात्। नन्वनित्यत्वेऽपि तस्याऽऽलम्बनत्वं स्यादेव न चापि विक्षेपप्रतिषेधाभावः क्लेशतनूकाराभावो वा। यथाभिमतध्यानाद्वेति सूत्रेण यथाभिमतस्याप्यालम्बनत्वोपदेशात्। अत एव "ईश्वरप्रणिधानाद्वा" इतीश्वरप्राणिधानापेक्षयाऽन्यत्वं यथाभिमतस्योपपद्यते। अन्यथा तु सूत्रान्तरामिदं व्यर्थं स्यादिति चेन्न। यथाभिमतमित्यस्याभिमततत्तद्देवतास्वरूपपरत्वात्। अन्यथा यस्य कस्यापि मर्कटादेर्ध्यानादपि स्थितिपदापत्तेः। आध्यात्मिकाधिदैविकाधिभौतिकभेदेन सृष्टेस्त्रैविध्यम्। तत्राऽऽधिभौतिकस्य स्थिरीकरणाय विधीयमानोऽप्याटोपो नाययावत्सफलतां व्रजति कस्यापि। किमत्र निदानम्। वयं तु ब्रूमो नान्यत्किमपि कारणं जगतः स्वाभाविकानित्यत्वमन्तरेति तादृशानित्याधिभौतिकालम्बनापेक्षया नित्ययोराधिदैविकाध्यात्मिकालम्बनयोरेवोपादेयत्वमाभ्या सूत्राभ्यां सूचयतीति। एवमेव "तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः" इत्यत्रापि तत्त्वपदेन परमेश्वरस्यैव ग्रहणम्। तदुक्तं वाचस्पतिमिश्रैः—एकतत्त्वमीश्वरः प्रकृतत्वादिति। आधिदैविकस्वरूपं चाध्यात्मस्वरूपानतिरिक्तमेव।

> योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाऽऽधिदैविकः।
> यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः॥
> एकमेकतराभावे यदा नोपलभामहे।
> त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः॥

इति श्रीमद्भागवतवचनानुसारेण परब्रह्मणो विवर्तस्य नामरूपात्मकस्य जगतस्तत्तदाकारावच्छिन्नं स्वरूपमेव किलाऽऽधिभौतिकं तत्तदाकारानुकूलशक्त्यवच्छिन्नमाधिदैविकं सर्वशक्त्यवच्छिन्नं च परमेश्वरापरपर्यायमाध्यात्मिकमिति पर्यवस्यति। एतत्त्रैविध्यविरहितं निरवच्छिन्नं च परब्रह्मेति। तत्र भौतिकापेक्षया तच्छक्तेः स्थिरत्व तदपेक्षया च सर्वशक्तेरिति भौतिकानां स्थिरीकरणायाऽऽधिदैविकमाध्यात्मिकं वोपादेयमित्येव तात्पर्यं योगदर्शनस्य। दृश्यते चेदानीमपि भोग्यवस्तूनां स्वरूपतो विनाशित्वेऽपि तदुत्पादकतत्तच्छक्तिपर्यालोचनेन तेषां निरन्तरोत्पादनार्थं सूक्ष्मतत्त्वाभ्यासः। एवमेव चित्तस्थैर्यरूपकार्यसंपादनायापि सुघ्टिततत्तच्छक्तिपर्यालोचनपूर्वकं तदवच्छिन्नचैतन्याभ्यासः कर्तव्यतयोपदिष्टः। तत्सिद्धमाधिदैविकाध्यात्मिकान्यतरालम्बनमन्तरा न चित्तविक्षेपपरिहारः। न च समाजस्वरूपमेतादृशमिति न तदालम्बनत्वेन चित्तस्थैर्यम्। एवमेव व्याधिस्त्यानादयोऽप्यपरिहरणीया एव तदालम्बनत्वे। संघघटकव्यक्तीना कार्यकाले रागद्वेषमूलकगुणदोषदर्शनेन तन्मूलकविक्षेपाणामवश्यंभावात्। तस्मात्परमेश्वरस्वत्ववाद एव क्लेशतनूकारद्वारा कर्तव्यनिष्ठां समाजश्रेयोवहामुत्पादयितुमलमिति परमेश्वरस्यैवाऽऽलम्बनत्वं सर्वान्तर्यामित्वेनेति युक्तमुत्पश्यामः। अधिकं चानुसंधेयमाकरेभ्यः।

## ( अलौकिकध्येयवादस्य श्रेयस्त्वम् )

एतेन–इदानींतना राज्यवाणिज्यादिध्येयवादाः सर्वेऽपि व्याख्याताः । तत्रापि संभूयसमुत्थानद्वारा निर्मितानां शासनसंस्थानां वाणिज्यसंस्थानां च संभूयकार्यकारित्वेनाव्यक्तस्वरूपस्य भासमानत्वेऽप्यन्यतो व्यक्तावेव पर्यवसानाद्व्यक्तेश्च रागद्वेषाद्याक्रान्तत्वेन तत्कर्तृककार्येष्वपि स्पर्धासूयातिरस्कारादीनां प्रत्यक्षत एवोपलम्भात्समाजे न वीतरागभयक्रोधानां समुत्पत्तिरिति न तद्द्वारा शुद्धदण्डशासनं प्रभवितुमर्हति । न च तेन विना समाजस्वास्थ्यमित्यतः समाजे वीतरागभयक्रोधानां निरिच्छानां पुरुषाणां निरन्तरनिर्माणाय सर्वान्तर्यामिस्वरूपसंतोष एव ध्येयत्वेन पुरस्करणीयः । तदनुरोधेनैव च सर्वेऽपि व्यवहाराः प्रवर्तनीयाः । तथा च सर्वेषां मनोविकाराणामुत्कटानामनुत्कटानां वा तादृशध्येय एव विनियोगसंपादनद्वाराऽन्योन्योपमर्दनिराकरणेन समाजस्वास्थ्यं सिध्यति नान्यथेति सुधीभिरालोचनीयम् । यत्तु पाश्चात्यदेशस्य समाजपद्धतिमुदाहृत्य कैश्चिदाक्षिप्यतेऽलौकिकध्येयवादोऽयमस्माकमिदानीमनभ्युदयायैव संवृत्त इति तन्निरसनमन्तरा नास्माकमभ्युदयः सेत्स्यतीति । तेषां मते दण्डसंस्थास्वायत्तीकरणेन यथेच्छभोगलाभ एव परमोऽभ्युदय इत्यतः परायत्तदण्डशासनसंस्थायाः स्वायत्तीकरणे क्रियमाणप्रयत्नविरोध्ययमलौकिको ध्येयवाद इति पर्यवस्यति । परंतु तेषामिदं मतमविचाररमणीयमेव । पाश्चात्यध्येयवादेनापि रागद्वेषादीनां हानासंभवस्य पूर्वमेवोपपादितत्वात् । सर्वमनोविकाराणामवसरालाभेन केषांचनासंतोषात् शासनद्वारा च तदसंतोषावष्टम्भाय च सर्वत्र प्रवृत्तेरुपलम्भात् । अतश्च समाजरचना काचिदन्यैव शासनसंस्थापेक्षयेत्यवश्यमङ्गीकरणीयम् । येन शासनसंस्थाऽपि समाजरचनानुसारेणैव प्रवर्तिता भवेत् । न वा बलापकर्षे शासनसंस्थायाः परिवर्तनेऽपि समाजरचनाविनाशो भवेत् । न हि जापानदेशे जर्मनदेशे वा नाऽऽसीच्छासनसंस्था सुसंघटिता । न वा तेषां समाजानां तया नाभ्युदयः संपादितः । एवमपि शस्त्रास्त्रादिप्रकर्षवशादिदानीं तेषां परस्वाधीनता संपन्ना । तदस्यां परिस्थितौ समाजरचनापि तदा तदा परिवर्तनीया चेत्कथं वा समाजस्वास्थ्यं स्यात् । नहि समाजरचनाया योगक्षेमावहत्वस्य शासनसंस्थैव निकषः । सर्वेषां भावानां समीकरणद्वारा प्रतिव्यक्ति परस्परानुपमर्देन व्यवहारस्वातन्त्र्यमेव खलु तन्निकषः । तच्च यद्यलौकिकध्येयवादेन सिध्येत्, वृथैव शासनसंस्थाया निकषत्वम् । किं बहुना अलौकिकध्येयवादेन पुनश्च शासनसंस्थास्वायत्तीकरणसामर्थ्यं चेदुत्पद्यते, तदा तु स एव समुचित इति परामर्शः । तच्च सामर्थ्यं रागद्वेषादितनूकारेणाभयादिगुणवत्त्वेनैव भवतीति तदर्थमलौकिकध्येयवाद एव श्रेयानिति सुधीभिरालोचनीयं सुधीभिः ।

## ( प्रगतिपदार्थविचारः )

ननु न शासनसंस्थामन्तरा समाजस्य प्रगतिर्भवितुमर्हति । सर्वव्यवहाराणां तन्मूलकत्वात् । तस्याः परायत्तत्वे तु शासकस्य परस्यैव जितानां प्रगतिनिरोधः सर्वथा भवति । अतश्च " सर्वं

परवशं दुःखं सर्वमात्मवशं सुखम् " इति भारतीयसिद्धान्तानुसारेण सर्वव्यवहारनिदानभूतायाः शासनसंस्थायाः स्वायत्ततासंपादनमवश्यमेव कर्तव्यमिति तदनुरोधेनैव समाजरचना संपादनीयेति चेन्न । प्रगतिपदार्थस्यायावध्यनिर्णयात् । तदर्थमादौ प्रगतिपदार्थ एव विचार्यते ।

अत्र च प्रगतिरियं समाजस्यैव पर्यालोचनीया । तत्र समाजस्य व्यक्त्यनतिरेकात् व्यक्तिप्रगतिरेवाऽऽदौ विचारणीया स्यात् । व्यक्तीनां च प्रवृत्तेः सर्वत्र भोगेच्छामूलकत्वात्, भोगेच्छायाश्च भोग्यसंपत्तिभोगशक्त्युभयोपजीव्यत्वाच्च भोगशक्त्यपेक्षितभोग्यसंपत्त्युत्पादनानुकूलबुद्धिशक्तिमत्त्वमेव प्रगतित्वमिति सिध्यति । एवं च यत्र समाजे यथेच्छभोग्यसंपत्त्युत्पादनम्, उत्पादितायाश्च तस्या यथेच्छभोगसामर्थ्यं च वर्तते, तस्यैव समाजस्य प्रगतिपरत्वमभ्युपेयं स्यात् । यथेच्छभोग्यसंपत्त्युत्पादनानुकूलबुद्धिमत्ताया इयत्तानवधारणात् भोगशक्तेरप्यपरिमितत्वाच्च नैतन्मतं कुत्रापि प्रतिष्ठां लभते । प्रत्युत यत्र भोगसामर्थ्यमधिकम्, तत्र भोग्यसंपत्त्युत्पादनानुकूलबुद्धिमत्तायाः प्रायोऽभाव एव परिदृश्यते । स्पष्टं चेदं बुद्धिजीविनां श्रमजीविनां चाऽऽहारविहारविशेषेण प्रत्यक्षतयाऽनुभूयमानेन । पशूनां तु प्रायो भोगसामर्थ्यं निश्चप्रचमेव । एवमपि बुद्धेरभावात्ते पशव एव । नन्वस्तु तर्हि तादृशबुद्धिमत्त्वमेव प्रगतित्वम् । तादृशबुध्या समुत्पादिताया भोग्यसंपत्तेर्भोगाभावे वैयर्थ्यप्रसङ्गात् । न च बुद्धिवैभवाद्भोगशक्तिरप्यौषधादिकृत्रिमोपायद्वारा संपादयितुं शक्या । तादृशोपायानां परिमितत्वेनापरिमितभोगेच्छापूर्तेः सर्वथाऽसंभवात् । अत एवोक्तम्—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ इति ।

योगशास्त्रेऽपि—

या भोगेष्विन्द्रियाणां तृप्तेरुपशान्तिस्तत्सुखम्, या लौल्यादनुपशान्तिस्तद्दुःखम् । न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यम्, । कस्मात् ? यतो भोगाभ्यासमनुविवर्धन्ते रागाः, कौशलानि चेन्द्रियाणामिति । तस्मादनुपायः सुखस्य भोगाभ्यास इति । स खल्वयं वृश्चिकविषभीत इवाऽऽशीविषेण दष्टो यः सुखार्थी विषयानुवासितो महति दुःखपङ्के निमग्न इति ।

एवं चेदानींतनेयं भौतिकविज्ञानेन भोग्यसंपदतिशयसंपादिका प्रगतिर्वस्तुगत्या प्रगतिर्वा परागतिर्वा मनुष्याणामिति तु सुनिपुणमालोचनीयम् । एतेन इदानीतनः सर्वोऽपि विज्ञानवादः प्रत्युक्तः । तदेव विज्ञानं यथावद्विज्ञानपदवाच्यं स्याद्येनेन्द्रियाणामुपशान्तिः स्यात् । तदभावे तु विज्ञानमिदं सर्वानर्थनिदानमेव स्यात् । दृश्यते चेदानीं विज्ञानबलात्सर्वत्र प्रबलैर्दुर्बलाना निपीडनं वाणिज्यद्वारा वा बलाद्वेति नो तिरोहितम् । इयमेव चेत्प्रगतिस्तर्हि हिंस्रपशुभ्यः को वा विशेषो

मानवानाम् । प्रत्युत प्रलोभनादिमूलकविप्रलम्भावसरप्राप्त्या वरं स्वाभाविकं हिंस्रत्वमिति मानवताप्रतिष्ठायै विहितः प्रयत्नो हिंस्रपशुत्वमेवाऽऽपादयतीति । तस्मात्प्रगतिर्नाम मात्स्यन्यायनिरासपूर्वकाभयस्थापनमित्येव वक्तव्यम् । तच्च न रागद्वेषमूलकचित्तविक्षेपनिरासमन्तरेणेति तदर्थमाधिदैविकाध्यात्मिकान्यतरतत्त्वाभ्यास एवाऽऽदरणीयः सुधीभिः । तत्सिद्ध न रागद्वेषादिमनोविकारप्रहाणमन्तरा दण्डाधिकारः, न च दण्डमन्तरा मात्स्यन्यायनिवृत्तिः । न च ता विना प्रजाना योगक्षेमौ निर्भयता चेति वीतरागाणा निरपेक्षाणा स्वपरभावविहीनाना पुरुषाणामेवाऽऽद्यो समाजोपकारायाऽऽवश्यकतेति तत्संपादनमेव प्रथमतः कर्तव्यम् । तदन्तरेण क्रियमाणा या काऽपि समाजरचना पुरुषबुद्धिपरिकल्पितत्वात् भोगेच्छामूलकत्वाच्च पाश्चरसमाजरचना नातिक्रामतीति सुनिश्चितमेव ।

( ब्राह्मणोत्पत्तिविचारः )

ननु सभवन्ति वेताद्दशा पुरुषा इति चेत्सत्यम् । सभवन्त्येवैताद्दशाः पुरुषाः । न ह्ययतनपुरुषपर्यालोचनमात्रेण ताद्दशाना पुरुषाणा सर्वथाऽभावः परिकल्पितुं साम्प्रतम् । नाप्ययतना अपि सर्वे समानस्वभावाः । स्वभाववैचित्र्यस्य सर्वत्रोपलम्भात् । न हि स्वभावो नाम मूर्तः पदार्थः । यदचक्षुषा गृह्येत । कार्यानुमेयत्वात्स्वभावस्य । तथा चाऽऽहुः श्रीमच्छङ्करभगवत्पादा गीताभाष्ये—

जन्मान्तरकृतसंस्कारः प्राणिना वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तः स्वभावः इति ।

एव च कारणे कार्यानुकूलः कश्चन कर्मजन्यातिशय एव स्वभाव इति फलति । तस्य सर्वथाऽद्दश्यत्वेन कार्यानुमेयत्वमेव । अत एव तस्याद्दष्टपदव्यपदेश्यत्वम् । यत्त्वात्मगतस्यैव तस्याद्दष्टत्वमिति केषाञ्चिन्मतम् । तत्तु सर्वस्यापि वस्तुजातस्यात्मभोगार्थत्वेन आत्मगताद्दष्टकारणकत्वाद्भावनारूपसंस्कारपरत्वेन कथञ्चिन्नेयम् । वेगस्थितिस्थापकसंस्कारयोस्तैरन्यात्मातिरिक्तद्रव्यगतत्वेनाङ्गीकारात् । तस्मात्कर्मजन्यातिशयस्यैव स्वभावत्वेन तस्य च कार्यानुमेयत्वेन पिण्डगततत्तद्भाववैचित्र्यान्यथानुपपत्त्या प्रतिपिण्ड ताद्दशातिशयोऽकामेनाप्यभ्युपगन्तव्यः । एव चेदानीमपि शान्तिप्रियाणा शम एव परम श्रेय इति मन्यमानाना तदुपदेशकानां रामकृष्णपरमहंस-विवेकानन्द-रामतीर्थप्रभृतीनां बहूनां सन्यासिनां ोपलम्भाच्छमादिभावाभिव्यञ्जकस्तत्तत्पिण्डगतः कर्मातिशयोऽवश्यमेव स्वीकार्यः । न हि तेषां समानेऽपि मनुष्यभावे सर्वत्र शमदमत्यागैश्वर्यादिसर्वभावाभिव्यक्तिः सर्वशरीरेपूपलभ्यते । न वा शरीर विनाऽन्यत्र कुत्रापि भावाभिव्यक्तिः सम्भवति । तस्मात्समानेऽपि मनुष्यभावे [illegible]भावाभिव्यक्त्यन्यथानुपपत्त्या पिण्डगतविशेषोऽभ्युपेतव्यः । सोऽयं विशेषो भावाभिव्यक्त्यन्यथानुपपत्त्या कल्पनीयः शरीरारम्भककर्मजन्य एव कल्पनीयः स्यात् । न तु शरीरोत्पत्त्यनन्तरं तच्छरीरानुष्ठितकर्मजन्यः । तथा चेत्सर्वेषां समानवयसां समानाहारविहाराणां समानविचारशालिनां भाव-

वैचित्र्यानुपपत्तिस्तदवस्थैव । न हीदानींतनाः सर्वेऽपि अधिगतरणविद्याः शूरा अधिगतशास्त्रविद्या वा सर्वेऽपि समानबुद्धिविभवा आर्जविनो लोभरहितास्त्यागिनश्च । वैचित्र्यस्य स्फुटमुपलम्भात् । सन्ति केचन सरलाः परोपकारिणः, अपरे तु कोपनाः स्वार्थतत्पराः, अन्ये च स्वार्थाविरोधेन परार्थकारिणोऽपि साहसिकाः । इतरे तु अनृजवो लुब्धा वावदूका इति । यदि च विद्याजन्यो वाऽऽहारविहारजन्यो वा संस्कारः समानः शरीरपिण्डा अपि समानास्तर्हि व्यज्यमानमिदं मनोगतभाववैचित्र्यं सर्वथाऽनुपपन्नमेव । न च तदाकस्मिकम् । निष्कारणकार्यवादप्रसङ्गात् । न चास्मिन् विज्ञानवादप्रधाने युगे कार्यं निष्कारणमभ्युपगन्तुं शक्यम् । सर्वेषां निष्क्रियत्वप्रसङ्गात् । विज्ञानविद्यालयानां संशोधकानां च तिलाञ्जलिर्देयः स्यात् । तस्मात्कार्यदर्शनादेव तत्कारणमपि किंचिदस्तीत्येव कल्पनीयम् । नाऽऽकस्मिकत्वम् । पराक्रान्तं चात्र कुसुमाञ्जलावुदयनाचार्यैः । तद्यथा—

**हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।**
**स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥५॥**

**हेतुनिषेधे भवनस्यानपेक्षत्वेन सर्वदा भवनमविशेषात् । भवनप्रतिषेधे प्रागिव पश्चादप्यभवनमविशेषात् । उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन स्वस्मादिति पक्षानुपपत्तेः । पौर्वापर्यनियमश्च कार्यकारणभावः । न चैकं पूर्वमपरं च । तत्त्वस्य भेदाधिष्ठानत्वात् । अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्रसक्तौ पुनः सदातनत्वापत्तेः ।** इति ।

एतेन कारणनिषेधमात्रं वा भवनप्रतिषेधो वा स्वात्महेतुकत्वं वा निरुपाख्यहेतुकत्वं वा सर्वविधमेवाऽऽकस्मिकत्वं निरस्तम् । सर्वथा तु कतिपयदेहेष्वेव कतिपयानां त्यागशमादिभावानामभिव्यक्तेरुपलम्भात् तत्र तदनुगुणः कश्चन विशेषस्त्ववश्यमेव वक्तव्यः । अन्यथा निर्हेतुकत्वेन सर्वत्र सर्वदा तादृशभावोपलब्धिप्रसङ्गात् । नियतविशेषाङ्गीकारे च तेन विशेषेण तादृशभावोपकाराभावेऽपि नियतत्वमेव तस्य कारणतामापादयतीति तस्यैव स्वभावपदवाच्यत्वमभिमतमेव । एतादृशविशिष्टपिण्डानां तत्तद्भावाभिव्यक्तौ नियतत्वमेव तत्तत्पिण्डानां स्वभाव इति तादृशस्वभावजन्यत्वमेव भावानामस्माकमभिमतम् । एतादृशस्वभाववादस्तु अभिमत एव । तदुक्तं कुसुमाञ्जलौ—

**सन्तु ये केचिदवधयो न तु तेऽपेक्ष्यन्त इति स्वभावार्थ इतिचेत् नापेक्ष्यन्त इति कोऽर्थः ? किं न नियताः, आहोस्विन्नियता अप्यनुपकारकाः ? प्रथमे धूमो दहनवद्गर्दभमप्यवधीकुर्यात्, नियामकाभावात् । द्वितीये तु किमुपकारान्तरेण, नियमस्यैवापेक्षार्थत्वात् । तस्यैव च कारणात्मकत्वात्, ईदृशस्य च स्वभाववादस्येष्टत्वात् ।** इति ।

एतेन चापेक्षाया एव कारणत्वमिति स्फुटं प्रतीयते । सा च क्वचिदुत्पादकत्वेन कुत्रचिदभिव्यञ्जकत्वेनेति तु विशेषः । विस्तरस्तु कुसुमाञ्जलावेव द्रष्टव्यः । प्रकृते च त्यागशमादिभावा-

मानवानाम् । प्रत्युत प्रलोभनादिमूलकविप्रलम्भावसरप्राप्त्या वरं स्वाभाविकं हिंस्रत्वमिति मानवताप्रतिष्ठायै विहितः प्रयत्नो हिंस्रपशुत्वमेवाऽऽपादयतीति । तस्मात्प्रगतिर्नाम मात्स्यन्यायनिरासपूर्वकाभयस्थापनमित्येव वक्तव्यम् । तच्च न रागद्वेषमूलकचित्तविक्षेपनिरासमन्तरेति तदर्थमाधिदैविकाध्यात्मिकान्यतरतत्त्वाभ्यास एवाऽऽदरणीयः सुधीभिः । तत्सिद्धं न रागद्वेषादिमनोविकारप्रहाणमन्तरा दण्डाधिकारः, न च दण्डमन्तरा मात्स्यन्यायनिवृत्तिः । न च तां विना प्रजानां योगक्षेमौ निर्भयता चेति वीतरागाणां निरपेक्षाणां स्वपरभावविहीनानां पुरुषाणामेवाऽऽद्यौ समाजोपकारायाऽऽवश्यकतेति तत्संपादनमेव प्रथमतः कर्तव्यम् । तदन्तरेण क्रियमाणा या काऽपि समाजरचना पुरुषबुद्धिपरिकल्पितत्वात् भोगेच्छामूलकत्वाच्च पाश्चात्त्यसमाजरचनां नातिक्रामतीति सुनिश्चितमेव ।

( ब्राह्मणोत्पत्तिविचारः )

ननु संभवन्ति वैतादृशा पुरुषा इति चेत्सत्यम् । संभवन्त्येवैतादृशाः पुरुषाः । न ह्यद्यतनपुरुषपर्यालोचनमात्रेण तादृशानां पुरुषाणां सर्वथाऽभावः परिकल्पितुं सांप्रतम् । नाप्यद्यतना अपि सर्वे समानस्वभावाः । स्वभाववैचित्र्यस्य सर्वत्रोपलम्भात् । न हि स्वभावो नाम मूर्तः पदार्थः । यतश्चक्षुषा गृह्येत । कार्यानुमेयत्वात्स्वभावस्य । तथा चाऽऽहुः श्रीमच्छंकरभगवत्पादा गीताभाष्ये—

जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तः स्वभावः इति ।

एवं च कारणे कार्यानुकूलः कश्चन कर्मजन्यातिशय एव स्वभाव इति फलति । तस्य सर्वथाऽदृश्यत्वेन कार्यानुमेयत्वमेव । अत एव तस्यादृष्टपदव्यपदेश्यत्वम् । यत्त्वात्मगतस्यैव तस्यादृष्टत्वमिति केषांचिन्मतम् । तत्तु सर्वस्यापि वस्तुजातस्यात्मभोगार्थत्वेन आत्मगतादृष्टकारणकत्वाद्भावनारूपसंस्कारपरत्वेन कथंचिन्नेयम् । वेगस्थितिस्थापकसंस्कारयोस्तैरप्यात्मातिरिक्तद्रव्यगतत्वेनाङ्गीकारात् । तस्मात्कर्मजन्यातिशयस्यैव स्वभावत्वेन तस्य च कार्यानुमेयत्वेन पिण्डगततत्तद्भाववैचित्र्यान्यथानुपपत्त्या प्रतिपिण्डं तादृशातिशयोऽकामेनाप्यभ्युपगन्तव्यः । एवं चेदानीमपि शान्तिप्रियाणां शम एव परमं श्रेय इति मन्यमानानां तदुपदेशकानां रामकृष्णपरमहंस-विवेकानन्द-रामतीर्थप्रभृतीनां बहूनां सन्यासिनां चोपलम्भाच्छमादिभावाभिव्यञ्जकस्तत्तत्पिण्डगतः कर्मातिशयोऽवश्यमेव सिध्यति । न हि तेषां समानेऽपि मनुष्यभावे सर्वत्र शमदमत्यागैश्वर्यादिसर्वभावाभिव्यक्तिः सर्वशरीरेषूपलभ्यते । न वा शरीरं विनाऽन्यत्र कुत्रापि भावाभिव्यक्तिः संभवति । तस्मात्समानेऽपि मनुष्यभावे नियतभावाभिव्यक्त्यन्यथानुपपत्त्या पिण्डगतविशेषोऽभ्युपेतव्यः । सोऽयं विशेषो भावाभिव्यक्त्यन्यथानुपपत्त्या कल्पनीयः शरीरारम्भककर्मजन्य एव कल्पनीयः स्यात् । न तु शरीरोत्पत्त्यनन्तरं तच्छरीरानुष्ठितकर्मजन्यः । तथा चेत्तेषां समानवयसां समानाहारविहाराणां समानविचारशालिनां भाव-

वैचित्र्यानुपपत्तिस्तदवस्थैव। न हीदानींतनाः सर्वेऽपि अधिगतरणविद्याः शूरा अधिगतशास्त्रविधा वा सर्वेऽपि समानबुद्धिविभवा आर्जविनो लोभरहितास्त्यागिनश्च। वैचित्र्यस्य स्फुटमुपलम्भात्। सन्ति केचन सरलाः परोपकारिणः, अपरे तु कोपनाः स्वार्थतत्पराः, अन्ये च स्वार्थाविरोधेन परार्थकारिणोऽपि साहसिकाः। इतरे तु अनृजवो लुब्धा वावदूका इति। यदि च विद्याजन्यो वाऽऽहारविहारजन्यो वा संस्कारः समानः शरीरपिण्डा अपि समानास्तर्हि व्यज्यमानमिदं मनोगतभाववैचित्र्यं सर्वथाऽनुपपन्नमेव। न च तदाकस्मिकम्। निष्कारणकार्यवादप्रसङ्गात्। न चास्मिन् विज्ञानवादप्रधाने युगे कार्यं निष्कारणमभ्युपगन्तुं शक्यम्। सर्वेषां निष्क्रियत्वप्रसङ्गात्। विज्ञानविद्यालयानां संशोधकानां च तिलाञ्जलिर्देयः स्यात्। तस्मात्कार्यदर्शनादेव तत्कारणमपि किंचिदस्तीत्येव कल्पनीयम्। नाऽऽकस्मिकत्वम्। पराक्रान्तं चात्र कुसुमाञ्जलावुदयनाचार्यैः। तद्यथा—

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च।
स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥५॥

हेतुनिषेधे भवनस्यानपेक्षत्वेन सर्वदा भवनमविशेषात्। भवनप्रतिषेधे प्रागिव पश्चादप्यभवनमविशेषात्। उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन स्वस्मादिति पक्षानुपपत्तेः। पौर्वापर्यनियमश्च कार्यकारणभावः। न चैकं पूर्वमपरं च। तत्त्वस्य भेदाधिष्ठानत्वात्। अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वमसत्त्वौ पुनः सदातनत्वापत्तेः। इति।

एतेन कारणनिषेधमात्रं वा भवनप्रतिषेधो वा स्वात्महेतुकत्वं वा निरुपाख्यहेतुकत्वं वा सर्वविधमेवाऽऽकस्मिकत्वं निरस्तम्। सर्वथा तु कतिपयदेहेष्वेव कतिपयानां त्यागशमादिभावानामाभिव्यक्तेरुपलम्भात् तत्र तदनुगुणः कश्चन विशेषस्त्ववश्यमेव वक्तव्यः। अन्यथा निर्हेतुकत्वेन सर्वत्र सर्वदा तादृशभावोपलब्धिप्रसङ्गात्। नियतविशेषाङ्गीकारे च तेन विशेषेण तादृशभावोपकाराभावेऽपि नियतत्वमेव तस्य कारणतामापादयतीति तस्यैव स्वभावपदवाच्यत्वमभिमतमेव। एतादृशविशिष्टपिण्डानां तत्तद्भावाभिव्यक्तौ नियतत्वमेव तत्तत्पिण्डानां स्वभाव इति तादृशस्वभावजन्यत्वमेव भावानामस्माकमभिमतम्। एतादृशस्वभाववादस्तु अभिमत एव। तदुक्तं कुसुमाञ्जलौ—

सन्तु ये केचिदवधयो न तु तेऽपेक्ष्यन्त इति स्वभावार्थ इतिचेत् नापेक्ष्यन्त इति कोऽर्थः? किं न नियताः, आहोस्विन्नियता अप्यनुपकारकाः? प्रथमे धूमो दहनवद्गर्दभमप्यवधीकुर्यात्, नियामकाभावात्। द्वितीये तु किमुपकारान्तरेण, नियमस्यैवापेक्षार्थत्वात्। तस्यैव च कारणात्मकत्वात्, ईदृशस्य च स्वभाववादस्येष्टत्वात्। इति।

एतेन चापेक्षाया एव कारणत्वमिति स्फुटं प्रतीयते। सा च क्वचिदुत्पादकत्वेन कुत्रचिचाभिव्यञ्जकत्वेनेति तु विशेषः। विस्तरस्तु कुसुमाञ्जलावेव द्रष्टव्यः। प्रकृते च त्यागशमादिभावा-

नामभिव्यञ्जकत्वेन पिण्डगतविशेषस्त्ववश्यमेवाङ्गीकर्तव्य इति सिध्यति । तं विना भावानां काचित्कत्वानुपपत्तेः । तथा च पिण्डगतवैशिष्ट्यमिदं भावाभिव्यञ्जकं पिण्डोत्पादकमातापितृशरीरादेव शुक्रशोणितद्वारा समुत्पद्यत इत्यतः सिध्यति समानपिण्डोत्पादकत्वं शरीराणामिति सैव समानप्रसवा जातिरिति जातिरप्यवान्तरा ब्राह्मणत्वादिः सिध्यति ।

( जातिवादाक्षेपः )

ननु नास्ति जातिर्नाम कश्चन पदार्थो मनुष्येष्ववान्तरः । निखिलमनुष्यदेहानां समानत्वात् । नहि मनुष्यदेहेष्वाकारभेदः कुत्राप्युपलभामहे । न वा तद्घटकरसरक्तादिधातूनां वातापित्तकफादीनां वा भेदः सिध्यति येन तदारब्धदेहेष्वपि भेदः स्यात् । नहि कारणसाजात्ये कार्यवैजात्यं भवितुमर्हति । अतिप्रसङ्गात् । सजातीयादपि कारणाद्विजातीयकार्यस्वीकारे कार्यकारणभावोच्छेदप्रसङ्गात् । न च सजातीयकपालेभ्योऽपि विभिन्ना घटाकारा जायमाना उपलभ्यन्त इति वाच्यम् । येन रूपेण ययोः कार्यकारणभावस्तेन रूपेण साजात्यवैजात्ययोर्विवक्षितत्वात् । कपालानां कपालत्वेन घटत्वजातिमन्निरूपितकारणत्वात्तेन रूपेण विभिन्नाकारमपि जायमानं कार्यं घटत्वजातिमत्त्वात्सजातीयमेवेति न कापि हानिः । तस्माद्धातूनां धातुत्वेन शरीरारम्भकत्वाच्छरीरसामान्यमत्पिण्डोत्पत्तिरेव न तद्विशेषोत्पत्तिः कथमपि भवितुमर्हति । ननु पश्वादिष्वपि शुक्रशोणितादिधातूनां सामान्यतः सत्त्वेऽपि यथा विशिष्टशरीरारम्भकत्वं तथा मनुष्यशरीरगतधातूनामपि स्याद्विशिष्टशरीरारम्भकत्वम् । अथ तत्र तादृशविशिष्टशरीरोपलम्भात् धातूनामपि वैशिष्ट्यमभिमतं चेत्, मनुष्यशरीरेष्वपि तत्तद्भावोद्बोधरूपवैशिष्ट्योपलम्भादस्तु धातुवैशिष्ट्यमिति चेन्न । तत्राऽऽकारशब्दादिवैशिष्ट्यस्य प्रत्यक्षेणोपलम्भात्तथा धातुवैशिष्ट्यमनुमीयते । न च तथा मनुष्यदेहे वैशिष्ट्यमुपलभामहे येन कारणीभूतधातुवैशिष्ट्यमनुमीयेत । भाववैचित्र्योद्बोधस्तु शिक्षणादिद्वाराऽपि भवितुमर्हति । अत एव सोदरयोः समानपितृकयोरपि भावभेदोपलब्धिः संगच्छते । अन्यथा तु सोदराणां सर्वेषां समानभावाभिव्यक्तिः स्यात् । पिण्डसामान्यात् । अत एव सोदरयोरपि बुद्धितारतम्यमुपपद्यते । अन्यथा तु जन्मत एव समानबुद्धिविकासः स्यात् । किंच पशुमनुष्ययोः संकरे शरीरोत्पत्त्यदर्शनादपि तत्र धातुवैशिष्ट्यमुन्नीयते । न च तथा मनुष्येषु । सर्वेषां सर्वत्रापत्यजननदर्शनात् । तस्मान्न युक्तमेतन्मनुष्येष्ववान्तरपिण्डवैशिष्ट्यकल्पनया जातिपरिकल्पनम् । अत एव भविष्यपुराणे मनुष्येष्ववान्तरजातिनिरासः सप्रपञ्चमभिहितः । पुराणवचनानि तु सनातनधर्मप्रदीपे द्रष्टव्यानि । विस्तरभयान्नात्र निर्दिश्यन्ते । महाभारतेऽपि—

सर्प उवाच—

ब्राह्मणः को भवेद्राजन् वेद्यं किंच युधिष्ठिर ।
ब्रवीह्यतिमतिं त्वा हि वाक्यैरनुमिमीमहे ॥२०॥

युधिष्ठिर उवाच—

सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः ॥२१॥
वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत् ।
यत्र गत्वा न शोचन्ति भवतः किं विवक्षितम् ॥२२॥

सर्प उवाच—

चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि ।
शूद्रेष्वपि च सत्यं च दानमक्रोध एव च
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ॥२३॥
वेद्यं यच्चात्र निर्दुःखमसुखं च नराधिप ।
ताभ्यां हीनं पदं चान्यन्न तदस्तीति लक्षये ॥२४॥

युधिष्ठिर उवाच—

शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥२५॥
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत् ॥२६॥
यत्पुनर्भवता प्रोक्तं न वेद्यं विद्यतीति च ।
ताभ्यां हीनमतोऽन्यत्र पदं नास्तीति चेदपि ॥२७॥
एवमेतन्मतं सर्प ताभ्यां हीनं न विद्यते ।
यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता ॥२८॥
एवं वै सुखदुःखाभ्यां हीनं नास्ति पदं क्वचित् ।
एषा मम मतिः सर्प यथा वा मन्यते भवान् ॥२९॥

सर्प उवाच—

यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तदाऽऽयुष्मन् कृतिर्यावन्न विद्यते ॥३०॥

युधिष्ठिर उवाच—

जातिरत्र महासर्प मनुष्यत्वे महामते ।
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥३१॥

सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥३२॥
इदमार्षं प्रमाणं च ये यजामह इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥३३॥
प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥३४ ॥
तावच्छूद्रसमो ह्येषो यावद्वेदे न जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायंभुवोऽब्रवीत् ॥३५॥
कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते ।
संकरस्त्वत्र नागेन्द्र वलवान् प्रसमीक्षितः ॥३६॥
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान् भुजगोत्तम ॥३७॥

सर्प उवाच—

श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर ।
भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥३८॥ इति । म. भा. १. १८० ॥

अत्र च यद्यपि जन्मसिद्धजातिनिरासः स्पष्टं नाभिहितः, किं तु संकराद्दुष्परीक्ष्यत्वमेवोक्तं जातीनाम् । तथापि वृत्ततो ब्राह्मणत्वाद्यनुमतमेव । अत एव ब्राह्मणस्य लक्षणानि- शूद्रे चेद्दृश्यन्ते शूद्रलक्षणानि च ब्राह्मणे । तदा तादृशलक्षणेभ्य एव ब्राह्मणस्य ब्राह्मणत्वनिरासपूर्वकं शूद्रत्वव्यवस्थापनं शूद्रस्य च शूद्रत्वनिरासपूर्वकं ब्राह्मणत्वव्यवस्थापनं चोपपन्नं भवति । अन्यथा तु जात्या तत्तद्वर्णत्वमेव स्यात् । गुणतस्तु केवलं गौणो व्यवहारः सिंहो माणवक इतिवत्स्यात् । न च तथाऽत्र प्रतिपाद्यते । तस्मान्न समानप्रसवात्मकः कश्चन पिण्डगतो विशेषो जात्यपरनामधेयः कथमपि सिद्धो भवति । यत्तु वृत्तवैलक्षण्यम् । तदपि तत्पिण्डकर्तृकक्रियामूलकमेवेति उपरिष्टात् प्रतिपादयिष्यते ।

एवमेव महाभारते शान्तिपर्वणि भृगुभरद्वाजसंवादे १८८ तमेऽध्याये—

भरद्वाज उवाच—

चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसंकरः ॥६॥
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधाऽऽश्रमः ।
सर्वेषां नः प्रभवति कस्माद्वर्णो विभिद्यते ॥७॥

स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम् ।
तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ॥८॥
जङ्गमानामसंख्येयाः स्थावराणां च जातयः ।
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ॥९॥

भृगुरुवाच—

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥१०॥
कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥११॥
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः ।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥१२॥
हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥१३॥
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ।
धर्मो यज्ञक्रिया तेषां नित्यं न प्रतिषिध्यते ॥१४॥
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः ॥१५॥
ब्राह्मणा ब्रह्मतन्त्रस्थास्तपस्तेषां न नश्यति ।
ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा ॥१६॥
ब्रह्म चैव परं सृष्टं ये न जानन्ति तेऽद्विजाः ।
तेषां बहुविधास्त्वन्यास्तत्र तत्र हि जातयः ॥१७॥
पिशाचा राक्षसाः प्रेता विविधा म्लेच्छजातयः ।
प्रणष्टज्ञानविज्ञानाः स्वच्छन्दाचारचेष्टिताः ॥१८॥
प्रजा ब्राह्मणसंस्काराः स्वकर्मकृतनिश्चयाः ।
ऋषिभिः स्वेन तपसा सृज्यन्ते चापरेऽपरैः ॥१९॥
आदिदेवसमुद्भूता ब्रह्ममूलाऽक्षयाऽव्यया ।
सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा ॥२०॥ इति ।

अत्र च " न विशेषोऽस्ति वर्णानाम् " इत्यनेन वर्णविशेषप्रत्याख्यानपूर्वकं सर्वेषां मानवानां समानतां प्रतिपाद्य पश्चात्तेषां क्रोधलोभादिमूलककर्मद्वारा क्षत्रियत्ववैश्यत्वादिप्रतिपादनमिदमेव

गमयति यत्समाजोपयोगार्थं प्रविभज्यमानानां कर्मणां मध्ये यैर्यादृशं कर्मानुष्ठितम्, ते तद्वर्णीया इति । अनेन च स्पष्टमिदमवगम्यते यत्समाजसुव्यवस्थायै कर्मप्रविभागस्यात्यन्तमावश्यकत्वेन नियत-कर्मानुष्ठानाच्च यज्ञक्रियारूपधर्मानुष्ठानस्य सर्वेषामसंभवात् तत्त्यागपूर्वकनियतकर्मानुष्ठानेन तेषां पृथक् संघः संपन्नः । स च ब्राह्मणादिपदव्यपदेश्यः । न तु तत्राऽऽनुवंशिकपरम्परया समानः प्रसवः कश्च-नेति नेदानींतना जन्मसिद्धा जातिरत्राभिमता । यथा चेदानीं प्राड्विवाकपदादिकार्यानुष्ठाने व्यापृतानां केषांचन स्वधर्मानुष्ठानात्प्रच्युतिस्तत्तत्पदव्यपदेशश्च भवति । नैतावता तत्पुत्रपौत्रादी-नामपि तत्त्वेन व्यपदेशः । एवमेव पूर्वमपि समाजवाद इव समाजोपकारार्थं नियतकर्मव्यवस्था तन्मूलकतत्तद्व्यपदेशश्च । पश्चात्तु लोभादिना पुत्रपरम्परयैव योग्यताभावेऽपि तत्तत्कर्मानुष्ठानं प्रचाल्य प्रचलितः खलु समाजो दूषितः । जातिव्यवस्थामूलं प्रतीयते । वस्तुतस्तु न समानप्रसवा-त्मिका जातिर्नाम कश्चन पदार्थो मनुष्याणामवान्तरः । अनुपलम्भात् । व्यभिचाराच्च गुणादीनाम् [illegible] । [illegible] । वस्तुतः सर्वेषां मानवानामैक्येन [illegible] विनियोग एव भेदात् । न चैवं जात्युद्दिष्टकर्मणां "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यादीनामनुपपत्तिरिति वाच्यम् । राजकर्मानुष्ठानशालिन एव तत्र राजशब्दार्थत्वात् । "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्" इत्यादीनां तु [illegible] । [illegible] । [illegible] । [illegible] "वयं यजामहे" इति [illegible] । [illegible] ।

यतोऽभिहितम्—"तत्संभवद्रव्यसमूहो भूतादिरुक्तः। भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते। तथेन्द्रियार्थाः। भवति चात्र—

इन्द्रियेणेन्द्रियार्थं तु स्वं स्वं गृह्णन्ति मानवाः।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥१५॥

न चाऽऽयुर्वेदशास्त्रेषूपदिश्यन्ते सर्वगताः क्षेत्रज्ञा नित्याश्च। असर्वगतेषु च क्षेत्रज्ञेषु नित्यपुरुषव्यापकान् हेतूनुदाहरन्ति। आयुर्वेदशास्त्रसिद्धान्तेष्वसर्वगताः क्षेत्रज्ञा नित्याश्च तिर्यग्योनिमानुषदेवेषु संचरन्ति धर्माधर्मनिमित्तम्। त एतेऽनुमानग्राह्याः परमसूक्ष्माश्चेतनावन्तः शाश्वता लोहितरेतसोः संनिपातेष्वभिव्यज्यन्ते। यतोऽभिहितम्—पञ्चमहाभूतशरीरिसमवायः पुरुष इति। स एव कर्मपुरुषश्चिकित्साधिकृतः" इति॥

तत्रैव सूत्रस्थाने प्रथमाध्याये—अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते। तस्मिन् क्रिया। सोऽधिष्ठानम्। कस्मात्। लोकस्य द्वैविध्यात्। लोको हि द्विविधः स्थावरो जङ्गमश्च। द्विविधात्मक एवाऽऽग्नेयः सौम्यश्च। तद्भूयस्त्वात्। पञ्चात्मको वा तत्र चतुर्विधो भूतग्रामः संस्वेदजजरायुजाण्डजोद्भिज्जसंज्ञः। तत्र पुरुषः प्रधानम्। तस्योपकरणमन्यत्। तस्मात्पुरुषोऽधिष्ठानम्॥ इति। अनेन च सुश्रुतसंहितावाक्यजातेन स्पष्टमिदं प्रतीयते यद्विशेषावान्तरजातिनैरपेक्ष्येण पञ्चमहाभूतजीवात्मनोः समुदायात्मकं शरीरमात्रमेवास्य शास्त्रस्याधिष्ठानम्। तदेकोपयोगित्वाच्छास्त्रस्येति। अत एव न कुत्रापि जातिसापेक्षा चिकित्साऽत्र शास्त्रे दृश्यते। यदि च पिण्डगतविशेषमूला काचनावान्तरजातिः स्यात्तदा तादृशपिण्डानुसारेणैव चिकित्साऽप्युपदिश्येत। पिण्डसामान्येन चोपदेशान्नास्त्येव पिण्डवैशिष्ट्यं जातेर्मूलभूतमित्येव सिध्यति। तस्माज्जातिवादोऽयं न प्रामाणिकः। इति।

( जातिवादाक्षेपनिरासः )

तदेवं मनुष्यत्वव्याप्यावान्तरजातिवादो हि पञ्चधा प्रत्याख्यातुं शक्यः। तथाहि पिण्डगतभाववैचित्र्यं वा शीलवैचित्र्यं वा तत्तत्कार्यकरणयोग्यतावैचित्र्यं वा परिदृश्यमानं न केनाप्यपलपितुं शक्यम्। नहि प्रत्यक्षसिद्धस्य वस्तुनो बलवत्तरविरुद्धप्रमाणमन्तरा बाधः संभवति। न वा वस्तुतत्त्वमस्मदिच्छाधीनम्। येन प्रत्यक्षादिसिद्धमपि नाङ्गीकुर्मो वा नास्माकं संमतं वेति वक्तुं पार्येत। प्रमेयस्य प्रमाणाधीनत्वात्। यत्र त्विच्छैव प्रमाणम्, तत्र स्यान्नाम तदधीनं प्रमेयप्रामाण्यं क्षुत्तृडादिषु। न हि सर्वगोचरे वस्तुनि व्यक्तेरि-

च्छाया: प्रामाण्यं संभवति। एवं च पिण्डगतवैचित्र्यस्यापि नापलापो नास्तिकेनापि कर्तुमुचितः। तदिदं वैचित्र्यं कारणजन्यं वा निष्कारणं वा? कारणजन्यत्वेऽपि किं परम्परानुगतजातिमूलकं वा कारणान्तरजन्यं वा? तत्र जातिपदार्थस्य सर्वथाऽसंभवात्, अन्यस्यापि कारणस्य संभवात्, जातिसद्भावबोधकप्रमाणाभावात्, सत्त्वेऽपि तस्याप्रमाणत्वात् जात्यभावबोधकप्रमाणसद्भावाच्च न जातिवादः सिध्यतीति वक्तव्यं स्यात्। तच्च न घटते।

## ( जातिपदार्थासंभवपर्यालोचनम् )

तथाहि असंभवो नाम सत्त्वाभावः। तत्राभावप्रतीतिस्तावदनुपलब्ध्यैव भवति। यस्य पदार्थस्य येन प्रमाणेनोपलब्धियोग्यता, तत्प्रमाणप्रवृत्तावपि यद्युपलब्धिर्न स्यात्तदैव तदभावसिद्धिर्भवति। न येन केनापि प्रमाणेन। तथा सति सर्वथा सर्वपदार्थानामभावः सिध्येत्। नहि चक्षुषा गन्धो न गृह्यत इत्येतावता तस्यात्यन्ताभावः परिकल्पयितुं सांप्रतम्। न वा सर्वथाऽनुमेयानामुत्तोलनशक्त्यादीनां प्रत्यक्षेणाप्रतीतावपि तेषामभावो विज्ञानशास्त्रे केनापि स्वीक्रियते। एवमेव पितृत्वादीनां मातृवाक्यैकगम्यमानानां प्रत्यक्षादिभिरप्रत्ययेऽपि नाभावः कुत्रापि सिध्यति। तथा च योग्यप्रमाणप्रवृत्त्यनन्तरमेव यद्यनुपलब्धिस्तदैव तदभावः सिध्यतीत्यकामेनाप्यूरीकर्तव्यम्। अत एव यो भावो येनेन्द्रियेण गृह्यते तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते इति नियमस्तर्कशास्त्रे। तथा च जात्यभावसिद्ध्यर्थं प्रथमतो जातिग्रहणं किल केन प्रमाणेन भवतीति पर्यालोचनीयम्। तत्र यद्गता जातिस्तत्पदार्थग्रहणं येन प्रमाणेन तेनैव तज्जातिग्रहणं स्यात्। यथा मनुष्याश्वादिपदार्थाः प्रत्यक्षगोचरा इति तद्गतमनुष्यत्वादिकमपि प्रत्यक्षगोचरमेव। येषां त्वनुमानैकगम्यत्वं वा शब्दैकगम्यत्वं वा तद्गतजातीनामपि तदेकगम्यत्वमेव। तथा चेदमत्राऽऽदौ पर्यालोचनीयं यदिदं ब्राह्मणत्वादिकं सामान्यं तत्किं शरीरमात्रपर्याप्तं वा मनोमात्रवृत्ति वोभयवृत्ति वेति। तत्र प्रमाणपर्यालोचनायां तु वैचित्र्यान्यथानुपपत्त्या कल्प्यमानमिदं वैचित्र्यं यथोपपद्येत तथैव कल्पनीयं स्यात्। तत्र शीलं वा क्रियायोग्यता वा भावाभिव्यक्तिर्वा न शरीरमात्रपर्याप्तानि। शरीरप्रत्यक्षेऽपि तदनुपलम्भात्। नापि मनोमात्रपर्याप्तानि। तथा सति सुखदुःखादिवत्प्रत्यक्षत्वापत्तेः। ननु रत्यादिभावानां मनोमात्रवृत्तित्वात् मानसिकप्रत्यक्षविषयत्वं वर्तत एवेति चेत्सत्यम्। तथापि न भावत्वेनैव ब्राह्मणत्वादिकम्। किं तु भावाभिव्यक्तिवैचित्र्यकारणतया। तथा च भावाभिव्यक्तेः प्रत्यक्षत्वेऽपि तत्कारणस्याप्रत्यक्षत्वं स्यादेव। किंच भावाभिव्यक्तिरपि न शरीरनिरपेक्षा शरीरेष्वेव भावाभिव्यञ्जनात्। नापि केवलशरीरे। मृते व्यभिचारात्। तस्मादुभयगतेत्येव स्वीकर्तव्यं स्यात्। तत्र शरीरस्य प्रत्यक्षगोचरत्वेऽपि मनसः सुखदुःखाद्युपलब्धिसाधनत्वेनानुमानैकगम्यत्वादुभयवृत्तिशीलादीनामप्यप्रत्यक्षत्वं सिध्यति। यत्र तु शरीरमात्रवृत्त्याकृत्यादि, तत्र तद्ग्रहणेनैव तज्जातेरपि ग्रहणमिति सूपपन्ना

प्रत्यक्षगोचरता। न तथा प्रकृते। येन शीलादिग्रहणानन्तरमेव तद्ग्राहकप्रमाणेनैव जातिग्रहः स्यात्। अत एवोक्तम्—

आकृतिग्रहणा जातिः, लिङ्गानां च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या, गोत्रं च चरणैः सह॥

अपर आह—

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥

इति व्याकरणमहाभाष्ये। अत्र च "आकृतिग्रहणा जातिः" इत्यनेनावयवसंस्थानव्यङ्ग्यानां गोत्वादिजातीनां संग्रहेऽपि ब्राह्मणत्वादीनामुपदेशैकगम्यानामग्रहणाद्द्वितीयं लक्षण लिङ्गानां च न सर्वभाक् सकृदाख्यातनिर्ग्राह्येति। तृतीयं च पारिभाषिकं तच्छास्त्रैकोपयोगि। यत्तु "समानप्रसवा जातिः" इति न्यायशास्त्रीयं लक्षणम्। तदपि समानाकारबुद्धिजननात् सामान्यविषयमन्तरा तदसंभवात् सामान्यपदार्थसाधकं सूपपन्नमेव। इयान् विशेषो यदवयवसंस्थानद्वारैव कुत्रचित्समानाकारा प्रतीतिः। कुत्रचित्तदुपदेशानन्तरमेव। सर्वथा तु प्रतीतिः समानाकारता न व्यभिचरति। एवं च शीलादिवैचित्र्यान्यथानुपपत्त्या कल्प्यमाना ब्राह्मणत्वाद्यवान्तरजातिः प्रत्यक्षमात्रेणागृहीताऽप्युपदेशानन्तरं गृह्यमाणा नास्तीति न वक्तुं पार्यते। तस्मादस्ति संभव इति नाऽऽद्यो हेतुरुपपन्नो भवति।

## ( शीलादीनामन्यथोपपत्तिपर्यालोचनम् )

स्यादेतदेवं यदि शीलवैचित्र्यादीनामन्यथोपपत्तिर्न स्यात्। न चैवमस्ति। शीलस्य कर्मजन्यसंस्काररूपत्वात् कर्मणैवोपपत्तेः। तच्च कर्म न प्राग्भवीयं वा मातापितृशरीरनिष्पन्नं वा किंतु तत्तद्देहस्यैव। तथाहि—उत्पत्त्या खलु सर्वेषां मानवशरीराणां समानत्वेन समाजकार्यनिर्वाहार्थं कर्मविभागानुसारेण यत्र यस्य नियोगस्तदेव साम्यबुध्याऽनुष्ठीयमानं मनसि स्वानुरूपं संस्कारं जनयति। स च सातत्येन समुत्पद्यमानः शीलतां भजते। तथा च कर्मवैचित्र्यमूलक एव किल शीलभेदस्तस्य चाऽऽनुवंशिकत्वाभावेन समानप्रसवात्मकत्वं नास्तीति जातितो भेदः। अत एव युधिष्ठिराजगरसंवादस्य वा भृगुभरद्वाजसंवादस्य वोपपत्तिः। किं च विद्यासंस्कारोऽपि शीलमादधाति। अत एव "विद्या ददाति विनयं विनयाद्याति पात्रताम्" इति विद्याविनयादीनां कार्यकारणभावः। नो चेद्विद्याया अनुपयुक्ततैव प्रसज्येत। तेजसो दहनप्रकाशनादिवत् जात्यैव स्वयं विद्वत्तापत्तेः। यत्तु विद्यावतामपि क्वचिच्छीलवैचित्र्यं दृश्यते। तत्तु विद्याभेदादेव। तथाहि विद्या हि ज्ञानम्। तच्च सृष्टिगतपदार्थानामयथावन्न कस्यापि संपूर्णस्वरूपेण। स्वरूपाणामानन्त्यात्। एकस्यापि पुरुषस्य

ज्ञानकृतिसंबन्धादिमूलकानेकस्वरूपदर्शनात्। न हि माणवको बाह्याकारेण ज्ञातोऽपि संपूर्णतया ज्ञात इति वक्तुं पार्यते। अयं यत्र यत्र विषये विद्वान् समर्थश्च यस्य यादृशः संबन्धी यत्कार्य-कारी च। तानि सर्वाण्यपि माणवकस्य स्वरूपाणि। तत्र यादृशं स्वरूपं ज्ञातं स्यात्। तदनुगुणः संस्कारः समुत्पद्येत। ततश्च तादृशमेव शीलं स्यात्। एवमेव सर्वेषां भावानां गुणकर्मतः स्वरूपभे-दात् यस्य यादृशं ज्ञानं तदनुगुणसंस्कारवशात्तस्य शीलभेदः स्यादिति किमनुपपन्नम्। तस्माद्वृ-थैव जातिकल्पनेति।

अत्र ब्रूमः—प्रथमतः कर्मविभागानुसारेण कर्मणि नियोगः कर्तव्यश्चेत्तर्हि किं योग्यतासाम-र्थ्यादिकमनालोच्यैव कर्तव्यः, आहोस्वित्तत्पर्यालोचनपूर्वकमेव। नाऽऽद्यः, कैरप्यनङ्गीकारात्। तथा कृतेऽपि नियोगे सामर्थ्याभावेन कार्यस्यानिर्वाहे तस्मात्कार्यात्प्रच्युतेरन्यत्र नियोगस्य च सार्वजनीनानुभवसिद्धत्वात्। तस्माद्योग्यतासामर्थ्यादिकमवश्यमेवाऽऽलोचनीयम्। अत एव सैनिक-शिक्षणार्थमुच्चैस्त्वं, उरोविस्तारो मुखचर्या इत्यादिकमालोच्यते योग्यतालिङ्गमिदानीमपि। सा च योग्यता यदि पिण्डानां जन्मत एव समानता, तर्हि नाऽऽलोचनीया स्यात्। एवमन्यत्रापि। अत एवोपधाभिः शुद्धाशुद्धपरीक्षणं नीतिशास्त्रे विहितम्। एवं च योग्यतासामर्थ्यादिकमिदं जन्मत एव पिण्डगतमूरीकर्तव्यम्। न तु पिण्डोत्पत्त्यनन्तरं पिण्डकर्तृकक्रियाजन्यं वा तज्ज्ञानजन्यं वा। क्रियाकारणत्वाज्ज्ञानकारणत्वाच्च। कारणं हि कार्योत्पत्तेः पूर्वमेव सिद्धमपेक्ष्यते न तु कार्यानन्तरं तत्कार्यजन्यम्। तथा सति कार्यकारणभावविलोपप्रसङ्गात्। ज्ञानेऽपि तावत्तादृशी योग्यता जन्म-सिद्धेव परिदृश्यते। अत एव कस्यचनजडबुद्धित्वं तीव्रबुद्धित्वं च कस्यचन प्रतीयते। यत्तु ज्ञानतारतम्येन संस्कारतारतम्याच्छीलभेदादिकमुपपादितम्। तत्रेदमेव प्रष्टव्यं यज्ज्ञानतारतम्यमपीदं कथं भवन्मते सर्वेषां पिण्डानां सर्वथासमानत्वात्। तत्र वैचित्र्यहेतुर्वक्तव्यः। स च न स्वभावा-दन्यो भवितुमर्हति। स च स्वभावप्राक्तनकर्मवशाद्वा मातापित्रोः शोणितशुक्रवशाद्वेति वक्तव्यम्। तत्र प्राक्तनकर्मणः शरीरोत्पादकत्वेऽपि निमित्तकारणत्वात्तज्जन्यत्वकल्पनापेक्षया समवायि-कारणभूतशुक्रशोणितवशादित्येव वक्तुं समुचितम्। अत एवोक्तं मनुना—

पित्र्यं वा भजते शीलं मातुर्वोभयमेव च।
न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥ १०।५९ इति।

अत एव च समानविषयत्वेऽपि शीलभेदः समुपलभ्यते। किं च ज्ञानजन्यो वा कर्मजन्यो वा यः संस्कारः शरीरे आधीयते, न किं शरीरगतरसरक्तादिधातुषु वाऽन्यत्र वा यत्र कुत्रचित्। आद्ये शुक्रशोणितयोरपि पाकादन्नादिजन्यत्वाच्च तत्राऽऽधीयमानः संस्कारः परम्परया तदुत्पन्नपिण्डे-ष्वपि अनुगतः स्यात्। न च पाकादिना रसरक्तादिपरिवर्तनेन संस्कारोऽपि परिवर्ततेति वाच्यम्। तादृश-

पाके प्रमाणाभावात् । प्रत्युत आयुर्वेदोपदिष्टगर्भिण्याहारविहारादिविधानेन गर्भिणीभुक्तरसायनुस्यूतिरेव प्रतीयते। तस्माद्रसादिधातुगतसंस्काररस्तज्जन्यपिण्डेष्वपि अनुगतो भवतीति मन्तव्यम् । अन्त्ये तु किं तच्छरीरातिरिक्तं स्थानं यत्र स आधीयेत । शरीरगतशिराधमन्याद्यश्चेत्तेषामपि पिण्डेष्वनुवृत्तिः शास्त्रे निवेद्यते । अत एव—

"अङ्गादङ्गात्संभवति हृदयादधिजायते"

इति पुत्रवर्णनं संगच्छते। युक्तं चैतत्। शुक्रस्यैकत्र स्थितेरभावात्। संभोगकाले वातोष्मभ्यामवयवशः क्षरणस्याऽऽयुर्वेदे विधानात् । तदुक्तं सुश्रुतसंहितायाम्—

अथातो गर्भावक्रान्तिशारीरं व्याख्यास्यामः। यथोवाच भगवान् धन्वन्तरिः। सौम्यं शुक्रमार्तवमाग्नेयमितरेषामन्यत्र भूतानां सांनिध्यमस्त्यणुना विशेषेण । परस्परोपकारात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च । तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति । ततस्तेजोऽनिलसंनिपाताच्छुक्रं च्युतं योनिमभिप्रपद्यते संसृज्यते चार्तवेन । ततोऽग्नीषोमसंयोगात्संसृज्यमानो गर्भाशयमनुप्रपद्यते क्षेत्रज्ञः ॥ इत्यादि । शारीरस्थानम्—अ. ३ ॥ तत्रैव पुनः—

तत्र गर्भस्य पितृजमातृजरसजात्मजसत्त्वजसात्म्यजानि शरीरलक्षणानि व्याख्यास्यामः । गर्भस्य केशश्मश्रुलोमास्थिनखदन्तशिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि । मांसशोणितमेदोमज्जाहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि । शरीरोपचयो बलं वर्णः स्थितिर्हानिश्च रसजानि इन्द्रियाणि ज्ञानं विज्ञानमायुःसुखदुःखादिकं चाऽऽत्मजानि सत्त्वजान्युत्तरत्र वक्ष्यामः । वीर्यमारोग्यं बलवर्णौ मेधा च सात्म्यजानि ॥ ३३ । इति ।

तत्रैव चतुर्थाध्याये—

सप्तमी शुक्रधरा नाम । या सर्वप्राणिनां सर्वशरीरव्यापिनी ॥२०॥ भवन्ति चात्र—

यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा ।
शरीरेषु तथा शुक्रं नृणां विद्याद्भिषग्वरः ॥ इति ।

अनेन चेदं स्पष्टमवगम्यते यदिन्द्रियज्ञानविज्ञानायुःसुखदुःखादिभ्योऽन्यत्सर्वमपि बलवीर्यमेधादिकं मातृतः पितृतश्च संभवति। रससात्म्योरपि तच्छरीरघटकत्वान्न ततो भिन्नत्वम् । इन्द्रियादीनां तु प्राक्तनकर्मविपाकादेव देहिन उत्पत्तिः । एवं च शीलादिकमभिव्यज्यमानमिदं प्राक्तनकर्मफलमपि तदनुगुणदेह एवाभिव्यज्यत इत्यकामेनाप्यूरीकर्तव्यम् । ननु तर्हि कथ सज्जनानामपि दुर्जनाःसंतानाः, दुर्जनानां च सज्जना इति चेत्संकरादेवेति ज्ञेयम् । संकरस्वरूपं तु वक्ष्यते । तस्मादानुवंशिकपरम्परास्वीकारमन्तरा न वैचित्र्योपपत्तिरित्यगत्या समानप्रसवात्मकजातिरेवाङ्गीकर्तव्या समानतावादिभिरपि योगक्षेमानुकूलकर्म योग्यतापरीक्षणाय ।

( जातिसद्भावबोधकप्रमाणविचारः )

एतेन—जातिसद्भावबोधकप्रमाणाभावात्—इत्यपि निरस्तम् । प्रत्यक्षादिप्रमाणैर्जातीनां स्पष्टतयैव प्रतीतेः । यत्र ह्याकृतिव्यङ्ग्यत्वं जातीनाम्, तत्र त्वाकृतीनामिन्द्रियसंनिकर्षवशादेव ग्रहणाज्जातिग्रहणमपि भवतीत्यापामरमनुभवः । प्रथमप्रतीतिकालेऽपीतरपदार्थव्यावृत्तसंस्थानविशेषस्तु प्रत्यक्षेणैव गृह्यते । केवलं तद्वाचकशब्दानभिज्ञानान्न तत्र शब्दानुगम इति तस्य सविकल्पज्ञानार्थमयं गौरिति वृद्धोपदेशस्यापेक्षा । प्रत्यक्षज्ञानेऽपि सर्वत्र शब्दानुगमस्य शास्त्रसंमतत्वात् । अत एव—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते"

इति शास्त्रसिद्धान्तः साहित्यिकानाम् । एवमेव पिण्डगतगुणादिवैशिष्ट्यमपि प्रत्यक्षेणैव गृह्यते । परंतु तत्कारणीभूततदभिव्यञ्जकजातीनां ज्ञानं तु शास्त्रसंस्कारवासितान्तःकरणानामेव शास्त्रोपदेशाद्भवति । अन्यथा पश्वादिगतावान्तरजातिविशेषोऽयं गृह्यमाणः सर्वथाऽनुपपन्नः स्यात् । न हि ग्राम्यसूकरः, वन्यसूकरः, ग्रामकुक्कुटः, वन्यकुक्कुटः, ग्राम्यो मार्जारः, वन्यो मार्जारः, आरण्यको गौर्ग्राम्यो गौरित्यादिजातिविशेषा अश्वगतजातिविशेषा गजगतभद्रमन्द्रत्वादिजातिविशेषा धान्यगततण्डुलत्वव्याप्यजातिविशेषास्तथा रत्नमौक्तिकादिगतजातिविशेषाश्च प्रत्यक्षमात्रेण सर्वैर्ग्रहीतुं शक्याः । किं तु तत्तच्छास्त्रवासनावासितान्तःकरणानामेव । एवं च प्रत्यक्षप्रमाणस्य जातिसद्भावे सर्वसंमतत्वमकामेनाप्यूरीकर्तव्यम् । एवमनुमानमपि । रुचिबुध्यादितारतम्यं तदभिव्यञ्जकपिण्डतारतम्यपूर्वकं तदतिरिक्तकारणाजन्यत्वे सति कार्यत्वात् । पद्याकारमूलकजलाहरणादितारतम्यवत् । स्वल्पाकारघटेन स्वल्पजलाहरणमिव तत्तत्पिण्डैस्तदनुकूलमेव कार्यं संपद्यते । अतश्च कार्यतारतम्यमिदं कारणगतं शक्तितारतम्यमनुमापयति । एवमेव पिण्डतारतम्यं तत्कारणीभूतबीजतारतम्यपूर्वकं तदतिरिक्तकारणाजन्यत्वे सति कार्यत्वात् । बीजतारतम्यं च बीजपूर्वकमित्यनादिपरम्परायां न कश्चिद्दोषः । एवं च समानाकारप्रसवात्मकत्वं वा समानबुद्धिविषयत्वं वा सामान्यमिति जातिस्वरूपमपि सिध्यति । तथा शास्त्रमपि तत्र प्रमाणम् । तथा च मनुः—

यं तु कर्मणि यस्मिन् स न्ययुङ्क्त प्रथमं प्रभुः ।
स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः ॥ १।२८
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
यद्यस्य सोऽदधात्सर्गे तत्तस्य स्वयमाविशत् ॥ १।२९
यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये ।
स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः ॥ १।३०
लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् ॥ १।३१

तथा च श्रुतिरपि—

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ इति ।

तथाच वाजिब्राह्मणम्—

ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्न व्यभवत् । तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात्क्षत्रात्परं नास्ति । तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिरिति ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम् । य उ एनं हिनस्ति स्वां स योनिमृच्छति स पापीयान् भवति यथा श्रेयांसं हिंसित्वा ॥११॥

स नैव व्यभवत्स विशमसृजत । यान्येतानि देवजातानि गणेश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥१२॥

स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किं च ॥१३॥

स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मः । तस्माद्धर्मात्परं नास्ति । अथो अबलीयान् बलीयांसमाशंसते धर्मेण । यथा राज्ञा । एवम् । यो वै स धर्मः सत्यं वै तत् । तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति । धर्मं वा वदन्तं सत्यं वदतीति । एतद्ध्येवैतदुभयं भवति ॥१४॥

तदेतद्ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैवदेवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु । एताभ्यां हि रूपाभ्यां ब्रह्माभवत् ॥ इति ॥

एतेन च ब्राह्मणेन स्पष्टमेव प्रतीयते यच्चातुर्वर्ण्यसृष्टिरियं प्रथमतो देवेषु समुत्पादिता । ततश्च मनुष्येषु । अत एव तत्तज्जात्यभिमानिदेवतास्वरूपं पिण्डेष्वाचारादिपरिपालने तिष्ठति । तदभावे च निर्गच्छतीति शुद्धाद्वैतमतम् । द्रष्टव्या चात्र सुबोधिनी जिज्ञासुभिरिति नात्र प्रपञ्च्यते । तदिदं चातुर्वर्ण्यं जन्मसिद्धमित्यत्र संस्कारविधायकवचनान्येव प्रमाणानि यथा—

वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं शरदि वैश्यम् ।

मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलाधिकम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ २।३१
शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥ २।३२

इत्यादि । नहि जन्मसिद्धब्राह्मण्याद्यभावे विधीयमानोऽयं नामविशेषोऽन्यथोपपद्यते । एव-

मुपनयनगतकालपदार्थादिविशेषोऽपि। अधिकं चात्र शास्त्रीयवचनजातं प्रमाणमूतं तु सनातनधर्म-प्रदीपत एवावगन्तव्यं नेह प्रतन्यते।

तदेवं बीजपरम्परयैव तादृशशीलस्वभावादभिव्यञ्जकशरीरोत्पत्तिरिति सिद्धं चातुर्वर्ण्यं जन्मसिद्धम्। बीजेऽपि तादृशतारतम्यं त्वनादिसृष्टिपरम्परायामनादि। सादिपरम्परायां तु मूलकारणीभूतसत्त्वरजस्तमोमूलकमेव। अत एव सात्त्विकराजसतामसभेदेन प्रकृतिवैचित्र्यं, आयुर्वेदेऽपि जन्मसिद्धमेव प्रतिपाद्यते। सा च प्रकृतिर्यावच्छरीरं न परिवर्तते वा विनश्यति वेत्यपि तत्रैव। यथा चात्र सुश्रुतसंहिता—

द्वयोर्वा तिसृणां वापि प्रकृतीनां तु लक्षणैः।
ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिनिर्दिशेत् ॥७७॥
प्रकोपो वाऽन्यभावो वा क्षयो वा नोपजायते।
प्रकृतीनां स्वभावेन जायते तु गतायुषः ॥७८॥
विषजातो यथा कीटो न विषेण विपद्यते।
तद्वत्प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुम् ॥७९॥
प्रकृतिमिह नराणां भौतिकीं केचिदाहुः।
पवनदहनतोयैः कीर्तितास्तास्तु तिस्रः॥
स्थिरविपुलशरीरः पार्थिवश्च क्षमावान्।
शुचिरथ चिरजीवी नाभसः खैर्महद्भिः ॥८०॥

इति। यद्यप्यत्र पवनदहनतोयात्मकवातपित्तकफरूपत्रिविधधातुमूलास्तिस्रः प्रकृतयः प्रधानाः। केषांचिन्मते पार्थिवनाभसयोरप्याधिक्यम्। ततश्च एतासां संकरेण मिश्रा द्वंद्वजास्त्रिदोषजाश्च प्रकृतयो वैद्येन ज्ञातव्या इति प्रतिपाद्यते। न तु सात्त्विकराजसतामसरूपेण। तथापि तु स्वभावापरपर्यायप्रकृतीनां यावच्छरीरं क्षयो वाऽन्यथापरिवर्तनं वा सर्वथा निषिद्धमेव। एवं च प्रकृतीनां पितृतो मातृतो रसतः सात्म्यतश्च सृष्टिरित्यत्र विवादाभावेनागत्या जन्मसिद्धत्वं मातृपितृपरम्परागतत्वं च न विप्रतिपन्नम्। वातपित्तकफादिधातूनां च निखिलसृष्टिकारणीभूतसत्त्वरजस्तमोमूलकत्वात्सात्त्विकादिभेदोऽपि प्रकृतीनां संमत एवाऽऽयुर्वेदे। अत एव ब्रह्मकायाद्युपवर्णनं संगच्छते। तद्यथा—

शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनम्।
प्रियातिथित्वमिज्या च ब्रह्मकायस्य लक्षणम् ॥८१॥
माहात्म्यं शौर्यमाज्ञा च सततं शास्त्रबुद्धिता।
भृत्यानां भरणं चापि माहेन्द्रं कायलक्षणम् ॥८२॥

शीतसेवा सहिष्णुत्वं पैङ्गल्यं हरिकेशता ।
प्रियवादित्वमित्येतद्वारुणं कायलक्षणम् ॥८३॥
मध्यस्थता सहिष्णुत्वमर्थस्याऽऽगमसंचयौ ।
महाप्रसवशक्तित्वं कौबेरं कायलक्षणम् ॥८४॥
गन्धमाल्यप्रियत्वं च नृत्यवादित्रकामिता ।
विहारशीलता चैव गान्धर्वं कायलक्षणम् ॥८५॥
प्राप्तकारी दृढोत्थानो निर्भयः स्मृतिमान् शुचिः ।
रागमोहमदद्वेषैर्वर्जितो याम्यसत्त्ववान् ॥८६॥
जपव्रतब्रह्मचर्यहोमाध्ययनसेविनम् ।
ज्ञानविज्ञानसंपन्नमृषिसत्त्वं नरं विदुः ॥८७॥
सप्तैते सात्त्विकाः काया राजसांस्तु निबोध मे ।
ऐश्वर्यवन्तं रौद्रं च शूरं चण्डमसूयकम् ॥८८॥
एकाशिनं चौदरिकमासुरं सत्त्वमीदृशम् ।
तीक्ष्णमायासिनं भीरुं चण्डं मायान्वितं तथा ॥८९॥
विहाराचारचपलं सर्पसत्त्वं नरं विदुः ।
प्रवृद्धकामसेवी चाप्यजस्राहार एव च ॥९०॥
अमर्षणोऽनवस्थायी शाकुनं कायलक्षणम् ।
एकान्तग्राहिता रौद्रमसूया धर्मबाह्यता ॥९१॥
भृशमात्मस्तवश्चापि राक्षसं कायलक्षणम् ।
उच्छिष्टाहारता तैक्ष्ण्यं साहसप्रियता तथा ॥९२॥
स्त्रीलोलुपत्वं नैर्लज्ज्यं पैशाचं कायलक्षणम् ।
असंविभागमलसं दुःखशीलमसूयकम् ॥९३॥
लोलुपं चाप्यदातारं प्रेतसत्त्वं विदुर्नरम् ।
षडेते राजसाः कायास्तामसांस्तु निबोध मे ॥९४॥
दुर्मेधस्त्वं मन्दता च स्वप्ने मैथुननित्यता ।
निराकरिष्णुता चैव विज्ञेयाः पाशवा गुणाः ॥९५॥
अनवस्थितता मौर्ख्यं भीरुत्वं सलिलार्थिता ।
परस्पराभिमर्दश्च मात्स्यसत्त्वस्य लक्षणम् ॥९६॥

एकस्थानरतिर्नित्यमाहारे केवले रतः ।
वानस्पत्यो नरः सत्त्वधर्मकामार्थवर्जितः ॥९७॥
इत्येते त्रिविधाः कायाः प्रोक्ता वै तामसास्तथा ।
कायानां प्रकृतीर्ज्ञात्वा त्वनुरूपां क्रियां चरेत् ॥९८॥
महाप्रकृतयस्त्वेता रजःसत्त्वतमःकृताः ।
प्रोक्ता लक्षणतः सम्यक् भिषक् ताश्च विभावयेत् ॥९९॥

इति ॥ सुश्रुतसंहिता–शारीरस्थानं, अ. ४ ॥

अत्र च सात्त्विकराजसतामसभेदेन प्रकृतिस्त्रैविध्यमभ्युपेत्य तस्यावान्तरभेदाः प्रतिपादिता इति न तिरोहितम् । तत्रावान्तरभेदेषु सात्त्विक्याः सप्तविधत्वं राजस्याः षड्विधत्वं तामस्यास्त्रैविध्यमुपवर्णितम् । धर्मशास्त्रे तु सत्त्वरजस्तमोगुणानां परस्परोपकारकत्वात्परस्परानुप्रवेशाच्च गौणप्रधानभावमङ्गीकृत्य चातुर्विध्यमेवाभ्युपेतामिति तु विशेषः । कथमपि प्रकृतितत्त्वमिदं स्वभावापरपर्यायं पिण्डानुवृत्तिं न जहातीति नित्यमेकमनेकानुगतं सामान्यमिति जातिस्वरूपतां भजते । तदन्तरा तु नेदं प्रविभागवर्णनमुपपद्येत । तत्रायं सामान्यधर्मो न रसादिद्वारा पिण्डेष्वनुवर्तते, किं तु "अस्ति च सत्त्वमौपपादुकमित्याह भगवानात्रेयः" इति चरकसंहितावचनानुसारेण सत्त्वपदार्थगत एव पिण्डेष्वनुवर्तते इति गम्यते ॥ अत्रापि याम्यसत्त्ववान्, मत्स्यसत्त्वस्य लक्षणम्, सर्पसत्त्वं विदुर्नरम्, इत्यादिषु सत्त्वपदोपादानात् "सत्त्वजान्युत्तरत्र वक्ष्यामः" इति पूर्वं प्रतिज्ञानाच्च शरीरारम्भकसत्त्वपदार्थमूलक एवायं भेद इति सिध्यति । सत्त्वमिदमोजोरूपमिति श्रूयते वैद्यानां मुखात् । तथापि तद्विशेषविवेचने तु परिनिष्ठिता एव प्रमाणमिति नात्र विविच्यते । सर्वथा तु बीजरक्तपरम्परया केचन सामान्यधर्माः पिण्डेष्वनुगताः स्थिराश्चेति तु आयुर्वेदस्यापि संमतमेव । तादृशगुणकारणीभूतः कश्चन सामान्यधर्म एव जातिपदव्यपदेश्य इति सिध्यति जातिस्वरूपम् । गुणरूपत्वे वोपाधिरूपत्वे वा तादृशधर्मस्य व्यक्तिनाशादेव नाशसंभवेनान्यत्रानुगतैकप्रतीत्यसंभवात् । तस्माद्गोत्वाश्वत्वादिजातिवद्ब्राह्मणत्वादिकमपि जातिरूपं सिध्यति । तज्ज्ञानं तु तादृशजातिमच्छरीरजन्यत्वज्ञानानन्तरमेव भवति उपदेशसहकारेण । सृष्टेरनादित्वेन कल्पस्वीकारेऽपि "धाता यथापूर्वमकल्पयत्" इति वचनेन पूर्वसृष्टिसदृशसृष्टेरेवोत्पत्तिस्वीकारेण चोपदेशस्याप्यनादिसिद्धत्वान्न कश्चिद्दोषः । येन सृष्ट्यारम्भकाले कथं वा निर्णय इति शङ्का समुदियात् । यद्वा तत्तज्जात्यभिव्यञ्जकतत्तत्सत्त्वजन्यत्वमेव तादृशजातिज्ञाने हेतुः । तेन सृष्ट्यारम्भे आद्यब्राह्मणादिशरीरस्य तादृशशरीरजन्यत्वाभावेऽपि न क्षतिः । सत्त्वस्य प्रकृतौ लीनत्वेन सृष्ट्यारम्भे पुनरुद्बोधात् । सर्वेषां भावाना प्रकृतौ लयस्यैव कल्पपदार्थत्वात् । तदुपदेशश्च वेदोपदेशवदेवेश्वरवचनादिति न काऽ-

प्युपपत्तिः। एतत्सर्वमभिप्रेत्यैवोक्तं धर्मशास्त्रे "प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाच्च" व. स्मृ. ४।१. इति।

सेय प्रकृतिः संतानपरम्परायामपि तथैवानुवर्तते। अत एव—

सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते॥ १०।५

इति मानवीयम्।

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।
अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः॥ ४।९०

इति याज्ञवल्कीयं च वचनमुपपद्यते। अत एव यत्र न मातापित्रोर्जातिनिश्चयस्तत्र शीलादिभिरेव जातिनिश्चयोऽभिहितो मनुना—

वर्णापेतमविज्ञातं नरं कलुषयोनिजम्।
आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत्॥ १०।५७
अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम्॥ ५८
पित्र्यं वा भजते शीलं मातुर्वोभयमेव च।
न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति॥ ५९
कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसंकरः।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु॥ ६०

इति। अनेन चेदं स्पष्टमवगम्यते यच्छीलादिगुणानां संतानपरम्परयाऽनुवर्तनमेव शुद्धजातिगमकमिति।

( वर्णजातिविचारः )

ननु किं नाम वर्णत्वं जातित्वं च। यदि च वर्ण्यतेऽनेनेति करणव्युत्पत्त्या प्रवृत्तिनिमित्तपरत्वं वर्णशब्दस्याभिप्रेतम्, तदा तु शमदमादिगुणसमुदायस्य वा तत्कारणीभूतप्रकृत्यादीनां वा वर्णत्वं स्यात्। तथा च तस्य जातित्वं न स्यात्। नित्यमेकमनेकानुगतं सामान्यमिति जातिलक्षणे नित्यत्वाभिधानात्। गुणानां प्रकृत्यादेश्च शरीरारम्भकरसादिधातुजन्यत्वेन शरीरनाशेन विनाशित्वात्। न च तत्कारणीभूतौजोगतविशेषस्य वर्णत्वमिति वाच्यम्। ओजसोऽपि रसादिधातूपचयापचयद्वारोपचयापचयाभ्यामुत्पत्तिविनाशशालित्वात्तद्विशेषस्यापि तथात्वात्। ननु गुणानामनित्यत्वेऽपि प्रकृतेर्नानित्यत्वमायुर्वेदेऽपीति सैव वर्णपदवाच्या स्यादिति चेन्न। आयुर्वेदवचनस्य यावच्छरीरस्था-

यित्वपरत्वेन' नित्यैकप्रकृतिपरत्वाभावात् । किं चैवं वर्णत्वमिदं जातित्वानतिरिक्तमेवेति वर्णजातीनां पृथग्विवेकोऽयं धर्मशास्त्रीयः सर्वथाऽनुपपन्न एव स्यादिति चेन्न । गुणाभिव्यञ्जकप्रकृतेर्नित्यत्वेन संतानपरम्परानुगतत्वेन वर्णपदप्रवृत्तिनिमित्तत्वात् । तत्र च सामान्यलक्षणसद्भावेन जातित्वाङ्गीकारात् । न चैवं जात्यनतिरेको वर्णस्येति वाच्यम् । इष्टत्वात् । इयान् विशेषो यद्वर्णस्वरूपा जातिव्यापिका, इतरास्तु तद्व्याप्या इति । न हि सत्तासामान्यं जातिव्यापकमपि जातितां व्यभिचरति । अत एव " सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः " इत्यत्र सजातय इत्युक्तम् । अन्यथा सवर्णा इत्येवोच्येत । नन्वेवं ब्राह्मनिषादादिजातीनामपि वर्णत्वं स्यात् । इष्टापत्तौ तु ब्राह्मत्वव्याघातः, अन्यथा व्याप्यव्यापकभावव्यभिचार इति चेन्न । शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः, इति वचनात्तेषां शूद्रवर्णत्वस्वीकारात् । न चैवं तेषां समानप्रकृतिकत्वप्रसङ्गः । इष्टापत्तेः । तमोगुणप्राधान्यात्मकप्रकृतिसाम्येऽपि त्रिदोषजप्रकृतिवदवान्तरविशेषाज्जातिभेदोपपत्तेः । न चैवं ब्राह्मणादिवर्णेष्वप्यवान्तरजातिः स्यादिति वाच्यम् । सत्त्वादिगुणप्राधान्येन तत्रैकजातित्वस्वीकारात् । यदि च तत्रापि शमदमादिगुणानामुत्कटत्वानुत्कटत्वमूलको विशेषः स्यादित्याग्रहस्तर्हि तत्राप्यवान्तरजातिस्वीकारे न कापि हानिः । यदा चोत्कटत्वानुत्कटत्वे संस्कारतारतम्यमूलके तदा तु तत्र नावान्तरजातिविशेषा आश्रयणीयाः । केवलं संस्कारहीनत्वादेव तदुपपत्तेः । अत एव पञ्चगौडपञ्चद्राविडादीनां जातित्वे विप्रतिपत्तिरिदानीमपि । अत्र च देशाचारकुलाचारादिमूलकाः संस्कारभेदा एव विशेषतः कारणम् । संस्कारसातत्यादिनापि समानप्रकृत्युपलम्भात्तत्र जातिस्वीकारोऽपि युक्तः । नन्वेवं शूद्रत्वमेवैको वर्णो भवतु । ब्राह्मणत्वादीनां संस्कारसिद्धत्वात् । तथा चोक्तम्—

जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते ॥

इति । अत्र शूद्रशब्दस्तत्साम्यमेव वक्तीति शास्त्रसिद्धान्तः । तथा च शूद्राणां तु सधर्माण इत्यत्र साधर्म्याच्छूद्रवर्णत्ववदत्रापि साम्याच्छूद्रवर्णत्वमेवास्तु । पश्चात्संस्कारादिभिस्तत्तज्जात्याभिव्यक्तिः स्यादिति चेन्न । संस्कारो हि क्रियमाणो वस्तुतत्त्वमपेक्षते । " क्रिया हि द्रव्यं विनयति नाद्रव्यम् " इति न्यायात् । न हि प्रयत्नशतैरपि संक्रियमाणः पाषाणो वा मृत्पिण्डो वा रत्नवत्प्रकाशते । यो हि संस्कारेण वस्तुतत्त्वमप्यन्यथा कुर्यात् गर्दभमप्यश्वीकुर्यात् । अतश्च संस्कारैः सदेव वस्तुतत्त्वमाविर्भवतीति सत्कार्यवादानुसारेण संस्कारकरणात्प्रागेव वस्तुतत्त्वालोचनं सांप्रतम् । ततश्च वस्तुयोग्यतामन्तरा क्रियमाणः संस्कारो वन्ध्यासंस्कार इव विफलतामेवावगाहेतेति समाजरचनाचतुरैरपि संस्काराधानात्पूर्वं तादृशयोग्यताऽऽलोचनीया । सा च प्रकृतिसिद्धेवेति ब्राह्मणत्वादिकं जन्मत एव प्रकृतिसिद्धं भवति । अतश्च जन्मना जायते शूद्रः, शूद्रेण तु समस्तावयवावच्छेदे न जायते, इत्यादीनि वाक्यानि गौणशूद्रत्वमेव प्रतिपादयन्ति । शूद्राणां तु सधर्माणः, इत्यादीनि तु प्रकृतिसाधर्म्यं तमोगुणप्राधान्यमेवेति विशेषः । साधर्म्यं तु वस्तुतत्त्वमेव । गौणत्वं तु कुत्रचिद्गुणमूलकं

साधर्म्यान्तःपाति, कुत्रचिच्चारोपितमपि। न हि वात्सल्याल्लाल्यमानः पुत्रो मात्रा राजत्वेन व्यपदिश्यत इत्येतावता तत्र गुणमूलकं राजत्वम्। किं तु वात्सल्यादारोपितमेवावस्तुसत्। तथा ब्राह्मणादीनां संस्कारस्यावश्यकर्तव्यताप्रतिपादनाय प्रवर्तितोऽयं शूद्रशब्दो न प्रकृतिसाधर्म्यं प्रतिपादयितुमलमिति तदुत्तरं संस्कारोपदेशेन ज्ञायते। शूद्रादिषु तु न तादृशी काप्यनुपपत्तिरिति तत्र प्रकृतिसाधर्म्यं युक्तमेव। बाह्यत्वं तु राष्ट्रोपघातकत्वादेव रक्तपित्तशरीरवदिति ज्ञेयम्। अत एव—

यत्र त्वेते परिध्वंसाज्जायन्ते वर्णदूषकाः।
राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति॥ १०।६१

इति मनुनोक्तम्। एतादृशराष्ट्रोपघातकजातीनामेव बाह्यत्वाद्दस्युपदेन व्यवहारः। तथा चोक्तं मनुना—

मुखबाहूरुपज्जानां या लोके जातयो बहिः।
म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः॥ १०।४५

इति। अनेन चेदं स्पष्टमवगम्यते यत्तामसप्रकृतेरपेक्षया विकृततामसप्रकृतीनां कर्तव्यनिष्ठासंपादनासंभवेनातीवानर्थकारित्वमिति वारणीयः संकर इति।

अस्तु वा वा वर्णत्वमेव व्याप्यं जातित्वमेव व्यापकम्। एवमपि वर्णत्वमिदं सामान्यस्वरूपतां न जहातीति बीजरक्तद्वारैव संतानपरम्परयाऽनुवर्तमानं नित्यमेव। तथा च कर्तव्यनिष्ठानुकूलत्यागशमदमादिगुणाभिव्यञ्जकपिण्डानां राष्ट्रोपयोगित्वात् तदुत्पादकबीजरक्तयोःशुद्धेरप्यावश्यकत्वाज्जातिपरिरक्षणमिदमत्यावश्यकमेव।

## (राष्ट्रोपयुक्ततावादः)

ननु नेदानीतनजातिपरिरक्षणमिव सातत्येन जातीनां परिरक्षणस्याऽऽवश्यकता। जातीनां प्रकृतिरूपत्वात्प्रकृतेश्च नित्यत्वाद्यथाकथमपि व्यवहारस्वातन्त्र्येऽपि "समानशीलव्यसनेषु सख्यम्" इति न्यायेन संघभेदस्यापरिहार्यत्वात्ततश्च राष्ट्ररक्षणसंभवात्। नहि भारतादन्यत्र तादृशजातिपरिपालनमिति नैतावता तत्र राष्ट्रोपयोगिशौर्यौदार्यादिगुणप्रकृतिका जना न संभवन्ति। न वा तत्तद्राष्ट्राणां सर्वथा नाशः। एवं भारते प्रवर्तमानोऽयमाहारविवाहादिप्रतिबन्धोऽकिंचित्कर एवेति चेदंन्नोच्यते। स्यादेतदेवं यदि राष्ट्रोपयोगरूपःपदार्थो निर्णीतः स्यात्। येषां तु मते यथेच्छभोग्यसंपत्त्युत्पादनं तदुपभोगस्तत्संवर्धनं तत्परिपालनमित्येव राष्ट्रोपयोगः, तेषां मते तु न तादृशव्यवहारस्याऽऽवश्यकता। ये तु मानवाना जीवितसाफल्यं नोपभोगमात्रेण मन्यन्ते। किं तु भोगेच्छानिग्रहपूर्वकं परस्परानुग्रहद्वारा परमेशाराधनमेव राष्ट्रोपयोग इति मन्यन्ते। तेषां मते निर्ममत्वनिरहंकारत्वशमदमतपआदिसद्गुणविवृद्धिस्तद्द्वारा च मात्स्यन्यायनिवृत्तिरेव राष्ट्रेण संपादनीया। सा च

न प्रकृतिशुद्धिमन्तरेति तद्विघातकाचारप्रतिबन्ध आवश्यक एव । अत एव संस्काराः शास्त्रेषूपदिष्टाः संकरश्च परिहर्तव्य इत्युक्तम् । तत्र संस्काराणां योग्यताविर्भावकत्वाद्योग्यतामूलकत्वम् । एतेन आधुनिकी सर्वसाधारणी विद्यादानादिसंस्कारप्रवृत्तिरपि व्याख्याता । योग्यायोग्यतामपर्यालोच्य क्रियमाणो व्ययो राष्ट्रस्य द्रव्यहानिमेव कुर्यात् । तदपेक्षया यत्र यस्य योग्यता, तदनुगुणसंस्काराधानार्थं प्रयत्येत चेद्राष्ट्राभ्युदयपूर्वकं निःश्रेयसमपि संपद्येत । न वा योग्यतोपघातमूलकोऽसंतोषः स्यात् । सा चेयं योग्यता तदैव सुपरिचेया, यदा न संकरः । संकरे तु तत्परिचयस्याशक्यप्रायत्वेन सर्वसाधारणप्रयत्न आश्रयणीयो भवति । अतश्च संकरपरिहारार्थमेवाऽऽहारविहारशुद्धिरपेक्षणीया विशेषतो ब्राह्मणानां तन्मूलकत्वादितरेषां वर्णानाम् । स चायं संकरो न योनिद्वारैव भवति । किं तु अयोग्यविवाहादिद्वारा स्वकर्मत्यागेनान्नदोषेणाऽऽलस्येन च भवति । ते च रागद्वेषातिरेकात् । रागद्वेषातिरेकश्च प्रकृतिवैषम्यात् । ततश्च प्रकृतेः सात्म्यसंपादनमत्यावश्यकमेवेति आहारादीनामपि सात्त्विकत्वादिभेदोऽभिहितः शास्त्रे । तदुक्तं मनुना—

व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्मणां च त्यागेन जायते वर्णसंकरः ॥ १०।२४

अन्यच्च—

अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति ॥ ५।४

इति । व्यभिचारस्वरूपमवेद्यावेदनस्वरूपं च वक्ष्यते विवाहप्रकरणे । एतादृशाचारपरिपालनादेव श्रेष्ठप्रकृतिकत्वं ब्राह्मणानां पुरातनमासीदिदानीमपि दृश्यत एव तत्र तत्र क्वचित् । अत एव ब्राह्मणप्रकृतिं तत्कार्यं च प्रशंसति भगवान् मनुः—

सर्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः ।
मुखबाहूरुपज्जानां पृथक्कर्माण्यकल्पयत् ॥ १।८७
उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥९३॥
तं हि स्वयंभूः स्वादास्यात्तपस्तप्त्वाऽऽदितोऽसृजत् ।
हव्यकव्याभिवाह्याय सर्वस्यास्य च गुप्तये ॥९४॥
यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किं भूतमधिकं ततः ॥९५॥
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥९६॥

ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥९७॥
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥९८॥
ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।
ईश्वरः सर्वभूताना धर्मकोशस्य गुप्तये ॥९९॥
सर्वस्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम् ।
श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति ॥१००॥

अन्यच्च तत्रैव—

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः ।
ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम् ॥ ९।३२०
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ३२१

तत्रैवान्यत्र—

न ब्राह्मणो वेदयेत किंचिद्राजनि धर्मवित् ।
स्ववीर्येणैव ताञ्छिष्यान्मानवानपकारिणः ॥ ११।३१
स्ववीर्याद्राजवीर्याच्च स्ववीर्यं बलवत्तरम् ।
तस्मात्स्वेनैव वीर्येण निगृह्णीयादरीन् द्विजः ॥ ११।३२
श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन् ।
वाक्छस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः ॥ ११।३३ इति ।

एतेन ब्राह्मणप्रकृते.कार्यमिदमेव राष्ट्रोपयुक्त यदुन्मार्गगामिनो जगदुपघातकस्य मात्स्यन्याय-प्रवृत्तस्य शस्त्रास्त्रधारिण· क्षत्रस्यापि निग्रहेण जगत्स्वास्थ्यसपादनमिति गम्यते। तदर्थं च स्वाभाविकः—

" शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥

इति कर्मोपयोगी गुणसमुदाय एव गीताशास्त्रोक्तोऽत्यावश्यक इति तदभिव्यञ्जकप्रकृतिसरक्ष-णाय तादृशपिण्डान्तरोत्पादनाय च सस्काराचाराहारविहारादिकमपि शास्त्रविहितमवश्यमेव विधेयम्। युक्त चैतत् । शरीरोत्पादकरसादिधातूनामाहारपरिणामत्वात्, अन्त करणानुग्राहकत्वाच्च । अत एव " आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धेर्ध्रुवा स्मृति. " इत्युक्त छान्दोग्ये " अन्नमशित त्रेधा

विधीयते " इत्यारभ्याऽऽदशुङ्गः सन्मूलान्वेषणाय । छां. ६।४५ इत्यारभ्याऽऽसप्तमाध्यायपरिसमाप्ति । तस्माज्जातिवर्णविवेकपरिरक्षणं महते राष्ट्रोपकारायेति सिध्यति । इदानीं चैतादृशब्राह्मण्यशालिनो विरलविरला एवेत्येवैतादृशी दशा भारतीयानाम् । यदि च वस्तुसद्ब्राह्मण्यप्रादुर्भावः स्यान्न स्याज्जगति मात्स्यन्यायः । अत एव हि " ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमधर्माणाम् " इति शंकरभगवत्पादाचार्या आहुर्गीताभाष्यप्रस्तावे । एतादृशब्राह्मण्याभिव्यक्तिस्तु न बीजरक्तमात्रेण । किं तु—

> विद्या तपश्च योनिश्च त्रयं ब्राह्मण्यकारणम् ।
> विद्यातपोभ्यां हीनो यो जातिब्राह्मण एव सः ॥

इति वचनानुसारेण जातिसिद्धस्यापि ब्राह्मणस्य विद्यातपोभ्यामेव कार्यकारित्वं संस्कृतरत्नवदिति सिद्धं चातुर्वर्ण्यमिदं स्वभावसिद्धं नित्यमिति ।

## ( उपर्युक्तप्रमाणप्रामाण्यपर्यालोचनम् )

एतेन—सत्त्वेऽपि तस्याप्रमाणत्वादिति हेतुरपि व्याख्यातः । तथाहि—प्रमाणानां प्रामाण्यं हि स्वत एव गृह्यते । अप्रामाण्यं तु कारणदोषबाधकज्ञानाभ्यामिति तु भाट्टसिद्धान्तः प्रमाणप्रकरणे सूपपादित एव । जातिविषये तु प्रमाणानि उपर्युक्तान्येव । तदेतेषां प्रमाणानां कारणदोषबाधकज्ञानाभ्यामप्रामाण्यं वाच्यम् । न च तत्संभवति । प्रत्यक्षाद्युक्तप्रमाणेषु कारणदोषाभावात् । प्रत्यक्षे तु करणदोष एवाप्रामाण्ये कारणम् । पित्तजन्यपीतिमेव पीतत्वप्रकारकशङ्खज्ञानस्य । न चात्रास्ति ब्राह्मणत्वादिजातिज्ञाने तादृशः करणदोषः । ननु अत्रापि शास्त्रीयवासनावासितान्तःकरणानामेव प्रकृतजातिप्रत्यक्षस्य प्रतिपादनात्तादृशी वासनैव दोषः । भवति च वासनावशाज्ज्ञानभेदः । वनितालताप्रहारनिर्भर्त्सनादीनां रागवशात् प्रियत्वज्ञानदर्शनात् । एवं च रागवासनेव शास्त्रवासनापि पदार्थानामन्यथाभाने हेतुः स्यादिति चेन्न । शास्त्रीयत्वाद्वासनायाः । नहि शास्त्रं नाम किमपि यथेच्छपरिकल्पितपदार्थविवेचनम् । शासनात्मकत्वात् । शासनं च तदेव यदनिच्छायामपि शास्त्रबोधितक्रियायां प्रवर्तनम् । अत एव शास्त्रस्य प्रवर्तनात्मकत्वम् । तदुक्तम्—

सिद्धस्य बीजगतविशेषस्य च यावद्बाधदर्शनं प्रामाण्यमभ्युपेयमेव। अतश्च कारणदोषाभावान्नाप्रामाण्यं ब्राह्मणत्वादिजातिबोधकप्रमाणानाम्। बाधदर्शनं परमालोचनीयम्।

नन्वस्ति बाधोऽपि। तथाहि–पूर्वोक्तानुमानेन हि कारणगतविशेषसिद्धावपि तस्य नित्यत्वमनेकानुगतत्वं च न सिध्यति। न च समानपिण्डेषु समानगुणाभिव्यक्तिदर्शनात् तत्कारणमपि सामान्यरूपेणैकमेवोन्नेयम्। लाघवात्। अन्यथा परमाणुगतविशेषवदनेकविशेषकल्पने गौरवमेव स्यात्। एतेन–बिग् एन्–स्मॉल एन्–इत्याद्यनेकविशेषकल्पना परास्ताऽऽधुनिकानां पाश्चात्यानाम्। तदपेक्षया जातिपदार्थपरिकल्पनमेव श्रेय इति वाच्यम्। समानगुणाभिव्यक्तिलिङ्गकानुमानेन जातिपरिकल्पनाया बाह्येष्वपि पाश्चात्येषु तादृशगुणाभिव्यक्त्या जात्यभ्युपगमप्रसङ्गात्। औरसेष्वपि पिण्डेषु तादृशगुणाभिव्यक्तेरभावे विजातीयत्वप्रसङ्गात्। न चेष्टापत्तिः। धर्मशास्त्रीयनामकरणादिविधिव्याकोपात्। तस्मात्तत्तद्बीजगतविशेष एव व्यक्तिशः परिकल्पनीयः। तस्य चाऽऽहारविहारादिना वृद्धिह्रासनाशा अपि कल्पनीयाः। येनौरसेष्वपि तन्नाशान्नाशः, ह्रासाद्ध्रासो वृद्धेश्च वृद्धिः स्यात्। ननु धर्मशास्त्रस्य का गतिरिति चेदप्रामाण्यमेव। यत्तु वैद्यकशास्त्रम्। तदप्यामरणं प्रकृतिस्थैर्यमेवोपपादयति। न तु प्रकृतेः सतानपरम्परया सङ्क्रान्तिमपि। वातादिप्रकृतिकानामपि पित्तादिप्रकृतिकसंतानस्य बहुशो दर्शनात्। तस्मादकिंचित्करोऽयं जातिवादः। किं च गुणाभिव्यक्त्या जातिपरिकल्पनाया संकर एव जातिबाधकं प्रमाणम्। तथाहि—

> व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।
> रूपहानिरसंबन्धो जातिबाधकसंग्रहः॥

इति न्यायशास्त्रे जातिबाधकाः परिगणिताः। नहि व्यावर्तको धर्म इत्येतावता तस्य जातित्वम्। अनेकत्र समानानुगमाभावात्। गगनत्ववत्। न च घटाकाशमठाकाशाद्यनेकानुगमः। तेषामौपाधिकत्वेन उपाधिभेदादेव भेदान्न वस्तुसत्पदार्थभेदः। एवं च व्यक्तेरभेदोऽयं गगनत्वादिजातिबाधकः। तद्वत्संकरोऽपि जातिबाधकः। संकरश्च परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः। यथा मूर्तत्वभूतत्वयोः। भूतत्वात्यन्ताभाववति मनसि वर्तमानस्य मूर्तत्वस्य, मूर्तत्वात्यन्ताभाववति गगने वर्तमानस्य भूतत्वस्य पृथिव्यादिचतुष्टये समावेशान्न तयोर्जातित्वम्। एवमेव ब्राह्मणत्वात्यन्ताभाववति कस्मिंश्चिच्छुद्धक्षत्रियपिण्डे वर्तमानस्य क्षत्रियत्वस्य क्षत्रियत्वात्यन्ताभाववति कस्मिंश्चिच्छुद्धब्राह्मणपिण्डे वर्तमानस्य ब्राह्मणत्वस्य द्रोणाश्वत्थामादिषूभयगुणदर्शनादेकत्र समावेशोऽपि सुकल्पः। तथा च संकरापत्तिरेव तयोर्जातित्वे बाधिका स्यात्। एवमन्यत्र शूद्रसत्पुरुषेष्वपि ज्ञेयम्। अत एव बौद्धदर्शनादिषु जातिनिराकरणं महताऽऽटोपेन साधितम्। गोत्वाश्वत्वा-

द्विजातीनामपि तैर्निराकरणात्का वार्ता ब्राह्मणत्वादीनाम् । तच्छास्त्रवासनावासितान्तःकरणानां तु कुत्रापि कोऽपि जातिपदार्थो न भासते । समानाकारा बुद्धिस्तु विकल्पात्मिका । विकल्पस्तु शब्दज्ञानानुपाती वस्तुशून्य एव भवति । स चायं विकल्पः " एष वन्ध्यासुतो याति " " आसीद्दशरथो राजा " इत्यादौ वन्ध्यासुतदशरथादिपदेभ्यः प्रातिपदिकार्थत्वात्प्रथमाविभक्तिसिध्यर्थं सर्वेषामप्यभ्युपेय एव । तथा चार्थशून्यप्रतीतिजनकत्वाद्ब्राह्मणादिपदानां न तत्प्रतीतिबलादपि जातिसिद्धिः । अत एवाऽऽस्तिकेष्वपि प्राभाकरैर्धर्मशास्त्रोपपत्त्यर्थमनादौ संसारे जन्यजनकभावेन व्यवस्थितास्तावत्काश्चित्पुरुषसंततयः, तासामन्योन्यव्यतिरेकजाताः स्त्रीपुंसव्यक्तयो ब्राह्मणशब्दवाच्याः, अनिदंप्रथमतया च संततेः सर्वेषां तत्संततिमध्यपतितत्वात्सिध्यति ब्राह्मणपदवाच्यता, तेन संततिविशेषप्रभवत्वमेव ब्राह्मणशब्दप्रवृत्तावुपाधिः, इति ब्राह्मणत्वादिकमुपाधिरूपमिति सिद्धान्तितम् । समानाकारप्रतीतिस्तु जातिविषयतामेवावगाहते नोपाधिविषयतामित्यत्र तु न किमपि प्रमाणम् । संभवन्ति हि समानकार्यकारित्वात्समानाः प्रत्ययाः शब्दप्रयोगाश्च पाचकादिवत् । न हि राजनियुक्तेष्वधिकारिषु समानप्रत्ययेऽपि वा समानशब्दप्रयोगेऽपि वा न्यायाधीशत्वादिकं जातिरूपं केनापि मन्यते । एवमेव ब्राह्मणादिशब्दव्यवहारोऽप्युपपद्यते । तस्मात्पूर्वोक्तप्रमाणानामन्यथाप्युपपत्तेः, जातिबाधकसंकरात्, कार्यलिङ्गकानुमानेन विशेषसिद्धावपि जातेरसिद्धेः, गुणाभिव्यक्तेश्च शतशो व्यभिचारदर्शनात् म्लेच्छेष्वपि तथा जातिकल्पनापत्तेश्च न जन्मसिद्धा ब्राह्मण्यादिजातिः । इति चेदत्र ब्रूमः—

एवं च प्रतीतिरूपकार्योपपत्तये तदनुगुणपदार्थाभ्युपगमवत् प्रत्यक्षसिद्धगुण-स्वभाव-शक्ति-शीलादिवैचित्र्योपपत्तये परिकल्प्यमानं कारणमपि तदनुगुणं नित्यमेकमनेकानुगतमेव परिकल्पनीयं स्यात्। न च घटकारणीभूतानां दण्डादीनां नित्यत्वैकत्वानेकानुगतत्वाभावेऽपि यथा कारणता, तथात्राप्यस्त्विति वाच्यम्। तत्रापि दण्डादीनां व्यक्तिरूपेण कारणताभावात् दण्डत्वादिसामान्य-रूपेणैव कारणत्वात्। एवमेव सर्वत्र कार्यकारणभावः सामान्यरूपयोरेव न व्यक्तिस्वरूपयोः। व्यक्तिस्वरूपाणामानन्त्याद्भूतभविष्यद्व्यक्तीनां युगपज्ज्ञानासंभवात्कार्यकारणभावग्रहणासंभवप्रसङ्गात्। आधुनिकैरपि विज्ञानिभिरेतदवश्यमेव स्वीकार्यम्। अन्यथा एकस्या हायड्रोजनव्यक्तेर्विनाशे भूयश्च हायड्रोजनव्यक्त्युपलम्भे कार्यकारणभावसंदेहः स्यात्। तथा च विज्ञानशास्त्रं दत्तजलाञ्जलि स्यात्। अतश्च कार्यकारणभावनिर्धारणार्थं कार्यस्य कारणस्य च किमपि सामान्यरूपमनेकानुगत-मेकमेवास्तीत्यकामेनाप्यभ्युपेयम्। तदेवं सिध्यति सामान्यरूपं जात्यपरपर्यायं प्रतीतिप्रमाणकम्। एवं च शरीरगतगुणादिवैचित्र्योपपत्तये कल्प्यमानं कारणमपि सामान्यरूपमेकमेव सिध्यति। तच्च बीजपरम्परानुगतजातिं विना नान्यदिति विभिन्नगुणाद्यभिव्यञ्जका जातयोऽभ्युपेया ब्राह्मणत्वादयः तिर्यक्पशुष्वपि तथोपलब्धेः किं वाऽपराद्धं मानुषाणां तथोपलब्ध्या। येन पश्वादिष्ववान्तरजातयोऽ-भ्युपेया न मानुषेषु। उभयत्रोपलब्धेस्तुल्यत्वात्। न च तत्रास्त्याकारभेद इति वाच्यम्। काकपिक-योस्तदभावात्। न च शब्दभेदात्तथाऽभ्युपगमः। एवं तर्हि गुणभेदोऽपि जात्यभिव्यञ्जक इत्यप्यभ्युपेयम्। शब्दस्यापि गुणत्वात्। ये तु शब्दस्य द्रव्यत्वमभिमन्यन्ते। तेषामपि मते नावयवसंस्थानव्यङ्ग्यैव जातिरिति. त्ववश्यमेव काकपिकजातिभेदादभ्युपगन्तव्यम्। तथैवाश्वा-दिष्वपि। एवं च नाकारभेद एव जात्यभिव्यञ्जकः। किं तु स्वभावगुणभेदोऽपीति सिध्यति। तत्र स्वभावस्य पिण्डनिष्ठत्वेऽपि संतानपरम्परानुवृत्तिश्चेत्तदा जातिरूपत्वमेव। यदि च नानुवृत्तिस्तदा तु कदाचिदाहारादिना कृत्रिमोपायेन वा स्वभावप्रतिबन्धो वक्तव्यः। दृश्यते चेदानीं वन्यहिंस्रपशू-नामपि दण्डादिभयोत्पादनद्वारा मानुषकार्ये प्रवर्तनं व्यायामनाटके (सर्कस)। नैतावता तेषां स्वभावपरिवृत्तिः। अवसरे तदाविर्भावात्। प्रसिद्धं चेदमुदाहरणं प्रभुणेरामशास्त्रिणाम्। जलदाना-दिभृत्यकार्ये नियुक्ता अपीमे प्रसङ्गोपात्तापमानाविर्भूतमूलस्वभावाः शास्त्रित्वसंपन्ना न्यायाध्यक्षा भूत्वा स्वामिनेऽपि प्रसङ्गे देहदण्डमादिदिशुरिति। एवमेव ब्राह्मणक्षत्रियादयोऽपि योग्यावसरे स्वभावं नातिवर्तन्त इति न तिरोहितमैतिहासिकानाम्। विना युद्धं न क्षत्रियादयोऽपि शौर्या-दिकमाविर्भावयन्ति। अत एव चाऽऽभाणकः—

यस्मिन् त्वं हि कुले जातो गजस्तत्र न हन्यते। इति।

अस्तु वा स्वभावो जातेरन्यः। तथापि तु तस्य जात्यभिव्यञ्जकत्वं तु स्वीकार्यमेव। अन्यथा स्वभावानुगमानुपपत्तेः।

ये तु प्राभाकरा अनादिब्राह्मणसंततिप्रभवत्वमेवोपाधिरूपं ब्राह्मणशब्दप्रवृत्तिनिमित्तं न जातिरिति मन्यन्ते। तेषां मते गोत्वरूपा जातिरपि न सिध्येत्। सास्नादिमत्त्वरूपमेव तत्र गोशब्दप्रवृत्तिनिमित्तं स्यात्। एवमेव सर्वत्र जातिवाचकपदेषु कश्चिदुपाधिः परिकल्पयितुं शक्य इति तदधिगमस्तेषामपसिद्धान्त एव। यत्तु जातिरनन्यथासिद्धैव नोपाधिरित्यादि। तत्तु अन्यथासिद्धेः सर्वत्र सम्भवादेव निरस्तम्। अनुगतव्यवहारस्याब्राह्मणत्वेन क्षत्रियादिष्विव यथाकथमपि संभवादेव। तस्मादेतादृशोपाधिपरिकल्पनमिदमप्रामाणिकमेव। एवमप्यनादिब्राह्मणादिव्यक्तयस्तत्संतानपरम्परापि विशुद्धा त्ववश्यमेव स्वीकार्या भवतीति को वा विशेषो जात्यपेक्षया। सर्वथा तु जातिपदार्थोऽयं नापलपितुं शक्यः। ये तु बौद्धादयोऽपोहरूपेण सामान्यप्रतीतिमुपपादयन्ति। ते त्वाकरे विस्तरशो निरस्तास्तत एव वेदितव्याः। द्रष्टव्यश्चात्र भट्टवार्तिकस्थोऽपोहवादः। शालिकनाथमिश्रविरचिता प्रकरणपञ्चिका वा। विस्तरभयान्नात्र प्रपञ्च्यते। वार्तिकं तु जातिसमर्थकमत्र किंचिदुपस्थापयामः। तद्यथा—

जातिमेवाऽऽकृतिं प्राहुर्व्यक्तिराक्रियते यया।
सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम् ॥१॥
तन्निमित्तं च यत्किंचित्सामान्यं शब्दगोचरम्।
सर्व एवेच्छतीत्येवमविरोधोऽत्र वादिनाम् ॥२॥
सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका।
जायते द्व्यात्मकत्वेन विना सा च न सिध्यति ॥३॥
विशेषमात्र इष्टे च न सामान्यमतिर्भवेत्।
सामान्यमात्रबोधे च निर्निमित्ता विशेषधीः ॥४॥
न चाप्यन्यतरा भ्रान्तिरुपचारेण चेष्यते।
दृढत्वात्सर्वदा बुद्धेर्भ्रान्तिस्तद्भ्रान्तिवादिनाम् ॥५॥
मुख्ययोश्चाप्यदृष्टत्वान्नोपचारेण कल्पना।
बाह्यार्थविषयत्वं च बुद्धीनां प्रतिपादितम् ॥६॥
अन्योन्यापेक्षिता नित्यं स्यात्सामान्यविशेषयोः।
विशेषाणां च सामान्यं ते च तस्य भवन्ति हि ॥७॥
निर्विशेषं न सामान्यं भवेच्छशविषाणवत्।
सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि ॥८॥
तदनात्मकरूपेण हेतू वाच्याविमौ पुनः।
तेन नात्यन्तभेदोऽपि स्यात्सामान्यविशेषयोः ॥९॥

सामान्यबुद्धिशक्तत्वं विशेषेष्वेव यो वदेत् ।
विना वस्त्वन्तरात्तेन वाच्यशक्तिस्तु कीदृशी ॥१०॥
ग्राह्या किं वाप्यसंवोधा भिन्नैका वा तथैव च ।
गृह्यते यदि सैका च जातिरेवान्यशब्दिका ॥११॥
भवेन्निर्विषया बुद्धिर्यदि शक्तिर्न गृह्यते ।
न हि सद्भावमात्रेण विषयः कश्चिदिष्यते ॥१२॥
परस्परविभिन्नत्वाद्विशेषा नैकबुद्धिभिः ।
गृह्यन्ते विपर्यासत्त्वाच्छक्तिश्चैषां न विद्यते ॥१३॥
भिन्नत्वे वापि शक्तीनामेकबुद्धिर्न लभ्यते ।
विशेषशक्त्यभेदे च तावन्मात्रमतिर्भवेत् ॥१४॥
भिन्ना विशेषशक्तिभ्यः सर्वत्रानुगतापि च ।
प्रत्येकं समवेता च तस्माज्जातिरपीष्यताम् ॥१५॥
तेनाऽऽत्मधर्मो भेदानामेकधीविषयोऽस्ति नः ।
सामान्यमाकृतिर्जातिः शक्तिर्वा सोऽभिधीयताम् ॥१६॥ इत्यादि ।

एवं च व्यावृत्तानुवृत्तात्मकस्वरूपद्वयेऽनुवृत्तमेकमनेकानुगतमेव वस्तुस्वरूपमाकृतिजाति सामान्यशक्तिप्रभृतिभिरभिधीयते । तच्च नित्यमितिवार्तिकसिद्धान्तः । तेन शुक्लो गौः शुक्लोऽश्व इत्यादिगुणानुवृत्तावपि न गुणानां जातित्वमिति सिध्यति । कणभक्षाक्षचरणादिमते जात्याकृत्योर्भेदः । जातेर्नित्यत्वादाकृतेरवयवसंस्थानरूपत्वेनानित्यत्वाच्च । तथा चाक्षपादसूत्राणि—

व्यक्त्याकृतिजातयस्तु पदार्थः ॥ २।२।६८
व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ २।२।६९
आकृतिर्जातिलिङ्गाख्या ॥ २।२।७०
समानप्रसवात्मिका जातिः ॥ २।२।७१

इति । भट्टपादास्तु " जातिमेवाऽऽकृतिं प्राहुर्व्यक्तिराक्रियते यया " इत्युक्त्वा व्यक्तेरितरविजातीयपदार्थेभ्यः पृथग्ज्ञानसाधनीभूतं धर्ममेव सामान्यमाकृतिं जातिं वा मन्यन्ते । नैयायिकास्तु जातिलिङ्गप्रख्यापकावयवव्यूहस्यैवाऽऽकृतित्वं मत्वा तदभिव्यङ्ग्यामन्यामेव जातिमाहुः । यया बहुष्वितरेतरतो व्यावृत्तेषु समाना बुद्धिर्भवति तां जातिमिति सामान्यमिति च वर्णयन्ति । सामान्यजात्योर्भेदस्तु व्यापकत्वव्याप्यत्वाभ्यामेव । तथा च वात्स्यायनभाष्यम्—

या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु यया बहूनीतरेतरतो न व्यावर्तन्ते योऽर्थोऽ-

नेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम् । यच्च केषांचिद्भेदं कुतश्चिद्भेदं करोति तत्सामान्यविशेषो जातिरिति ॥

कथमपि भवतु । इदं तु तावदविप्रतिपन्नमेव यत्समानाकारा बुद्धिस्तावन्न सामान्यपदार्थमन्तरा भवितुमर्हति । यश्च सामान्यपदार्थः सैव जातिरिति । अन्यथा बुद्धेर्निरालम्बनत्वप्रसङ्गात् । निरालम्बा च बुद्धिश्चेति विप्रतिषिद्धम् । बुद्धेः सालम्बनत्वनियमात् । निराकृतश्चायं निरालम्बवादो वार्तिके प्रपञ्चेन भट्टपादैस्तत एव द्रष्टव्यः ।

यत्तु विकल्पात्मकत्वं सामान्यबुद्धेरिति । तत्र ब्रूमः । सत्यं "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" पा. यो. सू. १।९। इति तल्लक्षणम् । इमानि च तानि *भाष्योदाहृतानि वाक्यानि ।* चैतन्यं पुरुषस्य स्वरूपम्, निष्क्रियः पुरुषः, तिष्ठति बाणः स्थास्यति स्थितः, इति । प्रथमे पुरुषस्य चित्यात्मकत्वात्संबन्धाभावेऽपि संबन्धव्यपदेशो विकल्पात्मकः । द्वितीये पुरुषे क्रियाभावप्रतीतिरियमभावस्य सांख्यराद्धान्ते वस्तुधर्मत्वाभावेन विशेषणविशेष्यभावासंभवात् विकल्पात्मिका । एवमेव स्थाधातोः क्रियानिवृत्तिपरत्वेन गतिनिवृत्तेश्च प्रवृत्तिपूर्वकत्वस्य सर्वत्रानुभूयमानत्वादभावरूपत्वाच्च प्रवृत्तिपूर्वकत्वाभावेऽपि भावरूपेण तस्याः प्रतीतिरियं विकल्प एव । एवमेव अनुत्पत्तिधर्मा पुरुष इत्यत्राप्युत्पत्तिधर्मस्याभावमात्रमवगम्यते । न कश्चित्पुरुषान्वयी धर्मः । तथापि पुरुषान्वयिधर्मत्वेन प्रतीतिर्विकल्पख्यातिमेव गमयति । अत्रेदं वक्तव्यं यदि पदार्थ एव वस्तुतः कश्चन न स्यात्तद्वाचकपदमपि न संभवेत् । यदि च पदानामुच्चारणं भवति, तदा तद्वाच्यार्थोऽपि कश्चन स्यात् । अस्ति चितिपुरुषपदयोर्वाच्यार्थो जगति प्रसिद्धः, केवलं संबन्धपरिकल्पनमिदमाहार्यमपि बाधकालिकमिच्छाजन्यं भवितुमर्हति । नैतावता तत्र न बाधः । अत एव पश्चादिच्छापरिचयाभावे बाधः स्फुटं प्रतीयते कथमयमेवं वदतीति । एवमेव संबन्धादिपरिकल्पनमपीदं रजतमित्यादौ शुक्तिशकले रजतत्वसंबन्धपरिकल्पनमिव संभवत्येव । इयान् विशेषो यत्तत्र दोषादिना तत्परिकल्पनमत्र त्विच्छयेव वैचित्र्यार्थमिति । तेनैकत्र स्फुटा बाधप्रतीतिरपरत्र प्रतीयमानोऽपि बाधो न कार्यकारीति । नैतावता विपर्ययादन्यत्किमपि ज्ञानम् । एवमेव वन्ध्यासुतादावपि संबन्धपरिकल्पनमिदं वैचित्र्यार्थमेवेति तदङ्गीकृत्यैव तत्र प्रातिपदिकार्थत्वम् । यत्र तु "आसीद्राजा दशरथः" इत्यादौ दशरथादिव्यक्तीनामनुपस्थित्या शाब्दबोधविषयत्वाभावप्रसङ्गः । तथापि राजेत्यादिपदसांनिध्यान्मनुष्यव्यक्तित्वेनैव सामान्यत उपस्थितिरवश्यमेव स्वीकर्तव्या । सर्वत्रातीतव्यक्तावेवमेव प्रतीतिसंभवात् । तथा च तत्रापि न वस्तुशून्यत्वम् । तेन तत्प्रतीतिर्न विकल्पः । बाधाग्रहणाच्च न विपर्ययोऽपि । यद्वा शब्दोऽपि शब्दार्थ इति पक्षेण दशरथपदेन दशरथशब्द एवोपस्थीयते । तस्य च राजपदेन सार्कं वाच्यवाचकभावेनान्वय इति भवति दशरथपदवाच्यः कश्चन राजेति यथार्थ एव शाब्दबोधः । एवं

च विकल्पोदाहरणानां प्रायो विपर्ययविषयकत्वमेव। विकल्पत्वेन विभजनं तु सत्यपि बाधे वैचित्र्यावहवाक्यप्रयोगदर्शनादाहार्यज्ञानत्वेनैव। अन्यथा वापी काऽपि स्फुरति गगने इत्यादिप्रयोगाणामपि विकल्पविषयकत्वे रसाद्युद्बोधकार्यं तन्मूलकं चालंकारशास्त्रं सर्वमेव दत्तजलाञ्जलि स्यात्। तत्र यथा सत्यपि बाधे व्यङ्ग्यार्थप्रतीतिः प्रयोजनं वैचित्र्यावहत्वात्। तथाऽत्रापि वैचित्र्यावहत्वेन शुद्धपदार्थप्रतीतिर्वाऽन्यद्वा किमपि प्रयोजनमुन्नेतुं शक्यमेव भाषापण्डितैः। तस्माद्विकल्पस्य विपर्ययानतिरिक्तत्वमेव विपर्ययश्च मिथ्याज्ञानमतद्रूपप्रतिष्ठम्। स चान्यत्रान्यधर्मावभास एव। तत्र च यस्य यत्रावभासः। तयोरुभयोरपि वस्तुतः सत्त्वमपेक्ष्यते। प्रकृते च सामान्यस्यालीकरूपत्वे हि कथमन्यत्र विशेषेऽवभासः। तदगत्या सामान्यस्यापि वस्तुतः सत्ताऽभ्युपेया। सिद्धे च सामान्ये तस्य विशेषेऽवभासोऽयं बाधराहित्याद्यथार्थ एवेति नान्यत्रावभासः किं तु स्वाधिकरण एवेत्यप्यगत्या स्वीकर्तव्यमेव। तथा च यत्किमपि वस्तु सामान्यविशेषोभयरूपेण द्व्यात्मकमेव। अत एव च न सामान्यमन्तरा विशेषो विशेषमन्तरा च सामान्यमवभासते इति तादात्म्यमेव संबन्धः प्रतीतिबलादाश्रयणीयः। तादात्म्यं च भेदसहिष्णुरभेदः। तथा च भेदाभेदसिद्धिः। अस्तु वा तयोः समवायादिसंबन्धः। तथापि वस्तुनः सामान्यरूपं तु न केनाप्यपलपितुं शक्यम्। तत्सिद्धं सामान्यम्। प्रकृते तु शमदमक्षान्त्यैश्वर्यादिभावानां सर्वेषु शरीरेष्वनुपलम्भान्न सर्वशरीरसमानता। किं तु तत्रापि वैचित्र्यमस्तीत्यभ्युपेयम्। तच्च न कारणमन्तरेति स्वभावो वा प्रकृतिर्वा विशेषो वा कश्चन पदार्थः कारणत्वेन परिकल्पनीयः। दृष्टस्य कस्यापि कारणस्यासंभवात्। तस्य च यावत्तादृशशरीरमनुगतत्वमपि परिकल्पनीयम्। नो चेत्कारणत्वमेव न स्यादित्यगत्याऽनुगतत्वेन एकत्वेन च जातिपदार्थः सिध्यति। सर्वत्र हि कारणमनुगतैकरूपेणैव। न तु भिन्नरूपेण। कार्यकारणभावभङ्गप्रसङ्गात्। अस्य कारणरूपस्य तत्स्वरूपपरिचायकशास्त्रज्ञानमन्तरा न परिचय इति सर्वथा शास्त्रवासनावासितान्तःकरणानामेव जातिप्रतीतिर्न प्राकृतानाम्। आधुनिकविज्ञानशास्त्रदृष्ट्याऽप्यग्निशलाकाया अग्न्युत्पादनकारणत्वं गृह्यमाणमपि प्राकृतैर्न तत्रस्थं फास्फरसवस्तु परिचीयते। तज्ज्ञानं तु तच्छास्त्रज्ञानवतामेव। अत एव कृष्णवर्णगुलिकाग्रया यया कयापि शलाकया न वह्नेः प्रादुर्भावः। प्राकृतास्तु कथमपि प्रतार्यन्त एव। एवमेव आक्सिजनहेड्रोजनेत्यादिपदार्थानामपि तत्तत्कार्यकारणीभूतं स्वरूपं सामान्यैरपरिचितमपि विशेषज्ञैस्तच्छास्त्रवासनावासितैः परिचीयते। एवमेव जातिस्वरूपमिदं ब्राह्मणत्वादिकमपि तच्छास्त्रवासनावासितैस्तज्ज्ञैरेव परिचीयत इत्यभ्युपगमे न कापि हानिः। प्राकृतानां त्वापामरमिदमेव परिचायकं यद्ब्राह्मणमातापितृजन्यत्वमिति। तदपि न मिथ्या। आनुवंशिकपरम्परयैव शुक्रशोणितद्वारा जातेरभिव्यञ्जकशरीरोत्पादादिति सिद्धं जातिसामान्यम्।

यत्तु शास्त्रस्य मतभेदेन भिन्नत्वान्नैकं शास्त्रं प्रमाणं यद्वासनावासिता बुद्धिर्जातिं परिचिनुयादिति । तत्रेदं वक्तव्यं यत्प्रमाणप्रकरणेऽपौरुषेयत्वेन वेदानामेव प्रमाणभूतशास्त्रत्वादितरेषां लोकायतिकबुद्धादीनां शास्त्राणां यथाकथमपि प्रामाण्यासंभवान्न तद्वासनाया जातिप्रतीतिजनकत्वम् । स च प्रामाण्यप्रकारस्तत्रैव विवेचित इति कणेहत्याऽऽलोचनीयं तत्रैव । नात्र प्रपञ्च्यते ।

यत्तु संकरवर्णनम् । तत्र ब्रूमः—संकरस्य जातिबाधकत्वे प्रमाणाभावात् । न च परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशे विरोधाभावप्रसक्तौ व्यावर्तकस्वरूपभङ्गापत्तिरेव तत्र प्रमाणमिति वाच्यम् । परस्परात्यन्ताभावव्याप्ययोरेव विरोधात्तत्र व्यावर्तकत्वेन चारितार्थ्यात् । अन्यथा घटत्वादेरपि जातित्वं न स्यात् । मृत्तिकात्वात्यन्ताभाववति सुवर्णघटे घटत्वस्य घटत्वात्यन्ताभाववति पाषाणादौ च मृत्तिकात्वस्य सत्त्वेन तयोरेकत्र मृद्घटे समावेशात् । एतेन समाविष्टयोः परापरभावनियमोऽपि व्याख्यातः । पूर्वोक्तमृत्तिकात्वघटत्वयोर्व्यभिचारात् । अत एव सुवर्णत्वादिव्याप्यनानाघटत्वाजातिस्वीकारः, सर्वत्रानुगता प्रतीतिस्तु तादृशानुगतसंस्थानवत्त्वेनोपाधिना निर्वोढव्येत्यादिकल्पना प्रसरति । अन्ततो गत्वा संस्थानविशेषैकार्थसमवायिद्रव्यत्वरूपोपाधिरेव घटत्वमित्यभ्युपगमप्रसङ्गेन तु घटत्वादिजातिर्दत्तजलाञ्जलिरेव भवति । तदपेक्षया संकरस्य मा भूज्जातिबाधकत्वम् । व्यावृत्तिस्तु घटत्वादिभ्यः स्यादेव । अन्योन्याभावसमानाधिकरणयोः कयोश्चिद्धर्मयोरुपलब्धिबलादेकत्र कुत्रचित्समावेशस्वीकारेऽपि न सर्वत्र तदतिप्रसङ्गः । अनुपलब्ध्यैव तत्परिहारात् । उपर्युक्तकल्पनाप्रकारेण संकरस्य जातिबाधकत्वसमर्थनमुपाधिरूपं वा घटत्वमित्यादि न्यायकुसुमाञ्जलिप्रकाशे वर्धमानाचार्यैरुपनिबद्धम् । तथथा—

ननु समाविष्टयोर्जात्योर्न परापरभावनियमः । घटत्वसुवर्णत्वयोर्व्यभिचारात् । न चोपदर्शकपार्थिवभागवृत्त्येव घटत्वम् । न सुवर्णवृत्तीति वाच्यम् । एवमपि काष्ठपाषाणघटादावप्रतीकारात् । नापि मार्द एव घटे घटत्वम्, अन्यत्र तु तथाविधसंस्थानवत्त्वगुणयोगाद्गौणो घटव्यवहारः । मुख्यत्वस्य विनियन्तुमशक्यत्वात् । अथ संस्थानवृत्त्येव घटत्वं न द्रव्यवृत्तीति न तयोः समावेशः । संस्थानं हि अवयववृत्तिः संयोग एव । युक्तं चैतत् । कथमन्यथा तस्मिन्नेव सुवर्णे तत्संस्थानसत्त्वासत्त्वाभ्यां घटतदभावव्यवहार इति । तन्न । तत्राप्यन्यतरकर्मजत्वादिना संकरप्रसङ्गात् । गुणजातौ न सांकर्यदोष इति मतं निर्बीजमेव ।

अत्राऽऽहुः—सुवर्णत्वादिव्याप्यं नानैव घटत्वम् । न चैवं सुवर्णादिघटेष्वनुगतव्यवहारो न स्यात् । घटत्वस्य प्रत्येकविश्रान्तत्वेन व्यक्तिस्थानीयत्वादिति वाच्यम् । भिन्नजातीयघटेषु तादृशसंस्थानवत्त्वेनोपाधिना तथा व्यवहारात् । तर्हि संस्थानवृत्त्येवान्यतरकर्मजत्वादिव्याप्यं नानैव घटत्वमस्तु । समानात्वस्यावश्यकल्प्यत्वात् । एतावता संस्थानविशेषान्वयव्यतिरेकानुविधानमपि घटव्यवहारस्य संगच्छते । इति चेन्न । महान् नीलो घटश्चलतीति परिमाणरूपविशेषकर्मसामानाधि-

करण्यप्रतीतेः । न च संस्थाने गुणे तत्संभवः । यद्वा संस्थानविशेषैकार्थसमवायिद्रव्यत्वमुपाधिर्घटत्वम् । इति ।

अत्र च वर्धमानाचार्यैः संकरस्य जातिबाधकत्वमभ्युपेत्य नानाघटत्वजातिपरिकल्पनेन यथाकथंचित्संकरपरिहारः कृतः । अन्ततश्चोपाधिरूपं घटत्वमित्यपि प्रतिपादितम् । एतदपेक्षयाऽनुगतप्रतीतिबलादेकमेव घटत्वमभ्युपेत्य संकरस्य जातिबाधकत्वमेव निरसनीयम् । व्यावर्त्यभेदस्तु संभवत्येव । मृत्तिकात्वेन जलादिभ्यो घटत्वेन च पटादिभ्यश्च व्यावृत्तिसंभवात् । न च व्यावर्त्यभेदाद्विरोधः । परापरसामान्ययोर्व्यावर्त्यभेदेऽप्येकत्र समावेशात् ।

नन्वेवं ब्राह्मणत्वक्षत्रियत्वादीनामेकत्र समावेशाभ्युपगमेऽन्यतरनिर्णयासंभवेन जात्युद्देशेन विहितानां कर्मणां कथमनुष्ठानमुपपद्येत । नहि ब्राह्मणक्षत्रिययोरुभयोरपि नामकरणादिकमेकत्र संताने संभवति । परस्परविरोधात् । नहि पालाशदण्डविधाने खादिरदण्डानुविधानं कुत्रापि । तस्माज्जातीनामन्योन्यव्यावर्तकं किमपि स्वरूपमवश्यमेवाभ्युपेयम् । न च तज्जात्यतिरिक्तं संभवतीति जातिसंकरोऽयं जात्युन्मूलक एव स्यात् । अतश्च संकरान्न जातित्वं ब्राह्मणत्वादीनामिति चेन्न । जात्यभिव्यञ्जकस्वभाव-तज्जातीयमातापितृजन्यत्व-स्वाभाविकगुणाद्यन्यतमरूपेण जातिनिर्णयस्य संभवात् । यत्र हि न स्वभावपरिचयो नापि मातापितृजातिस्मरणं तत्र सत्यकामजाबालादौ सत्यादिगुणानां जातिपरिचायकत्वेऽपि यत्र द्रोणादिषु तज्जातीयमातापितृजन्यत्वं तत्र केवलगुणैरन्यजातिपरिकल्पनस्य बाध एवेति न वस्तुतो द्रोणादिषु जातिद्वयसमावेशप्रसङ्गः । एवं च संकरस्य जातिबाधकत्वस्वीकारेऽपि द्रोणादिषु तदभावान्न ब्राह्मणत्वादीनां जातित्वबाधः ।

ननु शमदमादिगुणानां स्वाभाविकत्वेनोपवर्ण्यमानत्वात्स्वभावसमनैयत्यमवश्यमेवाभ्युपेयम् । स्वभावस्य च जातिसमनैयत्यमिति गुणानामपि जात्यव्यभिचारेणैव वृत्तिरभ्युपगन्तव्या । तथा चोक्तम्—

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ १८।४१

अत्र शांकरभाष्यं यथा—

ब्राह्मणेति । ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशस्तेषां ब्राह्मणक्षत्रियविशां शूद्राणां च । शूद्राणामसमासकरणमेकजातित्वे सति वेदेऽनधिकारात् । हे परंतप । कर्माणि प्रविभक्तानि इतरेतरविभागेन व्यवस्थापितानि । केन स्वभावप्रभवैर्गुणैः । स्वभाव ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका माया । सा प्रभवो येषां गुणानां ते स्वभावप्रभवास्तैः शमादीनि कर्माणि प्रविभक्तानि ब्राह्मणादीनाम् । अथवा ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः कारणम् । तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं

स्वधर्मप्रवर्तकाविति च सर्वशास्त्रडिण्डिमः। नो चेत्स्वभावानुसारेण कर्मकरणे न कश्चित्प्रत्यवाय इति जगति पापासंभव एव स्यात्। अत एव—

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति॥

इति प्रकृतिप्राबल्यमाकर्ण्य सर्वेषां प्राणिनां तथा प्रवृत्तौ पापाभावमाशङ्कमानोऽर्जुन उवाच—

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥ इति॥

अस्योत्तरमुखेन श्रीभगवानुवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥ इति॥

एवं च तात्कालिकविषयसंपर्कजन्यरागद्वेषाक्रान्त्या क्रियमाणं कर्म न स्वाभाविकमिति न तेन वस्तुतः स्वभावपरिचयः। नो चेत्सर्वस्यापि गीताशास्त्रस्य जलाञ्जलिर्देयः स्यात्। ममताविष्टस्यार्जुनस्य युद्धोपरमपूर्वकभैक्ष्याचरणप्रवृत्त्या ब्राह्मणत्वसिद्धौ ब्राह्मणो मामकी तनूरिति प्रतिज्ञामनुसृत्य तेन सहैव भगवानपि तपोवनमेवावगाहेत न तु कदाचिदपि—

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत्॥

इत्युपदिशेत्। कृतश्चोपदेशः। तस्मादस्ति भेदो गुणानां कर्मणां च स्वाभाविकत्वनैमित्तिकत्वाभ्यामित्यकामेनाप्यूरीकर्तव्यम्। इदं सर्वमभिप्रेत्यैवोक्तं मधुसूदनसरस्वतीभिर्गीताव्याख्यायाम्–इयं च सर्वापि दैवी संपत् प्राग्व्याख्याता ब्राह्मणस्य स्वाभाविकीतरेषां तु नैमित्तिकीति न विरोधः, इति। किंच—

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥

इत्यादीनां वर्णधर्माणामापाततः सर्ववर्णेषूपलब्धावपि परस्परव्यावर्तकत्वेनासाधारणत्वं तु ब्राह्मणे क्षान्तेः क्षत्रिये ऐश्वर्यस्य वैश्ये ईहायाः शूद्रे तु मोहस्यैव दर्शनात्ततोऽपि स्वभावानुमानं

तन्मूलजातिज्ञानं च संभवति । अत एव "प्रशान्त्यैश्वर्येहामूढस्वभावदर्शनाच्चतुर्णाम्" इति किल शंकरभगवत्पादाचार्याः प्राहुः । एवं च स्वाभाविकी शान्तिर्ब्राह्मणस्यैव न क्षत्रियादीनाम्, स्वाभाविकमैश्वर्यप्रवणत्वं क्षत्रियस्यैव न ब्राह्मणादेः, स्वाभाविकी धनेहा धनेनासंतोषश्च वैश्यस्यैव नेतरेषाम्। शूद्रस्य तु परप्रत्ययनेयबुद्धित्वेन मूढत्वं स्वाभाविकमिति सिध्यति । यत्र तु शूद्रसत्पुरुषेषु वा म्लेच्छादिषु वा जातिं विनाऽप्युपर्युक्तगुणाभिव्यक्तिर्दृश्यते । तत्र तस्यानैमित्तिकत्वमेव । निमित्तं च कुत्रचिद्वासनासंक्रमः, क्वचित्सात्म्यसंपादनाभावः, कुत्रचिदन्नदोषः, कुत्र चागत्या क्रियमाणव्यवसायसंस्कारः, क्वचिदवेद्यावेदनम्, कदाचिद्योनिसंकरः, स्वकर्मत्यागश्च क्वचिदित्यादिशास्त्रपरिगणितमुन्नेयम् । अत एव—

> व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
> स्वकर्मणा च त्यागेन जायते वर्णसंकरः ॥

इत्यादि मनुरब्रवीत् ।

## ( वर्णसंकरकारणविवेचनम् )

एतेषां सर्वेषां मूलं तु कामक्रोधावेव। तत्र वासनासंक्रमस्तावदायुर्वेदे सुविशदमेव निरूपितः । यथा चात्र सुश्रुतसंहिता—

ऋतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी दिवास्वापाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गदन्तच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत् । किं कारणम् ?

दिवा स्वपन्त्याः स्वापशीलः, अञ्जनादन्धः, रोदनाद्विकृतदृष्टिः, स्नानानुलेपनाद्दुःखशीलः, तैलाभ्यङ्गात्कुष्ठी, नखापकर्तनात्कुनखी, प्रधावनाच्चञ्चलः, हसनाच्छ्यावदन्तौष्ठतालुजिह्वः, प्रलापी चातिकथनात्, अतिशब्दश्रवणाद्बधिरः, अवलेखनात्खलतिः, मारुतायाससेवनादुन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत्। दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतमभोजिनीं हविष्यं त्र्यहं च भर्तुः संरक्षेत् । ततः शुद्धस्नातां चतुर्थेऽहन्यहतवाससं समलंकृतां कृतमङ्गलस्वस्तिवाचनां भर्तारं दर्शयेत् । तत्कस्य हेतोः ?

> पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना ।
> तादृशं जनयेत्पुत्रं भर्तारं दर्शयेदतः ॥
> ततो विधानं पुत्रीयमुपाध्यायः समाचरेत् ।
> कर्मान्ते च क्रमं ह्येनमारभेत विचक्षणः ॥ इति ॥

अनेन च ऋतुस्नानानन्तरं यादृशपुरुषदर्शनं प्रथमं स्यात्तादृशो गर्भो भवतीति प्रतिपादनेन स्पष्टमिदं प्रतीयते यच्छायायन्त्रयन्त्रवत् स्त्रीयन्त्रमपि तत्काले प्रथमपुरुषच्छायामुपगृह्णातीति । तदिदं

छायाग्रहणं विना वासनां न संभवतीति वासनया परपुरुषप्रतिबिम्बं गर्भाशये संक्रामतीति वासनासंक्रमोऽयं संतानसंकरकारणं भवति । श्रूयते चेदानीमप्युत्तमाश्वसंपादनाय उत्तमाश्ववडवयोर्मध्ये जवनिकां प्रसार्य वडवया यस्य कस्यापि साधारणाश्वस्य संभोगेऽपि तदनन्तरं सत्वरमेव जवनिकाप्रसारणेनोत्तमाश्वदर्शने सति समुत्कृष्टाश्वो भवतीति सैन्यविभागप्रथा । सेयं वासनासंक्रान्तिः संभोगकाले गर्भधारणयोग्यकाले च भवति । तदानीं गर्भाशयस्य तद्योग्यत्वात् । तथा च प्रत्यक्षयोनिसंकराभावेऽपि वासनामात्रेण संतानसंकरो भवतीति सिध्यति । अत एवोक्तं मनुना—

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् ।
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे ॥ ९।२
सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ ९।५
इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥ ९।६
स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ।
स्वं च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥ ९।७
पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते ।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥ ९।८
यादृशं भजते हि स्त्री सुतं सूते तथाविधम् ।
तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः ॥ ९।९

इति । एतेन सात्म्यसंपादनाभावो व्यभिचारश्च व्याख्यातौ । तयोरपि संकरावहत्वात् । तत्र व्यभिचारे विजातीयबीजसंनिपातात्स्फुट एव संकरः । सात्म्यसंपादनाभावे तु गर्भस्याङ्गवैकल्यसंभवेन कार्यकारिशौर्यादिगुणाविर्भावप्रतिबन्धो भवति । तथा चोक्तं सुश्रुतसंहितायाम्—

दौहृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति । तस्मात्सा यद्यदिच्छेत्तत्तस्यै दापयेत् । लब्धदौहृदा हि वीर्यवन्तं चिरायुषं च पुत्रं जनयति ॥ इति । भवन्ति चात्र—

इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी ।
गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत् ॥
सा प्राप्तदौहृदा पुत्रं जनयेत गुणान्वितम् ।
अलब्धदौहृदा गर्भे लभेताऽऽत्मनि वा भयम् ॥ इति ।

तत्रैवान्यत्र—याद्दग्वर्णमाहारमुपसेवते गर्भिणी, ताद्दग्वर्णप्रसवा भवति इत्येके भाषन्ते। तत्र दृष्टि-भागमप्रतिपन्नं तेजो जात्यन्धं करोति, तदेव रक्तानुगतं रक्ताक्षम्, पित्तानुगतं पिङ्गाक्षम्, श्लेष्मानुगतं शुक्लाक्षं, वातानुगतं विकृताक्षम्, इति।

एतेन—दौहृदपरिपूर्त्या गर्भस्य सात्म्यसंपादनमिव स्त्रीपुरुषयोरपि बीजरक्तगर्भाशयान्नरसशुद्ध्यर्थं सात्म्यसंपादनमावश्यकमेवेति निश्चीयते। तदुक्तं सुश्रुते –

ध्रुवं चतुर्णां सांनिध्याद्गर्भः स्याद्विधिपूर्वकः।
ऋतुक्षेत्राम्बुबीजानां सामग्र्यादङ्कुरो यथा॥
एवं जाता रूपवन्तः सत्त्ववन्तश्चिरायुषः।
भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणो हिताः॥

इति। धर्मशास्त्रेऽप्यत एव दौहृदपूर्तिराहारादिभेदश्च सात्त्विकत्वादिना प्रतिपाद्यते। उच्यते च "सात्त्विकान्येव सेवेत पुमान् सत्त्वविवृद्धये" इत्यादि। इयान् विशेषो यत्र बीजसंकरस्तत्र कथमपि सजातीयगुणाविर्भावः कर्तुमशक्यः। बीजधर्मप्राबल्यात्। यत्र तु वासनासंकरो वा सात्म्यासंपादनप्रयुक्तः संकरो वा, तत्र जातकर्मादिसंस्कारैरायुर्वेदोक्तोपचारैर्वा प्रतिबन्धापनयनेन सजातीयगुणोत्कर्षो भवितुमर्हति। तदुक्तं मनुना—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥ २।२६॥
गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥ २।२७॥
स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥ २।२८॥

इति। एवं च शूद्रेषु ब्रह्मनिष्ठसंतानोत्पत्तिस्तावदसमत्पुत्रः सर्वश्रेष्ठो भवत्विति मातापितृ-वासनावशात् कुलपरम्परागतस्वधर्मपरिपालनजन्यसंस्कारवशाद्वा नात्यन्तमसंभाविनीति ज्ञायतेव। किंच वर्णविहितस्वधर्मपरिपालनेन यदि परमेशाराधनमेव कुत्रचित्कुले स्यात्तस्य तु परिपाकोऽयमेव यत्कुलोद्धार इति। अतश्च तत्र कुले तादृशसंतानसंभवोऽवश्यंभावी। तदुक्तं गीताशास्त्रे—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥

इति। एवं च शास्त्रविहितानां तत्तत्कर्मानुष्ठानां निष्कामानां तत्तत्कर्मभिरेव सर्वान्तर्यामिपरमेश्वरोपासकानां स्वकर्मपरिपाकवशात्सात्त्विकसंतानोत्पत्तिरिति कर्मपरिणामोऽयम्। यदर्थमिदं धर्माधर्मोपदेशकं शास्त्रम्।

ननु तमोगुणप्रधानशूद्रवर्णे बीजप्राबल्याद्यदि तमोगुणाभिव्यञ्जकमेव शरीरमुत्पद्यते, तर्हि कथं तत्र सत्त्वगुणाविर्भावः। कथं वा क्षत्रियादिष्वपि कामक्रोधादिमूलकविरुद्धवासनाभिव्यक्तिरिति चेन्न। सर्वेषां भावानां त्रिगुणात्मकत्वात्। तत्र स्वभावस्यैकैकगुणप्राधान्येऽप्युपसर्जनतयाऽन्येषामपि गुणानां सत्त्वेन कदाचिदन्नदोषाद्वा विषयसौन्दर्याद्वा स्वभावविरुद्धापि वासना भवितुमर्हति। तादृशवासनाकारणीभूतगुणस्य स्वभावे वर्तमानत्वात्। तथा च तादृशगुणाविर्भावेन तद्वासनोत्पत्तौ तत्संस्कारवशाज्जायमानं शरीरमपि तदनुगुणमेवेति संभवति विरुद्धा संततिः सर्वत्र। अत एव धर्माभिलाषुकैरिन्द्रियाणां प्रसङ्गः परित्याज्यः। तदुक्तं मनुना—

इन्द्रियाणां प्रसङ्गेन धर्मस्यासेवनेन च।
पापान् संयाति संसारानविद्वांसो नराधमाः॥ १२।५२
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति॥ २।९३

किंच वर्णजातिविहितकर्मणां स्वरूपतो भेदेऽपि नैतावता साधुत्वासाधुत्वे। अत एव सर्वेषामपि कर्मणां सात्त्विकराजसतामसभेदेन त्रैविध्यम्। यथा चात्र मनुः—

यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जति।
तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम्॥ १२।३५॥
येनास्मिन् कर्मणा लोके ख्यातिमिच्छति पुष्कलाम्।
न शोचयत्यसंपत्तौ तद्विज्ञेयं तु राजसम्॥ १२।३६॥
यत्सर्वेणेच्छति ज्ञातुं यन्न लज्जति चाऽऽचरन्।
येन तुष्यति चाऽऽत्माऽस्य तत्सत्त्वगुणलक्षणम्॥ १२।३७॥

इति। अत एव यस्य स्वधर्ममनुतिष्ठतो न लज्जा वा घृणा वा प्रत्युत परितोष एव। तस्य तत्स्वधर्माचरणं सात्त्विकमेवेति तादृशानुष्ठानशालिनः शूद्रस्यापि स्वधर्मपरिपाकादेव सात्त्विकसंतानप्रसूतिः। नैतावता तत्र स्वधर्मत्यागः। एवमेव ब्राह्मणकर्मानुष्ठानवतो ब्राह्मणस्य लज्जाख्यात्यादिकं चेद्राजसत्वात्तादृशप्रसूतिरपि स्यात्। येन जात्यपकर्षः। तथा च वासनासंक्रमः, सात्म्यसंपादनाभावश्च संकरकारणे सिध्यतः।

एवमेवान्नदोषः, अगत्या क्रियमाणव्यवसायसंस्कारः स्वकर्मत्यागश्च संकरकारणानि। तत्रान्नदोषो यथास्वकर्मत्यागश्च—

अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥ मनुः ५।४

अत्र विप्रघातो नाम विप्रत्वघातः । तत्रान्ने कुत्रचित् पदार्थानां दुष्टत्वम् । कुत्रचित्तत्संपादनव्यवसायस्य दुष्टत्वाद्दुष्टत्वम् । तत्राऽऽद्यं यथा---

लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च ॥

इति पञ्चमाध्यायगतपञ्चमश्लोकमारभ्य षड्विंशतिश्लोकपर्यन्तं मनुनाऽभिहितम् । एवं याज्ञवल्क्येनापि भक्ष्याभक्ष्यप्रकरणे । अत्र सर्वत्र मद्यमांसयोः परिहार एव कर्तव्यतयोपदिश्यते सत्यपि तदुपदेशे । तत्र मनुः—

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥ ५।४८ ॥
समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् ॥ ५।४९ ॥

इति । याज्ञवल्क्योऽपि--

सर्वान् कामानवाप्नोति हयमेधफलं तथा।
गृहेऽपि निवसन् विप्रो मुनिर्मांसविवर्जनात् ॥ ७।१८१ ॥

यद्यपि वेदविहितहिंसाया अभ्यनुज्ञानं दृश्यते धर्मशास्त्रे, तथापि "निवृत्तिस्तु महाफला" "कुर्याद्घृतपशुं सङ्गे कुर्यात्पिष्टपशुं तथा" इत्यादीनामपि दर्शनान्निवृत्तौ तात्पर्यमवसीयते । एवं च स्वरूपगतान्नदोषा अपि दुष्टसतानोत्पादका भवन्ति । "अन्नाद्रेतः, रेतसः प्रजाः" इति श्रुतेः । "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति श्रुतेश्च । व्यवसायमूलकान्नदोषा यथा--

नाश्रोत्रियतते यज्ञे ग्रामयाजिहुते तथा ।
स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मणः क्वचित् ॥

इति चतुर्थाध्याये पञ्चाधिकद्विशततमश्लोकमारभ्य पञ्चविंशाधिकद्विशततमश्लोकपर्यन्तं मनुनाऽभिहिताः ।

तत्र—

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मावकर्तिनः ॥

इति फलविपाकोपदर्शनानन्तरम्—

भुक्त्वाऽतोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् ॥
मत्या भुक्त्वाऽऽचरेत्कृच्छ्रं रेतोविण्मूत्रमेव च ॥

इति प्रायश्चित्तोपदेशादेतेषामन्नदोषमूलकसंकराणां न जातिपरिवर्तकत्वम् । प्रायश्चित्तपरिहार्यत्वात् । एवमेव संसर्गकालभावनिमित्तदुष्टान्नदोषोऽपि प्रायश्चित्तेन परिहार्य इति न तस्य जातिपरिवृत्तिकरत्वमिति ज्ञेयम् ।

## ( बीजसंस्कारस्य व्यवसायसंस्कारस्य जातिपरिवर्तकत्वम् )

बीजसंस्कारोऽमत्या क्रियमाणव्यवसायसंस्कारश्च बीजधर्मविनाशकत्वाज्जातिपरिवृत्तिकर एव । यथा चात्र याज्ञवल्क्यः —

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥ ९६ ॥

अत्र मिताक्षरा यथा—

सवर्णेभ्यः सवर्णासु जायन्त इत्यादिना वर्णप्राप्तौ कारणमुक्तम् । इदानीं कारणान्तरमाह जात्युत्कर्ष इति । जातयो मूर्धावसिक्तायास्तासामुत्कर्षो ब्राह्मणत्वादिजातिप्राप्तिर्जात्युत्कर्षो युगे जन्मनि सप्तमे पञ्चमे, अपिशब्दात् षष्ठे वा बोद्धव्यः । व्यवस्थितश्चायं विकल्पः । व्यवस्था च ब्राह्मणेन शूद्रायामुत्पादिता निषादी, सा ब्राह्मणेनोढा दुहितरं कांचिज्जनयति, सापि ब्राह्मणेनोढाऽन्यां जनयति, इत्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । ब्राह्मणेन वैश्यायामुत्पादिताऽम्बष्ठा । साप्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणं जनयति । मूर्धावसिक्ताप्यनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणमेव जनयति । एवमुग्रा क्षत्रियेणोढा माहिष्या च यथाक्रमं षष्ठं पञ्चमं च क्षत्रियं जनयति । तथा करणी वैश्योढा पञ्चमं वैश्यमित्येवमन्यत्राप्यूहनीयम् ।

किंच कर्मणां व्यत्यये वृत्त्यर्थानां कर्मणां विपर्यासे । यथा ब्राह्मणो मुख्यया वृत्त्याऽजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः । तेनाप्यजीवन् वैश्यवृत्त्या, तयाऽप्यजीवन् शूद्रवृत्त्या क्षत्रियोऽपि स्वकर्मणा जीवनार्थेनाजीवन् वैश्यवृत्त्या शूद्रवृत्त्या वा । वैश्योऽपि स्ववृत्त्याऽजीवन् शूद्रवृत्त्येति कर्मणां व्यत्ययः । तस्मिन् व्यत्यये सति यद्यापद्विमोक्षेऽपि तां वृत्तिं न परित्यजति तदा सप्तमे षष्ठे पञ्चमे वा जन्मनि साम्यं यस्य हीनवर्णस्य कर्मणा जीवति तत्समानजातित्वं भवति । तद्यथा—ब्राह्मणः शूद्रवृत्त्या जीवन् तामपरित्यजन् यदि पुत्रमुत्पादयति, सोऽपि तयैव वृत्त्या जीवन् पुत्रान्तरमित्थेव परम्परया सप्तमे जन्मनि शूद्रमेव जनयति । वैश्यवृत्त्या जीवन् षष्ठे वैश्यम् । क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियम् । क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रम् ।

वैश्यवृत्त्या जीवन् पञ्चमे वैश्यम्। वैश्योऽपि शूद्रवृत्त्या जीवंस्तामपरित्यजन् पुत्रपरम्परया पञ्चमे जन्मनि शूद्रं जनयतीति।

पूर्ववच्चाधरोत्तरम्। अस्यार्थः— वर्णसंकरेऽनुलोमजाः प्रतिलोमजाश्च दर्शिताः। संकीर्णसंकरजाताश्च रथकारनिदर्शनेन दर्शिताः। इदानीं वर्णसंकीर्णसंकरजाताः प्रदर्श्यन्ते। अधरे चोत्तरे चाधरोत्तरम्। यथा मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादितास्तथाऽम्बष्ठायां वैश्यशूद्राभ्यां निषाद्यां शूद्रेणोत्पादिता अधराः प्रतिलोमजास्तथा मूर्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणेनोत्पादिताः, माहिष्योग्रयोर्ब्राह्मणेन क्षत्रियेण चोत्पादिताः, करण्यां ब्राह्मणेन क्षत्रियेण वैश्येन चोत्पादिता उत्तरेऽनुलोमजाः। एवमन्यत्राप्यूह्यम्। एतदधरोत्तरं पूर्ववदसत्सदिति बोद्धव्यम्॥ इति।

अत्र हि प्रथमतो निकृष्टक्षेत्रेऽप्युप्तमुत्कृष्टं बीजं परम्परयोत्कृष्टत्वं बीजक्षेत्रयोरुभयोरपि संपादयतीति सिद्धान्तितम्। युक्तं चैतत्। सर्वत्र क्षेत्रेषु सर्वसस्यप्ररोहानुगुणतायामप्युप्यमानं बीजं स्वानुकूलरसादिकमेवोपगृह्णातीति सर्वविदितमेव। अत एव कालान्तरेण तादृशानुगुणरसविनाशात्तत्र तद्बीजवापमकृत्वाऽन्यदेव बीजमुप्यते कर्षकैः। अत एव तद्बीजपाकानर्हत्वं भवति क्षेत्रस्य। नैतावताऽन्यबीजानि न प्ररोहन्ति। एतन्मूलक एव शास्त्रे सापिण्ड्यविचारः। स च विवाहप्रकरणे निरूपयिष्यते। तथा चोत्कृष्टबीजद्वारा क्षेत्रस्य तत्संततेश्च समुत्कर्षः सिध्यति। एवं निकृष्टक्षेत्रेणोत्कृष्टबीजस्यापकर्षः। यथा चात्र गौतमः—

वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वाऽऽचार्याः॥ ४।१८

अत्र हरदत्तकृता मिताक्षरावृत्तिर्यथा—मन्यन्त इति वाक्यशेषः। तेषामेव सवर्णादीनामनुलोमजातानामुत्कर्षेण पितृद्वारा सप्तमपुरुषादुत्कृष्टवर्णान्तरप्राप्तिर्भवति। अपकर्षेण मातृद्वारा पञ्चमपुरुषादपकृष्टवर्णान्तरप्राप्तिर्भवति। तद्यथा—ब्राह्मणेनोढायां क्षत्रियायामुत्पादिता सवर्णा, सापि ब्राह्मणेनोढा तस्यामुत्पादिता चेत्येवमासप्तम्याः। सप्तमी तु ब्राह्मणेनोढा यदपत्यं सूते तद्ब्राह्मणजातीयमेव भवति। एवं ब्राह्मणेनोढायां क्षत्रियायामुत्पादितः पुत्रः सवर्णः। सोऽपि क्षत्रियामुद्वाह्य पुत्रमुत्पादयति। सोऽपि क्षत्रियामित्येवमापञ्चमात्। पञ्चमस्तु क्षत्रियायां यदपत्यमुत्पादयति तत्क्षत्रियजातीयमेव भवति। विकल्पस्त्वेवं चार्थः। तत्रापि वर्णान्तरगमने वृत्तस्वाध्यायबाहुल्ये सति पञ्चमेनोत्कृष्टं भवति। हीनवृत्त्या पञ्चमेनापकृष्टं भवति। एवं क्षत्रियस्य वैश्यायां वैश्यस्य शूद्रायामपि द्रष्टव्यम्। इति।

युक्तं चैतदपि। अपकृष्टक्षेत्रे हि निरूप्यमाणमप्युत्कृष्टं बीजं तदनुगुणरसाद्यभावान्नश्यत्येव। नहि गोधूमानर्हे क्षेत्रे उप्यमाना गोधूमाः प्ररोहन्ति। यथाकथंचित्प्ररूढा वा न बीजसदृशा भवन्तीति दृष्टचरमेव सर्वेषाम्। नचैवं समुत्कर्षो न स्यात्। क्षेत्रस्यापकृष्टत्वात्। नहि सवर्णा मूर्धावसि-

क्षापरपर्याया ब्राह्मणबीजादुत्कृष्टा। एवं च तस्यामुप्तं बीजं परम्परया सप्तमेऽपि कथं ब्राह्मणमुत्पादयेदिति वाच्यम्। तत्र प्रत्यावापं बीजस्य शुद्धत्वेन क्षेत्रस्य च प्रथमक्षेत्रापेक्षयोत्कृष्टत्वेन चोत्कृष्टसंततिजननात्। प्रत्यावापं बीजापकर्षे तु क्षेत्रस्योत्कृष्टत्वेऽप्यन्ततो बीजानुसारेणैव संतानस्य संभवात्।

इदमत्र तात्पर्यम्—बीजक्षेत्रयोर्मध्ये बीजस्य प्राधान्यं वा क्षेत्रस्येति जिज्ञासायां स्वानुकूलरसाद्याकर्षणशक्तिर्बीज एवेत्यङ्गीकर्तव्यम्। गोधूमादिसस्यबीजेषु तथा दर्शनात्। अङ्कुरोत्पत्तिस्तावद्बीजक्षेत्राभ्यामिति तु निर्विवादमेव। तत्र बीजवापानन्तरं प्ररोहार्थं क्रियमाणं रसाद्याकर्षणं किं बीजेन क्रियते वा क्षेत्रेण स्वयं बीजे रसाद्यावापः क्रियत इति विचिकित्सायां क्षेत्रस्य रसाद्यावापाङ्गीकारे सर्वविधरसावापप्रसङ्गः। रसस्यैकविधत्वाङ्गीकारस्त्वभ्युपगन्तुमशक्यः। नानाविधसस्यानुत्पादप्रसङ्गात्। अत आगत्या बीजेन तद्रसादेः स्वानुरूपत्वं संपाद्यत इत्यभ्युपगन्तव्यम्। तदपेक्षया नानाविधरसाभ्युपगम एव श्रेयान्। बीजस्य स्वानुगुणसंपादनव्यापारस्योभयत्र समानत्वात्। तथा च नानारसस्वीकारेऽपि बीजस्य स्वानुगुणरसाद्युपादानशक्त्या तादृश एव सस्यप्ररोहः संपद्यते। इतररसादीनां तु क्षेत्रे तादवस्थ्यमेव। अत एव " उप्यमानं मुहुः क्षेत्रं शनैर्निर्वीर्यतामियात् " इति सजातीयबीजस्य मुहुर्मुहुरावापे क्षेत्रस्य तदनुकूलरसाद्यपक्षयाच्छनैर्निर्वीर्यत्वं भवति। विजातीयसस्यवापे तु तदनुकूलरसादीनां सद्भावात्तदेव क्षेत्रं तत्सस्योत्पादसमर्थं भवति। एवं च रसाद्यपकर्षणमिदं बीजकर्मैवेति अभ्युपेयम्। तथा च क्षेत्रे उत्तरोत्तरमुत्कृष्टबीजावापे तदनुगुणरसादिसंपत्तिपरिपूर्णे च क्षेत्रस्योत्कृष्टसस्यसंपादनं युज्यत एव। अत एव क्षेत्रेषु सस्यानुगुणरसादिसंपादनाय तदपकर्षपरिहाराय च शुष्कपुरीषगोमयाद्यवकरः प्रतिवर्षं प्रायः क्रियमाणो दृश्यते। एवं यत्र स्त्रीक्षेत्रे उत्कृष्टबीजावापद्वारा संकीर्णसंकरजन्य उत्कृष्टसस्यप्ररोहानुकूलः संस्कारः पौनःपुन्येन स्यात्तत्रोप्यमानं बीजमुत्कृष्टमेव संतानं जनयेदित्यत्र न विशयलेशोऽपि। अत एवोत्कर्षाय क्षेत्रं संकीर्णसंकरजमेव योग्यमित्युपदर्शितम्। अपकर्षाय च बीजं संकीर्णसंकरजमित्युक्तम्। तत्र क्षेत्रस्यापकृष्टबीजप्ररोहानुगुण्येन बीजापकर्षे शनैः शनैरपकृष्टसंतानस्यैव जननात्। एतत्सर्वमभिप्रेत्यैवोक्तं मनुना—

क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान्।
बीजक्षेत्रसमायोगात्संभवः सर्वदेहिनाम्॥
विशिष्टं कुत्रचिद्बीजं स्त्रीयोनिस्त्वेव कुत्रचित्।
उभयं तु समं यत्र सा प्रसूतिः प्रशस्यते॥
बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते।
सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता॥
यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते।
तादृग्रोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितं गुणैः॥

इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते ।
नच योनिगुणान् कांश्चिद्वीजं पुष्यति पुष्टिषु ॥
भूमावप्येककेदारे कालोप्तानि कृषीवलैः ।
नानारूपाणि जायन्ते वीजानीह स्वभावतः ॥
व्रीहयः शालयो मुद्गास्तिला माषास्तथा यवाः ।
यथा वीजं प्ररोहन्ति लशुनानीक्षवस्तथा ॥
अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते ।
उप्यते यद्धि यद्वीजं तत्तदेव प्ररोहति ॥ ९।३३-४० इति ।

नैतावता क्षेत्रस्याकिंचित्करत्वं सर्वथा सर्वत्र साम्य वा । वीजानुगुणरसाद्याधारत्वेन वैषम्यात् । नहि सर्वक्षेत्रेषु सर्वसस्यसमुद्भवः । ऊषरे गोधूमादीनामनुत्पादात् । नविारकल्माषादीनां बहुलोत्पादाच्च । तस्मात् क्षेत्रस्यापि तारतम्यमवश्यमेवाभ्युपेयम् । तदुक्तं मनुना—

तस्मात्प्रज्ञेन विनीतेन ज्ञानविज्ञानवेदिना ।
आयुष्कामेन वप्तव्यं न जातु परयोषिति ॥
अत्र गाथा वायुगीताः कीर्तयन्ति पुराविदः ।
यथा वीजं न वप्तव्यं पुंसा परपरिग्रहे ॥
नश्यतीषुर्यथा विद्धः खे विध्यमनुविध्यतः ।
तथा नश्यति वै क्षिप्रं वीजं परपरिग्रहे ॥ ९।४१—४३

इति । एतेन क्षेत्रगतगुणावगुणसंक्रमसंभवात्तस्य च ज्ञातुमशक्यत्वात्कदापि परपरिग्रहे केनापि बीजावापो न कर्तव्य इति फलति । परिग्रहस्य परत्वं च विजातीयत्वेनापि । एतत्सर्वमपि दुर्ज्ञेयं प्राकृतानाम् । शास्त्रैकदृष्टीनां सुज्ञेयमपि राजदण्डाधीनप्रचारत्वान्न व्यवहार्यम् । अत एव "उभयं तु समं यत्र सा प्रसूतिः प्रशस्यते" इति सिद्धान्तो मनुनोक्तः । कलिकाले तु कामक्रोधाद्याक्रान्तत्वेन मानवानामेतादृशानुलोमविवाह एव वर्जनीयत्वेनोक्तः "सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि" इति कलिवर्ज्यप्रकरणे । स्थितस्य गतिश्चिन्तनीयेतिन्यायेन समाजव्यवहारार्थमिदमत्र विवेचितम् ।

इदमप्यत्रापरमालोचनीयं परिनिष्ठितैः । निषादेन निषाद्यामापञ्चमाज्जातोऽपहन्ति शूद्रताम् । १३ । तमुपनयेत् षष्ठ याजयेत् ॥ १४ ॥ सप्तमो विकृतबीजः समबीजः सम इत्येकेषां संज्ञाः क्रमेण निपतन्ति ॥ १५ ॥प्र.प्र.अ. ८॥ इति बौधायनस्मृतिवचनानां किंवा तात्पर्यमिति ।

"जात्युत्कर्षो युगे ज्ञेयः" इति याज्ञवल्क्यवचनस्य तात्पर्यं तु लीसततिः पुनश्च ब्राह्मणात्पन्नस्वर्णन्दा चेत्तन्नमे षष्ठे सप्तमे च शूद्रादिजातिपरिवृत्तिं विदधातीति मिताक्षराकारादयस्ता-

त्पर्यमाहुः । पुंसंततेस्तु तावत्पर्यन्तं जातायाः स्त्रीसंततेरपि ब्राह्मणाद्यनूढायाश्च न जातिपरिवर्तकत्वम् । एवमेव मन्वादिवचनानाम्—

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते ।
अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात् ॥ ६४
शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।
क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैवच ॥ ६५
अनार्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया ।
ब्राह्मण्यामप्यनार्यात्तु श्रेयस्त्वं केति चेद्भवेत् ॥ ६६
जातो नार्यामनार्यायामार्यादार्यो भवेद्गुणैः ।
जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः ॥ ६७
तावुभावप्यसंस्कार्याविति धर्मो व्यवस्थितः ।
वैगुण्याज्जन्मनः पूर्व उत्तरः प्रतिलोमतः ॥ ६८
सुबीजं चैव सुक्षेत्रे जातं संपद्यते यथा ।
तथाऽऽर्याज्जात आर्यायां सर्वं संस्कारमर्हति ॥ ६९
बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः ।
बीजक्षेत्रे तथैवान्ये तत्रेयं तु व्यवस्थितिः ॥ ७०
अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति ।
अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत् ॥ ७१
यस्माद्बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन् ।
पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते ॥ ७२
अनार्यमार्यकर्माणमार्यं चानार्यकर्मिणम् ।
संप्रधार्याब्रवीद्धाता न समौ नासमाविति ॥ ७३

इत्यादीनां तात्पर्यं मन्वर्थमुक्तावलीकारादय आहुः । मनुना बीजप्राशस्त्यवर्णनात् । एवमपि शूद्रायां ब्राह्मणाज्जात इत्यत्र समुत्पत्तिमात्रपरत्वेऽपि जातशब्दस्य स्त्रीसंततिपरत्वं यदुपवर्णितं पूर्वोक्तनिबन्धकारैः । तत्र किमपि न प्रमाणमुपन्यस्तम् । यदि च सामर्थ्यमात्रमेव तत्र प्रमाणम् । तदा तु सामर्थ्यस्य ज्ञातुमशक्यत्वात्कार्यानुसारेण कल्पनीयत्वाच्च बीजप्रभावेण तिर्यग्जानामृष्यशृङ्गादीनामेकस्मिन्नेव जन्मन्युत्कर्षस्य मनुनाऽप्यभिहितत्वाच्च पूर्वोक्तबौधायनस्मृत्येकवाक्यतया व्याख्याने उत्कृष्टवर्णेन सह विवाहसंबन्धाभावेऽपि स्त्रीपुंसोरुभयोरपि स्वजातिविवाहेनापि पञ्चमे सप्तमे षष्ठे वा

मन्वर्थमुक्तावलीकारमतानुसारेण कुत्रचित्तृतीयेऽपि तादृशबीजसमुत्कर्षाज्जात्युत्कर्षो भवतीति सिद्धान्तः सिध्यति। ननु बौधायनवचनानुसारेणोक्तस्मृतिनयनापेक्षया बौधायनवचनस्यैव निबन्धकारोक्ततात्पर्यपरत्वं किं न स्यादिति चेन्न। निषादेन निषाद्यामापञ्चमाज्जातोऽपहन्ति शूद्रतामिति सजातीयसंततेः स्पष्टमेवोपवर्णनात् विशेषविषयकत्वात्तदनुसारेण सामान्यवचनानां नेयत्वात्। नहि मनुवचने वा याज्ञवल्क्यवचने वा विशेषसंततेरुल्लेखः। तस्माद्बीजप्रभावात्पारशवोऽपि निषादापरनामा स्वजातीयकन्यासमुद्वाहेन सप्तमे ब्राह्मणतामुपैति। एवं मूर्धावसिक्तापरनामा सवर्णः पञ्चमे, अम्बष्ठश्च षष्ठे जातिपरिवृत्तिं लभत इति सिध्यति। एवं माहिष्योग्रयोः करणस्य च क्रमेण क्षात्रियत्वं वैश्यत्वं च स्यात्। आनुलोम्येन बीजप्रभावात्। यदि तु यावद्वचनं वाचनिकमिति न्यायेन बौधायनवचनं निषादपरमिति तद्विषयकत्वेनैव सामान्यवचनबाधस्तर्हि तु ब्राह्मणबीजस्यैव तादृशः प्रभाव इत्यपि कल्पना न प्रसरेत्। ततश्च ऋष्यशृङ्गादीनामुत्कर्षप्रतिपादनपरमनुवचनस्यासांगत्यापत्तिः। न चार्थवादः। बीजक्षेत्रप्राशस्त्यविप्रतिपत्तिं प्रदर्श्य निर्णायकत्वेनोपनिबन्धनादर्थवादत्वेऽपि बीजप्राशस्त्यतात्पर्यपरत्वस्य प्रत्याख्यातुमशक्यत्वात्। अत एव मनुना पारशवादीनामसंस्कार्यत्वबोधनेऽपि बौधायनेन "तमुपनयेत्, षष्ठं याजयेत्" इत्युक्तम्। एवं च निबन्धकाराणां व्याख्यानमिदं बौधायनवचनविरुद्धमिति प्रतिभाति। यद्वा विच्छिन्नानुपलब्धस्मृतीनां यानि वचनानि निबन्धेषूपसंगृहीतानि, तान्येव प्रमाणानि शिष्टादृतत्वात्। नान्यानि शिष्टैरनादृतत्वादिति मतानुसारेणाऽऽनन्दाश्रममुद्रितस्मृतिसमुच्चये मुद्रिता बौधायनस्मृतिर्वा तद्वचनं वोपर्युक्तं न प्रमाणमिति मन्येत। एवमपि बीजमेके प्रशंसन्तीति मनूक्तविप्रतिपत्तिस्तन्निर्णयश्चैवमेव ज्ञापयति यद्बीजप्रभावोऽयमलौकिक इति। ततोऽपि मनुवचनस्य याज्ञवल्क्यवचनस्य च प्रतीयमानार्थपरित्यागे स्त्रीसंततिग्रहणे च किमपि प्रमाणं न पश्यामः। ननु दुष्टबीजस्य दुष्टक्षेत्रस्य च परस्परसजातीयस्यापि तथैव संबन्धानुवृत्तौ दोषपरिहारानुपपत्तिरेव तत्र प्रमाणमिति चेन्न। क्षेत्रदोषस्याकिंचित्करत्वात्। अत एवानन्तरजातानां सवर्णत्वं सदृशत्वं वा सर्वत्राभ्युपेतम्। नहि क्षेत्रजान् गुणान् वा दोषान् वा बीजमुपगृह्णाति। अत एव "न च योनिगुणान् कांश्चिद्बीजं पुष्यति पुष्टिषु" ९।३७ इति मनुनोक्तम्। तादृशदोषस्तु सदाचरणादीनामपि व्यपोहितुं शक्य इति शक्योपपत्तिः। अतश्चात्र विषये परिनिष्ठिता एव प्रमाणाम्। सर्वथा त्विदानीमेतादृशानुलोमविवाहानां कलिवर्ज्यप्रकरणेन निषिद्धत्वान्नेदानीं काप्यनुपपत्तिः। केवलमिदानीं ये ब्रह्मक्षत्रत्वादिनाऽऽत्मान व्यपदिशन्ति, तेषां परम्परोपलब्धौ निर्णयावसरे च कदाचिदुत्कृष्टबीजपरम्परायां कथं वा निर्णयः स्यादित्येवोपयुक्तता। अस्तु। प्रकृतमनुसरामः। अत्र च संकरजातीनां जातित्वं वर्तते न वा, निषादेन निषाद्यां जातो निषाद एव वेत्यादिकं विचारणीयमुपरिष्टाद्विचारयिष्यते। सर्वथा तु उत्कृष्टबीजवशान्निकृष्टक्षेत्रवशाद्वा जातीनामुत्कर्षापकर्षौ पूर्वमाचार्याभिमतौ तु न विप्रतिपन्नम्।

## ( व्यवसायसंस्कारस्य जातिपरिवर्तकत्वम् )

एवमेव व्यवसायसंस्कारस्य जातिपरिवर्तकत्वं "व्यत्यये कर्मणां साम्यम्" इत्यनेन प्रतिपाद्यते। एतच्च मिताक्षरायां स्पष्टमेव विवेचितम्। एवं चाऽऽपद्धर्मत्वेन परिगृहीतस्य शास्त्रोक्तव्यवसायस्याप्यापत्परिहारेऽपि त्यागाभावे तथैव संतानपरम्परया तदनुवृत्तौ सप्तमे पञ्चमे षष्ठे वा तत्संततिस्तज्जातीयतां प्रतिपद्यते। अत्र च व्यवसायातिरिक्तस्वीयजातिधर्माणामपि त्यागोऽत्यावश्यकः। अन्यथा तु न जातिपरिवर्तनम्। जातिबोधकगुणाभिव्यञ्जकसंस्काराणां स्वधर्मानुष्ठानेनाव्याहतत्वात्। नहि केवलं व्यवसायसंस्कारः सति स्वजातीयगुणाभिव्यञ्जकसंस्कारे बीजशक्तिमपोहितुं शक्नोति। कर्मसंस्कारस्य प्राबल्यात्। ननु व्यवसायोऽपि कर्मैव। अतस्तज्जन्यसंस्कारस्य न प्राबल्यमितरेषां तु तदिति कथं निर्णीयत इति चेत्सत्यम्। तथापि मनुना——

जप्येनैव तु संसिध्येद्ब्राह्मणो नियतव्रतः।<br>
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥<br>
एकाक्षरं परं ब्रह्म प्राणायामः परं तपः।<br>
सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते॥ २।८७-८८

इत्यादिवचनैर्गायत्र्याः परमपावनत्वबोधनात् सर्वसंस्कारदोषापहारकत्वं ज्ञायते। कर्मजन्यसंस्काराणामातिसूक्ष्मत्वेन बलाबलनिर्णयस्तु शास्त्रैकगम्य इति तु प्रमाणविचारे पूर्वमेव सिद्धान्तितम्। तस्मात्सत्यपि व्यवसायव्यत्यये यदि द्विजानां गायत्रीजपपरत्वं स्यात्तदा तु न बीजधर्महानिरतस्तत्र न जातिपरिवृत्तिः। यत्र तु स्वजातीयधर्माणां सर्वथा त्यागेन व्यवसायव्यत्यय आपन्निरसनेऽप्यनुवर्तमानो दृश्येत। तत्र त्ववश्यमेव जातिपरिवृत्तिरङ्गीकार्या। दृश्यते चेदानीं प्रौढाविवाहादिप्रवृत्तिः प्रायः सर्वत्र। स चायं विवाहः प्रायः क्षत्रियादिषु स्वयंवरादिना रूढो विशेषत इदानीं सर्वैराश्रीयते। मन्ये परम्परया राजसेवादिना राजान्नभक्षणादपि तादृशी वासना प्रादुर्भवेत्। एवमेवान्येष्वपि क्षत्रियधर्मादिषु प्रवृत्तिरुपलभ्यमाना ब्राह्मणानां व्यवसायसंस्कारजन्या भवितुमर्हति। तत्र यत्र परम्परायां तदतिरिक्तधर्मत्यागोऽपि संजातश्चेत्तज्जातीयत्वमपि सुतरां स्यादेव।

अत्रेदं विचारणीयं यत्कर्मजन्यसंस्काराणां सर्वथा बीजधर्मविनाशकत्वं संभवति न वा? संभवेऽप्यन्यधर्मोत्पादकत्वं स्यान्नवा? अत्र च कर्मजन्यसंस्काराणां सूक्ष्मत्वेन शास्त्रैकगम्यत्वात् शास्त्रानुसारेणैव निर्णयः कर्तव्यो भवति। मनुष्यकृतसृष्टौ तु मनुष्यकृतकर्मजन्यः संस्कारः प्रमाणान्तरैरपि प्रत्येतुं शक्यः। ईशसृष्टौ तु तादृशज्ञानासंभवान्न प्रतीतिः। न हि मनुष्येण वायुद्वयमिश्रणाज्जलमुत्पाद्यते, विचित्रपदार्थद्वयसंयोगाद्वा रङ्गवैचित्र्यं प्रदर्श्यत इत्येतावता परमेशसृष्टिगतं सर्वमपि जलं वा रङ्गवैचित्र्यं वा तथैव समुत्पन्नमित्यनुगमे प्रमाणमस्ति। न हि प्रतिवर्षं जायमाना वृष्टिर्वायुद्वयसंयोगमात्रेणैव। अतिवृष्ट्यनावृष्ट्यादेरपि दर्शनात्। न हि

अतिवृष्टिकाले वायुद्रव्याधिक्यं वा तत्संयोगाधिक्यं वा । अनावृष्टिकाले च तदभाव इति कल्पयितुं शक्यम् । तथा सति तयोरपि कादाचित्कत्वेन कारणान्तरकल्पनाप्रसक्तौ तत्रैव द्रव्यान्तरसंयोगासंयोगयोः परिकल्पनप्रसङ्गात् । पृथक्करणादिना घटकद्रव्यसिद्धावपि तदुत्पादककारणस्यासिद्धत्वात् । न हि घटकद्रव्यसाधारण्येन सर्वेषां पदार्थानामुपपत्तिः । वायुद्रवघनत्वादिना सर्वसाधारण्येऽपि वैचित्र्यस्यानुपपन्नत्वात् । नहि गोधूमशर्करानुनादिसंयोगसाधारण्येन गोधूमजन्यपदार्थानामेकरूपता वा एकक्रियाकारित्वं वोपलभ्यते । पदार्थान्तरदर्शनात् – वृष्यत्ववल्यत्वादिना रूक्षादिना च भिन्नकार्यकारित्वात् । एवमेव रङ्गवैचित्र्येऽपि । नहि वयं हरितालमनःशिलासंयोगादिना हरितरङ्गमुत्पादयाम इति सर्वत्र वृक्षपर्णपत्र्यादिपूपलभ्यमानो हरितवर्णस्तथैव समुत्पन्न इति कोऽपि प्रेक्षावानाचक्षीत । तस्मादस्ति किञ्चित्कारणान्तरमिति कल्पनीयम् । तच्चान्ततो गत्वा कर्मजन्यपरिणाम एवेत्यगत्योरीकरणीयम् । तस्य च दुर्विज्ञेयत्वाच्छास्त्रैकगम्यत्वमेव । तथा च कर्मजन्यसंस्कारेण बीजधर्मपरिवर्तनापरिवर्तने अपि शास्त्रैकगम्ये इत्यगत्या स्वीकर्तव्यम् । शास्त्रस्यानतिशङ्क्यत्वात् । तत्त्यागे जगदान्ध्यप्रसङ्गात् । पशुवदापाततः प्रतीत्यैव प्रवृत्तिनिवृत्ति-प्रत्यवायानर्थप्रसङ्गाच्च । तथा च शास्त्रवचनानुसारेणैव उपरितनप्रश्ननिर्णयः कर्तव्यः ।

द्विधापि हि शास्त्रम् । तत्राऽऽद्य यथा मनुः—

कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणाम् ।
कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः ॥
मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ।
कुलसङ्ख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥ ३।६३-६६ ॥

विशिष्टसंस्कारस्यैव नाश इति न पितृपितामहादिपरम्परासाम्यम्। तथा च पितृपितामहादिजात्यनुगुणधर्मद्वारा परमेशाराधनशक्त्यभावात्तदतिरिक्तधर्मेणैव परमेशाराधनाय प्रवर्तितव्यमितितात्पर्यं सिध्यति। सर्वथा तज्जातीयत्वे तु मन्त्रादिसंस्कारस्यायोग्यत्वेन कदापि पूर्वजातिप्राप्तिर्न स्यात्। वृत्तित्यागपूर्वकस्वधर्मानुष्ठाने तु कालान्तरेण पुनश्च स्वजातिप्राप्तिस्तु केन निवार्यताम्। अत एव "व्यत्यये कर्मणां साम्यम्" इति साम्यपदं प्रयुङ्क्ते स्म याज्ञवल्क्यः। साम्यं च तुल्यता तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्ता। एवं च भेदोऽपि तज्जातीयादस्य कर्मभ्रष्टस्य सिध्यति। एवं च कर्मभ्रष्टानां तत्तज्जात्यनुगुणबीजगतसंस्कारः सर्वथा न प्रणश्यतीति सिद्धम्। बीजयोनिसंकरद्वारा तु स संस्कारः सर्वथा प्रणश्यति। अत एव प्रायश्चित्तादिविधिः संगच्छते। विशेषश्चाग्रे शुद्धिप्रकरणे वक्ष्यते।

द्वितीय शास्त्रं यथा मनुः—

सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः।
पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते॥
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते॥
जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
आकाशमिव पङ्केन न स पापेन लिप्यते॥
अजीगर्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः।
न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन्॥
श्वमांसमिच्छन्नार्तोऽत्तुं धर्माधर्मविचक्षणः।
प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान्॥
भरद्वाजः क्षुधार्तस्तु सपुत्रो विजने वने।
बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः॥
क्षुधार्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम्।
चण्डालहस्तादादाय धर्माधर्मविचक्षणः॥ १०।१०२-१०८

एतैश्च वचनैरापत्काले येन केनाप्युपायेन जीवतो न कोऽपि वृत्तिकृतो दोष इति प्रतिपाद्यते। आपच्चात्र न्याय्येन विधिनोदरंभरणाशक्यतैव। तथा चाऽऽपत्काले यया कयापि वृत्त्या जीवन्तो वर्णा न जात्यनुगुणबीजदोषमावहन्ति तया वृत्त्या,न वा तत्र बीजगुणाना नाशो भवतीति निश्चीयते। आपदनन्तरं तु तयैव वृत्त्योपजीवित्वे साम्यमावहन्ति। अत्राऽऽपत्काले वृत्तिसंस्कारो न बीजधर्मनाशकः, तदनन्तरं तु तन्नाशक इत्यत्र किं वा गमकम्। नह्यग्निसम्पर्के शीतकाले न

अतिवृष्टिकाले वायुद्रव्याधिक्यं वा तत्संयोगाधिक्यं वा । अनावृष्टिकाले च तदभाव इति कल्पयितुं शक्यम् । तथा सति तयोरपि कादाचित्कत्वेन कारणान्तरकल्पनाप्रसक्तौ तत्रैव द्रव्यान्तरसंयोगासंयोगयोः परिकल्पनप्रसङ्गात् । पृथक्करणादिना घटकद्रव्यसिद्धावपि तदुत्पादककारणस्यासिद्धत्वात् । न हि घटकद्रव्यसाधारण्येन सर्वेषां पदार्थानामुपपत्तिः । वायुद्रवघनत्वादिना सर्वसाधारण्येऽपि वैचित्र्यस्यानुपपन्नत्वात् । नहि गोधूमशर्कराघृताग्निसंयोगसाधारण्येन गोधूमजन्यपदार्थानामेकरूपता वा एकक्रियाकारित्वं वोपलभ्यते । पदार्थान्तरदर्शनात् वृष्यत्वबल्यत्वादिना रुच्यादिना च भिन्नकार्यकारित्वात् । एवमेव रङ्गवैचित्र्येऽपि । नहि वयं हरितालमनःशिलासंयोगादिना हरितरङ्गमुत्पादयाम इति सर्वत्र वृक्षपर्णपक्ष्यादिषूपलभ्यमानो हरितवर्णस्तथैव समुत्पन्न इति कोऽपि प्रेक्षावानाचक्षीत । तस्मादस्ति किंचित्कारणान्तरमिति कल्पनीयम् । तच्चान्ततो गत्वा कर्मजन्यपरिणाम एवेत्यगत्योरीकरणीयम् । तस्य च दुर्विज्ञेयत्वाच्छास्त्रैकगम्यत्वमेव । तथा च कर्मजन्यसंस्कारेण बीजधर्मपरिवर्तनापरिवर्तने अपि शास्त्रैकगम्ये इत्यगत्या स्वीकर्तव्यम् । शास्त्रस्यानतिशङ्क्यत्वात् । तत्त्यागे जगदान्ध्यप्रसङ्गात् । पशुवदापाततः प्रतीत्यैव प्रवृत्तिनिवृत्तिप्रसक्तावनर्थप्रसङ्गाच्च । तथा च शास्त्रवचनानुसारेणैव उपरितनप्रश्ननिर्णयः कर्तव्यः ।

द्विधापि हि शास्त्रम् । तत्राऽऽद्यं यथा मनुः—

कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणाम् ।
कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः ॥
मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ।
कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥ ३।६३-६६ ॥

इत्यादि । अत्र च कुलानामकुलत्वसंपत्तिः खलु कर्मजन्यसंस्कारमूलिकैवेति स्पष्टमेवाभिहितं विनाऽऽपदं तादृशकर्मपरिहाराय । तथापि "यानि हीनानि मन्त्रतः" इत्युक्त्या मन्त्रशक्त्यभाव एवाकुलत्वमिति गम्यते । ततश्च मन्त्रसामर्थ्यमपि दुष्कृतजन्यप्रत्यवायपरिहारजनकं गम्यते । अतश्च सति च मन्त्रसंस्कारे नैतेषां कर्मणां कुलभ्रंशकरत्वमिति सिध्यति । सोऽयं कुलभ्रंशो नाम कुलक्रमागतबीजनिष्ठसंस्कारनाश एवेति संभवति कर्मजन्यसंस्कारस्य बीजधर्मविनाशकत्वम् । तथा चापद्वृत्त्यापि स्वीकृतस्य कर्मण आपन्निवृत्त्युत्तरमप्यनुवृत्तौ बीजधर्मविनाशकत्वं सिध्यति । अत्र च बीजधर्मस्य समानसंतानोत्पादकतास्य न सर्वथा नाशः । किंतु परेशाराधनानुकूलस्य

विशिष्टसंस्कारस्यैव नाश इति न पितृपितामहादिपरम्परासाम्यम्। तथा च पितृपितामहादिजात्यनुगुणधर्मद्वारा परमेशाराधनशक्त्यभावात्तदतिरिक्तधर्मेणैव परमेशाराधनाय प्रवर्तितव्यमितितात्पर्यं सिध्यति। सर्वथा तज्जातीयत्वे तु मन्त्रादिसंस्कारस्यायोग्यत्वेन कदापि पूर्वजातिप्राप्तिर्न स्यात्। वृत्तित्यागपूर्वकस्वधर्मानुष्ठाने तु कालान्तरेण पुनश्च स्वजातिप्राप्तिस्तु केन निवार्यताम्। अत एव "व्यत्यये कर्मणां साम्यम्" इति साम्यपदं प्रयुङ्क्ते स्म याज्ञवल्क्यः। साम्यं च तुल्यता तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्ता। एवं च भेदोऽपि तज्जातीयादस्य कर्मभ्रष्टस्य सिध्यति। एवं च कर्मभ्रष्टानां तत्तज्जात्यनुगुणबीजगतसंस्कारः सर्वथा न प्रणश्यतीति सिद्धम्। बीजयोनिसंकरद्वारा तु स संस्कारः सर्वथा प्रणश्यति। अत एव प्रायश्चित्तादिविधिः संगच्छते। विशेषश्चाग्रे शुद्धिप्रकरणे वक्ष्यते।

द्वितीयं शास्त्रं यथा मनुः—

सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः।
पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते॥
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते॥
जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
आकाशमिव पङ्केन न स पापेन लिप्यते॥
अजीगर्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः।
न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन्॥
श्वमांसमिच्छन्नार्तोऽत्तुं धर्माधर्मविचक्षणः।
प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान्॥
भरद्वाजः क्षुधार्तस्तु सपुत्रो विजने वने।
बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः॥
क्षुधार्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम्।
चण्डालहस्तादादाय धर्माधर्मविचक्षणः॥ १०।१०२-१०८

एतैश्च वचनैरापत्काले येन केनाप्युपायेन जीवतो न कोऽपि वृत्तिकृतो दोष इति प्रतिपाद्यते। आपच्चात्र न्याय्येन विधिनोदरंभरणाशक्यतैव। तथा चाऽऽपत्काले यया कयापि वृत्त्या जीवन्तो वर्णा न जात्यनुगुणबीजदोषमावहन्ति तया वृत्त्या,न वा तत्र बीजगुणानां नाशो भवतीति निश्चीयते। आपदनन्तरं तु तयैव वृत्त्योपजीवित्वे साम्यमावहन्ति। अत्राऽऽपत्काले वृत्तिसंस्कारो न बीजधर्मनाशकः, तदनन्तरं तु तन्नाशक इत्यत्र किं वा गमकम्। नह्यग्निसंपर्के शीतकाले न

पदार्थ भस्मीभावः, किं तूष्णकाले इति कालकृतं नियमनं स्वभावासिद्धकर्मणो भवितुमर्हति। तथा च वृत्तिसंस्कारोऽप्यापदनापत्कालमनपेक्ष्यैव सर्वत्र सम एव भवितुमर्हतीति शङ्कायामयमेव परिहारो यज्जीविकानियमातिरिक्तविहितधर्मानुष्ठानाननुष्ठाने इत्येव। तथा चाऽऽपदि यावदपेक्षमेव धर्मत्यागस्तदतिरिक्तधर्मानुष्ठानं च प्रवर्त्तत इति तत्र धर्मानुष्ठानजन्यसंस्कारस्य बलवत्त्वाद्वृत्तिजन्यसंस्कारो न प्रभवति बीजधर्मनाशाय। आपन्निवृत्तौ तु तथैव तद्वृत्त्युपजीवित्वे स्वधर्मसंहकारस्य लोप एव गम्यते लोभादिना विषयलौल्यादिति तदानीं वृत्तिसंस्कारः परम्परयाऽनुवर्तमानः प्राबल्याद्बीजधर्मनाशायैव प्रभवतीति कल्पनीयम्। एवं च स्वधर्माचरणत्यागसहकृत एव व्यवसायसंस्कारो जातिपरिवृत्तिकर इति सिध्यति। यत्र तु कुलेषु उभयमपीदानीं परिदृश्यते स्वधर्माचरणं च लोभादिनाऽऽपदभावेऽपि परवृत्तिस्वीकारश्च। तत्र कथं वा निर्णय इति संशये तु स्वधर्माचरणत्यागरूपस्य सहकारिकारणस्याभावान्न जातिपरिवृत्तिकरत्वं व्यवसायसंस्कारस्येति मन्यामहे। एतादृशकुलेषु वृत्तिदोषो मा भूदिति राजशासनद्वारैव तेषां प्रतिबन्धः। अत एवाऽऽह मनुः—

यश्चापि धर्मसमयात्प्रच्युतो धर्मजीवनः।
दण्डेनैव तमप्योपेत्स्वकाद्धर्माद्धि विच्युतम्॥ ९।२७३

इति। सोऽयं स्वकर्मत्यागो वर्णसंकरकारकः। अत्र वृत्त्यतिरिक्तस्वधर्माचरणं दानाध्ययनयजनादिरूपं ग्राह्यम्। आपद्वृत्तावपि विहितसेवाकृष्यादिकमेव ग्राह्यम्। न तु निषिद्धम्। तेन वैश्यवृत्त्यापि जीवतो मधुमांसादिक्रयविक्रयः सर्वथा ब्राह्मणस्य जातिपरिवृत्तिकर इति फलति। एवं क्षत्रियादीनामप्यापद्धर्मस्य जातिपरिवृत्तिकरत्वं ज्ञेयम्।

## ( राजनीतिदृष्ट्या धर्मपरिवर्तनवादः )

अत्रापरे प्रत्यवतिष्ठन्त आधुनिकाः— आपद्धर्माश्चैते शास्त्रविहिता विहितवृत्त्या जीवनासंभव इति किल प्राचीनानां सिद्धान्तः। तत्र तादृशासंभवस्तु यथाऽऽनावृष्ट्यादिना भवति। तथैव राजदण्डस्य म्लेच्छयवनशूद्राद्यायत्तत्वेऽपि संभवति। अत एव मनुराह—

वैश्यशूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत्।
तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदं जगत्॥ ८।४१८
शक्तेनापि हि शूद्रेण न कार्यो धनसंचयः।
शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते॥ १०।१२९

इति। अत्र तमोगुणात्मकशूद्रादीनां धनसंचयो ब्राह्मणानां ब्राह्मण्यबाधको भवतीति निषिद्धः। यदा धनसंचयस्याप्यनर्थकारित्वं सर्वधर्ममूलब्राह्मण्यस्य बाधेन, तदा " अर्थस्य मूलं

राज्यम् " इति सिद्धान्तानुसारेण राजदण्डस्य तदायत्ततायां कथं वा ब्राह्मणानां ब्राह्मण्योपयुक्ता जीविका स्यात्, कथं वा सर्वत्रानर्थकारित्वं न स्यात्। अत एव हीनस्योत्तमजीविका न कदापि विहिता। प्रत्युत

यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः।
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत्॥ १०।९६

इति विप्रवासनदण्डोऽभिहितो मनुना। तथा च सर्वापन्मूला किलेयं दण्डापदुपस्थिता तन्निवारणमन्तरा न कथमपि धर्मसंरक्षणं भवितुमर्हतीति तदर्थं कथं वर्तितव्यमिति विशयो भवति।

अयमत्राभिसंधिः—यत् राज्यं नाम सप्ताङ्गं भवति। तथाहि—

स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते॥
सप्तानां प्रकृतीनां च राज्यस्याऽऽसां यथाक्रमम्।
पूर्वं पूर्वं गुरुतरं जानीयाद्व्यसनं महत्॥ ९।२९४-२९५

इति मनुः। अत्र च पुरमिति दुर्गं ज्ञेयम्। कौटिलीयार्थशास्त्रेऽपि—

स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि प्रकृतयः —इति। ६।९७

एवं च राज्यसंपादनं नाम सप्ताङ्गसंपादनमेव। तत्र यद्यपि—

सप्ताङ्गस्येह राज्यस्य विष्टब्धस्य त्रिदण्डवत्।
अन्योन्यगुणवैशेष्यान्न किंचिदतिरिच्यते॥ ९।२९६

इति मनूक्त्या त्रिदण्डवदन्योन्यसंबद्धस्य परस्परविलक्षणोपकरणात्सप्तस्वप्यङ्गेषु न कस्याप्यङ्गस्य तारतम्यं भवितुमर्हति, तथापि सर्वनाशे पुनश्च षण्णामङ्गानां संपादनं राष्ट्रादेव भवतीति राष्ट्राङ्गस्यैव सर्वेषु गुरुत्वमभ्युपेयम्। तदुक्तं कौटिलीयार्थशास्त्रे—

जनपददुर्गव्यसनयोर्दुर्गव्यसनमिति पाराशरः, दुर्गे हि कोशदण्डोत्पत्तिरापदि स्थानं च जनपदस्य शक्तिमत्तराश्च पौरा जानपदेभ्यो नित्यश्चाऽऽपदि सहाया राज्ञः। जानपदास्त्वमित्रसाधारणा इति।

नेति कौटिल्यः। जनपदमूला हि दुर्गकोशदण्डसेतुवार्तारम्भाः। शौर्यं स्थैर्यं दाक्ष्यं बाहुल्यं च। जानपदेषु पर्वतान्तर्द्वीपाश्च। दुर्गा नाध्युष्यन्ते जनपदाभावात् कर्षकप्राये तु दुर्गव्यसनमायुधीयप्राये तु जनपदे जनपदव्यसनमिति॥ अधि. ८ अ. ११७.

अत्र यद्यपि जनपददुर्गव्यसनयोर्बलाबलचिन्ता। तथापि चाणक्यमतेन दुर्गव्यसनापेक्षया जनपदव्यसनस्य सर्वाङ्गोपघातकत्वेन गुरुत्वात् जनपदस्यैव च सर्वाङ्गोत्पत्तिस्थानत्वेन श्रेष्ठत्वाच्च

जनपदरूपस्याङ्गस्यैव सर्वापेक्षया वैशिष्ट्यमभ्युपेयम् । व्यसनं चाऽऽपत्तिः संकटमित्यनर्थान्तरम् । व्यस्यत्येनं श्रेयस इति व्यसनमित्यर्थशास्त्रे व्यसनपदव्युत्पत्तेः । तच्च राष्ट्रस्य यथार्थकार्यकरणा-सामर्थ्यमेव । तच्च गुणप्रातिलोम्यादिना संभवति । नान्यथा । तदुक्तमर्थशास्त्रे—

गुणप्रातिलोम्यमभावः प्रसङ्गः पीडा वा व्यसनम् । व्यस्यत्येनं श्रेयस इति व्यसनम् ॥ इति ।

तत्र गुणप्रातिलोम्यं नाम राज्यसंपादनानुगुणगुणवैपरीत्यम् । तच्च स्वाम्यमात्यसंपत्तिरूपगुण-विपरीतगुणेषु पर्यवस्यति । स्वामिसंपत्तिर्वाऽमात्यसंपत्तिर्वा लोकादेव संपादनीयेति तस्य तद्विपरीत-गुणाक्रान्तत्वे स्वाम्यमात्ययोरभावादेव राज्याभावः । इदमेकं व्यसनम् । इदानीं भारते स्पष्टतरमेव तदुपलभ्यते । एवं राज्यानुगुणगुणाभावोऽपि । यद्यपि राज्यसंपादनसंरक्षणाद्युपयुक्तगुणाः स्वाम्यमा-त्यसंपद्वर्णनेनार्थशास्त्रे बहवः प्रतिपादितास्तथापि "दैवं मानुषं वा प्रकृतिव्यसनमनयापनयाभ्यां संभवति" इत्यर्थशास्त्रसिद्धान्तादनयापनयावेव व्यसनप्रसवभूमिरिति सिध्यति । तत्रानयो नाम नीत्यभावः । नीतिश्च मानवानां परस्परव्यवहारानुगुणगुणसंपत्तिः । सा च "आत्मवत्सर्वभूतानि यः पश्यति स पश्यति" इत्युक्तदिशाऽन्योन्यसुखदुःखादिसाम्यदृष्टिमूलकः परस्परयोगक्षेमानुकूलो व्यव-हारः । तदभावश्चानयः । अपनयस्तु तद्विपरीतव्यवहारः । स चायं व्यवहार एव समानतापदव्यपदेश्यो मानवतापरपर्याय इदानीं जोघुष्यते । स च यदि वैदिकधर्मशास्त्रानुसारीदानीमाद्रियेत, नैव नीति-त्वमावहति । धर्मशास्त्रे तु जन्मनैवोच्चत्वनीचत्वप्रतिपादनात् तदनुसारेण जीविकानियमानामप्युप-निबन्धनान्नीचानां तु सर्वथोच्चवर्णायत्तत्वेन तदेकभोग्यत्वात् सति सामर्थ्येऽपि धनसंपत्तेरनुपार्जनो-पदेशाच्च न साम्यदृष्टिमूलकत्वं धर्मशास्त्रीयव्यवहारस्येति न तस्य नीतित्वम् । प्रत्युतानय-त्वमेव । तथा च तन्मूलकविघटनेन परस्परद्वेषादिप्रादुर्भावः स्वार्थपरायणता कामक्रोधाद्याक्रान्ति-रिन्द्रियलोलुपता चेत्येवमादिविनयमूलकदुर्गुणाभिव्याप्त्यैव राज्यनाशस्तन्मूलकपापकार्यकारिताभा-वश्चेत्यापदुपस्थिता । सा हि न पूर्वोक्तशास्त्रविवेचनेन सुनिरासेतीदानीं सर्वसमानतामुद्घोष्य यत्र कार्ये यस्य यावती [illegible] सामर्थ्यम्, तत्रैव पुरस्कारेण लोकाभिप्रायं संपाद्य ततश्च समाजसंघटनेन राजदण्डः स्वायत्तीकरणीयः । तदधीनत्वात् सर्वधर्माणाम् । तथा च विषमतावादोऽयं जन्मजाति-भेदः समूलमुन्मूलनीयस्तन्मूलका व्यवहारनियमाश्च । तथा सति यस्य वस्तुनो यत्र सामर्थ्यं वा योग्यता वा [illegible] भवेत्, तदनुगुणकार्यकारितायाश्च तत्तत्कार्यसंपादि-[illegible]ऽभिवर्धेत् । तत्र यदि [illegible] तत्पूरक[illegible] [illegible] क्रियां [illegible] [illegible] । यदि च न [illegible] न वा तत्पूरकक्रियाजनकत्वं । तत्र तु [illegible] [illegible] विनाशे

किं वोच्छिन्नं स्याद्राष्ट्रस्येति सर्वथोपयुक्तोऽयं समानतावादः। नहि परस्परबीजसंकरोपवर्णनेन वा वृत्तिसंकरोपवर्णनेन वा समाजस्य वासनास्थैर्यसंपादनं संभवति। वासनाया दुर्ज्ञेयत्वात्। अत एव दुष्परीक्ष्यत्वं जातीनामुपवर्ण्य प्रत्यक्षकार्यकारित्वेनैव तत्तद्वर्णनिश्चयोऽभिहितो युधिष्ठिराजगरसंवादे भृगुभरद्वाजसंवादे महाभारते। श्रीमद्भागवतेऽपि तथैव—

यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम्।
यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत्॥ इति॥

एवं च राष्ट्रियापन्निरसनार्थं समानतावादपुरस्कारेणैव वर्तितव्यमिति पूर्वोक्तसंशयस्य निराकरणं भविष्यति। समानतावादेऽपि प्रकृतिसिद्धं वैशिष्ट्यं निराकर्तुं को वा प्रभवेदिति चिन्त्यं वैदिकधर्मश्रद्धालुभिः।

ननु वैदिकधर्मश्रद्धालूनां स्वीयप्रकृत्यनुसारेण यथेच्छधर्माचरणे कर्तव्ये विधवाविवाहप्रौढाविवाहास्पृश्यस्पर्शादिविरुद्धशासनैर्यः प्रतिबन्धो भवति तस्य का गतिः। तेन तेषां स्वाभाविकप्रवृत्तिप्रतिबन्धेन धर्मनाशे संस्कारवैशिष्ट्याभावेन वस्तुसद्धर्तप्रधानमन्नतन्मूलकक्रियासामर्थ्यनाशे प्रजाया एव श्रेयोनाशः स्यात्। अतश्चैतादृशशासननिर्माणं मा भूदित्येव धर्मश्रद्धालूनामाग्रह इति चेदत्रेदमवधेयम्। यदिदमिदानींतनं शासननिबन्धनम्। न तत् प्रजानां वासनामतिक्रम्य कुत्रापि कथमपि भवति। राज्यतन्त्रस्याधुना प्रजायत्तत्वात्। राज्यलक्ष्म्याः प्रजानुरागप्रभवत्वात्। अनुरागस्य चेष्टकामनापूरण एव संभवात्। अत एवार्थशास्त्रे कौटिलीये—

प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्।
नाऽऽत्मप्रियं हितं राज्ञः प्रजानां च प्रियं हितम्॥

इत्युक्तं प्रजाप्रियस्यैव हितत्वम्। तथा च राजदण्डस्य प्रजावासनापूरकत्वेन प्रजावासनानुसारित्वात्तदनुरोधेन प्रणीयमानानि शासनानि कदाचिच्छास्त्रविरुद्धान्यपि लोकसंग्रहकारित्वादुपादेयान्येव। नैतावता धार्मिकाणां हिताहितविज्ञानां शास्त्रदृष्टीनां कथमपि श्रेयोविघातः। नहि सर्वैरेव विधवाविवाहः कर्तव्यः, सर्वाभिर्वा विधवाभिर्विवाहः कर्तव्य इति शासनम्। यत्तु प्रौढाविवाहशासनं पाऽस्पृश्यस्पर्शशासनं वा, तत्रापि आद्ये प्रायश्चित्तादिना दोषपरिहारसंभवान्न कापि धर्महानिः। द्वितीये तु देवालयादीनामुपासनार्थत्वेनोपासनायाश्च गृहेऽपि तादृशमूर्तिस्थापनद्वारा संभवेन नैव शुद्धधर्महानीरिति व्यर्थोऽयं कोलाहलो धर्मनाशविषयको धार्मिकाणाम्। एवमपि यदि धार्मिकैः स्वाभिमतधर्मवासनाप्रचारेण सर्वेषां जनानां वासनापरिवृत्तिः करिष्यते तदा त्वेतादृशशासननिबन्धनमेव न प्रादुर्भवेन्नवा प्रणीतमपि शासनं प्रजासु धर्मपरिवर्तनायालं स्यात्। तथा च वासनापरिवर्तनमिदमदृष्टमात्रफलकधर्मानुष्ठानद्वारा विशिष्टफलप्रतीत्या धर्मरक्षणार्थमेव सुदैर्ब्राह्मणैर्वि-

धेयमिति सोऽयमतिभारस्तादृशानां ब्राह्मणानां शिरस्येव। नहि तादृशब्राह्मण्यमन्तरा धर्मपरिरक्षण-संभव इति तूभयवादिसंप्रतिपन्नमेवं। सर्वथा तु सहजप्रकृतिसिद्धानां धर्माणां कथमपि विनाश-संभवात्प्रजावासनानुसारिशासनप्रणयनस्यैव हितकरत्वाच्च न कापि हानिः। न हि शास्त्रवचन-पुरस्कारमात्रेण वसनापरिवृत्तिः कुत्रापि। न ह्यहिंसाप्राधान्यबौद्धधर्मशास्त्रवचनैस्तदनुयायिनां हिंसायाः परावृत्तिः, न वा परोपकारपुरस्कारिणां खिस्तवचनानां पुरस्कर्तारः परान्नावलुण्ठन्ति। सर्वथा वासनापरिवृत्तिर्धर्मानुष्ठानादेव। तदर्थं च येषां सृष्टिस्तैस्तथाऽऽचरणेन शमदमतपस्त्यागप्रचार-द्वारा प्रजासु शुद्धधर्मबुद्धिरुत्पादनीया। अतश्च वासनावैपरीत्येन शासनप्रणयनस्यानर्थावहत्वाभावा-त्तदेव युक्तमुत्पश्यामः। सर्वथा तु समानतावादोऽयं योगक्षेमकरत्वाच्छ्रेयोवह, इत्यत्र न कश्चित्सं-देहलेशोऽपि। अत एव मनुना––

नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते।
ब्रह्म क्षत्रं च संसृष्टमिह चामुत्र मोदते॥

इति प्रजानां हिताय ब्राह्मणैरपि स्वब्राह्मण्यद्वारैव वासनानिग्रहात्साहायकमाचरणीयम्। एवमपि दण्डधारिभिरनादरः करिष्यते चेत्ते नियन्तव्याः। तदर्थं शस्त्रधारणमपि प्रसङ्गे कर्तव्य-मित्युक्तं मनुना––

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः।
ब्रह्मैव संनियन्तृ स्यात् क्षत्रं हि ब्रह्मसंभवम्॥ इति।
शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते॥ इति च।

सोऽयं स्वकर्तव्यभ्रंशजन्योऽपराधो ब्राह्मणैरिदानीं दण्डधारिणामुपर्यारोप्यत इति महानयं प्रमाद इति केचन नव्याः समाजहितवादिनः प्रतिपादयन्ति।

एतेषां मते धर्मपरिवर्तनामिदं वस्तुतो नैव धर्मपरिवर्तनम्। प्रत्युत शुद्धधर्मप्रचार एव स्वाभा-विकप्रकृत्याविष्कारेणेति। ये तु धर्माधर्मकथैव नानुमन्यन्ते। तेषां मतं तु पुरस्तादेव पर्यालोचि-तमिति न तस्य पौनरुक्त्यमिह क्रियते। केवलं शब्दतो धर्माधर्मस्वीकारेण ब्राह्मण्याविर्भावस्य ब्राह्मणानां शिरसि अतिभारमुन्यस्य स्वयं यथेच्छं विहरतां धर्मकञ्चुकानां प्रजाहिते बैडालव्र-तिकानामेतेषां मतमेवेदानीमालोचनीयम्। ततश्च पाश्चात्यजनसमूहोदाहरणमपि प्रत्याख्यातं स्यादिति तदर्थं प्रयतामहे।

## (उपर्युक्तसमानतावादनिरासः)

सत्यं दण्डमूलास्तिस्रो विद्याः। दण्डश्च विनयमूलः। विद्याविनयहेतुश्चेन्द्रियजयः। स च वृद्धोपसेवया शास्त्रार्थानुष्ठानाच्च भवतीति प्राचीनमतम्। नूनं चोपर्युक्तं प्रजावासनापूर्त्यां प्रजानु-

रागसंपादनमेव दण्डहेतुरिति । तत्रेदमालोचनीयं 'यद्राजलक्ष्म्याः प्रजानुरागप्रभवत्वेऽपि अनुराग-मूलत्वं वासनापूर्तेर्यत्प्रतिपाद्यते तन्न संगच्छते । वासना हि द्विविधा शास्त्रोपदिष्टफलविषया तदितरा च । तदुक्तं शुक्रनीतौ—

रज्यते सत्फले स्वान्तं दुष्फले नहि कस्यचित् ।
सदसद्बोधकान्येव दृष्ट्वा शास्त्राणि चाऽऽचरेत् ॥
नयस्य विनयो मूलं विनयः शास्त्रनिश्चयात् ।
विनयस्येन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति ॥
आत्मानं प्रथमं राजा विनयेनोपपादयेत् ।
ततः पुत्रांस्ततोऽमात्यांस्ततो भृत्यांस्ततः प्रजाः ॥
सदानुरक्तप्रकृतिः प्रजापालनतत्परः ।
विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥
प्रकीर्णविषयारण्ये धावन्तं विप्रमाथिनम् ।
ज्ञानाङ्कुशेन कुर्वीत वशमिन्द्रियदन्तिनम् ॥
विषयामिषलोभेन मनः प्रेरयतीन्द्रियम् ।
तन्निरुन्ध्यात्प्रयत्नेन जिते तस्मिन् जितेन्द्रियः ॥ १।९१-९९

इति । अत्र हि विषयामिषलोभाज्जायमाना मनसः प्रेरणारूपैका वासना । तन्मूलकेन्द्रियप्रवृत्तिर्निरोद्धव्या । शास्त्रज्ञानजन्यसदसद्विवेकमूलिका जायमाना सद्विषयिणी मनसः प्रेरणा द्वितीया वासना । सा चाऽऽदर्तव्येति प्रतिपाद्यते । तत्र चेदानींतनै राजकार्यधुरंधरैः प्रथमा तु नाऽऽद्रियत इति तु तच्छासनप्रणयनादेवावगम्यते । द्वितीयापि न सर्वथाऽऽद्रियते । केवलं धर्माधर्मविषय एव तथा प्रवृत्तिः प्रजानामाद्रियते । न सर्वत्र । अन्यथा मद्यपानप्रतिबन्धशासनम्, अन्नवस्त्रनियमनशासनम्, मूल्यनियमनशासनम्, भाषणस्वातन्त्र्यसंकोचनियमः, प्रकाशवाणिज्यप्रतिबन्धः, इत्यादिशासनप्रणयनमपि लोकवासनानुसारेण तत्पूर्तिकरमिति मन्तव्यं स्यात् । किं बहुना बलात्सैनिकशिक्षाप्रचारशासनमपि पाश्चात्यानां किं लोकवासनापरिपूरकमेवेति न वेति मनसि करणीयं विचक्षणैः । यदि च तद्वासनानुसार्येव न तर्हि बलात् । यदि च बलान्नतरा वासनानुसारीति वृथाऽयं प्रलापो यल्लोकमतानुसार्येव शासनं सर्वत्र योग्यमिति । किंतु विषयलोलुपत्वेन विषयप्राप्त्यर्थं कैश्चिदेव स्वार्थसाधकैरिदं प्रवर्त्यते बलादारोप्यते च जनतायाः शिरसीत्येव वक्तव्यं स्यात् । ननु तथापि जनमतानि पर्यालोच्यैव तथा प्रणीयते तदिति चेत् । किमिदं जनमतं नाम । किं सर्वेषां जनानामेव मतं वा केषांचिदेव । तत्रापि तज्ज्ञानामेव वाऽज्ञानामपि । नाऽऽद्यः । विरुद्ध

मतोपलम्भात्। नान्त्यः। तेषामेव मतेन दण्डप्रणयने तत्परिपालनेऽपि इतरेषां तत्र विरोधेन तद्वासनाहानौ तत्परिपालनाभावप्रसङ्गेन तेषामप्रजात्वप्रसङ्गात्। नहि विषमवासना प्रजा न प्रजेति वक्तुं शक्यम्। प्रजापालनं च प्रजावासनापरिपूर्तिरित्येतेषां राद्धान्तः। तथा येषां वासनोपघातस्तेषां परिपालनमेव कथं स्यादित्यत्र वक्तव्यं नवीनैः। न च बहुत्वमेव विनियमकमत्रेति वक्तुं सांप्रतम्। तथा सति अल्पैर्बहूनां कृते स्वार्थस्य तिलाञ्जलिर्देय इत्येव न्याय आपतेत्। तथा च मात्स्यन्यायादनतिरेक एवास्य न्यायस्य। तदिदं बलमेव न्यायकारणमित्यभ्युपगमनम्। किं च बहूनामपि लोकानां तज्ज्ञत्वं वाऽज्ञत्वं वा। तज्ज्ञत्वस्य प्रत्यक्षतोऽनुपलम्भान्नाऽऽद्यः। अज्ञत्वे त्वज्ञास्तज्ज्ञानामुपभोग्यतामावहेयुरिति घट्टकुट्यां प्रभातायितम्। तदपेक्षया शास्त्रसिद्धोत्कर्षवतामपकृष्टा भोग्याः, धनिनां निर्धनाः, सुज्ञानामज्ञाः, दुर्बलास्तु प्रबलानामित्याप्रामरं प्रसिद्धस्यैव व्यवहारस्यानुसरणमेव श्रेय इति व्यर्थ एवायमाटोपः। अतश्च न्यायान्यायविवरणमिदमिदानीतनानां संवरणमात्रमेव स्वार्थनिदानमिति सिध्यति। तदपेक्षया शास्त्रानुसरणमेव श्रेय इति। अत्रावसरे बहुमतानुसारेण कार्याकार्यनिर्णयः कथमपि न निर्विवादं संभवतीति तदर्थमध्यात्मवाद एव पुरस्करणीय इत्यत्र लो. बा. गं. तिलकमहोदयाना गीतारहस्यतः कानिचन वाक्यानि वाचकानां पुरत उपस्थापयामः।

## ( गीतारहस्योपन्यासः )

केवलस्वार्थसाधवो, दूरदर्शिनः, स्वार्थपरार्थसाधकत्वेनोभयवादिनः, सुज्ञस्वार्थिनश्चेति त्रयो मार्गा आधिभौतिकसुखवादिनां संभवन्ति। तेषां पर्यालोचनेन तत्रत्याः प्रधानदोषाः के वेत्यपि विवेचितम्। नैतावता सर्वेषामाधिभौतिकमार्गाणां विचारः परिसमाप्तः। अतः परमप्याधिभौतिकमार्गेषु सर्वतः श्रेयानेकः संप्रदायो विचारणीयोऽवशिष्यते। व्यक्तिमात्रस्य सुखापेक्षया निखिलमानवजातेराधिभौतिकसुखदुःखतारतम्यमालोच्यैव कार्याकार्यनिर्णयो नैतिकः कर्तव्य इत्येतन्मतप्रतिपादकानामाधिभौतिकसुखवादिनां पण्डितानामेको वर्गो वर्तते। बेंथमिलप्रभृतयः खल्वेतन्मतपुरस्कर्तारः। एकेनैव कर्मणैकस्मिन्नेव काले समाजान्तर्गतानां वा जगदन्तःपातिनां वा सर्वेषां जनानां सुखप्राप्तिरशक्यैव। येन कर्मणैकस्य सुखित्वम्, तेनैवापरः परिद्रूयत इति तु नातिरोहितम्। न हि कौशिकस्य प्रकाशोऽप्रिय इति सर्वेषामपि तथेति केनापि वक्तुं पार्यते। तथैव केषांचित् किंचिदहितावहमिति सर्वेषामपि तथैवेति कर्मयोगशास्त्रेऽपि नाभ्युपगम्यते। अत एव समस्ताना सुखमित्यस्य बहूनां बहु सुखमित्यर्थः स्वीकर्तव्यो भवति। (Greatest good of the greatest number) एवं च यथा बहूनामनल्पं सुखं स्यात्तदेव नीतिदृष्ट्या न्याय्यमुपादेयं चेति मत्वा तदनुसारेणैव वर्तितव्यमित्येव मानवानां यथावत्कर्तव्यमित्येतस्य संप्रदायस्य सिद्धान्तः। अयं च सिद्धान्त आध्यात्मिकसांप्रदायस्यापि।

संमत एव। किं बहुना आध्यात्मिकसांप्रदायस्यैव पुरातनतमोऽयं सिद्धान्त इदानीमाधिभौतिकसांप्रदायिकैर्विशिष्टपद्धत्योपयोजित इत्येतावान् विशेष इत्यपि वक्तुं नाशक्यम्। सत्पुरुषैस्तुकाराममहोदयैः पुरैव (जगाच्या कल्याणा संतांचा विभूती। देह कष्टविती परोपकारें) जगत्कल्याणार्थमवतीर्णाः सत्पुरुषाः परोपकारैः स्वदेहमेव जरयन्तीति निवेदितं नाविदितं कस्यापि। तथा च सिद्धान्तस्यास्य याथार्थ्ये वा योग्यतायां वा न कस्यापि विप्रतिपत्तिः। श्रीमद्भगवद्गीतायामपि कर्मयोगयुक्तानां ज्ञानिनां लक्षणप्रस्तावे "सर्वभूतहिते रताः" इति द्विस्तावत्सर्वभूतहितनिरतत्वमिति लक्षणं प्रतिपाद्यते। (गी. र. ५।२५. १२।४) किंच धर्माधर्मनिर्णयेऽप्ययमेव निकष इत्यपि यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा" इति महाभारतवचनेन प्रकरणान्तरगतेन स्पष्टं निर्धार्यते। परंतु शास्त्रोक्तरीत्या सर्वभूतहितनिरतत्वं हि ज्ञानिनां तटस्थलक्षणमिति निश्चित्य प्रसङ्गानुसारेण कार्याकार्यनिर्णये वा धर्माधर्मविचिकित्सायां वा कुत्रचित्तदुपयोगः सामान्यतः कर्तव्य इति त्वन्यत्। इदमेव च नीतिनिकष इति मत्वाऽन्यत्किंचिदप्यनालोच्यैतदनुसारेणैव सर्वमपि नीतिशास्त्रप्रासादप्रणयनं कर्तव्यमिति त्वन्यदित्येतावानेवानयोः सांप्रदाययोर्विशेषः। किं बहुनाऽन्योन्यविरोधोऽपि। तत्राऽऽधिभौतिकपण्डितास्तावद्द्वितीयसिद्धान्तमभ्युपेत्य नाध्यात्मशास्त्रेण साकं नीतिशास्त्रस्य कोऽपि संबन्ध इति प्रतिपादयन्ति। तदेतेषामिदं मतं कथं वा सोपपत्तिकमितीदानीमालोचनीयम्।

इदमत्र प्रथमतो निवेद्यते यत्सुखहितशब्दयोर्नानर्थान्तरवाचित्वम्। महानेव खल्वर्थविशेषस्तयोः। तथापि तमनादृत्य तयोः समानार्थकत्वमङ्गीकृत्यापि सर्वभूतहितं नाम बहूनामनल्पं सुखमित्येतस्य सिद्धान्तस्य कार्याकार्यनिर्णये विनियोगे महदेवासौकर्यमाविर्भवेदिति तु विचक्षणैरवधेयम्। तथाहि-यद्यर्जुनोपदेष्टा एतत्तत्त्वपुरस्कर्ता स्यात्तदा खलु कीदृश उपदेशः स्यादित्येवाऽऽदौ पर्यालोचनीयम्। अस्मिन् भारतीययुद्धे भवतां विजयप्राप्त्या यदि बहूनां सुखवैपुल्यं स्यात्तर्हि हत्वापि भीष्मादीन् योद्धव्यमेवेति ते कर्तव्यमित्येव किलोपदेशस्वरूपं निष्पद्यते। आपातरम्योऽप्यतिसुगमोऽप्ययमुपदेशस्तत्त्वदृष्ट्या समूलमालोच्यमानः सुदूरं कियद्वाऽसौकर्यमुत्पादयति कथं वा सर्वत्र न निर्णायक इति सुविशदमेव प्रतीयेत। यदि च बहूना सुखमेव न्याय्यत्वगमकम्। तदा पाण्डवपराजये कौरवाणां बहूनां सुखलाभात्पाण्डवपक्षस्यान्याय्यत्वमापद्यते। पाण्डवपक्षे सप्ताक्षौहिण्यः, कौरवपक्षे त्वेकादशेति, संख्याधिक्यं कौरवाणामिति तेषां सुखसंपादनार्थमेव पाण्डवैः प्रवर्तितव्यमिति प्राप्तं कर्तव्यं हित्वाऽन्यथाचरणमिदं पाण्डवानामन्याय्यत्वमेव गमयेत्। अन्यत्रापि बहुत्र सख्याबाहुल्यमूलकमेव सुखबाहुल्यमित्यभ्युपगमानुसारेण निर्णेतव्या नीतिः प्रमादमावहति। व्यवहारे त्वनेकेषां दुर्जनानां सुखापेक्षयैकस्यापि सज्जनस्य येन सुखं स्यात्तदेव सत्कृत्यमिति मन्यते। तथा च परःसहस्राणां दुर्जनानां

सुखापेक्षयैकस्यैव सज्जनस्य सुखं मूल्यमधिकमर्हतीत्येवाभ्युपगन्तव्यं व्यावहारिकस्योपर्युक्तस्य सिद्धान्तस्य यथार्थ्याय। एवं च संख्याधिक्यं वा सुखाधिक्यं वा नीतिनिर्णयसाधनमिति राद्धान्तोऽपसिद्धान्तः स्यात्। तथा य संख्याधिक्यनीत्योर्न नियतः संबन्ध इत्येवोरीकर्तव्यम्। इदमप्यपरमत्रावधेयं यत्सामान्यतः प्राकृतानां यत्र सुखबुद्धिस्तत्रैव दूरदर्शिनां सुज्ञानां परिणामे दुःखपर्यवसायित्वमवभासते। न हि साक्रेटिसमहोदयो वा येशुख्रिस्तमहाशयो वा स्वसिद्धान्तान् जनानां दुःखकारकत्वेनोपादिशतः स्म। प्रत्युत परिणामे जनानामत्यन्तमेवात्र सुखमित्येव तानुपदिशतः। एवमपि तदानींतनैस्तत्स्वजनैस्तयोः शत्रुत्वमवधार्यैव प्राणान्तिकं प्रायश्चित्तमादिष्टम्। तथाऽऽचरितमपि। तदानींतनस्तत्समाजो वा समाजधुरीणा वा संख्याधिक्यमेव नीतितत्त्वगमकमिति सिद्धान्तमवलम्ब्यैव तथाऽऽनेरुः। नैतावता तेषां तदनुष्ठानं न्याय्यमितीदानींतना मन्यन्ते। एवं च संख्याधिक्यमेव नीतिगमकं तत्त्व मित्यभ्युपगम्यापि कुत्र वा बहूनां सुखं कथं कीदृशं केन वा पुरुषेण निर्णेयमित्यादिविषये न तेन निर्णयो भवितुमर्हति। सामान्यतः प्राप्ते प्रसङ्गे येषां सुखदुःखनिर्णयः कर्तव्यः, तदायत्तता तत्र समीचीनेति वक्तुं युज्यते। परंतु सामान्यावसरे नैतादृशस्याऽऽयासस्याऽऽवश्यकता। यत्र तु विशेषप्रसंङ्गेषु प्राकृतानां कस्मिन् विषये स्वहितं स्यादिति याथार्थ्येन निर्णयस्यासामर्थ्यम्। तत्र यदि संख्याधिक्यमिदं गमकत्वेनाभ्युपेयेत, तदा तु "अलातं भूतहस्ते तु दीयमानं सुखावहम्"इति न्यायेन महानेवानर्थः स्यात्। अतश्चानधिकारिणां निर्णायकत्वेन नीतिगमकमिदमेवैकं संख्याधिक्यं महतेऽनर्थायेत्युपरितनोदाहरणद्वयेन स्पष्टमेव प्रतीयते। ननु यथार्थमपि नीतिगमकं तत्त्वमज्ञानाद्दुरुपयुज्यते चेदज्ञैस्तत्र कथं वा प्रतिविधेयमस्माभिः। इति चेन्नेदमुत्तरं समीचीनम्। नहि तत्त्वनिश्चयो विनाऽधिकारं विना विषयं प्रयोजनमन्तरेण भवितुमर्हति। अतश्च तत्त्वप्रतिष्ठापकैः केन पुरुषेण कदा कथं वास्योपयोगः कर्तव्य इत्यपि तत्त्वप्रतिष्ठापनेन सहैवोपदेष्टव्यम्। नो चेद्वयमपि साक्रेटीससदृशा वा येशुख्रिस्तसदृशा नीतिनिर्णयसमर्था इति मत्वा ये केऽपि प्रवर्तेरन् यस्मिन् कस्मिन्नपि विषये, महती खल्वनर्थपरम्परा संभवेत्।

अयमत्र निष्कर्षो यन्न केवलं संख्यामात्रेण नीतिनिर्णयो भवति, न वा सुखं सुखबाहुल्यं वा तर्केणैव निश्चेतुं पार्यतेत्यत्र किमपि बाह्यमाधिभौतिकं गमकमस्ति। अपरेऽप्याक्षेपा एतद्व्यतिरिक्ता अत्र संभवन्ति। नहि विशिष्ट कर्म बाह्यपरिणाममात्रादेव न्याय्यं वाऽन्याय्यं वेति पर्याप्तो निर्णयोऽनेकदा शक्यो भवतीति विवेचकानां दृष्टिपथमियात् सूक्ष्मेक्षिकया विचारे।

ननु घटीयन्त्रस्य समीचीनत्वमसमीचीनत्वं च यथा तत्कार्येण यथार्थवेलादर्शनेन निश्चीयते। तथात्राप्यस्त्विति चेन्न। मानवानां घटीयन्त्रत्वाभावात्। नहि सत्पुरुषाः सर्वभूतहितरता इति यत्र यत्र सर्वभूतहितरतत्वं तत्र तत्र सत्पुरुषत्वमिति व्याप्तिः। मनःशुद्धिरूपोपाधिना सोपाधिकत्वात्। अतश्च घटीयन्त्रदृष्टान्तोऽयं मानवकृत्यानामुपन्यस्यताऽऽदौ मानवमनसः शुद्धचशुध्यादिकमवश्यमेव पर्या-

लोचनीयम् । अयमेव मानवयन्त्रयोर्विशेषः । अत एव च ज्ञानाज्ञानमूलकमपराधतारतम्यं शासनेऽप्यङ्गीक्रियते क्षम्यते चाज्ञानमूलकोऽपराधः प्रमादमूलकश्च । एवं च यस्य कस्यापि कर्मणः साधुत्वं वाऽसाधुत्वं धर्म्यत्वं वाऽधर्म्यत्वं न्याय्यत्वं वाऽन्याय्यत्वं न केवलं बाह्यं परिणामं बहूनां सुखबाहुल्यमित्यादिकमालोच्यैव निर्णेतुं सांप्रतम् । तत्र तत्कारणीभूता बुद्धिर्वा वासना वा मानसिको हेतुर्वाऽवश्यमेव पर्यालोचनीयः । अमेरिकायां हि कस्मिंश्चित्पत्तने सर्वेषां गमनागमनसौकर्यार्थं ट्रॅमशकटव्यवस्था संपादनीयाऽऽसीत् । तदर्थं चाधिकारिणामभ्यनुज्ञानमावश्यकमपि नचिरेण लब्धुमशक्यमिति पर्यालोच्य ट्रॅमशकटव्यवस्थापकेनाधिकारिभ्य उत्कोचं दत्त्वा तदचिरेणैव लब्ध्वा सत्वरमेव सा व्यवस्था संपादिता । तया च नागरिकाणामखिलानामपि गमनागमनासौकर्यं विनाश्य महान् लाभः संपादितः । ततश्चातिक्रामता केनचित् कालेन तदुत्कोचादि परिज्ञातम् । ततश्च व्यवस्थापकोपरि साहसाभियोगः ( फौजदारी फिर्याद ) प्रचालितः । तत्र चापराधनिर्णयार्थमुपस्थापितानां सभ्यानां ( ज्यूरी ) ऐकमत्यं नाभूदिति सभ्यान्तराणां नियोजनमपि संपादितम् । ततश्चापराधनिर्णये व्यवस्थापको दण्डितः । अत्र चोदाहरणे व्यवस्थापकस्योत्कोचदानमिदं न्याय्यं वाऽन्याय्यमिति परीक्षणं न केवलेन बहूनां सुखबाहुल्येन हेतुना विधातुमुचितम् । उत्कोचदानात्मकस्य कर्मणो बाह्यः परिणामोऽपि ट्रॅमशकटव्यवस्थया गमनागमनासौकर्यपरिहारपूर्वकसुखबाहुल्यसंपादक एव । एवमप्युत्कोचदानमिदं न न्याय्यं भवति । ( द्रष्टव्यश्चात्र डॉ. पॉल कॅरसकृतः The Eathical problem ग्रन्थः ) धर्मबुद्ध्या क्रियमाणं दानं कीर्त्यर्थं वाऽन्यफलार्थं वा क्रियमाणं दानं चेत्यनयोर्बाह्ये परिणामे समानेऽप्येकस्य सात्त्विकत्वमपरस्य राजसत्वं च गीतायामप्युक्तमेव । ( गी. १७।२०–२१ ) एवमेव कुपात्रसमर्पितं तदेव तामसमित्येकस्या दानक्रियायास्त्रैविध्यमुपवर्णितम् । व्यवहारेऽपि कस्यचन दरिद्रस्य धर्मकार्यार्थं दीयमानं पणकचतुष्टयं धनिनश्च तदर्थमेव दीयमानं रूप्यकशतं च नैतिकदृष्ट्या समानमेवाभ्युपगम्यते बुद्धिसाम्यात् । यदि चोपर्युक्तसुखबाहुल्यमात्रनिकषेणात्र परीक्ष्येत, तदा नैतयोः साम्यमित्येव वक्तव्यमापतति । अयमेवात्राधिभौतिकनीतिनिकषे दोषो यन्न तत्र कर्तुर्बुद्धेः परीक्षेति ; यदि कर्तुर्बुद्धिरपि परीक्ष्येत्यभ्युपगमस्तर्हि तु सुखबाहुल्यमेव नीतिनिकष इति प्रतिज्ञा व्याहन्येत । अनुशासनपरिषदस्तु व्यक्तिसमूहात्मकत्वेन तन्निर्मितानुशासनानां न्याय्यत्वान्याय्यत्वपरीक्षायां तु न कर्तृबुद्धिपरीक्षणस्यापेक्षा । किंतु बहूनां सुखबाहुल्यं भवति न वेत्येतावत्पर्यालोचनमेव तत्र पर्याप्तम् । नैतावता सर्वत्र तदेव निकष इति तूपरितनोदाहरणेन स्पष्टं भवति । नायं निकषः सर्वथा निरुपयोगीत्यस्माभिर्मन्यते । बाह्ये व्यावहारिके कर्मणि न्याय्यत्वान्याय्यत्वपरीक्षायां नान्यत्समीचीनं गमकमस्मादिति त्वस्माकमपि संप्रतिपन्नमेव । परं तु बहुषु स्थलेषु बुद्ध्यादीनामपरेषामपि गमकानां विचारणीयत्वं तु न प्रत्याख्यातुं शक्यमित्येवास्माकमभिप्रायः । तत्सिद्धं न केवलं बहूनां सुखबाहुल्यमेव नीतितत्त्वनिर्धारणे गमकमिति न तदे-

काबलम्बनेन नीतिविनिश्चयः । किंतु तदपेक्षयाऽन्यदेव किंचिन्निर्दोषतरं प्रमाणमन्वेषितव्यमिति ॥ अत्र च कॉन्ट, ग्रीन, मिल्लप्रभृतयः पाश्चात्यपण्डिता अपि न विप्रतिपन्ना इत्यपि रहस्यकारैरुपरिष्टादुपवर्णितं तत्रैवाऽऽलोचनीयम् । विस्तारभयान्नात्र प्रपञ्च्यते ॥ इति ॥

अत्र च रहस्यकारैः स्पष्टमेव प्रतिपादितं यल्लोकमतबाहुल्यमिदं न धर्मत्वाधर्मत्वनिर्णये वा न्याय्यत्वान्याय्यत्वनिर्णये वा प्रमाणं भवितुमर्हति । शतशो व्यभिचारात् । एवमेव बाह्यपरिणामात्मकं सुखबाहुल्यादिकमपि न प्रमाणम् । हेतुपरीक्षणमन्तरा तस्यानिर्णायकत्वात् । तथैव बाह्याचारो लोकहितत्परता वा न कर्मसाधुत्वे वा पुरुषसाधुत्वे गमकतया प्रमाणतामर्हतः । मनःशुद्धिरूपोपाधिना दुष्टत्वात् । एवमप्यनुशासनपरिषदो लोकसमूहात्मकत्वेनानुशासनस्य न्याय्यत्वान्याय्यत्वनिर्णयो लोकमतबाहुल्यात्सुखबाहुल्याद्वा संभवतीति प्रतिपादनमेतेषां " दृष्टो धर्मव्यतिक्रमः साहसं च महताम् " इत्युक्तदिशा साहसमेव । ग्रीसदेशस्थ[illegible] नाम्नोल्लेखस्तु कि वा प्रमाणतयाऽभ्युपगन्तव्यमित्यत्र तु रहस्यकाराणां मौनमेव । दृश्यते चेदानीमपि मनुष्याणां [illegible]कान्तादयः । अत एवोक्तम्—

न्याय्यत्वान्याय्यत्वनिर्णयोऽयमध्यात्मबुध्येव वा शास्त्रदृष्ट्या वैव भवति न संख्याबाहुल्येन सुखबाहुल्येन वेत्यप्यभ्युपगन्तव्यमेव । अत एवोक्तं गीतायाम्—

> तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
> ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥

इति । मनुरपि—

> एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः ।
> स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥ १२।११३

नहि ख्रिस्तमहोदयस्य वा साक्रेटीसमहोदयस्य वा वचनोपदेशः सुखसाधकत्वेन न्याय्यः । किंतु शास्त्रज्ञानमूलकत्वात् । शास्त्रस्य प्रमेयमात्रविषयकत्वेन प्रमाणत्वमिति तु प्रतिपादितमेव प्रमाणप्रतिबिम्ब इति नात्रातिशङ्कनीयम् ।

किंच न ज्ञानमात्रेण वा कल्याणेच्छामात्रेण वा सुखबाहुल्येन वा कस्यापि कार्यस्य न्याय्यत्वनिर्णयो योग्यो भवितुमर्हति । एतेषामभावेऽपि शास्त्रसिद्धस्य कार्यस्य न्याय्यत्वनिर्धारणात् । नहि रामचन्द्रेण स्वीकृतो वनवासः सुखबाहुल्येन वा कल्याणेच्छया वा तद्विषयकज्ञानेन वा स्वीकृतः । प्रत्युत स्वस्य सर्वेषां च जनानां दुःखदायकत्वादुपर्युक्तत्वानुसारेण तस्य न्याय्यत्वं तु न केनापि साधयितुं शक्यम् । न वा सीतालक्ष्मणयोस्तदनुगमनं भरतस्य राज्यत्यागपूर्वकं मुनिव्रतं च तथैव न्याय्यमिति समाधातुं शक्यं केनापि । सर्वेषां दुःखदायकत्वात् दुःखेच्छामूलकत्वाच्च । न हि कैकेय्या याचितमित्येतावतैव तत्र सुखसाधनत्वकल्पना संभवति । न वा पित्रादिष्टमित्यपि तादृशी कल्पना । तथा सति विद्याध्ययनार्थं प्रेषणवदत्रापि पितुः संतोष एव स्यात् । प्रत्युत वनवासे जायमानानां दुःखानां कल्पनयैव दुःखितो दशरथः पुत्रविरहेण मृतः । तदत्र कैकेय्या वा नृपस्य वा वनवासप्रस्थितानां रामादीनां वा सर्वेषामिदं कृत्यं न्याय्यमिति केन प्रमाणेन निर्धारणीयम् ? न चान्याय्यत्वमपि सर्वथा कल्पयितुं शक्यम् । तथा सति अन्यायनिवारणार्थमेव धृतदण्डेन दशरथेन सोऽन्यायो निगृहीतः स्यात् । न च दशरथस्यापि कर्तव्यच्युतिः । कर्तव्यपालनार्थमेव तथाकरणात् । न हि राज्ञां वचनभङ्गो न दोषायेति कल्पयितुं शक्यम् । तथा च यदि पाश्चात्यपण्डितानां मतमनुसृत्यैव नीतितत्त्वं निर्धारणीयम् । तदा रामायणगतानामेतेषां पात्राणामिदमनुष्ठानं सर्वथा नीतिपथमतिक्रामेत् । बहूनां दुःखबाहुल्यात् । तस्मादुपर्युक्तोऽयं नीतितत्त्वनिकषः केवलमाधिभौतिकसुखवादिनां देहंभराणां नीतिकञ्चुक एवेत्यत्र न विशयलेशोऽपि । अतश्चाऽऽध्यात्मिकशास्त्रमेव तत्र प्रमाणमित्येवाभ्युपगन्तव्यम् । तदनुसारेण यस्य यदा यद्विहितं येन प्रकारेण, तत्तस्य न्याय्यमित्येव सिध्यति । नोचेद्रामादीनां हरिश्चन्द्रनलादीनां चाऽऽचरणमन्याय्यं स्यात् । अत एवोक्तम्—

स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
विपर्ययस्तु दोषः स्यादेष एव सुनिश्चयः ॥

इत्युक्तं श्रीमद्भागवते संगच्छते । अधिकारश्चात्र शास्त्रनिर्दिष्टो न स्वेच्छया परिकल्पितः । नहि यत्किमपि कार्यं येन केनापि कर्तुं शक्यमित्येतावतैव तत्र तस्याधिकारः । नाहि न्यायालयेऽवकरनिष्कासनं न्यायाधीशेन कर्तुं शक्यमित्येतावता तत्र तस्याधिकारः । किंतु नियुक्तस्य यथावन्नियोगपरिपालनमेव सर्वेषामधिकार इत्येव अधिकारलक्षणम् । नो चेत्सर्वेषां सर्वाधिकारप्रसङ्गात् । एवं चेदानीं प्रवृत्तोऽयमधिकारवादोऽपि जनतायामनर्थकारीति सिध्यति । तदपेक्षया कर्तव्यवादः परं श्रेयान् येन न कलहप्रसङ्गः । अत एवोक्तं गीतायाम्—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥

इति । शास्त्रस्य प्रमेयाव्यभिचारित्वादनतिशङ्कनीयत्वं तु न विस्मर्तव्यम् । एतादृशशास्त्रज्ञानाभावादेव भौतिकसुखदृष्ट्याऽऽत्मानं स्वयंपूर्णंमन्या अपि पाश्चात्या नाद्यावधि मात्स्यन्यायनिवारणसमर्था हिंसापरावृत्ताश्च भवन्ति । तदनुयायीनि राष्ट्राण्यपि स्वायत्ततामाकाङ्क्षमाणानि हिंसाद्वारा परोत्पीडनमेवाभिलषन्ति । अत एव तत्र तत्र दण्डसंस्थास्वायत्ततायां संभूयसमुत्थानं ( पार्टीचा गोंधळ ) विभिन्नं विभिन्नं दृश्यते । न हि प्रजापालनं नामानेकधा विभिन्नं क्वापि शासनशास्त्रे विहितम् । न च पद्धतिभेदाद्भेदः । पद्धतेरप्येकरूपत्वात् । न हि अलब्धलाभो लब्धपरिरक्षणं रक्षितविवर्धनं वृद्धस्य तीर्थेषु प्रतिपादनमिति चातुर्विध्यमन्तरा प्रजापालनं नाम कश्चित्पदार्थः । तत्रालब्धलाभोपाया अपि शास्त्रविहिता एव । न चौर्योत्कोचबलात्कारादयः केषामपि संमताः । ते च नेन्द्रियजयमन्तराऽनुष्ठातुं शक्याः । न चेन्द्रियजयो विद्याविनयाभ्यां विनेति स्वयं विद्याविनीतेनेन्द्रियजयिना च स्वकर्तव्यानुष्ठानेन प्रजास्वपि विद्याविनयाविन्द्रियविजयश्चाऽऽरोप्या इति प्रजापालनस्य सामान्यरूपे किमर्थमयं संभूयसमुत्थानकोलाहल इति तु भगवानेव जानीयात् नीतिविदाम्वरिष्ठो वा । न ह्यध्यात्मवादिभिरेतस्मादन्यत्प्रजापालनं मन्यते । अत एव रघुवंशोऽवनिपमूर्धन्यैः कविकुलगुरुणा कालिदासेन—

त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥

नायकोपवर्णनं च तस्यैव यथा—

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ इति ।

इदानींतनाः संभूयसमुत्थायिनो दण्डधरास्तु

भोगाय संभृतार्थानां लोभाय मितभाषिणाम् ।
अर्थाय विजिगीषूणां लौल्याय गृहमेधिनाम् ॥
शैशवेऽभ्यस्तभोगानां यौवनेऽर्थप्रयासिनाम् ।
वार्धके भोगवृत्तीनां केनाप्यन्ते तनुत्यजाम् ॥
प्रजास्वविनयाधानात् कलहात् तुष्टयभावतः ।
पितृत्वं नीतिर्वैडालव्रतं येषां स्वभावजम् ॥

इति वर्णनपात्राः प्रजावासनापूरकत्वेन स्वात्मानं धन्यंमन्या अन्ते सर्वेषामसंतोषात् कथं वा दण्डाधिकारमर्हन्तीति विचक्षणैर्विचारणीयम् ।

तदिदं कर्तव्यं नीत्यपरपर्यायं देशतः कालतः स्वभावतः संबन्धतश्चावस्थातश्चव्यक्तिशो विभिन्नमेव भवति । नहि यन्मातृविषये कर्तव्यं तदेव पत्नीविषये वा संततिविषये वा सर्वथा समानरूपमिति कोऽपि प्रेक्षावान् मन्यते विना साम्यवादिभिः । नहि देशविषये कर्तव्यतयाऽऽपतितं युद्धादिकमपि भीरूणां विषयासक्तानामर्थकामलोलुपाना वा कर्तव्यतामावहति स्वभावभेदात् । एवमपि बलान्नियुक्ताश्चेदिमे कार्यनाशमेव संपादयेयुः । एवमेव शक्तिरपि सहकारिणी कर्तव्यनिर्णयेऽवश्यमालोचनीया भवति । नोचेज्जैनसौगतखिस्तादिमतमिव सर्वेषामेकरूपेण कर्तव्यादेशे तद्विपरीतानुष्ठानमेव प्रसरेत् । न ह्यात्यन्तिकाहिंसोपदेशेन तत्तन्मतानुयायिनः सर्वभक्ष्यताया निवृत्ताः परिदृश्यन्ते सौगताद्यनुयायिनः । न वाऽऽत्यन्तिकतितिक्षोपदेशात् परोपकारोपदेशाद्वा खिस्ताः परराष्ट्रावलुण्ठनाद्वैराद्युद्धाद्वा परावृत्ताः परस्परप्रेमभाजः संपन्नाः । तस्मात्कर्तव्यमपि शक्त्यपेक्षया मियते । अशक्तस्योपदेशे विपरीताचरणेनाधःपाताधिक्यसंभवात् । इदानीं च धान्यवस्त्रस्वायत्ततानुशासनेन स्पष्टमेवेदं प्रतीयते यदशक्यकर्तव्यानुशासने विपरीतानुष्ठानमधःपाताधिक्यं च भवतीति । तस्माच्छक्त्यशक्तिवशादपि कर्तव्याकर्तव्यभेदो नापलपितुं शक्यः । अत एव ज्ञानेच्छाकृतीनामेकरूपत्वं एव माहात्म्यं महात्मनाम् । तदुक्तम्—

मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ।
मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद्दुरात्मनाम् ॥ इति ।

को हि प्रेक्षावान् पुत्रकलत्रादीनां भर्तृत्वेन स्वात्मानं मन्यमानो बलाच्चेषां कैश्चिद्विनाशं

प्रवर्त्यमाने शक्तोऽपि कमहान एवावस्थयात् । तदा च प्रतीकाराथमादशनामद हिंसात्मकमेवेति अहिंसापि न सर्वदा कर्तव्यमित्येवाऽऽपतति । अत एवोक्तं मनुना—

वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ इति ।

तथाच देशतः प्राप्ताप्यहिंसा कर्तव्यतया विशेषप्राप्तेन भरणेन हिंसात्मकेनापि बाधनीयैव । सोऽयं सामान्यविशेषरूपेण प्राप्तो बाध्यबाधकन्यायः शास्त्रीयो न केनाप्यवधीर्यते । भरणं चाऽऽततायिभ्यो रक्षणं अन्नवस्त्रादिना परिपालनमपि । एवं चावस्थातोऽपि कर्तव्यभेद इत्यपि सिध्यति । बाल्ये पुत्रपरिपालन पितुः कर्तव्यमपि वार्धक्ये तद्विपरीत पितृपालनं पुत्रस्य कर्तव्यम् । एतादृशकर्तव्याकर्तव्यविशेषानिर्णयस्तु न बहूनां सुखबाहुल्यमित्येतावतैव भवितुमर्हतीति तदर्थं शास्त्रमेव प्रमाणीकर्तव्यं प्रेक्षावद्भिः । एतादृशकर्तव्याकर्तव्येनिर्णये केवलं सर्वसाम्यमुपजीव्यैव सर्वेषां समानकर्तव्यनिर्धारणं तु विवेकभ्रंशमेव सूचयतीति स्पष्टं प्रतीयेत ।

तुष्यतु दुर्जन इति न्यायेनाभ्युपेत्यापि साम्यवादमाकाङ्क्षापूरकत्वं च दण्डस्य परमोद्देशं ब्रूमो यत्प्रथमतः सर्वेषां सर्वत्र समानाधिकारोद्घोषणेऽपि पश्चाद्यत्र यस्य योग्यता तत्र तस्य नियोग इति तु योग्यताविशेषो नियोगावसरे गले पतित एव । सोऽयं योग्यताभेदः किं कृत्रिमो मनुष्यकृतः, उताहो निसर्गसिद्धः । नाऽऽद्यः, सर्वसाम्यस्याङ्गीकृतत्वात् । नान्त्यः—निसर्गस्य तादृशभेदकत्वे प्रामाण्यस्य निराकरणात् । तथा चाप्रामाण्ये तन्मूलकज्ञानस्य बाधितत्वेन मिथ्यात्वं स्यात् । एवं च नियोगस्य मिथ्याज्ञानमूलकत्वापत्तौ नियोजकानां मौर्ख्यमेवाभ्युपेतव्यम् । यदि निसर्गस्य योग्यताभेदे प्रामाण्यमभ्युपेयेत, तदा तु तन्मूलकभेदव्यवस्थाया अपि प्रामाण्यापत्तौ तदुच्छेदपूर्वकं साम्यवादाभ्युपगमनामिदं पुनश्चाप्रामाणिकत्वेन बाधितं साम्यवादिनां तदेव मौर्ख्यमभिव्यनक्तीति सेयमुभयतःपाशा रज्जुः । सत्यपि भेदे मूर्खजनानां बाहुल्येन तन्मनोरञ्जनार्थैव केवलमयं साम्यवादाङ्गीकारे ऽप्यभ्युपगमे न साम्यवादिनां विप्रलम्भकत्वापत्तौ चैतत्प्रतिवादित्वं कथं न भवतीति विचारयन्तु विचक्षणाः । ननु नेदानींतना जातिमूलकयोग्यताभेदाः कार्याक्षमत्वान्निसर्गजा इति तान्निराकृत्य नैसर्गिकभेदानुसारिणी कार्यक्षमा व्यवस्था संपादनीयेत्येव साम्यवादाभ्युगम इति चेन्न । अवसरालाभेनापि कार्यादर्शनस्य बाहुल्येनोपलम्भात् । न हि साक्रेटीसमहोदयस्य वा खिस्तमहोदयस्य वा कार्यक्षमता जीवनकाले प्रादुर्भूता । तथापि तत्कार्यस्याद्यावध्युपलम्भेन तस्या अनुमानेन ज्ञायमानत्वात् । तथैव ब्राह्मणादिजातिभिरपि जीवनकालेऽपरिज्ञायमाना संस्कृतिसंरक्षण—आवश्यकयोग्यताविशिष्टपूरणादिकार्यं तु संस्कारेष्वपि अनुस्यूतत्वेनैवानुमीयते । कोऽन्यो ग्रन्थो सहस्रपरकवर्षेभ्योऽप्यतिप्राचीनोऽद्यावध्युपलभ्येत विना वेदेभ्यः । किमत्र निदानम् । किं दण्डाश्रयेण

पुस्तकालयादिकं वा ब्राह्मणानां कर्तव्यबुद्ध्या तदध्ययनं वेति विचारयन्तु विचारकाः। अद्यापि ब्रह्मद्वेषिणोऽपि ब्राह्मणाचारानुकरणे प्रयतन्ते। न चातिजीर्णत्वादेव न तेषामुपयोग इति। उपयोगो हि वासनापूरकत्वेनैव चेन्नोपयोगः। श्रेयःसंपादकत्वेन चेदिदानीमपि तदुपयोगासंभवात्। वासनापूरकत्वमात्रेणाप्युपयोग इत्यभ्युपगमे तु अद्यतनाः सर्वा व्यवस्थाः सर्वाणि चेदानींतनानि शास्त्राणि किं सर्वेषां सर्ववासनापूरकाण्येव वर्तन्ते। किंवा अॅटमबॉम्बप्रभृतीभिः साधनैर्जोपानादिवासनापरिपूर्तिः संजाता वा? महायुद्धेन वा केषां वासना परिपूर्णा का वेत्यपि वक्तव्यम्। अपरेषामपि हिंसासाधनानां भोग साधनानां वा शास्त्राणां प्रचारेणापि यथावत्सर्वेषां वासनापरिपूर्तिः संजायते न वेत्यपि-सूक्ष्मेक्षिकयाऽऽलोचनीयं विचक्षणैः। वयं तु ब्रूमः—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥

इति न्यायेनैतेषां शास्त्राणां कामसंवर्धकत्वेनासंतोषाधायकत्वान्नैव सुखसाधनत्वम्। किमुत वासनापरिपूरकत्वमिति विचारणीयम्। वस्तुतस्तु वासनापरिपूर्तिर्वासनाह्रासोदव भवति। स चेन्द्रियजयद्वारैवेति तदनुरोधेनैव प्रणेयो दण्डः। अत एव दण्डनीतेरर्थशास्त्रत्वेऽपि इन्द्रियनिग्रहशास्त्रत्वम्। तदुक्तमार्यचाणक्येन कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः इति। (अ. ६) मनुरपि—

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति॥
न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥
यश्चैतान् प्राप्नुयात्सर्वान् यश्चैतान्केवलांस्त्यजेत्।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते॥
न तथैतानि शक्यन्ते संनियन्तुमसेवया।
विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः॥
वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥ २।९३–९७

भावस्य दुष्टत्वं च भोगादिविषयसेवाविषयकत्वम्।

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः॥

> इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
> तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥
> वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा ।
> सर्वान् संसाधयेदर्थानक्षिण्वन् योगतस्तनुम् ॥ २।९८—१००

इति इन्द्रियसंयमस्य सर्वार्थसाधकत्वं स्पष्टमाह ॥ एवं च यत्रेन्द्रियनिग्रहः स्यात्तत्सर्वं न्याय्यमिति सिध्यति । नैतावतापि यत्र न्याय्यत्वं तत्र सर्वत्रेन्द्रियनिग्रह इति व्याप्तिः । सत्संग्रहरूपस्य कामस्यासदवग्रहरूपस्य क्रोधस्य च न्याय्यत्वात् । तदुक्तमार्यचाणाक्येन—

> असतां प्रग्रहः कामः कोपश्चावग्रहः सताम् ।
> व्यसनं दोषबाहुल्यादत्यन्तमुभयं मतम् ॥ इति

अत्र चासत्संग्रहरूपकामस्य सदवग्रहरूपक्रोधस्य च व्यसनत्वेन त्याज्यत्वमिति वदता पूर्वोक्तकामक्रोधयोर्ग्राह्यत्वेन न्याय्यत्वमपि बोध्यते । सदसत्त्वे चात्र शास्त्रैकगम्ये एव । तथा च शास्त्रविहितविषयकः कामः क्रोधश्च न्याय्यावेव ।

एतेन—अनुशासनप्रणयनस्य ( कायदे ) प्रवृत्तिपर्यवसायित्वं वा निवृत्तिपर्यवसायित्वमिति शङ्कापि निरस्ता । न सर्वथा प्रवृत्तिपरत्वं वा निवृत्तिपरत्वं वेत्येकान्तेनाभ्युपगच्छामः। इन्द्रियाणां निसर्गत एव विषयप्रवणत्वात्, विषयाणामात्यन्तिकत्यागस्याशक्यत्वात्, विषयप्रतिबन्धेनेन्द्रियसंयमस्यापि संपादयितुमशक्यत्वाच्चैकान्तेन प्रवृत्तिपरत्वे तु सर्वथेन्द्रियजयस्य दुष्करत्वेनानर्थापादकत्वात् । तथैव निवृत्तिपरत्वेऽपि । एवं च यथा जीवनोपयोगिप्रवृत्तिसत्त्वेऽपि मनसो विरागेण निवृत्तिप्रवणत्वं स्यात्तथा किलानुशासनानि प्रणेयानि । तच्च नाध्यात्मिकशास्त्रप्रामाण्यमन्तरेति तदभ्युपेत्याध्यात्मविषयकज्ञानप्रचारपूर्वकमेव प्रवृत्तिर्विधेयाऽनुशासनेन । सोऽयं त्यागपूर्वको भोगः । स एव च समाजस्य समुद्देशः प्रधानतया लक्ष्यीकरणीयोऽनुशासकैः । तदनुरोधेन प्रणीयमानमनुशासनमपि समुचारं योगक्षेमावहमिहामुत्र श्रेयःप्रेयःसंपादकत्वेन जगत्कल्याणकारीति तदनुरोधी दण्डः श्रेयान् । एवं चानुशासनानामापाततः प्रवृत्तिपरत्वेऽप्यन्ततो निवृत्तिपरत्वमित्यवधेयम् ।

एतेनाधुना साम्यवादपुरस्कारेण संकरेऽपि स्वाभाविकयोग्यतावशात्पुनश्च चातुर्वर्ण्यमिदं सुनतिवारयतीति किं वोच्छिन्नं धार्मिकाणामित्यपि व्याख्यातम् । बीजसंकरेण संकरप्राये समाजे कथं वा स्वाभाविकयोग्यताऽपि परिज्ञेया किंवा तत्र गमकमित्यस्य निर्णायकप्रमाणाभावात् । तथा चान्ततो गत्वा सत्यकृतस्वल्पकार्यकरणमेव तत्र गमकमित्यभ्युपगन्तव्यम् । साम्यवादे च सामाजिकं कार्यं नाम सर्वांगीणमनुष्यभोग्यधनसंपादनसंरक्षणसंवर्धनान्येव । तथा च रामचन्द्रवत् पितृमातृवचनपरिपालनतत्परस्य तदर्थं च छिद्रवतो न क्वापि योग्यतेति तादृशानां समाजाद्बहिष्कारे सना-

जहानिरेव स्यात् । नहि यत्किमपि कार्यं स्वाभाविकं तदानीमेव समाजोपयुक्ततामावहति । अभिनिवेशवशात्तदुपयोगस्य ज्ञातुमशक्यत्वात् । नहि शेक्सपियरमहोदयस्य काव्यशक्तेरुपयुक्तता तदानीं ज्ञाता । अतस्तज्जीवनकाले तस्या अनुपयुक्तत्वादेव तस्य जीवनकष्टं सोढव्यमासीत् । एवमेव तत्तत्स्वाभाविकशक्तेरनुपयुक्तत्वे प्राप्ते कथं वा गुणावगुणपरीक्षा साम्यवादे स्यात् । तदभावेऽपि चेत्समाजसुस्थितिस्तर्हि वन्यश्वापदसंघवदयमपि साम्यवादिसमाजो गुणावगुणविवेकहीनः कथं वा न श्वापदत्वमावहेत् । केवलमुदरंभरणं वा इन्द्रियतृप्तिर्वा यदि समाजसमुद्देशस्तर्हि तदर्थमेतावान् वण्डमवन्धाद्यायासोऽपि मा भूत् । निसर्गत एव सर्वेषां जीवनसंभवात् । मात्स्यन्यायस्तत्रापि न परिहीयते । तथा च यदि मनुष्यत्वमभिमन्यते, तर्हि साधुत्वासाधुत्वज्ञानार्थं गुणावगुणविवेकपूर्वकं गुणसंरक्षणसंवर्धनार्थं च किंचिच्छास्त्रं नाम प्रमाणमभ्युपेत्यैव प्रवर्तनीयम् । एष एव न्याय्यः पन्थाः तथा चोक्तम्——

> आहारनिद्राभयमैथुनानि
> सामान्यमेतत्पशुभिर्नराणाम् ।
> धर्मो हि तेषामधिको विशेषः
> धर्मेण हीनाः पशुभिः समानाः ॥ इति ।

अन्यदपि——

> शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः ।
> मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः ॥

इति । ननु नास्त्येवैतादृशं शास्त्रम् । किमत्र प्रमाणमिति चेदनुपलब्धिरेव । किमियमनुपलब्धिस्तवैव वा सर्वेषां वा ? न हि दिवाभीतस्य सूर्यानुपलब्ध्या सूर्यसत्ता बाधिता भवति । अस्ति चोपलब्धिः शास्त्रस्य भारते । न मयाऽङ्गीक्रियते चेत्किं तवाङ्गीकारवशाच्छास्त्रस्य शास्त्रत्वम् ? तव मातापित्रोरनङ्गीकारिणस्तवापि सत्ता न स्यात् । तव स्थितिरेव तव मातापितृगमिकेति चेद्ब्रूषे, तथा सति कार्यवशात्कारणाङ्गीकारो युक्त इत्यपि समतमेव । तथा च पिण्डगतवैचित्र्यान्यथानुपपत्त्या गम्यमानं निसर्गवैचित्र्यमपि बीजगतमनपलपनीयमेव ।

ननु न दृश्यत उत्तरोत्तरं संततिपरम्परायामिति चेद्दत्तोत्तरमेव सकरादिना । तस्मात्कार्यकारणभावानुसारेण निसर्गसिद्धप्रमेयस्यापलापो नाम बिडालव्रतमेव । अतो निसर्गस्य जगत्यकिंचित्करत्वं नास्तीत्यभ्युपगम्य तदनुरोधेन साधुत्वासाधुत्वं पर्यालोच्य तयोर्विवेकेन परिरक्षणमेव प्रज्ञावैशारद्यं मानुष्यं चेति तदनपहायैव प्रवृत्तिः साधीयसी । अतश्च पश्चाद्योग्यतानिर्णयमुखेन मुखविधानमिदं विप्रलम्भकत्वं गमयति । न हि प्रत्यक्षमुपलभ्यमानं परित्यज्य परिकल्पितग्रहणो-

पदेशोऽयं विप्रलम्भकादृते संभवति। प्रत्यक्षानुसारेण विवेकपूर्वकयोग्यतापरिरक्षणे च भवतो किं वोच्छियत इति पर्यनुयोगे किं वोत्तरम्? जनमनोविराग एवेति चेत् प्रज्ञावद्भिः स आदर्तव्यो वा? पृथ्वी वर्तुलेति शास्त्रसिद्धान्तप्रस्थापकेन, सागरात्परतोऽपि भूमिः स्यादिति कल्पनयाऽमेरिकासंशोधकेन च तादृशविरागमधिकृत्यैव यदि प्रवृत्तं स्यात्। स्याद्वा सुवर्णभूमिलाभः शास्त्रोत्कर्षश्चेति मनसि कर्तव्यम्। न हि प्रज्ञावन्तो मूढाननुवर्तन्ते। इदमेव प्रज्ञाफलं यन्मौढ्यापहानं नाम। अत एव शास्त्राभिनिवेशः प्रज्ञावताम्।

यत्तु अनयापनययोर्व्यसनप्रसवभूमित्वान्नयप्रतिष्ठापनेन तयोर्निराकरणस्याऽऽवश्यकत्वात्तस्य च "आत्मवत्सर्वभूतानि यः पश्यति स पश्यति" इति दिशाऽन्योन्यसुखदुःखादिसाम्यमूलकपरस्परयोगक्षेमानुकूलव्यवहाररूपत्वात् साम्यस्य तदनतिरेकान्मानवशास्त्रे वा वैदिकसंप्रदाये वा तदभावाच्च तच्छास्त्रपरित्यागपूर्वकसाम्यवादपुरस्कार एवेदानीमावश्यक इत्युक्तम्।

तत्र ब्रूमः—सत्यमेतादृशसाम्यवादस्याऽऽवश्यकता। तथापि तस्य मानवशास्त्रे वा वैदिकसंप्रदाये वाऽनुपलम्भ इत्यत्र किं वा गमकमिति विचारणीयम्। किंच साम्यदृष्टिमूलको व्यवहार इत्यस्यकोऽर्थः, किं क्रियासाम्य वा क्रियामूलजनकबुद्धिसाम्यं वा परिणामसाम्यं वा सर्वसाम्यंवेत्यपि विचारणीयम्। तत्र साम्यानुपलब्धिश्चेन्न साऽधिकारभेदोपलम्भात्सिध्यति। साम्यवादेऽपि तथापत्तेः। नहि तत्र नाधिकारभेदः। ननु सत्यपि तत्राधिकार भेदे तस्य जन्मसिद्धत्वाभावेन स्वीयक्रियाशक्तिमूलकत्वेन सुसह्यत्वान्नान्योन्यविरागोत्पादकत्वमिति चेत्तर्हि विरागोत्पादकाधिकारभेद एव साम्याभावगमक इति वक्तव्यम्। तत्र विरागो नाम विरुद्धो रागः। रागश्च "मनोऽनुकूलेष्वर्थेषु सुखसंवेदनात्मिका। इच्छा रतिः सा द्विधा स्याद्रतिप्रीतिविभागतः" इति भावप्रकाशवचनानुसारेणानुकूलवेदनीयरूपसुखसंवेदनमेव। तद्विरुद्धदुःखसंवेदनमेव विरागपदवाच्यं भवति। तथा च शास्त्रीयाधिकारभेदो यदि दुःखसंवेदनमेवोत्पादयेत्तदा तु त्याज्य एव स भवति। तत्र प्रतिव्यक्ति मनोऽनुकूलत्वं यद्यपेक्ष्येत, तदा त्वसंभवित्वात्तत्संपादनमशक्यप्रायमेव। न ह्यनभिज्ञानां शास्त्रीयाधिकारभेदो दुःखमुत्पादयतीत्येतावता सुज्ञानामपि तथैवेति वक्तुं शक्यम्। तदत्र शास्त्रज्ञानामनुकूलमज्ञाना प्रतिकूलं स्यात्। अज्ञानामनुकूलं शास्त्रज्ञानां प्रतिकूलं स्यात्। तथा च केषामनुकूलं संपादनीयमिति प्रश्नेऽज्ञानां बाहुल्येन तदनुकूलतासंपादने महाननर्थः समाजदृष्ट्या भवति। न हि रोगिणां पथ्यं प्रियं भवतीत्येतावता वैद्येन कुपथ्यमेवोपदेष्टव्यम्। तथा सति बाल्ये विद्याभ्यासो हि बालानां न प्रियो भवतीति बलाच्छिक्षणप्रचारस्तदनुशासनमपि च न स्यात्। एवमन्यत्रापि मद्यपानां मद्यपाननिर्बन्धशासनादिकमपि न स्यात्। अतश्चागत्या मनसोऽनुकूलत्वानुकूलत्वे परिहाय हिताहितदृष्टिरेवाऽऽलम्बनीया। सा च न शास्त्रमन्तरेति शास्त्रीयशासनमेवानर्थसंभवेऽपि स्वीकरणीयं भवति। न तत्र प्राकृतजनमनोविरागरागौ पर्यालोचनीयावित्येव दण्ड-

संस्थायाः परमं कर्तव्यम् । वस्तुतस्तु यदिदं साम्यं सर्वव्यवहारनिदानमिदानीं जोघुष्यते । तत्र क्रियासाम्यं वा बुद्धिसाम्यं वा परिणामसाम्यं वा भवितुमर्हति । प्रतिपिण्डं क्रियानुकूलशक्तीनां सर्वत्र भेदोपलम्भात् । एवमेव बुद्धिभेदोऽपि सर्वत्र प्रतीयमानो बुद्धिसाम्यं बाधते । परिणामभेदोऽपि क्रियाभेदाद्बुद्धिभेदाच्च सर्वत्रानुभूयते । तदत्र प्रबलतरप्रत्यक्षप्रमाणबाधितत्वादेवैतत्साम्यं जोघुष्यमाणमपि अन्नवस्त्रनियन्त्रणद्वारा सर्वस्वातन्त्र्यापहार्येव भवति । अतश्च समाजोपयुक्तं साम्यं सख्यापरपर्यायमेव भवितुमर्हति नान्यत् । सख्यव्याख्या च भावप्रकाशने यथा—

समानि खानि येन स्युः सुखदुःखानुभूतिषु
तत्सख्यमिति स स्नेहो येन यत्त्रायते परामिति।

एवं च येन परस्परसंरक्षणं स्यात्तदेव सख्यम् । तच्च परस्परसुखदुःखप्रसङ्गे सुखित्वं वा दुःखित्वं समेषाम् । सोऽयं सुखदुःखसमानभावो बुद्धिगत इति बुद्धिसाम्यमित्यभिधीयते । तच्चेत्संपादनीयं तर्हि अध्यात्मशास्त्रसंमतः सर्वात्मभाव एव संपादनीयः । नच स शास्त्रातिक्रमेण संपद्यत इत्यगत्या साम्यवादिभिरपि व्यावहारिकभेदमुपास्यैव शास्त्रोपदिष्टवर्त्मना वर्तितव्यमिति स्वीकरणीयम् ।

तथा च मानवशास्त्रं वा वेदा वैतस्यैव सर्वात्मभावस्य संपादनमेव परमं श्रेय इत्यभ्युपगम्यैव तत्संपादनाय मार्गमादिशन्तीति विदितचरमेव समेषां तत्रापि भारतीयानाम् । यथा चात्र मनुः—

एतद्वोऽभिहितं सर्वं निःश्रेयसकरं परम् ।
अस्मादप्रच्युतो विप्रः प्राप्नोति परमां गतिम् ॥
एवं स भगवान् देवो लोकानां हितकाम्यया ।
धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान् ॥
सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः ।
सर्वं ह्यात्मनि संपश्यन्नाधर्मे कुरुते मनः ।
आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् ।
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम् ॥ १२।११६-११९

इति । वेदे तु तत्र तत्राऽऽत्मवादो विविच्यत इत्यत्र तु नाधिकं विवेचनीयम् । वेदान्तशास्त्रमेव तत्रालम् ।

एतादृशं बुद्धिसाम्यं सख्यापरपर्यायं विना धृतिमतिभ्यां नैव भवितुमर्हति । ततश्च प्रजासु धैर्यमत्योः प्रचारो यथा भवेत्तथैव विद्याविनयाधानाय प्रयतनीयं दण्डधारिभिः । विद्या हि विनयाधाने धैर्यमत्योः साहाय्यमालम्ब्यैव प्रभवति न तद्व्यतिरेकेण । अतश्च नान्तरीयकतया

समुत्पाद्यमाने धृतिमती विद्याया विद्यात्वं गमयतः । एवं च विद्याप्रभावादेव धृतिमत्योरुदयः । विद्या च विनयाधानार्थं पात्रमपेक्षते । तच्च शुश्रूषादिगुणविशिष्टबुद्धिमत्त्वमेव । तदुक्तमार्यचाणाक्येन—

" शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम् "
इति ( अ ५ ) अन्यत्रापि तत्रैव—

" शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणाः शौर्यममर्षः शीघ्रता दाक्ष्यं चोत्साहगुणाः " इति ( अ ९७ )

तथाच विनयाधानार्थमावश्यका प्रज्ञागुणा एव पात्रत्वगमकाः । ते च प्रायः स्वाभाविका एवेति स्वभाव एव पात्रत्वनियामक इति सिध्यति । एवमुत्साहगुणानामपि स्वाभाविकत्वात्स्वभावनियतत्वं ज्ञेयम् । एवं च विनयस्य विद्यामूलकत्वेऽपि स्वाभाविकत्वं नापह्नोतुं शक्यमिति सर्वेषां स्वभावायत्तत्वमगत्याऽङ्गीकरणीयम् । एवमेव धैर्यमत्योरपि विद्याजन्यत्वेऽपि स्वाभाविकत्वं सिध्यति । नहि पर्जन्यन्यायेनेदानीं सर्वत्र विद्याप्रचारेऽपि सर्वथा प्रज्ञा वा धैर्यं वा मतिर्वोत्पद्यमाना दृश्यते । इदमेवात्र निदानं यन्नैसर्गिकं भूमिवैचित्र्यमिति । इदमेवाऽऽलोच्य विद्यातिरिक्तानि प्रज्ञाधृतिकारणानि शास्त्रे परिगणितानि । यथा चात्र भावप्रकाशनम्—

शौर्याद्विज्ञानतः शौचाचाराच्च गुरुभक्तितः ।
श्रुतप्रभावतो व्रीडान्नानार्थाप्तेर्भवेद्धृतिः ॥
प्रियाप्रियाविकारित्वं तदात्वोचितकारिता ।
अप्राप्तातीतनष्टानामलाभेऽनभिशोचनम् ॥

इति । मतिविषये तु

नानाशास्त्रार्थनिष्पन्ना मतिः स्याच्छ्रुतधारिणी ।
संशयच्छेदनैः शिष्यहिताधानार्थदर्शनैः ॥
वर्ण्यते चित्तसंतोषाद्विदग्धव्यवहारतः ॥ इति । (भावप्रकाश प्रथमाधिकारः)

अत्र च येषां न प्रज्ञासामर्थ्यं स्वाभाविकम्, तेषां धृतिलाभस्तु शौचाचारेण गुरुभक्तितश्च भवितुमर्हति । तथा च यथावद्धृतिलाभगमकेन प्रियाप्रियाविकारित्वादिदर्शनेन कियद्वा धैर्यं व्यसनेषु प्रजानामस्तीत्यालोच्यमाने को वा परिणामो दृश्येत इति न प्रज्ञावतामपि हितम् । तथैव मतिविषयेऽपि । अत एव कविकुलचूडामणिरुपवर्णयामास किल भारविः—

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ।

शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलंक्रिया ।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥

इति । एतादृशधृतिमत्योरभावे केऽवाऽनर्थाः प्रभवन्तीति भारते द्वैराज्याङ्गीकारेण द्विषतोऽभिनन्दयद्भिः समाजधुरीणैः सुविशदमेवाऽऽविष्कृतमित्यत्र नाधिकं वक्तुं पारयामः । इदमेवात्र सूचयामो यत्संततिपरम्परायामप्ययं पाशो गले पतितो भारतीयानाम् । न च नासीदत्र कश्चन प्रतीकार इत्यपि वक्तुं शक्यम् । धैर्यमवलम्ब्य यदि कालप्रतीक्षा स्यात्तदा तु प्रतीकारोऽप्याविर्भवेदिति तु सुनिश्चितमुद्घोषयामः । नात्र नीतिशास्त्रविचार इति नाधिकं विलिख्यते। सर्वथा तु स्वाभाविकधृतिमत्योरभावे शौचाचारगुरुभक्त्यादिभिरुपायैर्बाल्यादेव तत्सिद्धिर्यथा स्यात्तथा विधेयमिति शास्त्रसिद्धान्तः । इदानींतु पूर्वजानामाप्तत्व एव विप्रतिपत्तिरिति तद्वाक्विवादो दूरापास्त एव एतच्च बुद्धिवैपरीत्यं यैः संपादितम् । ते हि स्वात्मानं धन्यंमन्याः कृतार्थतामेवावगाहन्ते । अत एव परकृतविकारस्य परिणामो भारविनेत्थमुपवर्णितः—

वीर्यावदानेषु कृतावमर्षस्तन्वन्नभूतामिव संप्रतीतिम् ।
कुर्वन् प्रयामक्षयमायतीनामर्कत्विषामह्न इवावशेषः ॥

इति । अलमत्र प्रसक्तानुप्रसङ्गेन । प्रकृतमनुसरामः ।

सर्वथा तु कार्यानुकूलयोग्यताया धृतिमतिमूलकत्वात् तयोश्च स्वाभाविकत्वात्र स्वाभाविकभेदनिराकरणं कथमपि संभवतीति सिद्धानां भेदानां कार्यकारित्वं यथा स्यात्तथा प्रयत्नः कर्तव्यः । तद्वैपरीत्येन स्वाभाविकभेदसंकरीकरणानन्तरं पुनश्च स्वाभाविकयोग्यताविष्कारपुरस्कारोऽयं विप्रलम्भकत्वमेव गमयति परप्रत्ययनेयबुद्धीनां साम्यवादिनामित्येव सिध्यति । किं बहुना यथा यथाऽयं साम्यवादः परीक्षेत तथा तथा वैषम्यपर्यवसाय्येवेति श्वापदसमाजत्वमेव समाजस्य संपादयेत् ।

एतेन विश्वकुटुम्बवादोऽपि व्याख्यातः । उपर्युक्तदोषाणां तत्राप्यापत्तेः । नहि कुटुम्बैक्यं ध्येयैक्यमन्तरा संभवति । तत्राऽऽधिभौतिकभोगान् पुरस्कृत्य तद्द्वारा साम्यबुद्धिसंपादनेन कुटुम्बैक्यसंपादनं तु गगनकुसुमायमानमेव । सहोदराणामपि कुटुम्बभेददर्शनात् । तथा च सहोदराणामपि बाल्यादारभ्यैकत्र संवृद्धानां यत्र वासनाभेदाद्भोगभेदबुद्ध्या पार्थक्यं भवति । तत्र विश्वेषां जनानां भोगसाम्यप्रदर्शनमात्रेणैक्यसंपादनमिदमतीव प्रामाणिकतां नावहतीति सिद्धान्तोऽयं नैसर्गिकः । तदर्थं चेद्वासनैक्यं संपादनीयम्, तदपि न भौतिकभोग्यसंपत्तिमूलकभोगालम्बनेन संभवतीत्यसकृदुपपादितमेव । अतश्चाऽऽधिभौतिकसाम्यवादमपास्य निसर्गानुसारेणाऽऽध्यात्मिकसाम्यवादश्चेत्पुरस्क्रियेत, तदा तु भोग्यसंपत्तिमूलकभोगवासनायाः शास्त्रप्रदर्शितमार्गेण निग्रहादाध्यात्मिकदृष्टेरुदये ।

सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ६।२९–३२

इति गीताशास्त्रोक्ता साम्यदृष्टिः स्यात् । सैव किल यथावत्साम्यं न तु स्वरूपसाम्यं वा भोगसाम्यं वा क्रियासाम्यं वा । नैसर्गिकभेदविरोधेन दुःसंपादत्वात् । न ह्यलंकाराद्याकाराणां साम्यं तत्क्रियाणां वा तज्जन्यसुखदुःखादीनां वा सत्यपि सुवर्णादिघटकरूपेण साम्ये संपादयितुं शक्यम् । एवं च भौतिकदृष्ट्या निसर्गतः समुत्पद्यमानानां आकाराणां तत्कर्मादीनां च वैषम्यमनपाकृत्य तदनुरोधि तद्घटकपदार्थस्यैव साम्यं सर्वत्रानुस्यूततयोपलभ्यमानमुपजीव्यैव तदनुकूला वासनोत्पादिता साम्यमावहेत् । नान्यथा । सा च सर्वान्तर्यामिणं परमेशमधिकृत्यैव भवितुमर्हतीत्युक्तं पुरस्तात्सविस्तरम् । तथा चाधिभौतिकसाम्यवादापेक्षयाऽऽध्यात्मिकसाम्यवाद एव योगक्षेमावह इति सिध्यति । एवं चाऽऽधिभौतिकभेदानां सत्त्वेऽपि आध्यात्मिकवासनाया एकरूपत्वे वैषम्यापादकत्वाभावान्न रागद्वेषानुबन्धित्वं न वा पुरुषार्थपीडकत्वमिति तादृशभेदापाकरणप्रयत्नमुत्सृज्य सर्वान्तर्यामितत्त्वपुरस्कारेण वासनैक्यसंपादने प्रयत्नो विधेयः शास्त्रदृष्ट्येत्यलमत्र विवेचनेन । सर्वथा तु भौतिकसाम्यवादो वा भौतिकसुखवादो वा न मात्स्यन्यायनिराकरणे समर्थाविति सिद्धम् ।

तथा च स्वाभाविकानां गोअश्वादिभेदानामिव मानुषावान्तरभेदानामपि संकरपरिहारपूर्वकनैसर्गिकशक्त्युद्भावनेन यथावत्कार्यकारित्वसंपादन एव प्रयतितव्यमित्यत्रैव यथावन्मानवता बुद्धिवैशारद्यं चाऽऽविर्भवतीति तन्निराकरणप्रयत्नोऽयं शास्त्रविरोधान्निसर्गविरोधात्केवलबुद्धिपरिकल्पितत्वाच्च वानरतामेवाभिव्यनक्ति ।

## ( पाश्चात्यसमाजपर्यालोचनम् )

यत्तु भारतादन्यत्रैतादृशवर्णजातिविवेकाभावेऽप्यधिभौतिकसमृद्ध्या समभ्युदयो मानुष्यं च यथावद्दरीदृश्यत इति किमर्थं भारत एव तत्परिपालनाग्रहोऽयमित्युच्यते । तत्रेदं पर्यालोचनीयम्— कोऽयमभ्युदयो नाम । किं भोगसंपत्तिबाहुल्यमेवाभ्युदयः, उताहो तन्मूलकसुखबाहुल्यमाहो-

स्विन्मनःसंतोषः ? नाऽद्यः, संपद्बाहुल्येऽपि सुखादर्शनात्। प्रत्युत तद्विषयकवासनामन्तरा विषयप्राप्तौ भोगादर्शनात्। सत्यामपि वासनायां सत्यपि च भोग्यसंपद्बाहुल्ये तद्विरुद्धतदन्ययाविषयकवासनायां दुःखानुभवस्यापि दर्शनात्। किं बहुना–

अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये।
नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥

इत्युक्तदिशा विचार्यमाणे संपद्बाहुल्यमिदं दुःखायैव न सुखायेति सिध्यति। तथा चोक्तम् परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम्–इति। किं च–परसंपत्प्रकर्षो हि हीनसंपदं पुरुषं दुःखाकरोति–इत्यपि निसर्गः। ततश्च भेदवैराविश्वासादिनिदानमिदं संपत्तिबाहुल्यमेव चेदभ्युदयः तदा तु दत्तजलाञ्जलिरेव मानवता स्यात्। न द्वितीयोऽत एव। सुखस्य संपद्बाहुल्यस्य चान्योन्यव्याप्तेरभावात्। नहि संपद्बाहुल्यमस्तीत्येतावता सुखबाहुल्यं स्यादेवेत्यनुमातुं शक्यम्। निवृत्तवासनेषु व्यभिचारात्। अत एवोक्तम्—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ इति।

नापि सुखात्संपत्तेस्तत्साधनत्वस्याप्यनुमानम्। तत्रैव व्यभिचारात्। नहि निवृत्ततृष्णानां विरक्तानां कौपीनमपि परित्यजता नास्त्येवसुखमिति केनापि साधयितुं शक्यम्। जीवनोपलब्ध्या सुखानुमानस्यैव प्रबलत्वात्। आत्यन्तिक एव सुखाभावश्चेज्जीवनमेव न स्यात्। नहि नरकस्थोऽपि जन्तुः मरणमाकाङ्क्षते। तत्रैव सुखोपलब्धेः। एवमेव मरणमङ्गीकुर्वतां जीवतामेतेषां निर्विण्णानामपि विनापि भोग्यसंपदं सुखमस्तीति वक्तव्यम्। तच्च मनःसंतोषादेवेति मनःसंतोष एवाभ्युदयपदवाच्यो वक्तव्यः। स चायं मनःसंतोषो भोग्यसंपत्तिमन्तराऽपि विरक्तेषु वर्तत इति भोग्यसंपद्वैपुल्यमिदं संपाद्यमानमकिंचित्करमेव मानवसुखदृष्ट्या। न च विरक्तानां तदपेक्षाभावेऽपि वासनावतां तदपेक्षा सुखसाधनत्वेन केन निवार्यतामिति वाच्यम्। परितोषसाधनैस्तन्निवारणात्। मनसः परितोष एव किल सुखस्य गमकं प्रमाणम्। यदि च संपत्तिवैपुल्येन सुखं स्यान्मनःसंतोषोऽपि स्यादेव। तथा च न समाजाभ्युदयः संपत्तिवैपुल्येन प्रत्येतुं शक्यः। किंतु प्रजासंतोषादेव। स चायं संतोषः कथं वा प्रजासु वर्तत इति तु राज्ययन्त्रस्वायत्तीकरणार्थं संपाद्यमानेन विविधसंभूयसमुत्थानेनैव ज्ञातुं शक्यते। किंचाल्पादप्यल्पेन जीवननिर्वाहो यत्र, सा समाजरचना युक्ता व अनल्पादनल्पतमं सुखं यत्राऽऽकाङ्क्ष्यते जीवननिर्वाहार्थं सा समाजरचना युक्तेति जिज्ञासायां सुखावधेरनियतत्वाद्विपुलतरसुखाकाङ्क्षा नाम गगनकुसुमायमानैवान्ततः संपद्यते। किंच सर्वेषां

तादृशाकाङ्क्षायां कियदपि दीयमानं वेतनं कर्मकरेभ्यो नेच्छापूरकं स्यादित्यन्ता गत्वा निर्बुद्धानां कर्मकराणां प्राबल्येन भोग्यसंपत्तिनियमनात्मकसाम्यसंपादनमापतति । तत्र च कर्मकराणां को वा। विशेषलाभ इति तु न जानीमः । न हि तेषां भृतिजीवनं विनष्टं भवति, न वा बुद्धिगततारतम्यमूलकः श्रेष्ठकनिष्ठभावोऽपि विलीयते । न वा तन्मूलकयोग्यताभेदोऽपि विनश्यतीति सर्वथाऽन्नवस्त्रनियमनेन साम्यसंपादनमिदमगत्या कर्मकरानेवोद्विजेत् । किंच समाजव्यवस्था हि समाजस्य संतानपरम्परया चिरकालावस्थानार्थमेव किल विधेया भवति न भोगार्थं वा परेषामवलुण्ठनार्थं वा । तथा च शास्त्रदृष्टिमन्तरा चिरंतनत्वं न कदापि सिध्यतीति स्पष्टमेव प्रतिसंतानं विशेषवेतनवितरणानुशासनेन पाश्चात्यसमाजे दृश्यते । समाजान्तर्गत—तत्तत्कार्यकारिणां ह्रासे हि पुनश्च तत्स्थानपरिपूर्त्यर्थमावश्यकः संतानप्रवाहो न पाश्चात्यसमाजे दृश्यते । अत एवानुशासनेन प्रलोभ्य प्राजोत्पादनप्रसङ्गः समापतितः । किंच यन्त्रसामग्र्या संपत्तिवैपुल्यसंपादनमिदं पाश्चात्यानां तज्ज्ञानां युगपद्ध्रासे हि परावलम्बित्वमेवाऽऽपादयतीत्यपि दृष्टचरमेव युद्धादिसमये । तद्वरं तत्तद्व्यवसायिनां संघद्वारा तत्तत्कार्येषु नियोजनम् । किंच यत्र किल व्यवसाये यदा वेतनादिबाहुल्यं वा लाभबाहुल्यं वा तत्रैव युगपद्बहूनां प्रवृत्तौ सर्वेषां लाभहानिरन्ततश्च व्यवसायनाशश्चेति परिणामोऽपि विचारणीयः । अत एव च यान्त्रिकव्यवसायिनः कर्मकराणां सुखेन स्वल्पेन वेतनेन च लाभार्थं कथंकारं प्रवर्तन्त इत्यपि मार्क्समहोदयग्रन्थेन सुविशदमेव। अतश्च पाश्चात्यसमाजरचना हीदानींतनी न मानवतोद्भाविनीति तेनाऽऽक्रन्दितम् । तदर्थमेव च समाजसाम्यवादोऽप्युपस्थापितः । तथापि भक्षितेऽपि लशुने न शान्तो व्याधिः । न हि साम्यवादेन मात्स्यन्यायनिवृत्तिः, न वा निर्बुद्धानां बुद्धिमत्पारतन्त्र्यनाशः, न वा सर्वेषां मनःसंतोषः संभवतीति पुरस्तादेवाऽऽलोचितम् । तस्मात्स्वाभाविकयोग्यतानुसारेण सर्वेषामुचितकार्येषु नियोगे जीवननिर्वाहार्थं वृत्तिनियमने च स्वातन्त्र्येण तत्तद्वृत्तिद्वारा जीवननिर्वाहोपपत्तौ च सर्वेषां समुचितभोगप्राप्तौ तत्र च दण्डद्वारा संकरपरिहारे सर्वेषां जीवनं स्यात्सुखेनेति योग्यैव वर्णजातिविवेकपूर्वकसमाजरचना न संभूयसमुत्थानात्मिकेति सिध्यति ।

न च पाश्चात्यदेशेषु वर्णा एव न सन्तीति । सर्वस्यापि ब्रह्माण्डस्य त्रिगुणात्मकत्वेन तत्रत्यसमाजस्यापि तत्त्वादस्ति तन्मूलको वर्णसंभवः । एवमप्यव्याकृतत्वेनास्पष्टत्वान्न समाजव्यवस्थानुकूलः । तस्यैव शास्त्रदृष्ट्या व्याकरणे तु संभवति खलु तत्राप्येतादृशी व्यवस्था । तदिदं व्याकरणं कथं केन कदा विधेयमित्यत्र तु न वयं प्रभवामः । तत्तच्छासनसंस्थैव किल तत्र प्रमाणमिति तथा शास्त्रदृष्टिमवलम्ब्य स्वभावपरीक्षणादिना विद्याविनयाधानाभ्यां प्रजासु तत्संपादनीयमित्येव सूचयामः । यत्र तु शास्त्रीयदृष्ट्या वर्णोपनयेऽपि न तादृशस्वभावदर्शनं तत्र तु संकर एवोरीकर-

णीयः । अत्र च स्पष्टप्रतिपत्त्यर्थं शुक्रनीतिगतानि कानिचन वाक्यानि वाचकानां पुरत उपस्थापयामः । यथा—

सत्त्वस्य तमसः साम्यान्मानुषं जन्म जायते ।
यद्यदाश्रयते मर्त्यस्तत्तुल्यो दिष्टतो भवेत् ॥ ३६
कर्मैव कारणं चात्र सुगतिं दुर्गतिं प्रति ।
कर्मैव प्राक्तनमपि क्षणं किं कोऽस्ति चाक्रियः ॥३७
न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव च ।
न शूद्रो न च वै म्लेच्छो भेदिता गुणकर्मभिः ॥ ३८
ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किं नु ब्राह्मणाः
न वर्णतो न जनकात् ब्राह्मतेजः प्रपद्यते ॥ ३९
ज्ञानकर्मोपासनाभिर्देवताराधने रतः ।
शान्तो दान्तो दयालुश्च ब्राह्मणश्च गुणैः कृतः ॥४०
लोकसंरक्षणे दक्षः शूरो दान्तः पराक्रमी ।
दुष्टनिग्रहशीलो यः स वै क्षत्रिय उच्यते ॥ ४१
क्रयविक्रयकुशला ये नित्यं पण्यजीविनः ।
पशुरक्षाः कृषिकरास्ते वैश्याः कीर्तिता भुवि ॥ ४२
द्विजसेवार्चनरताः शूराः शान्ता जितेन्द्रियाः ।
सीरकाष्ठतृणवहास्ते नीचाः शूद्रसंज्ञकाः ॥४३
त्यक्तस्वधर्माचरणा निर्घृणाः परपीडकाः ।
चण्डाश्च हिंसका नित्यं म्लेछास्ते ह्यविवेकिनः ॥ ४४
ाक्कर्मफलभोगार्हा बुद्धिः संजायते नृणाम् ।
ापकर्मणि पुण्ये वा कर्तुं शक्तो न चान्यथा ॥
ुद्धिरुत्पद्यते तादृग् यादृक्कर्मफलोदयः ।
ऽहायास्तादृशा एव यादृशी भवितव्यता ॥४६
ाक्कर्मवशतः सर्वं भवत्येवेति निश्चितम् ।
ऽदोपदेशा व्यर्थाः स्युः कार्याकार्यप्रबोधकाः ॥४
ीमन्तो वन्द्यचरिता मन्यन्ते पौरुषं महत् ।
अशक्ताः पौरुषं कर्तुं क्लीबा दैवमुपासते ॥४८

दैवे पुरुषकारे च खलु सर्वं प्रतिष्ठितम् ।
पूर्वजन्मकृतं कर्मेहार्जितं तद्द्विधा कृतम् ॥४९
वलवान् प्रतिकारी स्याद्दुर्वलस्य सदैव हि ।
सवलावलयोर्ज्ञानं फलप्राप्त्याऽन्यथा नहि ॥ ५०
फलोपलब्धिः प्रत्यक्षहेतुना नैव दृश्यते ।
प्राक्कर्महैतुकी सा तु नान्यथैवेति निश्चयः ॥५१
यज्जायतेऽल्पक्रियया नृणां वापि महत्फलम् ।
तदपि प्राक्तनादेव केचित्प्रागिह कर्मजम् ॥५२
वदन्तीहैव क्रियया जायते पौरुषं नृणाम् ।
सस्नेहवर्तिदीपस्य रक्षा वातात्प्रयत्नतः ॥५३
अवश्यंभाविभावानां प्रतीकारो न चेद्यदि ।
दुष्टानां क्षपणं श्रेयो यावद्बुद्धिवलोदयम् ॥ ५४
प्रतिकूलानुकूलाभ्यां फलाभ्यां च नृपोऽप्यतः ।
ईषन्मध्याधिकाभ्यां च द्विधा दैवं विचिन्तयेत् ॥५५
रावणस्य च भीष्मादेर्वनभङ्गे च गोग्रहे ।
प्रातिकूल्यं च विज्ञातमेकस्माद्वानरान्नरात् ॥ ५६
कालानुकूलं विस्पष्टं राघवस्यार्जुनस्य च ।
अनुकूले यदा दैवं क्रियाल्पा सुफला भवेत् ॥ ५७
महती सत्क्रियानिष्टफला स्यात्प्रतिकूलके ।
वालिर्दानेन संवद्धो हरिश्चन्द्रस्तथैव च ॥५८
भवतीष्टं सत्क्रिययाऽनिष्टं तद्विपरीतया ।
शास्त्रतः सदसज्ज्ञात्वा त्यक्त्वाऽसत्सत्समाचरेत् ॥ ५९
कालस्य कारणं राजा सदसत्कर्मणस्त्वतः ।
सुकार्योद्यतदण्डाभ्यां स्वधर्मे स्थापयेत्प्रजाः ॥६०

( शुक्रनीतिसारे १ अध्याये )

अत्र हि सत्त्वतमसोः साम्यान्मानवजन्मेति मनुष्यदेहोपादानत्वं तस्य प्रतिपाद्यते । कारणस्य कार्योत्पादने यत्किंचित्कर्मणोऽवश्यकर्तव्यत्वात्तस्य च कारणानुगुणत्वाच्च तज्जन्यपरिणामोऽपि देहरूपस्तदनुगुण एव भवति । न हि कोऽपि पदार्थः क्षणमपि जातुचिदक्रियः संभवतीत्यादौ मन्ये

चान्ते च भावानां क्रियाशालित्वेन क्रियायाश्च भावगतसामर्थ्यानुगुणत्वेन च भावोत्पत्तेः प्राक्कालिकी वा तदुत्तरकालिकी वा सर्वापि क्रिया कारणानुगुणैव भवति। यथा हि कारणगुणानां कार्यगुणारम्भकत्वमेवमेव कारणगतकर्मणः कार्यगतकर्मशक्त्यारम्भकत्वमपि। अतश्च कारणगतक्रियया यादृशकर्मानुकूलत्वं कार्यस्योत्पादितम्, तादृशकर्मकारित्वमेव कार्यस्य भवति न तद्विपरीतम्। न हि सुवर्णगतकर्मणा समुत्पन्नमङ्गुलीयकं कण्ठे धारयितुं शक्यम्। तादृशकर्मशक्तेस्तत्रानुत्पादात्। एवमेव निसर्गकर्मजन्यपरिणात्मनां नैसर्गिकपदार्थामामपि तत्कर्मानुगुणशक्त्याधानेन तत्तत्कार्यकारित्वनियमात् तत्तत्क्रियायामेव तेषां सामर्थ्यं विनियोगश्चेति सिध्यति। एवं च पदार्थानामपि कर्मजन्यपरिणामात्मकत्वेन कर्मरूपता सिध्यति। तदुक्तं शतपथश्रुतौ—त्रयं वा इदं नाम रूपं कर्म—इति। तथा च सर्वस्यापि स्थावरजङ्गमात्मकस्य जगतः कर्मरूपत्वात्कर्मैव पदार्थविशेषगमकमित्यभ्युपेयम्। एवं च दैवमिति प्राक्तनमिति अदृष्टमिति च यदुच्यते तस्य सर्वथा कर्मस्वरूपानतिरेक एव सिध्यति। न हि वनस्पत्यादिषु वा तिर्यक्श्वापदादिषु वा कर्मजन्यपरिणामातिरिक्तः कश्चन विशेष उपलभ्यते षट्कद्रव्याणां पञ्चमहाभूतानां सर्वत्र साधारण्यात्। नवा तद्विशेषपरीक्षा तज्जन्यकर्मातिरेकेण केवलाकारादिना सर्वत्र भवति। आकारसाधारण्येऽपि कर्मविशेषेण भेदात्। न हि वायुरूपेण सर्वेषां वायूनां साधारण्येऽपि विशेषकार्यकारित्वेन तद्विशेषा न सन्तीति वैज्ञानिका अप्यपलपितुमीशते। एवमेव वनस्पत्यादिष्वपि पत्रकाण्डादिसाधारण्येऽपि तत्तद्विशेषास्तत्तत्कार्यभेदादभ्युपगम्यन्ते। एवमेव पश्वादिष्वपि कार्यभेदादवान्तरविशेषाः सर्वैरप्यभ्युपगता नापलपितुं शक्याः। तथा च मानवेष्वपि सत्यप्याकारस्वरादिसाधारण्ये तत्तद्विशेषाश्चेत्परीक्षणीयास्तर्हि कार्यविशेषादेव नान्यथेति वर्णाना परीक्षा गुणकर्मत एव भवतीति प्रतिपादितम्। अत एव न जात्या ब्राह्मणः कश्चिदित्यायुक्तम्। नैतावता वर्णा न सन्तीति तस्याऽऽशयः। कर्मभेदादेव तत्सिद्धिस्तु अनुपदमेव प्रदर्शिता। न चाऽऽकारादिसाधारण्येऽपि सर्वेषां सर्वकर्मसु शक्तिरस्ति। उत्पादककर्मजन्यपरिणामात्मकत्वेन देहस्य तदनुगुणक्रियासामर्थ्यस्य नियमितत्वात्। अत एव—प्राक्कर्मफलभोगार्हा बुद्धिः संजायते नृणाम्। पापकर्माणि पुण्ये वा कर्तुं शक्तो न चान्यथा—इत्यनुपदमेवोक्तम्। तथा च प्राक्तनकर्मफलभोगानुकूलबुद्धेरुदयस्तावत् गर्भ एव भवतीति गर्भोपादानभूतरक्तरेतसोरपि तदनुगुणत्वं वक्तव्यम्। तथा च तत्तद्भोगानुकूलदेहोत्पत्तिरपि प्राक्तनकर्मणैवेति जातिः सिध्यति। अत एव—।

> बुद्धिरुत्पद्यते तादृक् यादृक्कर्मफलोदयः।
> सहायास्तादृशा एव यादृशी भवितव्यता॥

इत्युक्तम्। सहायाश्च रक्तबीजादय एवेति यादृशकर्मणः फलोपभोगो भोक्तुस्तदनुगुणदे-

ह्स्यैव प्राप्तिरिति सिद्धान्तः सिध्यति । अत एव " अथ य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा" छां. (५।१०।७) इति श्रुतिरूपपद्यते । अत्र हि योनिशब्देन जन्मत एव तत्तद्विशेषानुगुणदेहप्राप्तिरिति सिध्यति । एवं च जातिरपि जन्मसिद्धैव सिध्यति । तथा च प्राक्तनकर्मवशादेव सर्वं भवति । सोऽयं प्राक्तनकर्मवाद एव दैववाद इति जेगीयते । यथा चात्राऽऽपस्तम्बः—

सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम्, ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं वृत्तं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते । इति । गौतमश्च—वर्णा आश्रमाश्च स्वधर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते, विष्वञ्चो विपरीता नश्यन्ति— । इति ।

स्पष्टं चेदं " कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च " इत्युत्तरमीमांसायां कृतात्ययाधिकरणे । ( ब्रह्मसू. ३।१।८ )

अत्र चानुशयशब्दोऽयं भुक्तस्यैव कर्मणः कश्चन शेषो भाण्डलग्नस्नेहशेषवत् अवतिष्ठते इति गमयति । न तु भोगातिरिक्तमन्यत्कर्मेति केषाचिन्मतम् । भाष्यकारस्तु " तस्मादामुष्मिकफले कर्मजाते उपभुक्तेऽवशिष्टमैहिकफलं कर्मान्तरजातमनुशयः " इति वदन्ति । तथा चाऽऽमुष्मिकफलककर्मणामुपभोगेऽप्यैहिकफलककर्मणामवशेषस्तथैवावतिष्ठते । ततश्च जातिविद्यावित्तप्रज्ञाकर्मणामिह जन्मानि प्राप्तिर्भवति । तथा च श्रुत्यन्तरम्—तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च— इति । एवं च श्रुतिगतचरणशब्दोऽप्येतमेवानुशयं सूचयति । एतादृशानुशयमन्तरा जन्मनैव प्रतिप्राण्युच्चावचरूपोपभोगस्यानुपपत्तिरिति स एव तद्भमकतयोरीकरणीयः । तदेव च प्राक्तनं कर्मेति सर्वस्यापि जगत उत्पादकप्राक्तनकर्मान्तरानुपपत्तेस्तदधीनत्वं सिध्यति । जडानामपि जीवभोगायैव निर्माणात् भोगस्य च प्राक्तनकर्माधीनत्वाज्जडसृष्टेरप्यर्थादेव प्राक्तनकर्माधीनत्वमवश्यमेवाभ्युपगन्तव्यम् । अत एवोक्तं—प्राक्कर्मवशतः सर्वं भवत्येवेति निश्चितम्—इति ।

## ( पौरुषवादविचारः )

नन्वेवं जातस्य जन्तोः सर्वा अपि क्रियाः प्राक्तनकर्मानुसारेणैव भवन्ति तदनुगुणाश्चेत्येव सिध्यति । तथा च पापपुण्ययोर्वार्ता निरस्तैव । कामक्रोधादिभावानां स्वभावानां च सर्वेषां प्राक्तनाधीनत्वेन तन्मूलकसुकृतदुष्कृतत्वादिकल्पनाया अनुपपत्तेः नापि शास्त्रानुसारेण पापपुण्ययोर्निर्णयः । निसर्गस्य प्राक्तनकर्मपरिणामात्मकत्वेन तदनुसारिणस्तदुपदेशस्यानुपपत्तेः । न हि पापस्व-

भावस्य पुण्योपदेशेऽपि पुण्यप्रवृत्तेः संभावना । स्वभावविरोधात् । एवं पुण्यस्वभावस्यापि पापप्रवृत्ते-रसंभावना । यत्राप्युपदेशादिना सुकृते प्रवृत्तिः परिदृश्यते, तत्रापि सुकृतप्रवृत्त्यनुगुणमेव प्राक्तनं कल्पनीयं स्यात् । तथा चाजामिलवाल्मीकिप्रभृतीनां प्रथमतः पापकर्मनिरतत्वेन पश्चाच्चोपदेशादिना पुण्यकर्मनिरतत्वेन चोभयकर्मानुगुणं प्राक्तनद्वयं कल्पनीयं वैकमेव प्राक्तनमुभयानुगुणं कल्पनीय-मित्याशङ्का स्यात् । तत्र प्राक्तनद्वयकल्पनायामनेकेषां प्राक्तनकर्मणा युगपदेकदेहारम्भकत्वं कल्प-नीयं स्यात् । तच्चायुक्तम् । एकस्मिन्नेव जन्मनि सर्वप्राक्तनकर्मभोगपरिसमाप्तिप्रसङ्गात् । ततश्चाना-यासेनैव मोक्षप्रसङ्गात् । न च प्रबलतरदेहारम्भकप्राक्तनकर्मानुगुणानामेवानेकेषामेकदेहारम्भकत्वं न तु सर्वेषां प्राक्तनानाम् । तथा च मनुष्यदेहानुगुणानेकप्राक्तनकर्मभिर्मनुष्यदेहारम्भेऽपि तिर्यगा-दिदेहारम्भककर्मणां तथैवावाशिष्टत्वात्तदनुगुणदेहप्राप्तिः स्यादेवेति वाच्यम् । एकस्यैव जीवस्याने-कविधदेहानुगुणप्राक्तनकल्पनायाः प्रतिशरीरं नूतनकर्मारम्भं विनाऽनुपपत्तेः । प्रतिशरीरं प्राक्तनस्यैवो-पभोगस्वीकारेण नूतनकर्मारम्भस्याशक्यत्वात् । न स्वभावो नाम स्वविरुद्धनूतनकर्मारम्भी । नहि शीतं जलमुष्णतासंपादनानुकूलकर्मारम्भकं संभवति । न चोष्णं तेजः शीततानुकूलकर्माऽऽरभते । तथैव जीवोऽपि स्वभावविरोधिकर्मारम्भको नैव भवतीत्यङ्गीकर्तव्यं प्राक्तनवादिना । तथा चैकस्मि-न्नेव जन्मनि सुकृतदुष्कृतोभयकर्मणोरसंभव एव । एतेन उभयविधकर्मानुगुणमेकमेव प्राक्तनं कर्मेति वादोऽपि व्याख्यातः । प्राक्तनस्य स्वभावहेतुत्वात् । स्वभावमूलकत्वाच्च कर्मणां सर्वथा पापपु-ण्यत्वाभावात् । अत एव कालियेनोक्तं श्रीमद्भागवते—

> वयं खलाः सहोत्पत्त्या तामसा दीर्घमन्यवः ।
> स्वभावो दुस्त्यजो नाथ लोकानां यदसद्ग्रहः ॥
> त्वया सृष्टमिदं विश्वं धातर्गुणविसर्जनम् ।
> नानास्वभाववीर्यौजोयोनिबीजाशयाकृति ॥
> वयं च तत्र भगवन् सर्पा जात्युरुमन्यवः ।
> कथं जयामस्त्वन्मायां दुस्त्यजां मोहिताः स्वयम् ॥
> भवान् हि कारणं तत्र सर्वज्ञो जगदीश्वरः ।
> अनुग्रहं निग्रहं वा मन्यसे तद्विधेहि नः ॥ (भा. १०।१६।५६-५९)

एवं च स्वाभाविककर्मणां साधुत्वासाधुत्वाभावान्न तत्र पापपुण्यकथा प्रसरति । तथा च यदि ब्राह्मणादिवर्णानां प्राक्तनकर्माधीनत्वं स्यात् न स्यादेवाजामिलादीनां पापे प्रवृत्तिः । यदि च प्रवृत्तिर्दृश्यते, तर्हि न ब्राह्मणत्वमित्येव वक्तव्यम् । जन्मतो जात्यभ्युपगमे चाजामिलादीनां

पितृतो मातृतश्च ब्राह्मण्यं स्पष्टमेव। एवमेवार्षभाणां क्षत्रियत्वम्। पापकर्मप्रवृत्त्या तु तत्र ब्राह्मण्यानुगुणस्वभावाभावो वा स्वभावस्य विपरीतकर्मारम्भकत्वं वा कर्मणि पुरुषस्वातन्त्र्यमपि वा परिकल्पनीयमेवागत्या। तत्र नाऽऽद्यः। अनुपपत्तेः। न हि मातापित्रोः शुद्धत्वे संस्काराभावादिसंकरकारणाभावे विरुद्धस्वभावमपत्यं संभवति। कारणभेदाभावे कार्यभेदानुपपत्तेः। नापि स्वभावस्य विपरीतकर्मारम्भकत्वम्। स्वभावत्वव्याघातात्। अतश्चान्ततःकर्मणि किमपि पुरुषस्वातन्त्र्यमेव कल्पनीयम्। इदमेव च पौरुषम्। तथा च सत्यपि प्राक्तनकर्मणि पुरुषकारवशाच्छुभाशुभकर्मोत्पत्तिसंभवेन शुभे प्रवर्तयितुमशुभान्निवर्तयितुं चारऽऽब्धाः शास्त्रोपदेशा अपि नाफला इति सिध्यति शास्त्रानुसारिणी पापपुण्यव्यवस्था। नो चेत्सर्वमिदं विफलमेव। एवं च सत्यपि प्राक्तनकर्मवशाज्जातिलाभे न तावता कार्यकारित्वम्। तदन्यजातेरपि तत्कार्यकारित्वसंभवात्। एवं तत्कार्यकारित्वेन तज्जातेरनुमानमिदं व्यभिचरितमेव। नापि ताज्जातित्वेन तत्कार्यसामर्थ्यमपि सिध्यति। पुरुषकारेण सोपाधित्वात्। तथा च पौरुषमालम्ब्य येन केनापि यत्किमपि कार्यं कर्तुं शक्यमित्यतो गुणकर्ममूलकमेव वर्णजातिपरिकल्पनं युक्तम्। अत एवोक्तं शुक्रनीतौ न जात्या ब्राह्मणः कश्चिदित्यादि।

अयं भावः— पूर्वोक्तापस्तम्बगौतमादिवचनेभ्यः श्रुतिवचनेभ्यश्च पिण्डगतकार्यतारतम्यमूलकानुमानेन च पिण्डकारणीभूतप्राक्तनकर्मानुशयसिद्धौ तादृशानुशयस्यैव जातिकर्मविद्यावित्तकुलादिकारणत्वसिद्धौ चैकस्मिन् जन्मनि तादृशानुशयमूलके जातिकर्मप्रज्ञादीनामन्योन्यानुगुणत्वमेव स्यान्न परस्परविरोधित्वम्। न हि जात्युत्पादकानुशयस्त्वन्यः, प्रज्ञाकर्माद्युत्पादकानुशयस्त्वन्य इति कल्पयितुं शक्यम्। पूर्वोक्तवचनविरोधात्। तथा चाजामिलादीनामार्षभाणां चैकाशीतीनां जायन्तेयानां स्वजातिविरुद्धचण्डालब्राह्मणादिजातिकर्मकारिता कथमुपपद्येत। न चेन्द्रियविषयसंपर्कात्तदुत्पन्नरागद्वेषमूलिका तत्तत्कर्मकारितेति वक्तुं शक्यम्। प्राक्तनकर्मवशाज्जन्मजातिविरुद्धकर्मादिषु रागद्वेषानुदयस्य पश्वादिषु प्रत्यक्षतयोपलम्भात्। एवं च वचनबलाज्जात्यादिकारणं प्राक्तनं बलवत्तरमित्यभ्युपगन्तव्यं वा प्रत्यक्षोपलभ्यमानजातिविरुद्धकर्मकारित्वेन कर्मणि क्रियमाणे जातिनिरपेक्षं विषयसंपर्कजन्यरागद्वेषमूलकं स्वातन्त्र्यं वा पौरुषापरपर्यायं कल्पनीयमिति विचिकित्सायामुभयमप्यभ्युपेयमित्येव शुक्रनीतिसिद्धान्तः। तदुक्तम्—

> प्राक्कर्मवशतः सर्वं भवत्येवेति निश्चितम्।
> तदोपदेशा व्यर्थाः स्युः कार्याकार्यप्रबोधकाः॥
> धीमन्तो वन्द्यचरिता मन्यन्ते पौरुषं परम्।
> अशक्ताः पौरुषं कर्तुं क्लीबा दैवमुपासते॥
> दैवे पुरुषकारे च खलु सर्वं प्रतिष्ठितम्।
> पूर्वजन्मकृतं कर्मेहार्जितं तद्द्विधा कृतम्॥ इति॥

मनुरपि—

सर्वं कर्मेदमायत्तं विधाने दैवमानुषे ।
तयोर्दैवमचिन्त्यं स्याद्विधाने मानुषे क्रिया ॥ इति ॥

एवमन्यत्रापि महाभारतादिषु । तत्र प्राक्तनकर्मणः कार्यैकगम्यत्वेनाचिन्त्यत्वं पौरुषविधानस्य प्रत्यक्षत्वेन विचारणीयत्वमीति प्रत्यक्षपौरुषविधानस्यैव प्राबल्यं परिकल्प्य तदनुसारेण सर्वेऽपि व्यवहाराः प्रवर्तनीया इति मनोराशयः । तथा च सत्स्वपि जात्यादिभेदेषु न तदनुसारिणी व्यवस्था, अपि तु तत्तत्कर्मानुसारिण्येवेति पातित्यप्रायश्चित्तदण्डादिव्यवस्था सुपपन्ना भवति । तथा च तत्तत्कार्यकारित्वाभावे जात्यादीनामकिंचित्करत्वमेव । चाणाक्यमतेऽप्येवमेव ।

शुक्रनीतिमते तु प्राक्तनक्रियमाणयोः कर्मणोः प्रबलदुर्बलभावोऽयं चिन्त्यत्वाचिन्त्यत्वमात्रेण नैव भवितुमर्हति । कामक्रोधादिना सर्वेषां सर्वकर्मशकत्वात् । अत एव शूद्रकादीनां तपःप्रवृत्तिरप्युपपद्यते । किं तु तत्तत्कर्मज्ञानात् तत्फलप्राप्त्या च यस्य कस्यापि कर्मणः प्राबल्यं वा दौर्बल्यं सुविज्ञेयं भवति । तत्र फलोपलब्धिस्तावन्न तात्कालिकी कालान्तरभावित्वात्फलस्येति न प्रत्यक्षहेतुर्नो सिध्यति । ज्ञानं तु कर्मकाल एव सुविज्ञेयमितितत्तत्कर्मज्ञानद्वारैव व्यवस्था विधेया । अतश्च यत्र कर्मणि यस्य यादृशं ज्ञानं तत्र तस्य नियोगे सुव्यवस्थेति कर्मज्ञानद्वारैव सर्वापि व्यवस्था सिध्यति । तथा च तादृशज्ञानमूलककर्माणि क्रियमाणे फलतारतम्येन ईषन्मध्याधिकभेदेन दैवस्यापि त्रिधा विचारो भवति । तत्र यत्कर्मानुगुणं ज्ञानस्य यादृशमाधिक्यं तदनुगुणप्राक्तनस्यापि तादृशमाधिक्यं परिकल्पनीयम् । तथा सति दैवपौरुषयोः साद्गुण्यसंपत्तिः । तदनुसारेण जात्यादिकं व्यवस्थापनीयमिति ।

एवमपि न सुव्यवस्था भवितुमर्हति । सत्यपि ज्ञाने सत्यामपि च तन्मूलकक्रियाप्रवृत्तौ फलवैपरीत्यदर्शनात् । अतश्च कर्मगतसाधुत्वासाधुत्वे प्रथमतो विचार्य सत्कर्मणि सर्वेषां प्रवृत्तिर्विधेया । फलस्य तु कालदैवनियत्यादिकारणाधीनत्वेनाचिन्त्यत्वमेव । सत्क्रियापि दानादिर्बलिहरिश्चन्द्रादिष्वानिष्टफलैव निष्पन्ना । असत्क्रियापि रावणादीनामैहिकेष्टफलदायिनी परिदृश्यते । तथा च फलादेव यदि ज्ञानतारतम्यं क्रियातारतम्यं तन्मूलकापिण्डतारतम्यं च परिकल्प्येत, हरिश्चन्द्रादीनां सत्क्रियाज्ञानाभावः परिकल्पनीयः स्यात् । रावणादीनां च तदाधिक्यं कल्पनीयं स्यात् । किंबहुना रामायणगतानां दशरथादीनां सर्वेषामज्ञत्वापत्तिः । अतश्च सर्वमप्येतादृशं तारताम्यपरिकल्पनं विहाय शास्त्रतः कर्मणां सदसत्त्वं निर्धार्य तदनुसारिणी व्यवस्था विधेया । एवं च सत्यपि कर्मसु पुरुषस्वातन्त्र्ये शास्त्रानुसारिणी प्रवृत्तिरेव पौरुषपदवाच्या भवति । तथा च विहितेषु प्रवृत्ति-

निषिद्धेभ्यो निवृत्तिश्च दैवपौरुषयोर्बलाबलत्वं गमयति । इमे हि प्रवृत्तिनिवृत्ती नेन्द्रियनिग्रहमन्तरा भवितुमर्हत इतीन्द्रियनिग्रह एव बलाबलनिर्णायकः । अतश्च शास्त्रानुसारेण जन्मत एव जात्यादिकं स्वीकृत्य तद्विरुद्धकर्मप्रवृत्तौ च तत्र पूर्वोक्तान्यतमसंकरकल्पनैव ज्यायसी । अतश्च तादृशसंकरनिवारणमेव राज्ञां परमो धर्म इत्येव शुक्रनीतेरभिप्रायः । अत एव— बलवान् प्रतिकारी स्याद्दुर्बलस्य सदैव हि इति बलाबलविचारमुपक्रम्य—

> भवतीष्टं सत्क्रियया ऽनिष्टं तद्विपरीतया ।
> शास्त्रतः सदसज्ज्ञात्वा त्यक्त्वाऽसत्सत्समाचरेत् ॥
> कालस्य कारणं राजा सदसत्कर्मणस्त्वतः ।
> सुकार्योद्यतदण्डाभ्यां स्वधर्मे स्थापयेत्प्रजाः ॥

इत्युपसंहृतमन्ते । एवं चाजामिलादीनां प्रबलतरकामाद्यधीनत्वेन विकर्मप्रवृत्तिः सूपपन्ना । जातिगतस्वभावात्तु दैवमूलकादन्ते भगवन्नामस्मरणेन महापुरुषसंवादश्रवणाद्दुपरतिरपि सूपपन्ना भवति। कामादिमूलकत्वादेव तत्कर्मणो विकर्मत्वम् । हरिश्चन्द्रादीनां तु सर्वस्यापि कर्मण इन्द्रियनिग्रहपूर्वकत्यागमूलकत्वान्न विकर्मत्वमिति सर्वं सूपपन्नं भवति । शूद्रकस्य ब्राह्मी तपःप्रवृत्तिस्तु लोभमूलकत्वादेव विकर्मेति तन्निवृत्तिः कृता श्रीरामचन्द्रेण । अत एव पापानां लोभमूलकत्वमुपवर्णितं महाभारते शान्तिपर्वणि १५८ अध्याये । तथाच शास्त्रीयसदसत्त्वमपि इन्द्रियनिग्रहमूलकमेवेति कृत्स्नमपि शास्त्रमिन्द्रियनिग्रहपरमेव । अतश्च धर्मपूर्वकप्रजापालनं नामेन्द्रियानिग्रहपूर्वकप्रजापालनमेव । अतश्च राज्ञां प्रजानामिन्द्रियनिग्रहो यथा भवेत्तथैवानुशासनानि विधेयानि न स्वेच्छया वा प्रजेच्छयेति सिध्यति । एतेनजन्मजातिसिद्धान्तोऽयं न शास्त्रविरुद्धो वा प्रजोपपीडको वेति सिद्धम् । यस्तु जातिमूलक उच्चावचभावः, सोऽपि न व्यवहारप्रतिबन्धकः । नहि वयमपि जातिमात्रब्राह्मणो यस्मिन् कस्मिन्नपि कार्ये नियोक्तव्य इति मन्यामहे । किं तु तत्तत्कार्यानुकूलशक्तिमत एव तत्र तत्र नियोग इत्येव मन्यामहे । यत्र तु पूर्णमेव व्यक्तिस्वातन्त्र्यमाहारविहारादिषु यत्र च सर्वेषां जातिमात्राणामेव विनियोगावसरस्तत्र परं जन्मजातिप्राधान्यमभ्युपेयमित्येव शास्त्रतात्पर्यमित्येवास्माकं मतम् । किंबहुना यत्र ब्राह्मणनियोगोऽत्यावश्यकस्तत्र तादृशब्राह्मणालाभे तत्कार्यकारिणोऽन्यजातीयस्यापि नियोगःकर्तव्य एव । न ह्यश्वेन गन्तव्ये तादृशाश्वलाभाभावे वृषभेण वाऽन्येन वा वाहनेन न गन्तव्यमिति कोऽप्याचक्षीत । तथा च व्यावहारिके दृष्टफलके कर्मणि योग्यतापूर्वक एव विनियोगः । अदृष्टमात्रफलके तु कर्मणि जातेरेव विनियोगः । तत्र तादृशाधिकारस्य शास्त्रैकगम्यत्वात् । फलस्याप्रत्यक्षत्वेन तदुत्पादकज्ञानाक्रियात्मकयोग्यताया अपि अप्रत्यक्षत्वात् । क्षत्रियवैश्यधर्माणां तु प्रायो दृष्टादृष्टफलकत्वेन दृष्टफलपुरस्कारेणैव तेषामनुष्ठानस्योपदेशाच्च न जातेः प्राधान्यम् । तथा च भृत्यपरीक्षायां शुक्रनीतौ—

भृत्यं परीक्षयेन्नित्यं विश्वास्यं विश्वयेत्सदा ।
नैव जातिर्न कुलं केवलं लक्षयेदपि ॥२।५४
कर्मशीलगुणाः पूज्यास्तथा जातिकुले नहि ।
न जात्या न कुलेनैव श्रेष्ठत्वं प्रतिपद्यते ॥ २।५५
विवादे भोजने नित्यं कुलजातिविवेचनम् ।

इति केवलजातिकुलपुरस्कारो न श्रैष्ठ्यसंपादक इति न तन्मूलको नियोग इति स्पष्टमभिहितम् । तथा च न जातिवादोऽयं राष्ट्रोपघातक इत्यपि तत्रैव यथा राष्ट्राङ्गमाधिकृत्य—

स्वस्वधर्मपरो लोको यस्य राष्ट्रे प्रवर्तते ।
धर्मनीतिपरो राजा चिरं कीर्तिं स चाश्नुते ॥
भूमौ यावद्यस्य कीर्तिस्तावत्स्वर्गे स तिष्ठति ।
अकीर्तिरेव नरको नान्योऽस्ति नरको दिवि ॥
नरदेहाद्विना त्वन्यो देहो नरक एव सः ।
महत्पापफलं विद्यादाधिव्याधिस्वरूपकम् ॥
स्वयं धर्मपरो भूत्वा धर्मे संस्थापयेत्प्रजाः ।
प्रमाणभूतं धर्मिष्ठमुपसर्पन्त्यतः प्रजाः ॥
देशधर्मा जातिधर्माः कुलधर्माः सनातनाः ।
मुनिप्रोक्ताश्च ये धर्माः प्राचीना नूतनाश्च ये ॥
ते राष्ट्रगुप्त्यै सधार्या ज्ञात्वा यत्नेन सन्नृपैः ।
धर्मसंस्थापनाद्राजा श्रियं कीर्तिं प्रविन्दति ॥
चतुर्धा भेदिता जातिर्ब्रह्मणा कर्मभिः पुरा ।
तत्तत्सांकर्यासांकर्यात्प्रतिलोमानुलोमतः ॥
जात्यानन्त्यं तु सम्प्राप्तं तद्वक्तुं नैव शक्यते ।
मन्यन्ते जातिभेदं ये मनुष्याणां तु जन्मना ॥
त एव हि विजानन्ति पार्थक्यं नामकर्मभिः ।
जरायुजाण्डजा स्वेदोद्भिज्जा जातिः सुसंग्रहात् ॥
उत्तमो नीचसंसर्गाद्भवेन्नीचस्तु जन्मना ।
नीचो भवेन्नोत्तमस्तु संसर्गाद्वापि जन्मना ॥
कर्मणोत्तमनीचत्वं कालतस्तु भवेद्गुणैः ।
विद्याकलाश्रयेणैव तन्नाम्ना जातिरुच्यते ॥ ३।६–१

इति चतुर्थाध्याये तृतीयप्रकरणे । तत्रैव चतुर्थप्रकरणेऽपि—

कदाचिद्बीजमाहात्म्यात्क्षेत्रमाहात्म्यतः क्वचित् ।
नीचोत्तमत्वं भवति श्रेष्ठत्वं क्षेत्रबीजतः ॥
विश्वामित्रो वसिष्ठश्च मतङ्गो नारदादयः ।
तपोविशेषैः संप्राप्ता उत्तमत्वं न जातितः ॥
स्वस्वजात्युक्तधर्मो यः पूर्वैराचरितः सदा ।
तमाचरेच्च सा जातिर्दण्ड्या स्यादन्यथा नृपैः ॥
जातिवर्णाश्रमान् सर्वान् पृथक् चिन्हैः सुलक्षयेत् ॥ ३७—३९ इति ।

एभिश्च वचनैः स्पष्टमिदं प्रतीयते यन्न जन्मसिद्धजातीनामपलापे शुक्रनीतेस्तात्पर्यम्, नवा जातीनां पूर्वकर्मानुशयमूलकत्वेऽपि विप्रतिपत्तिः । न वा संकरादिमूलकावुत्कर्षापकर्षावपि न भवत इत्यपि तात्पर्यम् । किंतु व्यवहारनये यथा—

सूक्ष्मो हि भगवान् धर्मः परोक्षो दुर्विचारणः ।
अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेत् ॥

इति वचनानुसारेण प्रत्यक्षपरिणामादिकमालोच्यैव निर्णयः क्रियते । तथाऽत्रापि जातिपरीक्षायां प्रत्यक्षकार्यानुकूलज्ञानकर्मादिसामर्थ्यमालोच्यैव तत्तत्कर्मसु नियोगः कर्तव्यो भृत्यानां न जातिमात्रेणैवेत्येव शुक्रनीतेरभिप्रायः। कथमन्यथा विवाहाहारयोः कुलजातिपर्यालोचनमिति, कुलजातिदेशधर्माणां परिपालनं तत्तज्जात्युचितपुरातनधर्मेषु तत्तज्जातीनां प्रवर्तनमन्यथा दण्ड्यत्वं चेत्यादिकमनुशिष्टं संगच्छेत । तस्मान्नृपेण कर्मसु भृत्यानां नियोगावसरे न जन्मजातिरपेक्षणीया । जातीनां तदनुकूलानुशयानां चातीन्द्रियत्वेन दुष्परीक्षणीयत्वात् । कदाचित्संकरस्यापि संभवाच्च । अतः प्रत्यक्षकार्योपयुक्तसामर्थ्यमिन्द्रियनिग्रहादिकमेवाऽऽलोचयितुं शक्यमिति तत्पुरस्कार एव श्रेयान् । धर्मशास्त्रेऽपि नैतादृशप्रसङ्गे जातिश्रैष्ठ्यं कुत्राप्यादरणीयतयोपादिष्टम् । प्रत्युत जातिमात्रोपजीविनां भिक्षुकाणां राष्ट्रोपघातकानां विष्ट्यादिनियोग एवेत्युक्तमेव पुरस्तात् । यथा च भारतवचनैः शुक्रनीतिवचनानामेकवाक्यता सिद्धा । धर्मशास्त्रोक्तानां पूर्वनिर्दिष्टानां संकराणामभ्युपपत्तिरत एव सिध्यति । बीजक्षेत्रसंकरजातेरुच्चत्वनीचत्वविषये परं कुत्रचिद्विप्रतिपत्तिर्वर्तते । सत्रानुलोमप्रतिलोमादिविवाहानां कलिवर्ज्यवचनानुसारेणेदानीं सर्वथा वर्जनीयत्वमेव युक्तमुत्पश्यामः । एतच्च विवाहप्रकरणे स्फुटीभविष्यति । व्यभिचारजातानां तु सर्वथाऽन्याय्यत्वमधर्म्यत्वं च सर्वैरप्यवश्यमेवोरीकर्तव्यम् । नो चेद्विवाहसंस्थैव न स्यादिति तु मनसि कर्तव्यं समाजस्वास्थ्यवादिभिर्नरपुंगवैः । नात्राधिकं विविच्यते । तथा च विवाहसंस्थोच्छेदे समाजस्य

समाजत्वमेव न स्यात् । केवलं चतुष्पदां संघवद्द्विपदां पशूनामेव संघः स्यात्समाजः । अत एव कोशे—"पशूनां समजोऽन्येषां समाजस्तु सधर्मिणाम्" इति समजः समाजश्चेति शब्दद्वयमुपात्तं भेदकमित्यलं पल्लवितेन ।

## ( दैववादविचारः )

इदं सर्वं प्राक्तनकर्मविरुद्धकर्मणोऽपि रागद्वेषादिना संभवात् तत्र च पुरुषस्वातन्त्र्यात्मूलकपौरुषवादमभ्युपेत्य विवेचितम् । वस्तुतस्तु सर्वेषां भावानां कर्ममयत्वेन प्राणिदेहानामपि तथात्वात् कियद्वा स्वातन्त्र्यं कर्मणि पुरुषस्य संभवतीति विचार्यमाणे न कथमपि पुरुषस्वातन्त्र्यमित्येव सिध्यति । तथाहि—रत्यरत्युपरत्यात्मकवासनाजनकत्वात्सर्वेषां भावानां त्रिगुणात्मकत्वं तु पूर्वमेव प्रपञ्चितम् । भोगाश्च दृष्टश्रुताः स्वविषयवासनामेव दृढीकुर्वन्ति बृंहयन्तीति च नापिहितम् । दृष्टःपदार्थोऽसंनिधानेऽप्यन्तश्चक्षुषा तथैव स्मर्यत इति सर्वानुभवसिद्धम् । एवमेवेतरेन्द्रियानुभूतपदार्थानां श्रुतानां च भावानां स्मरणमपि न विप्रतिपन्नम् । सोऽयं स्मरणानुकूलः संस्कारः पदार्थानां छायाचित्रवदन्तःकरणे यथा निधीयते, तथैव कर्मजन्यसंस्कारोऽप्यन्तःकरणेऽवतिष्ठत इत्यपि तत्तत्कर्मकरणादवयवानामनुमीयते । अन्यथा विशेषगत्यादिशिक्षणवत्सैनिकानां गिलनचलनवलनादिकर्मणोऽपि शिक्षाविधेया स्यात् । जातमात्रस्यैव बालस्येष्टखाद्यगिलनमनिष्टखाद्यानिःसारणं च जिह्वाद्यवयवैः क्रियमाणं तदनुकूलसंस्कारं गमयति । धान्यबीजादिष्वपि तथैव भूमिरसादानादिकं परिदृश्यते । एवं च रत्यरतिविरत्यादिवत्तदनुकूलाक्रियाशक्तिरपि स्वाभाविकी दृश्यमाना उत्पादकक्रियासंस्कारजन्यैवेत्यकामेनाप्यूरीकर्तव्यम् । नो चेत्सर्वत्र सर्वक्रियाकारित्वं स्यात् । नहि सर्वेषां भावानामवयवानां वा सर्वक्रियाकारित्वं कुत्राप्युपलभामहे । तथा च रत्यरत्युपरत्युत्पादकत्वमिव तदनुगुणक्रियाकारित्वमपि भावान्तरापेक्षया प्रतिनियतमित्येव सिध्यति । न ह्युष्ट्रस्य प्रीतिजनकाः कण्टका मनुष्याणामपि प्रीतिं जनयन्त्यास्वादे । एवं च जिह्वादीनां प्रीत्यनुकूलव्यापारेऽपि मानुषोष्ट्रदेहेषु कश्चिद्विशेषोऽङ्गीकरणीयः । केवलं रसानुभवजनकत्वमेव चेज्जिह्वादीनां तदा तु न कश्चिद्विशेषः स्यात् । तस्माद्रसनेन्द्रियसाम्येऽपि तदभिव्यञ्जकजिह्वाद्यवयवविशेषस्तत्कर्मविशेषश्चावश्यमभ्युपेयः । सोयं विशेषो न जन्मान्तरभाविकर्मजन्यः । देहस्याऽऽदौ सिद्धत्वात् । नापि शिक्षाजन्यः पूर्वसिद्धत्वात् । तस्माज्ज्ञानक्रियाशक्तीनां देहारम्भकप्राक्तनकर्मजन्यत्वमेव सिध्यति । नो चेत्कार्यमात्रस्यापि निर्हेतुकत्वापत्तिः । तत्र देहारम्भकं कर्म कीदृशमिति विचारे तु न शास्त्रमन्तरा किमपि प्रमाणं तत्र पश्यामः । कार्यलिङ्गकानुमानेन तदनुगुणकारणसिद्धावपि न तद्विशेषः सिध्यति । नापि

प्रत्यक्षस्यापि प्रसरः । अतश्च प्रमाणान्तरानधिगतार्थप्रमापकत्वात्तद्विषयकश्रुतिवाक्यमेव तत्र प्रमाणमिति कर्मविपाकोऽयं सर्वथा शास्त्रैकगम्यः सिध्यति । तथा च "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" इति श्रुत्या ज्ञानशक्तिः क्रियाशक्तिर्भोगसंस्कारश्च प्राक्तनस्तत्रोत्पत्तावेवानुवर्तन्त इति सिध्यति । ज्ञानशक्तिश्च सत्त्वगुणः । सत्त्वात्संजायते ज्ञानमितिवचनात् । क्रियाशक्तिश्च रजः "लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा" इतिवचनात् । पूर्वप्रज्ञा च तत्तद्विशेषेषु इष्टानिष्टज्ञानम् । तच्च प्रागनुभवजन्यसंस्कारवशादुपादेययोनिसंबन्धेऽभिव्यज्यते । तथा च सर्वेषां देहानां त्रिगुणात्मकत्वं सिध्यति । अत एव पापपुण्ययोः साम्ये मनुष्यदेहप्राप्तिः वैषम्ये त्वितरदेहप्राप्तिराम्नायते । शुक्रनीतावपि सत्त्वतमसोः साम्यमेव मनुष्यदेहकारणमाम्नातम् । मनुस्तु रजोगुणाधिक्यमेव मानवदेहप्राप्तिकारणमाह । एवं च यथाकथमपि भवतु त्रैगुण्यं तु सर्वेषां संप्रतिपन्नमेव । नहि सत्त्वतमसोः साम्ये रजोगुणस्यात्यन्ताभाव इति शुक्रनीतेरभिप्रायः । त्रिगुणात्मकत्वबोधकवचनैः शतशो विरोधात् । अतश्च सत्त्वतमसोः साम्येन रजोगुणाधिक्यमेव गम्यते । तत्रापि प्रतिगुणमधममध्यमोत्तमत्वैस्त्रैविध्यमिति मानुषेष्वपि त्रिविधं मनुराह । तद्यथा—

देवत्वं सात्त्विका यान्ति मनुष्यत्वं च राजसाः ।<br>
तिर्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥<br>
त्रिविधा त्रिविधैषा तु विज्ञेया गौणिकी गतिः ।<br>
अधमा मध्यमाऽग्र्या च कर्मविद्याविशेषतः ॥<br>
स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः ।<br>
पशवश्च मृगाश्चैव जघन्या तामसी गतिः ॥<br>
हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः ।<br>
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ।<br>
चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः ।<br>
रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः ॥<br>
झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः ।<br>
द्यूतपानप्रसक्ताश्च जघन्या राजसी गतिः ॥<br>
राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः ।<br>
वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥<br>
गन्धर्वा गुह्यका यक्षा विबुधानुचराश्च ये ।<br>
तथैवाप्सरसः सर्वा राजसीषूत्तमा गतिः ॥<br>
तापसा यतयो विप्रा ये च वैमानिका गणाः ।

नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः ॥
यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः ।
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥
ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च ।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥ १२।४०-५० इति ।

एवं च रजःप्रधानमानवदेहेऽपि गुणाना न्यूनाधिकभावात्तत्तद्गुणाविर्भावकाले तदनुगुणकर्मसंभवात्संभवति पुनश्च पापपुण्यात्मकमुभयमपि कर्मेति न जात्युत्पादककर्मणैव तदनुगुणकर्ममात्रस्यैव प्रादुर्भाव, इति संभवति जातिब्राह्मणस्यापि जातिविरुद्धं कर्म । नैतावता तत्र प्राक्तनकर्मभेदः । जात्यादिसर्वविधभोगप्राप्त्यनुकूलस्यैकस्यैव प्राक्तनस्याभ्युपगमेऽपि सर्वविधकर्मोपपत्तावनेकविधप्राक्तनकल्पनाया अन्याय्यत्वात् । नापि पापपुण्याद्यभावप्रसङ्गः । कर्मस्वाभाव्यवत्तद्गतीनामपि स्वाभाविकत्वेन गतिगतसाधुत्वासाधुत्वाभ्यां तदुपपत्तेः । नापि शास्त्रवैयर्थ्यम् । साधुत्वासाधुत्वज्ञानद्वाराऽन्योन्योपमर्दनिवारणपरत्वाच्छास्त्रस्य सावकाशत्वात् । न च निवारणमपि प्राक्तनवशात्स्वाभाविकमेवेति वाच्यम् । निवारणस्य निवृत्त्यनुकूलव्यापारत्वस्यास्वीकारात् । किं तु परस्परानुपमर्देनावस्थानरूपत्वं तस्याभ्युपेयते । तथा च न कस्यापि प्रवृत्तिर्वा निवृत्तिर्वा शास्त्रेण क्रियते । किं तु साधुत्वासाधुत्वबोधनेन यत्र यस्याभिरुचिस्तत्र तेनावस्थेयमित्येव शास्त्रेण बोध्यते । न च शास्त्रव्याघातः । स्वाभाविकावस्थानेनैव प्रवृत्तिनिवृत्त्योः सिद्धौ तन्मूलकशास्त्रत्वोपपत्तेः । नहि स्वभावविरुद्धा प्रवृत्तिर्वा निवृत्तिर्वा कस्यापि केनापि कर्तुं शक्या किं तु नानाप्रकृतिकपदार्थसंमर्दे परस्परोपपीडनसंप्राप्तौ यथावदवस्थापनं सर्वेषां यथा स्यात्तथा शास्त्रेण सर्वेषां साधुत्वासाधुत्वमेव बोध्यते । अत एव—

" सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ "

इत्यादिवचनान्युपपद्यन्ते । नापि प्राक्तनभोगमात्रेण परिसमाप्तिः । कर्मणः कर्मान्तरजनकत्वस्य स्वीकारात् । अतश्च कर्मभोगयोर्बीजवृक्षन्यायेनानादिकार्यकारणभावान्नानवस्था नवाऽन्योन्याश्रयो वेति कर्मप्रवाहस्यानादित्वेन जगतोऽप्यनादित्वमेव । एवं च अजामिलादीनामाचरणमपि प्राक्तनकर्मानुगुणमेव । नहि ब्राह्मणजातिमात्रकारणीभूतेन कर्मणा विरुद्धं कर्म नारभ्यते इति वक्तुं शक्यम् । सत्त्वगुणप्रादुर्भावेऽपि रजस्तमसोः संसर्गेण प्राबल्यात् तन्मूलकविरुद्धकर्मणोऽपि संभवात् । न ह्यर्जुनस्य तात्कालिककार्पण्यमूलकयुद्धपराङ्वृत्तिः क्षत्रियत्वं न गमयतीति केनापि वक्तुं शक्यम् । नापि स्वात्मविक्रयो हरिश्चन्द्रस्य शूद्रभावं गमयति । एवं च प्राक्तनकर्मवशादेव सर्वप्रवृत्त्युपपत्तौ तत

एव च जातिसिद्धिरपि भवति । तथा च संकरवादा निखिला अपि साधुत्वासाधुत्वबोधनद्वारा प्रकृत्यवस्थानमेव समुचितं परस्परोपपीडापरिहारादिति बोधयन्ति । जगच्चक्रस्य मनुष्यानधीनत्वेन तदनुसरणमेव मानवानां न्याय्यं नतु स्वबुद्धिपरिकल्पनानुसरणमित्येव शास्त्रस्याभिसंधिः । अत एव च पञ्चाग्निविद्या पुरा क्षत्रियायत्तैवाऽऽसीत्क्षत्रियपरम्परयैवोपदेशादित्युक्तं संगच्छते । तेषां च परिपालनाधिकारात् परिपालनस्य च यथास्वभावावस्थापनानतिरेकात् । तदुक्तं छान्दोग्ये—

**तं ह चिरं वसेत्याज्ञापयामास । तं होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ इति ३।७ ॥**

वैद्यकशास्त्रेऽप्ययं प्रकृतिवादः स्वीकृत इति तु पूर्वमेव सुश्रुतसंहितानुसारेण विवेचितम् । प्रकृतिश्च स्वभाव इत्यनर्थान्तरम् । तथा च स्वभावस्य देहारम्भकप्राक्तनकर्मजन्यत्वात्प्राक्तनमेव बलवदिति प्राक्तनकर्मापरपर्यायदैववादिनां मतम् । उभयथापि व्यवहारे कार्यानुकूलसामर्थ्यपर्यालोचनं त्वावश्यकमिति सत्यपि जातीनां जन्मसिद्धत्वे न तन्मात्रेण दृष्टफलको व्यवहारः सिध्यति । अतश्च व्यवहारे केवलजातेरकिंचित्करत्वमेव । यत्र तु देहदण्डादिषु जातिमात्रेण विशेष उपदिश्यते तत्र तस्य केवलादृष्टफलकत्वेन व्यवहारे न कापि हानिः । इदमेव च दैवं, अदृष्टनाम्ना जगन्निर्वाहकमित्यदृष्टाभिधानं मीमांसकैरभ्युपेयते । तथा च दैववादे यथावदवस्थित्यर्थं पौरुषवादे चेन्द्रियनिग्रहार्थं शास्त्रानुसरणमेव न्याय्यमिति उभयथापि शास्त्रप्रामाण्यमव्याहतमेव ।

अत्रायं निष्कर्षो यज्जगति सर्वेषामपि यथाकथमपि कस्मिन्नपि विषये दुःखित्वदर्शनात्, उच्चावचभोगवैचित्र्यदर्शनाच्च तत्कारणीभूतः प्राक्तनकर्मविपाकोऽवश्यमेवाङ्गीकरणीयो भवति । नो चेत्पुरुषकारेण सर्वेषां सर्वदा सुखित्वमेव स्यादिति दुःखवार्ताऽपि न स्यात् । सोऽयं दुःखानुभवो न निष्कारणं भवितुमर्हति । कार्यस्य सकारणत्वनियमात् । कार्यत्वं चास्य कादाचित्कत्वात्प्रत्यक्षमेव । नहि पतिपत्नीपुत्रादिमरणजन्यं दुःखं पौरुषेण हातुं शक्यम् । न वाऽल्पप्रयासेन सुखप्राप्तिः क्वापिदृश्यमाना सर्वत्र साधयितुं शक्या । न वा प्रयत्नशतैरपि अलभ्यमानं सुखं पौरुषेण संपादयितुं शक्यम् । अतश्चागत्या तादृशसुखदुःखानुकूलप्राक्तनकर्मैव तत्र कारणत्वेन कल्पनीयं स्यात् । यत्तु महाभारते शान्तिपर्वणि प्रल्हादाजगरसंवादे १७९ तमेऽध्याये स्वभाववादपुरस्कारेण शमः प्रतिपादितः । तत्रापि स्वभावस्य कर्मविपाकात्मकत्वेनान्ततः प्राक्तनकर्ममूलकत्वमेवाभिप्रेतम् । अत एव अन्ते—

तदिदमनुनिशम्य विप्रपातं
पृथगभिपन्नमिहाबुधैर्मनुष्यैः ॥
अनवसितमनन्तदोषपारं
नृषु विहरामि विनीतरोषतृष्णः ॥ ३६ ॥

इति सर्वस्यापि जगत आत्मातिरिक्तत्वेन विशिष्टमपातकारित्वादेशतः कालतो गुणतश्च परिच्छेदशून्यत्वान्न तत्र दोषबुद्धिर्वा तृष्णा वा कर्तव्येति प्रतिपादितम् । यदि च स्वभाववाद एव तस्य पर्यवसानं स्यात्तदा तु तत्तत्स्वभावनियतत्वाद्भावानां देशकालगुणपरिच्छेदोऽपि स्यादित्युक्तमसंगतमेव स्यात् । स्वभावस्य कर्मरूपत्वे तु कर्मविपाकानामानन्त्येन वैचित्र्येण च कुत्र कदा कीदृशो विपाक इति परिच्छेत्तुमशक्यत्वादपरिच्छेदो युक्त एव । अत एवाऽऽनुशासानिके पर्वणि प्रथमाध्याये गौतमीलुब्धकव्यालमृत्युकालसंवादे गौतमीपुत्रस्य मृत्युकारणत्वं व्यालमृत्युकालैः कर्मोपरि निक्षिप्याऽऽत्मनो निरपराधित्वं सिद्धान्तितम् । तदुक्तम्—

> कर्मदायादवान् लोकः कर्मसंबन्धलक्षणः ।
> कर्माणि चोदयन्तीह यथाऽन्योन्यं तथा वयम् ॥ ७३ ॥
> यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति ।
> एवमात्मकृतं कर्म मानवं प्रतिपद्यते ॥ ७४ ॥
> यथा छायातपौ नित्यं सुसंबद्धौ निरन्तरम् ।
> तथा कर्म च कर्ता च संबद्धावात्मकर्मभिः ॥ ७५ ॥

इति । अत्र च यथा मृत्पिण्डो न विना कर्म स्वयमेव परिणमते, किंतु कर्तुः कर्मणः संस्कारवशादेव । तथैव जगदिदं सर्वं कर्मवशादेव परिणतमत एव कर्मसंबन्धलक्षणमेव तत् ।तथा च कर्तुः कर्मैव मृत्पिण्डादनेकाकाराणां प्राप्तिकारणमेवमेव जगति तत्तत्पदार्थानां सुखदुःखोत्पादकानां प्राप्तिकारणमपि प्राप्तिकर्तुः कर्मैवेति सर्वोऽप्ययं लोकः कर्मदायादवान् सिध्यति । यथा हि पितृपैतामहरिक्थस्य भोगाधिकारः पुत्रादिष्विति ते दायादाः । तथैव लोकोऽयं कर्मणैव दायादवानिति कर्मरूपं दायं भजतीत्यर्थः । एवं च छायातपवत्कर्म च कर्ता च नित्यसंसक्ताविति व्यक्तिनियतं प्राक्तनं कर्मैव तत्तद्व्यक्तीनां सुखदुःखतदुत्पादकपदार्थप्राप्तेः कारणमित्येवाङ्गीकर्तव्यम् । केवलपौरुषवादे तु सर्वेषां पौरुषेण सुखित्वं स्यात् । तथा च प्राक्तनकर्मस्वीकारमन्तरा न जगत उपपत्तिरिति विज्ञानवादिभिरप्यन्ततो जगदुत्पादकं कर्म नैसर्गिकं वा प्राकृतिकं वाऽभ्युपेयम् । तत्र कस्य पदार्थस्य केन सह कदा कथं च संयोगे विप्रयोगे वा कीदृशः परिणामो भवतीत्यालोचनमेव विज्ञानविषयः । तत्रेष्टपरिणामजनकस्य कर्मणो ग्राह्यत्वमनिष्टपरिणामजनकस्य कर्मणो हेयत्वं निर्धारणीयम् । परंचोत्पत्त्यनन्तरं तस्य पदार्थस्य उत्पादककर्मविरुद्धकर्मकारित्वं तु न कथमपि कोऽपि वैज्ञानिकः प्रत्याययितुं शक्नोतीति विज्ञानवादोऽयं कर्मविपाकविज्ञानमेवेत्यालोचनीयं तज्ज्ञैः ।

एवमपि न पुरुषकारस्य सर्वथा निरवकाशत्वम्। प्राक्तनकर्माभिव्यञ्जकत्वेन सावकाशत्वात्। तदुक्तं महाभारते आनुशासनिकपर्वणि षष्ठेऽध्याये—

युधिष्ठिर उवाच—

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
दैवे पुरुषकारे च किंस्विच्छ्रेष्ठतरं भवेत् ॥ १ ॥

भीष्म उवाच—

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वसिष्ठस्य च संवादं ब्रह्मणश्च युधिष्ठिर ॥ २ ॥
दैवमानुषयोः किंस्वित्कर्मणोः श्रेष्ठमित्युत ।
पुरा वसिष्ठो भगवान् पितामहमपृच्छत ॥ ३ ॥
ततः पद्मोद्भवो राजन् देवदेवः पितामहः ।
उवाच मधुरं वाक्यमर्थवद्धेतुभूषितम् ॥ ४ ॥

ब्रह्मोवाच—

नाबीजं जायते किंचिन्न बीजेन विना फलम् ।
बीजाद्बीजं प्रभवति बीजादेव फलं स्मृतम् ॥ ५ ॥
यादृशं वपते बीजं क्षेत्रमासाद्य कर्षकः ।
सुकृते दुष्कृते वापि तादृशं लभते फलम् ॥ ६ ॥
यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम् ।
तथा पुरुषकारेण विना दैवं न सिध्यति ॥ ७ ॥
क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम् ।
क्षेत्रबीजसमायोगात्ततः सस्यं समृध्यते ॥ ८ ॥
कर्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः ।
प्रत्यक्षं दृश्यते लोके कृतस्यापकृतस्य च ॥ ९ ॥
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं फलति सर्वत्र नाकृतं भुज्यते क्वचित् ॥ १० ॥
कृती सर्वत्र लभते प्रतिष्ठां भाग्यसंयुताम् ।
अकृती लभते भ्रष्टः क्षते क्षारावसेचनम् ॥ ११ ॥
तपसा रूपसौभाग्यं रत्नानि विविधानि च ।
प्राप्यते कर्मणा सर्वं न दैवादकृतात्मना ॥ १२ ॥

तथा स्वर्गश्च भोगश्च निष्ठा या च मनीषिता ।
सर्वं पुरुषकारेण कृतेनेहोपलभ्यते ॥ १३ ॥
ज्योतींषि त्रिदशा नागा यक्षाश्चन्द्रार्कमारुताः ।
सर्वे पुरुषकारेण मानुष्याद्देवतां गताः ॥ १४ ॥
अर्थो वा मित्रवर्गो वा ऐश्वर्यं वा कुलान्वितम् ।
श्रीश्चापि दुर्लभा भोक्तुं तथैवाकृतकर्मभिः ॥ १५ ॥
शौचेन लभते विप्रः क्षत्रियो विक्रमेण तु ।
वैश्यः पुरुषकारेण शूद्रः शुश्रूषया श्रियम् ॥ १६ ॥
नादातारं भजन्त्यर्था न क्लीबं नापि निष्क्रियम् ।
नाकर्मशीलं नाशूरं तथा नैवातपस्विनम् ॥ १७ ॥
येन लोकास्त्रयः सृष्टा दैत्याः सर्वाश्च देवताः ।
स एष भगवान् विष्णुः समुद्रे तप्यते तपः ॥ १८ ॥
स्वं चेत्कर्मफलं न स्यात्सर्वमेवाफलं भवेत् ।
लोको दैवं समालक्ष्य उदासीनो भवेन्ननु ॥ १९ ॥
अकृत्वा मानुषं कर्म यो दैवमनुवर्तते ।
वृथा श्राम्यति संप्राप्य पतिं क्लीबमिवाङ्गना ॥ २० ॥
न तथा मानुषे लोके भयमस्ति शुभाशुभे ।
यथा त्रिदशलोके हि भयमन्येन जायते ॥ २१ ॥
कृतः पुरुषकारस्तु दैवमेवानुवर्तते ।
न दैवमकृते किंचित्कस्यचिद्दातुमर्हति ॥ २२ ॥
यथा स्थानान्यनित्यानि दृश्यन्ते दैवतेष्वपि ।
कथं कर्म विना दैवं स्थास्यति स्थापयिष्यतः ॥ २३ ॥
न दैवतानि लोकेऽस्मिन् व्यापारं यान्ति कस्यचित् ।
व्यासङ्गं जनयन्त्युग्रमात्माभिभवशङ्कया ॥ २४ ॥
ऋषीणां देवतानां च सदा भवति विग्रहः ।
कस्य वाचा ह्यदैवं स्याद्यतो दैवं प्रवर्तते ॥ २५ ॥
कथं तस्य समुत्पत्तिर्यतो दैवं प्रवर्तते ।
एवं त्रिदशलोकेऽपि प्राप्यन्ते बहवो गुणाः ॥ २६ ॥

आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
आत्मैव ह्यात्मनः साक्षी कृतस्याप्यकृतस्य च ॥ २७ ॥
कृतं वाऽप्यकृतं किंचित्कृते कर्मणि सिध्यति ।
सुकृतं दुष्कृतं कर्म न यथार्थं प्रपद्यते ॥ २८ ॥
देवानां शरणं पुण्यं सर्वं पुण्यैरवाप्यते ।
पुण्यशीलं नरं प्राप्य किं दैवं प्रकरिष्यति ॥ २९ ॥
पुरा ययातिर्विभ्रष्टश्च्यावितः पतितः क्षितौ ।
पुनरारोपितः स्वर्गं दौहित्रैः पुण्यकर्मभिः ॥ ३० ॥
पुरूरवा च राजर्षिर्द्विजैरभिहितः पुरा ।
ऐल इत्यभिविख्यातः स्वर्गं प्राप्तो महीपतिः ॥ ३१ ॥
अश्वमेधादिभिर्यज्ञैः सत्कृतः कोसलाधिपः ।
महर्षिशापात्सौदासः पुरुषादत्वमागतः ॥ ३२ ॥
अश्वत्थामा च रामश्च मुनिपुत्रौ धनुर्धरौ ।
न गच्छतः स्वर्गलोकं सुकृतेनेह कर्मणा ॥ ३३ ॥
वसुर्यज्ञशतैरिष्ट्वा द्वितीय इव वासवः ।
मिथ्याभिधानेनैकेन रसातलतलं गतः ॥ ३४ ॥
बलिर्वैरोचनिर्बद्धो धर्मपाशेन दैवतैः ।
विष्णोः पुरुषकारेण पातालसदनः कृतः ॥ ३५ ॥
शक्रस्योद्गम्य चरणं प्रस्थितो जनमेजयः ।
द्विजस्त्रीणां वधं कृत्वा किं दैवेन न वारितः ॥३६ ॥
अज्ञानाद्ब्राह्मणं हत्वा स्पृष्टो बालवधेनच ।
वैशंपायनविप्रर्षिः किं दैवेन न वारितः ॥ ३७ ॥
गोप्रदानेन मिथ्या च ब्राह्मणेभ्यो महामखे ।
पुरा नृगश्च राजर्षिः कृकलासत्वमागतः ॥ ३८ ॥
धुन्धुमारश्च राजर्षिः सत्रेष्वेव जरां गत. ।
प्रीतिदायं परित्यज्य सुष्वाप स गिरिव्रजे ॥ ३९ ॥
पाण्डवानां हृतं राज्यं धार्तराष्ट्रैर्महाबलैः ।
पुनः प्रत्याहृतं चैव न दैवाद्भुजसंश्रयात् ॥ ४० ॥

तपोनियमसंयुक्ता मुनयः संशितव्रताः ।
किं ते दैवबलाच्छापमुत्सृजन्ते न कर्मणा ॥ ४१ ॥
पापमुत्सृजते लोके सर्वं प्राप्य सुदुर्लभम् ।
लोभमोहसमापन्नं न दैवं त्रायते नरम् ॥ ४२ ॥
यथाग्निः पवनोद्धूतः सुसूक्ष्मोऽपि महान् भवेत् ।
तथा कर्मसमायुक्तं दैवं साधु विवर्धते ॥ ४३ ॥
यथा तैलक्षयाद्दीपः प्रह्रासमुपगच्छति ।
तथा कर्मक्षयाद्दैवं प्रह्रासमुपगच्छति ॥ ४४ ॥
विपुलमपि धनौघं प्राप्य भोगान् स्त्रियो वा ।
पुरुष इह न शक्तः कर्महीनो हि भोक्तुम् ॥
सुनिहितमपि चार्थं दैवतै रक्ष्यमाणं ।
पुरुष इह महात्मा प्राप्यते नित्ययुक्तः ॥ ४५ ॥
व्ययगुणमपि साधुं कर्मणा सश्रयन्ते ।
भवति मनुजलोकाद्देवलोको विशिष्टः ॥
बहुतरसुसमृध्या मानुषाणां गृहाणि ।
पितृवनभवनाभं दृश्यते चामराणाम् ॥ ४६ ॥
न च फलति विकर्मा जीवलोके न दैवं ।
व्यपनयति विमार्गं नास्ति दैवे प्रभुत्वम् ॥
गुरुमिव कृतमग्र्यं कर्म संयाति दैवं ।
नयति पुरुषकारः संचितस्तत्र तत्र ॥ ४७ ॥
एतत्ते सर्वमाख्यातं मया वै मुनिसत्तम ।
फलं पुरुषकारस्य सदा संदृश्य तत्त्वतः ॥ ४८ ॥
अभ्युत्थानेन दैवस्य समारब्धेन कर्मणा ।
विधिना कर्मणा चैव स्वर्गमार्गमवाप्नुयात् ॥ ४९ ॥

एभिश्च वचनैरिदमेव गम्यते यद्दैवसत्तायामङ्गीकृतायामपि न पुरुषकारमन्तरा दैवफलप्राप्तिरितिदैवामिदं बीजरूपं पौरुषभूमिमपेक्षते । तथा च कृतेऽपि पौरुषे यदि नेष्टफलप्राप्तिस्तदैव विपरीत दैवकल्पना संभवति । इदं तु स्पष्टमेव यत्पौरुषमेव दैवाभिव्यञ्जकमिति पुरुषकारप्रवृत्त्यैव दैवावगतिः । एवं च पुरुषकारे प्रयत्नो विधेयः । स चायं पुरुषकारो नाम शास्त्रविहितेषु प्रवृत्तिः शास्त्रनिषिद्धेषु निवृत्तिरिति विधिनिषेधप्रवृत्तिनिवृत्तिभ्यां दैवस्य तन्मूलकस्वभावस्य च परीक्षा विधेया।

यथा भूमौ सर्वविधसस्यसंपादनानुकूला शक्तिः सत्यपि नोप्तेषु यवेषु गोधूमाङ्कुरं जनयति । एवं पुरुषकारोऽपि सर्वफलसमर्थोऽपि दैवानुयोगि फलमेव जनयति न तद्विरुद्धमिति शास्त्रतः प्रवृत्तिर्वा निवृत्तिर्वा विधेयैव । पर्जन्यन्यायेन हि प्रवृत्तिनिवृत्तिविधायकमपि शास्त्रं न दैवमतिवर्तत इति दैवानुसारमाशयं गृहीत्वैव शास्त्रस्य प्रवृत्तिनिवृत्ती भवतः । एवं च पुरुषकारोऽयं दैवाभिव्यञ्जकत्वादेवाऽऽवश्यक इति भारताशयः ।यदि च दैवान्यथाकारित्वमेव स्यात्पौरुषस्य, तदा तु

" नाभुक्त्वा क्षीयते कर्म कल्पकोटिशतैरपि

इति सिद्धान्तव्याघातात्कृतहान्यकृताभ्यागमप्रसङ्गः स्यात् । तथा च जन्मत एवोपलभ्यमानं भाववैचित्र्यमनुपपन्नमेव स्यात् । अतश्च पूर्वोक्ताशयपरिकल्पनमेव वरम् । अत एवाग्रे तत्रैव सप्तमाध्याये—

येन येन शरीरेण यद्यत्कर्म करोति यः ।
तेन तेन शरीरेण तत्तत्फलमुपासते ॥
यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां भुंक्ते जन्मनि जन्मनि ॥
न नश्यति कृतं कर्म सदा पञ्चेन्द्रियैरिह ।
ते ह्यस्य साक्षिणो नित्यं षष्ठ आत्मा तथैव च ॥ ७।३-५

इत्यनुरूपमेवोक्तं सङ्गच्छते । अन्यथा हि पुरुषकारस्य स्वातन्त्र्येण फलजनकत्वे कृतस्य प्राक्तनस्य दैवाख्यस्य नाश एव स्यात् । तस्मान्न पुरुषकारस्य स्वातन्त्र्यमित्येवाभ्युपेयम् । शास्त्रं तु पर्जन्यन्यायेन शुभाशुभकर्मविपाकबोधकमिति यथास्वभावं परिगृह्यते सर्वैरिति न तद्वैयर्थ्यमपि ।

इदमन्यदत्र विचारणीयं यज्जडरूपकर्मणः दैवफलं जनयति नवेति । तत्र जडस्य न दैवजनकत्वमिति तु न्यायसिद्धान्तो, ईश्वरेणाधिष्ठितमिदमपि कर्मसु स्वतन्त्रेव प्रतिभाति तत्कृत दैव अतः कर्मणोऽपि प्रवर्तकेन । यदि च चेतनकृतं तर्हि तु चेतनस्य स्वातन्त्र्येण दैवफलं पुरुषकारं ऽपि तेनैव प्राप्तिः स्यात् । यदि च प्राक्तनकर्माधीनमेव तस्य दैवफलम्, तर्हि तु चेतनस्य जडापत्तेन स्वातन्त्र्यमनुपपन्नं कर्माधीनत्वं न स्यात् । न हि चेतन जडापत्त्यैव कार्यकारि । अतो नु जडाधिष्ठाननिरपेक्ष [illegible] तत्र गीयते—

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् । इति
[illegible] — " ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया "

इति स्मृतिरपि ।

" एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते " ( कौषी. ३।८ )

इति श्रुतिवादाश्च कर्मनिरपेक्षमेव चेतनस्य प्रवर्तकत्वं प्रतिपादयति । तथा च परमेश्वरे वैषम्यनैर्घृण्यापात्तिरपि । तदत्र किमीशेच्छा वा दैवं वा पुरुषकारो वा प्रवृत्तौ तन्मूलकशुभाशुभकर्मविपाके च प्रधानं कारणमिति त्ववश्यमेव विचारणीयम् ।

अयमत्र सिद्धान्तो यन्न जडस्य प्रेरकत्वं स्वातन्त्र्येण । चेतनसंनिधाने तु जडस्यापि प्रेरकत्वमयोगोलकसंनिधानेऽयस इव । यद्वा चेतनस्यैव प्रेरकत्वम् । परंतु न तत्स्वातन्त्र्येण किंतु कर्मापेक्षयैवेति जडाधीनमेव । नैतावता स्वातन्त्र्यहानिर्वा सर्वशक्तिमत्त्वव्याघातो वा । स्वतन्त्रः कर्तेति पाणिनीयसूत्रे स्वतन्त्रपदेन न साधनसामग्रीनिरपेक्षत्वमभिधीयते । एवमपि कर्तृत्वं भवतीत्यतः स्वातन्त्र्यं नामेतरेच्छानधीनकृतिमत्त्वमेव । नैतावता कृतिजन्यव्यापारनिर्वृत्त्यर्थं साधनं वा तद्योग्यता वा नापेक्ष्यते । तथा च कुठारतद्योग्यतापर्यालोचनसापेक्षत्वेऽपि छेदनानुकूलव्यापारस्य निर्वृत्तिस्तु कर्तुरितरेच्छानधीनकृतिजन्यैवेति तदेव स्वातन्त्र्यमभ्युपगतव्यम् । तथा च चेतनस्यापि पदार्थसृष्टौ प्राक्तनकर्मसापेक्षत्वेऽपि जगन्निर्माणानुकूलव्यापारस्तु स्वेच्छायत्त एवेति न तस्य कर्तृत्वहानिः । एवमेव सर्वशक्तिमत्त्वं नाम नेच्छामात्रेणजगत्कर्तृत्वम् । किंतु जगन्निर्माणानुकूलव्यापारस्य तदेकेच्छाधीनकृतिसाध्यत्वेन तादृश–सकलपदार्थनिर्माणानुकूलकृतिमत्त्वमेव । तथा च न कोऽपि व्याघातः । नहि सृष्टौ पदार्थगतकर्मविपाकस्य स्वभावस्य नापेक्षा । अत एव न गर्दभादश्वोत्पत्तिर्न वाऽश्वाद्वृषभोत्पत्तिः । तथा चेश्वरोऽपि कर्मापेक्ष एव प्रवर्तयितेति न वैषम्यनैर्घृण्यापात्तिः । स्पष्टं चेदं " वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति " इत्यधिकरण उत्तरमीमांसायाम् । अत एव च " धाता यथापूर्वमकल्पयत् " इत्यादिश्रुतिवादाः,

यं तु कर्मणि यस्मिन् स न्ययुङ्क्त प्रथमं प्रभुः ।
स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः ॥ मनुः । १।२८

इत्यादयः स्मार्ता वादा उपपद्यन्ते । ननु तर्हि पूर्वोक्तवाक्यानां का गतिरिति चेत्कर्मापेक्षप्रवर्तकत्व एव । ननु उन्निनीषते अधो निनीषते इति सन्नन्तप्रयोगेणेच्छैव प्रतीयते । एवं च इच्छैव साध्वसाधुकर्मप्रयोजिकेति सिध्यतीति चेन्न । स्वस्वकर्मणा तस्यैवाऽऽराधनोपदेशार्थं तथा प्रतिपादनात् । यत्किमपि कर्म साधु वाऽसाधु तदाराधनार्थमेव शास्त्रेण विहितमिति स्वभावविहितकर्मणोऽसाधुत्वेऽपि तदाराधनोद्देशत्वेन क्रियमाणं तत् परमेशकृपया साध्वेवेति साधु कर्म कारयितृत्वम् । एव कर्मणः स्वरूपतः साधुत्वेऽपि तदाराधनार्थत्वाभावेऽसाधुत्वमित्यसाधुकर्मकारयितृत्वं तस्य श्रुत्योपचर्यते । अत एव—

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥

इत्युपसंहृतं गीताशास्त्रे । तथा च वर्णगमकानां कर्मणां स्वभावपरिचायकत्वमपि सर्वान्तर्यामिणः परमेशस्योपासनार्थत्वेनैवेत्यसकृदुक्तं पुरस्तात् । एवं च वर्णोद्देशेन विहितानां कर्मणामपि परमेशाराधनार्थत्वे एव तत्तद्वर्णगमकत्वमन्यथाऽसुंभरत्वेनासुरत्वमेव। तथा च कर्मभेदेऽपि साम्यावस्था। समाजस्य सिध्यति रागद्वेषहानिश्चेत्येताद्दशसाम्यवाद एव समाजश्रेयोवहः । नान्यो भोगसाम्यवाद इति किल वैदिकानां राद्धान्तः । अत एवोक्तम्—

धर्मार्थकाम इति योऽभिहतस्त्रिवर्गः ।
ईक्षा त्रयी नयदमौ विविधा च वार्ता ॥
मन्ये तदेतदखिलं निगमस्य सत्यम् ।
स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ ७।६

इति श्रीमद्भागवते । युक्तं चैतत् । “ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ” इति वैयासिक्यां तथैव सिद्धान्तितत्वात् । सर्वशब्देन चात्र शास्त्रोक्तकर्मणामिव दृष्टफलकानां व्यावहारिकाणामपि कर्मणां संग्रहस्य समुचितत्वात् । तेषामपि वेदमूलकमन्वादिस्मृत्युक्तत्वेन शास्त्रविहितत्वात् । तथा च सर्वेषामपि शास्त्राणां दण्डनीत्यादीनां परमेशतुष्ट्यर्थमेवानुष्ठेयत्वं न वैयक्तिकभोगार्थमिति समष्टिरूपसर्वान्तर्यामिपरितोषार्थं स्वीयभोगसमर्पणमेव व्यक्तिमात्राणां परमं कर्तव्यमिति सिध्यति। अलमत्र प्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः ।

## ( जन्मन एव जातिगमकत्वम् )

तदेवं सृष्टिवैचित्र्योपपत्त्यर्थमवश्यमेव प्राक्तनकर्मविपाकोऽयमभ्युपगमनीय इति तदनुसारेण जात्यापत्तिर्योनिप्राप्तिः । तथा च शुद्धब्राह्मणमातापितृसंतानस्यापि प्राक्तनकर्मवशाज्जातिविरुद्धकर्मसंभवोऽयं नानुपपन्न इति न तेन जातिसिद्धान्तव्याघातः । एवमपि प्राक्तनकर्मणोऽभिव्यक्त्यर्थं तत्तज्जात्युचितकर्मणां स्वधर्मत्वेनानुशासनमत्यावश्यकमेव । तत एव च कर्मणः साधुत्वासाधुत्वनिर्णयः । तथा च क्षेत्रभूतस्य पौरुषस्यावसरलाभेऽपि तत्र ताद्दशकर्मणोऽनुपलब्ध्या प्राक्तनकर्मणः साधुत्वासाधुत्वज्ञानं संभवति । सोऽयं कर्मविपाकोऽपि पञ्चाग्निविद्याप्रदर्शितरीत्या वृष्टचन्नरेतोरूपेणैव संभवतीति स्वसंतानस्य स्वजातीयकर्मकारित्वार्थमन्नादिविधिनिषेधा अपि परिपालनीया इति सिध्यति । तथा च यत्र जातिविरुद्धकर्मदर्शनम्, तत्रान्नसंकर एव प्रायः कारणमित्यनुमानं न सर्वथा व्यभिचरति । एवमेव वृत्तिसंकरोऽपि तत्र कारणम् । वृत्तीनां कर्मरूपत्वेन तज्जन्यसंस्कार-

स्यापि रेतोरक्तद्वारा संततावनुवर्तनात् । एवमन्येषामपि पूर्वोक्तानां संकराणां जातिविरुद्धकर्मोत्पादकत्वेन जातिपरिवृत्तिकरत्वाद्धेयत्वं सिध्यति । एवं च शुद्धजात्यनुगुणकर्मकारित्वार्थं तद्विरुद्धकर्मसंस्कारविनाशार्थं च कर्तव्यत्वेन विहिता उपनयनादिसंस्कारा अपि जन्मत एव कर्तव्या भवन्ति । नो चेज्जात्यनुगुणकर्मासंभवोऽयं संस्काराराहित्यादपि संभवेत् । जन्मत एव कृतेषु संस्कारेष्वपि यदि न जात्यनुगुणकर्मसंस्कारोद्बोधस्तदा तु तत्र प्राक्तनकर्मसंस्कारप्राबल्यं कल्पयितुं शक्यं नान्यथेति प्रथमतो जन्मत एव जातिरिति सिद्धान्तोऽयमवश्यमेवाभ्युपेयः । युक्तं चैतत् । क्रिया हि द्रव्यं विनयति नाद्रव्यमिति सिद्धान्तानुसारेण क्रियानुष्ठानार्थमपेक्ष्यमाणं द्रव्यं प्रथमतोऽसंस्कृतमेवेति न तद्योग्यताऽनन्तरं तज्जन्यकर्मणा ग्रहीतुं शक्या । तदानीं तादृशकर्मणोऽभावात् । तादृशकर्मणश्च क्रियाजन्यसंस्कारानन्तरमेव निष्पाद्यमानत्वाच्च । अतश्चाऽऽदौ मातापितृयोग्यतावशादेव संताने तादृशयोग्यतासंभावनामभ्युपगम्य तत्र क्रियाजन्यसंस्कार आधेयो भवति । नापि यस्मिन्कस्मिन्नपि पिण्डे तादृशसंस्काराधानम् । तद्योग्यताया निर्णायकस्य प्रमाणस्यासंभवात् । योग्यतासंभावनाभावेऽपि तत्संस्कारसंपादनप्रयत्नस्तु

> "यस्य कस्य तरोर्मूलं येन केनापि घर्षितम् ।
> यस्मै कस्मै प्रदातव्यं यद्वा तद्वा भविष्यति "

इति न्यायानुसरणमेव । तथा च सर्वत्र दुरवस्थाप्रसङ्गः । न चैतद्युक्तं प्रेक्षावताम् । नापि विज्ञानवादेऽप्याधुनिके यस्य कस्यापि द्रव्यस्य यत्र कुत्रापि विनियोगः । योग्यतापर्यालोचनपूर्वकमेव खलु सर्वत्र विनियोगः । तत्र च प्रमाणान्तरेण योग्यतानिर्णयो यथा । तथात्रापि शुद्धमातापितृजन्यत्वालिङ्गेनैव योग्यतां निर्णीय संस्काराधानं कर्तुमुचितम् । ततश्च न कालापव्ययो वा द्रव्यापव्ययो वा । इदानीं हि शिक्षणद्वारा सर्वत्र योग्यतासंपादनमभिमन्यन्ते । तत्र च शिक्षणस्य सर्वेषां समानत्वेन कति वा प्रतिशतं तादृशयोग्यताशालिनः संभवन्तीति पर्यालोच्यमाने तदितिवृत्ते ( शिक्षण रिपोर्ट) प्रायः प्रतिशतं नवतेः कालाऽव्ययो द्रव्यापव्ययश्च भवतीति दरीदृश्यते । किमत्र निदानम् । किं स्वतःसिद्धयोग्यतापर्यालोचनाभावादन्यत्किमपि कारणं निर्देष्टुं शक्यम् । एवं च मातापितृयोग्यतादर्शनानुसारेण संतानयोग्यतानिर्णय एव श्रेयस्कर इति तदनुसारेणाऽऽधीयमानास्तत्तज्जातीयसंस्काराः प्रतिशतं नवतिरिति प्रमाणेन खल्ववन्ध्या भवेयुरित्यत्र नास्माकं विशयलेशोऽपि । ततश्च संताने कीदृशाः संस्कारा आधेया इत्यत्र मातापितृयोग्यतामन्तरा नान्यत्किमपि निर्णायकं प्रमाणमिति तदनुसरणमेव न्याय्यम् । एतत्सर्वमभिप्रेत्यैव जन्मासिद्धजातिवादोऽयं धर्मशास्त्रेऽभ्युपगतः । पाश्चात्यदेशे कथं वा शिक्षणप्रणालीति न जानीमः । परंतु तत्रापि योग्यतापर्यालोचनं स्यादेवेति तत्तत्कार्यकारित्वेन प्रजानामनुमीयते । न तथाऽत्र भारते शिक्षणप्रणालीत्यपि तत एव

निश्चिन्मः । नो चेयदीदानीं दण्डनीतौ माहम्मदानां कौशलं अस्मासु च तदभाव इत्यत्र किंवा कारणं स्यात् । वय तु मन्यामहे यत्स्वभावानुसरणमेव तत्र प्रबलतर कारणमिति । नहि सर्वेषां समानशिक्षाप्रदान माहम्मदेषु प्रसरति । ततश्च स्वभावानुसारिधर्माभिनिवेशादिना तत्सिद्धयनुगुणसंस्कारप्राबल्यमेव तेषा तादृशनीतिपाटवनिदानम् । नहि स्वाभिमानमन्तरा दण्डनीतेराचरणम् । न वा तेजस्वितायाः प्रादुर्भावः । स चाय स्वाभिमान इदानीं सर्वविषयेषु भारतीयहिन्दूना विप्रलुप्तप्राय एव । अतश्च जन्मसिद्धयोग्यतानादरेण सर्वत्र समानसस्कारप्रयत्नः । ततश्च तेजस्विनामभाव इति तन्मूलकः समाजस्याधःपातः । नहि सर्वेषा समानः सस्कारः स्वाभाविको भवितुमर्हति । अतश्च स्वभावाविर्भावार्थं कार्यक्षेत्रमपि विप्रलुप्यत इति सर्वथा समाजहानिरेव । अतश्च स्वभावानुसरणेन तत्तदुचितकर्मानुकूलसस्काराधानमेव समाजहितावहम् । तद्गमक च मातापितृजन्यत्वमेवेति तन्मूलकमेव सस्काराधानमुचितम् । समाजस्याऽस्माकीनस्य जातिविशिष्टत्वात् । एतत्सर्वमभिप्रेत्यैव भट्टपादैस्तत्तज्जातिगमक तत्तन्मातापितृजन्यत्वमेवाङ्गीकृतम् । न शमदमैश्वर्यादिकम् । तदत्र स्पष्टप्रतिपत्त्यर्थं भट्टपादवार्तिकमेवोपस्थापयाम । तद्यथा—

## ( तन्त्रवार्तिकम् )

कथं पुनरय दृष्टविरोधो यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभागः शास्त्रेणैव निश्चीयते । नायं शास्त्रविषयो लोकप्रसिद्धत्वाद्वृक्षत्वादिवत् । कथ पुनरिदं लोकस्य प्रसिद्धम् । प्रत्यक्षेणेति ब्रूमः । कस्मात्पुनर्मातापितृसंबन्धानभिज्ञाश्चक्षु.सन्निकृष्टेषु मनुष्येष्वनाख्यातं न प्रतिपद्यन्ते । शक्त्यभावात् । यथा वृक्षत्व प्रागभिधानाननुत्पत्ते । नैतत्तुल्यम् । वृक्षत्व प्रागभिधायकव्यापाराज्जात्यन्तरव्यवच्छिन्न स्वव्यक्तिष्वनुगत शाखादिमद्रूपेण दृश्यते । न तु ब्राह्मणत्वम् । अपि च व्युत्पन्नशब्दोऽपि निमितान्तरादृते नैव प्रतिपद्यते । न चोपवीताध्ययनादि निमित्तम् । वर्णत्रयसाधारणत्वात् । अध्यापनाद्यपि भिन्नाचारक्षत्रियवैश्यप्रातियोगित्वात्संदिग्धम् । सर्वं च दुष्टशूद्रेषु सभा यमानत्वादनिश्चितम् । यत्त्वविचारितसिद्धमेव प्रतिपद्यते स शुक्तिकामपि रजत मन्यमानः क्रीणीयात् । नैष दोषः । क्वचिद्धि कश्चिज्जातिग्रहण इतिकर्तव्यता भवतीति वर्णितमेतत् । तेन यथैवाऽऽलोकेन्द्रियानेकपिण्डानुस्यूतिशब्दस्मरणव्यक्तिमहत्त्वसंनिकर्षाकारविशेषादयोऽन्यजातिग्रहणे कारणम्, तथैवात्रोत्पादकजातिस्मरणम् । अय चोत्पाद्योत्पादकसंबन्धो मातुरेव प्रत्यक्षः । अन्येषा त्वनुमानाप्तोपदेशाद्यवगतः कारण भवति, न चावश्यं प्रत्यक्षावगतमेव प्रत्यक्षनिमित्त भवति । चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनात् । आन्तरालिकस्मृतिव्यवहितमपि चेन्द्रियसंबन्धानुसारि प्रत्यक्षमित्येतत्साधितम् । न च यत्सहसा सर्वस्य प्रत्यक्षं न भवति तन्निपुणतोऽपि पश्यता न प्रत्यक्षमित्येतदप्युक्तमेव । स्त्र्यपराधात्तु दुर्ज्ञानोऽयं संबन्ध इति स्वयमेव वक्ष्यति । न च तावन्मात्रेण प्रत्यक्षता हीयते । न हि यद्गिरिशृङ्गमारुह्यगृह्यते तदप्रत्य-

क्षम्। न च स्त्रीणां क्वचिद्व्यभिचारदर्शनात्सर्वत्रैव कल्पना युक्ता। लोकविरुद्धानुमानासंभवात्। विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मानमनेनैव हेतुना। राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारम्पर्याविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि। तथा च प्रतिकुलं गुणदोषस्मरणात्तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते। न च भर्तृव्यतिरेककृतेन वर्णसंकरोऽपराधेन जायते। दृश्यते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः। तदपराधनिमित्तस्तु तासामशुभफलोपभोगो भवेन्न त्वपत्यानां वर्णसंकरः। न च नियोगतो वर्णान्तरैरेव सह प्रमादः। सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः। संकरजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वाऽन्यतरवर्णापत्तिः स्मर्यते। तत्र त्वेतावन्मात्रमागमिकं प्रत्येतव्यम्। न ह्ययं पुरुषेयत्तानियमो लौकिकप्रमाणगम्यः। तस्मात्सत्यपि सारूप्ये यथा केनचिन्निमित्तेन स्त्रीपुंस्कोकिलादिविभागज्ञानम्, तथैव दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनीति भवत्यज्ञानवचनस्य प्रत्यक्षविरोधः। येषामप्याचारनिमित्ता ब्राह्मणत्वादयस्तेषामपि दृष्टविरोधस्तावदस्त्येव। नत्वाचारनिमित्तवर्णविभागे प्रमाणं किंचित्। सिद्धानां हि ब्राह्मणादीनामाचारा विधीयन्ते। तत्रेतरेतराश्रयता भवेत्। ब्राह्मणादीनामाचारस्तद्वशेन ब्राह्मणादय इति। स एव शुभाचारकाले ब्राह्मणः पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम्। तथैकेनैव प्रयत्नेन परपीडानुग्रहादि कुर्वता युगपद्ब्राह्मणत्वाब्राह्मणत्वविरोधः। एताभिरुपपत्तिभिस्त्वयं प्रतिपाद्यते न तप आदीनां समुदायो ब्राह्मण्यम्। न तज्जनितः संस्कारः। न तदभिव्यङ्ग्या जातिः, किंतर्हि मातापितृजातिज्ञानाभिव्यङ्ग्या, प्रत्यक्षसमधिगम्या। तस्मात्पूर्वेणैव न्यायेन वर्णविभागे व्यवस्थिते मासेन शूद्रो भवतीत्येवमादीनि कर्मनिन्दावचनान्यथवा वर्णत्रयकर्महानिप्रतिपादनार्थानीति वक्तव्यम्। इति।

तदेवं पिण्डगतस्य ज्ञानशक्तितारतम्यस्य क्रियाशक्तितारतम्यस्य च रक्तबीजगततारतम्यमन्तरेणानुपपत्त्याऽगत्या रक्तबीजगतः कश्चन विशेषोऽङ्गीकरणीयः। स च संतानपरम्परयाऽनुस्यूतो भवतीति सामान्यतो जातिसिद्धिः। तादृशविशेषस्य च कार्यकारितायां संस्कारादिगुणाधानमप्यावश्यकम्। तच्च जन्मत एव विधेयमिति तदानीं जातीयगुणक्रियाद्यभिव्यक्त्यभावेन मातापितृगतजातिविशेषमभ्युपगम्यैव तद्विधेयमिति सिद्धं मातापितृगतजातिज्ञानाधीनमेव जातिज्ञानम्। तथा चानुमानेन सामान्यतः कारणविशेषसिद्धावपि संस्कारसिध्यर्थमपेक्षितं जातिज्ञानं मातापितृगतजातिस्मरणसहकार्येण जायमानं प्रत्यक्षसिद्धमेवेति युक्तमेवोक्तं भट्टपादैः " नायं शास्त्रविषयो लोकप्रसिद्धत्वात् वृक्षत्वादिवत्। कथं पुनरिदं लोकस्य प्रसिद्धम्। प्रत्यक्षेणेति ब्रूमः " इति। तथा चोत्पादकजातिस्मरणसहकृतं प्रत्यक्षमेव जातिज्ञानम्। जातिकार्यं च गुणक्रियाद्यभिव्यक्तिस्तु संस्कारादिगुणाधानेन अन्नदोषादिसंकरदोषापनयनेन च भवतीति यत्र यत्र न यथावत्कार्यकारित्वं जातीनां तत्र

तत्र पूर्वोक्तानां वासनासंक्रमान्नदोषव्यवसायसंस्कारावेद्यावेदनसात्म्यसंपादनाभावयोनिसंकरस्वकर्मत्यागादिसप्तानां संकरकारणानामन्यतमेनावश्यमेव भवितव्यम्। तत्र वासनासंक्रमस्यान्नदोषस्य व्यवसायसंस्कारस्य सात्म्यसंपादनाभावस्य स्वकर्मत्यागस्य च प्रायश्चित्तवासनापरिवृत्त्यादिभिः परिहार्यत्वात् बीजरक्तयोश्च सजातीयत्वाच्च न जातिपरिवृत्तिकरत्वम्। अवेद्यावेदनस्य कुत्रचिज्जातिपरिवृत्तिकरत्वं कुत्रचिच्च न तदिति यथायथमूह्यम्। योनिसंकरस्तु सर्वथा जातिपरिवृत्तिकर इति समाजशास्त्रदृष्ट्यापि सर्वथा परित्याज्यः। तथा च कृत्स्नमपि धर्मशास्त्रमेतस्य सप्तविधसंकरस्य परिहार्यत्वेन प्रपञ्चार्थम्।

अत्र चावेद्या नाम शास्त्रनिषिद्धा कन्या । तस्या वेदनं विवाहः । सा चेत्सजातीया सगोत्रा सपिण्डा सप्रवरा वा तथा सति तस्या विवाहेन वर्णान्तरापत्तिर्भवति नवेति विप्रतिपत्तिः । तथैव ब्राह्मणेन वा क्षत्रियेण वाऽन्येन केनचिद्वर्णेन वा सजातीयपरस्त्रीव्यभिचारे कृते जायमानमपत्यं सजातीयमेव वा विजातीयं वेत्यपि विप्रतिपत्तिः । एवमेव व्रात्यसजातीयस्त्रीपुरुषाभ्यामुत्पन्नमपत्यं सजातीयं वा विजातीयं वेत्यपि विचारणीयं प्रसङ्गात् । तत्र जातिपरिवृत्तिरिति मन्वादीनां मतम् । नेति वार्तिककाराणा मतम् । तत्र युक्तायुक्तत्वविचारः । तथा हि—

व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्मणां च त्यागेन जायते वर्णसंकरः ॥

इति मनवचनम् । अत्र मन्वर्थमुक्तावलिर्यथा व्यभिचारेणेति । ब्राह्मणादिवर्णानामन्योन्यस्त्रीगमनेन, सगोत्रादिविवाहेन, उपनयनरूपस्वकर्मत्यागेन वर्णसंकरो नाम जायते । अतो युक्तमस्मिन् प्रकरणे व्रात्यानाभभिधानम् ॥ १०।२४ अत्रच व्यभिचारपदस्य वर्णान्तरीयस्त्रीगमनमेवार्थ इति मन्वर्थमुक्तावलीकारा मन्यन्त इति भाति । ब्राह्मणादिवर्णानामन्योन्यस्त्रीगमनमित्यर्थेऽन्योन्यपदस्वारस्यात् । एवं च सजातीयपरस्त्रीगमने न तेषा मते वर्णसंकरः । युक्तं चैतत् । संकरशब्दस्य विजातीयपदार्थमिश्रणपरत्वात् । सजातीयमिश्रणे तादात्म्यापत्तौ संकरासंभवात् । परं च नैतद्धर्मशास्त्रसंमतमिति भाति । तथाहि संतानस्य सजातीयत्वे विवाहस्य हेतुत्व तावद्धर्मशास्त्रेण बोध्यते । तथा च याज्ञवल्क्यः—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः ॥

इति । अत्र चानिन्द्येषु विवाहेषु इति सप्तम्या यस्य च भावेन भावलक्षणम् (२।३।३७) इतिपाणिनीयानुशासनेन भावलक्षणपरत्वेऽनिन्द्येषु विवाहेषु सत्स्वेव सजातयः पुत्रा जायन्ते नान्यथेति पर्यवस्यत्यर्थः । तथा च पुत्राणा सजातीयत्वे मातापित्रोरनिन्द्यविवाहसंस्कारः कारणमिति फलति । तथा च कारणरूपविवाहसंस्काराभावे कार्यस्य साजात्यस्याप्यनुत्पादः । मनुरपि—

सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते ॥ १०।५

इति अक्षतयोनिषु पत्नीषूत्पादितानामेव साजात्यमाह । पत्नीत्वं चानिन्द्यविवाहसंस्कारजन्यः कश्चन धर्मविशेषः । तथा च व्यभिचारेण वर्णानामित्यत्र वर्णकर्तृकपरस्त्रीगमनरूपव्यभिचारेण वर्णसंकरो भवतीत्येवार्थः । न तु वर्णानामन्योन्यस्त्रीगमनमिति । नन्वेवं वर्णपदवैयर्थ्यम् । परस्त्री-

गमनरूपव्यभिचारेणैव निर्वाहादिति चेन्न । पतितान्त्यजादिनिवृत्त्यर्थं तदुपादानात् । पतितान्त्यजादिस्त्रीगमनस्य कर्तुरपि पातित्यापादकत्वात् । तथा च सजातीयपरस्त्रीगमनस्य वर्णसंकरकारकत्वं धर्मशास्त्रसंमतम् । संमतं चैतन्मन्वर्थमुक्तावलीकाराणामपि । तथा च सर्ववर्णेष्विति श्लोकव्याख्यानावसरे तेषां विवरणम्—

" अत्र च पत्नीग्रहणादन्यपत्नीजनितानां न ब्राह्मणादिजातित्वम् । तथा च देवलः—

द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते ।
अववाट इति ख्यातः शूद्रधर्मा स जातितः ॥
व्रतहीना न संस्कार्याः स्वतन्त्रास्वपि ये सुताः ।
उत्पादिताः सवर्णेन व्रात्या इव बहिष्कृताः ॥ इति ॥

व्यासः— ये तु जाताः समानासु संस्कार्याःस्युरतोऽन्यथा । इति ।
याज्ञवल्क्योऽपि

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
इत्यभिधाय " विन्नास्वेष विधिः स्मृतः "

इति ब्रुवाणः पत्युत्पादितस्यैव ब्राह्मणादिजातित्वं निश्चिकाय ॥ इति ॥

एवं च व्यभिचारजातानां न पितृसजातीयत्व वा मातृसजातीयत्वं वा किंतु शूद्रसधर्मत्वमेवापध्वंसजत्वादिति सिध्यति ।

शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।

इति वचनात् । अत्र च स्पष्टप्रतिपत्त्यर्थं मिताक्षरा याज्ञवल्क्यीया यथा—

सवर्णेभ्यो ब्राह्मणादिभ्यः सवर्णासु ब्राह्मण्यादिषु सजातीया मातृपितृसमानजातीयाः पुत्रा भवन्ति ' विन्नास्वेष विधिः स्मृतः ' इति सर्वशेषत्वेनोपसंहारात् विन्नासु सवर्णास्विति संबध्यते । विन्नाशब्दस्य संबन्धिशब्दत्वाद्वेत्तृभ्यः सवर्णेभ्य इति लभ्यते । एकः सवर्णशब्दः स्पष्टार्थः । अतश्चायमर्थः संवृत्तः । उक्तेन विधिनोढायां सवर्णायां वोढुः सवर्णादुत्पन्नास्तस्मात्समानजातीया भवन्ति । अतश्च कुण्डगोलककानीनसहोढजादीनामसवर्णत्वमुक्तं भवति । ते च सवर्णेभ्योऽनुलोमप्रतिलोमेभ्यश्च भिद्यमानाः साधारणधर्मैरहिंसादिभिरधिक्रियन्ते ।

" शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः "

इति स्मरणात् । अपध्वंसजा व्यभिचारजाताः शूद्रधर्मैरपि द्विजशुश्रूषादिभिरधिक्रियन्ते । ननु कुण्डगोलकयोरब्राह्मणत्वाच्छ्राद्धे प्रतिषेधोऽनुपपन्नः । न्यायविरोधश्च । यो यज्जातीयाज्जाती-

यायामुत्पन्नः स तज्जातीय एव भवति । यथा गोर्गवि गौः, अश्वाद्वडवायामश्वः । तस्माद्ब्राह्मणाद्ब्राह्मण्यामुत्पन्नो ब्राह्मण इति न विरुद्धम् । तथा कानीनपौनर्भवादीनुपक्रम्य

"सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः"

इति वक्ष्यमाणवचनविरोधश्च । नैतत्सारम् । ब्राह्मणेन ब्राह्मण्यामुत्पन्नो ब्राह्मण इति भ्रमनिवृत्त्यर्थं श्राद्धे प्रतिषेधः। यथाऽत्यन्तमप्राप्तस्य पतितस्य श्राद्धे प्रतिषेधः । न च न्यायविरोधः । यत्र प्रत्यक्षगम्या जातिर्भवति तत्र तथा । ब्राह्मणादिजातिस्तु स्मृतिलक्षणा यथास्मरणं भवति । यथा समानेऽपि ब्राह्मण्ये कुण्डिनोऽत्रिर्वसिष्ठ इति स्मरणलक्षणं गोत्रम् । तथा मनुष्यत्वे समानेऽपि ब्राह्मण्यादिजातिः स्मरणलक्षणा । मातापित्रोश्चैतदेव जातिलक्षणम् । न चानवस्था । अनादित्वात्संसारस्य शब्दार्थव्यवहारवत् ।

" सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः "

इति तूक्तानुवादत्वाद्यथासंभवं व्याख्यास्यते । क्षेत्रजस्तु मातृसमानजातीयो नियोगस्मरणात् शिष्टसमाचाराच्च । यथा धृतराष्ट्रपाण्डुविदुराः क्षेत्रजाः सन्तो मातृसमानजातीया इत्यलमतिप्रसङ्गेन । इति ।

अनेन च मिताक्षराग्रन्थेन स्पष्टमिदं प्रतीयते यत्सतानसाजात्ये न केवलं मातापितृसाजात्यमेव कारणम् । अपि तु मातापित्रोर्विवाहितत्वमपि। तथा च शास्त्रविहितविवाहसंस्कारसस्कृतसजातीयमातापितृजन्यतैव संतानसाजात्याभिव्यञ्जिकेति फलति । एवं च शास्त्रविहितविवाहातिरिक्तसंबन्धेन संबद्धानां स्त्रीपुरुषाणां संततिस्तावन्मातापित्रोः सवर्णत्वेऽपि न सवर्णेति कुण्डगोलककानीनसहोढजादीनां न सजातीयत्वमिति सिध्यति । एवमपि क्षेत्रजस्य मातृसजातीयत्वसिद्धये नियोगरूपसंस्कारस्य विवाहस्थानीयत्वं शिष्टाचारादङ्गीकृत्यैवोपपत्तिः प्रदर्शिता । तथा च नियोगवत् पुनर्भूसंस्कारस्यापि शास्त्रविहितत्वाद्विवाहस्थानीयत्वेऽभ्युपगम्यमाने पौनर्भवानामपि मातापितृसाजात्यं केन वार्यताम् । न च न तस्य शास्त्रविहितत्वम् । तथा सति प्रकृष्टव्यभिचाररूपत्वापत्तौ कुण्डगोलकातिरिक्तत्वेन द्वादशपुत्रमध्ये परिगणनस्यासंगतेः । अत्र च विधिविचारो विवाहप्रकरणे विस्तारयिष्यते । किंचैवं नारदवसिष्ठादीनां ब्राह्मण्यासिद्धिः श्राद्धनिषेधादिवचनानां यथाश्रुतसंगत्यभावश्च । तदर्थं यथाकथंचित्तात्पर्यान्तरकल्पना चेति निरपवादप्रामाण्यार्थमनेककल्पनाकरणं भवति । एवमपि अपरार्कादिनिबन्धान्तरविरोधः कुण्डगोलकयोरुपनयनविध्यसंगतिश्च तदवस्थैवेति सर्वमालोच्य बालंभट्टचां विस्तरेण किंचिद्विचारितम् । तदपि स्पष्टप्रतिपत्त्यर्थमत्रोपन्यस्यते । तद्यथा—

## ( बालंभट्टी )

अत्रेदं बोध्यम् । नारदवसिष्ठविश्वामित्रादेर्ब्राह्मणत्वेऽपि विन्नासवर्णानुत्पन्नत्वेन नाव्याप्तिः। न ह्यत्र साक्षाद्ब्राह्मणत्वादि लक्ष्यते । वाक्यभेदप्रसङ्गात् । अव्याप्तेश्च । किं तु मातापितृसाजात्यमेव । तच्च ब्राह्मणादि जन्ये ब्राह्मणत्वादौ पर्यवस्यतीत्येतावत् । तत्र च प्रयोजकीभूतं सवर्णोत्पन्नत्वं नारदादितोऽव्यावृत्तं मातापितृसजातीयत्वं निवर्तयति न चैतादविरुद्धम् । न ह्ययोनिजेषु मातापितृजातीयताऽप्याश्रीयते। ब्राह्मणत्वं तु तेषु स्मरणलक्षणम्। ईश्वरानुग्रहप्रयोज्यत्वादाधुनिकविलक्षणमेव सुवर्णकलशे घटत्वमिव । अत एव विन्नास्वित्युपसंहारोऽपि युक्तः । एष विशिष्टसावर्ण्यात्मा मूर्धावसिक्तत्वादिरूपश्च विधिर्विन्नास्वेवेति तदर्थः । तेनाविन्नायामुत्पन्ने मातृजातियोगिक्षेत्रजे कुण्डादौ च विशिष्टसाजात्यविधिर्नेति फलितम्। वस्तुतस्तु क्षेत्रजे न मातृजातीयत्वमपि मानाभावात्। नियोगस्मरणं हि पुत्रत्वमात्रप्रापकं न तु जातेरपि । पुत्रत्वमपि न तदाक्षेपकमिति वक्ष्यते । नियोगे क्षेत्रप्राधान्यमित्यपि न । हृतं-बीजमन्यक्षेत्रे प्ररोहतीति मानवन्यायात् । क्षेत्रिणः सुत इत्यादिवचनात्स्वतन्त्रत्वाच्च क्षेत्रिण एव प्राधान्यसंभवात्तज्जात्यापत्तेः ।

न चैवं धृतराष्ट्रादीनां क्षत्रियत्वाभावे तद्धर्माचरणासंगतिः । विष्णुशङ्खादिवचनैस्तेषामपि क्षेत्रजातीयधर्मातिदेशात् । विन्नत्वादेर्विशेषस्य तत्राश्रवणात् । व्यभिचारोत्पन्नेषु तु शूद्रधर्मा एव क्षत्रियत्वप्रसिद्धिस्तु तद्धर्मानुष्ठातृत्वादप्युपपन्ना मूर्धावसिक्तादिष्विव । एतेन वर्णत्वस्य ब्राह्मणत्वादिव्यापकजात्यन्तरत्वेन तत्प्रयोजकविन्नसवर्णोत्पन्नत्वस्याभावेन कुण्डादेरवर्णत्वे तव्द्याप्यब्राह्मणत्वादेरप्यभाव इत्युक्त्वा क्षेत्रजो मातृजातीय एवेति सिद्धान्तयन् हेमाद्रिरपि निरस्तः । तत्राप्यविन्नोत्पन्नत्वेनावर्णत्वेन तव्द्याप्यजातेरसंभवात् । न च विन्नेत्युपलक्षकम् । कानीनपौनर्भवादेरवर्णत्वस्यैव प्रतिपादकस्वासिद्धान्तोक्तिविरोधापत्तेः ।

एतेन " अविन्नास्वपि जातानां क्षेत्रजादीनां वर्णत्वस्वीकाराद्विन्नास्विति शास्त्रविहितपुत्रोत्पत्तिप्रकारोपलक्षणम् " इत्यपरार्कोक्तमपि निरस्तम् । तत्र मानाभावात् । यथाश्रुतोपपत्तेश्च । किंचैवं पौनर्भवस्यापि तादृशप्रकारत्वाद्वर्णत्वापत्तेः । न च पुनर्भूत्पन्नस्य पुत्रत्वं शास्त्रेण विहितम्, न तु तस्य तस्या नियमेनोत्पादनमपीति वाच्यम् । कानीनादीनामप्यसंग्रहापत्तेः । न हि तत्रापि कन्यात्वे व्यभिचरितव्यामिति विधिरस्ति । किंतु तज्जस्य पुत्रत्वेन स्वीकारविधिः समः । न च पौनर्भवस्य वर्णत्वं युक्तम् । सर्ववर्णेष्विति मनावक्षतयोनिपदेन तस्य व्युदासात् । अत एव सर्वत्रेनाप्यक्षतेति वोढुरन्येनासस्पृष्टास्वित्यर्थः । एतेन पौनर्भवस्याप्यब्राह्मण्यमित्युक्तम् । अन्यथा तव्द्यवच्छेद्याभावेन तव्द्यर्थं स्यात् । क्षतयोनिव्यवच्छेदार्थत्वं तु न सामान्यश्रुतेन विन्नास्वित्यनेनाविन्नयोरुभयोरपि तत्संभवात् । किञ्चोभयविधस्यापि पौनर्भवस्य शास्त्रेण पुत्रत्वेन स्वीकृतत्वादाय-

एवानयोर्मध्ये मनुना निरस्येत । तत्रैव त्वदुक्तिनिरुक्तिरतिप्रसज्येत । किं च कुण्डादेरिव कानीनादेरप्यवर्णत्वे का तव हानिः । किंचैषामसवर्णत्वं देवलेनोक्तम् ।

द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते ।
अवरोढ इति ख्यातः शूद्रधर्मा स जातितः ॥
व्रतहीना न संस्कार्याः स्वतन्त्रास्वपि ये सुताः ।
उत्पादिताः सवर्णेन व्रात्या इव बहिष्कृताः ॥ इति ॥

वर्णत्वबाह्या इत्यर्थः । व्यासेनापि—

भार्याजाताः समानाः स्युः संकरः स्युरतोऽन्यथा ॥ इति ॥

शूद्राणां त्विति मनुस्तूक्त एव । बोधायनोऽप्येवं द्रष्टव्यः । एवं च ब्राह्मणत्वादिजातिर्भेदचतुष्टयभिन्ना । ( १ ) कश्चिदीश्वरमुखजन्यतावच्छेदिका सृष्ट्यादिब्राह्मणे नारदादौ । तदुक्त सूतसंहितायां शिवमाहात्म्यखण्डे द्वादशाध्याये

मुनय ऊचुः—

भगवन् सर्वशास्त्रार्थपरिज्ञानवतां वर
जातिनिर्णयमस्माकं वद वेदैकदर्शितम् ॥

सूत उवाच—

वक्ष्ये लोकोपकाराय जातिनिर्णयमादरात् ।
अगस्त्योऽपि पुराऽपृच्छत् प्रणम्य वृषवाहनम् ॥
पुरा सर्वे मुनिश्रेष्ठाः प्रलये विलयं गते ।
अन्धकारावृते लोके विष्णोरंशो महाद्युतिः ॥
सहस्रशीर्षा पुरुषो विश्वो नारायणाभिधः ।
क्षीराब्धौ चिन्तयन् रुद्रं सुष्वाप ब्रह्मवित्तमाः ॥
कदाचित् पङ्कजं विभास्तरुणादित्यसंनिभम् ।
तस्य सुप्तस्य देवस्य नाभ्यां जातं महत्तमम् ॥
हिरण्यगर्भो भगवान् ब्रह्मा विश्वजगत्पतिः ।
आस्थाय परमां मूर्तिं तस्मिन् पद्मे समुद्भवौ ॥
तस्य वेदविदां श्रेष्ठा ब्रह्मणः परमेष्ठिनः ।
महादेवाज्ञया पूर्वं वासनासहजा मुखात् ॥

ब्राह्मणा ब्राह्मणस्त्रीभिः सह जातास्तपोधनाः ।
तस्य हस्तात्सह स्त्रीभिर्जज्ञिरे पृथिवीभुजः ॥
ऊरुभ्यां सहिता स्त्रीभिर्जाता वैश्याः शिवाज्ञया ।
पद्भ्यां शूद्राः सह स्त्रीभिर्जज्ञिरे वेदवित्तमाः ॥ इति ॥

एतेषां कर्माणि तत्र वक्ष्यन्ते । ( २ ) कर्मजन्यतावच्छेदिका विश्वामित्रादौ । इदं च " विश्वामित्रस्तपस्तेपे " इत्यादिना महाभाष्ये ( पा. सू. ४।१।१०४ ) अनृष्यानन्तर्ये विदादिभ्योऽञ्, इति सूत्रे स्फुटम् । ( ३ ) ऊढब्राह्मण्यां वोढृब्राह्मणजन्यतावच्छेदिका सर्वेषु ब्राह्मणेषु । देवृरजे तु शास्त्रबोध्या । ( ४ ) यद्वाऽत्र तृतीयमेव ब्राह्मण्यम् । तत्रापि " देवरः पुत्रकाम्यया ऋतौ घृताभ्यक्त इयात् " इत्युक्त्वा यस्या म्रियेतेत्यादिवाक्येन विधानेन विन्देतेत्यनेन पूर्ववाक्योकघृताभ्यक्तत्वविशिष्टवेदनरूपाविलक्षणविवाहस्योक्तत्वात् । एवं च तत्त्वमव्याहतमिति त्रैविध्यं बोध्यम् । सर्वसाधारणं तु तत्पदव्यवहार्यत्वरूपं तत् बोध्यम् । " नञ् " ( पा. सू. २।२।६, ) " तेन तुल्यं " ( पा. सू. ५।१।११५ ) इति सूत्रयोर्महाभाष्ये

तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥

इत्युक्तम् । सर्वेषां शब्दानां गुणसमूहे वृत्तिः । तपःश्रुतादिसंग्रहायात्र गुणशब्देन पराश्रितं धर्ममात्रमुच्यते । तत्र स्मृतिशास्त्राश्रयेण ब्राह्मणगुणानाह तप इति । तपश्चान्द्रायणादि कर्म । श्रुतं वेदवेदाङ्गादीनामध्ययनम् । योनिर्ब्राह्मणाद्ब्राह्मण्या जन्म । इदं च दिक्प्रदर्शनम् । तेन याजनादेरपि संग्रहः । एतत् तपःप्रभृति ब्राह्मणकारकम् । शेषषष्ठीसमासः । तेन " कर्तरि च " ( पा. सू. २।२।१६ ) इति समासनिषेधो न । एषां ब्राह्मणोत्पादकत्वाभावेऽपि तद्व्यवहारकारणत्वं गुणसमुदायाभावेऽपि तदेकदेशे प्रयोगदर्शनादाह तपःश्रुताभ्यामिति । नासौ परिपूर्णो ब्राह्मणः ।

ननु तल्लक्षणस्य तत्राभावे कथं ब्राह्मणपदप्रयोग इति चेन्न । योनिप्रतिपाद्यजातिरूपैकदेशाश्रयेण तत्र तत्प्रयोगसंभवात् । अयमेव जातिब्राह्मणपदार्थः । अत एव तस्य न सर्वब्राह्मणक्रियास्वधिकारः । तत्र गौणः प्रयोग इत्यत्र जातिपदं तात्पर्यग्राहकमिति यावत् । एवं लोकप्रसिद्धान् बाहुल्येन तथा दृष्टान् गुणानाह " गौरः शुच्याचारः पिङ्गलः कपिलकेशः " इति । नन्वेतेषामिदानीं व्यभिचरितत्वेन कथं तव्द्यञ्जकत्वम् । अत एव बाहुल्येनेत्युक्तमिति चेन्न । पुराकल्पे तस्य नियमेन व्यञ्जकत्वेन दृष्टा इत्ययत्वेऽपि क्वचित्तथा दर्शनेन तेषामपि तत्त्वमित्याशयात् । तत्र—

" अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते ।
सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः ॥

इति लक्षितो गौरः । शुच्याचारोऽनुपहताचारः। पिङ्गलकपिलकेश इत्येकं पदम् । पिङ्गलाः कपिलाः केशा यस्येत्यर्थः । यद्वा पिङ्गल इति वर्णः । एतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति ब्राह्मणशब्दार्थगुणसमुदाये कुर्वन्ति केचिल्लौकिकाः । एते सर्वे ब्राह्मणशब्दजबोधे प्रकारतया भासन्त इति परमार्थ इतीति दिक् ।

एवं जात्युत्कर्षवति कर्मोत्कर्षवति च ब्राह्मणे ब्राह्मणत्वभेदो बोध्यः । जात्युत्कर्ष इति वक्ष्यमाणोक्तेः । एवं क्षत्रियत्वादिकमपि भिन्नं बोध्यम् । अत्रापि वक्तव्यमनुपदमेव स्फुटीभविष्यति । अतः सिद्धं मूर्धावसिक्तादौ कुण्डगोलकादौ च ब्राह्मणत्व वर्णत्वं च नास्तीति अत्रापि वक्तव्यं तथा । तदेतदभिप्रेत्याह इत्यलमिति ।

## ( उक्तबालंभट्टीपर्यालोचनम् )

अत्र च बालंभट्ट्यां " सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु " इति मनुवचनानुसारेण " अनिन्द्येषु विवाहेषु " " विप्रास्वेष विधिः स्मृतः " इत्यादियाज्ञवल्क्यवचनानुसारेण च विवाहस्य साजात्यप्रयोजकत्वं स्वीकृत्य क्षेत्रजस्य विश्वामित्रादीनां च ब्राह्मणत्वादिसिध्यर्थं ब्राह्मणत्वादीनां भेदचतुष्टयं दर्शितम् । तत्र विवाहस्य साजात्यप्रयोजकत्वं यदिदं सिद्धान्तितं तत्किमष्टविधस्यापि विवाहस्योतानिन्द्यस्यैव । एवमेव सर्वैरपि विवाहैः पत्नीत्वमुत्पाद्यते, उत धर्म्यैरेव । मनुना तु पत्नीष्विति पदेन पत्नीत्वोत्पादनानुकूलसंस्कारविशेषरूपविवाहस्यैव साजात्यप्रयोजकत्वं बोध्यते । अनिन्द्यपदोपादानेन याज्ञवल्क्यस्यापि स एवाऽऽशयः । तथा च निन्द्यत्वानिन्द्यत्वभेदेन विवाहभेदोऽवश्यमेव स्वीकर्तव्यः । तथा च मनुः—

यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ ।
तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणान् ॥
षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥
चतुरो ब्राह्मणस्याऽऽद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥
पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ।
पैशाचश्चाऽऽसुरश्चैव न कर्तव्यौ कदाचन ॥

पृथक् पृथक् वा मिश्रौ वा विवाहौ पूर्वचोदितौ ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥ ३।२३-२६ ।

इति । अन्यच्च

अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ॥ ( मनुः ३।४२ )

एतैश्च वचनैर्विवाहत्वेन सर्वेषां प्रकाराणां संग्रहेऽपि धर्म्यत्वाधर्म्यत्वाभ्यां भेदस्तु न केनाप्यपलपितुं शक्यः । तथा च धर्म्यविवाहानामेव पत्नीत्वोत्पादकत्वमवश्यं स्वीकर्तव्यम् । नान्येषामिति सिध्यति । पत्नीशब्दश्च " पत्युर्नो यज्ञसंयोगे " इति पाणिनिसूत्रेण यज्ञसंयोग एव व्युत्पाद्यते । तथा च धर्मरतिपुत्रार्थत्वेन विवाहस्य त्रैविध्येऽपि पत्नीत्वं धर्माधिकारजनकविवाहसंस्कारेणैव भवतीत्यगत्योरीकरणीयम् । एवं साजात्यप्रयोजकत्वमपि तस्यैव विवाहस्य स्यात् । नान्येषामधर्म्याणां विवाहानाम् । तथा चेदानीं क्षत्रियवैश्यशूद्रादिषु जायमानस्य ब्राह्मविवाहस्याधर्म्यत्वेन साजात्यप्रयोजकत्वाभावात् ततो जायमानानां संतानानां वैजात्यापत्तिः केन निवार्यताम् । एवमेव ब्राह्मणेष्वपि कदाचिद्गान्धर्वादिविवाहे तत्संततेरपि साजात्यं न स्यात् । न च धर्म्यत्वाधर्म्यत्वे त्विमे न पत्नीत्वोत्पादकत्वानुत्पादकत्वाभ्याम् । किं तु विधिप्रतिषेधाभ्यामेव । तथा च सर्वेषामविशेषेण विधानात् तारतम्यभावमूलकत्वमेवैतयोरिति वाच्यम् । " पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन " इति निषेधस्याप्युपलम्भात् ।

इतरेषु तु शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥ ३।४१

इति फलश्रुत्यापि निषेधानुमानात् । नहि " अपशवो वाऽन्ये गोऽश्वेभ्यः पशवो गोअश्वाः " इति स्तुत्या गोअश्वानां विधेयत्वेऽपि तदन्येषां वर्जनं न प्रतीयते । एवं धर्म्येषु प्रवृत्त्यर्थं तत्स्तुत्याऽन्येषां च निन्दया विधिप्रतिषेधौ केन वार्येताम् । किं च दुर्विवाहैः पत्नीत्वसिद्ध्युपगमे तेषां धर्म्यत्वमेवेति तत्संततेर्दुष्टत्वं कथमुपपद्येत । न च वचनादेवेति वाच्यम् । न हि दृष्टे फले वचनं नाम प्रमाणं दृष्टत्वात् । तथा च दृष्टार्थानां च तत एव प्रामाण्यमिति वार्तिकवचनात् प्रजासु दुष्टत्वं दृष्टविरुद्धमारोपयितुमशक्यमेव । किं च धर्म्यत्वेनाभिमतेऽपि निषेधवचनानि स्पष्टमुपलभ्यन्ते । तत्प्रामाण्यादधर्म्यत्वमेवैतेषां कुतो नाभ्युपगम्यते । तद्यथा आसुरविवाहमुपक्रम्य वीरमित्रोदये—

कश्यपः— क्रीता द्रव्येण या नारी न सा पत्नी विधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत् ॥ इति ॥

किंचाक्षतयोनिषु इति मनुवचनगतविशेषणव्यावर्त्यं हि क्षतयोनिरेव। तत्र च पत्नीत्वाभावादेव व्यावृत्तौ पुनश्चोपादीयमानं विशेषणमिदं व्यर्थं स्यात्। न च पैशाचविवाहे क्षतयोनित्वेऽपि पत्नीत्वमुत्पद्यत इति वाच्यम्। तथा सति पूर्वोक्तमनुवचनादेव तव्द्यावृत्तौ तदुत्पन्नस्य सजातीयत्वं न स्यात्। अथ च तत्र मत्ताद्यवस्थायां कन्याहरण एव तात्पर्यम्, न मैथुन इति चेत्तदा व्यर्थविशेषणत्वापत्तिर्दुर्वारा । मन्वर्थमुक्तावलीवीरमित्रोदयादिनिबन्धविरोधश्च । "अक्षता च क्षता चैव पुनर्भूर्द्विविधा मता" इत्युक्तदिशा क्षतयोन्याः पुनर्भ्वा व्यावृत्त्यर्थं तदिति चेत्तर्हि तत्रापि पत्नीत्वं स्वीकर्तव्यं स्यात्। अन्यथा तु पत्नीपदेनैव तव्द्यावृत्तिरिति व्यर्थविशेषणत्वापत्तिस्तदवस्थैव । किं च पतितानां व्रात्यानां सजातीयविवाहो भवति न वा? भवति चेत्कीदृशः। उपनयनं विना व्रात्यानां विवाहसंस्कारयोग्यताभावात्। अन्यथा शूद्रवदेव यथाकथंचित्संस्काराभ्युपगमे तदनुगुणपत्नीत्वोत्पत्तौ तत्संतानस्य तत्साजात्यापत्तिः। न च सेष्टा।

> व्रात्यात्तु जायते विप्रात्पापात्मा भूर्जकण्टकः ।
> आवन्त्यवाटधानौ च पुष्पधः शैख एव च ॥
> झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च ।
> नटश्च करणश्चैव खसो द्रविड एव च ॥
> वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च
> कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥ १०।२१-२३ ।

इति मनुविरोधात्। अत्र च भूर्जकण्टकादि जात्यन्तरोत्पत्तिरेव प्रतिपाद्यते। अत एव च स्वकर्मत्यागस्य वर्णसंकरकारकत्वमुपपद्यते। एवं जात्यन्तरस्वीकारेऽपि "यस्य पिता पितामह इत्यनुपेतौ स्याताम्" इत्याद्यापस्तम्बोक्तप्रायश्चित्तानवकाशस्तदवस्थ एव। न च जात्यन्तरस्य प्रायश्चित्तेन शुद्धिः। तथा सति शूद्रसधर्माणामेतेषामिव शूद्रस्यापि तथा शुद्धिः स्यात्। न च वचनाभावान्न तथेति वाच्यम्। वचनस्यैतादृशतात्पर्यपरिकल्पनापेक्षयाऽन्यथा नयनेनोपपत्तौ तादृशतात्पर्यकल्पनाया अयुक्तत्वात्। किंचैवमपि भक्षितेऽपि लशुने न शान्तो व्याधिरितिन्यायेन नियोगस्य विशेषविहितत्वाद्विवाहस्थानीयत्वमङ्गीकृत्यैव तदुत्पन्नस्य साजात्यमुपपादनीयम्। तत्र च तत्स्थानापन्नस्तद्धर्मं लभत इति न्यायेन यावद्विवाहक्रियाकारित्वं यद्यभ्युपेयेत्। तदा तु नियुक्तायां भार्यात्वमप्यापद्येत। न चैतद्युक्तम्। पुत्रस्य क्षेत्रजत्वानापत्तेः। नियुक्तस्यैव तत्संतानं स्यात्। अथ च भार्यात्वं न नियोगेनोत्पद्यत इति मतम्। तदा तु तदभावादेव साजात्यं न स्यात्। तथा च कुण्डगोलकपौनर्भवादिवत् क्षेत्रजस्यापि जात्यन्तरं स्वीकर्तव्यं स्यात्। साजात्यस्य विवाहजन्यपत्नीत्वप्रयोज्यत्वात्। तदेवं विवाहस्य साजात्यप्रयोजकत्वेऽनेकविधापत्तिप्रसङ्गः। तदपेक्षया

विवाहस्य संतानप्राशस्त्यपरत्वम्, साजात्यं च सजातीयबीजक्षेत्रमूलकमिति पक्षसमाश्रयणमेव सांप्रतम् ।

किंच पौनर्भवस्य कुण्डगोलकक्षेत्रजातिरिक्तत्वेन परिगणनात्तत्सिद्धये तत्रापि कश्चन संस्कारविशेषस्त्ववश्यमेवाभ्युपेयः । अत एव

" सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा ।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति "

इति मनुना संस्कारविशेषो विधीयते । तस्य च संस्कारस्य नियोगसंस्कारवत्पुत्रत्वप्राप्तिपरत्वं वा विवाहसंस्कारवद्भार्यात्वोत्पादकत्वं वेत्यपि चिन्तनीयम् । तत्र पुत्रत्वस्य सर्वत्र जन्यजनकभावमात्रप्रयोज्यत्वात्संस्कारस्य नाऽऽवश्यकतेति भार्यात्वोत्पादकत्वमेवागत्याऽभ्युपेयम् । तथा च तज्जन्यस्य साजात्यं केन वार्यताम् । अतश्च पत्नीत्वाभावादेव तत्र तद्वारणीयम् । एवं च पत्नीत्वप्रयोजको विवाहसंस्कारस्त्वन्यः, भार्यात्वोत्पादकविवाहसंस्कारस्त्वन्य इति संस्कारद्वैविध्यमङ्गीकर्तव्यम् । तच्च विवाहस्य धर्मरतिपुत्रसंपादकत्वेन त्रैविध्यमङ्गीकृत्यैव । तथा च यत्र प्राधान्येन धर्ममुद्दिश्यैव विवाहः क्रियते, तत्र धर्म्यविवाहत्वात्पत्नीत्वमेवोत्पद्यत इति धर्म्यविवाहस्यैव पत्नीत्वप्रयोजकत्वम् । अत एव

" सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि "

इति दारकर्मसिध्यर्थं सवर्णाया एव प्राशस्त्यं मनुनोक्तम् । दारकर्म च धर्मरतिपुत्राणां लाभः । तत्र धर्म्यविवाहे त्रयाणां लाभेऽपि प्राधान्याद्धर्मस्य तदविरोधिनौ रतिपुत्रावेव तत्रोत्पद्येते। एवं रतिरपि धर्म्या पुत्रोऽपि धर्म्य इति तत्र यथावत्प्राशस्त्यं संपद्यते । रत्यर्थमात्रे विवाहे पुत्रस्य नान्तरीयकतया लाभेऽपि रतेः प्राधान्याद्धर्मस्य च सर्वथाऽभावान्न तादृशं प्राशस्त्यं सत्यपि साजात्ये । एवमेव केवलपुत्रार्थविवाहे रतेर्नान्तरीयकतया लाभेऽपि धर्मात्यन्ताभावादेव तत्र हीनत्वं पुत्रस्य सत्यपि साजात्ये । असवर्णाविवाहे तु काम्यत्वेनैव न प्राशस्त्यं न वा साजात्यमिति सिध्यति । तथा च विवाहत्वं नाम भार्यात्वपत्नीत्वान्यतरधर्मजनकशास्त्रबोधितसंस्कारविशेषत्वमिति सिध्यति । यद्वा पतित्वोत्पादकशास्त्रबोधितसंस्कारविशेषत्वमेवैकमुभयानुगतं लक्षणमस्तु । तदुक्तम्—

नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥ यमः ॥

न च नियोगादिष्वव्याप्तिः । तत्र पतिपत्नीसंबन्धानुत्पादस्येष्टत्वात् । पुनर्भूसंस्कारे तु पतित्वसद्भावादेव भार्यात्वमत्र । नो चेत्पौनर्भवस्य कुण्डत्वगोलकत्वान्यतरापत्तिः । न च न विवाहेन

पतित्वमुत्पद्यते भार्यात्वानुनिष्पादितत्वात्तस्येति वाच्यम् । पतित्वभार्यात्वयोरन्यतरस्यानुनिष्पादने विनिगमनाविरहादुभयथापि विधिदर्शनाच्चोभयमपि विवाहसंस्कारजन्यमिति सिद्धान्तात् । तदुक्तं वीरमित्रोदये—

वस्तुतस्तु शाखान्तरे तासां मन्त्रविधानात् विनिगमनाविरहेण च पतित्वस्यैव भार्यात्वानुनिष्पादकत्वे प्रमाणाभावादुभयथा विधिदर्शनाच्चोभयमपि उद्वाहभाव्यम् । अतश्च " पतित्वं सप्तमे पदे " इति युक्तमेवोक्तमिति ।

विस्तरस्तु तत्रैव द्रष्टव्यः । तथा च विवाहस्य साजात्यप्राशस्त्यबोधकत्वमेवोरीकर्तव्यं पूर्वोक्तमनुयाज्ञवल्क्यवचनेभ्यः । न साजात्यप्रयोजकत्वम् । तथा च विवाहप्राशस्त्यबोधकानां वचनानामपि यथावत्संगतिः ।

तथाहि—व्यवहारे या काचन पद्धतिः प्रचलिता संभवनीया च । तासां सर्वासामेव पतिभार्याभावोत्पादकत्वं स्वीकृत्य तत्र वेदानुसारेण धर्म्यत्वाधर्म्यत्वे विचार्य धर्म्याणामेव विधिः, अन्येषां त्वगत्या दृष्टार्थत्वादनुमतीरित्येव धर्मशास्त्रस्याऽऽशयः । न हि बलाच्छलेन वोन्मत्ताद्यवस्थायां वा कन्याहरणं वा कन्योपभोगो वा न्याय्यो धर्म्यश्च । न वा पितृस्वत्वाक्रान्तायास्तस्यास्तदपहरणं वा तदुपभोगो वा केषामपि संमतो भवेत् । तत्र प्रतिकर्तुमशक्यत्वे तु पश्चात्तदनुमोदनं गले पतितमेवेति विवाहरूपत्वं स्वीकर्तव्यम् । कानीनसहोढजपुत्रेष्वप्येषैव गतिः । नोचेत्तेषां वेदमूलकत्वेन तादृशविधिकल्पने वैधत्वप्रसङ्गात् । न च विधिविहितस्य निन्दा संभवति निन्दावाक्यानां निषेधपरिकल्पकत्वे तु षोडशिग्रहणाग्रहणवद्विकल्पापत्तिः । कन्यासंदूषणादीनामनपराधत्वापत्तिश्चेति विभावनीयम् । एवं च विवाहस्य न साजात्यप्रयोजकत्वम् । किंतु धर्म्यत्वेन प्राशस्त्यप्रयोजकत्वमेवाभ्युपगन्तव्यम् । अत एव " जात्या ज्ञेयास्त एव ते " इति मनुना त एव ते इति पदसमुदायेन " आत्मा वै पुत्रनामासि " इति श्रुतिमनुसंधाय ताद्रूप्यं बोध्यते । ते एव ते, न तत्र कोऽप्यंशो न्यून इति हि तदर्थः । तथा च धर्म्यपुत्रातिरिक्तपुत्राणां पक्वघटेषु पक्वाम्रेषु वा पाकतारतम्यवदस्ति किंचित्तारतम्यमिति गम्यते । नैतावताऽसाजात्यम् । आत्मा हि जज्ञे आत्मनः, स एवायं विरूढः प्रत्यक्षेणोपलभ्यते, तत्राऽऽत्मा जायते स्वयम्, इत्यादिश्रुतिविरोधात् । यदा हि बीजप्रभावात्तिर्यग्जानामपि ऋषित्वं पूजितत्वं प्रशस्तत्वं च, तदा सजातीयमातापितृप्रभवानां मानवजानां साजात्यं नैवेति कथं वक्तव्यम् । यस्तु कुण्डगोलकझल्लमल्लादिनामान्तरव्यपदेशः, सोऽपि न जात्यन्तरबोधकः, किंतु अप्राशस्त्यबोधनपर एव । अत एवाऽऽपस्तम्बधर्मसूत्रे हरदत्तेन व्याख्यायां कुण्डेति नाममात्रमित्युक्तम् । ततिसद्धं सजातीयमातापितृजन्यत्वमेव साजात्यप्रयोजकम्, उपनयनविवाहादिसंस्काराणां तु प्राशस्त्यप्रयोजकत्वमिति ।

( संतानगतप्राशस्त्यविचारः )

ननु किमिदं प्राशस्त्यम्। इति चेदुच्यते। जनकवर्णप्रयोज्ययावद्धर्मक्रियाकारित्वं वा निष्प्रतिबन्धदायभागित्वं वेति तदिति प्रतिजानीमः। यद्वा निष्प्रतिबन्धदायभागित्वविशिष्टजनकवर्णप्रयुक्तयावद्धर्मक्रियाकारित्वं तत्। तेनानुलोमजातानां कानीनपौनर्भवकुण्डगोलकादीनां च व्यावृत्तिः। आद्ये—

"स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।
सदृशानेव तानाहुर्मातृदोषविगर्हितान्॥"

इति मनुवचनात् जनकवर्णप्रयुक्तयावद्धर्मक्रियाकारित्वाभावेन निष्प्रतिबन्धदायभागित्वेऽपि नातिप्रसक्तिः। द्वितीये तु उभयाभावान्न सा। औरसादीनामभावे केवलस्य कानीनादेरपि निष्प्रतिबन्धदायभागित्वात्तव्द्यावृत्त्यर्थं विशेष्यदलम्। न च सत्स्वप्यौरसादिषु शास्त्रोक्तस्वीयांशभागित्वं तु सर्वेषां पुत्राणां जन्यजनकभावमात्रेणैव प्राप्नोतीति सर्वेषां निष्प्रतिबन्ध एव दाय इति कथमनन्तरजानां व्यावृत्तिः। कथं वा कानीनादीनामपि व्यावृत्तिः। साजात्ये हि जनकवर्णप्रयुक्तयावद्धर्मक्रियाकारित्वमप्यव्याहतमेवेति वाच्यम्। सत्यपि पुत्रत्वे सत्यपि च साजात्ये समाजव्यवस्थार्थं शुद्धधर्मसिध्यर्थं च शास्त्रेण विशेषोपदेशात्। तथा हि द्वादश पुत्रानभिधायाऽऽह याज्ञवल्क्यः—

पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः।
सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः॥

इति ( या. स्मृ. व्य १३२ ) अत्र च जन्यजनकभावे समानेऽपि क्षेत्रजादीनामौरसाद्यभाव एव पिण्डदत्वं रिक्थभागित्व च स्पष्टतया प्रतिपाद्यते। तथा च पितृव्यभ्रात्रादीनां पुत्रसद्भावः स्वामिसद्भावश्च यथा प्रतिबन्धः। तथात्रापि औरसपुत्रसद्भावस्य प्रतिबन्धत्वान्न क्षेत्रजकानीनादीनां निष्प्रतिबन्धदायसिद्धिः। प्रतिबन्धाभावे तु निष्प्रतिबन्धत्व सर्वत्र विजयतेतराम्। न चैतावता जन्मत एव स्वत्व पुत्रादिवत्सिध्यति। एवं च जन्मत एव यत्र स्वत्वम्, तत्रैव निष्प्रतिबन्धत्वं दायस्येति नौरसव्यतिरिक्तानां निष्प्रतिबन्धो दायः सिध्यति। क्षेत्रजस्य जनकमातृवर्णप्रयुक्तयावद्धर्मक्रियाकारित्वेऽपि निष्प्रतिबन्धदायभागित्वाभावेन नातिप्रसक्तिः। ननु नियोगस्यौरससंतानक्षय एव विहितत्वात् क्षेत्रजस्य च तज्जन्यत्वात्तन्न निष्प्रतिबन्धदायभागित्वमेवेत्यतिव्याप्तिरिति चेन्न। क्षेत्रजस्य क्षेत्रजत्वमेव केवलं न दायभागित्वप्रयोजकम्। किंतु औरसपुत्राभावविशिष्टक्षेत्रजत्वमेव। तथा च क्षेत्रजोत्पत्त्यनन्तरं कदाचिदौरसपुत्रे जाते न क्षेत्रजस्य दायभागित्वमिति न निष्प्रतिबन्धो दायस्तत्र सिध्यति। संभवति चासाध्यरोगाक्रान्त्या पत्युर्नियोगाभ्यनुज्ञा। दैवयोगादनन्तरं रोगनिवृत्तौ चौरसजन्मापि। अत एव—

षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् ।
औरसो व्यभजन् दायं पित्र्यं पञ्चममेव वा ॥ ९।१६४

इति मनुवचनं संगच्छते । अन्यथा त्वौरसाभाव एव क्षेत्रजसत्त्वे उभयोर्विभागस्यानवसर एवेति निरवकाशत्वाद्वचनमिदं व्यर्थमेव स्यात् । जनकवर्णेत्यत्र जनकजनन्योरुभयोर्ग्रहणे तु न क्षेत्रजस्यापि जनकवर्णप्रयुक्तयावद्धर्मक्रियाकारित्वम् । एवं च यथाकथंचित्तस्य निष्प्रतिबन्धदायभागित्वासिद्धावपि नातिव्याप्तिः । धर्मक्रियेत्यनेनोपनयनादीनां संग्रहान्न कामजादीनां पुत्राणां प्राशस्त्यम् । तथा च मनुः—

अनियुक्तासुतश्चैव पुत्रिण्याऽऽप्तश्च देवरात् ।
उभौ तौ नार्हतो भागं जारजातककामजौ ॥ इति । ९।१४३

एवमेव कुण्डगोलकयोरपि न रिक्थहरत्वम् । अत्रौरसत्वं नाम धर्मपत्नीजत्वमेव । सा च सवर्णैव ॥ " सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि " इति वचनात् " औरसो धर्मपत्नीजः " इति वचनाच्च । अन्यथा दैवादिविवाहेन ऊढासु क्षत्रियादिकन्यास्वपि जातानामौरसत्वापत्तौ " सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः " इति याज्ञवल्क्यवचनेन

" त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः ।
वैश्याजः सार्धमेवांशमंशं शूद्रासुतो हरेत् " ९।१५२ ॥

इत्यादिमनुवचनेन च विरोधापत्तेः । अत एव च—

यदि स्वाश्चापराश्चैव विन्देरन् योषितो द्विजाः ।
तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्म च ॥
भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम् ।
स्वा चैव कुर्यात्सर्वेषां नास्वजातिः कथंचन ॥
यस्तु तत्कारयेन्मोहात्स जात्या स्थितयाऽन्यया ।
यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः ॥ ९।८५-८७

इति मानववचनान्युपपद्यन्ते । तत्सिद्धं विवाहस्य प्राशस्त्यप्रयोजकत्वम् । साजात्यं तु मातापितृसाजात्यमूलकम् ।

नन्वेवं केवलसाजात्यस्य क्वोपयोगः । न हि यावद्धर्मक्रियाकारित्वप्रयोजकं तत्, न वा निष्प्रतिबन्धदायाधिकारजनकमिति वैयर्थ्यमेव तस्येति चेन्न । शूद्रापुत्रवदुपनयनपूर्वकगृह्यधर्माधि-

इति वचने द्विजसादृश्यं द्विजानन्तरायां शूद्रायां समुत्पन्ने बोधितमिति मातृनामवर्णातिदेशस्तदीयवृत्तिप्राप्त्यर्थ एवेति वाच्यम्। यतो विगर्हिताभिधानस्वरसेन तस्मिन्नर्धश्लोके मातुरुपस्थितत्वेन च मातृसादृश्यमेव वाक्यस्यार्थो न तु द्विजसादृश्यं शूद्रायाम्। न च त्रैवर्णिकोत्पन्नस्य द्विजधर्मत्वाभावे शूद्रधर्मस्य चानाभिधाने उभयतो भ्रष्टत्वप्रसङ्गः। मातृनामवर्णातिदेशसादृश्याभिधानत एव शूद्रधर्मत्वप्राप्तेः।

अथ ऋषयो वै सरस्वत्यां सत्रमासत कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति। तं बहिर्धन्वोदवहन्। अत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति स बहिर्धन्वोदूल्हः (ढः)। पिपासया वित्त एतदपोनप्त्रीयमपश्यत् प्र देवत्रा ब्रह्मणे गातुरेत्विति। तेनापां प्रियं धामोपागच्छत्तमापोऽनूदायंस्तं सरस्वती समन्तं पर्यधावत्। तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते। यदेतं सरस्वती समन्तं परिससार। ते वा ऋषयोऽब्रुवन् विदुर्वा इमं देवा उपेमं ह्वयामह इति। तथेति तमुपाह्वयन्त। तमुपहूयैतदपोनप्त्रीयमकुर्वत प्र देवत्रा ब्रह्मणे गातुरेत्विति। तेनापां प्रियं धामोपागच्छन्। उप देवानामुपापां प्रियं धाम गच्छत्युपदेवानां जयति परमं लोकं य एवं वेद॥ इत्यैतरेयब्राह्मणे दासीपुत्रस्य सत्रानुष्ठानश्रवणात्तस्याप्युपनयनं युज्यते। सरस्वतीतीरे सत्रमासीनैर्ऋषिभिरिलूषपुत्रः कवषनामा ऋषिर्दासीपुत्रः कितवोऽब्राह्मणोऽस्माकं मध्ये कथं दीक्षिष्यतीति मत्वा मरुदेशे निपातितः। अत्रैनं पिपासा हन्तु सरस्वत्युदकमप्ययं मा पादिति। तत्रायं पिपासाखिन्नोऽब्दैवतं प्र देवत्रेति पञ्चदशर्चं सूक्तं सस्मार। तत्प्रयोगप्रभावेन सरस्वत्येव स्वदेशमपहाय तं प्रत्यधावत्। ततस्ते तस्य देवतानुग्रहं वेदप्रभावं च ज्ञात्वा सत्रे तं समाहूय तत्सूक्तप्रयोगेण सरस्वतीमविन्दन्निति हि श्रुत्यर्थ इति चेन्मैवम्। दासीपुत्रः कितवोऽब्राह्मण इत्याक्षेपमात्रम्, न तु वस्तुगत्यैव तन्मातुर्दासीत्वमिति भाष्यव्याख्यानात्। न च महाभारते दीर्घतमउपाख्याने—

> तस्यां काक्षीवदादीन् स शूद्रयोनावृषिस्तदा।
> जनयामास धर्मात्मा पुत्रानेकादशैव तु॥
> काक्षीवदादीन् पुत्रांस्तान् दृष्ट्वा सर्वानधीयतः।
> उवाच तमृषिं राजा ममेम इति भारत॥

इति स्मरणात् शूद्रस्यापि वेदाध्ययनाङ्गभूतमुपनयनमिति वाच्यम्। अध्ययनमात्रस्मरणेऽपि वेदाध्ययनास्मरणात्। न च रामायणे—

> न द्विजातिरहं शङ्का ब्रह्मवध्याकृतां त्यज।
> ब्राह्मणेन त्वहं जातः शूद्रायां वसता वने॥

इत्युक्तवतो मुनिपुङ्गस्य दशरथहतस्य पित्रा—

कस्य चापरात्रेऽहं स्वाध्यायं कुर्वतो वने ।
श्रोष्यामि सुचिरं शब्दं पुण्यं शास्त्रमधीयतः ॥

इति विलापे शूद्रा त्रस्य वेदाध्ययनस्मरणात् तस्योपनयनमिति वाच्यम् । कुर्वत इत्यनेनान्वयाय स्वाध्यायपदस्य शोभनाध्ययनपरत्वेन वेदाध्ययनानवबोधनात् । नन्वादिपर्वणि-

धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः ।
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ॥
संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः ।
इतिहासपुराणेषु नानाशिक्षासु बोधिताः ॥
श्रमव्यायामकुशलाः समपद्यन्त यौवनम् ।
धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि ॥
तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः ।
वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्चयाः ॥

इति विदुरस्य वेदवेदाङ्गाध्ययनस्मरणात् शूद्रापुत्रस्याप्युपनयनमिति चेन्नैवम् । धृतराष्ट्रादिनिष्ठबहुत्वसामान्याधिकरणमात्रेण वेदादेरध्ययनं यथायोग्यमुन्नेयमिति विदुरस्य वेदाध्ययनबोधनात्। अत एव विदुरेण श्रुत्यर्थस्य धृतराष्ट्रं प्रत्युपदेशो न कृत इति भारतेऽभिहितम् । वस्तुतस्तु—

जातो नार्यामनार्यायामार्यादार्यो भवेद्गुणैः
आर्याज्जातोऽप्यनार्यायामनार्य इति निश्चयः ॥
(' जातोऽप्यनार्यादार्यायामनार्य इति निश्चय ' इतिपाठः )
तावुभावप्यसंस्कार्याविति धर्मो व्यवस्थितः ।
वैगुण्याज्जन्मनः पूर्व उत्तरः प्रतिलोमतः ॥

अस्यार्थ :—

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥

इत्यनेनानुलोमजानां यद् द्विजसादृश्यमुक्तम्, तत्र निमित्ताभिधानायेदमारभ्यते । स्वजातिजेति । स्वजातिजाः सवर्णास्ताभ्योऽनन्तराः पश्चादनुकल्पेनाऽऽम्नाता ब्राह्मणस्य क्षत्रियावैश्याशूद्राः क्षत्रियस्य वैश्याशूद्रे वैश्यस्य शूद्रा, तासु ये जाता मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणा द्विजातीनां षट् सुताः, ते द्विजधर्मिणः । द्विजानां धर्मो द्विजधर्मः सोऽस्ति येषां ते द्विजधर्मिणः, द्विजात्युक्तोपनयनादिधर्मार्हा इत्यर्थः । क्षत्रियादिजाता इति वक्तव्ये यत्स्वजातिजानन्तरजा इत्युक्तम्, तत् क्षत्रियादिपूर्व्यादिसुतानां द्विजधर्मत्वव्युदासाय । तत्परिणयनिषेधेन तदुत्पन्नानां विगर्हितत्वात् । ततश्च सवर्णादिक्रमोढसवर्णासुतानामेव द्विजधर्मित्वमिति सिध्यति । स्वजातय इत्यनेनैव सिद्धौ यजूजेत्युपादानम्, तत्पत्नीत्वोत्पत्तिं गमयति । ततश्च सवर्णस्वैरिणीपरिग्रहानन्तरोढक्षत्रियाद्युत्पन्नानामपि न द्विजधर्मत्वमिति सिध्यति । अनन्तरास्वपि पत्नीत्वमनुसंधेयं तथैवोपक्रमात् । षट्संख्योपादानं द्विजातिस्त्र्यपत्यानामेव द्विजधर्मत्वं मा भूत्, किंतु शूद्रापत्यानामपि तदस्त्वित्येवमर्थम् । सुत इति पुंस्त्वग्रहणं क्लीबादिव्युदासाय । उपनयनादिविशेषपरिहारेण द्विजधर्मिण इति सामान्योपादानं सकलद्विजधर्मप्राप्त्यर्थम् ।

यदा तु स्वजातिजाः सवर्णोत्पन्ना ये त्रयः सवर्णाः पुत्रास्तेभ्योऽनन्तरमसवर्णासु जाता मूर्धावसिकादयः षडनुलोमजाः सुतास्ते द्विजधर्मिणो द्विजात्युक्तधर्मार्हा इति व्याख्यायते, तदा क्रमोढास्वपि प्रथमोत्पन्नानां क्षत्रियादिसुतानां द्विजधर्मित्वं न स्यात् । विवाहर्तुगमनक्रमयोः शास्त्रीयत्वेऽपि पुत्रोत्पत्तिक्रमस्याशास्त्रीयत्वात् । यत्तु कैश्चिन्निषादोग्रकरणपरिहारेण ब्राह्मणक्षत्रियवैश्यैः स्वजातिजैः सहानन्तरजानां मूर्धावसिक्ताम्बष्ठमाहिष्याणां त्रयाणामेव षट्त्वमभिप्रेत्य द्विजधर्मत्वं व्याख्यातम् । तन्न सुन्दरम् । ब्राह्मणक्षत्रियविशां मातुरग्रे विजननमित्याद्युपदेशात एव द्विजधर्मत्वसिद्धौ द्विजधर्मातिदेशानर्थक्यात् । न चानन्तरजानां द्विजतुल्यताभिधानेन द्विजधर्मप्राप्त्यर्थः सिद्धस्यैवानुवादोऽयमिति युक्तम् । तेनैवार्थसिद्धौ षट् सुता द्विजधर्मिण इति पुनर्विध्यारम्भानर्थक्यात् । उभयस्वीकारे तु एकस्यैव द्विजधर्मिपदस्य मूर्धावसिक्तादित्रये द्विजधर्मविधायकत्वं ब्राह्मणादित्रये तदनुवादकत्वमिति विध्यनुवादविरोधाच्च । किं च—

विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः ।
वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः ॥

इत्युपक्रमे यत्संख्येयविषया षट्संख्या निर्णीता, " स्वजातिजानन्तरजाः षट् सुता द्विजधर्मिणः " इत्युपसंहारेऽपि तत्संख्येयविषयैव सोपसंहर्तव्येति युक्तम्। अन्यथोपक्रमविरोधापत्तेः। अथ—

पुत्रा येऽनन्तरस्त्रीणां क्रमेणोक्ता द्विजन्मनाम्।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥

इत्यनेन शूद्रायां द्विजात्युत्पन्नानामपि शूद्रनामकत्वाभिधानान्न द्विजधर्मत्वं युक्तमिति वाच्यम्। सत्यमस्ति शूद्रनामकत्वम्, तथापि न तेषां द्विजधर्मतापवादकम्। वचनद्वयस्याप्येककर्तृकस्मृतित्वेन अनुलोमजमात्रविषयत्वेन च तुल्यबलत्वात्। किंतु विकल्पापादकमेव। न चासावपि वस्तुतः संभवति। मातृजातीयदण्डाजिनाद्यङ्गप्रापकात्तज्जातीयवृत्त्यादिदृष्टप्रापकाद्वा मातृसनामकत्वविधौ प्रधानोपनयनाद्यदृष्टसंस्कारप्रापकस्य द्विजधर्मत्वविधेर्बलवत्त्वेन विपरीतबाध्यबाधकभावसंभवात्। किंच निषादोग्रकरणानां द्विजधर्मतापरिहारे विध्यभावो वा निमित्तमाहोस्वित्तन्निषेधसद्भावो वेति पृच्छामः। न तावदाद्यः। " षट् सुता द्विजधर्मिणः " सदृशानेव तानाहुः " आत्मा वै पुत्रनामासि " आत्मा वै जज्ञे आत्मनः " स एवायं विरूढः प्रत्यक्षेणोपलभ्यते " तत्राऽऽत्मा जायते स्वयम् " येषामुभयतो नाब्राह्मण्यं पितृत इत्येके " पुत्रप्रजनने मातुः प्राधान्यम् ( अतः परं ग्रन्थस्त्रुटितो भाति ) ( इत्यादिवाक्येभ्यो विधिरुन्नीयमानत्वादित्यध्याहार्यम् ) ( न द्वितीयः, तथाविधनिषेधानुपलम्भादित्यप्यध्याहार्यम्। ग्रन्थान्तरे पाठश्चेत्संग्रहीतव्यः पाठकमहाभागैर्निवेदनीयश्चायं जन इति प्रार्थयते )

किं च स्वजातिजानन्तरजा इत्यत्रानन्तरशब्दोऽव्यवधानवचन आहोस्वित्पश्चाद्भाववचनः। किं प्राप्तम्। अव्यवधानवचन इति। कुतः—

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥
अनन्तरासु जातानां विधिरेष सनातनः।
द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम् ॥

इत्युपक्रमेऽनन्तरशब्दस्यैकान्तरद्व्यन्तरशब्दसमभिव्याहारेणाव्यवहितपरत्वेनाभ्युपगमात्। तथा

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम्।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥
यथा त्रयाणां वर्णानां द्वयोरात्माऽस्य जायते।
आनन्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमः ॥

इति मध्येऽव्यवहितपरत्वेन परामर्शाच्चान्तेऽव्यवहितपरत्वस्यैवौचित्यात् । ततश्च ब्राह्मणस्य क्षत्रिया क्षत्रियस्य वैश्या वैश्यस्य शूद्रा चानन्तरा भवतीति तत्पुत्राणां द्विजत्वाभिधाने वैश्यशूद्रोत्पन्नस्य करणस्याप्युपनयनं सिध्येत् । अथानन्तरोत्पन्नस्यापि करणस्य शूद्रापत्यतया प्रद्वेषेण त्यागस्तर्हि षट्संख्या बाध्येत । अथ तदबाधाय ब्राह्मणवैश्योत्पन्नस्याम्बष्ठस्य ग्रहणं तर्ह्यानन्तर्यबाधः, तस्यैकान्तरोत्पन्नत्वादित्युभयतःपाशा रज्जुः । अथ क्वचिदव्यवधानं क्वचिच्चैकान्तरत्वं चानन्तरशब्दार्थस्तर्हि व्यन्तरत्वमप्यनन्तरशब्दार्थोऽस्तु । त्रितयसाधारणस्य पश्चाद्भावस्यैवैकस्य लाघवेन प्रवृत्तिनिमित्तत्वौचित्यात् । तथा च प्रक्रान्तानां षण्णामप्यनुलोमजानां द्विजधर्मत्वाभिधानं षण्णामपि प्रतिलोमजानां शूद्रधर्मत्वाभिधानमाञ्जस्येनैव घटते । अन्यथा निषादोग्रकरणा द्विजशूद्रधर्मत्वाभावादुभयतो भ्रष्टाः स्युः । क्वापि स्मृतौ पृथग्धर्माभिधानाभावात् ।

अथ—पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥

इत्यत्र मातृनामत्वव्यपदेशाच्छूद्रधर्मप्राप्तिरिति वाच्यम् । तर्हि —

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादिताश्च ये ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥

इत्यत्र द्विजसादृश्यनिर्देशेन द्विजधर्मत्वमेव कुतो नेष्यते । नामातिदेशाद्वचनातिदेशस्य बलवत्त्वात् । तस्मात्सिद्धं षण्णामप्यनुलोमजानां द्विजत्वमिति । अत एवैतरेयब्राह्मणे निषादस्योपनयनलिङ्गं सत्रानुष्ठानं दृश्यते । तद्यथा—

ऋषयो वै सरस्वत्यां सत्रमासत । ते कवषमैलूषं सोमादनयन् । दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति । तं बहिर्धन्वोदवहन्, अत्रैनं पिपासा हन्तु । सरस्वत्या उदकं *मा पादिति। स बहिर्धन्वोदूळ्हः पिपासया वित्त एतदपोनप्त्रीयमपश्यत् प्र देवत्रा ब्रह्मणे गातुरेत्विति।* तेनापां प्रियं धामोपागच्छत् । तमापोऽनूदायंस्तं सरस्वती समन्तं पर्यधावत् । तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते । यदेनं सरस्वती समन्तं परिससार । ते वा ऋषयोऽब्रुवन्विदुर्वा इमं देवा उपेमं ह्वयाम इति । तथेति तमुपाह्वयन्त । तमुपहूयैतदपोनप्त्रीयमकुर्वत । प्र देवत्रा ब्रह्मणे गातुरेत्विति ततोऽपां प्रियं धामोपागच्छन् । उप देवानामुपापां प्रियं धामोपागच्छति, उप देवानां जयति परमं लोकं य एवं वेदेति ।

अत्रायं वाक्यार्थः । सरस्वतीतीरे सत्रमासीनैर्ऋषिभिरिलूषपुत्रः कवषनामा ऋषिर्दासीपुत्रः कितवोऽब्राह्मणोऽस्माकं मध्ये कथं दीक्षिष्यतीति मत्वा मरुदेशे नीत्वा पातितः । अत्रैनं पिपासा हन्तु सरस्वत्युदकमप्ययं मा पादिति । तत्रायं पिपासाखिन्नोऽब्दैवतं प्र देवत्रेति पञ्चदशर्चं सूक्तं

सस्मार । तत्प्रयोगप्रभावेण सरस्वत्येव स्वदेशमपहाय तं प्रत्यधावत् । ततस्ते तस्य देवतानुग्रहं वेद-प्रभावं च ज्ञात्वा सत्रे तं समाहूय तत्सूक्तप्रयोगेण सरस्वतीमविन्दन्निति विदुर्वा इमं देवा इत्यनेनो-पनयनकालीनदेवतासंप्रदानकवटुपरिदानमुक्तं भवति । तेन हि ते तं जानतेऽयमस्मदीय इति । तस्मात्सिद्धं निषादस्योपनयनमिति । रामायणे शरहतस्य ऋषिपुत्रस्य दशरथं प्रति वाक्यमपि—

न द्विजातिरहं शङ्कां ब्रह्मवध्याकृतां त्यज ।
ब्राह्मणेन त्वहं जातः शूद्रायां वसता वने ॥

तत्पितुर्वाक्यमपि—

कस्य चापररात्रेऽहं स्वाध्यायं कुर्वतो वने ।
श्रोष्यामि सुचिरं शब्दं पुण्यं शास्त्रमधीयतः ॥ इति ।

महाभारतेऽपि दीर्घतमउपाख्याने—

तस्यां काक्षीवदादीन् स शूद्रयोनावृषिस्तदा ।
जनयामास धर्मात्मा पुत्रानेकादशैव तु ॥
काक्षीवदादीन् पुत्रांस्तान् दृष्ट्वा सर्वानधीयतः ।
उवाच तमृषिं राजा ममेम इति भारत ॥ इति ॥

तत्रैव धृतराष्ट्राद्युत्पत्तावपि—

धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः ।
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ॥
संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः ।
श्रमव्यायामकुशलाः समपद्यन्त यौवनम् ॥
धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः ॥
इतिहासपुराणेषु नानाशिक्षासु बोधिताः ।
वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्चयाः ॥ इति ॥

अस्त्वेवं निषादादीनामुपनयनप्राप्तिः । दण्डाजिनादिप्राप्तिस्तु कुतः स्यात् । तन्मातॄणां शूद्राणां तदभावात् । मातृसनामतया च मातृजातीयतत्प्राप्तेरेव सिद्धान्तितत्वादिति चेत् । रथकारस्य वा तत्प्राप्तिः कुतस्त्येति ब्रूहि । तन्मातुः करण्या अपि तदभावात् । अथ तत्र पितुर्माहिष्यस्यैव दण्डादिना तदुपनयनम्, तर्हि प्रकृतेऽपि तदभ्युपगम्यताम् । युक्तं चैतत् । द्विजोत्पन्नानामनुलोम-

जानां द्विजसादृश्याभिधानस्य समानमितरच्छ्रेयेनेनेतिवद्वाचनिकातिदेशतया मातृनामातिदेशापेक्षया प्रबलत्वात्। तस्मात्सिद्धं द्विजानुलोमजानां द्विजत्वमिति ॥ इति ॥

अनेन च वीरमित्रोदयस्य पाठद्वयेनान्योन्यविरुद्धं सिद्धान्तद्वयं प्रतिपाद्यते। प्रथमपाठमते न शूद्रासमुत्पन्नस्य द्विजत्वमिति तदुपनयनाद्युल्लेखः श्वजाघनीभक्षणादिवज्ज्ञेयः। द्वितीयपाठे तु तस्यापि द्विजत्वमित्युपनयनादिकं वर्ण्यमानं समुचितमेव। अत्र युक्तायुक्तत्वं त्वग्रे विचारयिष्यते। एवमेव कानीनपौनर्भवकुण्डगोलकादीनामुपनयनादिकं विकल्प्यते निबन्धकारैः। तत्र वीरमित्रोदयो यथा—

( कुण्डगोलकादीनामुपनयनादौ वीरमित्रोदयः )

ये त्वनुलोमजा अप्यनूढोत्पन्नाः कुण्डगोलकास्तेषामुपनयनं न सर्वस्मृतिसंमतम्। वर्णजातिलक्षणाभावात्। तथा चाऽऽदिपुराणे—

सवर्णासु सवर्णैस्तु ये जायन्ते परैरपि।
अवरोढकसंज्ञास्ते व्रतसंस्कारवर्जिताः॥

परैः स्वपत्यतिरिक्तैः। अवरोढक इति कुण्डगोलकयोः साधारणी संज्ञा। देवलोऽपि—

द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते।
अवरोढ इति ज्ञेयः शूद्रधर्मा स जातितः॥

शूद्रधर्मा अनुपनेय इत्यर्थः। तथा—

व्रतहीनास्त्वसंस्कार्याः सवर्णास्वपि ये सुताः।
उत्पादिताः सवर्णेन व्रात्या इति बहिः कृताः॥

अपिशब्दादसवर्णानुलोमासु जातानां सुतरामसंस्कार्यत्वमुक्तं भवति।

अन्ये तु तयोरप्युपनयनमिच्छन्ति। तथा च ब्रह्मपुराणम्—

एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ॥ इति

एवं मूकाद्युपनयनविधिनेत्यर्थः। तत्कर्तव्यमप्युक्तं तत्रैव—

कुण्डो वा गोलको विप्रः संध्योपासनमात्रवित्।
स्नानभोजनसंध्यासु देवेषु स पठेच्चरेत्॥
एकान्ते कुत्पे भुक्त्वा सदृशैः सह संगतः। इति।

संध्या त्रिकालजा। उपासनं गृह्याग्नौ सायंप्रातर्होमः। मात्रशब्देन गायत्रीपुरश्चरणदर्शपूर्णमासस्थालीपाकादिनिवृत्तिः। विच्छब्देन तावन्मात्रोपयुक्तमन्त्राद्यध्ययनमभ्यनुज्ञायते। नैतावदेव किंत्वन्यदपीत्याह स्नानेति। स्नानं प्रातर्मध्याह्नयोः। भोजनं सायंप्रातः। अत्र संध्याशब्देन सायंप्रातर्विहितो वैश्वदेवो लक्ष्यते। भोजनसन्निधानात्। असंस्कृतान्नभोजननिषेधाच्च। अत्र पाठक्रमो न विवक्षितः। आह्निकक्रमप्रापकसामान्यप्रमाणसद्भावात्। देवो देवपूजा। एतेषु अधिकरणसप्तम्या निमित्तसप्तम्या वा कर्तव्येषु तत्तदुपयुक्तान् मन्त्रान् पठेत्। चरेदाचारं शौचाचमनादिकम्। परिगणनं चेदमितरद्विजधर्मपारिसंख्यार्थम्। श्राद्धं तु सामान्यधर्मत्वाद्भविष्यति। तदेवं कुण्डगोलकयोर्विधिनिषेधाभ्यामुपनयने विकल्पमेके मन्यन्ते। अपरे तु क्षेत्रजगूढजकानीनपौनर्भवसहोढानां कुण्डगोलकत्वेऽपि नियोगाभ्यनुज्ञानदर्शनादुपनयनविधि तद्विषयमेवाऽऽहुः। यत्पुत्पन्नस्य सत्यपि कुण्डगोलकत्वे सगोत्रोढोत्पन्नस्य च नोपनयनम्। चण्डालत्वस्मरणात्। तथा च बौधायनः—

आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः।
सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः॥

इति। अथानुलोमजानां संकराणां रथकारनिदर्शनेनोपनयनं व्याख्येयमिति मिताक्षरोक्तिः। तथा च शङ्खः—

क्षत्रियवैश्यानुलोमानन्तरजोत्पन्नो रथकारः। तस्य चेज्यादानोपनयनसंस्कारक्रिया अश्वप्रतिष्ठा रथसूत्रवास्तुविद्याऽध्ययनवर्तिता चेति॥

अस्यार्थः—क्षत्रियस्यानुलोमोऽनन्तरो वैश्यः। वैश्यस्यानुलोमोऽनन्तरः शूद्रः। ताभ्यां तयोरुत्पादिते माहिष्यकरण्यौ। तस्यां तस्माज्जातो रथकारः।

माहिष्येण करण्यां तु रथकारः प्रजायते॥

इति स्मरणात्। तस्य इज्या यागो ज्योतिष्टोमादिः। दानं मन्त्रसाध्यं तुलापुरुषादि महादानम्। उपनयनमुक्तलक्षणम्। संस्कारा उपनयनोत्तरभाविनो जीवतो मृतस्य च। पूर्वसंस्काराणां शूद्रादिसाधारणत्वात्। क्रियाः काम्यनैमित्तिकाः। अश्वप्रतिष्ठा शालिहोत्रादिरथसूत्रम्। रथनिर्माणयोजनचालनादि। वास्तुविद्या गृहप्रासादादिनिर्माणम्। अध्ययनं वेदादेः। एतद्वर्ती एतदनुष्ठातेत्यर्थः। नन्वेवं रथकारस्योपनयनाध्ययनेज्यादिसंभवे रथकाराधिकरणसिद्धान्तविरोधः। तत्र हि रथकारशब्दस्य रूढ्या उपनयनादिरहितजातिविशेषपरतया तदाधानस्यापूर्वतायाः सिद्धान्तितत्वात्। इति चेन्नायं दोषः। तस्य सङ्करथकारातिरिक्तस्य ऋभुसुधन्वापरपर्यायस्योपनयनादिरहितस्य मात्स्यापत्यस्य तत्रोदाहरणात्। तथा च तन्त्ररत्नोदाहृत स्मृतिवचनम्—

व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव सः।
भरुषश्च विजन्मा च मैत्रः सात्वत एव च ॥ इति।

अथ मूकाद्युपनयनं ब्रह्मपुराणे—

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः।
तस्माच्च पण्ढबधिरकुब्जवामनपङ्गुषु ॥
जडगद्गदरोगार्तशुष्काङ्गविकलाङ्गिषु।
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ॥
ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम्।
मत्तोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते ॥
कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः।
तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा ॥
संस्कारमन्त्रहोमादीन् करोत्याचार्य एव तु।
उपनेयाश्च विधिवदाचार्यः स्वसमीपतः ॥
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत्।
कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेत् ॥
एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ ॥

इति। अस्यार्थः— अत्रोढात्वविशेषणमनपेक्ष्यैव केवलब्राह्मणब्राह्मणीजन्यत्वेन गोलकादि-साधारणं ब्राह्मण्यमभिप्रेत्येदमुच्यते। ब्राह्मण्यामिति। तेनेदं गौणं ब्राह्मण्यम्। तन्निमित्तक एवाय-मुपनयने गुणविकारः। कुब्जवामनादिषु सत्यपि मुख्ये ब्राह्मण्ये कुब्जत्वादीनिमित्तक एवास्योप-देशः। तेन गुणविकारे निमित्तद्वय सिध्यति। गौणं ब्राह्मण्य कुब्जत्वादिकं चेति। अन्यथा कुब्जादीनामत्र परिगणनमनर्थकं स्यात्। पण्ढादयोऽत्र जात्यैवाववेयाः। चिकित्सनीयेषु पुनर्य-थावदुपनयनं कार्यं न गुणविकारः। मत्तो मद्यादिना उन्मत्तो ग्रहावेशादिना। शयनस्थ उत्थाना-शक्तः। निरिन्द्रियः षडिन्द्रियशून्यः। ध्वस्तपुंस्त्वो दोषविशेषेणाप्रत्यानेयपुंस्त्वः। यथोचितं यस्य यदङ्गोपसंहारसामर्थ्यं नास्ति। तस्य तदङ्गपरिहारेण कर्तव्यमित्यर्थः। मत्तोन्मत्तयोर्मता-न्तरमाह मत्तोन्मत्तौ न संस्कार्याविति। तत्र हेतुमाह कर्मस्वनधिकारादिति। तदपत्यसं-स्कार्ये हेतुमाह पातित्यं नास्ति चैतयोरिति। ततश्च व्यतिरेकमुखेण पतितापत्यं न संस्कार्यमित्युक्त भवति। पतितोत्पन्नः पतितो भवत्यन्यत्र स्त्रिया इति वसिष्ठस्मरणात्। तदपत्यं तु संस्कार्यमित्यत्र तुशब्देन विवक्षित विधि विच्छिद्य प्राकृत एव विधिरनूद्यते संस्कार्यपदेन। अन्यथा " अपरे

त्वाहुरन्यथेति " अन्यथापदेन विवक्षितविधेः पक्षान्तरत्वाभिधानं नोपपद्येत। ततश्च मत्तोन्मत्ताप-त्यस्य प्राकृतविधिगुणविकारौ वैकल्पिकौ भवतः। तमेव गुणविकारं दर्शयति। संस्कारेति। बटु-पठनीयानां दण्डाजिनोपवीतादिग्रहणसंस्कारमन्त्राणामाचार्यं प्रत्येव पाठो विधीयते। तथा होमः समिदाधानं तन्मन्त्रपाठश्च। नाचार्यपठनीयानाम्। न वा तत्कर्तृकस्य प्रधानहोमस्य। विधिप्राप्तत्वात्। बटूपगमनपरिहारेणाऽऽचार्यस्य स्वसमीपेऽग्निसमीपे वा पङ्ग्वादिमाणवकानयनं विधीयते। प्राकृतात् गायत्र्युपदेशात् बटुं स्पृष्ट्वा गायत्रीजपो वैकल्पिको विधीयते। तस्य च श्रवणोच्चारणसमर्थान् प्रत्युपदेशः। मूकबधिरादीन् प्रति स्पृष्ट्वा जप इति व्यवस्था। एवमुपनयनविधिमुक्त्वा विवाहविधिमाह। कन्यास्वीकरणादिति। अनुमन्त्रयेत प्राण्यभिमृशेदप्राणि कन्यां चेत्याश्वलायनोक्तयोः कन्यास्पर्शानुमन्त्रणयोरुभयसमर्थं प्रत्युभयमन्यतरसमर्थं प्रत्यन्यतरदिति। एतदुभयातिरिक्तं सर्वमाचार्येण करणीयमिति ॥ इति ॥

## ( वीरमित्रोदयपरीक्षणम् )

अत्र च वीरमित्रोदये शूद्रासंतानविषये कुण्डगोलकादिविषये च परस्परविरुद्धोभयपक्षप्रतिपादनेनोपनयनं कर्तव्यं न वा तेषामिति संदेह एव भवति। तत्र चोभयस्यापि पक्षस्य सोपपत्तिकत्वाद्विकल्पापत्तिः स्यात्। ततश्च समाजदृष्ट्या तत्र तत्र विरुद्धपक्षद्वयस्यापि प्रचारे न समाजस्यैकरूपता सिध्यतीति तत्सिद्धये कंचनैकमेव पक्षमवलम्ब्य प्रचारः कर्तव्यः। तदर्थं च किंचिदधिकमत्र विचार्यते ॥

इदमत्राऽऽकूतम्- स्यादिदं शूद्रापुत्रोपनयनं धर्म्यम्, यदि शूद्रा भार्यापि धर्म्या स्यात्। तस्यास्तु मन्वादिभिः स्वयमेव निषेधात्।

> न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः।
> कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते ॥

इत्यादिवचनैः शूद्राया भार्यात्वेन कुत्रापि कथमपि नोपदेशो नाम विधिरिति स्पष्टं विध्यभावः प्रतीयते। यस्तु " ताश्च स्वा चाग्रजन्मनः " इति विधिः। सोऽपि न धर्मार्थः। किंतु कामार्थ एव। कामतस्तु प्रवृत्तानामित्युपक्रमात्। तथा च कामतो व्यभिचारे कदाचित्प्रवृत्तिः स्यात्तन्निवारणार्थमेव भार्यात्वमेतासां प्रतिपाद्यते न पुनर्धर्मार्थम्। तथा च धर्म्यविवाहजन्यं पत्नीत्वं सवर्णास्वेवोत्पद्यते काम्यविवाहजन्यं तु भार्यात्वमसवर्णास्वेवेति विवाहजन्यपत्नीत्वभार्यात्वयोर्भेदादेव तत्संततिभेदोऽपि सिध्यति। तत्र भार्यात्वोत्तरत्वनुकूलविवाहसंस्काराभ्यनुज्ञानमिदं स्थितस्य गतिश्चिन्तनीयेतिन्यायेन कामतः प्रवृत्तस्य व्यवस्थाकरणमेव। अत्र च मातापित्रोः सवर्णत्वाभावेन संकरात्तत्सन्ततेरुपनयनमित्यतिपत्तिः। एवं च यदि तेषामुपनयनादिकं न स्यात्तदा तु यथाकथमपि कदापि तेषामुत्कर्षो न स्यात्।

तथा च " न मांसभक्षणे दोषो न मद्ये न च मैथुने " इति स्वाभाविकप्रवृत्त्यनुसारेणैतादृशसंकरप्राचुर्ये समाजस्याधःपात एव स्यात् । तदपेक्षयोपनयनगार्हस्थ्यानुकूलमन्त्राध्ययनाद्यधिकारद्वारा धर्मानुष्ठाने पञ्चमे सप्तमे वा कदाचिज्जात्युत्कर्षे समाजसंरक्षणमेव स्यादिति तदुपनयनादिसंस्कारपक्ष एव समाजदृष्ट्या श्रेयस्कर इति भाति । किंच संस्काराणां कर्मरूपत्वेन स्वाभाविकैनोनिर्वहणशक्तिस्तत्रावश्यमङ्गीकरणीया शास्त्रप्रामाण्यात् । सा च योग्यद्रव्यमपेक्ष्यते । योग्यता तु बीजरक्तयोरेवाऽऽदौ परीक्षणीया । तत्र बीजस्य प्राधान्ये शूद्रापुत्रोऽपि कदाचित्संस्कारप्रभावेण क्षेत्रप्रभावेण च जात्युत्कर्षं लभेतैवेति तत्संस्कारकरणपक्षोऽयं नात्यन्तमनुचितः । तथापीदानीं कलौ तादृशासवर्णाविवाहस्यात्यन्तं निषेधान्नेदानीं पारशवादीनामुत्पत्तिरिति विवाहमन्तरा समुत्पन्नानां तादृशामिदानीं व्यभिचारजन्यत्वेनापध्वंसजत्वाच्छूद्रधर्मत्वमेवेति नोपनयनादिसंस्कार इति निश्चप्रचमेव । विवाहपदार्थस्तु विवाहप्रकरणे विचारयिष्यते । तेनाधुनातनानामार्यसमाजब्रह्मसमाजप्रार्थनासमाजादीनां विवाहपद्धती राजशासनोल्लेखरूपा विवाहपद्धतिश्च प्रत्याख्यायते । ततश्च शूद्रापुत्रोपनयनवादोऽयमिदानीमकिंचित्कर एव ।

सजातीयस्त्रीपुरुषव्यभिचारजन्यानां तु विषये किंचिदधिकं विचारणीयम् । तादृशव्यभिचारस्य सर्वदा संभवात् । तत्रोपनयनादिसंस्कारविषयकपक्षद्वयमध्ये प्रथमस्त्वयमेव निषेधात्मकः । तत्र निषेधवादिनां मते विवाहस्य सजातीयत्वप्रयोजकत्वात् व्यभिचारजन्यस्यावैधावेदनजन्यस्य च मातापित्रोः सावर्ण्येऽपि विवाहसंस्काराभावेन सजातीयत्वाभावान्न " वसन्ते ब्राह्मणमुपनयीत " इत्यादिविधेस्तत्रावकाशः । " ग्रहं संमार्ष्टीति " वत् उद्देश्यतावच्छेदकस्य ब्राह्मणत्वादेर्विवक्षितत्वेन ब्राह्मणादिपदस्य च विवाहसंस्कृतसवर्णमातापितृजन्यत्वावच्छेदकजातावेव शक्तत्वात्, " गौणमुख्ययोर्मुख्य एव कार्यसंप्रत्ययः " इति न्यायेन मुख्यब्राह्मणत्वादेरेव तत्र ग्रहणात् । परं च कल्पादौ सृष्टानां ब्राह्मणादीनामपि तथा सत्युपनयनं न स्यादिति ब्राह्मणादिपदैः सर्वविधब्राह्मणग्रहणमावश्यकमिति बालम्भट्ट्यादिनिबन्धानामाशयः । तत्रेदमनुयोक्तुं सांप्रतमेव यद्यदि कल्पादौ समुत्पन्नब्राह्मणादीनामनुग्रहार्थं ब्राह्मणादिपदानां चतुर्विधब्राह्मणत्वादौ शक्तिराश्रयणीया । तदपेक्षया- " ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः " इति ब्राह्मवाक्याल्लाघवात्सवर्णमातापितृजन्यतावच्छेदकमेव ब्राह्मणत्वादिकमङ्गीकृत्य तत्रैव शक्तिः कल्पनीया । नन्वेवमपि सर्गादिब्राह्मणादीनां ब्राह्मण्याद्यनुपपत्तिस्तदवस्थैवेति चेन्न । आत्यन्तिकप्रलयस्यानङ्गीकारात् । तदङ्गीकारे तु तेषामयोनिजत्वेन स्वतःसिद्धत्वात्तत्संस्काराणामपि स्वतःसिद्धत्वमास्थेयम् । ननु विश्वामित्रादीनां कथं ब्राह्मण्यमिति चेन्न ॥ तत्र संस्कारस्य पूर्वसिद्धत्वेन संस्कारोपयोगिब्राह्मण्याभावात् । अन्यथा त्वदवर्षत्वादिकमभ्युपपाद्यं स्यात् । वज्रसूच्युपनिषदनुसारेण वसिष्ठादीनामुत्पत्तिस्वीकारेऽपि न तत्र

संस्कारोपयुक्तब्राह्मणत्वाद्यपेक्षा । तत्र ब्राह्मणशब्दस्य ब्रह्म जानातीति ब्राह्मण इति व्युत्पत्त्या गुणवाचकत्वेन जातिवाचकत्वाभावात् । संस्कारविधौ तु जातिवाचकब्राह्मणपदस्यैवोपादानम् । न गुणवाचकस्य । निषादस्थपतिं याजयेदिति न्यायात् । अन्यथा तत्राप्यदृष्टवर्षत्वाद्युपपादनीयं स्यात् । नन्वेवं सति न तेषामुपनयनमितिचेदिष्टापत्तेः । ये तु गुणतो ब्रह्मपदं प्राप्तास्तेषां शूद्रादीनां विनैवोपनयनं तादृशब्राह्मणपदवाच्यत्वे न कापि हानिः । ये तु रघुवंशाद्युपाध्यायत्वेन प्रसिद्धा वसिष्ठादयस्ते त्वितो भिन्ना एव । अत एव ब्रह्मपुत्रत्वेनायोनिजत्वेन च तेषामुल्लेखः पुराणादौ । तथाहि

> अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे ।
> भगवच्छक्तियुक्तस्य लोकसंतानहेतवः ॥
> मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
> भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥
> उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः ।
> प्राणाद्वसिष्ठः संजातो भृगुस्त्वचि करात् क्रतु ॥
> पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः ।
> आङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥ भा. ३।१२।२१।२४ ॥

एवमन्यत्रापि । तथा चैतेषां वसिष्ठादीनामयोनिजत्वेन सहजसिद्धत्वादुपनयनादिविशिष्टैवोत्पत्तिः । अत एव जन्मत एव तपःप्रवृत्तिरुपवर्णिता संगच्छते । तदुत्पन्नानां तु योनिजानां सवर्णमातापितृजन्यतावच्छेदकब्राह्मणत्वादिजातिमत्त्वाद्विधिविषयत्वे न कापि हानिरिति सर्वमेवोपपन्नं भवति । तथा च ब्राह्मणपदशक्यतावच्छेदकब्राह्मणत्वजातिप्रयोजकं सवर्णमातापितृजन्यत्वमेव लाघवात्पूर्वोक्तब्राह्मवचनादङ्गीकर्तव्यम् । अत एव पाङ्क्तापाङ्क्तप्रकरणे विकर्म—पतित-कुष्ठिब्राह्मणादिवत् पौनर्भवकुण्डगोलकादीनामपि प्राप्तिपूर्वको निषेधः श्राद्धे उपपद्यते । अन्यथा "नान्तरिक्षे न दिवि" इत्यप्राप्तिप्रतिषेधवन्निषेधवाक्यस्यापि विध्यन्तरपरत्वकल्पनाप्रसङ्गः । न संभवान्निषेधो भ्रान्तिर्मा भूदिति । पदपदार्थावधारणेनैव भ्रान्तिनिराकरणसंभवात् । अन्यथा "निषादस्थपतिं याजयेदि" त्यत्रापि अर्थान्तरनिषेधकल्पनाप्रसङ्गात् । तत्सिद्धं सजातीयव्यभिचारजातानामेवया।देनजातानां च मातापितृसावर्ण्यम् । तत्र व्यभिचारादिदोषमूलकत्वादप्राशस्त्येन न प्रशस्तैः सह यौनमौखसौवसंबन्धः । केवलं समुत्कर्षार्थमुपनयनसंस्कारः, गार्हस्थ्यार्थं च तत्तत्कर्मविधुक्तमन्त्राध्ययनं चेति द्वितीयः पक्ष एव श्रेयस्कर इति भाति ।

## ( अथ शास्त्राधिकारविचारः )

अयमत्राभिसंधिर्यद्ब्राह्मणत्वादिजात्युद्देशेन विहितेषु कर्मसु केषामधिकार इत्येवाऽऽदौ पर्यालोचनीयम् । यदि च कल्पादिस्वीकारेण सृष्ट्यारम्भकाले समुत्पन्नानामृषीणां कश्यपादीनां देवपितॄणामुपनयनाद्यर्थं ब्राह्मण्यमपरं ब्रह्मतत्त्वमुखजन्यतावच्छेदकजातिरूपं स्वीक्रियते । तदा तु तत्पुत्राणां देवानामप्युपनयनवेदाध्ययनाद्यधिकारः प्राप्नोति । न ह्युपनयनं केवलादृष्टार्थं कुत्रापि विधीयते । अध्ययनार्थत्वात् तस्य । तथा च स्वयंप्रतिभातवेदानामयोनिजानामृषीणां दिवौकसां च तत्पुत्राणां देवानां स्वर्गकामनारहितत्वात्तदुद्देशकयागाद्यनपेक्षमाणानां च कथमुपनयनादिविध्यधिकार इति विद्वद्भिरेव विचारणीयम् । अत एव मनुष्याधिकारमात्रत्वं शास्त्रस्येति स्पष्टमिदं प्रमीताधिकरणे देवताधिकरणे चोत्तरमीमांसायाम् ( अ. १ पा. ३ अ. ८।९ ) पूर्वमीमांसायां च षष्ठाध्यायेऽधिकारलक्षणे । अविशेषप्रवृत्तमपि शास्त्रं मनुष्यानेवाधिकरोति शक्तत्वादर्थित्वादपर्युदस्तत्वादुपनयनशास्त्राच्च । न हि स्वर्गकामो यजेतेति स्वर्गोद्देशेन विधीयमानो यागोऽसत्यामपि स्वर्गकामनायां पुरुषं नियुनक्ति । कामनाभावश्च यथा साङ्गानुष्ठानाशक्त्या वा द्रव्याभावाद्वा विचाराहित्याद्वा तथा काम्यफललाभादपि भवतीति स्वर्गस्थानां देवानां तत्कामनाभावान्नाधिकारः कर्मसु । एवं मनुष्यकृतकर्मणि इन्द्रादीनां देवतात्वमिवेन्द्रादिकृतकर्मणि का वा देवतेन्द्रादिकाऽपरा परिकल्पनीयत्येपि विचारणीयमेव । सर्वथा तु स्वयंप्रतिभातवेदविद्यानामृषीणां देवतानां च कर्माधिकारबोधकविधिनिषेधविषयत्वाभावान्मनुष्याणामेव तत्राधिकार इत्येवागत्याऽभ्युपगन्तव्यम् । तथा च मानवान्तर्गतब्राह्मणत्वादिकमेवात्र लक्षणीयमिति व्यर्थमेवेदं ब्राह्मणत्वादिजातीनां भेदचतुष्टयादिवर्णनमिति विज्ञेयम् ।

नन्वेवमप्यायमानवे ब्राह्मणादौ कथं जातिनिर्णयः, किमिदं च मानवत्वमिति चेदत्र ब्रूमः । अनुशासनीयत्वमेव मानवत्वम् । अनुशासनं च तेषामेव येषां कामक्रोधादिनोत्पथगामित्वसंभावना। ते च मैथुनजन्या इति नायोनिजेषु शास्त्राधिकारप्रयोजकं मानवत्वम् । तत्र च ब्राह्मणत्वादिजातिनिर्णयस्तु न सजातीयमातापितृजन्यत्वस्मरणसहकारेण, किं तु मातापितृनिवेदनसहकारेणैव । एवं च यत्र मातापितृभ्यामेव तादृशजातिर्निवेदिता, तत्र तद्विपरीतकल्पना कथमपि नैव संभवति। आप्तत्वेन तद्वचनस्य स्वतःप्रामाण्यात् । न हि वीतरागा देवकल्पा ऋषयोऽन्यथा निवेदयन्तीति तदुत्पन्नानां तन्निवेदिता तत्तज्जातिरवश्यमेव प्रत्येतव्या । तदुक्तं च तैरेवेदमनुशिष्टं यदतः परं जायमाना संततिर्मातापितृसजातीयेति तदनुशासनानुसारेण " ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः " इति सिद्धान्तः । नो चेन्मूर्धावसिक्तादिसंकरजेषु क्षत्रियाब्राह्मणजन्यत्वादिकमेव तत्तज्जातिगमकमूरीक्रियेत चेन्मूर्धावसिक्तादिस्त्रीपुरुषसंततीनां तज्जातीयत्वं न स्यात् । न चेष्टापत्तिः । अनन्तजातिकल्पनाप्रसङ्गात् । इदानींतनानां तत्तज्जातीयानां संकरजानां तज्जातीयत्वाभावप्रसङ्गात् । उच्चजातीयत्वस्य सर्वथाऽसंभवेन ततोऽपि निकृष्टतमजातित्वप्रसङ्गात् । इदानींतनचण्डा-

लानां चण्डालत्वाभावप्रसङ्गात् । किंचेदानींतनानां ब्राह्मणादीनामपि ब्राह्मणत्वाद्यभावप्रसङ्गात् । सृष्ट्यारम्भकाले हि मुखादिजन्यत्वं ब्राह्मणत्वादिप्रयोजक यद्दूरीकृतम्, तस्येदानीमभावात् । एवं च ब्राह्मणत्वादिप्रयोजकानां मुखादिजन्यत्व–कर्मजन्यत्व–सजातीयमातापितृजन्यत्वादीनामननुगमे कुत्रापि जातिसिद्धिर्न स्यात् । न चैतदन्यतममेव तादृशजातिप्रयोजकमिति वाच्यम् । तथा सति ब्राह्मणत्वादिजातीनामेकरूपत्वाभावप्रसङ्गात् । जातिर्नाम सामान्यम् । तच्च समानानां भावो नित्य एकोऽनेकानुगतश्चावश्यमेवाभ्युपेयः । नो चेत्सामान्यस्य स्वरूपव्याघातः स्यात् । तथा चेदानींतनेषु ब्राह्मणादिषु ब्राह्मणत्वादिकमन्यदेव सृष्ट्यारम्भकाले तु तदन्यदेवेति सामान्यभेदापत्तौ तत्रापि सामान्यकल्पनायामनन्तसामान्यकल्पनाप्रसङ्गात् । यदि च ब्राह्मणत्वादीनामवान्तरभेदेषु सामान्यमेकरूपमङ्गीकृत्य तदन्तर्गतब्राह्मणत्वस्यापि सामान्यस्वरूपता तदा तु सर्वविधब्राह्मणत्वप्रयोजकं किंचिदेकं वक्तव्यम् । न च तद्ब्राह्मणत्वमित्यादिक संभवति । ब्राह्मणेतरावृत्तित्वे सति सकलब्राह्मणवृत्तित्वस्यैव तत्स्वरूपत्वे तस्य ब्राह्मणत्वानतिरेकात् । अस्तु वा यथाकथमपि । एवमपि सृष्ट्यारम्भकाले ब्राह्मणत्वादिकमन्यदिदानीं चान्यदिति तु वक्तव्यमेव । तथा च "वसन्ते ब्राह्मणमुपनयीत" इत्यादिविधिषु कीदृश ब्राह्मणत्वादिकं ग्राह्यमिति संदेहे तु लोकप्रसिद्धपदार्थानामेव शास्त्रेषु प्रतिपादनायोगाद्रूढेर्बलीयस्त्वाच्च ब्रह्ममुखजन्यतावच्छेदकजातिरूपब्राह्मणत्वादेर्ब्रह्मजन्यत्वरूपयोगमूलकत्वेन सजातीयमातापितृजन्यत्वप्रयोज्यनिरूढब्राह्मणत्वादिकमेवोपादेयमित्यगत्या वक्तव्यम् । तथा च सृष्ट्यादौ तादृशब्राह्मण्यादेरभावादेव न तत्र विधिनिषेधशास्त्रप्रसर इति न तेषामुपनयनाद्यावश्यकता। तथा च यत आरभ्य शास्त्राधिकारस्तस्य ब्राह्मण्यादिकमगत्या तन्मातापितृनिवेदनेनैवेति समान एव सिद्धान्तः । तथा च सर्वेषां वर्णानां जातीनां वा समानमातापितृजन्यप्रयोज्यमेव तत्तज्जातीयत्वमितीदानींतनाः सर्वा जातयः सुस्थिरा एव संपद्यन्ते । अत एव " कृतकृत्याः प्रजा जात्या तस्मात्कृतयुगं विदुः " इति जन्मत एव कृतकृत्यता कृते वर्ण्यमानोपपद्यते । अत एव च—

> त्वत्तोऽधस्तात्प्रजाः सर्वा मिथुनीभूयमायया ।
> मदीयया भविष्यन्ति हरिष्यन्ति च मे बलिम् ॥ भागवतम् ।

इति प्राचेतसदक्षं प्रति ब्रह्मवाक्यं संगच्छते ॥
मनुरपि—

> अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
> पतीन् प्रजानामसृजं महर्षीनादितो दश ॥
> मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
> प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥

एते मनूंस्तु सप्तान्यानसृजन् भूरितेजसः ।
देवान् देवनिकायांश्च महर्षीनमितौजसः ॥
यक्षरक्षःपिशाचांश्च गन्धर्वाप्सरसोऽसुरान् ।
नागान् सर्पान् सुपर्णांश्च पितृणांच पृथग्गणान् ॥
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ।
उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च ॥
किंनरान् वानरान् मत्स्यान्विविधांश्च विहंगमान् ।
पशून् मृगान् मनुष्यांश्च व्यालांश्चोभयतोदतः ॥
कृमिकीटपतङ्गांश्च यूकामक्षिकमत्कुणम् ।
सर्वं च दंशमशकं स्थावरं च पृथग्विधम् ॥
एवमेतैरिदं सर्वं मन्नियोगान्महात्मभिः ।
यथाकर्म तपोयोगात्सृष्टं स्थावरजङ्गमम् ॥ १।३४-४१ इति ।

अत्र चाऽऽदौ

"द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः ॥

इत्यनेन विराडुत्पत्तिमभिधाय ततश्च—

तपस्तप्त्वाऽसृजद्यं तु स स्वयं पुरुषो विराट् ।
तं मां वित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः ॥ १।३३ ॥

इत्यनेन विराजः सकाशान्मनोः सृष्टिः । ततः प्रजापतीनामुद्भवः । ततो देवानामनन्तरंच यक्षादीनां प्रसूतिं प्रतिपाद्य पशुमृगादिसंभूत्यनन्तरं मनुष्योत्पत्तिरुपवर्ण्यमानेदमेव द्रढयति यदादिमानां मनुप्रजापतिदेवानां तपसैवायोनिजाऽलैङ्गिकी च सृष्टिरिति । मनुष्यसृष्टेस्तु लैङ्गिकत्वमिति तत्र रत्यरतिविरत्यादीनां संभवेन श्रेयोविघातसंभावनया जगत्स्थित्यर्थं प्रवृत्तिलक्षणधर्मोपदेश इति तत्र विद्यमानानां जातीनां प्रयोजकमिदमेव यत्सजातीयमातापितृजन्यत्वम् । अतश्च न पूर्वतनानामयोनिजानां तपःसृष्टानां तादृशजातिनियतधर्माधिकार इति तत्र ब्राह्मणत्वादिजातिप्रसाधनं निबन्धकाराणामकिंचित्करमेव । तपोजन्यत्वेन तेषां सात्त्विकसृतेः सहजत्वात् । अतश्च शास्त्राधिकारप्रयोजकजातिविचारणापरेऽस्मिन् धर्मशास्त्रे जातेरनादित्वमङ्गीकृत्य सजातीयमातापितृजन्यत्वमेव जातिगमकमभ्युपेयमिति सिध्यति । अत एव—

यं तु कर्मणि यस्मिन् स न्ययुङ्क्त प्रथमं प्रभुः ।
स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः ॥ १।२८ ॥

इत्यनादित्वप्रतिपादनं संगच्छते । एवं च प्राणिकर्मसापेक्षमेव प्रजापतीनां निर्माणं न स्वेच्छयेति अनादिसिद्धजातिप्राप्तिरपि कर्माधीनैव सिध्यति । सोऽयं सृष्टिक्रमो मन्वादिभिः प्रतिपाद्यमानो विवक्षितो नवेति विशये त्विदमेव प्रतिवचनं यत्कल्पस्वीकारे क्रमस्य विवक्षितत्वमवश्यमेव मन्तव्यम् । अत एव ब्रह्ममीमांसायां "तत्तेजोऽसृजत" "तस्माद्वा एतस्मादात्मन आकाशःसंभूतः" इत्यादिविरुद्धक्रमपराणां वचनानां विरोधपरिहारेणैकवाक्यतोपवर्णिता संगच्छते । अनादित्वे तु न साऽपेक्ष्यते । उत्पत्तेरेवाभावात् । तथा च यदि कल्पस्वीकारस्तर्हि क्रमोऽपि विवक्षणीयः । शास्त्रबोधितत्वात् । अविवक्षाबोधकप्रमाणाभावाच्च । अन्यथा क्रमप्रतीतिरियं प्रमाणजन्या निष्प्रमाणेति कल्पनायां शास्त्राप्रामाण्यव्याघातप्रसङ्गः । तत्सिद्धमादिमब्राह्मणादिष्वपि तन्मातापितृवचनादेव तत्तज्जातिनिर्णय इति । मातापितृवचनं च स्वगतजातिस्मरणपूर्वकमेवेति सजातीयमातापितृजन्यत्वमेव संताने तज्जातीयतागमकमित्यवश्यमेवोरीकर्तव्यम् । तथा च शास्त्राधिकारप्रयोजिका जातिर्बीजरक्तद्वारैव पिण्डेष्वनुवर्तत इति सिद्धम् ।

( इदानींतनसृष्टिक्रमकल्पनापर्यालोचनम् )

अत्र च प्रसङ्गादिदमपि चिन्तनीयं यदिदानींतना भौतिकशास्त्रज्ञाः कथं वा सृष्टिक्रमं पर्यालोचयन्तीति । तेषामयमभिप्रायो यदियं सृष्टिः पञ्चमहाभूतेभ्यो जायमाना नादौ पूर्णावस्थामुत्पादयतीति प्रत्यक्षमेव । नहि जायमानो बाल उत्पत्त्यैव विद्वान् सुशीलः कार्यक्षमश्चोत्पद्यते । एवमेव प्रथमतः समुत्पन्नः पुरुषो ज्ञानी सत्यपराक्रमश्च भवितुमर्हति । अतश्चाऽऽदौ निर्बुद्धः कार्याक्षमो वन्यकल्प एव मानवः समुत्पन्न इति कल्पनीयं दृष्टानुरोधात् । ततश्च क्रमशो वासनावृद्धौ कार्यसामर्थ्यमपि विकासं गतमितिक्रमेणाद्यावधि विकासश्रेणीमेवाऽऽरोहति मानवसृष्टिः । एवं च नाद्यापि मानवानां बुद्धौ वा कर्मणि वा परिपूर्णावस्था संजाता । उत्तरोत्तरं विकासाधिक्योपलम्भात् । एवमेव मानवसृष्टेः प्रागपि विकासतारतम्यदर्शनमूलकमितरेषां प्राणिनां क्रमशो जन्मेतिपरिकल्पनायां न किमपि बाधकं पश्यामः । तथा च जलाच्छैवालम्, ततश्च निरिन्द्रियसरीसृपसृष्टिः । ततश्चैकेन्द्रियाऽनन्तरं द्वीन्द्रियेति क्रमेण स्वेदजोद्भिज्जाण्डजजरायुजानां सृष्टिः । तत्रापि मानवसृष्टिरियं मानवकल्पात्कस्मादिद्वानरादिपशोरसमुत्पन्नेति पूर्वपूर्वतरपूर्वतमानामज्ञानाधिक्यमुत्तरोत्तरं च ज्ञानाधिक्यमिति सिद्धान्तः सिध्यति । इति ।

अत्रेदं विचारणीयम्—यदिदं परिकल्प्यमानं ज्ञानतारतम्यं क्रियाशक्तितारतम्यं च कस्मिंश्चिदंशे निरवद्यं भवेत् । परन्तु । नहि पूर्वो . . . . . . . . . . . . म् । यदि न तादृशः पुरुषोऽद्यापि उत्पन्नस्तर्हि

अग्रे भविष्यतीत्यत्र किं प्रमाणम् । द्वितीयपक्षे तु सर्वदा सर्वेषामज्ञानित्वात्कार्याक्षमत्वाच्च न पूर्णतया मानवतेति वानर कल्पत्वमेव मानवानामापद्येत । तथा चेदानींतनं ज्ञानमपूर्णत्वान्नोत्तरेषामुपयुक्तं न वा प्राक्तनानामिति तस्य वैयर्थ्यमेव । तथा च स्वस्य पाण्डित्यप्रदर्शनार्थमारब्धोऽयं समुद्योगो मौर्ख्यमेव साधयतीति विनायकं प्रकुर्वाणो रचयामास वानरमित्याभाणकं यथार्थीकुर्वाणो नूनं देवानांप्रियो भवान् । एवं च ज्ञानतारतम्यं क्रियातारतम्यं च कुत्रचिदपि विश्रान्तं भवेदित्यङ्गीकर्तव्यम् । यत्र च विश्रान्तं तत्र तस्यानुत्तमोऽतिशयोऽपि स्वीकर्तव्यः । सैव च सर्वज्ञता सर्वशक्तिमत्ता चेति तद्वान् कश्चनावश्यमूरीकर्तव्यः । स एव चास्माकमीश्वरः । अत एव "तत्र निरतिशयं सार्वज्ञ्यबीजम्" इति योगानुशासनम् ।

किंच सर्वमिदं कार्यजातं कारणे सूक्ष्मतया वर्तमानमेवाऽऽविर्भवति, उताहो नूत्नमेवाविद्यमानमपि जायते । नाऽऽद्यः, अद्यतनज्ञानशक्तेरद्यतनक्रियाशक्तेरपि कारणे विद्यमानाया एवाऽऽविर्भाव इत्यभ्युपगमप्रसङ्गात् । ततश्च सर्वज्ञताया अपि तथात्वापत्तौ मूले सर्वज्ञपुरुषस्वीकारप्रसङ्गे भवदभिमतसिद्धान्तव्याकोपः । यदि च नूतनमेवाविद्यमानमुत्पद्यते, तर्हि तु कारणविशेषपरिग्रहमन्तरापि तदुत्पत्तिप्रसङ्गः । न च नूतनमप्युत्पत्स्यमानं कारणशक्तिमपेक्ष्यत इति वाच्यम् । कारणशक्तेः कार्यस्वरूपानतिरेकात् । सेयं शक्तिरेव कुमारीगर्भ इव पुंयोगे कार्यगर्भं कारणमनुमापयतीति नातिरिक्तत्वं तस्याः । नहि शक्तिः शक्यसंबन्धमन्तरा कुत्रापि निरूपयितुं शक्या । शक्यं च कार्यं पूर्वमुत्पत्तेर्नास्तीत्यसतः संबन्धः कथं स्यात् । असतः संबन्धस्वीकारे सर्वत्र सर्वकार्यसंबन्धप्रसङ्गः । असत्त्वाविशेषात् । अथ प्रागभावात्मिका सेत्युच्येत । तदा प्रागभावोऽपि निरूपणीयः । उत्पत्तेः पूर्वमभाव इत्युक्ते दशवर्षेभ्यः परमुत्पद्यमानानामिदानीमभावस्योत्पत्तिपूर्वत्वेन प्रागभावत्वप्रसङ्गात् । न चानादित्वे सति ध्वंसप्रतियोगित्वं प्रागभावत्वम् । नहि दशवर्षेभ्यः परमुत्पद्यमानानामिदानींतनोऽभाव उत्पत्त्या ध्वंसमापद्यते । किंतु उत्पत्त्यव्यवहितपूर्वक्षणे समवायिकारणे प्रतीयमानोऽभाव एव ध्वंसमापद्यत इति तस्य ध्वंसप्रतियोगित्वात्प्रागभावत्वमिति वाच्यम् । समवायिकारणस्य कपालादेरपि कार्यत्वेन तदुत्पत्तेः पूर्वं तस्य अभावस्य निराधारावस्थित्यसंभवेन समवायिकारणोत्पत्त्यनन्तरमेव तत्र तदुत्पत्तेरगत्याऽङ्गीकर्तव्यत्वेऽनादित्वव्याकोपात् । न च जातिवत्कालाधारत्वं कालसमनियतप्रतीतेरिति वाच्यम् । तथा सति जातिवद्वा अत्यन्ताभाववद्वा कार्योत्पत्त्यनन्तरं तस्याप्रतीयमानतामात्रेण ध्वंसप्रतियोगित्वकल्पनानुपपत्तेः । तथा चात्यन्ताभाववदेवानादित्वान्नित्यत्वमपि सिध्यतीति कारणतातदनतिरेक एव स्यात् । प्रतीतिस्तु कालोपाधिकापि सूपपन्नेति न स कारणशक्तिरूपः तथा च कार्यका-ऽप्रयोजको भवितुमर्हति । पराक्रान्तं चात्र सूरिभिराकर इति तत एव द्रष्टव्यम् । तथा च कार्यका-

रणभावान्यथानुपपत्त्या कार्यस्वरूपमव्याकृतं कारणे लीनं वर्तत एवेत्यभ्युपगन्तव्यम्। एवं चेदानींतना वाऽग्रे भविष्यन्ती वा ज्ञानशक्तिः क्रियाशक्तिश्च कारणगताऽव्याकृता सद्रूपेवाङ्गीकर्तव्या। तथा चायया-वज्जगति न कुत्रापि साऽऽविर्भूतेत्यत्र प्रमाणाभावात् विशिष्टशक्तिशालिनां खिस्तबुद्धादीनां च दर्शनात्सर्वथा पूर्वतनानां वन्यकल्पत्वपरिकलनमिदमेतेषामेव वन्यतां गमयति। अस्मन्मते तु सातिशयानां कुत्रापि निरतिशयत्वेनावश्यं भवितव्यमिति सर्वेषामादिनिदानं निरतिशयत्वमेव। दृश्यन्ते च मृद्विशेषा घटादयो वा सुवर्णविशेषा अलंकारादयो वा निरतिशयमृत्सुवर्णेभ्यः समुत्पद्यमानाः। तथा ज्ञानक्रिये अपि सातिशये तादृशनिरतिशयजन्ये इति सृष्ट्यारम्भोऽपि निरतिशयज्ञानक्रियाशक्तिशालिभ्य एव परिकल्पयितुमुचितः। अतश्च निरतिशयज्ञानक्रियाशक्तिशालिनः परब्रह्मणः सकाशाज्जायमाना सृष्टिरपि प्रथमतो जातिविशेषशालिनीति प्रजापतिमनुमहर्ष्यादीनां प्रातिस्विकमेव ज्ञानक्रियाशालित्वम्। तथात्र तेषां संस्कारादिकर्मनिरपेक्षत्वादेव न तत्र कर्माधिकारप्रयोजकजातिलक्षणनमन्त्रयन्त्रितोपयुक्ता। ततश्च सविशेषाणां बहूनामुत्पत्तौ तु ज्ञानक्रियाशक्तीनामपि सविशेषत्वेन जननात् साकल्येन सर्वशक्तिलाभोऽशक्य एवेति धर्मार्थकाममोक्षादिशास्त्राद्युपदेशः। तत्र विशेषानुसरणमगत्यैव भवति छात्रशक्तिविशेषानुसरणमिव शिक्षकस्येति तत्तद्विशेषाणां तत्तद्विशिष्टकर्मोपदेशो युज्यतेतमाम्। एतेन सर्वसाम्यवादोऽपि प्रत्युक्तः। ज्ञानक्रियाशक्तीनां सर्वत्र साम्यादर्शनात्। एवं च सर्वसाम्यानुपपत्त्यैव सविशेषक्रियाकलापानुष्ठायिनोऽपि सविशेषा अपेक्ष्यन्त इदानीमपि। तत्किमपराद्धं धर्मशास्त्रेण। सर्वथा तु स्वकपोलपरिकल्पितकल्पनाजालमिदं पाश्चात्यानां धर्मद्वेषमेवाऽऽविष्करोतीति निश्चयगमेव। गुरुश्चायं धर्मद्वेषः पराजितानामभिभावकैः। स्वोत्कर्षख्यापनमन्तरा शासनासंभवात्। न च धन्यानां तदिति परेषामपि स्पृहावदिति ख्यापनीयम्। तत्र कृतकजालमन्तरा न किमपि प्रमाणमिति धर्मेष्वतर्कभावात् विलम्ब्य मोहयन्ति कांश्चित् परतन्त्रयनेयबुद्धीन्। नात्र शास्त्रक्रमविकं विवेचनीयमित्युपरम्यते प्रबन्धानुबन्धात्।

स भगवान् सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्राजापतीन् प्रवृत्ति-
लक्षणं धर्मं ग्राहयामास वेदोक्तम् । ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिधर्मं ज्ञानवैराग्य-
लक्षणं ग्राहयामास । द्विविधो हि वेदोक्तो धर्मः, प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च तत्रैको जगतः
स्थितिकारणं प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोऽ-
र्थिभिरनुष्ठीयमानो दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूय-
माने धर्मे प्रवर्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौ-
मस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव । ब्राह्मणत्वस्य हि
रक्षणेन रक्षितः स्याद्वैदिको धर्मः । तदधीनत्वाद्वर्णाश्रमभेदानाम् ॥ इति ॥

अत्र हि भाष्ये जगतः स्थितेः परिपालनार्थं धर्मरक्षणम्, तच्च ब्राह्मणत्वाधीनम्, ब्राह्मणत्वस्य
रक्षणं चावतारायत्तमित्यवतारप्रयोजनमुक्तं सृष्टिक्रममभ्युपगम्य । परंतु दीर्घेण कालेनानुष्ठातॄणां
कामोद्भवात्प्रवर्धमानेनाधर्मेण प्रलयेऽपि पुनश्च सात्त्विकप्रजोत्पत्त्या नूतनसृष्टिसंभवेऽवतारग्रहणमिदं न
सामञ्जस्यमावहति कल्पपक्षे । प्रवाहरूपेणानादितायां तु अगत्या प्रवर्धमानाधर्मबलात् प्रजासंपीडन-
प्रसङ्गे पीडितप्रजावासनानुरोधेन पीडकाधर्मनाशाय सरक्षकधर्मोपदेशाय च कस्यचन समर्थस्य
महापुरुषस्यापेक्षा संजायत इति सांप्रतमेवावतारग्रहणम् । अत्र च सृष्टिक्रमाभ्युपगमोऽयमौपनिष-
दसृष्टिक्रमवद्वेदितव्यः । कार्यस्य कारणमन्तराऽनुपपत्त्या सविशेषस्य जगतो निदान निर्विशेषं निर-
तिशयशक्तिशालि चाभ्युपगम्य ततः सृष्टिरुपवर्णनीयेति तदर्थं सृष्टिक्रमवर्णनम्। नैतावता तत्र तात्पर्यम्।
किंतु निर्विशेषनिरतिशयशक्तिमदेकमद्वितीयमेव कारणमिति कारणस्वरूपनिर्धारण एव सर्वेषां सृ-
ष्टिवादानां तात्पर्यम्। तत्रापि कर्मविपाकप्रदर्शनमुखेनानुष्ठेयधर्मप्रतिपादने वर्जनीयाधर्मोपदेशे च यथाव-
त्तात्पर्यं सृष्टिवादस्येति नानादित्वभङ्गः। तथा च प्रवाहरूपेणानादित्वमेव जगतः सिध्यति। ये तु विकास-
वादेन सृष्टिक्रममामनन्ति । तेऽपि विकासक्रमेऽसाधारणं कारणं किमपि न प्रदर्शयन्ति। केवलं निसर्गमेव
गिरन्ते। तद्यदि निसर्ग एव कारणत्वेन कल्पनीयस्तर्हि यथादर्शनमेव परिकल्प्यताम्। न हीदानीं वान-
राद्वा वानरकल्पाद्वा मानवसृष्टिरुत्पद्यमाना कुत्रापि परिदृश्यते किंतु मानवादेव बीजरक्तद्वारा मानवो-
त्पत्तिः सर्वत्र दृश्यते । एवमेवेतरेषां जारजानामण्डजानामुद्भिज्जानां चेति प्राक्तनापि सृष्टिस्तेषां
तथैवेति परिकल्पयितुं साम्प्रतम् । दृष्टानुरोधात् । न हि स्वेदजानामिव सर्वेषां प्राणिनां यथाकथम-
प्युत्पत्तिरुपवर्णिता प्रमाणपदवीमारोहति । निसर्गोऽपि तावच्छक्तस्यैव शक्योत्पादने प्रभवति । ना-
शक्तस्य । सा च शक्तिरिदानीं चेद्बीजे तदा पूर्वमपि तथैवेत्यन्यत्र शक्तिकल्पनमिदं दृष्टविरोधान्न
नैसर्गिकम् । तथा च निसर्गवादेन सादित्वं जगतः सिध्यतीति वृथैव कल्पनाजालमिदं सादित्वे ।
तत्सिद्धमनादित्वं जगतः । ततश्च सजातीयमातापितृजन्यत्वमेव संतानस्यापि साजात्यप्रयोजकं सि-

ध्यति । बीजवृक्षन्यायेनानादित्वात्संसारस्य नादिमः कश्चन ब्राह्मणादिः । येन तत्र ब्राह्मणत्वाद्युपपत्तये ब्राह्मणत्वादिभेदवर्णनमावश्यकं स्यात् । विश्वामित्रादीनां तु कर्मणा ब्रह्मज्ञानप्राप्तिरिति तन्मूलको ब्राह्मणशब्दो न जातिवाचक इति सर्वमप्युपपन्नम् ।

## ( उपयुक्ततावाददृष्ट्या जातिपर्यालोचनम् )

नन्वव ।सेद्धेऽपि जन्मतश्चातुर्वर्ण्ये तस्य कोपयोगः । न तावद्दृष्टार्थे जीवननिर्वाहके भोग्यसंपत्त्युत्पादनानुकूलकर्मणि । तादृशः कर्मणः कृषिगोरक्षावाणिज्यादिरूपस्य मनुष्यमात्रप्रयत्नसाध्यत्वान्मानवताया एव तत्कारणत्वस्य प्रत्यक्षेणोपलम्भात् । नापि तदनुकूलज्ञाने । तद्विषयकज्ञानस्यापि सर्वत्र संभवात् । म्लेच्छदेशे तथा दृष्टत्वात् । नापि लब्धपरिरक्षणार्थं रक्षितविवर्धनार्थं च तस्योपयोगः । लब्धपरिरक्षणं वा रक्षितविवर्धनं वा कामक्रोधादिविकारसमुत्कर्ष एव किल दुष्करं नान्यथा । तेषां च विकाराणां सहजसिद्धत्वेऽपि ज्ञानेन निग्रहसंभवाज्ज्ञानप्रचारद्वारैव तत्सिद्धौ जातेस्तत्राप्रयोजकत्वात् । न च ज्ञानमात्रेण चेत्कामक्रोधादीनां निग्रहस्तर्हि दण्डसंस्थापि नोपयुक्तेति विना दण्डं दण्डनेतारं च सुखेन मनुष्याणां जीवनेन भाव्यम् । न च तथा दृश्यते कुत्रापि कदापीति तादृशकार्यशक्तिरेव विशिष्टशक्तिशालिनां पृथक् जातिं गमयति । एवं कार्यस्य कृतिमूलकत्वात्कृतेश्च ज्ञानपूर्वकत्वात् ज्ञानस्य सर्वत्र साम्यानुपलम्भात् मतिवैचित्र्यस्य ज्ञानिष्वपि दर्शनात् कार्यानुकूलविशिष्टज्ञानशालित्वमेव पिण्डगताविशिष्टजातिगमकं स्यात् । अन्यथाऽधीतविद्यानां सर्वत्रैकमत्यमेव स्यात् । किंच विद्याध्येतॄणां छात्राणामपि सर्वत्र विद्यासु समानं बुद्धिवैभवं दृश्यते । ततोऽपि पिण्डगतः कश्चन विशेषोऽवश्यमेवाभ्युपगन्तव्य इति ततोऽपि जातिसिद्धिः स्यादिति वाच्यम् । एतादृशतारतम्यस्य समानजातावप्युपलम्भेन जातेरकिंचित्करत्वात् । अन्यथा सोदराणां सर्वेषां समानज्ञानक्रियाशक्तिशालित्वं स्यात् । नापि तत्त्वज्ञानपरमेश्वराराधनादिषु तदुपयोगः । स्वस्वकर्मनिरतानां सर्वेषां वर्णानां तत्संभवात्तथोपलम्भाच्च । येषां तु मते ब्राह्मणजातिप्राप्तिमन्तरा न मोक्षो वा तत्त्वज्ञानं वेति । ते तु महानुभावाः प्रातः स्मरणीया वन्द्या एव । " स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः " इति सिद्धान्तव्याकोपात् । अत्र सिद्धिशब्दार्थव्याख्यानादिकं तत्त्वमस्यादिमहावाक्याद्युपदेशस्याऽऽवश्यकतादिकं तदनधिकाराद्ब्राह्मणजातिप्राप्तेरवश्यभाव्यत्वादिकं च सर्वं पाण्डित्यं नात्र प्रपञ्च्यतेऽनुपयोगात् । व्यवहारेऽर्जुनस्य साम्ययोगोपदेशेन तत एव च कृतकृत्यतायां जीवननिर्वाहे ततोऽधिकज्ञानस्यानुपयोगात् । एतादृशसाम्यबुद्धिस्तु सर्वेषामपि वर्णानामविशेषेणोपदिष्टा भवितुमर्हतीति को वा जातिप्रयोज्यो ज्ञानविशेषः । न चाधिदैविकदुःखनिवारणार्थमुपदिष्टः क्रियाकलापो यज्ञादिर्जातिसापेक्ष इति तदर्थं चातुर्वर्ण्यस्याऽऽवश्यकतेत्यपि वाच्यम् । तादृशक्रिया

तासां तादृशकार्यकारणभावस्यासिद्धत्वात्। क्वचित्तत्कार्यदर्शनं तु शकुनस्येव वौषधस्येव वा काकतालीयन्यायेन। नैतावता शकुनस्य वौषधस्य वा यस्य कस्यचिदपि कार्यकारणभावः परिकल्प्यते। येषां त्वौषधानामव्यभिचारदर्शनं तेषां तु तादृशकारणत्वं स्यादेव। एवमेव शकुनानामपि। परं तु क्रियाणां तादृशाव्यभिचारस्य कुत्राप्यदर्शनात् फलस्यापि प्रायः पारलौकिकस्यैवोद्देशाच्च न जीवननिर्वाहे तासामुपयोगो न वाऽव्यभिचारेण कार्यकारणभावसिद्धिरिति तदर्थं चातुर्वर्ण्यस्वीकारोऽयमकिंचित्कर एव। एवमपि येषां तत्र दृढतरो विश्वासः, तदनुष्ठानेच्छा च। तेषां तादृशविश्वासेन तदिच्छया च तादृशजातिसिद्धौ लोकयात्राऽविरोधेन तैस्तदनुष्ठानमाचरणीयम्। न तत्र केषामपि विरोधः। नैतावता व्यवहारे जातिवादमवलम्ब्य द्रव्यार्जनं वा कर्माधिकारानधिकारोद्घोषणं वा कथमपि कर्तव्यम्। न वा भिक्षापि। ब्रह्मचारिसंन्यासिनोरेव तत्राधिकारस्य शास्त्रसंमतत्वात्। तथा च व्यवहारे जीवनार्थमत्यन्तमेवानुपयुक्तोऽयं जातिवादपक्षः सर्वथा हेय एव।

अत्रोच्यते—स्यादेतदेवं यद्युपयुक्ततायाः स्वरूपनिर्धारणं भवेत्। तथाहि केयमुपयुक्तता नाम किं सुखसाधनत्वं वा जीवननिर्वाहकत्वं वा समाजधारणानुकूलत्वं वा समाजसाधकत्वं वा जगत्स्थितिसाधनत्वं वा। नाऽऽद्यः। इदानींतनभौतिकशास्त्राणामनुपयुक्तत्वप्रसङ्गात्। न च सुखसाधनत्वस्य प्रत्यक्षदर्शनान्नानुपयुक्तत्वमिति वाच्यम्। साधनत्वं नाम अनन्यथासिद्धनियतपूर्ववृत्तित्वम्। तथा चैतच्छास्त्राविर्भावात् प्राक् तदानींतनानां सुखमासीन्न वा आसीच्चेन्नास्य तत्साधनत्वम्। नासीदिति तु प्रमाणाभावादेवोपेक्ष्यम्। न चैतत्साधनजन्यसुखस्यैव एतच्छास्त्रं साधनमित्येतदभावे एतज्जन्यसुखाभावोऽपि तदानीमासीदेवेति वाच्यम्। सुखे एतादृशतारतम्याभावात्। न हि क्षुधातुरस्य मिष्टान्नेनैव तृप्तिर्न कदन्नेनेत्यत्र किमपि गमकं पश्यामः। न वोभयान्नजन्यतृप्तिसुखे किमपि तारतम्यमित्यत्रापि प्रमाणमस्ति। न चाऽऽस्वादभेदात्सुखभेदः। क्षुधाक्रान्तस्य सर्वमपि रुचिकरं भवतीति तादृशास्वादभेदकल्पनायां प्रमाणाभावात्। न च स्पर्शसुखभेदोऽपि। रसनेन्द्रियस्य तिक्तकट्वादिरससंपर्केऽपि तदानीं प्रियत्वसंवेदनायाः सर्वानुभवसिद्धत्वेन भोगतारतम्यानुपपत्तेः। अन्यथा पित्तज्वरार्तस्यापि मधुरास्वादेन मिष्टान्नभक्षणे प्रियत्वसंवेदना स्यात्। क्षुदभावेऽपि पदार्थभक्षणं प्रियं स्यात्। तथाच प्रियत्वमूलकसुखसंवेदनायाः पदार्थतत्त्वानधीनत्वं नैसर्गिकवासनाधीनत्वं च सिध्यतीति पुरातनसमाजस्य भौतिकशास्त्राभावेऽपि सुखप्राप्तिरद्यतनभौतिकशास्त्रजन्यसुखप्राप्तिवदेव सिध्यति। न तत्र किमपि तारतम्यं परिकल्पयितुं शक्यते। अत एवेदानींतनाना वन्यमानवानां वन्याहारविहारद्वारापि तादृशमेव सुखं यादृशं नागरिकाणां भौतिकशास्त्रमूलकभोग्यसंपत्तिशालिनाम्। नहि वन्यानां वेषभाषाभूषाभिर्नागरिकदृष्ट्या विरूपमपि पुत्रकलत्रादिकं वाऽऽहारविहारादिकं वा न नागरिकाणामिव सुखोत्पादकमित्यत्र किमपि प्रमाणमस्ति। प्रत्युत नागरिकाहारविहारादिकं

तेषामप्रियमत एवं न सुखोत्पादकमिति तु गानशास्त्रानुसारिगानश्रवणजन्याप्रीत्याऽनुमातुं शक्यते। एवमेव भक्ष्यपदार्थभक्षणप्रसङ्गे तत्तदाहारसेविनां ते ते पदार्था एव प्रियतमा भवन्तीत्यप्यनुभवसिद्धं भासते। तस्मात्पदार्थगतगुणधर्माणां तत्तदिन्द्रियद्वारा समानायामपि संवेदनायां प्रियाप्रियत्वे सुखदुःखे च न संवेदनाधीने, अपितु मानसिकभावाधीने इत्यकामेनाप्यभ्युपगन्तव्यम्। ननु मानसिकभावोऽपि बाह्यपदार्थानुभवजन्य एवेति बाह्यपदार्थानां परिचयापरिचयाभ्यां प्रियाप्रियत्वभेदेऽपि नाकिंचित्करत्वमिति तादृशपदार्थरूपभोग्यविशेषोत्पादनाय भौतिकशास्त्रमावश्यकमिति चेन्न। एवमपि मानसिकेच्छारूपभावाभावे सर्वेषां पदार्थानामप्रियत्वस्य सर्वत्रोपलम्भादिच्छायाश्च सामान्यतः सुखविषयकत्वेन स्वतःसिद्धत्वात् सुखसाधनविशेषे निराकाङ्क्षत्वाच्च भौतिकशास्त्रस्यान्यथासिद्धत्वमव्याहतमेवेति। ननु येषां तच्छास्त्रजन्यभोग्यसंपत्तिविषयकेच्छा, तेषां कृते तदुपयुक्तत्वं स्यादिति कथमत्यन्तानुपयुक्तत्वमिति वाच्यम्। तथा सति प्रतिव्यक्तीच्छाभेदेन सर्वस्याप्युपयुक्तत्वप्रसङ्गान्मद्यादिव्यसनानामपि तथात्वापत्तौ तत्प्रतिबन्धकानुशासनप्रणयनस्य वैयर्थ्यप्रसङ्गात्। किंचैवं न्यायान्यायादिकथाविलोपप्रसङ्गोऽप्यापतेत्। तथाहि—यद्धि अन्याय्यत्वेनाविप्रतिपन्नं साहसादि चौर्योत्कोचादि वा, तदपि तत्तदिच्छावतामभीष्टमेवेति तेषां, सुखसाधनं स्यात्। तथा च परेषां सुखसाधनं कथं बलात्कारेणापहर्तुं शक्यम्। यदि चैतादृशापहरणमपि न्यायस्तर्हि भवदभिमतसुखसाधनस्यापहारोऽपि न्यायः कथं न स्यात्। ततश्च न्यायान्यायकथापि अपेक्षाबुद्धिजन्यैव स्यात्। अन्ततश्च बलमेव न्याय इति पर्यवस्येत्। तथाच समाजसुखकामनया प्रवर्त्यमानोऽयमुपयुक्ततावादः सर्वथा मात्स्यन्यायसंस्थापकः संवृत्त इति सम्यक् खलु समाजसुखकामना देवानांप्रियस्य। तस्माद्विप्रलम्भ एवायं धूर्तानां यत्सुखसाधनत्वं नामोपयुक्ततेति।

अत एव न जीवननिर्वाहकत्वमपि। नैसर्गिकक्षुत्तृडादिभावसंपूरकनैसर्गिकभोग्यसंपत्त्याऽपि तत्सिद्धावितरेषां शास्त्राणां विद्यानां कलानां चानुपयुक्तत्वापत्तेः। नहि वन्यानां मानवानां पश्वादीनां चैतादृशशास्त्राद्यभावेऽपि न जीवननिर्वाहः। नन्वेवं मानवानां सत्यपि बुद्धिविभवे वन्यत्वापत्तिरिति चेन्न। वन्यत्वनागरिकत्वादिभेदानां काल्पनिकत्वेन सापेक्षबुद्धिजन्यत्वात्। अत एव कल्पनाभेदेन नागरिकत्वभेदःशिष्टव्यवहारभेदश्च तत्र तत्र समाजे दरीदृश्यते। ननु तर्हि बुद्धिविभवस्य का गतिरिति चेद्यदि सत्यं बुद्धिविभवस्तर्हि स्वभावसिद्धपदार्थानुसारेण व्यवहार एव तस्य फलं नान्यदिति अकामेनाप्यभ्युपगन्तव्यम्। तथा च स्वभावसिद्धजातितत्त्वमप्यनुसरणीयमेव। स्वभावसिद्धत्वं च चातुर्वर्ण्यस्य प्रागेवोपपादितम्।

न तृतीयः। समाजधारणानुकूलत्वस्याद्यावद्व्यानिर्णयात्। को वा समाजो धारणीयः कथं वा। यदि च यावन्मानवसमाजस्तर्हि वन्यावस्थायामपि तद्धारणं संजायत एवेति पुनश्च विद्याक-

लादीनामनुपयुक्ततापत्तिस्तदवस्थैव । यदि च धारणं नाम समाजस्य बुद्धिशक्तेः क्रियाशक्तेश्च निरतिशयत्वसंपादनम् । तदा तु तयोः परा काष्ठा प्रदर्शनीया । न च सा भोगे न वा भोग्यसंपत्त्यभिवृद्धौ न वाऽन्यत्र कुत्रापि प्रदर्शयितुं शक्या । भोगस्य भोग्यसंपत्तेश्चेयत्तानवधारणात् । तदतिरिक्तपरलोकेश्वरसाक्षात्कारमोक्षादीनामनङ्गीकाराच्च । कदाचिद्भोग्यसंपत्तिविरागेऽपि भोगेच्छाया अनिवृत्तेस्तन्मूलकभोग्यसंपत्तिसंपादनप्रयत्नस्याप्यनुपरमाच्च । तस्माद्गगनकुसुमायमानमेवेदं बुद्धिक्रियाशक्त्योर्निरतिशयत्वसंपादनमिति तद्रूपा समाजधारणापि वन्ध्यापुत्रकल्पा ।

अत एव च न चतुर्थः । समाजस्वरूपस्यानिर्धारणात् । परस्परसहकारजन्यभोग्यसंपत्त्युत्पादनानुकूलशक्तिमत्संघत्वं समाजत्वमिति लक्षणं तु नीतिप्रतिबिम्ब एव परास्तमिति तत्रैव द्रष्टव्यम् । यदि परमेशाराधनानुकूलबुद्धिशक्तिमत्संघत्वं समाजत्वमस्मदभिप्रेतमनुमन्येत, तदा तु परमेश्वरतत्त्वाङ्गीकारः, तदुपदिष्टाराधनापद्धत्यङ्गीकारो जातिवादसंमतिरित्यादिकं सर्वमप्यनुमतमित्यपसिद्धान्तप्रसङ्गः । तदपि सर्वमनुमतं चेदस्मत्सिद्धान्तशय्यामधिशय्य सुखं शयीथाः ।

पञ्चमस्तु पक्षः पर्यालोचनीयो जगत्स्थितिसाधनत्वमुपयुक्तत्वमिति । तत्र यावज्जगत्स्थितिसाधनत्वं चेत्तदा यावत्सृष्टपदार्थानामुपयुक्तता सिध्यति । अनुपयुक्तत्वपदार्थानां जगति उत्पत्तिस्थित्यसंभवात् । न हि तदानीं मनुष्यमात्रोपयुक्तत्वं पर्यालोचनीयं भवति । तथा चासंख्यकृमिकीटवनस्पतिपाषाणादीनामप्युपयुक्ततासिद्धिरिति जगदन्तःपातिजातिव्यवस्थापि वस्तुतो विद्यमाना जगत्स्थितिसाधिकैवेत्यपि सिध्यति । जगदन्तःपातिनां स्वभावतः समुत्पद्यमानानां पदार्थानां मानवसापेक्षोपयुक्तताऽभावेऽपि जगत्स्थितावुपयोगसंभवात् । अन्यथा तेषां समुत्पत्तिरेव न स्यात् । अतश्च निसर्गसिद्धं यत्तदुपयोगीति व्याप्तिरध्यवसेया । चातुर्वर्ण्यं च निसर्गसिद्धमतश्चोपयोगीति निसर्गसिद्धेतरपदार्थजातानुसरणमिव चातुर्वर्ण्यानुसरणमेव मानवानां प्रेयःश्रेयोनिदानम् । अत एव च भगवान् सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुर्मरीच्यादीन् सृष्ट्वा प्रजापतीन् प्रवृत्तिधर्मं ग्राहयामास । तत्रैव च चातुर्वर्ण्यव्यवस्थानुसरणमिति एष एव धर्मो जगत्स्थितिसाधनत्वेनोपयुक्तः । अत एव च—

> व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः ।
> त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ।'

इत्याह तत्र भगवानर्थशास्त्रविचक्षण आर्यचाणक्यः । नहि इदानींतनमनुष्यसापेक्षसंभूयसमुत्थानेनैवानादिसृष्टिस्थितिस्थापन भवति भविष्यति भूतं वेत्यत्र किमपि प्रमाणमस्ति । मृत्युक्रीडनकानां मानवानां तत्रासामर्थ्यात् । अत एवाह भगवान् जगत्पारावारपारदृश्वा बादरायणिः—

दृष्ट्वाऽऽत्मनि जये व्यग्रान्नृपान् हसति भूरियम् ।
अहो मा विजिगीषन्ति मृत्योः क्रीडनका नृपाः ॥ इत्यादि । भाग.२।३।

अत एव न मानवसृष्टिस्थितिसाधनत्वमप्युपयुक्तत्वम् । तत्रापि स्वभावसिद्धपदार्थानुसरणस्यैवावश्यं स्वीकर्तव्यत्वात् । अत एव च नाययावल्कस्याप्यनुशासनमव्याहतं वरीवर्ति जगति । मनुष्यसाधनसापेक्षस्थितेः स्वभावानुसारित्वाभावेन स्वभावस्य दुरतिक्रमत्वेन च सर्वेषामनुशासनानां कालदृष्ट्या क्षणिकत्वात् । तस्मात्स्वीयापेक्षामधरीकृत्य शुद्धबुद्ध्या जगत्स्वभावं पर्यालोच्यैव तदनुसारिणी स्थितिर्विधेयेत्येव प्रज्ञालक्षणं युक्तम् । वर्तते च जगति बुद्धिशक्तितारतम्यं क्रियाशक्तितारतम्यं स्वभावतारतम्यं रुचितारतम्यं चेति तदनुसारेण हीनानामुत्कृष्टाधीनत्वमपरिहार्यमेव सर्वेषामिदानीमपीति किमपराद्धं चातुर्वर्ण्यव्यवस्थयेति निभालयन्तु प्रज्ञाचक्षुष इदानींतनाः । सर्वथाऽयमुपयुक्ततावाद आपातरमणीयः पर्यालोच्यमानो यथा यथा प्रमाणनिकषे संघृष्यते तथा तथा विशीर्यत एवेति निश्चप्रचमेव । यदि त्वपेक्षाभावादनादरो व्यक्तिदृष्ट्या भवति कस्यचन पदार्थस्य बुद्धिक्रियाहीनस्य वराकस्येव दीनस्य स्वराज्ये । तथापि नैतावता तस्य पदार्थस्य सर्वथा नाशः समुचितः प्रेक्षावताम् । नहि काकस्य रत्नमनपेक्षितमिति विनाशनीयम् । एवं केषांचिदनपेक्षितापि चातुर्वर्ण्यव्यवस्था सहजसिद्धा नैव विनाशमर्हतीति सर्वथा तादृशः प्रयत्नो हेय एव ।

## ( अर्थशास्त्रदृष्ट्या चातुर्वर्ण्यपर्यालोचनम् )

नन्वत्र व्यवस्थायां भोगवैषम्यमेव सर्वत्र दरीदृश्यते । शक्तस्यापि भोग्यसंपत्त्युपार्जननिषेधात् । व्यवसायनियमनात् । उच्चनीचभावपरिकल्पनात् । इति चेदत्रोच्यते ।

किमिदमुपार्जनं नाम, किं यया कयापि रीत्याऽलब्धस्य लाभो वा, न्याय्येनैव मार्गेण तादृशलाभो वा ? नाऽऽद्यः, तादृशोपार्जनस्य तस्करवाटपाटच्चरादीनां शक्तानामपीदानींतनकालेऽपि निषेधात् । न द्वितीयः, न्याय्यत्वान्याय्यत्वस्य भवन्मते लोकमतप्रमाणकत्वात् लोकानां च विविधमतिवैचित्र्येण कदा कस्य मार्गस्य न्याय्यत्वं वाऽन्याय्यत्वमित्यत्रैकान्तेनानिर्णयात् । सर्वेषां स्वस्वमतानुवर्तिन्याय्यत्वाङ्गीकारे पूर्वोक्तापत्तेस्तादवस्थ्यात् । ननु यदा यद्बहुमतानुसारेण न्याय्यम्, तत्तादृशबहुमतनाशावस्थापर्यन्तं न्याय्यमेव । बहुमताभावे तु यत्र बहुमतं तदेव न्याय्यमिति बहुमतत्वमेव न्याय्यत्वान्याय्यत्वगमकमस्त्विति चेन्न । पूर्वोक्तापत्तेर्दुर्निवारत्वात् । तथा हि—बहुमतानुसारिण्यां न्याय्यत्वनिर्धारणायामन्यमतवादिनामभिप्रेतायामन्यमतवादिमते तन्मार्गेण तेषामुपार्जनं निषिध्यते न वा ? निषिध्यते चेच्छक्तस्याप्युपार्जननिषेधो भवन्मतेऽपि दुष्परिहर एव । नो चेन्निषिध्यते तर्हि सर्वेषां स्वैरतापत्तौ व्यवस्थैवाव्यवस्था सपद्येतेति सुष्ठु खलु

मानवस्वातन्त्र्यमुपपन्नं स्यात्। तद्दूरं श्वापदानुसरणं समाजव्यवस्थानाम्ना। यत्र यथेच्छमेवाऽऽहारविहाराद्यवसरः। यदि चोपार्जनं नाम भोग्यसंपत्तेरुत्पादनं विभजनं विनियमो विनियोगश्च चतुरवस्थात्मको लाभः, तर्हि तूत्पादनविनियोगयोरधिकारसापेक्षता। नहि येन केनापि यथाकथमप्युत्पादनं वा विनियोगो वा कर्तव्य इत्यनुशासनं तदा सांप्रतम्। अनुशिष्टरीत्यैवाधिकारिणा ते अनुष्ठेये नान्येनेत्यनुशासनस्यैवाऽऽवश्यकत्वात्। नोचेच्छकेन सेनापतिना वा मन्त्रिणा वा विज्ञानिना वापि तयोरनुष्ठानमवश्यकर्तव्यतामावहेत्। ननु क्रियेते एव तैरपीति चेन्न। सेनापतिना वा मन्त्रिणा वा साक्षादुत्पादनस्य कुत्राप्यदर्शनात्। नहि सेनाकार्यं नाम संपत्त्युत्पादनम्, नवा मन्त्रिकार्यमपि। न च कण्टकशोधनादिना सपत्त्युत्पादनोपयोगित्वात्तत्कार्यमपि संपत्त्युत्पादनमेवेति वाच्यम्। चौर्यादीनामपि तथा सति परम्परया संपत्त्युत्पादनोपयोगित्वेनोत्पादनकार्यत्वप्रसङ्गात्। तथाहि येषां सविधे संपद्बाहुल्यं सदपि न लोकोपकाराय, तेषां तादृशसंपद्धरणमत्यावश्यकं येनान्यसंपत्त्युत्पादनं स्यात्। तथा च तदानीं चौर्यादिना वा बलात्कारेण तदपहरणे संपत्त्युत्पादनमेवेति तादृशकार्यकारिणां निषेधो न युक्तः। न चतद्युक्तम्। तथा सति चोरसाहसिकानामपि मार्गो न्याय्य एवेति सर्वत्र न्याय्यत्वे किं केन निषेद्धव्यम्, का वा समाजव्यवस्थेति विचार्यमेव मनीषिभिः। यदि चाभिमतव्यवस्थासिध्यर्थं चौर्यादीनामपि न्याय्यत्वं नाम, तदा तु अल्पमतवादिभिरपि तथा कर्तुं शक्यत्वात्कथं तावन्मात्रस्यन्यायोन्मूलिका समाजव्यवस्था सिध्येत्। एवमेव विनियोगविभजनविनिमयेष्वप्यापत्तिरित्यगत्या न्याय्यत्वान्याय्यत्वनिर्धारणाय किमप्यन्यच्छास्त्रं नाम प्रमाणमभ्युपेयम्। अत एव न ख्रिस्तादीनामन्यायगामित्वं सिध्यति। अन्यथा तदानींतनबहुमतविरोधाच्छूले आरोपितोऽयं साधुर्महानन्यायीति वृथैव तद्धर्मप्रचारस्तदनुयायित्वं च दण्डपात्रमेव स्यात्। ननु किं तच्छास्त्रमिति चेद्व्यक्तेरधिकारबोधकं वचनम्। ननु कोऽसावधिकारः। आमूलाग्रशुभाशुभपरिणामज्ञानजनिका शक्तिः। सा च निसर्गजैव केषुचित्पिण्डेषु भवति न सर्वत्र। अत एव न सर्वेषां सर्वत्राधिकारः। न हि योग्यतैवाधिकारः। सत्यामपि योग्यतायामनधिकारिकृतादेशानामनुष्ठानादर्शनात्। न हीदानीमपि सन्ध्यादयस्तत्र तत्र नियुक्ता योग्यस्य यस्य कस्याप्यादेशमनुतिष्ठन्तो दृश्यन्ते विनाऽधिकारिभ्यः। स चायमधिकारः शब्देनैव बोध्यते। अत एवाधिकारभ्रंशेऽपि तस्यैव निदेशं ते नानुतिष्ठन्ति। तस्मात्सत्यामपि शक्तौ योगतायां वाऽधिकारं विना भोग्यसंपत्तेरुत्पादनं वा विनियोगादिकं वा येन केनापि यथाकथमपि न कर्तव्यमिति किल समाजव्यवस्थाया मर्यादैव अगत्या प्रतिपत्तव्याऽकामेनापि। व्यवस्था हि सा नाव्यवस्थापादिका भवेत्। तत्रापि चेन्निसर्गसिद्धप्रकृत्यनुसरणम्, तर्हि तु का तत्र परिदेवना। उपालम्भनीया स्वीया प्रकृतिरिति किमपराद्धं शास्त्रेण। न हीदानीमपि कस्यामपि समाजव्यवस्थायां संपत्त्युत्पादनादीनामधिकारो यस्य कस्यापि सर्वेषां वा हस्ते दीयते। अत एव

च धनिकानां तादृशाधिकारापहरणं दण्डसंस्थाया एव तादृशाधिकारदानं च साम्यवादेऽप्युद्घोष्यते। तत्रापि तत्संस्थानियुक्ता एव तदधिकारिण इति च सर्वाधिकारः । एवं च चातुर्वर्ण्यव्यवस्थायामपि तथैवाधिकारनिर्णये गुणेषु दोषारोपणमिदं शत्रुभावमेवाऽऽविर्भावयतीति व्यक्तमेव ।

एवमेव व्यवसायनियमोऽपि सूपपाद्यः । तथाहि व्यवसायो ह्युदरंभरणार्थः । क्षुत्तृषोः स्वाभाविकत्वेन प्राणिमात्रस्य प्रवृत्तिं प्रति असाधारणकारणत्वात् भोग्यसंपत्तिसंपादनमन्तरा तन्निवारणस्याशक्यत्वात् । तथा च नान्तरीयकतया भोग्यसंपन्निष्पादनेऽपि न तादर्थ्यं व्यवसायस्य । फलस्यैव तादर्थ्यप्रयोजकत्वात् । अत एव च यागादीनामिव व्यवसायनियमस्यापि पुरुषार्थत्वं सिद्धान्तितं पूर्वतन्त्रे। अन्यथा सर्वस्यापि भोग्यजातस्य " यज्ञाय सृष्टानि पुराणि धात्रा " इत्युक्तदिशा यज्ञार्थत्वेन संपादितभोग्यसंपत्तेरपि यज्ञोपयोगानन्तरमेव भोग्यत्वेन च नान्तरीयकयज्ञार्थत्वमेव सिध्येत् । पुरुषार्थश्च फलं पुरुषेणाध्यर्थमानत्वात् । एवं च नान्तरीयकतया भोग्यसंपत्तिसिद्धावपि न तदर्थत्वं व्यवसायस्य । किंतु पुरुषेच्छाविषयीभूतक्षुत्तृन्निवारणार्थत्वमेव। तथा च तदर्थं क्रियमाणो व्यवसायो नान्तरीयकतया " दध्नेन्द्रियकामस्य जुहुयात् " इत्यत्र दधिसंपाद्ययागोपकारमिव भोग्यसंपत्तिमपि निष्पादयति। एवं चेन्द्रियकामाभावे दध्युपादानाभाव इव क्षुत्तृडभावे व्यवसायाभावोऽपि सिध्यति । स चाभावः कुत्रचिद्रोगादिना, कुत्रचित्तु निसर्गसिद्धभोग्यसंपत्त्यापि सुसंपाद इति त्वन्यदेतत् । सर्वथा तु पुरुषार्थत्वं व्यवसायस्येत्यत्र तु न विप्रतिपत्तिः । एवं च समाजघटकानां सर्वेषां किल यथा क्षुत्तृडुपशमनं स्यात्तथा काचन व्यवस्था त्ववश्यं समाजेऽपेक्षिता । तदभावे तु कथं वाऽस्माकं क्षुत्तृषोपशमनं स्यादिति चिन्ताव्याकुलचित्तत्वेन सर्वेषां यत्र क्षुत्तृषोपशमनोपयुक्तभोग्यसंपल्लाभस्तत्र युगपत्प्रवृत्तावन्ततस्तत्र श्रमविभागानुसारेण लाभाल्पत्वेऽसौकर्यमेव संपद्यत इदानींतननिरुद्योगित्वामिव ( बेकारी )। ततश्चान्ततः कलहो मा भूदिति कोशागारादिनोद्योगवेतनदानप्रसङ्गः समापततीति निश्चप्रचमेव सर्वत्र । एतादृशी व्यवस्थैव समाजव्यवस्था चेत्तदा तु अव्यवस्थाया नामापि न स्यात् । परिणामश्चान्ततो दण्डाधिकारिणां राजनीतिकुशलानां धूर्तानां हस्ते सर्वेषामुदरंभरणं समापततीति स्वातन्त्र्यनाम्ना सर्वेषां स्वायत्तीकरणेन यथेच्छविनियोगाधिकारलाभात् पारतन्त्र्यमेव प्रजानां संपद्यते तदपेक्षया योगक्षेमविभागोऽयं समाजाङ्गत्वात्पृथगेव संस्थाप्य तदनुसारिण्येव शासनसंस्था संस्थापनीया । तत्र च परस्परापेक्षितान्यूनभोग्यसंपद्वर्गीकरणमालोच्य तन्नियमनेन सर्वेषामुदरंभरणचिन्ताशमनं यथा भवेत्तथैव व्यवस्था संपादिता चेच्चिरतनमेव समाजरक्षणं भवेत् । नहि तत्र दण्डाधिकारस्य स्वराज्यायत्तत्वेन परिवर्तनपर्यायेऽपि समाजस्य किमप्युच्छेदं भाति । राज्यपरिवर्तनपर्यायस्तु सृष्टिक्रमानुसारेणाप्रवाह एव प्रचलिष्यति । नैतावता समाजस्यापि परिवर्तनेनावश्यं भवितव्यम् । नहि यावच्चन्द्रदिवाकरं कस्यापि राज्यं नामाविच्छिन्नं

वर्वर्ति जगति । समाजस्तु वंशपरम्परयाऽविच्छिन्न एवानुस्यूतो भवितुमर्हति । एतादृशव्यवस्थित-
समाजे शासनप्रसङ्गे शासनाधिकारिणोऽपि तथैवानुवर्तेरन्। प्रजोपपीडनकोपभयात्। अत एव किल
स्मृतिशास्त्रस्योद्घोषः—

> यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः ।
> तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥ इति ।

एतादृशी समाजव्यवस्थैव खलूच्छृङ्खलशासनप्रवर्तकानां नियामिका भवितुमर्हति ।
नाधुनातनी । अन्यथा तु "अर्थस्य पुरुषो दासः" इति न्यायेन समर्थानां द्रोणा-
दीनामिवान्याय्यशासकायत्तत्वापत्तौ जगति न्यायान्यायकथापि लुप्ता स्यात्। दृश्यते चेदानीं तथा।
राजकारणचतुरा धूर्तास्तु यया कयापि रीत्या प्रजानां स्वायत्तीकरणे यथेच्छविनियोगे च दत्तदृष्टयो
यत्किमपि हितत्वेनानुशिष्युः । नैतावता समाजेनाविचार्यैव तत्कर्तव्यम् । एतादृशाविचारस्यैवायं
परिणामो यत्स्वीयराजसेवेव पराजसेवापि निषिद्धा स्वधर्मत्वेनोरीकृत्यात्रत्यैर्ब्राह्मणादिभिः पारतन्त्र्यं
दृढीकृतम्। तत्सिद्धमर्थमूलिका समाजव्यवस्था दण्डसंस्थायाः पृथगेव तदनधीनैवापेक्ष्यते । तदेव
च प्रजायाः स्वातन्त्र्यम् । न राजदण्डस्वातन्त्र्यं सर्वेषां स्वातन्त्र्यं भवितुमर्हति । एवं च यत्र
राजदण्डः समाजव्यवस्थाविरुद्धस्तत्र तत्प्रतिकारोऽपि समाजेन विधेयः । स च समाजव्यवस्थादार्ढ्ये
सुकरोऽपि । यत्र तु बलादेव समाजव्यवस्थाभङ्गः, तत्र बलेनैव प्रतीकारः । तदर्थमेव किल समाजे
योद्धृवर्गोऽपेक्ष्यते । न तु शासनसंस्थाया यस्याः कस्या अपि साहाय्यकार्थमित्यत्रत्यैर्योद्धृभिरपि
परकीयसाहाय्याचरणं क्रियमाणं दृष्ट्वोदरंभरणार्थं व्यवसायाभाव एव तत्र कारणं वा समाज-
व्यवस्थाशैथिल्यं वा विषयलोलुपत्वं वेति संदेहे प्रधानतयेदमेव कारणं तत्र निश्चीयेत यदुदरंभरणार्थं
व्यवसायाभाव इति । स च समाजव्यवस्थाशैथिल्यादेवेति समाजव्यवस्थादार्ढ्यसंपादनमेव प्रथमतोऽ-
त्यावश्यकम् । येन समाजघटकस्य कस्यापि कदापि नान्याय्यपथप्रवृत्तस्य भृतिस्वीकारप्रसङ्गः
समापतेत् । एतादृशी व्यवस्था तु नैसर्गिकाधिकारयोग्यतापर्यालोचनैव व्यवसायनियमनमन्तरा नैव
भवितुमर्हति । अन्यथा तु यः कोऽपि किमपि भोग्यजातं संपाद्य प्रयच्छति चेत्तदपि ग्राह्यं स्यात्।
तथा च मायाविनः परे दत्तावकाशा अर्थापहारे । स्पष्टं चेदमिदानीं स्वदेशीयवस्त्रान्दोलनादिनेति
नाधिकं विवेचनीयम् । तदयमत्र समाजस्थतन्तुवायनिर्मितमेव वस्त्रमस्माकमुपादेयमिति नियमो
भवेत् । न तन्तुवायस्यापि निरुद्योगित्वेन परदास्यप्रसङ्गः । नवा परकृतार्थापहारप्रसङ्गः ।
नवा पारतन्त्र्यप्रसङ्गः । एवमेवेतरभोग्यजातविषयेऽपि ।

नन्वेवमपि तन्तुवायैरेव वस्त्रमेव निष्पादनीयमिति किमिति नियम्यते । सति सामर्थ्ये सर्वैर्वा

तथा कर्तव्यम् । असति च तस्मिन् यत्र सामर्थ्यम् तदपि कर्तव्यमिति चेदिदमेवान्यवस्थाया निदानम् । मया कथं भोग्यजातं संपादनीयमित्यस्यानिर्धारणात् । तथा च लाभालाभादिमूलकपूर्वोक्तदुरवस्थापत्तिस्तदवस्थैव । तदपेक्षया स्वाभाविकजातिमूलकव्यवसायानिर्धारणे तथैव च स्थैर्ये समाजस्यापि स्थैर्यं संपद्यत इति समाजव्यवस्थार्थमयं जीविकानियमो जीवातुरेवेति सिध्यति ।

किंच येषां मते भोग्यसंपत्त्युत्पादनमेव समाजस्य प्रधानं कार्यम्, तैरपि तादृशसंपत्त्युत्पादनं प्रतिव्यक्ति स्वेच्छया यथाकथंचित्संपाद्यते वा तत्राप्यस्ति कश्चन नियमः । यदि स्वेच्छया, तदा तु कदाचित्तादृशसंपत्तेराधिक्ये वा न्यूनत्वे वा समाजदुरवस्थायां नियमनमत्यावश्यकमेव भवति । तच्चानुशासनद्वारा तात्कालिकमपि उत्पादकानामिच्छाविघातायैव स्यात् । तदा प्रजाप्रक्षोभश्चेत्तदुपशमो यथा लाभालाभप्रदर्शनेन निवार्यते । तथाऽत्रापि वंशपरम्परया जीविकालाभप्रदर्शनमुखेन समाजस्य वंशपरम्परया स्थैर्यलाभप्रदर्शनेन तादृशेच्छाविघातजन्यजनप्रक्षोभस्योपशमितुं शक्यता वर्तत एवेति किमिति नियमनामिदं दोषावहमिति जोघुष्यते । वस्तुतस्तु समाजशास्त्रीयनियमानां सामाजिकतत्त्वदृष्टिमन्तरा परिपालयितुमशक्यत्वात्सैवाऽऽदौ समाजे प्रादुर्भावनीया । अन्यथा तु व्यक्तिस्वार्थस्य दृष्टफलकत्वेन प्राबल्यात्सर्वेषामपि नियमानां दुरवस्थापादकत्वं समानमेव । न हि यस्मिन् कस्मिन्नपि समाजे विना नियमनं समाजव्यवस्था संभवति । न च तां विना समाजस्य समाजत्वं संभवति । तत्र तात्कालिकापेक्षामूलकनियमनापेक्षया स्वभावानुसारेण चिरकालिकनियमनावलम्बनमेव श्रेयस्करं भवति समाजचिरंतनत्वायेति विदांकुर्वन्तु मनीषिणः । अत एव किल नानाविधराज्यपरिवर्तनेऽपि सनातनोऽयं वैदिकसमाजोऽद्यावधि जागर्ति । समाजनियमनं च तदेव यदस्यां कस्यामपि परिस्थितौ उदरंभरणासौकर्यं तन्मूलकपारतन्त्र्यं च समाजस्य नापादयेत् । अन्यथा परिस्थितिपरिवर्तने समाजस्यापि परिवृत्तौ किं नाम स्वास्थ्यं जनानां स्यात् । यत्त्विदानीं सर्वथा तदभावः प्रदर्श्यते स तु न शास्त्रापराधात्, किंतु जनानां विषयलौल्यादेव । कथमन्यथा स्वदेशीयान्दोलनप्रसङ्गः स्यात् । तच्चक्षुरुन्मील्य सुदूरं निभालयन्तु विचक्षणाः, यदेतादृशं नियमनं सांप्रतं वाऽसांप्रतमिति । तस्मादाकिंचित्करोऽयमाक्षेपः ।

इदमनावश्यकमेवाक्षेपं यद्व्यवसायो नामोदरंभरणार्थमुद्योगः । कर्तव्यं च समाजोपयुक्तकार्यकरणमिति । तथा च व्यवसायस्य कर्तव्यस्य च भेदात्कर्तव्यप्रसङ्गे व्यवसायस्य गौणत्वाच्च त्यागोऽपि संभवति यथा धर्मोपदेशकेन सर्वेषां मार्गप्रदर्शनं कर्तव्यमपि न व्यवसायः । स तु दानिदत्तैरेव । नैयायिकस्य न कर्तव्यता शास्त्रप्रवचनस्य । एवं वेदाध्ययनं कर्तव्यमेव न व्यवसायः । व्यवसायस्तु अध्यापनयाजनादेव । तथा च जातिमानवादिनः केचनेदानीं भिक्षाचर्यावलम्बनेन कर्तव्यतापालनमात्मनो मन्यमाना दृश्यन्ते । ते तु मूढा एव । एवमेव विद्योद्योगोऽपि कर्तव्यपालननिरता अपि

स्ववृत्तिं नाभिमन्यन्ते तेऽपि तथैव गर्ह्याः। उभयथापि समाजव्यवस्थाशैथिल्येन समाजनाशसंभवात्। एवमेव योग्यताधिकारयोरपि भेदो ज्ञेयः। योग्यता हि कार्यानुकूलशक्तिमेव गमयति। अधिकारस्तु कार्यनिर्वाहकत्वम्। तथा च नियुक्तानामधिकारिणामवकरानिष्कासनशक्तिरूपयोग्यतायामपि तत्र नाधिकारः। किंतु अधिकृतस्य भृत्यस्यैव स इति अधिकाररूपेण भेदः साम्यवादिसमाजव्यवस्थायामपि वर्तत एव। एवमेव चातुर्वर्ण्यव्यवस्थायामपि तत्र तत्र कार्ये तत्तद्वर्णानामधिकृतत्वात्सत्यामपि समानायां योग्यतायां नाधिकारातिक्रमः श्लाघ्य इति सर्वमवदातम्। इयान् विशेषो यत्स्वभावानुसारेणाधिकारश्चातुर्वर्ण्यव्यवस्थायाम्। साम्यवादिव्यवस्थायां तु न तथा। तत्रापि योग्यतापर्यालोचनं त्वावश्यकमेवेत्युक्तमेव पुरस्तात्। तच्च न स्वभावपर्यालोचनमन्तरा संभवतीत्यगत्या स्वाभाविकत्वमधिकारस्य तत्राप्यभ्युपगन्तव्यमित्यसकृदुक्तमेव प्राक्। नैतावता भोग्यसंपत्तेर्विषमता। उत्पादनवद्विभजनविनियोगयोरपि शास्त्रेणैव नियमनात्। नहि संपदाधिक्यं यथेच्छभोगाय कुत्रापि विहितम्। यज्ञार्थत्वात्सर्वस्य। यज्ञावशिष्टस्यैवोपभोगविधानाच्च। यज्ञश्च शास्त्रविहितमार्गेण सर्वान्तर्यामिपरमेशाराधना। अत एव मिष्टान्नभोजनदानप्रसङ्गे दशपात्रेषु प्रतिवेश्यपि एको ग्राह्यः। नोचेद्दण्डभाग्यजमानो भवतीत्युक्तम्। एवमेव दुर्भिक्षादौ ग्रामस्थपरिपालनमकृत्वा तीर्थेऽन्नसंतर्पणकर्तापि दण्ड्य एव। तथा चाऽऽपाततोऽस्यां व्यवस्थायां भेदप्रतिभासेऽप्यन्ततः फलत उद्देशतः हेतुतश्चाभेद एवेति वस्तुगत्या सर्वेषां साम्यं भवति। किंबहुना चिरंतनत्वमेवास्या व्यवस्थायाः समीचीनत्वगमकमित्यलं पल्लवितेन।

## ( प्रकारान्तरेण स्वाभाविकत्वपर्यालोचनम् )

ननु स्वाभाविक्यपीयं चातुर्वर्ण्यव्यवस्था न वंशपरम्परया जन्मसिद्धा भवितुमर्हति। स्वभावपरिपोषकाणां शरीरषट्कद्रव्याणामुपचयापचये स्वभावपरिवर्तनस्यैकस्मिन्नपि शरीरे प्रत्यक्षोपलम्भात्। व्याध्यादिना शरीराशक्तौ स्वभाववैपरीत्यदर्शनात्। शान्तस्यापि तदानीं कोपनत्वप्रतीतेः। एवं च शान्तिकारणद्रव्याणां ह्रासे व्याध्यादिना धातुसाम्याभावे च स्वभावपरिवृत्तिः प्रत्यक्षतयोपलभ्यमाना नापह्नोतुं शक्या। एवं स्वस्थस्यापि स्वभावविपरीताहारविहारादिना स्वभावपरिवृत्तिः शक्या। तथा च बीजद्वारा स्वभावानुवृत्तिसिद्धान्ताभ्युपगमेऽपि प्रतिसंतानं समानस्वभावादर्शनात् मातापितृस्वभावपरिवृत्तिरवश्यमेवाभ्युपगन्तव्येति का वार्ता स्वभावमूलकचातुर्वर्ण्यस्य जन्मत एव संतानपरम्परानुवृत्तेः। अत्र च विषये पाश्चात्यशारीरकशास्त्रमवश्यमेव पर्यालोचनीयम्। तत्र हि प्रतिशरीरं जीवनोपयोगिनां षट्कद्रव्याणां पृथक्करणं विधाय परिमाणमपि प्रदर्श्य प्रात्यक्षिकप्रयोगेण तेषामुपचयापचयौ विधाय स्वभावपरिवृत्तिः प्रमाणिता मँञ्चेस्टरवास्तव्यैः डॉ. जे. डोहेर्टीमहोदयैः। तद्यथा—

शरीरघटकानां मूलतत्त्वानामादौ प्रतिशतं परिमाणम्—

| | | | |
|---|---|---|---|
| ऑक्सिजन् | ६५·०० प्रतिशतम् | कॉर्बन् | १८·०० प्रतिशतम् |
| हायड्रोजन् | १०·०० ,, | नायट्रोजन् | ३·०० ,, |
| कॅलशियम् | २·०० ,, | फॉस्फरस् | १·० ,, |
| पोटॅशियम् | ०·३५ ,, | सल्फर (गन्धकः) | ०·२५ ,, |
| सोडियम् | ०·१५ ,, | क्लोरीन् | ०·१५ ,, |
| मॅग्नेशियम् | ०·०५ ,, | लोहम् | ०·००४ ,, |
| आयोडीन् | अल्पम् | फ्लोरिन् | सिलिकान् |

इत्यादीनां स्वल्पता चेति। एवमत्यल्पानामपि शरीरघटकानां मूलतत्त्वानां स्वभावपरिणामकारकत्वं वर्तते। एवं चैतेषां न्यूनाधिकभावे स्वभावपरिवृत्तिरपि भवति। मॅगॅनीजतत्त्वस्य न्यूनतायां मूकप्रायत्वं कुक्षोभत्वं स्वार्थप्रवणता लिङ्गदुर्बलत्वं च भवति। स्त्रीणां तु प्रायो वन्ध्यता च। मातृत्वभावनाऽभावश्च। श्वापदेषु स्त्रीजातेरपत्येषु दुर्लक्ष्यतयाऽकालमरणमपि संभवति। लोहपरिमाणं च सत्यवादित्वापराधकारित्वनिमित्तम्। आयोडिनतत्त्वस्योपचयापचयाभ्यां वन्ध्यत्वबहुप्रजस्त्वे च भवतः। एवमाक्सिजनतत्त्वाधिक्ये आशावादित्वं वाचाटता च। हायड्रोजनतत्त्वाधिक्ये च शमप्रकृतिकत्वं सुसंस्कृतता च। एव च रासायनिकमूलतत्त्वानां बहुविधानां स्वभावेन संबन्धात् न्यूनाधिकभावेन स्वभाववैचित्र्यं भवतीति।

एवं च स्वभावकारणीभूतघटकद्रव्याणामुपचयापचये स्वभावपरिवर्तनं भवतीति सिद्धान्तः सिध्यति। तथा च यदा यादृशस्वभावस्य प्रजानां कार्यकारित्वेनाऽऽवश्यकता, तदा तादृशाहारविहारादिना तत्संपादनमपि सुकरमिति दूरापास्तैव स्वभावस्यापरिवृत्तिस्तन्मूलिका च चातुर्वर्ण्यस्य जन्मसिद्धता वंशपरम्परानुगतता चेति व्यर्थ एवायमट्टहासो. वैदिकानां चातुर्वर्ण्यस्य जन्मसिद्धत्वे इति चेदत्र ब्रूमः।

सत्यमेतादृशाहारविहारपरिवर्तनेन स्वभावपरिवर्तन तन्मूलकवर्णजातिपरिवर्तनं च संभवतीति। अत एव धर्मशास्त्रेऽपि भक्ष्याभक्ष्यपेयापेयादिविचारो वृत्तिनियमनं च महताटोपेन प्रतिपाद्यते। नैतावता यथाकथमप्याहारविहारादिकं कर्तव्यमिति सिद्धान्तः सिध्यति। संभवति हि जगति सर्वेषामपि स्वभावानामुपयुक्तता। धैर्यौदार्यादिवत्क्षमाशान्तिदयादिभावानामप्यावश्यकत्वात्। तथा च तत्तद्भावानां संपूर्णतया कार्यकारित्वार्थं परा काष्ठाप्यपेक्षणीया भवति। नेदानींतनवत्सर्वेषामहिंसादीनामेवोपदेशो युक्तः। सिंह्व्याघ्रादिसमागमप्रसङ्गे शौर्यात्मकहिंसाया एवोपयुक्तत्वात्। सोऽयं भावपरिपोषो विधेयक्रमेण सर्वेषामेव युगपद्विधातुं सांप्रतम्। जगत्क्षयावहत्वात्। न हि समानभावानामिह जगति

परस्परापेक्षा वा तन्मूलकभोक्तृभोग्यभावो वा परिदृश्यते। यत्तु स्त्रीपुंसयो रतिभावमूलकमन्योन्यापेक्षणं नाम; तत्रापि रतिस्वरूपस्य वासनाभेदेन भेदादेव तत्। नान्यथा। न हि स्त्रीणां वासना बीजाधायकत्वेन कुत्रापि श्रूयते न वा पुंसां बीजग्राहकत्वेन वा। तथा च रतित्वेनाविशेषेऽप्यवान्तरनैसर्गिकवासनावशा-त्तद्भेदः सिध्यत्येव। अप्राप्तप्राप्यस्यैव किल सर्वत्रापेक्षा। न तु प्राप्तस्य। यदि च सर्वेऽपि समानस्वभावाः, तर्हि किमर्थमन्यमपेक्षेत। सर्वेषां सर्वकार्यकारित्वेन परापेक्षाऽसंभवात्। ननु सर्वकार्यशक्तावपि भोग्यसंपत्तेर्बाहुल्यान्न सर्वं सर्वैः कर्तुं शक्यमित्यन्योन्यापेक्षा तन्मूलककार्यभेदश्चेति चेत्तर्हि किं केन कर्तव्यमित्यत्र नियामकाभावाद्रागद्वेषादीनां प्रवृत्तिः केन वार्यताम्। नहि साम्यवादे तादृश-नियामकं किमप्यस्ति येनैकेन सर्वाधिकारित्वमन्यैश्च तदाज्ञाधारित्वं स्वीकर्तव्यम्। तदगत्या शक्तिभेदः स्वभावभेदश्चाङ्गीकर्तव्यः। तथा च जन्मसिद्धस्वभावपरिपोषमविधाय कृत्रिमस्वभावपरि-वर्तनेन कथंकारं सामाजिकसर्वकार्यनिष्पत्तिः स्यादिति न विद्मः। यदाकदाचित्समाजे किंचित्कार्यमव-श्यमेव संपादनीयमपि तत्संपादनशक्तव्यक्त्यभावान्न संपादयितुं शक्यते, तदा तादृशशक्तिशालि-पुरुषोत्पादनार्थं कदाचिदेतादृशस्वभावपरिवृत्तेः स्यान्नामाऽऽवश्यकता। नैतावता सर्वस्वभावपरिवृ-त्त्या सर्वसंकरः समाजयोगक्षेमाय प्रभवति। अतश्च सिद्धस्य परिरक्षणमेव किल समाजव्यवस्थेति निपुणं परीक्षणीयं प्रेक्षावद्भिः।

इदं तु सत्यमेव यन्न कदापि धर्मस्य परिवर्तनं न भवतीति वयमपि ब्रूमः। व्यभिचारादि-दोषद्वारा वर्णसंकरेण धर्मपरिवर्तनं तु धर्मशास्त्रेऽपि प्रतिपाद्यते। दृश्यते च दावाग्निदग्धानां वेत्र-बीजानां कदलीकाण्डजनकत्वेन धर्मपरिवर्तनम्। परंत्विदमन विचार्यम्, यद्धर्मपरिवर्तने वस्तुस्वरूपं परिवर्तते न वा? दावाग्निदग्धानि वेत्रबीजानि दाहानन्तरमपि वेत्रबीजान्येव वा कदलीबीजानीति सुनिपुणतरमालोच्योत्तरितव्यं परिवर्तनवादिभिः। यदि वेत्रबीजत्वं स्वीयमपहाय कदलीबीजभाव-मापयन्ते वेत्रबीजानि। तदा तु वस्तुस्वरूपमपि परिवर्तितमेव। अत एव धर्म एव खलु वस्तुस्वरूपम्। न त्वाकार इत्यपि सिध्यति। यदा हि वस्तु स्वस्वरूपेण धर्मेणापेक्ष्यते तदा धर्मपरिवर्तने वस्तुस्वरूप-हानिरेव। न ह्योषधीनां धर्मापगमे काष्ठादन्यत्किमपि स्वरूपम्। अतश्च परिवर्तनं नाम पूर्वपदार्थ-नाशश्चोत्तरपदार्थोत्पत्तिरिति सिध्यति। एवं च पदार्थस्वरूपसत्तायां न कदापि धर्मपरिवर्तनं भवितु-मर्हतीति सिध्यति। ततश्चेदानीतनोऽयं केषांचिद्धर्मपरिवर्तनवादोऽयं वेत्रबीजवद्ब्राह्मणादीनां नाम-मात्रशेष इति सिध्यति। तद्वरमुपाधिवितरणवद्विना परीक्षां गुणादीना ब्राह्मणाद्युपाधिदानं यथेच्छम्। सन्ति च बहवो नीतिनर्मसचिवा इदानीं रावसाहेब रावबहादुर इत्याद्युपाध्युपहिताः। तस्माद्धर्म-परिवर्तनवादोऽयमापातरमणीयोऽप्यन्ततः सर्वसंहारक एवेति निश्चप्रचमेव। तस्माद्यदि सत्यमेव खलु

मात्स्यन्यायनिरासार्थं समाजव्यवस्था विधेया, तर्हि स्वाभाविकगुणपरिपोषद्वारा तत्तत्कार्यकरणेन सर्वान्तर्यामिपरमेशसंतुष्टिर्यथा भवेत्तथैव विधेयम् । तत एव वस्तुतः समाजयोगक्षेमसंपादनं सिध्यति।

एतेन धर्मपरिवर्तनवादोऽयं धूर्तवकानां विप्रलाप इति सिध्यति । धर्मो हि वस्तुस्वरूपालको वस्तुस्वरूपमविनाश्य कथंकारं परिवर्तेत । अतश्च तादृशधर्मसंरक्षणमेव श्रेयः । तच्च स्वभावपरि-पोषेण, स चानुकूलाहारविहारसेवनेन तच्चेन्द्रियनिग्रहद्वारा शास्त्रादेशपरिपालनेनेति शास्त्रमेव यथावद्धर्मे प्रमाणम् । धूर्तवकानां तु इन्द्रियनिग्रहाभावेन यथेच्छप्रवृत्तौ बलवानभिलापः । एवमपि सामाजिकाधिकारहानिर्मा भूदिति स्वीयं ब्राह्मण्यादिकं विना धर्मपरिपालनं तथैव भवेदित्यभिसंधि-रेवात्र वादे हेतुः । नान्यः कोऽपि निश्चीयते । यदि च वस्तुगत्या समाजस्य सुस्थितिर्विधेया, तदा तु तदनुकूलगुणानां परिपोषार्थं तत्तत्स्वभावनिर्धारणमेवाऽऽवश्यकम् । तद्विहाय सर्वोऽयमव्यापारेषु व्यापारो नाम निधनायैव सर्वेषाम् । अतश्च स्वभावानुकूलखाद्यपेयनियमनमाचारश्च यथाशास्त्रमेव परिपालनीयौ । अत्र च पदार्थगतशक्तिमूलक एव खाद्यपेयविचारः परिग्राह्यः । स्पर्शमूलकखाद्या-खाद्यादिविचारस्तु शुद्धिप्रतिबिम्बे वक्ष्यते ।

## ( धर्मस्य भावनात्मकत्वेन पर्यालोचनम् )

ननु इष्टसाधनत्वज्ञानमेव प्रवृत्तौ कारणम् । तथा च धर्मे प्रवृत्तिश्चेदावश्यकी तदा तस्या-पीष्टसाधनत्वमवश्यमेवाङ्गीकर्तव्यम् । तत्कथं सर्वान्तर्यामिसमाराधनार्थत्वं तस्य भवितुमर्हति । न हि सर्वान्तर्यामी कश्चन पदार्थः, न वा तस्याऽऽराधनमपि संभवति । एवमपि शब्दात्मकशास्त्रजन्यबोध-विषयत्वात्सत्ताऽभ्युपेया चेत्तर्हि विकल्पख्यात्यापत्तिः । विकल्पश्च शब्दज्ञानानुपाती वस्तुशून्यः । एवं च वस्तुशून्यत्वादेव विकल्पस्य भावनात्मकत्वमेव सिध्यति । एवं सर्वान्तर्यामिणोऽपि केवल-भावनात्मकत्वमेव स्यात् । परंतु भावनामात्रेण कार्यसिद्धिस्तु न कुत्रापि दृश्यते । अन्यथा क्षुत्पिपासा-शामार्थमपि भक्ष्यपेयपदार्थभावनैव कार्यकारिणी स्यात् । न च तथोपलभ्यते । खाद्यपेयपदार्थ-लाभार्थमायासं प्रत्येकमुपलम्भात् । अन्यथा तु सर्वव्यवहारलोपप्रसङ्गात् । अतश्चैतादृशभावनात्मक-धर्मानुसारेण सर्वविधव्यवहारवर्तनमिदं वचनमात्रमेव । नहि सर्वान्तर्यामी कश्चनैकः पदार्थः केनापि क्वापि दृष्टपूर्वः । ये तु तत्कल्पनानुसरणशीलास्तेऽपि तेषां क्षुत्पिपासानाशार्थं खाद्यपेयपदार्थसंपा-दनादिभिरर्थानामधीना विलम्बा एव । अन्यथा सर्वान्तर्यामिनः संतोषे तेषामपि तद्व्यक्तिस्वरूपाभि-व्यक्तौ [illegible] स्यात् । तथा च सर्वान्तर्यामिसंतोषोऽयं निरिन्द्रियात्मक-[illegible] निवर्तते । सा च निरिन्द्रियत्वेन विशेषज्ञानानवच्छिन्नविशिष्टज्ञानात्मिका, विशेषज्ञाना-नवच्छिन्नविशिष्टज्ञानात्मिका, [illegible]ज्ञानानवच्छिन्नविशिष्टज्ञानात्मिका वा । तत्र विशेषज्ञानानवच्छिन्नविशिष्ट-[illegible] च [illegible] [illegible] ।

विशेष्याभावप्रयुक्तविशिष्टाभावात्मिकायां तु यद्यपि विशेषणस्य सर्वान्तर्यामिणः सत्त्वं सिध्यति, तथापि शास्त्रोपदिष्टमार्गेण संतोषस्यानुपलम्भात्, इतरसाधनानां च शास्त्रातिरिक्तप्रमाणैरनवगमात्फलतः सर्वान्तर्याम्यभावमूलकत्वमेव तस्या अभ्युपगन्तव्यम्। तथा च असतोऽलीकस्य समाराधनं भावनामात्रमेव पर्यवस्यति। तद्वरं मानवतासमाराधनं दृष्टफलकम्। यत्र प्रत्यक्षावगमेन न दम्भछलकापट्यादीनामवसरः। तथा च केवलादृष्टवादान् तन्मूलकनियमांश्च परिहृत्य प्रत्यक्षमार्गेण लोकसमाराधनमेव यथार्थो धर्म इत्यभ्युपेयमिति चेदत्रोच्यते।

सत्यं लोकसमाराधनमेव यथार्थतया परमो धर्मः। परंतु तदिदं समाराधनमपि कथं कर्तव्यमित्यपि विचारणीयमेव। यदि परस्परसापेक्षतया भोग्यसंपत्तिसमार्जनमात्रेण तद्भवेत्तर्हि राष्ट्रियत्ववादस्य कथमभ्युदयो भवतीति वक्तव्यम्। ननु न मन्यते राष्ट्रियत्ववादः। सत्यं न मन्यते भवता। नैतावता नोदेतीति वक्तुं पार्यते। अन्यथा भवदीयगुरुस्थानापन्नस्य राशयादेशस्य युद्धप्रसङ्गो न स्यात्। यः कोऽपि मानवो यत्र कुत्रापि वसतु वा राज्यं करोतु। परस्परसापेक्षतया भोग्यसंपदुपार्जने तु न कापि हानिः। तत्किमर्थमन्येषां निवारणार्थं महानयं सङ्ग्रामोद्यमः। कुत्र वा समाजे नान्योन्यसापेक्षतया भोग्यसंपदुपार्जनं भवति। तथा च सङ्ग्रामसंरम्भ एवायं राष्ट्रियतावादं गमयति। ननु नायं सङ्ग्रामोद्यमो राष्ट्रियत्वार्थम्। अपितु भोग्यसंपत्तेर्यथावद्विभजनार्थम्। दृश्यते च सापेक्षतया भोग्यसंपत्तेरुपार्जने समानेऽपि वैषम्येण विभजनम्। अतश्च विषमविभागवादिनां प्राबल्यं मा भूत् मा च मात्स्यन्यायावसरो भूदित्येवायं संङ्ग्रामसमुद्यम इति चेन्न। तथा सति जगतीतले यावन्मात्स्यन्यायं तदुपरमासंभवात्। नहि विशिष्टप्रदेशे एव तन्निवृत्तिस्तस्य कर्तव्यम्। मानवतापुरस्कारेण तदुत्थानात् न ह्यन्यत्र न मानवाः एवमपि तत्रत्यैः सा कर्तव्या नास्माकमेतत्कर्तव्यमिति बुद्ध्यैव किल युद्धोपरमः संपन्न इत्येवागत्या वक्तव्यम्। तत्र के यूयं के वाऽन्ये तत्रत्या इत्यनुयोगे त्वेतद्देशीया वयमन्येऽन्यदेशीया इत्येवोत्तरपथमियात्। तथा च प्रादेशिकस्वत्वाभिमान एव किलाभिव्यज्यते। तदेव च राष्ट्रियत्वम्। नान्यत्किमपीति कंर्णेहत्य पर्यालोचनीयम्। सोऽयं प्रादेशिकस्वत्वाभिमानः किं वस्तुस्वरूपात्मको वा भावनात्मको वेति विचारणीयम्। ननु भावनात्मकत्वेऽपि तस्य प्रदेशात्मकवस्तुतत्त्वालम्बनत्वाद्वस्तुस्वरूपात्मकत्वमेवेति चेदत्रापि सर्वान्तर्यामिवस्तुतत्त्वस्याऽऽलम्बनादेव तत्समाराधना भावनात्मिकापि न वस्तुस्वरूपात्मकत्वं व्यभिचरतीति समानमेव। ननु किंतावत्प्रमाणं तत्सत्त्वे। किं वा मानवतासत्त्वे प्रमाणम्। ननु समानसुखदुःखप्राप्तिपरिहारादिप्रवृत्तिरेव प्रमाणम्। एवं तर्हि समानसंवेदनात्मकचेतनशक्तिरपि प्रमाणम्।

ननु न मन्यते मया। किं त्वं न मानवः। प्रत्यक्षोपलम्भेऽपि न मन्यत इति वचनं विना नरेतरं न ब्रूयात्। न चोपलम्भेऽपि न समानता। जडमूढादीनामपि दर्शनात्। तर्हि मानवतापि

न समाना। सुखदुःखप्राप्तिपरिहारप्रवृत्तीनामपि भेददर्शनात्। रतिविरत्यरत्यादीनां प्रतिपिण्डं वैचित्र्योपलम्भेन तन्मूलकप्रवृत्तिभेदस्यापलापासंभवात्। ननु विषयभेदाद्भेदेऽपि सामान्यतोऽभेद इति चेदत्रापि पिण्डभेदात्संवेदनाशक्तेर्न्यूनाधिकभावेऽपि सामान्यरूपेणोपलम्भः समान एव। ननु चेतनाशक्तिस्तावद्विद्युत्कण (इलेक्ट्रॉन्) जन्या तत्र कारणभेदात्कार्यभेदः। न चात्र तथेति चेत् किं भवन्निवेदनमात्रेण एवं तर्हि प्रेतस्यापि भवत्संमतप्रवृत्तिः स्यात्। ननु चेतनाशक्तेरभावान्न तत्र सेति चेत्तर्हि चेतनाशक्तिरेव प्रवृत्तिकारणमभ्युपगन्तव्यम्। तस्याश्च कारणभेदाद्भेदे तन्मूलकप्रवृत्तिभेदोऽपि केन वार्यताम्। ननु विभिन्नकाष्ठादिसंघर्षणजन्योऽप्यग्निर्यथैकरूपः तथा विभिन्नचेतनाशक्तिजन्यापि प्रवृत्तिरेकरूपा स्यादिति चेत्तर्हि विभिन्नेलेक्ट्रानप्रोटानजन्या चैतन्यशक्तिरप्येकरूपैवास्तु। उत्पत्तिविनाशशालित्वेन भिन्नरूपता तु प्रवृत्तावपि समानैव। तत्सिद्धं मानवतावच्चेतनाशक्तेरपि सर्वान्तर्यामित्वं सर्वत्र। तथा च तत्समाराधनमपि वस्तुस्वरूपात्मकमेव सत्यपि भावनारूपत्वे तस्याः। इति।

वस्तुतस्तु इष्टानिष्टप्राप्तिपरिहारकारणीभूता भावनैव न वस्तुतत्त्वमपेक्ष्यत इति दृष्टमेव व्यवहारे। अत एव "तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः" इति कवेरुक्तिः संगच्छते। न हि प्रेमा वस्तुसत्सौन्दर्यादिकमपेक्ष्यते। सौन्दर्यशास्त्रदृष्ट्या वा आरोग्यादिशास्त्रदृष्ट्या वा निकृष्टस्यापि पदार्थस्य प्रेमास्पदत्वदर्शनात्। नह्यापामरमुपलभ्यमानं पुत्रकलत्रादिषु प्रेम वा सौन्दर्यदर्शनं शास्त्रप्रमितं यथावदेव भवति। एवमपि प्रवृत्तिनिवृत्तिकारणत्वं तस्य सर्वत्रानुभूयमानं नापह्नोतुं शक्यम्। एवं चैतेषां भावनास्वरूपानतिरिक्तत्वेऽपि कार्यकारित्वं भवत्येव। एवमेव पतित्वपत्नीत्वस्वत्वादिपदार्था भावनामात्रस्वरूपा एव किल कार्यकारिणः। किं बहुना सर्वोऽपि व्यवहारो भावनामूलक एव जगति जागर्ति। तथा च भावनाया अलीकत्वे जगदान्ध्यप्रसङ्गः। एवं च भावना किल यथार्थानुभवजन्या वा भवतु, अयथार्थानुभवजन्या वा भवतु, सर्वथा तु प्रवृत्तिनिवृत्तिकारणतां न व्यभिचरतीति तस्या यथाभिमतकार्यकारित्वानुगुणः परिपोष एव जगति आवश्यक इति तु निष्प्रपञ्चमेव।

नन्वनुभवोऽपि भावनाभेदाद्भिन्नो भवतीति भावनाजन्यत्वं तस्याभ्युपेयम्। अत एव पुत्रकलत्रादिषु सर्वेषां प्रेमोपपन्नं भवति। स्वीयत्वभावनाभावे तु न प्रेमोद्भव इति भावनैवानुभवकारणम्। एवमनुभववशादपि भावनोत्पद्यमानाऽपरिचितेषु दृश्यते। अत एव स्वपरभावोऽपि न सर्वेषां समानः। यो ह्यन्यस्य परोऽनिष्टकर्ता सोऽप्यपरस्येष्टसाधकत्वात्स्वो भवतीत्यनुभवभेदाद्भावनाभेदोऽङ्गीकर्तव्यः। तथा चान्योन्याश्रयापत्तिः। भावनाया अनुभवजन्यत्वमनुभवस्य च भावनाजन्यत्वमित्येकस्याप्यसिद्धिरिति चेन्न। वृक्षबीजन्यायेनानादित्वान्न दोषः। व्यक्तिभेदेन कार्यकारणभावभेदात्। तथा चानादौ संसारे परिवर्तमानमिदं भावनानुभवचक्रं जगदपि परिवर्तयतीति

तत्र स्थित्यर्थं प्रयतमानानां मानवानामिदमेवाऽऽर्यं कर्तव्यं यदपेक्षितकार्यानुगुणभावनास्थिरीकरणं तादृशभावनापरिपोषणं च । अन्यथा समाजस्य स्थैर्यासंभवेन यथावदपेक्षितकार्यसंपादनाभावेन च समाजरचना हि गगनकुसुमायमानैव स्यात् । तथा चान्ततो मात्स्यन्यायप्रसर एव विजयतेतराम् । परं चेदं न मानवतागमकमित्यययावत्सर्वेषामुद्घोषः । तथा च मात्स्यन्यायानिरासपूर्वकं समाजस्य स्थितिः संपादनीया चेदादौ तत्तत्कार्यानुकूलभावनापरिपोषो यथा भवेत्तथा प्रयत्नो विधेयः । कार्यं चानेकविधामिति तदनुगुणानां भावनानामप्यनेकविधत्वमपरिहार्यम् । स चायं परिपोषः परस्परानुपमर्दनेऽन्योन्यानुगुण्येन च यथा भवेत्तथा काचन पद्धतिरादरणीया । सैव च यथावत्समाजरचना । न तु समयबन्धपरिकल्पिता तात्कालिककार्यवशादेकविधभावनोद्बोधिका रचना समाजरचनेति सिध्यति ।

## ( तत्र ज्ञानभेदापेक्षा )

ननु नानाविधभावनानामन्योन्यानुबन्धेन परस्परानुपमर्दकत्वेन नैव कथमपि परिपोषो भवितुमर्हति । परस्परविरोधात् । या हि दयारूपा भावना अहिंसानुबन्धिनी, न सा शौर्येण सहावस्थापयितुं शक्या । एवमनुरागोऽपि द्वेषेण सहावस्थानानर्हः । एवमन्येऽपि भावाः परस्परं सहावस्थानानर्हा इति तेषां सर्वेषां परिपोषे परस्परोपपीडनमेव स्यादिति दुरवस्था समाजस्य तदवस्थैव । किं च भावनापरिपोषो हि तथाविधानुभवसातत्यमन्तरा न संभवति । अनुभवश्च जागतिकपदार्थायत्त इति तस्यानुगतैकविधत्वासंभवेन कथं तत्तद्भावनापरिपोषः संपादयितुं शक्यः । इति चेन्न । शास्त्रजन्यानुभवस्य तथाविधत्वसंभवात् । शास्त्रं हि शासनार्थम् । शासनं च नियमनमेकत्र स्थिरीकरणमिति यावत् । तथा च जागतिकपदार्थानां यथावदाकलने तदुपयुक्तताज्ञाने जागतिकसर्वविधव्यवहारज्ञाने मानवस्वभावपरिशीलने च तदनुगुणनानाविधतत्त्वज्ञानोदयेन तत्तद्भावनापरिपोषकत्वं तत्तत्तत्त्वज्ञानस्य निश्चित्य तत्तदनुगुणस्वभावानां तत्तदध्ययनबोधाचरणप्रचारद्वारा तत्तच्छरीरेषु तत्तद्भावपरिपोषोऽपि सुकर एव । अत एवैकमपि जगज्जीवितादिक्षणिकत्वज्ञानं ब्राह्मणप्रकृतिषु वैराग्योद्बोधकं सत् सर्वप्राणिकल्याणेच्छासाधकं भवति । तदेव क्षत्रप्रकृतिषु जगद्धितेच्छया कण्टकोद्घाटने देहपातमपि कारयति । वैश्यप्रकृतिषु सकलसंपत्संग्रहणपूर्वकं जगत्परिपालने प्रवृत्तिकारणम् । शूद्रप्रकृतिषु जगद्धिताय जीविकापारतन्त्र्यमप्यवलम्बयति । तत्रापि तत्तद्विशिष्टकार्येष्वभिनिवेशार्थं जगत्स्वरूपविषयकमपि ज्ञानं भिन्नमेव भवति । मानवसृष्टिरियं स्वभावतः साधुरिति ब्राह्मणप्रकृतिकाः । कण्टकमयी दुष्टा संहारार्हा इति क्षत्रप्रकृतिकाः । भोगमयी भोगपरवशा चेति विट्प्रकृतिकाः । कर्ममयी परायत्ता चेति शूद्रप्रकृतिकाः । यावदर्थं व्यवहारार्हा इति दस्युप्रकृतिकाः । तथा चैतादृशानुभवसातत्यसंपादनेन तत्र तत्र तत्तत्प्रकृतिकानां तत्तद्भावपरिपोषणं विधाय तत्तदुपयुक्तकार्येषु नियोजनमेव समाजयोगक्षेमसाधकमित्येव सिद्धान्त ऊरीकर्तव्यः । नाधुनातनज्ञानमिव सर्वेषामेकविधमेवाधीतिबोधाचरण-

प्रचारादिकं विधेयम् । स्मरणीयश्च पूर्वोतिहासः । एकान्तेनाहिंसावादिनां बौद्धानां सर्वभक्षकत्वम् । एकान्तेन परोपकारोपदेशकानां सिस्तानां सर्वसंहारकत्वम् । यावदर्थव्यवहारवादिनाममानुषता क्रौर्यं च यवनानाम् । इदं निखिलमपीतिवृत्तमिदमेव गमयति यन्नैकान्तेन कोऽप्येको भावः संसारस्थितिस्थापक इति । भारते तु पूर्वं सर्वविधभावपुष्टानां मानवानां सत्त्वादेव सर्ववैभवशालित्वमासीत् । क्रमेण च परैरापातरमणीययुक्तिवादेषु प्रसृतेषु योग्यब्राह्मणप्रकृतीनां तन्निरासार्थमलाभे च ह्रासं प्राप्तेयं समाजरचनेदानीं सर्वथा दासभावमेव भजते । इदानीमपि न वयमत्रत्याः किंतु सरधुववास्तव्या वन्यकल्पाः, वेदरूपग्राम्यगीतिपरायणाः । अत्रत्यास्तु मूलवास्तव्या भिल्ला गोण्डा दस्यव इत्यादिज्ञानमेव तत्त्वज्ञानमिति मन्यमाना वयं शत्रुपरिकल्पितं स्वनाशोपायमिममनाकलयन्तस्तेषामेवाऽऽचारविचारव्यवहारेषु बद्धादरास्तेषामेव समाजरचनां रोचयामह इति अहो बुद्धिभ्रंशः । मन्ये कृतार्थैव शत्रूणां कपटनीतिः । अत एवोक्तं नीतिरहस्ये तत्रभवता कविकुलगुरुणा भारविणा पाण्डवेतिहासवर्णनमुखेन । शत्रुकृतनिकारो हि—

> लोकं विधात्रा विहितस्य गोप्तुम्
> क्षत्रस्य मुष्णन् वसु जैत्रमोजः ॥
> तेजस्वितायाः विजयैकवृत्तेः
> निघ्नन् प्रियं प्राणमिवाभिमानम् ॥ १ ॥
> व्रीडानतैराप्तजनोपनीतः
> संशय्य कृच्छ्रेण नृपः प्रपन्नः ॥
> वितानभूतं विततं पृथिव्याम्
> यशः समूहन्निव दिग्विकीर्णम् ॥ २ ॥
> वीर्यावदानेषु कृतावमर्षः
> तन्वन्नभूतामिव संप्रतीतिम् ॥
> [illegible]

प्रतिष्ठापितमिति पर्यालोचने तु तच्छास्त्रपर्यालोचनमेवाऽऽवश्यकमनुसंधेयम् । अत एवोक्तं कविकुल-चूडामणिना तत्र भवता भारविणा—

मतिभेदतमस्तिरोहिते
गहने कृत्यविधौ विवेकिनाम् ॥
सुकृतः परिशुद्ध आगमः
कुरुते दीप इवार्थदर्शनम् ॥ इति ॥

इदानीं किल परम्पराप्राप्तशुद्धशास्त्रज्ञानाभावेऽपि सामान्यतो भाषाज्ञानवशाच्छास्त्रपर्यालोचनमिदं पाण्डित्यविडम्बनमेवास्मदीयानां नव्यसुशिक्षितानाम् । यदुदाहरणं वेदानां वन्यग्राम्यगीतत्वसिद्धान्तः, अस्माकं चोत्तरध्रुववास्तव्यत्वसिद्धान्तश्च । को हि वन्यो ग्राम्योऽज्ञातनागरिकोऽग्नेर्देवपुरोहितत्वं देवत्वं यज्ञमृत्विक्त्वं होतृत्वं च विना पूर्वानुभवं परिकल्पयेत् । किंबहुना व्यावहारिकाष्टादशविवादपदानां स्वत्वादिसिद्धान्तानां च मूलं प्रायो वेदेषु समुपलभ्यत इति तु धर्मकोशादभिव्यक्तमेव । एतच्च सर्वं न वन्यावस्थायां ग्राम्यगीतेषु संभवतीत्यन्धपरम्परैव किलेयं पूर्वोक्तकल्पनापरिगृहीतिराविर्भवयत्यस्माकं सारासारविवेकशून्यत्वम् । तस्माद्भावनाप्यस्मदीया न निष्प्रमाणिका विवेकशून्या । अत एव न सा केवलं विकल्पात्मिका वस्तुशून्या । अपि तु वस्तुतत्त्वावलम्बिनी यथावत्कार्यकारिणी जगद्यात्रानिर्वाहिकेत्येव परमादरणीयाऽस्माकं भवति ।

## ( स्वत्वनिराकरणवादनिरासः )

एतेन—सर्वस्वत्ववादोऽप्यपास्तः । स्वत्वं हि यथेच्छविनियोगाधिकारः । तत्र विनियोगस्य शास्त्रनियमितत्वे कुत्र किल यथेच्छता प्रभवतीति विचारणीयं सुधीभिः । शास्त्रीयानियमने चेत्तत्र शास्त्रमेव प्रमाणम् । तच्च सर्वादरणीयं न व्यक्त्यधीनम् । अथ नियमितेष्वेवान्यतमस्वीकारे यथेच्छत्वं तदा तु किं वा राष्ट्रस्योच्छिन्नम् । नन्विदमेवोच्छिन्नं यद्ब्राह्मणानामनायासेनैव परिपोषणम् । इति चेद्ब्राह्मणातिरिक्ते कुत्रापि कदापि विनियोगो नास्त्येव शास्त्रविहित इति प्रदर्शनीयं स्यात् । अन्नवस्त्रदानं तु प्राणिमात्रस्य शास्त्रविहितं नापलपितुं शक्यम् । समर्थस्य भिक्षापि निषिद्धाऽन्यत्र यतिब्रह्मचारिभ्यः । अत एव दानसंस्थायाः प्रादुर्भावः । ननु विनियोगस्य शास्त्रनियमितत्वेऽपि विभजनं तु यथेच्छमेव भवतीति चेन्नायं शास्त्रदोषः । निग्रहानुग्रहसमर्थशासनशैथिल्यादेव जनानां शास्त्राप्रवृत्तिः । यथा " लाभात्तु सप्तमो भागः."

" धर्माय यशसेऽर्थाय कामाय स्वजनाय च
पञ्चधा विभजन् वित्तमिहामुत्र च मोदते "

इति शास्त्रविहितो विभागो न सम्यक् परिपाल्यते । एवमुत्पादनविनिमयावपि न शास्त्रो-

पदिष्टाविदानीमनुष्ठीयेते । तादृशशासनप्रचारे तु तदेव शास्त्रमपरिवर्तितमपि जगदभ्युदयाय प्रभवे-देवेति वृथायं स्वत्वनिराकरणप्रयत्नः । उत्पादनविभजविनिमयनविनियोगानां यथावत्संपादने वर्तमान-मपि स्वत्वमभिमानमात्रमकिंचित्करमेव । तादृशस्वत्वरक्षणं न राष्ट्रनाशाय प्रत्युत राष्ट्रपरिपोषायैव प्रभवति । यदि वैश्यत्वेन क्षत्रियत्वेन ब्राह्मणत्वेन वा तत्र तत्र यथार्थस्वत्वाभिमानस्तर्हि तन्मूलक-जगत्परिगलनात्मककर्तव्यनिष्ठापि प्रादुर्भवेत् । नो चेदिदानीमिव स्वराष्ट्राद्राष्ट्रियाणां निर्वासनेन परिवर्तन-सङ्गोप्रवा विनाशो वा प्रादुर्भवेदेव । न ह्यस्मासु स्वराष्ट्रगतस्य वा स्वगृहागतस्य वा शरणागतस्य वा विनापराधं कदापि कस्यापि निर्वासनं दण्डसंस्थायाः कर्तव्यतया कुत्रापि विहितम् । प्रत्युत तद्यशोविनाशकत्वेन कर्तव्यभ्रंशायैव भवति । इदमेव चाऽऽर्यत्वमनार्यत्वं च यत्कर्तव्यनिष्ठा-भावाभावौ । दण्डो हि प्रजानां रक्षणायैव न तु नाशाय । प्रजात्वं च न धर्ममूलकं वा सामयिकं वा । अपि तु योगक्षेमनिर्वाहकत्वेन संरक्षणीयत्वम् । तच्च योगक्षेमनिर्वाहार्थं समागतस्य समाश्रितस्य च सर्वस्यापि भवितुमर्हति । अत एवास्मदीयभिल्लान्त्यजेष्वपि तद्वरीदृश्यते । अत एव न तेऽनार्याः । यत्र तु तदभावस्तत्रैवानार्यत्वं दस्युत्वं चेति ते एव मानवताया अहिताः । एवमपि सनातनवैदिक-धर्मस्य मानवताशत्रुत्वमुद्घोषोऽयं विवेकभ्रष्टानां परप्रत्ययनेयबुद्धीनां प्रवर्तते । तदपाकृत्य परोत्पादि-तमोहपटलं यथार्थतयाऽऽलोचनीयं धर्मतत्त्वम् । येन स्वभावानुसारभेदभिन्नानामपि समेषां संभूय-समुत्थानेनाभेदबुद्धिः कथं संपाद्यत इति सुविशदं भवेत् ।

## ( तदयं निष्कर्षः )

समाजस्याभ्युदयनिःश्रेयससंपत्तये धर्मार्थकामानामन्योन्यानुबन्धेन परस्परानुपमर्देन च यथोपभोगः स्यात्तथा काचन व्यवस्थाऽवश्यं विधेया । सा च स्वभावतः सुखलोलुपस्य विना मात्स्यन्यायनिरासं संभवति । स च निरासो न व्यक्तिप्रधानसमाजवादे वा संघप्रधानसमाजवादे वा बहुमतैकमतादिक-मवलम्ब्य संभवतीति सर्वेषां स्वस्वमतानुसारेण स्वोपभोगव्यवस्थाकरणेऽधिकारः । तत्र यथावत्स्वभा-वानुसारेण येषां यादृशो संघः परस्परापेक्षया भविष्यति तेषां तत्संघस्य च तत्रैव नियमनं कर्तव्यम् । तादृशस्वभावभेदस्तु स्वाभाविकत्वादेव न विनाशयितुं शक्यः । यत्र तु केनचित्कारणेन नैकत्र गुणे स्वभावपरिनिष्ठा तेषां पृथक् संघस्थापनेन परायत्तत्वमेव संपादनीयम् । एवं विभिन्नस्वभावानामेतेषां संघानां परस्परानुपमर्दकत्वेनैक्यसंपादनाय सर्वान्तर्यामिपरमेशाराधनमेव पुरस्कर्तव्यम् । यथार्थत्वेन वस्तुग्रहणात् छलकापट्यहिंसानृतादिदोषापहारकत्वात् कर्तव्यनिष्ठोत्पादकत्वात् द्वंद्वसहत्वादन्ते सर्वत्र विरागसंपादनात् त्यागबुद्धेर्दृढीकरणाच्च । न हि मात्स्यन्यायनिरासस्त्यागबुद्धिमन्तरेण न च त्यागः पुरुषाराधनमन्तरेणेति पुरुषाराधनमेव परमो धर्मः । तथा च तादृशाराधनदीक्षादीक्षितानां केषांचन संघ आदर्शभूतः समाजेऽपेक्ष्यते । सोऽपि न बलात्संपादयितुं शक्य इति तत्रापि स्वभावपर्यालोचन-मावश्यकम् । तादृश स्वभाव पर्यालोच्य तत्र तत्कार्यानुगुणसंस्काराधानेन तत्सातत्य परम्परया

यथा स्यात्तथा काचन कर्मप्रणाली विधेया। तत्र यावज्जीवं सर्वेषां कर्मणां व्यवसायादीनामाहार-विहारादीनां च तदनुगुणमेव नियमनमवश्यमेव। एवं च बीजरक्तशुद्धो कार्यानुगुणस्वभावपरिपोषे चोपयुक्ततत्तत्कार्यकरणं परस्परानुपमर्देन सहजमेव भवति। इदानीमपि तत्तद्वादपक्षपातिनः स्वाभिमतमतप्रचारायेदमेवानुतिष्ठन्तीति किमपराद्धं वैदिकधर्मेण। एतादृशस्वभावपरिपोष एव जाति-गमकः। अतश्चजन्मसिद्ध इति चातुर्वर्ण्यमिदमपि जन्मसिद्धम्। तादृशाचारपरिपालनशैथिल्ये तुदरंभराणां वराकाणां परवशानां समृद्धिः। तथा च समाजनाश इत्यपि न तिरोहितम्। एतादृशा-चारविचारपरिपालनशैथिल्यपरिहारार्थमेव इन्द्रियनिग्रहादेशो दण्डविधानं प्रायश्चित्तादेशः शास्त्रवि-हितः। तथा च स्वभावभेदात् कार्यभेदः, ततश्च धर्मभेद इति न सर्वेषामाचारधर्म एकरूपः कदापि भवितुमर्हति। एवमपि विचारैक्यसंपादनेन तन्मूलकत्वाच्चाचारधर्मस्य च धर्मैकत्वं जेगीयते। एतादृशकार्ये तु ज्ञानं शौर्यमौदार्यं चेति तत्र परिनिष्ठितस्वभावानां ब्राह्मणादिवर्णत्वम्। तैश्च ब्राह्मणादिभिस्त्यागपूर्वकपरमेशाराधनार्थमेव तत्तत्कार्यकारिभिर्मात्स्यन्यायभङ्गो नान्यथेति सिद्धं चातुर्वर्ण्यव्यवस्थैव यथार्थतया समाजव्यवस्थेति। एतत्सर्वमत्र तत्तद्विषयपर्यालोचनायां यथामति सोपपत्तिकं विवेचितमालोचनीयमेव गुणदोषविचारचातुरीचतुरैर्विचक्षणैः। स्पष्टं चेदमस्मत्कृतनीति-सुधायामिति ततोऽप्यालोचनीयम्। विस्तरभयात्तु नात्र तदुपन्यासः। इति शम्।

दोषा वाऽत्र गुणोऽपि वा यदि भवेन्नो तत्र कापि क्षतः।  
यद्धात्रा विहितं स्वभावनियतं तत्किं विपर्यस्यति॥  
चन्द्रे शैत्यमथोष्णताऽहिमकरे लग्नं विषं हीरके।  
तत्तद्भावयुतानपीह मनुजा युञ्जन्ति भावान् सदा॥  
प्रार्थनीयमिदमेव केवलं दोषभाजनमयं सदा जनः।  
वेदबोधितविमार्गगामिनीं दूषयन् धियमिमां न दोषभाक्॥  
नन्दशत्रुवसुभूमिनशाके पञ्चमीभृगुयुता तु नभस्ये।  
तत्र पूर्तिमगमत्सितपक्षे वर्णजातिरचनाप्रतिबिम्बः॥  
प्रीयतां देवदेवेशः सर्वधीसाक्षिविभ्रमः।  
सीतारामोऽनया कृत्या देवकृष्णस्य चाल्पया॥ १॥

इति श्री संतोजि महाराजादि प्रचाल्यमान सनातनधर्मोज्जिवनीसभा द्वारा संपादिते  
पण्डितोपाह्वकेशवसूनुदेवकृष्णशर्मणा विरचिते  
धर्मादर्शे चातुर्वर्ण्यप्रतिबिम्बः॥

---

॥ श्रीः ॥

# ॥ धर्मादर्शः ॥

## ( विवाहप्रतिबिम्बः )

सद्वितीयोऽप्यद्वितीय एकोऽनेको विरागवान् ।
स्वतन्त्रोऽपि पराधीनः सीतारामोऽस्तु मे हृदि ॥ १ ॥
योग्यतानुवशात्सर्वं भोग्यजातं नियुज्यते ।
सा योग्यता तु सहजा दर्शिता जन्मभावतः ॥ २ ॥
स्त्रीपुंसाख्यं भोग्यजातं परस्परनिबन्धनम् ॥
तयोर्भोगस्य सरणिर्विभागेऽत्र प्रदर्श्यते ॥ ३ ॥

## (उपोद्घातः)

तदेव सर्वस्यापि स्थावरजङ्गमात्मकस्य जगतो भोग्यत्वाद्भोक्तुश्चेतनस्य स्वतन्त्रस्यापि भोगसिद्धेस्तदधीनत्वात् समुत्पादितस्य भोग्यजातस्य योग्यतापरपर्यायसहजशक्तिनियमितत्वेन विनियोगविनिमययोरपि तथात्वात् सहजशक्त्यनुसारेण व्यवहारःप्रवर्तनीय इति सिद्धम्। तत्र स्थावरे तथा सिद्धेऽपि व्यवहारे चेतने जङ्गमे तत्रापि मानवे तथा व्यवहारासिद्धिर्दुरुपपादा दुर्घटा चेति मतानुसारिणा मतान्यालोच्य तत्रापि तादृशव्यवहारनीतिरेव श्रेयस्करी जगद्योगक्षेमावहेति चातुर्वर्ण्यप्रतिबिम्बे यावद्बुद्धिबलमुपपादितम् । अथेदानीं स्त्रीपुंसयोरुभयोर्भोग्ययोरन्योन्यभोगपद्धतिर्विचारणीयत्वेन समापतति । अत्र बहूनि मतान्तराण्युपलभ्यन्ते । व्यवहारोऽपि नानाविधोऽद्य यावत्प्रचलति । तत्र का वा पद्धतिर्योग्या न्याय्या धर्म्या चेति विचारणीयम् । तत्र धर्मविवाहपद्धतिरेका वैदिकी भारते प्रचलति । अन्या तु काम्या इतरदेशेषु । इतरे च प्रकाराः सविद्रूपादयः काम्यपद्धतावन्तर्भवन्ति । अतश्च तद्विचार एव सर्वविचारः सूपपन्नो भवतीति प्राधान्येन पूर्वोक्तपद्धतिद्वयमेव विचारणीयम् ।

### ( स्वाभाविकप्रवृत्तिपर्येषणा )

तत्र भोगस्तावद्विषयेन्द्रियसम्पर्कजन्यानन्दात्मको वा तादृशदुःखात्मको वा । तत्र तादृशदुःखात्मकस्य भोगस्य अनिष्टत्वेन हेयत्वात्तादृशानन्दात्मकस्य चेष्टत्वेनोपादेयत्वादुभयोरपि विचारवि-

यत्वमापतति । तथाप्येकस्य विचारेऽपरस्यार्थात्तद्विरुद्धत्वेन हेयत्वं वोपादेयत्वं सिध्यतीति नोभयो-
विंचारस्याऽऽवश्यकता । इदं तु तावदादाववश्यमेव विचारणीयं यत्कस्य वैकस्य विचारः कर्तव्य इति।
किं दुःखात्मकस्य वा सुखात्मकस्येति । अत्र च स्वाभाविकप्रवृत्तिपर्यालोचनमन्तरा न निर्णयः
संभवतीति सैव तावदादौ विचारणीया। किं जन्मत एव जन्तुः सुखाय प्रवर्तते वा दुःखहानाय
प्रवर्तते वा । तत्र सांख्यन्यायवैशेषिकदर्शनादौ " दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ "
इति कारिकातः "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति
सूत्राच्चैवं ज्ञायते यत्प्रवृत्तिः खलु प्राणिनां निसर्गत एव दुःखहानायेति सिद्धान्तः। योगशास्त्रे यद्यपि
चित्तवृत्तिनिरोधस्योपक्रमस्तथापि तत्राप्यन्तत आत्यान्तिकदुःखाभाव एव पर्यवसानादनुत्तमसुखस्य
चानुपलम्भान्नैसर्गिकी प्रवृत्तिः प्राणिनां दुःखहानायैवेति गम्यते। वेदान्तशास्त्रे श्रीशंकरभगवत्पादा-
दीनां मते आत्मस्वरूपस्य सच्चिदानन्दात्मकत्वेनान्ततस्तावदानन्दप्राप्तेर्गम्यमानत्वात्तदर्थमेव,
स्वभाविकी प्रवृत्तिः प्राणिनामिति ध्वन्यते। तथापि—

इह जगति सर्व एव जन्तुः ।
निरतिशयं सुखमुत्तमं ममास्तु ॥
व्युपरमतु तथोपघातरूपम् ।
विषयजदुःखमिति स्पृहां करोति ॥

इत्यादिसंक्षेपशारीरकादिवाक्येभ्यः प्रवृत्तिद्वयमपि स्वाभाविकमिति तेषां सिद्धान्तः
प्रतिभाति। अन्येषां भक्तिमार्गानुयायिनां मते तु परमेश्वरानुग्रहादिना सुखप्राप्तिर्दुःखनाशश्चेति
सिद्धान्तात्प्राणिभिस्तदर्थं प्रयतनीयमिति गम्यते। तथा चोभयत्रापि प्राणिनां प्रवृत्तिरुभयार्था
स्वाभाविकीत्यपि सिध्यति तदेवं विचारावसरे सुखदुःखोभयसाधकत्वेनैव विचारः कर्तव्य उत
सुखसाधकत्वेनैवेति विशयः। ये तु इष्टसाधनत्वविशिष्टकृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धि-
त्वज्ञानमेव प्रवृत्तिं प्रति कारणमिति वदन्ति। तेषां मते तु सुखसाधनत्ववदनिष्टानुबन्धोऽपि
सर्वत्र पर्यालोचनीयो भवतीत्यतः स्वाभाविकी प्रवृत्तिरुभयार्थापि सिध्यति। यत्तु सुखस्य दुःखा-
भावरूपतामभ्युपगम्य दुःखाभावरूपेण विचारे सुखस्यापि विचारः स्यादेवेति न सुखसाधनत्वेन
विचारः प्रवर्तनीय इति मतम्। तत्तु ब्रह्मसिद्ध्यादौ सुखदुःखयोरुभयोरपि विनिगमनाविरहेणा-
न्योन्याभावात्मकतायापत्तिप्रदर्शनेन निरस्तमिति तत एव ज्ञेयम्। ननु मास्त्वन्योन्याभावात्म-
कत्वं सुखदुःखयोः। एवमपि परस्पराभावसमनियतत्वं तु केन वार्यताम्। तथा च सुखसाधनत्वेन
विचारे दुःखाभावोऽपि तत्समनियतो दुःखाभावसाधनत्वेन विचारे च तत्समनियतं सुखमपि
सेत्स्यतीति नोभयरूपेण विचारस्याऽऽवश्यकता किंत्वन्यतररूपेणेतिचेत्, सत्यं स्यादेतदेवम्, यदि
विचारः प्राणिनां स्वाभाविकीं प्रवृत्तिं न गमयेत्। विचारस्तु न निष्प्रयोजनस्यापि तु सफलस्यैव।

" प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते " .

इति न्यायात्। तच्च फलं यस्याभिप्रेतं तत्र तत्प्रवृत्तिः किं स्वाभाविकी वोत कारणान्तरजन्येत्यपि निर्धारणीयं स्याद्विवेकचातुरीचतुराणां विचक्षणानाम्। सा चेद्दुःखनाशाय, तथा सति तत्प्रयोजनाय विचारः प्रवर्त्यमानः सफलः। अथो सुखायैव स्वाभाविकी प्रवृत्तिः। तथा सति सुखरूपं प्रयोजनमुद्दिश्यैव विचारः प्रवर्तनीयः स्यात्। तथा च स्वाभाविकप्रवृत्त्युद्देश्यमेव विचारस्य प्रयोजनमिति सिध्यति। तत्किं सुखात्मकं वोत दुःखनाशात्मकं चेति चिन्तनीयम्।

वयं तु ब्रूमः—

सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः।

इत्युक्त्यनुसारेण प्राणिनां स्वाभाविकी प्रवृत्तिः सुखार्थैवेति। न दुःखनाशाय। उपनतस्यैव खलु दुःखस्य जिहासा नानुपनतस्य। जन्मत एव स्तन्यपानादौ प्रवृत्तस्य प्राणिनस्तदानीं दुःखाभावात्प्रवृत्तिरेवानुपपन्ना स्यात्। ननु तत्रापि क्षुत्तृड्जन्यदुःखोपनमात् तन्नाशायैव प्रवृत्तिर्न सुखायेति वाच्यम्। तथात्वे हि जीवनस्य दुःखव्याप्यत्वेन दुःखसमनियतत्वेन वा जीवनप्रेमानुपपत्तेः। जीवनं च प्राणिनां प्रेष्ठतममिति त्वाकीटपतङ्गं नितरामपरोक्षम्। प्रेमा च सुखानुबन्धी। स चेज्जीवने निरतिशयस्तर्हि सुखानुबन्धेनापि तत्रावश्यं भाव्यम्। तस्माज्जीवने प्रेमातिशयस्य प्रत्यक्षोपलब्ध्या तदविनाभावनियतं सुखमपि तत्रावश्यमुन्नेयं भवति। अत एव

मा न भूवं हि भूयासमिति प्रेमाऽऽत्मनीक्ष्यते

इति सिद्धान्तः। तथा च जीवने प्रेमातिशयस्यान्यथाऽनुपपत्त्या कल्प्यमानं सुखमेव प्रवृत्तिनिदानं स्वाभाविकमिति सिध्यति। तथा च स्वाभाविकप्रवृत्तेः सुखैकफलकत्वात्तत्साधनत्वेन विचारः कर्तव्य इति सिध्यति। अथवा जीवनस्य प्रेष्ठतमत्वात्तत्साधनत्वेनैव वा विचारः प्रवर्तनीयः। न सुखसाधनत्वेन वा दुःखहानोपायत्वेन वा। एवं च जीवनमेव सर्वासां प्रवृत्तीनां स्वाभाविकमुद्देश्यमित्येवानन्ततः सिद्धान्त उपगन्तव्योऽस्माभिरपि।

बहूनां तथैवावस्थानस्य विरागिषु दर्शनात् । सर्वसमतावादे त्विदानीमखिलानामपि मानवदेहानां सर्वकार्यकारित्वस्य स्वभावत एवाभ्युपगमेऽपि तथा कार्यानुपलम्भात । न चतुर्थः । यावद्वासनापूर्तेः सर्वथाऽसंभवात् । सर्ववासनापूर्तावपि ब्रह्मनिष्ठदेहानां कालकलनस्य सर्वत्रोपलम्भात् । किंच वासनापूर्तिर्भवतु वा मा वा भवतु । कालवशाज्जराजीर्णकलेवराणां पातस्य प्रत्यक्षोपलम्भेन जीवनस्य तद्रूपतानुपपत्तेः । नन्वस्तु तर्हि देहधारणानुकूलव्यापारकर्तृत्वमेव जीवनत्वम् । तथा सति वैदिकानां मते तस्य चैतन्यानतिरेकेण चैतन्यस्य चाविनाशित्वेन मरणप्रतिपक्षित्वेन जीवनपदार्थानुपपत्तेः । येषां तु मते न चैतन्यं देहातिरिक्तमविनाशि, किंतु देहेन सहैवौत्पत्तिकं देहधर्मः सुखादिवत्, तेषां मते चैतन्यविशिष्टदेहस्यैव तादृशकर्तृत्वेन जीवनत्वापत्तेः । इष्टापत्तिरिति चेत्तादृशकर्तृत्वशालिनोऽपि देहस्य युद्धादौ विनाशप्रवृत्त्युनुपपत्तेः । जीवनस्य प्रेष्ठत्वात् । तस्मात्कोऽयं जीवनपदार्थ इत्येव प्रथमतो विचारणीयम् ।

अत्र ब्रूमः—स्वभावपरिपोष एव जीवनमिति । स्वस्य भावः स्वभावः । स्वश्चात्र देहः । तस्य यो भावस्तत्परिपोष एव जीवनम्, तदभावश्च मरणमिति । देहस्य भावस्तु मनोबुद्ध्यहंकारेन्द्रियभेदाच्चतुर्धा भिद्यमानोऽपि संभूयकार्यकारित्वादेक एव । तेषां परिपोषस्तु न तत्तद्विषयप्राप्तिमन्तरा संभवतीति विषयप्राप्त्यर्थं प्रयतमानानामेतेषां संभूयकार्यकारित्वं भवति । तथाहि चक्षुरिन्द्रियस्य स्वीयरूपविषयावश्यकतायां बुद्ध्या तन्निश्चयो मनसा तत्संकल्पः, अहंकारेण च तदभिनिवेशः कर्तव्योऽवश्यमेव । ततश्च कर्मेन्द्रियाणां प्रवृत्तौ तत्प्राप्तिः । ततः परिपोषः । स एव चाऽऽनन्दः सुखमिति जेगीयते । यत्र तु बुद्धिमात्रस्य वा मनोमात्रस्य वा केवलाहंकारस्य वा परिपोषः कर्तव्यः, तत्रापीन्द्रियाणां प्रसङ्गवशात्स्वीयविषयत्यागपूर्वकं सहकारित्वमावश्यकमेव ।

अत एव च परोपकारपरपीडापरिहारादिषु स्वार्थानपि गुरुतरानुपेक्ष्य प्रवृत्तिर्दरीदृश्यते केषांचित् । अत एव मानापमानाद्यभिनिवेशमात्रार्थमपि कलहायमानाः प्रेष्ठतमानपि प्राणाञ्जहति प्राणिनः किमुतेन्द्रियविषयप्राप्त्यर्थम् । एवं समयधर्ममूलकगणप्रवृत्तिवद्देहभावानामपि प्रवृत्तिरिति सिध्यति । तत्र न केवलं मनोबुद्ध्यहंकारविषयप्राप्त्यर्थमिन्द्रियाणामेव स्वार्थत्यागः । किंतु इन्द्रियविषयप्राप्त्यर्थं मनोबुद्ध्यहंकाराणामपि स्वार्थत्यागो दरीदृश्यते कामिनीकामलोलुपानां कनककवलीकृतान्तराणां च । अत एव च "कामातुराणां न भयं न लज्जा" इत्याद्युक्तं संगच्छते । ते चैते भावाः सर्वत्र सामाना इति तत्परिपोषाधिकारोऽपि सर्वेषां समान एव न तत्र केनापि हस्तक्षेपः कर्तव्यः । एवं च केनापि कस्यापि संकल्पनिश्चयाभिनिवेशरूपादिविषयप्राप्त्यादयो न व्याहन्तव्या इति किल न्यायस्वरूपं वा मानवतास्वरूपं वा सिध्यति । परस्परविरोधेऽपि यावच्छक्ति यावद्बुद्धिबलं च विरोधपरिहारेण वर्तितव्यम् । विरोधपरिहारासंभवे तु द्वन्द्वयुद्धेन निर्णयो न्यायः । समयबन्धपरिकल्पनया

व्यवहारप्रवर्तनं नामात्याचार एव बलात्सर्वेषामुपरीति तादृशसमाजस्य न पाश्चात्त्यसमाजानतिरिक्तत्वम् ।

तदेवं सिद्धे किल स्वभावपरिपोषात्मके जीवनस्वरूपे स्वाभाविकप्रवृत्तिरपि प्राणिनां तदर्थमेवेति तामनुसृत्यैव यः कोऽपि विचारः प्रवर्तनीयः । न तु तद्विरोधेन । विरोधेन विचारे तु तादृशविचारस्य व्यवहारेऽनुष्ठानासंभवेन काकदन्ताद्यलीकवस्तुविचारवत्सर्वथा वैयर्थ्यमेव । अत एव नाऽऽत्मानात्मविचारस्य वा राष्ट्रियत्वविचारस्य वा सर्वत्राव्याहतत्वं कुत्रापि । ये तु केचिदित्थंविधाः कतिपया दरीदृश्यन्ते तादृशविचारशालिनस्तेऽपि स्वभावपरिपोषार्थमेवेत्यपि वक्तुं न साम्प्रतम् । तत्संकल्पाभिनिवेशादीनामलीकविषयकत्वात् । अत एव च क्षुधातृषादिबाधानिरसनार्थं विपदवस्थेव तेषां प्रत्यक्षगोचरः । न हि वन्ध्यापुत्रशशविषाणादिपदार्थप्राप्त्यभिनिविष्टः कश्चिदिति तस्य तादृशी प्रवृत्तिः स्वाभाविकी । न च तत्र स्वभावपरिपोषोऽपि । पदार्थसंभावनायां हि तत्प्राप्त्या तज्जनितसुखस्वभावपरिपोषः । अत्यन्तासंभावनायां तु पदार्थस्य न कदापि प्राप्तिरिति दूरापास्त एव स्वभावपरिपोषः । एवं चानुत्तमसुखार्थं वाऽऽत्यन्तिकदुःखोपशमार्थं वा विचारप्रवृत्तिरियं सर्वथा [illegible] छिप्यति । सर्वथा तु स्वभावपरिपोषप्रवृत्तेरेव स्वाभाविकत्वेन तामुद्दिश्यैव यः कोऽपि विचारः कर्तव्यः । स एव चार्थिको धर्माचरणप्रकारोऽर्ह इति तथैव स्थितिः स्याद्व्यवहारे । अतश्च विचारोऽपि तथा विचारविषयतामापद्यते नान्यथेति तदनुसारेण तद्विचारः प्रस्तूयते ॥

देवतासंतोषः संभवति । अयमेव कर्मणां प्रयोज्यप्रयोजकभावः । तथा च विवाहस्याऽऽवश्यकतां प्रतिपादयाद्भिः प्रथमतो विवाहकार्यमेतादृशं प्रदर्शनीयं यद्विवाहमन्तराऽनुपपन्नं भवेद्विवाहप्रयोजकं च स्यादिति ।

अत्र वादिनः प्रत्यवतिष्ठन्ते । सुप्रजस्त्वमेव विवाहप्रयोजकमिति केचित् । साजात्यमित्यपरे समाजसुव्यवस्थेत्यन्ये । स्वभावपरिपोषात्मकं जीवनमित्येके । काम इत्येवेति केचित् । राष्ट्रोन्नतिरिति चेतरे । न किंचिद्विवाहप्रयोजनमित्यपि समतावादिनः । तदेतेषां पक्षाणां विचारः कर्तव्यतया समापतति । अत्रेदमालोचनीयं यद्यदि जीवनार्थमेव सर्वेषां प्रवृत्तिस्तदा इन्द्रियस्वरूपस्वभावोपशान्तिरेवापेक्षिता, नाधिकं किंचित् ।तथा चेतरेन्द्रियाणां तत्ताद्विषयरूपभोग्यसंप्राप्तिरिव जननेन्द्रियस्यापि स्त्रीपुंसरूपभोग्यसंपलाभोऽपेक्ष्यते । न हि इतरेन्द्रियाणां भोग्यसमार्जने सुप्रजास्त्वं वा समाजसुव्यवस्था वा राष्ट्रोन्नतिर्वा केनाप्यालोच्यते जन्मत एव । निसर्गतो जन्मप्रभृति तथाभावस्य केनापि प्रदर्शयितुमशक्यत्वात् । न वा पशुपक्ष्यादिषु तथा प्रवृत्तिरुपलभ्यते । मानवेषु क्वचित्तथा प्रवृत्त्युपलम्भेऽपि व्यभिचारस्य सहस्रश उपलम्भान्न सौत्सर्गिकीत्येव सिद्धान्तयितुमुचितम् । तथा च यथा क्षुधोपशमनार्थं क्षुधाकाले यदुपलभ्यते तद्भक्षणेनापि क्षुधोपशमः । न तत्र भक्ष्याभक्ष्यविचारः , तथा कामोपशान्त्यर्थमपि व्यवहारः प्रचलतु किं गम्यागम्यत्वविचारेण । यदि तु बहूनां भक्ष्याणामुपलम्भे भक्ष्याभक्ष्यविचारस्यानिवार्यत्वमिव बहूनां स्त्रीपुरुषात्मकभोग्यानां समुपलब्धौ गम्यागम्यत्वविचारोऽपि केन वार्यतामित्युच्येत । तदा तु यत्रोभयोर्यावत्स्वभावपरिपोषस्तावदेव गम्यागम्यत्वं निर्धारणीयम् । नाधिकं किंचिदनुशासनादिकं वा धर्माधर्मादिकं तत्र निश्चायकं प्रतिपत्तव्यं गम्यागम्यत्वयोः । नापि नीतिर्वा पातिव्रत्यादिकं वा विवाहायत्तम् । विवाहमन्तरापि मस्तानीबाजीराव, औरंगजेबकन्या—संभाजी इत्यादिषु तत्पराकाष्ठाया उपलम्भात् । वैदिकेतिहासे द्रौपदीताराप्रभृतिषु अनेकभर्तृकत्वेऽपि तद्धानस्यानवगमात् । प्रत्युत सत्यपि विवाहेऽजामिलादिषु बृहस्पतिपत्न्यादिषु च व्यभिचारोपलम्भादिदमेव सिद्धान्तपथमवतरति यत्र सुप्रजस्त्वादिकं विवाहनिबन्धनम् । अपि तु स्वभावपरिपोषनिबन्धनमेवेति । तथा च स्वभावपरिपोषप्रवृत्तानां प्राणिनां यत्किमपि कृत्रिममनुशासनं नोपयुक्तम् । किंतु सर्वोऽपि व्यवहारोऽनिरुद्ध एव स्वभावाधीनो भवतु । तथा च न जातिबन्धनात्मकं वा समयबन्धनात्मकं वाऽनुशासनमत्यावश्यकमिति सिध्यति ।

ननु मास्तु प्राथमिकप्रवृत्तौ सुप्रजस्त्वादिकमुद्देश्यम् । तथापि नान्तरीकतया समुपजातायां प्रजायां सुदृढममत्वाभिनिवेशस्याऽऽपामरं प्रत्यक्षोपलम्भात् अन्ततस्तस्यापि प्रवृत्त्युद्देश्यता स्यादेव । एवमेव कुलजातिग्रामदेशाद्यभिनिवेशस्य पश्चाद्भाविनोऽपि कृते प्रेष्ठतमजीवनत्यागस्यापि दर्शनात् स्वाभाविकप्रवृत्तिविषयत्वं तस्यापि न निवार्यम् । तथाच तस्यापि विवाहप्रयोजकत्वं स्यादेव । किंच स्त्रीपुंसयोः शरीररचना स्वभावरचना च स्वभावत एव भिन्ना तावत्प्रत्यक्षमुपलभ्यते । लिङ्गाद्यवयव-

भेदात्। तत्र पुरुषस्य बीजाधानयोग्यता, स्त्रियाश्च बीजग्रहणयोग्यता च गर्भधारणादिनाऽनुभूयते। एवं च स्वभावत्वेन तयोः स्वभावसाम्येऽपि एकस्य बीजावापेन स्वभावपरिपोषः, अन्यस्य तु बीजग्रहणेन। एवं च

" प्रजनार्थं स्त्रियः सृष्टाः संतानार्थं च मानवाः "

इति मनूक्त्यनुसारेण संतानपरम्परारूपवंशवृद्धिरपि विवाहस्य प्रयोजनं स्वाभाविकमभ्युपगन्तव्यम्। अत एव एडवर्ड वेस्टरमार्कमहोदयेन गर्भस्थापनमात्रार्थं वा संतानप्राप्त्यर्थं वा स्त्रीपुंसयोर्यत्किंचित्समयपर्यन्तं वाऽऽमरणं वा स्थायी संबंधो विवाह इति विवाहव्याख्या परिकल्पिता। तथा च गर्भधारणं वा संतानप्राप्तिर्वा विवाहस्य प्रयोजनं स्यादेव स्वाभाविकमिति चेन्न। इन्द्रियतृप्त्यर्थं प्रवर्तमानयोः स्त्रीपुंसयोर्नान्तरीयकत्वेनोपजायमानस्य सतानस्य वा गर्भस्योद्देश्यत्वाभावात्। नहि ग्रामं गच्छन् तृणं स्पृशन्नपि तृणस्पर्शार्थी प्रवृत्त इति जेगीयते। ममत्वाद्यभिनिवेशानां तु पश्चाद्भावित्वेन कारणजन्यत्वादौत्सर्गिकत्वाभावः। अत एव च गर्भधारणं मा भवत्विति कृत्रिमप्रतिबन्धकसाधनसामग्रीसंपादनार्थं केषांचित्कामिनां प्रवृत्तिः। न ह्येवमिन्द्रियपरिपोषो माऽस्त्विति केऽपि प्रवर्तमाना दृश्यन्ते। न ह्यौत्सर्गिकप्रवृत्तिप्रतिबन्धः सुखाय भवति। कृत्रिमप्रवृत्तिप्रतिरोधस्तु सुखसाधकत्वादिष्ट एवेति तत्र प्रवृत्तिरपि सूपपद्यते। तस्मादिन्द्रियतृप्तिरेव विवाहस्य परम प्रयोजनमित्येवाभ्युपगन्तव्यमकामेनापि। एवं च वन्ध्यागमनमपि उपपन्नं स्यात्। अन्यथा वन्ध्यां न कोऽप्युपगच्छेत्। सा चेन्द्रियतृप्तिः पूर्वोक्तेतिकर्तव्यताजन्यसंस्काररूपविवाहाभावेऽपि सिध्यतीति व्यर्थ एवायं विवाहसंस्कारः। दृश्यते हि पशुपक्ष्यादौ तादृशसंस्काराभावेऽपि स्त्रीपुंसयोर्मिथुनीभावः। तत्किमपराद्धं मानवेन। येन तादृशसस्कारो बहुव्ययायाससाध्योऽवश्यमेव कर्तव्य इति।

अत्रोच्यते—सत्यं किल पशुपक्ष्यादौ तथा प्रवृत्तिरालोच्यते। तत्किं मानवैरपि तथैव प्रवर्तितव्यमित्याशयः। ओमिति चेद्वक्तव्यं तर्हि पश्वादिदेहस्य मानवदेहस्य च विभिन्नतायाः प्रयोजनम्। ननु निसर्गस्य न प्रयोजनापेक्षा। निसर्गत्वादेवेति चेत्, न प्रयोजनापेक्षा इत्यस्य कोऽर्थः ? किं प्रयोजनमेव नास्ति, आहोस्वित्सदपि प्रयोजनं न निसर्गस्य प्रवृत्तिं प्रति कारणम्। नाऽऽद्यः। प्रयोजनस्य जगद्वैचित्र्यस्य प्रत्यक्षोपलम्भात्। अथ जायमानमपि जगद्वैचित्र्यं न निसर्गस्य प्रवृत्तिं प्रति कारणम्। निसर्गस्येच्छाराहित्यात्। प्रवृत्तिकारणं तु तदेव यदिच्छाविषयम्। न हि जलं द्रवमभिरुष्णः पृथिवी घनेति तेन तेन रूपेण तेषां कार्यकारित्वेऽपि तत्तत्कार्याणामिच्छा तत्तत्पदार्थोत्पादकस्य निसर्गस्य वर्तत इति केनापि प्रदर्शयितुं शक्यम्। प्रमाणाभावात्। न च कार्यान्यथानुपपत्त्या कारणत्वेन कल्प्यमानो निसर्गो यावत्कार्यकारित्वेनैव कल्पनीय इति वाच्यम्। यावदनुपपत्ति कल्प्यमानो निसर्गोऽनुपपन्नयावत्कार्यकार्यपि नेच्छावान् कल्पयितुं शक्यते। इच्छाया

तादृशकल्पनां विनाऽनुपपत्त्यभावात्। इति चेत्तर्हि जायमानानामिच्छादावकारणां किंमूलकत्व-मिति वक्तव्यम्। न हि त्वन्मते निसर्गादतिरिक्तं किमपि जगतः कारणम्। तथा च यदि न निसर्गमूलकत्वमभिप्रेतम्, तर्हि निर्मूलत्वमेव स्यात्। तथा चेच्छादिवदखिलस्य जगतो निर्मूलत्व भवतु। किं निसर्गस्य कारणत्वकल्पनया। ननु नेच्छादीनां निर्मूलत्वम्। मनोमूलत्वात्। तथा च मनस इच्छानिसर्गत्वेऽपि नेतरेषामिन्द्रियादीनां तादृशेच्छावत्त्वं संभवतीति तेषां प्रवृत्तिर्न प्रयोजनम-पेक्ष्यते इति चेद्वक्तव्यं तर्हि तेषामसंहत्यकार्यकारित्वम्। न च तदुपलभ्यते। संहत्यकार्यकारित्वस्य देहेन्द्रियादीनां सर्वत्रोपलम्भात्। ज्ञानेच्छाकृतीनां समानविषयकत्वेन कार्यकारणभावस्य नियमात्। नन्वेवं सुषुप्तिमूर्च्छापस्मारादिषु जायमानानां देहव्यापाराणामपि ज्ञानेच्छाकृतिमूलकत्वं दृष्टविरोधि कल्पनीयं स्यादिति चेत्; अत्रोच्यते—सुषुप्तेस्तावद्देहेन्द्रियाणां विश्रामरूपत्वेनेच्छाविषयत्वं त्वनुभव-सिद्धम्। तत्र शरीरगतवायुसंचारणवशात्तत्तदवयवानां सातत्येनैकावस्थायामवस्थाने क्लेशादेव शरीरावयवपरिवृत्तिः। तत्र क्लेशस्य ज्ञायमानस्यैव परिहार इति त्वकामेनापि अभ्युपगन्तव्यम्। तच्च ज्ञानं न सविकल्पमिति न जागृतावनुभवगोचरः। निर्विकल्पकज्ञानस्य तु नानुभवगोचरत्वम्। विशिष्टज्ञाने विशेषणज्ञानं संबन्धज्ञानं च कारणमिति कार्यकारणभावमूलकानुमानगम्यत्वात्तस्य। तथा च तादृशज्ञानमूलकेच्छाकृतीनामपि तत्रानुमेयत्वं सुवचम्। मूर्च्छादौ च स्वभावपरिपोषात्मक-जीवनावरोधात् जीवनेच्छायाः स्वाभाविकत्वाच्च तादृशावरोधनिराकरणमेव कृत्या साध्यते। ततश्च देहव्यापारसिद्धिः। तदेवं सर्वत्र प्रवृत्तौ ज्ञानेच्छाकृतीनां कारणत्वं सिध्यति। तथा च निसर्गस्यापि कार्योत्पादे ज्ञानेच्छाकृतीनामावश्यकता सिध्यति। यथा हि कश्चन चेतनः कर्ता कार्यसिद्धौ कारणानि फलं चापेक्ष्यते, तथैव हि निसर्गवादिनां मते सकलजगद्वैचित्र्यकार्यकर्तृत्वं निसर्गस्येति तेनापि ज्ञानेच्छाकृतिमता भाव्यम्। सोऽयं निसर्गः पदार्थगता काचनशक्तिर्वा पदार्थान्तरं वेत्यन्य-देतत्। कथमपि भवतु कार्यानुसारेण कल्पनीयस्य कारणस्य निसर्गस्य यावत्कार्यकारित्वं यथोपपन्नं स्यात्तथैव कल्पना विधेया। तथा च ज्ञानेच्छाकृतीनां देहधर्माणामपि निसर्गकार्यत्वस्य निसर्गवादिनां संमतत्वात्तदुपपत्त्यर्थमपि निसर्गस्य ज्ञानेच्छाकृतिमत्त्वमभ्युपगन्तव्यम्। अन्यथा तेषां कारणसंबन्धा-भावे निसर्गस्य तत्कारणीभूतस्य निसर्गत्वव्याकोपः। न हि निसर्ग इत्येतावता सिकताभ्योऽपि तैलं निष्पद्यमानं कुत्राप्युपलभ्यते। तिलेभ्य एव खलु तन्निष्पत्तिः। तत्रागत्या तैलानुकूलो निसर्गस्तिले-ष्वेवेति प्रतिपत्तव्यम्। एवं ज्ञानेच्छाकृतीनां देहधर्माणामनुकूलो निसर्गस्तावद्देहकारण एव वर्तत इत्यप्यायातम्। तथा च देहगतेतरवैचित्र्यमपि पूर्वोक्तदेहधर्मसंबद्धं संहत्यकार्यकारित्वादभ्युपेतव्यम्। न देहगतज्ञानेच्छाकृतीनां देहवैचित्र्यस्य च कारणीभूतो निसर्गो विभिन्न इति कोऽपि प्रेक्षावाना-चक्षीत। एकपिण्डसमानाधिकरणत्वात्। एवं च यदेव पिण्डस्य कारणं तदेव तेषामपीति देह-

प्रवृत्तिवत् तद्वैचित्र्यरचनाप्रवृत्तिरपि प्रयोजनमपेक्ष्यैव वक्तव्या । तथा च स्त्रीपुरुषदेहरचनाविशेषोऽपि निसर्गेण फलविशेषमपेक्ष्यैव विहित इति प्रतिपत्तव्यम् । रजोवीर्यादिधातुविशेषवत् । तथा च गर्भधारणरूपप्रयोजनस्यापि निसर्गाभिप्रेतत्वात्सुप्रजस्त्वसंपादनमपि विवाहस्य प्रयोजनं भवति । न तु कामपूर्तिमात्रम् । नपुंसकवन्ध्यादिषु कामिनां प्रवृत्तिस्तु कामातिरेकाज्जायमानापि न सा निसर्गविहिता । अत एव च निसर्गवादिभिरपि सा परिहरणीयैव ।

## ( विवाहप्रयोजकत्वविचारः )

तदेवं निसर्गपर्यालोचने स्त्रीपुंसयोरन्योन्यसंबन्धस्तावत्कामार्थः प्रजार्थश्चेत्युभयथापि संभवति । तत्र प्रजार्थं प्रवृत्तयोः स्त्रीपुंसयोः कामोपभोगो नान्तरीयकः । नैवं कामार्थप्रवृत्तयोः प्रजासंबन्धो नान्तरीयको भवति । वन्ध्ययोस्तयोः प्रजानुपलम्भात् । ननु तथाविधस्थले प्रजानुपलम्भेऽपि बहुशः कामप्रवृत्तानामेव प्रजोपलब्धिर्दृश्यत इति प्रजासंबन्धोऽपि नान्तरीयकः स्यादिति चेन्न । साध्यार्थं प्रवृत्तस्य हि साधनावश्यंभावो भवति । नैवं साधनार्थं प्रवृत्तस्य साध्यावश्यभावः । यदर्थं प्रवृत्तौ यस्यावश्यंभावस्तत्तस्य नान्तरीयकमिति नियमात् । एवं च न प्रजायाः कामोपभोगनान्तरीयकत्वम् । एतेन देवतातृप्तिदृष्टान्तः प्रत्याख्यातः । फलार्थं यागप्रवृत्तौ तदितिकर्तव्यतामध्यपतिता देवतातृप्तिर्भवतु नाम नान्तरीयकी । तामन्तरेण यागासिद्धेः । नैवं प्रजामन्तरेण कामोपभोगासिद्धिः । येन प्रजासंबन्धो नान्तरीयकतामावहेत्कामस्य । कामस्तु परं प्रजासंबन्धनान्तरीयकतामावहतीति सर्वेषामनुभवगोचरः । अतश्च न कामो विवाहप्रयोजकः । किंतु प्रजासंबन्ध एव विवाहप्रयोजक इति वक्तव्यम् । यत्र हि कर्मणः फलद्वयं संभवति । तत्र प्रयोज्यप्रयोजकभावविचारे यस्य नान्तरीयकत्वम्, न तत् प्रयोजकं भवति । वाक्यान्तरेण तथा बोधिते तु संयोगपृथक्त्वन्यायेनोभयार्थत्वादुभयमपि प्रयोजकं स्यात् । न च कामस्य कुत्रापि कथमपि विधानं संभवति । स्वाभाविकप्रवृत्तेर्विध्यनपेक्षणात् । यत्तु

> " यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् "

इत्यादीनि वाक्यानि, तानि तु प्रजार्थमूढानां स्त्रीणां रक्षणार्थमेव याथाकाम्यं विदधते । नैतावता तद्विवाहप्रयोजकं भवति । यथाहि

> " अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते " ( जै. सू. ४।१।११ )

इत्यत्र कपालस्य प्रयोजकं कर्म " कपालेषु पुरोडाशं श्रपयति " इति विहितं श्रपणमेव, न तु " पुरोडाशकपालेन तुषानुपवपति " इति विहितस्तुषोपवापः । पुरोडाशकपालेनेति प्रयोजनसंबन्धाभिधानात् । तथा यथाकामाभिगमनमपीदं

"स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः"

इत्युत्तरार्धेन विवाहसंबद्धस्त्रीवाचकदारपदनिर्देशेन विवाहितस्त्रीष्वेव नान्यत्रेति न तद्विवाह-प्रयोजकं भवितुमर्हति। एवं च सति चरौ पुरोडाशाभावे यदा तुषानुपवप्तुं कपालमुपादीयते न तत्पुरोडाशकपालं स्यात्। एवमेव यथाकामगमनार्थं या काऽपि योषिदुपादीयेत न सा दाराः स्यात्। दारशब्दोऽयं धर्मप्रजासंपत्त्यर्थमूढाया एव वाचको न यस्याः कस्या अपि। "दाराः स्यात्तु कुटुम्बिनी" इत्यमरात्। तथा मन्त्रवर्णोऽपि धर्मप्रजासंपत्त्यर्थमेव विवाह इत्यभिधत्ते।

सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्॥
गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथा सः
भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः॥

इति। अत्र च प्रथमे मन्त्रे इमां वधूं ददताऽग्निना मह्यं रयिश्च पुत्राश्च प्रदत्ता इति परस्पर-समीक्षणावसरे अग्निकृतोपकारस्मरणद्वाराऽग्निः प्रार्थ्यते। द्वितीये तु देवैर्गार्हपत्याय त्वं मे प्रदत्तेति ते पाणिं गृह्णामीति प्रतिजानीते वरः। अतश्च प्रथममन्त्रेऽपि चकाराद्धर्मादिग्रहणं युक्तमेव। व्याख्यातं च तथा जयरामभाष्ये। अत एव च "अथैनां वासः परिधापयति" इति वस्त्रपरिधापनावसरे वरस्याऽऽशीः—

"जरां गच्छ परिधत्स्व वासो भवाऽऽकृष्टीनामभिशस्तिपावा।
शतं च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वाऽऽयुष्मतीदं परिधत्स्व वासः"

इति। व्याख्यातश्चायं मन्त्रो जयराममिश्रैरित्थम्—"हे कन्ये त्वं जरां निर्दुष्टं वृद्धत्वं मया सह गच्छ प्राप्नुहि। वासश्च मया संपादितं परिधत्स्व परिधेहि। अभिशस्तिरभिशापः, शंसु प्रमादे तस्मात्पातीत्यभिशस्तिपावा भव। आकृष्यन्ते कामादिभिरित्याकृष्टयो मनुष्याः, तेषां मध्ये शतं च शरदो वर्षाणि जीव प्राणिहि। सुवर्चाः पातिव्रत्यतेजोयुक्ता भूत्वा रयिं च धनं पुत्रांश्च अनुसंव्ययस्व उत्पाद्य राशीकुरु। हे आयुष्मति इदं वासः परिधत्स्व" इति। अत्र च मन्त्रे आमरणसंबन्धः, पवित्रीकरणम्, दीर्घायुष्यम्, धनपुत्राद्यनुसंतानं चापेक्ष्यते वरेण। सेयमपेक्षा न स्त्रीदेहसंबन्धमात्रेण कथमपि सुपूरा भवितुमर्हतीति तदर्थमेव विवाहसंस्कार इति सिध्यति। एवं च नान्तरीयकतया इन्द्रियतृप्तिरूपकामसिद्धावपि न तन्मात्रस्य विवाहप्रयोजकत्वम्। किं तु प्रजासंपत्तेरेव तदिति सिद्धम्।

( कामशास्त्रदृष्ट्याऽपि प्रजाजननस्यैव )
( विवाहप्रयोजकत्वम् )

अत एव कामशास्त्रेऽपि प्रथमाधिकरणे चतुर्थाध्याये—

गृहीतविद्यः प्रतिग्रहजयक्रयनिर्वेशाधिगतैरर्थैरन्वयागतैरुभयैर्वा गार्हस्थ्यमधिगम्य नागरकवृत्तं वर्तेत ॥ १ ॥

इत्यत्र कामोपभोगार्थमपि गार्हस्थ्याधिगमोऽत्यावश्यक इत्युक्तम् । तथाविधकामस्यैव प्राशस्त्यात् । तदुक्तं पञ्चमाध्याये तत्रैव—

कामश्चतुर्षु वर्णेषु सवर्णतः शास्त्रतश्चानन्यपूर्वायां प्रयुज्यमानः पुत्रीयो यशस्यो लौकिकश्च भवति ॥ १ ॥

तद्विपरीत उत्तमवर्णासु परपरिगृहीतासु च प्रतिषिद्धः ॥ २ ॥

अवरवर्णास्वनिरवसितासु वेश्यासु पुनर्भूषु च न शिष्टो न प्रतिषिद्धः सुखार्थत्वात् ॥ ३ ॥

इति ॥ अनेन च सूत्रत्रयेण सवर्णायामनन्यपूर्वायामूढायां च नायिकायां प्रयुज्यमानस्य कामस्यैव प्राशस्त्यमिति सुविस्पष्टमेव प्रतिपाद्यते । पुत्रीयत्वात् । अर्थादेव संतानप्रजननमेव विवाहप्रयोजकमिति फलति । अत्र च स्पष्टप्रतिपत्त्यर्थं तद्व्याख्या यथा—

" गार्हस्थ्यमधिगम्येति ससहायस्योपक्रमा इति दूतानां संप्रेषणमित्युक्तम् । तत्र को नायकः कया नायिकया गार्हस्थ्यमधिगम्य नागरकवृत्तं वर्तेत ? कैश्च सहायैः ? किं च दूतस्य कर्मेति ? तेषां विमर्शो निरूपणमिति नायकसहायदूतकर्मविमर्श उच्यते । नायक इति " पुमान् स्त्रिया " १–२–६८ इत्येकशेषानिर्देशान्नायिकानायकयोरित्यर्थः । दूतकर्मेति दूत्या दूतस्य चेत्यर्थः । तत्र बहुवक्तव्यत्वात् प्राङ् नायिका फलतोऽन्यकारणतश्च विमृश्यते कामश्चतुर्ष्विति । सवर्णत इति यथा ब्राह्मणेन ब्राह्मण्याम्, यथा । च शूद्रेण शूद्रायाम् । शास्त्रत इति शास्त्रोक्तेन वरणादिना विवाहविधानेन । अनन्यपूर्वायां भार्यात्वेनाधिगतायां प्रयुज्यमानः प्रवर्त्यमानः पुत्रीयः, औरसस्य पुत्रस्य निमित्तम् " पुत्राच्छ च " ५।१।४० इति छप्रत्ययः । यथोक्तम्—

स्वक्षेत्रे संस्कृतायां तु सुतमुत्पादयेद्द्विजः
तमौरसं विजानीयात् पुत्रं प्राथमकल्पिकम् ॥

इति । तत्र स्वक्षेत्रं सवर्णः । यशस्यः यशोनिमित्तम् । गोव्यचः ( ५-१-४१ ) इत्यादिना यत् । अत्र च यद्यपि कामो न संयोगः । तथापि स्त्रीपुंसयोर्योगे कामशब्द उपचारितः तत्पूर्वकत्वात्कामस्येति भवति तात्पर्यः । लौकिकश्च लोके विदितस्तत्रबाध्य इत्यर्थः ।

( सू. २ ) उत्तमवर्णास्विति । क्षत्रियेण ब्राह्मण्यां वैश्येन ब्राह्मणीक्षत्रिययोः शूद्रेण ब्राह्मणीक्षत्रियवैश्यास्वनन्यपूर्वास्वपि प्रयुज्यमानः परपरिगृहीतासु चान्योढासु सवर्णास्वपि कामो विपरीत न पुत्रीयः, न यशस्यः, न लौकिकश्च । एवंविधः प्रतिषिद्धः सुखार्थोऽपि न परपरिगृहीतासु एकान्तेन धर्मविरोधित्वात् ॥२॥

( सू. ३ ) अवरवर्णास्विति । ब्राह्मणस्यावरवर्णाः क्षत्रियावश्याशूद्राः, क्षत्रियस्य वश्याशूद्रे, वैश्यस्य शूद्रा । शूद्र एकजातिः । तस्य स्वजात्यपेक्षयाऽवरवर्णाः, तत्रापि यथनिरवसितः पात्राद्बहिष्कृता इत्यर्थः । सन्त्येव हि काश्चित् क्षत्रियादयो याभिर्भुक्तं पात्रं न संस्कारमात्रेण शुध्यति। ता एवंविधा बाह्याः । तथा चोक्तम्—

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते ।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥

इति । तासु च बाह्यास्वपि । पुनर्भूष्विति । या अन्यपूर्वाः क्षतयोनयो विधवा इन्द्रियदौर्बल्यादन्यस्य पुनर्भवन्ति तासु स्वीकृतासु, वेश्यासु च सामान्यस्त्रीषु प्रयुज्यमानो न शिष्टो न विहितः । तत्र सवर्णामपरिगृह्य तत्परिग्रहस्यानभिहितत्वात् । परिगृह्यापि न प्रतिषिद्धः सुखार्थत्वात् । तदानीं सुखार्थैव प्रवृत्तिर्न पुत्रार्था । तत्रावरवर्णासूढासु ये पुत्राः, न तेषामौरसत्वम् । पुत्रकार्याकरणात् । पुनर्भूषु वेश्यासु च पुत्राशैव नास्तीति द्विविधं फलम् ॥३॥

तत्र नायिकास्तिस्रः कन्या पुनर्भूर्वेश्या च ॥ ४ ॥

तत्र तस्मिन् फलविभागे तिस्रो नायिकाः कन्या पुनर्भूर्वेश्या चेति । तत्र कन्या द्विविधा पुत्रफला सुखफला चेति । पूर्वा सवर्णा श्रेष्ठा । द्वितीयाऽधमवर्णा न्यूना । तस्या अपि न्यूना पुनर्भूः स्वीकारेऽप्यन्यपूर्वत्वात् । अस्या वृत्तं भार्याधिकारिके वक्ष्यते । या त्वक्षतयोनिः पुनरुह्यते सा कन्यैव । यथोक्तम्—

पुनरक्षतयोनित्वादुह्यते या यथाविधि
सा पुनर्भूः सुतस्तस्यां पौनर्भव उदाहृतः ॥

ततोऽपि वेश्या न्यूना सामान्यत्वात् ॥ इति ॥

अनेन च वात्स्यायनकामसूत्रभाष्येण स्पष्टमिदं प्रतीयते यन्न केवलं स्त्रीपुरुषदेहयोः संबन्धमात्रेणैव यथावत्कामसुखमधिगन्तुं शक्यमिति । अनुपस्कृतरतिमूलत्वात्तस्य । सा चानुपस्कृता रतिर्यथा विवाहसंस्कारेण कन्यास्वनन्यपूर्वासु उपजायते न तथा परपूर्वासु वेश्यासु वेति । तत्रापि रतेराभिमानिकत्वात्स्वत्वेनैव तादृशरतेरुत्पादाच्च तदर्थमपि विवाहापेक्षा भवितुमर्हति । एवमपि राजशासनादिना तादृशस्वत्वसिद्धावपि प्रजाफलसमृद्धये विवाहसंस्कारस्यापेक्षा तदवस्थैव । तं विना सुप्रजस्त्वाभावात् । एवं चान्ततो गत्वा प्रजाफलमेव विवाहप्रयोजकं भवतीति सिध्यति । अत एव च कन्यासंप्रयुक्तकाधिकरणे प्रथमत एव वरणसंविधानकं नाम प्रकरणमुपनिबद्धं कामशास्त्रे। अन्यथा पुनर्भूवेश्ययोरिव कन्याया अपि संप्रयोगविधानमेवोपनिबध्नीयाच्छास्त्रकारः । नहि कन्या-

लाभो वरणमन्तरा नैव भवितुमर्हतीति सुवचम्। पुनर्भूवेश्ययोरिव दूतकर्मणा तल्लाभस्य संभवात्। एवं वरणमेव तल्लाभार्थं श्रेय इति सिध्यति। तदत्र स्पष्टप्रतिपत्तये तदुदाह्रियते यथा—

" चतुःषष्टिविचक्षणः कन्याभिर्भावितो वीक्ष्यमाणोऽपि न समागमं विना संप्रयुज्यत इति। तत्समागमोपाय आवाप उच्यते। समन्तादावाप्यन्ते स्त्रियोऽनेनेति। तत्र कन्यायाः प्रधानत्वात्कन्यावं प्रयुक्तकमुच्यते। तत्रोद्वाहा अष्टौ विवाहाः, ब्राह्मः प्राजापत्य आर्षो दैवो गान्धर्व आसुरः पैशाचो राक्षस इति। तत्र पूर्वे चत्वारो धर्म्या इति तदर्थं वरणसंविधानं प्रकरणमुच्यते।.किमर्थमेवमनुष्ठीयते इति चेदाह—

सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः पुत्राः संबन्धः पक्षवृद्धिरनुपस्कृता रतिश्च ॥ १ ॥

सवर्णायामिति। ब्राह्मणादीनां यथास्वं सवर्णायाम्। अनन्यपूर्वायामिति। मनसा कर्मणा वचसा वाऽन्यस्मै या न दत्ता। तत्र प्रगुणमपत्यं तदस्यैवेति स्मृत्यर्थः। शास्त्रात इति। शास्त्रोक्तेन वरणपूर्वेण परिणयविधिनाऽधिगतायां स्वीकृतायां सत्यां धर्मः पत्नीसंयोगाख्यो रत्यादिप्रवर्तनं च, अर्थो पौरुषफलाभात् गार्हस्थ्यानुष्ठानाच्च। पुत्रा दृष्टादृष्टार्थाः, संबन्धः सहकभोजनादिहेतुः पक्षवृद्धिरिति स्वपक्षस्य वृद्धिः पक्षान्तरलाभात्, अनुपस्कृता रतिरकृत्रिमा विश्वासातिशय योगात् ॥१॥ इति।

उपायवैलक्षण्यं सर्गात् कर्ता हि पुरुषोऽधिकरणं युवतिः ॥
अन्यथा हि कर्ता क्रियां प्रतिपद्यतेऽन्यथाचाऽऽधारः ॥
तस्माच्चोपायवैलक्षण्यात्सर्गादभिमानवैलक्षण्यमपि ॥
अभियोक्ताऽहमिति पुरुषोऽनुरज्यते अभियुक्ताऽहमनेनेति युवतिरिति वात्स्यायनः ॥ २।१ । ४६–४८

इति । एवं च अहमेनां रन्तुमनुयुञ्ज इति कर्तृव्यापारापेक्षया पुरुषस्याभिमानः । अहमनेनाभियुक्ता रन्तुमिति चाऽऽधारव्यापारापेक्षया युवतेराभिमानः । तादृशाभिमानजन्यमेव कामसुखं द्वयोरित्यर्थः । अत एव तदाभिमानिकम् । उत्सर्गश्चायं स्त्रीपुंसयोः । तथा चाऽऽधाराभिमानित्वं स्त्रीदेहे गर्भाशयाद्यवयवसृष्टेरेव । एवं च कदाचिद्गर्भधारणे पालनपोषणादिजीवनव्यापारनिर्वाहार्थमयं संबन्धोऽविनश्वर एवाभ्युपेतव्यः । तथाविधप्रीतिपरीक्षा हि नान्यथा भवितुमर्हतीति वरणसंविधानम् । अत एव वात्स्यायनोऽपि प्रीतिप्रकारानुपदिश्य प्रीत्यनुसारेण वर्तनीयमित्यन्त उपदिशति । तद्यथा—

अभ्यासादभिमानाच्च तथा संप्रत्ययादपि
विषयेभ्यश्च तन्त्रज्ञाः प्रीतिमाहुश्चतुर्विधाम् ॥ १ ॥
शब्दादिभ्यो बहिर्भूता या कर्माभ्यासलक्षणा
प्रीतिः साऽऽभ्यासिकी ज्ञेया मृगयादिषु कर्मसु ॥ २ ॥
अनभ्यस्तेष्वपि पुरा कर्मस्वविषयात्मिका
संकल्पाज्जायते प्रीतिर्या सा स्यादाभिमानिकी ॥ ३ ॥
प्रकृतेर्या तृतीयस्याः स्त्रियाश्चैवोपरिष्टिके
तेषु तेषु च विज्ञेया चुम्बनादिषु कर्मसु ॥ ४ ॥
नान्योऽयमिति यत्र स्यादन्यस्मिन् प्रीतिकारणे
तन्त्रज्ञैः कथ्यते सापि प्रीतिः संप्रत्ययात्मिका ॥ ५ ॥
प्रत्यक्षा लोकतः सिद्धा या प्रीतिर्विषयात्मिका
प्रधानफलवत्त्वात्सा तदर्थाश्चेतरा अपि ॥ ६ ॥
प्रीतीरेताः परामृश्य शास्त्रतः शास्त्रलक्षणाः
यो यथा वर्तते भावस्तं तथैव प्रयोजयेत् ॥ ७ ॥ इति ॥

भावप्रकाशने तु सप्तधा भेदः परिकीर्तितः । यथा—

मनोऽनुकूलेष्वर्थेषु सुखसंवेदनात्मिका
इच्छा रतिः सा द्विधा स्याद्रतिप्रीतिविभागतः ॥

तयोः साधारणो भेदः सप्तधा परिकीर्तितः
निसर्गसंसर्गोपमाभियोगाध्यात्मस्वरूपतः ॥
अभिमानाच्च विषयात्सप्तधा सांप्रयोगिकी
रतिरेव भवेत्प्रीतिरेवमाभ्यसिकी भवेत् ॥ इति ॥

एवं च स्त्रीपुंसयोर्विशिष्टकाले या किलान्योन्यदेहसंबन्धेच्छा, सैव सूक्ष्मा रतिः । तस्याश्चाभ्यासादिना प्रीतिस्वरूपापत्तावेव स्थैर्यमिति तदर्थं प्रयत्नश्चेद्विधातव्यः समाजदृष्ट्या, तर्हि तु कन्यावस्थायां बाल्यादारभ्यैवेति कन्यासंवरणमत्यावश्यकम् । निसर्गदृष्ट्या पर्यालोच्यमाने तु गर्भधारणादिकार्यानुकूलत्वात्स्त्रीदेहस्य परायत्तत्वेन तत्संबन्धस्य स्थिरत्वमत्यावश्यकमेव । इत एव च संघप्रवृत्तिः समाजप्रवृत्तिश्च । ततश्च समानाहारविहारकर्मणोः स्त्रीपुंसदेहयोरेव संबन्धोऽभ्यासात्कर्मणोऽभिमानान्निसर्गतो विषयतश्च विद्यमानः संप्रयोगेण स्थेमानमप्यालम्बत इति सिध्य । सोऽयं स्थिरसंबन्धो जीवनार्थं धर्मार्थपक्षवृद्ध्यादीनुपयुक्तानपि पुष्णातीति सिध्यति ।

एवं च बुद्धितारतम्यवशात्कर्मतारतम्यम् । ततश्च प्रीतिवैचित्र्यम् । तदत्र बुद्धिकर्मणोरेकरूपत्वं स्त्रीपुंसयोरपेक्षितं स्यात् प्रीतेः समानरूपत्वाय । तच्च परम्परागतबीजरक्तप्रभावादेव संभवतीति समानवर्णत्वमपि तदर्थमत्यावश्यकम् । अन्यथा त्वनुपस्कृतरतेरलाभ एव । अत एवोक्तं कामशास्त्रे तत्रैव प्रकरणे—

समस्याद्याः सहक्रीडा विवाहः संगतानि च ।
तादृशैरेव कार्याणि नोत्तमैर्नापि वाऽधमैः ॥ १ ॥
कन्यां गृहीत्वा वर्तेत प्रेष्यवद्यत्र नायकः ।
तं विद्यादुच्चसंबन्धं परित्यक्तं मनीषिभिः ॥ २ ॥
स्वामिवद्विचरेद्यत्र बान्धवैः स्वैः पुरस्कृतः ।
अश्लाघ्यो हीनसंबन्धः सोऽपि सद्भिर्विनिन्द्यते ॥ ३ ॥
परस्परसुखास्वादा क्रीडा यत्र प्रयुज्यते ।
विशेषयन्ती चान्योन्यं संबन्धः स विधीयते ॥ ४ ॥
कृत्वापि चोच्चसंबन्धं पश्चाज्ज्ञातिषु संनमेत् ।
नत्वेव हीनसंबन्धं कुर्यात्सद्भिर्विनिन्दितम् ॥ ५ ॥

इति । धर्मशास्त्रेऽपि

ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः ।
तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् । इति

एतेन— कामस्याऽऽलिङ्गनदन्तक्षतादिक्रियासहकारित्वेन स्वयं प्रीतिरूपस्यापि अपूर्वरसरूपत्वापत्तावपि गर्भाशयाद्यवयवसार्थकत्वाय स्त्रीदेहस्य सुप्रजस्त्वफलसंपत्तये चिरकालस्थायिरूपत्वेन पर्यवसानं कामशास्त्रस्याप्यभिमतमिति सिध्यति। युक्तं चैतत्। अन्यथा गर्भाशयाद्यवयवविशिष्टस्त्रीदेहस्य तादृशावयवमूलकनैसर्गिकाधिकरणत्वाभिमानस्यानुपपत्तेः। एवं च स्त्रीदेहे यथावत्कामसंपत्तिस्तावद्गर्भग्रहणमन्तरा नैव भवितुमर्हतीति सुप्रजस्त्वमेव कामस्य फलं पर्यवस्यतीति तदेव विवाहप्रयोजकं सिध्यति। अत एवान्यासां नायिकाना कामशास्त्रेऽपि निषेधः सूपपद्यते। तदुक्तम्—

अन्यकारणवशात्परपरिगृहीतापि पाक्षिकी चतुर्थीति गोणिकापुत्रः ॥१।५।५

स यदा मन्यते स्वैरिणीयमन्यतोऽपि बहुशो व्यवसितचारित्रा, तस्यां वेश्यायामिव गमनमुत्तमवर्णिन्यामपि न धर्मपीडां करिष्यति ॥१।५।६

पुनर्भूरियमन्यपूर्वावरुद्धा नात्र शङ्काऽस्ति॥ १।५।७॥

इति॥ एतेन कन्यातिरिक्तनायिकास्वभिगमनमिदं कामशास्त्रेणाप्यन्यकारणवशादेवाभ्यनुज्ञायते न प्रजार्थं वा सुखार्थमिति। अतएवोक्तम्—

विशुद्धिं विषयस्याऽऽदौ करणानि च तत्त्वतः।
प्रसमीक्ष्य प्रवर्तेत परस्त्रीषु न भावतः॥ इति॥

तानि च कारणान्यनुपदमेव प्रदर्शितानि तत्रैव। तथाहि—

पतिं वा महान्तमीश्वरमस्मदमित्रसंसृष्टमियमवगृह्य प्रभुत्वेन चरति, सा मया संसृष्टा स्नेहादेनं व्यावर्तयिष्यति॥ १।५।८।

विरसं वा मयि शक्तमपकर्तुकामं च प्रकृतिमापादयिष्यति॥ १।५।९।

तया वा मित्रीकृतेन मित्रकार्यममित्रप्रतिघातमन्यद्वा दुष्प्रतिपादकं कार्यं साधयिष्यामि॥१।५।१०॥

इत्यादि विंशतितमसूत्रपर्यन्तं कारणान्तराणि प्रतिपाद्यान्ते उपसंहृतम्—

इति साहसिक्यम्, न केवलं रागादेवेति परपरिग्रहगमनकारणानि ॥१।५।२१।

इति॥

एतेन परपरिग्रहगमनं वा वेश्यागमनं वा न रागात्कर्तव्यम्, किंतु कारणान्तरवशादेव साहसिक्यादिति वदता कामशास्त्रेण स्पष्टमिदं प्रतिपाद्यते यत्कामोऽयं भार्यास्वेव प्रतिष्ठितो यथावत्कामसुखं जनयति धर्ममर्थं पुत्रान् संबन्धं पक्षवृद्धिं चेति। तथा च समाजव्यवस्था निसर्गश्चानुगृहीतो भवति। अत एव धर्मशास्त्रे प्रजोत्पादनविधिः—

"आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" इति ॥ तै. उप०

अन्यानि च विवाहविधिवाक्यान्येतद्वेदवचनमूलान्येव ।

यत्तु "कोऽदात् कस्मा अदात् कामोऽदात् कामायादात् । कामो दाता कामः प्रतिग्रहीता कौमतत्त्वे" "गृभ्णामि ते सौभगत्वाय हस्तम्" इत्यादीनि कामस्तुतिपराणि मन्त्रलिङ्गानि, तानि तु नान्तरीयकत्वात्कामस्य स्तावकानि न विवाहस्य कामप्रयोज्यत्वं बोधयितुमलमिति न कामार्थं विवाहः । अन्तिमफलस्य सुप्रजस्त्वस्यैव फलत्वेन तद्बोधकानेकविवाहमन्त्रवर्णैस्तदेकवाक्यत्वात् । नहि काममन्तरा प्रजोत्पत्तिः । तदुक्तं कामशास्त्रे—

न ह्यसत्यां भावप्राप्तौ गर्भसंभव इति बाभ्रवीयाः ॥ २।२।३४॥ इति चरकसंहितायामपि ।
निष्ठीविका गौरवमङ्गसादस्तन्द्रा प्रहर्षो हृदयव्यथा च तृप्तिश्च बीजग्रहणं स्वयोन्यां गर्भस्य सद्योऽनुगतस्य लिङ्गम् ॥ इति ॥

अनेन च गर्भधारणायां तृप्तेरवश्यंभाव इति सिध्यति । सैव च तृप्तिः कामसुखमिति जेगीयते । नैतावता तृप्तावश्यमेव गर्भधारणेति न गर्भधारणा तृप्तेर्नान्तरीयिका । तृप्तिश्च विरामाभीप्सा । सा च धातुक्षयादेव । तदुक्तं कामशास्त्रे—

धातुक्षयाच्च विरामाभीप्सेति ॥२।२।३९
सुरतान्ते सुखं पुंसां स्त्रीणां तु सततं सुखम् ।
धातुक्षयनिमित्ता च विरामेच्छोपजायते ॥ २।२।४१

इति । अत्र धातुश्च नाऽऽर्तवम् । मज्जापरिणामस्य तस्याऽऽर्तवातिरिक्तत्वात् । एवं च गर्भधारणायां तृप्तेरवश्यंभाव्यत्वमिव तृप्तौ गर्भधारणायां नावश्यंभाव्यत्वम् । अत एव स्त्रीपुंसयोर्युगपद्धातुक्षरणद्वाराऽत्युत्कृष्टरतिसुखार्थं सदृशसंप्रयोग एव श्रेयानिति कामशास्त्रोक्तिः संगच्छते । अत एवोच्चनीचसमत्वेन रतानां भेदान् प्रतिपाद्य "तेषु समानि श्रेष्ठानि" (का. सू. २।१।१) इति समरतस्य श्रेष्ठत्वमभिधाय तत्सिद्धये स्त्रियाः प्रथमतो रत्युत्पादनार्थमुपचर्यत्वमभिहितं संगच्छते । तदुक्तम्—

जातेरभेदाद्दंपत्योः सदृशं सुखमिष्यते ।
तस्माच्चयोपचर्या स्त्री यथाग्रे प्राप्नुयाद्रतिम् ॥ ६२

एवं च रत्यतिरेकादुभयोर्युगपद्धात्वार्तवक्षरणे गर्भधारणा सिध्यतीति सुप्रजाजननमेव कामशास्त्रस्यापि परमं प्रयोजनमिति सिद्धान्तः सिध्यति । तथा च न विवाहप्रयोजकत्वं कामस्य, अपि तु सुप्रजाजननस्यैव । तदेवं कामस्य धर्मानुबन्धः, धर्मस्य च कामानुबन्धश्च सिध्यति । न च दास-

रोपमर्दोऽपि । एवं च सुप्रजाजननं मनुष्याणां धर्मस्तदुपयुक्तो विवाहश्चापि । पशूनां तु कामो धर्मो न विवाह इति ।

एतत्सर्वमभिप्रेत्यैवोक्तं मनुना—

देवदत्तां पतिर्भार्यां विन्दते नेच्छयाऽऽत्मनः ।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥ ९।९५
प्रजनार्थं स्त्रियः सृष्टाः संतानार्थं च मानवाः ।
तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥९।९६ इति।

( विवाहे धर्मस्याऽऽवश्यकता )

पाश्चात्या अपि समाजपरीक्षकाः प्रेक्षावन्तः वेस्टरमार्क्, हॅवलॉक एलिस्, जेरेमी बेथॅम् प्रभृतयः सुप्रजाजननमेव विवाहस्य परमं प्रयोजनमिति सिद्धान्तयन्ति । तच्चानुपरक्तरतिमन्तरा न संभवतीति तादृशरत्युत्पादनं परमावश्यकमिति मन्यन्ते । तच्च स्त्रीपुरुषयोरन्योन्यव्यवहाराधीनमिति प्रेमासक्तजायापतिभ्यां तादृशप्रेम्णः स्थेमा यथा संपन्नः स्यात्तथा प्रयतनीयमिति तेषामभिप्रायः । इदमत्राऽऽलोचनीयम् । यदयं प्रेमस्थेमा लौकिकव्यापारेण सुसंपादो न वेति । तत्र रत्युत्पत्ति-स्तावन्नैसर्गिकी लौकिकव्यापारेणाभ्यासादिना च स्थेमानमादधातीति कामशास्त्रस्य पाश्चात्यानां च तदनुसारिणामभिसंधिः । अत एव कामशास्त्रे कन्यासवरणाधिकरणे कन्याविस्रम्भकप्रकरणे—

कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः, तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः संप्रयोगद्वेषिण्यो भवन्ति तस्मात्साम्नैवोपचरेत् ॥३।२।६

युक्त्यापि तु यतः प्रसरमुपलभेत तेनैवानुप्रविशेत् ॥३।२।७ इत्युपक्रम्य—

एवं चित्तानुगो बालामुपायेन प्रसाधयेत् ।
तथा च साऽनुरक्ता च सुविस्रम्भा प्रजायते ॥३९॥
नात्यन्तमानुलोम्येन न चातिप्रातिलोम्यतः ।
सिद्धिं गच्छति कन्यासु तस्मान्मध्येन साधयेत् ॥४०॥
आत्मनः प्रीतिजननं योषितां मानवर्धनम् ।
कन्याविस्रम्भणं वेत्ति यः स तासां प्रियो भवेत् ॥४१॥
अतिलज्जान्वितेत्येवं यस्तु कन्यामुपेक्षते ।
सोऽनभिप्रायवेदी च पशुवत्परिभूयते ॥४२॥

सहसा वाप्युपक्रान्ता कन्याचित्तमविन्दता ।
भयं वित्रासमुद्वेगं सद्यो द्वेषं च गच्छति ॥४३॥
सा प्रीतियोगमप्राप्ता तेनोद्वेगेन दूषिता ।
पुरुषद्वेषिणी वा स्याद्विद्विष्टा वा ततोऽन्यगा ॥४४॥

इत्यन्ते उपसंहृतम् । मनुरप्येवमाह—

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥९।१०॥
अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे ॥९।११॥
अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् ।
विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे ॥ ९।१२

इति । अत्रायं कामशास्त्रस्य मनोश्च विशेषो यत्कामशास्त्रं विस्रम्भणोपायत्वेन प्रीतिकरमेवानुशास्ति संप्रयोगोपयुक्तम् । मनुश्च धर्ममपि व्यवहारोपयुक्तं कर्तव्यतयेति । तत्र संप्रयोगोपयोगिनां प्रीतिकराणामनुष्ठाने स्वाभाविकरतेः स्थिरीकरणं यथा भवति, न तथा धर्मानुष्ठाननियोगे । तत्र किं वा श्रेयस्करमिति तु पश्चात्पर्यालोचयिष्यते । कथमपि रतिस्थेमार्थं लौकिकोपायानुष्ठाने तु नैव मनोरपि विप्रतिपत्तिः । अत एवार्थस्याऽऽयव्ययनिरीक्षणं भार्यायत्तं कर्तव्यमिति मनुनाऽभिहितम् । भोग्यत्वादर्थसंपत्तेस्तदायत्तीकरणे सर्वेष्वपि भोगेषु भार्यायत्तत्वं पुरुषस्य सिध्यतीति स्वाधीनभर्तृकत्वेन तासां प्रीतिरपि स्थेमानमादधातीति मनोरभिप्रायः । एवमपि मनसश्चाञ्चल्यात्कदाचित् संप्रयोगकाले पुरुषात्तृप्तेरलाभे हि तासां विरागः संभवतीति नैतद्रक्षणं सुरक्षणमिति स्वात्मनैव स्वात्मा रक्षणीय इत्यन्ते सिध्यति । अत एव मनुनाऽभिहितम्—

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ।
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥९।१२
नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः ।
सुरूपं वा कुरूपं वा पुमानित्येव भुञ्जते ॥९।१४
पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः ।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥९।१५
एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति ॥९।१६

इति । अनेन च स्पष्टमिदमवगम्यते यल्लौकिकैरुपायैः स्त्रीणां रक्षणं कथमपि न संभवतीति तदर्थं परमयत्नः पुरुषेणापि कर्तव्यो भवति । तत्कोऽयं प्रयत्न इति प्रश्ने इदमेवोच्चारपथमायाति यत्स्त्रीपुरुषयोरुभयोरप्यव्यभिचरितत्वम् । व्यभिचारश्च मानसो धर्मः, व्यक्त्यन्तररतिरूपत्वात् । तस्मान्मनसः स्थैर्यमेवाऽऽदौ उभाभ्यां संपादनीयम् । तच्च न विषयसापेक्षं कदाचित्संभवति । विषयाणां परिणामित्वेन वैरस्यावहत्वात् । भोगमनुविवर्धन्ते हि रागाः । भोगानां चास्थिरत्वे रागस्याप्यस्थिरत्वमिति न भोगोपादानमेकान्तेन रागस्थैर्ये हेतुः । अतश्च भोगत्याग एव तत्राऽऽवश्यकः ।

तथा च निरतिशयरागस्थेमार्थं दम्पत्योरुभयोरपि अन्योन्यभोगदानस्पर्धा समुत्पादनीया । नतु भोगग्रहणस्पर्धा । अतश्च स्वीयभोगत्याग एव पर्यवसानम् । त्यागश्च धर्मतत्त्वमित्युपपादितं प्रागेव । एवं च धर्म एव रागस्थैर्यनिदानमित्येव धर्मनियोगो मनुनोपदिष्टो रागस्थेमार्थम् । स चायं पुरुषस्याप्यावश्यक इति तदर्थं धर्मविवाहपद्धतिरपेक्षिता भवति । तत्सिद्धं सुप्रजस्त्वमेव धर्मविवाहप्रयोजकम् ॥

इदं सर्वं कन्यासंवरणानन्तरं प्रेम्णः स्थिरीकरणार्थम् । सवरणात्प्राक् कन्यालाभार्थं नैसर्गिकरतिसमुत्पादस्तु पुरुषेण कथं कर्तव्य इत्यत्र विषयेऽपि तत्रैव बालोपक्रमप्रकरणे कामशास्त्रे उपदिष्टम् । तदप्यत्राऽऽलोचनीयम् । येनाऽऽधुनिकप्रीतिविवाहवादिनां मतस्य युक्तायुक्तत्वं सेत्स्यतीति तदपि किंचिद्विचार्यते । तद्यथा—

## ( प्रीतिविवाहपर्यालोचनम् )

प्रीतिविवाहवादिनाऽपीदं तावदवश्यमेवाभ्युपगन्तव्यम् । यत्प्रेमस्थेमा कथं भविष्यतीति । किंच प्रीतिविवाहानन्तरं जायमानस्य संतति—सबन्ध—पक्षवृध्यादेः स्वरूपमपि कथं सिध्यतीति। यद्यपि प्रीतिविवाहे कामस्यैव प्राधान्यम्, तथाप्यानुषङ्गिकत्वेन निष्पद्यमानानां संतत्यादीनामपि विचारविषयता कथंतावत्परिहरणीया इत्यालोचयन्तु समाजशास्त्रविचारका राष्ट्रोद्धारबद्धपरिकराश्च राजनीतिधुरीणाः । तथा च राष्ट्रोद्धारार्थं समाजसुस्थितये च सर्वथा सुखरूपोऽप्ययं कामो न निर्गलप्रचारार्ह इति सिध्यति । निसर्गतः समुत्पद्यमाना ह्याकाङ्क्षा समाजेन परिपूरणीयेति सामान्यतः सिद्धेऽपि सिद्धान्ते उत्पत्तिकालीन एव निसर्गः परिग्रहीतव्यः, नोत्तरकालीन इति क्वापि राजाज्ञास्ति । तथा च समुत्पद्यमानस्य जन्तोरुत्पत्तिकाले स्वशरीरे स्वत्वाभिनिवेशो यथा, तथैव कुले जातौ ग्रामे देशे राष्ट्रे च तदनु समुपजायमानः स्वत्वाभिनिवेशोऽपि परिपालनीयो न वेति विचारणायां सर्वेषां स्वत्वाभिनिवेशत्वाविशेषात्परिपालनीयत्वमेवान्योन्याविरोधेनेत्येवोत्सर्गः समाजशास्त्रदृष्ट्या औत्सर्गिकत्वादभिनिवेशानां न कस्यापि हान भवितुमर्हतीति सिध्यति । तथा च व्यव-

सायपरत्वेन कुलभेदे तदानुपङ्क्तिकाहारादिभेदे च तादृशभिन्नकुलयोर्यौनसंबन्धे हि दम्पत्योरुभयोरप्युभयकुलविच्छेदः स्यात्प्रीतिविवाहे। तथा च समाजसंघटनार्थं प्रवृत्तैस्तद्विघटनोपायालम्बनमेवेदानीं क्रियत इत्यगत्या वक्तव्यं भवति।

न हि " यस्यां मनश्चक्षुषोर्निबन्धनं तस्यामृद्धिर्नेतरामाद्रियेतेत्येके " ( ३। १। १४ का. सू. )

इति कामशास्त्रीयवचनानुसारेण वा " यस्यां मनश्चक्षुषोः प्रीतिस्तामुद्वहेत् " इति गोभिलीयस्मार्तवचनानुसारेण वा बाह्यसौन्दर्यलावण्यादिकमवलोक्य जायमाना प्रीतिर्विवाहप्रयोजिका भवितु मर्हति। विवाहानन्तरमुपजायमानानां संतति—संबन्ध—पक्षवृध्यादीनां कदाचिदुपघातसंभवात्। अनुपघातनिश्चये तु तादृशप्रीतिरपि विवाहप्रयोजिकेत्येव किल वक्तव्यं स्यात्प्रीतिविवाहपक्षपातिभिः। तावेतौ संतत्यादीनामुपघातानुपघातौ धर्मशास्त्रदृष्ट्या समाजशास्त्रदृष्ट्या च पर्यालोचनीयौ। न तु यथाकथंचिदपि। तथा सति समष्टिसंरक्षणापेक्षया व्यक्तिसुखस्यैव प्राधान्यमापद्येत। तथा च पशुतावादापत्तिः। न हि पशूनां कुलजातिग्रामाद्यभिनिवेश इति ते स्वीयेन्द्रियसुखार्थमेव प्रवर्तन्ते तन्मात्रे च तुष्यन्तीति मनुष्येणाप्येतावतैव तोष्टव्यम्। औत्सर्गिकतादृशाभिनिवेशोपघातात्। तस्मात्प्रीतिविवाहवादिनाऽप्येतत्सर्वं पर्यालोचनीयमेव। अत एव कामशास्त्रे एतत्सर्वमभिप्रेत्येव बालोपक्रमप्रकरणे कन्या कथं साधनीयोद्वाहार्थमिति विस्तरेण विचारितम्। स्पष्टप्रतिपत्तये किंचिदुपस्थापयामः। तद्यथा—

" धनहीनस्तु गुणयुक्तोऽपि, मध्यस्थगुणो हीनापदेशो वा, सधनो वा प्रातिवेश्यो मातापिताभ्रातृषु च परतन्त्रो बालवृत्तिरुचितप्रवेशो वा कन्यामलभ्यत्वान्न वरयेत् ॥ १ ॥ बाल्यात्प्रभृति चैनां स्वयमेवानुरञ्जयेत् ॥ २ ॥ तथायुक्तश्च मातुलकुलानुवर्ती दक्षिणापथे बाल एव मात्रा च वियुक्तः परिभूतकल्पो धनोत्कर्षादलभ्यां मातुलदुहितरमन्यस्मै वा पूर्वदत्तां साधयेत् ॥ ३ ॥ अन्यामपि बाह्यां स्पृहयेत्, बालायामेव सति धर्माधिगमे संवननं श्लाघ्यमिति घोटकमुखः ॥ ४ ॥

अत्र च संवननं वशीकरणम्। तत्र धर्माधिगमे श्लाघ्यामिति वदता प्रीतिविवाहोऽयं गान्धर्वविवाहापरनामधेयः सति धर्मानुपघाते कर्तव्य इति स्पष्टमेवाभिमतम्। यद्यपीदं घोटकमुखाचार्यमतं तथाऽप्यप्रतिषिद्धं परमतमनुमतमेवेति न्यायेन वात्स्यायनस्यापि संमतमेव। तथा च घोटकमुखग्रहणं पूजार्थमेव। स चायं प्रीतिविवाहः गुणयुक्तेनापि धनहीनेन, मध्यस्थगुणेनापि हीनापदेशेन, सधनेनापि प्रातिवेश्येन, बालवृत्तिना निरयमुचितप्रवेशेनानुष्ठा[illegible] न शास्त्र इति सुविस्पष्टमभिदधता वात्स्यायनेन जातिकुलगुणधनादिसाम्यमेवाभिप्रेतम् इति गम्यते। तथा च धर्माधिगमः सिध्यति। अन्य-

थाहि विसदृशसंबन्धे प्रीतेः स्थायित्वासंभवेन धर्म-प्रजा-जाति-कुलादीनां विनाश एव संपद्यते। न हि ब्राह्मणेनोढा चाण्डालकन्या पितृगृहे तेन सह कदापि गन्तुमिच्छेत् न वा वरस्य पितृगृहे इति संबन्धविच्छेदे पक्षविच्छेदे च को वा समाजस्य गुणः संपादितः स्यादेतादृशेन प्रीतिविवाहेनेति त एव जानीयुः। तस्मात्प्रीतिविवाहोऽप्ययं,सजातीययोः समानकुलशीलयोरेव प्रीतिस्थैर्योत्पादनद्वारा धर्मप्रजासंबन्धाद्यनुगुण इति सिध्यति ॥ एतत्सर्वमाभिप्रेत्यैवोक्तं मनुना—

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥ ३।४
असपिण्डा च या मातुरसगोत्रा च या पितुः
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ३।५
महान्त्यपि समृद्धानि गोजाविधनधान्यतः
स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ॥३।६
हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥ ३।७
यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता
नोपयच्छेत तां प्राज्ञः पुत्रिकाऽधर्मशङ्कया ॥ ३।११
सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥ ३।१२

इति। अत्र हि असपिण्डेत्यादि सुप्रजस्त्वार्थं, महान्त्यपीत्याद्यपि तदर्थमेव, यस्यास्त्विति पुत्रिकाधर्मव्यभिचारजत्वादिशङ्काद्वारा धर्म्यप्रजासमृद्ध्यर्थं, सवर्णाग्रे इत्यादि तु धर्म्यकाम्यरूपद्विविधविवाहप्रदर्शनार्थमित्याद्यनुपदमेव स्फुटीकरिष्यते। तथा परस्परानुरागदार्ढ्याय धर्मप्रजासंपत्तये च मनुना—

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥९।२६
उत्पादनमपत्यस्य जातस्य परिपालनम्
प्रत्यहं लोकयात्रायाः,प्रत्यक्षं स्त्रीनिबन्धनम् ॥ ९।२७
अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥ ९।२८

एवमभिहितम्। एतेन भार्याधीनमेव सर्वमिहपरलोकसाधनं सुख चेति तदनुरागार्थं तत्संतोषार्थं च सर्वथा प्रयतनीयमिति गम्यते। अत एव च पुरुषस्यापि—

तस्मात्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना
आयुष्कामेन वप्तव्यं न जातु परयोषिति ॥९।४१

इति व्यभिचारनिषेधः कृतः। एवं च सुप्रजाजननार्थं वा सुखार्थं वोभयथापि क्रियमाणे विवाहेऽन्योन्याव्यभिचरिताऽनुरागदार्ढ्याय अत्यावश्यिका। विवाहात्प्रागनन्तरं वा यादृशो व्यवहारः स्त्रीपुंसयोरत्यावश्यकः स सर्वोऽपि मनुनैतावता समुपदिष्टः। तादृशानुरागस्थेमानमन्तरा या कापि व्यवस्था यथेच्छं क्रियमाणा न पशुतां व्यभिचरेदिति मानवता मानवैस्तद्भिन्ना प्रदर्शनीया। सा चात्र विषये सुप्रजस्त्वं संबन्धरक्षणं पक्षवृद्धिरर्थश्चेति तत्सिद्ध्यर्थमेव मानवानां विवाहसंस्कारापेक्षा नान्यथेति सिध्यति ॥

( सुप्रजस्त्वविचारः )

अत्र च सुप्रजस्त्वं नाम सर्वान्तर्यामिपरमेशाराधनानुकूलबुद्धिशक्तिमत्प्रजावत्त्वमेव। परमेशाराधनं च प्रजानामुपयुक्तकार्यसंपादनद्वारा परस्परोपकारकत्वमेव। तच्चानात्मवतां न संभवतीति संपादितात्मवत्त्वं सर्वेषामत्यावश्यकम्। तच्चाऽऽत्मसंपादनं विद्याविनयाभ्यामिति विद्याधिगमो विनयप्रवणता चाऽऽवश्यकी। विद्याविनयौ च न पात्रमन्तरा संभवत इति विद्याविनयानुकूलयोग्यता समुपजायमानानां यथा संपद्येत, तथैव दम्पतिभ्यां व्यवहर्तव्यं स्यात्। सा च योग्यता बुद्धितारतम्यात्कर्मशक्तितारतम्याच्च पिण्डभेदेन भिन्नतयोपलभ्यमाना नापन्होतुं शक्या। न हि सर्वाणि मानवशरीराणि सर्वकार्यकराणि वा सर्वज्ञानवन्ति वा समुपलभ्यन्ते। तथा च न सर्वेषां मस्तिष्कविकासः समानः। एवं कर्मशक्तिरपि न समाना। एवं च समानबुद्धिशालिनां सदृशकर्मशक्तीनां च स्त्रीपुरुषाणां विवाहसंबन्ध आवश्यकः। किंचैवं समानानामेव तादृशविवाहसंबन्धनियमेऽङ्गीकृते सपिण्डामेव समसज्येत। तथा सति प्रजननशक्तिह्रासेनान्ततो वंशोच्छेदप्रसङ्गः स्यात्। दृश्यते चैकस्मिन् क्षेत्रे समानबीजावापे कालान्तरेण तादृशबीजप्ररोहाभावः। अतश्च सापिण्ड्यनिषेधः। तथा समानसंस्काराभावे कुलनिषेधोऽपि। गोत्रप्रवरनिषेधस्तु अदृष्टार्थधर्मक्रियार्थः। एवं च मनूक्तं सर्वं सूपपन्नं भवति।

अयमत्राभिप्रायो यदिदं सुप्रजस्त्वं संपादनीयं तत्कीदृशमिति। तथाहि "आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" इत्ययं प्रजातन्तुव्यवच्छेदनिषेधः, स किं रागप्राप्तस्य वा "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति संन्यासविधिप्राप्तस्य वा। संभवति स्त्रीणां सौन्दर्यतारुण्यादिविनाशशङ्कया कृत्रिमसाधनै रतिसुखमनुभूयापि या प्रजानां पालनादिकष्टभयाद्वा प्रजातन्तुव्यवच्छेदः। तदत्र विधिप्राप्ते निषेधानवकाशाद्रागप्राप्तस्यैव निषेधो वक्तव्यः। वैराग्यमूलकप्रजातन्तुव्यवच्छेदस्तु शास्त्रसंमत एवेति केचित्।

अपरे तु सत्यपि वराग्ये निसर्गतोऽनादिसिद्धसृष्टिप्रवाहानुसरणमेव परमो धर्मो मोक्षानुपघातपूर्वकलोकसंग्रहकारित्वात्। अत एव मोक्षमार्गोंयतस्य प्रियव्रतस्य भूयोऽपि प्रजापालनादिकर्तव्यनियोगो ब्रह्मणोपदिष्टः। उक्तं च श्रीमद्भागवते पञ्चमस्कन्धे प्रथमाध्याये—

निबोध तातेदमृतं ब्रवीमि माऽसूयितुं देवमर्हस्यप्रमेयम्
वयं भवस्ते तत एष महर्षिर्वहाम सर्वे विवशा यस्य दिष्टम् ॥ ११.
न तस्य श्चित्तपसा विद्यया वा न योगवीर्येण मनीषया वा
नैवार्थकामः परतः स्वतो वा कृतं विहन्तुं तनुभृद्विभूयात् ॥ १२
भवाय नाशाय च कर्म कर्तुं शोकाय मोहाय सदाभयाय
सुखाय दुःखाय च देहयोगमव्यक्तदिष्टं जनताङ्ग धत्ते ॥ १३
यद्वाचितन्त्यां गुणकर्मदामभिः सुदुस्तरैर्वत्स वयं सुयोजिताः
सर्वे वहामो वलिमीश्वराय प्रोता नसीव द्विपदे चतुष्पदः ॥ १४
ईशाभिसृष्टं ह्यवरुन्ध्महेऽङ्ग दुःखं सुखं वा गुणकर्मसङ्गात्
आस्थाय तत्तद्यदयुङ्क्त नाथ चक्षुष्मताऽन्धा इव नीयमानाः ॥ १५
मुक्तोऽपि तावद्बिभृयात्स्वदेहं मारब्धमश्नन्नभिमानशून्यः
यथानुभूतं प्रतियातनिद्रः किंत्वन्यदेहाय गुणान्न वृङ्क्ते ॥ १६
भयं प्रमत्तस्य वनेष्वपि स्याद्यतः स आस्ते सहषट्सपत्नः
जितेन्द्रियस्याऽऽत्मरतेर्बुधस्य गृहाश्रमः किं न करोत्यवद्यम् ॥ १७
यः षट् सपत्नान् विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्वम्
अत्येति दुर्गाश्रित ऊर्जितारीन् क्षीणेषु कामं विचरेद्विपश्चित् ॥ १८
त्वं त्वब्जनाभाङ्घ्रिसरोजकोशदुर्गाश्रितो निर्जितषट्सपत्नः
भुङ्क्ष्वेह भोगान् पुरुषातिदिष्टान् विमुक्तसङ्गः प्रकृतिं भजस्व ॥ १९ इति।

अत्र च परमेश्वराराधनतत्परस्य मोक्षमार्गोंयतस्य प्रियव्रतस्य परमेशविरचितसृष्टिक्रमानुसारेण प्राप्तकर्मनिष्ठैव श्रेयस्करीति स्पष्टमेवोपदिश्यते। वैराग्यभाजस्य मानसस्य तदवस्थत्वेऽपि कर्मणो यथावदनुष्ठातु शक्यताऽप्यनेन प्रतीयते। एवमेव महाभारते युद्धानन्तरं विरक्तस्य युधिष्ठिरस्य वनप्रस्थानमपनुद्य पुनश्च राज्ये प्रतिष्ठापन भीष्मादिभिः कृत सगच्छते। तथा च सत्यपि वैराग्ये परमेश्वरेण पुरुषदेहे समुत्पादितस्य बीजस्य वैयर्थ्यं मा भूदिति प्रजामुत्पाद्यैव प्रव्रजितव्यमित्येतदर्थं वैराग्यप्राप्तस्यापि प्रजातन्तुविच्छेदस्य निषेध इत्यपि वक्तु साम्प्रतम्। अत एव किल मानवधर्मशास्त्रे—

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्
अनपाकृत्य-मोक्षं तु सेवमानो व्रजत्यधः ॥ ६।३५
अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥ ६।३६
अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान्
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥ ६।३७ .

इति । ननु तर्हि " यदहरेव विरजेत्तदहरेव प्रव्रजेत् " इत्यस्य विधेः का गतिरिति चेद्विरागस्योत्कटानुत्कटत्वाभ्यां व्यवस्थितो विकल्पः ।

अन्ये तु संन्यासविधेर्ब्राह्मणाधिकारिकत्वेन तदितरपरत्वमेतेषां वाक्यानामिति । नैतद्युक्तम् । आश्रमक्रमेण सर्वेषामपि संन्यासस्याप्यैतैर्विधानात् । अन्यथा —ब्रह्मचर्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा " इति आश्रमविकल्पसमुच्चयबोधकजाबालश्रुतिव्याकोपप्रसङ्गात् । किंच " जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते " इत्यत्र श्रुतौ ब्राह्मणपदोपादानात् धर्मकोशसंरक्षणमात्रैकफलत्वाच्च तस्य न सहसैव संन्यासः श्रुत्यनुमतो भवति । मनुवाक्यानि चैतच्छ्रुतिमूलकान्येवेति ब्राह्मणेन विशेषत ऋणत्रयापाकरणमेव सांप्रतम् । अस्तु वा यथाकथमपि । इदमेव तावदस्माकं वक्तव्यं यत्प्रजातन्तुव्यवच्छेदोऽयं संन्यासमूलकोऽपि संभवतीति तस्यापि श्रुत्या निषेधादेवाऽऽश्रमसमुच्चयविकल्पाः सिध्यन्ति । तथा च प्रजातन्तुव्यवच्छेदनिषेधातिक्रमो मा भूदित्यगत्या प्रजोत्पादनीयैव । एवं च निसर्गसृष्टबीजस्याप्युपयोगः सिध्यति । अन्यथा तु बीजहानिरेव स्यात् । तथा च बीजसार्थक्यायोत्पादनीया प्रजा यथाकथंचित् रागतः संवद्धैः स्त्रीपुरुषैरप्युत्पादयितुं शक्येति न तदर्थं विवाहापेक्षा । किंतु प्रजासु शोभनत्वसंपत्तय एव तदपेक्षेत्युपपादितं प्रागेव । तदेवं विवाहाज्जायमानं प्रजानां शोभनत्वं कीदृशं येन यथावदेव सुप्रजस्त्वं स्याद्विवाहस्येति विचारणीयम् ।

## ( अत्राऽऽक्षेपपरिहारौ )

ननु किमित्यतिभारोऽयं मानवानामुपरि यत्प्रजा समुत्पाद्यैवेति । भवतु बीजहानिः किं नश्छिन्नम् । न च सृष्टिक्रमव्याघातप्रसङ्गः । यदृच्छयोत्पन्नयाऽपि प्रजया सृष्टिक्रमस्याव्याहतेः । किंच सृष्टिक्रमोऽप्ययं यथावदेव निर्वोढव्य इत्ययमपि कोऽयमतिभारः । सृष्टिकर्त्रा तावत्पर्यालोचनीयम् । न वयं तत्कर्तारः । किंतु केवलं भोक्तारः । तद्यथारुचि व्यवहारेण यथेच्छभोगोपादानमेवास्माभिः संपादनीयमिति व्यर्थोऽयं विधिनिषेधाटोपः । इति चेत् । स्यादेतदेवं यदि मानवता पशुताया

नातिरिच्येत । पशुता हि बुद्धिशक्तेः कर्मशक्तेश्च निसर्गनियमितत्वाद्यदृच्छालाभसंतोषेण निसर्गसिद्धप्रवृत्तिप्रयोजिका । नैवं मानवता । परस्परोपकारबुद्धिकर्मशक्त्या समाजसुव्यवस्थापरनामधेयमानवयोगक्षेमनिर्वाहकत्वात् । तद्यदि योगक्षेमानिर्वाहार्थं बुद्धिशक्त्या भोग्यसंपत्त्युपार्जनविभजनविनियोगविनिमयादिसंपादनाटोपो यन्त्रशिल्पविज्ञानदण्डनीत्यादिद्वारा मानवानामत्यावश्यकः । तर्हि सुप्रजाजननमप्यावश्यकमेव । उपर्युक्तः सर्वोऽप्यारम्भो यदि प्रजानां शोभनत्वसंपादनायैव । तदा तु तच्छोभनत्वं येन संपद्येत, येन च विहन्येत, तस्य पर्यालोचनमप्यावश्यकमेव । तस्मात्सुव्यवस्थासंपादकविघातककारणानां पर्यालोचनानन्तरमेव विघातककारणनाशपूर्वकं संपादककारणानां प्रजासु प्रचारो विधेयो भवति । अन्यथा तु न कापि सुव्यवस्था भवितुमर्हति । तानि च कारणानि भोग्यसंपत्तिविषयकाभिलाषातिरेकः, तन्मूलकरागद्वेषाभिनिवेशा इत्येव वक्तव्यं भवति । तत्र च तादृशातिरेकप्रहाणमेव सुव्यवस्थासंपादकं स्यात् । तत्प्रहाणाय च केवलं बाह्यसाधनैर्भोग्यसंपत्तेर्नियमनमेव नालं भवतीति प्रत्यक्षमेवेदानीं तादृशनियमनानुशासनातिक्रमेण प्रजास्विति भोग्यसंपत्त्यभिलाषतनूकरणमिदं न तद्विषयकविरागमन्तरा संभवतीति तादृशविरागोत्पादनार्थमान्वीक्षिकी तन्मूलिका च धर्माधर्मप्रतिपादिका काचन विद्याऽप्याश्रयणीया । सा च पौरुषेयविधिनिषेधारोपापेक्षया यथावद्वस्तुतत्त्वमूलकत्वात्सुव्यवस्थासंपादनायालं भवतीति तन्मूलकविधिनिषेधाटोपानुसरणमेवान्ततो मानवतां गमयतीति पशुतातिरिक्तत्वसिद्धये मानवतायास्तादृशशास्त्रानुसरणमेव न्याय्यम् । तस्मान्न्यायमाटोपो वैयर्थ्यमावहति । तदुक्तं विचारत्रय्याम्—

तर्केणाप्युपगच्छन्ति पशवः । शास्त्रेणाप्युपगच्छन्ति मनुष्याः । तत्र तर्को व्यामोह इत्येके शास्त्रनिष्ठाः । शास्त्रं व्यामोह इत्यपरे तर्कनिष्ठाः । शास्त्रे स्वतःप्रमाणं सत्यनुकूले तर्के बलवदिति शास्त्रनिष्ठानां मतम् । तर्कः स्वतःप्रमाणम् सत्यनुकूले शास्त्रे बलवानिति तर्कनिष्ठानां मतम् । सानुकूलतर्कं शास्त्रं बलवत्, सानुकूलशास्त्रस्तर्को बलवानिति मतद्वयेऽपि बलवत्त्वहेतुरन्यतरयोः शेषशेषिभाव उभयोः संमतः । तत्र कः पक्षः श्रेयानिति संशये तर्कस्य प्रमाणान्तरसापेक्षत्वनिश्चयादन्याधीनं प्रामाण्यम् । शास्त्रस्य बलार्थं तर्कसापेक्षत्वेऽपि न प्रामाण्यार्थं तत् । अशास्त्रत्वापत्तेः । यतः प्रतिपुरुषं तर्का भिद्यन्ते न शास्त्रम् । अन्यथा शास्त्रतर्कयोरेकत्वापत्तेः सर्वं वादग्रस्तं सर्वं निर्विवादमिति शिक्षामार्गोच्छेदप्रसङ्गः । सर्वेषामविशेषात् । कः पुरुषार्थस्तर्कपरायणस्य । शास्त्रपरायणस्य फलं तु यथाधिकारं मार्गारोहो यथाशास्त्रं फलावाप्तिश्च ।

तर्हि किं शास्त्रं तर्हि कस्तर्कः । शास्त्रं नाम शासितुर्वचनं सानुग्रहम् । कः शास्ता । यः सृजति यत्, स तच्छास्त्यनुगृह्णाति च । कः सृजति । यो वक्त्यह सृजामीति । को वक्ति । ईश्वरः । कुत्र वक्ति । शास्त्रे । तर्हि कुत्रेश्वरः । कुत्र नास्ति । न कुत्रचित् । इदं कस्मात् । अनुपलब्धेः । नेदं

दृश्यते नान्यत्रेति चेदिदमेव निदर्शनं भरतखण्डो विवेकभूयिष्ठ इति। यतो विवेकिषु शास्त्रं तैरेव पाल्यते यतः। अविवेकिभिस्तर्कः पाल्यते स्वमनोरथानुरूपत्वसंभवात्। उपन्यस्ताः पञ्च शास्त्रैकविषया यथेच्छमूह्यन्ते त्यज्यन्ते च तार्किकैस्ततो मतभेदः। तन्निरासोपायस्तु मिथो व्याहतिरित्यनवद्यम्। ननु नाद्रियते शास्त्रमिति चेत् किं सर्वज्ञो भूत्वा वदस्यसर्वज्ञो वा। तव सर्वज्ञता तु तव यत्नैरेव निर्णीताऽनवस्थितप्रज्ञत्वात्। असर्वज्ञश्चेच्छास्त्रं नाद्रियत इति विषमम्। तस्य बालादिषु प्रसिद्धत्वात्। यतः शास्त्रं नाम शास्तुर्वचनम्। तन्न मन्य इति वदन् कुत्र दृष्टः। यत्र देशे यस्मिन् वचने शास्त्रत्वग्रहः तद्देशीयानां तद्वचने श्रद्धा दृष्टचरा बालान् विहाय। तस्मात्तवैकस्य वचनमसमञ्जसम्। ननु मादृशाः शास्त्रानादरशरणा बहवः संमतिं यच्छन्ति। तस्मादिदमपि पक्षान्तरं शास्त्रानादरणं नाम। किं बहुमत्या पक्षान्तरम्। यतोऽन्धानां शतमप्येक एवान्धः प्रमाणविरहसाम्यात्। तस्माद्यः प्रमाणमवलम्ब्य गच्छति सोऽनन्ध इति सांप्रतम्। स्वयमसर्वज्ञानां शास्त्रत्यागिनां न पक्षान्तरं भवितुमर्हति, असर्वज्ञत्वप्रतिबन्धादिति मन्तव्यं बुद्धिमता। इदमेव जीवस्य जीवत्वं यदसर्वज्ञत्वम्। अतः सर्वज्ञमपेक्षन्ते सर्वे जीवा यथार्थप्रतिपत्तये ज्ञानवृद्धये च सर्वज्ञत्वान्तम्। सर्वज्ञः परमेश्वरः शास्ति तस्येदं शासनं वेदो नामाकृत्रिमं वचनमनुसंधानपूर्वत्वाभावाद्वक्तुः सर्वज्ञत्वात्। अत एव पाणिनिः कृत्रिमं वचनमनुशास्ति साध्विदमसाध्विदमिति। वेदस्त्वकृत्रिमं वचनम्। ततः सर्वं साध्विति "छन्दसि दृष्टानुविधिः" इति सूत्रितवान्। तस्मादकृत्रिमस्य सर्वज्ञस्याकृत्रिमं वचनमल्पज्ञैः कृत्रिमात्माभिमानिभिरवश्यं मन्तव्यं मानुषत्वात्। यतो वचनरहस्यवेत्तारो मानुषा एव दृश्यन्ते नेतरे। तर्हि किमस्माभिः सर्वैर्यथाशास्त्रमेव वर्तितव्यम्। वर्तितव्यं निःसंशयं ज्ञातव्यं च। तर्हि यथाशास्त्रवर्तने दुःखापत्तिरिति चेन्न किंचिद्दुःखम्। इदं तु तारतम्यं लोकसिद्धम्। अशास्त्रजनबाहुल्ये सशास्त्राणां दुःखम्। सशास्त्रजनबाहुल्येऽशास्त्राणां दुःखमिति। परंतु प्रासं मानुषत्वादिहेतुना सशास्त्रत्वमेव सुखहेतुरितिप्रमाणत्वाच्छास्त्रस्य। यथा प्रमाणीभूतचक्षुर्हीना न सुखपात्रम्, तथा शास्त्रहीना अपीति युक्ततरम्। ननु विपरीतं दृश्यते सशास्त्रा दुःखिनः। अशास्त्राः सुखिन इति। सत्यं विपरीतम्, विचाराभावात्। प्रवृत्तिरेव कथयति सुखं दुःखं च। किं दुःखी प्रवर्ततेऽन्यो वा। सुखं नाम तृप्तिः। सा च भोगाल्पशो ज्ञानान्मानवे। ज्ञानं च शास्त्रे। तस्मान्न पूर्वपक्षः समञ्जसः। किं, ज्ञानं सुखं प्रतिबध्नाति। कः सुखपात्रं प्रमाणहीनः। यत आरण्यकाः पशवोऽपि प्रमाणाधीनसुखाः। अत एव पशुष्वपि प्रमाणवैगुण्ये दुःखिनः। साम्ये समं सुखम्। मानुषे तु यानि पशुसाधारणानि तानि शास्त्रं चेत्यधिकं सुखम्। यतः शास्ति शास्त्रज्ञः शिक्ष्येत च पशुः॥ इति॥

अनेन च विचारत्रयीप्रतिपादनेनेदं सिद्धं भवति। यदि कोऽपि विषयो निर्णेतव्यश्चेच्छास्त्रानुसारेणैव निर्णेतव्यः। तर्कोऽपि तदनुगुणश्चेद्विवृद्धं स्यात्। न तु शास्त्राविरोधिना तर्कमात्रेण

यस्य कस्यापि निर्णयः संभवति। तर्कस्य वैमत्यापादकत्वात्। बुद्धिविशेषात् तर्कविशेषा अपि परस्परपरिपन्थिनः संभवन्तीति न तर्कप्रतिष्ठाऽस्ति। अतश्च सुप्रजस्त्वं चेदं विवाहफलमपि न केवलतर्केण सिद्धं भवतीति तदर्थं शास्त्रमेव निरपेक्षं प्रमाणं पर्यालोचनीयं भवति। तथा च जन्मन इतिकर्तव्यता यया रीत्या मानवानां सिद्धा स्यात्तादृशान्यवहारार्हतैव प्रजानां शोभनता। तादृशप्रजासंपत्तिरेव सुप्रजस्त्वं स्यात्। न तु इदानींतनतत्तद्राष्ट्रियध्येयानुगुणं प्रजावर्तनं नाम सुप्रजस्त्वम् राष्ट्रियध्येयस्य नैसर्गिकराष्ट्रसंपत्त्यनुसारेण विभिन्नत्वात्। न हि यत्र प्रदेशे यदुत्पद्यते तदुपभोगेनैव संतोष्टव्यं तत्रत्यैरिति समयः सुखाय भवति। किंच भोग्यसंपदभिलाषो हि मानवानां निःसीम एव प्रवर्धते। भुक्तस्य पौनःपुन्येन वैरस्यापादकत्वात्। अतश्च यत्र प्रदेशे भोग्यसंपद्वैपुल्यम्। तत्राऽऽक्रमणमपि स्वाभाविकम्। अत एव साम्राज्यमाकाङ्क्षन्ते आंग्लाः। परसंपत्प्रकर्षो हि हीनसंपदं दुःखाकरोतीत्यौत्सर्गिको नियमः। तथा च परेषामाक्रमणं मा भूदिति वा तादृशमाक्रमणमत्यावश्यकमिति वा प्रजानां युद्धार्थं वीर्यशौर्यबलसंपत्प्रकर्षसंपादनेन युद्धप्रवणत्वमेव सर्वदा न सुप्रजस्त्वं गमयतीति तादृशसुप्रजस्त्वसंपादनमधुनातनानां पशुधर्मानतिरिक्तमेव सिध्यति।

इदं तु तावन्निश्चप्रचमेव यदलब्धलाभो लब्धपरिरक्षणं रक्षितविवर्धनं वृद्धस्य तीर्थेषु प्रतिपादनं न सर्वेषामावश्यकमेवेति। तदिदं सर्वं न्याय्यमार्गेण प्रजासु यथा प्रवर्तेत्तथा किल प्रजानां व्यवहारोऽविप्रतिपन्न एव। तदिदं सर्वं तदैव भवितुमर्हति यदा प्रजानां वासनाक्षयं संपद्येत। एवं च परधनपरदारविषये निःस्पृहता, तदर्थं च कामक्रोधलोभानां नरकद्वारभूतानां निग्रहश्चाऽऽवश्यकः। स च न दण्डानुशासनमात्रेण संभवतीत्युक्तमेवानेकधा। तथा च योगमार्गेण तत्संपादनार्थं यथायोग्यज्ञानशक्तिक्रियाशक्त्योः प्रादुर्भावो यथा प्रजासु संपद्येत तथैव प्रयतनीयं [illegible] चित्तेन्द्रियनिग्रहः कर्तव्यनिष्ठा चाऽऽवश्यकी। सा च कर्तव्यनिष्ठा [illegible] वासनानिग्रहश्च न कामोपभोगानिष्टदर्शनेन कदापि संभवति। न जातु कामः कामानामुपभोगेन शाम्यतीति न्यायात्। तदर्थं च व्यवसायात्मिका बुद्धिरेवाऽऽवश्यकी। सा च प्रजासु [illegible] आविर्भवितुमर्हति यद्याऽऽन्वीक्षिकी प्रचारः सम्यक् स्यात्। न हि आन्वीक्षिकी नाम यथाकथंचित्तर्कः। किंतु [illegible] प्रमाणानुग्राहकं तर्कमाऽऽन्वीक्षिकीति शब्दो भाति। अत एव "आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः" इत्यमरः [illegible]। तथा च [illegible] [illegible] [illegible] [illegible] [illegible] [illegible]। प्रजासु [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible]। [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible]। [illegible]

सुप्रजस्त्वमपि तु तत्तद्बुद्धिशक्तीनां कर्मशक्तीनां चोत्तरोत्तरमुत्कर्षोऽपि यथा संपद्येत तथा व्यवहाररी-
तिरपि निर्धारणीया । सा च सर्वकारणकारणीभूतान्तर्यामिचैतन्यशक्तेरङ्गीकारमन्तरा न संभवतीति
तस्याः पुरस्कारेण तदाराधनतत्परता प्रजासु विधेया। एवं निसर्गसिद्धस्वगतज्ञानशक्तिक्रियाशक्तिद्वारा
सर्वान्तर्यामिचैतन्यशक्तिः कथं संतोषमियादित्येव प्रजानां प्रधानतमा वासना यथा प्रादुर्भवेत्तथा
प्रयतनीयम् । तदर्थं च विद्याविनयाधिगमः कथं समुत्पादनीय इति तु विवृतचरमेव दण्डनीतिप्रक-
रणे चातुर्वर्ण्यप्रकरणे चेत्यत्याधिकं नात्र वितन्यते । एवं च विद्याविनयसंपन्नानां कर्तव्यनिष्ठानां
निग्रहवतीनां स्वशक्तिसमुपार्जितभोग्यसंपत्परितुष्टानां प्रजानां यथावदेवोत्सर्गः किल सुप्रजस्त्वमावहेत्
नान्य इति सिध्यति । अत एव राष्ट्रोन्नतेर्गमकमिदानीमपीदमेव निगद्यते यच्चौर्यव्यभिचारात्मघाता-
द्यपराधानां प्रजास्वप्रचारः स्वल्पप्रचारो वेति । अत एव चैतरीये ब्राह्मणे " न मे स्तेनो जनपदे "
इत्याद्युल्लेखः सुप्रजस्त्वद्योतकः ।

किंचेदमप्यपरमत्रावधेयं यत्प्रजातन्तुविच्छेदवज्ज्ञानतन्तुविच्छेद उपासनातन्तुविच्छेदश्च
निसर्गविरोधाद्दोषावहः । यतः प्रजानां सर्वापि जीवनयात्रा पूर्वपरम्परानुगृहीतेव प्रवर्तते । अत एव
मातृभाषैव प्रथमा भाषा प्रजानां भवति । मातुरभावे यत्र संवर्धनं तत्कुलभाषापि तथा भवति ।
नैतावता पूर्वतनपरम्परां विहाय काऽपि नूतना भाषा समुत्पन्नस्य जन्तोर्भवितुमर्हति । एवमेव ज्ञान-
परम्पराऽप्यनुस्यूता वर्तते । यदपि नूत्नं किंचिज्ज्ञानं तदपि पूर्वपरम्परानुगृहीतमेव न तु तन्निरपेक्षमि-
त्यपि निश्चप्रचमेव । मनसश्चाञ्चल्यात्कामक्रोधलोभादिविकारोद्रेकसंभवे यथावत्कर्मकारित्वमपि
प्रजानामसंभवीति तादृशविकारप्रहाणपूर्वककर्तव्यनिष्ठानुगुणव्यवसायात्मकबुद्धिलाभायोपासनामार्गस्य
परमावश्यकतेति तत्परम्परासंरक्षणमपि योगक्षेमावहत्वात् समाजोपयुक्तमिति तादृशज्ञानोपासनातन्तु-
विच्छेदो हि परमदोषावह एव । तथा च तद्विच्छेदो मा भूदिति तत्परम्परापरिपालनमपि वंशपरम्प-
रया कर्तव्यं चेत्तादृशपरिपालनसमर्थैव प्रजा सुप्रजा भवितुमर्हति नान्यथा ।

किंच प्रजानां योगक्षेमनिर्वाहाय भोग्यसंपदुपार्जनं यदि परमावश्यकम्, तदा तु तदनुगुणानां
विद्यानां कलानां च परम्परया संरक्षणसंवर्धनादिकमपि समाजेऽनायासेन यथा संभवेत् , तादृशी
प्रजैव समाजस्य योगक्षेमं निर्वोढुं समर्था । तादृशविद्याकलादीनां संरक्षणसंवर्धनादिकं यदि दण्डा-
यत्तं स्यात् तदा तु प्रतिक्षणपरिणामवत् प्रतिनृपं दण्डविपरिणामे समाजयोगक्षेमयोरपि विपरिणामा-
पत्तिः स्यात् । तदभ्युपगमे च किंवा समाजस्वरूपं स्यादितिपर्यालोचनीयं कृततीर्थैः शास्त्रपारावारे ।
वयं तु ब्रूमः— तादृशावस्थायां समाजोऽयं राजदण्डाधीनो दासभावमेव परमं समश्नुवीतेति स्वात-
न्त्र्यपुरस्कारेण दण्डसंस्थामधिगच्छद्भिस्तादृशविद्याकलादीनां स्वायत्तीकरणे पारतन्त्र्यमेव प्रजासु
निर्मीयेत । अतश्च समाजयोगक्षेमादिकं सर्वथा न राजदण्डायत्तम् । किंतु प्रजायत्तं विद्याकलादि-
समृद्धमिति तत्परिपालनमेव दण्डकार्यमित्येवाकामेनापि समाजहितैषिणा वक्तव्यम् । एवं चान्योन्य-

सहकार्यमूलकपरस्परोपकारेण प्रजानां योगक्षेमौ सम्यक्तया निर्वाह्येते। अतश्च तादृशयोगक्षेमसंपादनार्हता हि प्रजानां सुप्रजस्त्वमिति सिध्यति। सा चार्हतैव सर्वान्तर्यामिपरमेशाराधनानुकूलबुद्धिकर्मशक्तिमत्तेति तदेव सुप्रजस्त्वम्। किंच भोग्यसंपदुपार्जनसंवर्धनवत् विभजनविनियोगयोरप्यत्यावश्यकत्वेन तत्र युक्तायुक्तपर्येषणायां न किमपि गमकं स्यात् विना धर्मम्। धर्मनिष्ठानां तु रागद्वेषविहीनानां ज्ञानशक्तिविकासे या निःस्पृहता सैव किल योग्यता विनियोगस्य। तदेव च तीर्थं वा पात्रं वेति जेगीयतेऽस्मदीयधर्मशास्त्रे। अत एव " ज्ञाननिष्ठाय देयानि हव्यकव्यानि सर्वतः " इत्याद्युपदेशः। अन्यथा वृद्धस्य धनस्य स्वेच्छया विभजनविनियोगयोरापत्तौ रागद्वेषायत्तप्रियत्वाप्रियत्वानुसारेण तदनुष्ठाने राष्ट्रे दुर्गुणाभिवृद्धिप्रसङ्गः केन वार्यताम्। नच राष्ट्रोपयुक्ततावशादेव तन्निर्णयः संभवति। राष्ट्रोपयुक्ततापेक्षया व्यक्तेराकाङ्क्षायाः प्रबलत्वेन तदनुसारेण विभजनविनियोगयोरवश्यंभाव्यत्वात्। दण्डानुशासनेन तादृशाकाङ्क्षानिग्रहस्तु न कदापि संभवति आकाङ्क्षाभावस्य मानसिकत्वेन परेषामप्रत्यक्षत्वात् कार्यरूपप्रमाणमन्तरा तज्ज्ञानस्यासंभवात् सत्यपि ज्ञाने च कार्यनिग्रहस्यैव कर्तुं शक्यत्वाच्च नाऽऽकाङ्क्षानिग्रहो दण्डानुशासनायत्तः संभवति। धर्मबुद्ध्या तु तादृशायोग्याकाङ्क्षायाः फलमपि तादृगेव कदाचिद्भाव्यं कर्मविपाकनियमवशादिति निश्चये तु तादृशाकाङ्क्षानिग्रहार्थं प्रयत्नः संभवति। तथा च धर्मदृष्ट्या योग्यसत्पात्र एव विभजनविनिमयद्वारा वृद्धस्य प्रतिपत्तौ सर्वोऽपि समाजः सुखभाग् भवतीति सत्पात्रप्रतिपत्तिरियं धर्ममन्तरा कथमपि न भवतीति रागद्वेषविहीनशुद्धवासनासंक्रमप्रचारोऽपि संतानपरम्परया समाजाभ्युदयार्थमावश्यकः। तादृशसंतानपरम्परा च न कामैकपुरस्कारेण क्रियमाणेन विवाहेन संभवति वा विवाहमन्तरापि च संभवतीति समाजयोगक्षेमनिर्वाहकसंतानपरम्पराऽविच्छेदार्थमेव धर्म्यविवाहावश्यकतेति सिध्यति। इदमेव सुप्रजस्त्वं यत्समाजयोगक्षेमनिर्वाहकबुद्धिशक्तिकर्मशक्तिशालित्वं संतानस्य। तच्च न सर्वान्तर्यामिपरमेशप्रतिपत्तिमन्तरेति तमङ्गीकृत्यैव नरकद्वारीभूतकामक्रोधलोभानां निग्रहः संभवतीत्यन्ततः सर्वान्तर्यामिपरमेशाराधनानुकूलबुद्धिशक्तिमत्त्वमेव सुप्रजस्त्वं सिध्यति। अधिकं चात्र विवेचितं चातुर्वर्ण्यप्रतिबिम्बे एव द्रष्टव्यम्। नात्र प्रपञ्च्यते। एतत्सर्वमभिप्रेत्यैवोक्तं मनुना—

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः॥ ३।५५
यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः॥ ३।५६
शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम्
न शोचन्ति तु यत्रैता वर्धते तद्धि सर्वदा॥ ३।५७

जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ३।५८
तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥ ३।५९
संतुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥ ३।६०
यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत्
अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्तते ॥ ३।६१
स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम्
तस्यां त्वरोचमानायां सर्वमेव न रोचते ॥ ३।६२

एतेन सुप्रजस्त्वसंपत्तये परस्परानुरागः स्त्रीपुंसयोरत्यावश्यकः। तत्र स्त्रीणामनुरागार्थं भूषणाच्छादनाशनप्रभृतयो यथोपायास्तथा पुंसोऽनुरागार्थमपि स्त्रीभिरनुष्ठेया उपायास्तु पतिव्रताधर्मः। एवमन्योन्यानुरागाभिवृद्धौ सुप्रजस्त्वं संपद्यते। नन्वेवमधुनातनानां प्रीतिविवाह एव सुप्रजस्त्वसंपादक इत्येव मनोरप्यभिप्राय इति चेन्न। धर्म्यविवाहस्यैव मनोरभिप्रेतत्वात्। अत एवानुपदमुक्तं मनुना—

कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ३।६३

इति। एवं च केचन विवाहा निन्द्याः केचन प्रशस्ता इति मनोरभिप्रायः। तदर्थं च को नाम विवाहः, किं च तस्य प्राशस्त्यम्, किंच विगतित्वमित्यपि विचार्यमेव।

## ( विवाहविचारः )

तत्र को नाम विवाह इत्यस्योत्तरमिदमेव यत्सुप्रजाजननार्थं भोग्यत्वेन स्त्रीरूपभोग्यसंपत्परिग्रहः। स च दानेन प्रीत्या बलात्कारेण वा द्रव्यदानेन वा संभवति। तत्र बलात्कारो हि न कस्यापि कदापि संमतः। एवमपि " सर्वं न्याय्यं बलवतः " इति न्यायेन तादृशबलात्कारस्य प्रतीकारासंभवे हि स एव भार्यात्वसंपादकः संभवतीति स्थितस्य गतिश्चिन्तनीयेति न्यायेन तादृशभार्यात्वमप्यनुमन्यते मनुना। अत एव राक्षसपैशाचयोर्विवाहत्वम्। एवं च बलात्कारमूलकत्वात् विगीतत्वमपि। यत्र तु कन्यालाभार्थं तत्सम्बन्धिनां द्रव्यदानयोर्न यथावद्विवाहत्वम्। अतश्च विगीतत्वमपि। यत्र तु कन्यालाभार्थं तत्सम्बन्धिनां द्रव्यदानम्, तत्र तादृशविवाहस्य लोभमूलकोत्कोचपूर्वकत्वादेवाप्राशस्त्यम्। न हि लोभाक्रान्तस्य युक्तायुक्तत्वविचारः संभवति। अतश्च कदाचिन्निर्वृत्तोऽपि तादृशो विवाहो निन्द्य एव। प्रीतिपूर्वको विवा-

होऽपि यत्र वधूवरयोरन्योन्यदृढतरानुरागस्तत्रैव प्रशस्तः । न तु तज्जनकसंबन्ध्यादीनामन्योन्यानुरागस्तत्र प्रयोजकः । तादृशानुरागमूलकविवाहस्य वधूवरयोराकाङ्क्षापूरकत्वस्य कदाचिदसंभवेन सुप्रजाजनकत्वासंभवात् । एवमपि यत्र न तादृगापत्तिप्रसरः, तत्र तस्य धर्म्यविवाहत्वमेव । एवं च यत्र न कामक्रोधलोभादिवृत्तिपूर्वकत्वम्, यत्र च कन्यारत्नमिदं परस्यैव भोग्यसंपदितिनिरपेक्षमेव तद्दानं परस्मै धर्म इति केवलधर्मबुद्ध्यैव दानम्, तादृशदानपूर्वकप्रतिग्रह एव धर्म्यविवाहः फलति । यत्र च वधूवरयोर्निरपेक्षः प्रेमा औरंगजेबबादशहाकन्यावत् मस्तानीवद्वा त्यागपर्यवसायी, तत्रापि तादृशप्रेम्णो विवाहप्रयोजकत्वं धर्म्यमेव । इयान् विशेषो यत्तादृशप्रेम्णः काममूलकत्वेन तन्मूलकविवाहस्यापि न शुद्धधर्म्यता किंतु कामवासनावासितत्वात्काम्यतैव । एवमपि तादृशविवाहप्रयोज्यभार्यात्वस्य धर्मकार्यनिर्वाहकत्वं तु न धर्मशास्त्रेणापि निषिध्यते । तदुक्तं मनुना—

> पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह
> पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन ॥ ३।२५
> पृथक् पृथक् वा मिश्रौ वा विवाहौ पूर्वचोदितौ
> गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥३।२६

एवं च प्रीतिविवाहस्य धर्म्यत्वं मनोरभिप्रेतमपि क्षत्रियाधिकारिकत्वं वदता मनुना न सर्वजनीनत्वं तस्याभिमन्यते । अतश्चेदमेव तात्पर्यं यत्काम्योऽयं विवाहः कामवासनावासितान्तःकरणानामनुमतोऽपि निरपेक्षकर्तव्यबुद्धिराहित्याद्धर्म्यविवाहापेक्षया निकृष्ट एव । एवमेव राक्षसविवाहोऽपि प्रसह्यकन्याहरणान्निन्द्य एव । यत्र तु कन्याया अनुरागेऽपि तत्पित्रादीनां प्रतिरोधस्तादृशस्थल एव राक्षसविवाहश्चेदनुरागमूलकगान्धर्वविधिमिश्रत्वेन तादृशराक्षसविवाहस्य रुक्मिणीविवाहवद्धर्म्यत्वं तु न निवारयितुं शक्यते । अतश्च प्रसह्यकन्याहरणमिदं कन्यानुरागाभावे न विवाहप्रयोजकं भवति । अत एव भीष्मेणाम्बाहरणानन्तरं तदनुरागमन्यत्र विज्ञाय परपरिग्रहत्वात्पुनः प्रत्यावर्तनं कृतम् । नन्वेवं गान्धर्वविवाहादतिरिक्तत्वं कथं राक्षसविवाहस्येति चेदिदमेव पार्थक्यं यत्केवलगान्धर्वविवाहे इच्छयाऽन्योन्यसंयोगो भवति । राक्षसविवाहे तु सत्यामपीच्छायां पित्रादीनामवरोधात्प्रसह्य कन्याहरणमेव विवाहप्रयोजकं भवति । एवं चैकत्र प्रेममात्रस्य प्रयोजकत्वमन्यत्र तु प्रसह्य हरणस्येति विशेषादुभयोर्विवेकः । अत एव " पृथक् पृथक् वा मिश्रौ वा " इति मनूक्तिः संगच्छते । नन्वत्रैव वचने मनुना द्वयोरपि पार्थक्यमपि भवतीत्युक्तं कथं संगच्छतेति चेत्पैशाचासुरविवाहवत्कदाचिदलोभमतेन प्रसह्य कन्याहरणे तत्प्रतीकारासंभवे चागत्या प्रसह्यहरणस्यापि विवाहप्रयोजकत्वमङ्गीकरणीयं समाजसुव्यवस्थायै इत्येव तस्य पार्थक्यं संभवति । नैतावता तादृशविवाहस्य धर्म्यत्वं मनोरभिप्रेतम् । अन्यथा आसुरपैशाचयोरपि धर्म्यत्वं केन वार्यताम् । इदानीतनमोहम्मदादिविधर्मीयदस्युभिरपहृतस्यापि कन्याना विवाहप्रयोजकत्वं स्यात् । तथा च भोग्यसंपत्तेर्धर्मानुसुव्यवस्थार्थ

विहितानां नियमानां अव्यवस्थाकारित्वापत्तौ सर्वत्रानाश्वासप्रसङ्गः । तस्मादनुरागाभावे प्रसह्य
कन्याहरणं नाम वाटपाटच्चरत्वमेवेति तस्य न धर्म्यविवाहप्रयोजकत्वम् । अत एव " यदा स्त्रीपुं-
सयोरन्योन्यानुरागपूर्वकसंवादेन परिणेता युद्धादिना विजित्य तामुद्वहेत्तदा गान्धर्वराक्षसौ मिश्रौ
भवतः " इति कुल्लूकव्याख्यानं संगच्छते । नन्वेवं—

हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्
प्रसह्यकन्याहरणं राक्षसो विधिरुच्यते ॥ ३।३३

इति मनूक्तं राक्षसोद्वाहलक्षणं कथं संगच्छते । अत्र च कन्याया आक्रोशनं रोदनं चानु-
रागे न संभवतीति नानुरागपूर्वकत्वं राक्षसविवाहस्य संभवति । अत एव कुल्लूकेन " कन्याप-
क्षान् विनाश्य तेषामङ्गच्छेदं कृत्वा प्राकारादीन् भित्त्वा ' हा पितर्भ्रातरनाथाऽहं ह्रिये ' इति
वदन्तीं अश्रूणि मुञ्चन्तीं यत्कन्यां गृहादपहरति । अनेन कन्यायामनिच्छोक्ता गान्धर्वाद्विवेकार्थम् "
इति व्याख्यातं संगच्छते । तथा च न राक्षसविवाहस्यानुरागपूर्वकत्वमिति चेन्न । तथा सति उभ-
योर्मिश्रत्वोक्तेः पूर्वोक्ताया विरोधापत्तिः । न हि सत्यनुरागे रोदनमाक्रोशो वा । तदभावे च न
राक्षसविधित्वमिति मिश्रत्वोक्तिः पराहतैव स्यात् । तस्मादाक्रोशादिकमिदं न विवाहप्रयोजकम्,
किंतु प्रसह्यहरणमेव । तत्र च बलात्कारोऽयं कन्यादानाधिकारिणामुपर्येव विवक्षितः, नतु कन्या-
या उपरि । तथा च तस्य धर्म्यत्वम् । तदभावे तु पैशाचवदधर्म्यत्वमेव केवलबलात्कारमूलकत्वादिति
सर्वं सुस्थम् । एवं च धर्म्याधर्म्योभयसाधारणं प्रसह्यकन्याहरणं यत्र विवाहे प्रयोजकं स राक्षस
इत्येव फलति । अतश्चात्रत्यं कुल्लूकव्याख्यानमिदमेकदेशसमतत्वात्पूर्वापरविरोधाच्चोपेक्ष्यमेव ।

तदेवं मनूक्ताष्टविधविवाहेषु पैशाचासुरविवाहवदनुरागरहितप्रसह्यकन्याहरणरूपराक्षसविवाह-
स्याप्यधर्म्यत्वमेव सर्वाधिकारिकम् । अवशिष्टाना ब्राह्मादिचतुर्णां दानपूर्वकत्वेन शुद्धधर्म्यत्वम् ।
गान्धर्वस्यानुरागपूर्वकराक्षसस्य च क्षत्रियाधिकारिकं धर्म्यत्वमिति सिद्धम् । एतेन—इदानींतनानां
प्रीतिविवाहस्य सर्वाधिकारिकं धर्म्यत्वम्— इति मतमप्यपास्तम् । न हि सर्वेषां कामप्रवणता धर्म्या
प्रशस्ता च । तथा सति कामविकारस्य प्राधान्यापत्तौ तस्य क्षणिकत्वेनोत्तरकाले तादृशानुरागनाशे
च पुनश्च विवाहविच्छेदाकाङ्क्षायां तदनुमतौ च का नाम समाजस्य सुव्यवस्था स्यादिति विचार-
णीयं राष्ट्रहितैषिभिः । कथं च ततः सुप्रजाजननं येन राष्ट्रे कर्तव्यनिष्ठा समुदियात् । तस्मात्सुप्रजा-
जननार्थं धर्म्यविवाहस्यैव परमावश्यकता समाजे सिध्यति । एतत्सर्वमभिप्रेत्यैवोक्तं मनुना—

यो यस्यैषां विवाहानां मनुना कीर्तितो गुणः ।
सर्वं शृणुत तं विप्राः सर्वं कीर्तयतो मम ॥ ३।३६ इति—
यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ ।
तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणान् ॥ ३।२२

इति च सुप्रजस्त्वसंपत्तये गुणागुणविवेचनं प्रतिज्ञाय—

ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः ॥३।३९
रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः ।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥३।४०
इतरेषु च शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥३।४१
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत् ॥ ३।४२ इति ।

स्पष्टमिदं इदानींतनकर्तव्यपराङ्मुखविषयलोलुपप्रजाप्रसरेण सर्वथा कथंतावत्कोलाहलः प्रचलतीति नात्राधिकं विवेचनीयं समाजशास्त्रविदुषाम् । निसर्गसिद्धापत्यप्रेम विहाय राष्ट्रियसंपदिति पुरस्कारेण कानीनादिव्यभिचारजन्यानाथापत्यपरिपालनं दण्डसंस्थया क्रियमाणं राष्ट्रस्य पशुतामेव गमयति, किंबहुना पशवोऽप्यपत्यप्रेम्णा परान् प्रतिकुर्वन्ति । मानवा अप्येते प्रेमातिहानेन स्वापत्यं परेभ्योऽर्पयन्तीत्यहो सुव्यवस्था समाजस्य । तस्मान्नैसर्गिकविकारपरतन्त्राणामपि मानवानां विकारनियमनेन सुव्यवस्थासंपादनं कर्तव्यं चेत्सुयोग्यनागरिकत्वमेवाऽऽत्मनि संपादनीयं सुप्रजस्त्वाय विवाहद्वारेत्येव समीचीनः पन्थाः ।

तदेवं ब्राह्मादिचतुर्णां विवाहानां गान्धर्वस्य तन्मूलकस्य राक्षसस्य च विवाहस्य धर्म्यत्वम्, इतरेषां राक्षसपैशाचासुराणां चाधर्म्यत्वमिति सिद्धम् ।

नन्वासुरस्याधर्म्यत्वं न सांप्रतम् । कन्यागतस्वत्वविक्रयाधिकारस्य दानाधिकारिणां मातापित्रादीनां धर्मशास्त्रेणाभ्यनुज्ञातत्वात् । तथा च वसिष्ठः—“ शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकः , तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवत इति । अत एव किल दत्तकपुत्रविधिः कन्यादानविधिश्च संगच्छतः । विश्वजिति भार्यादीनामदानं तु नाधिकाराभावात्, अपितु “ देयं दारसुतादृते ” इत्यनारभ्याधीतात्सर्वस्वदानाङ्गीभूतात्प्रतिषेधादेव । तेन षाष्ठसिद्धान्तविरोधः । एवं च कन्यापुत्रयोः मातापितृस्वत्वाक्रान्तत्वेन दानवद्विक्रयोऽपि धर्म्यःएवेति धनोपादानेन कन्यादानं नाधर्म इति तन्मूलकविवाहस्य धर्म्यत्व केन वार्यताम् । मातापितृपदमिदं दानाद्यधिकारिणामुपलक्षणम् । अन्यथा मातापितृमरणानन्तरं विवाहाङ्गीभूतं कन्यादानमेव न स्यादिति तादृशकन्यकानां विवाहाभावप्रसङ्गः । तथा च दानवद्विक्रयाधिकारोऽपि निर्बाध एव । अत एव ऐतरेयब्राह्मणेऽ

जीगर्तेन कृतः शुनःशेपपुत्रस्य विक्रयो वर्ण्यमान उपपद्यते। आसुरविवाहे तु स्वाच्छन्यात् द्रविणादानमेवाधर्म्यत्वप्रयोजकम्। तस्य च शास्त्रविहितत्वं सिद्धे न लोकापवादमात्रेणाधर्म्यत्वं भवितुमर्हतीति तादृशविवाहस्य धर्म्यत्वमेवाभ्युपेयम्। अयन्थाऽऽर्षविवाहस्यापि गोमिथुनरूपशुल्कादानपूर्वकत्वादधर्म्यत्वापत्तिः। तथा चोक्तं मनुना—

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते॥ ३।२९ इति।

आसुरलक्षणमपि तेनैवोक्तम्—

ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते॥ ३।३१

अथैकत्र गोमिथुनादानमपरत्र यथेच्छद्रव्यादानमिति विशेषश्चेत्किमेतावता कन्याशुल्कत्वहानिः। वस्तुमूल्यं हि विक्रेतुरिच्छया ग्राहकाणामावश्यकतया च भवति। तत्र न्यूनाधिकभावेऽपि न तावता शुल्कत्वहानिः। एवं चाऽऽर्षवदासुरोऽपि विवाहो धर्म्य एवेति चेन्न। लोभमूलकशुल्कस्यैव विक्रेयमूल्यत्वेनाऽऽर्षे गृह्यमाणस्य गोमिथुनस्य तादृशमूल्यत्वाभावेन धर्म्यत्वेऽपि यथेच्छद्रव्यादानस्य मूल्यरूपत्वात्तस्य च लोभमूलकत्वादासुरस्य तद्वद्धर्म्यत्वासिद्धेः। एवं च लोभमूलकं द्रव्यादानं यत्र तत्रैवाधर्म्यत्वम्। यत्र तु धर्मार्थं यथाविधि किंचिच्चोदितद्रव्यादानम्, न तदधर्म्यत्वप्रयोजकमिति सिध्यति। तथा चात्र वीरमित्रोदयः—

अथाऽऽर्षलक्षणम्। तत्र मनुः—

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः।
कन्याप्रदानं विधिवदार्षो धर्मोऽयमुच्यते॥

धर्मतः कुलधर्मत आर्षधर्मतो वा। न तु शुल्कत्वेन।

आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्।
अल्पो वापि महान्वापि विक्रयस्तावदेव सः॥

इति मनुना गोमिथुनस्य शुल्कत्वेनोपादानापाकरणात्। शुल्कत्वं तु गोमिथुनस्यापि लोभेन गृह्यमाणस्य भवति। तथा च स एव—

न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि।
गृह्णन् शुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी॥

इति। अत एव लोभं विना गृह्यमाणमपि अर्हणमेव भवति कुमारीणां न शुल्कमित्याह स एव।

यासां नाऽऽददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं तत्कुमारीणामानृशंस्यं च केवलम् । इति ।

आनृशंस्यमपापिष्ठमित्यर्थः । वाशब्दादधिरथं गोशतमपि देयम् । तथा चाऽऽपस्तम्बः—

विवाहे दुहितृमते काम्यं धर्मार्थं श्रूयते । तस्माद्दुहितृमतेऽधिरथं शतं देयम् । तन्मिथुनं कुर्यादिति । तस्यां क्रयशब्दः संस्तुतिमात्रम् । धर्माद्धि संबन्ध इति ।

अस्यार्थः—दानं विक्रयधर्मश्चापत्यस्य न विधीयते—इति निषेधात् कथं गोमिथुनादिग्रहणमित्यत आह–विवाह इति । विवाहे आर्षे । तस्यैवोपसंहारात् । तत्र यत्कन्यापित्रे दीयते तत्काम्यम् । ऋषितुल्यपुत्रोत्पत्तिकामनया दीयमानत्वात् । तथा च स्मृतिः—यथा युक्तो विवाहस्तथा प्रजा भवतीति । तन्मिथुनं कुर्यात् । तद्दत्तं रथाधिकं गोशतं कन्यावरौ मिथुनं कुर्यात् । जायापतित्वमापादयेदित्यर्थः । यस्तु तस्यामार्षोढायां क्रयशब्दः, स शब्दमात्रं न वास्तवः क्रय इति कल्पतरुः । वस्तुतस्तु तस्यां दानक्रियायामिति व्याख्येयम् । आर्षोढायां क्रीताशब्दप्रयोगापेक्षणात् क्रियावाचिनः क्रयशब्दस्य प्रयोगानुपपत्तेः । अत्र हेतुः—धर्माद्धि संबन्ध इति । धर्मनिमित्तो ह्यसौ संबन्धो न लोभनिमित्तक इति । गोमिथुनग्रहणं च स्वयं कन्योपकरणदानासमर्थस्य तद्दानार्थं वेदितव्यम् ।

प्रदानं यत्र कन्यायाः सह गोमिथुनेन च ।
शस्ताय चासगोत्राय तमार्षमृषयो विदुः ॥

इति देवलस्मरणात् । गोमिथुनेन वरादुपात्तेनेत्यर्थः । शुल्कत्वेन ग्रहणे तु दोषः । वक्ष्यमाणदोषश्रवणात्त्वाचार्यैरभिहितम्—देशकालानुरूपं हि मूल्यं शुल्कं भवति । लोके तथा दर्शनात् । गोमिथुनं हि न शुल्कम् । शास्त्रे नियतपरिमाणत्वादिति । तच्चिन्त्यम् । अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीत्यत्र सोमक्रयण्यां गवि व्यभिचारदर्शनात् । तस्माच्छास्त्रेऽपि नियतपरिमाणं शुल्कं भवति । हिरण्येन क्रीणाति वाससा क्रीणातीत्याद्युपक्रम्य तां दशभिः क्रीणातीति तत्रैव शुल्कपरिमाणदर्शनात् । तस्माद्यथोक्तमेव साधु । इति ।

एतेन च वीरमित्रोदयेन स्पष्टमेवेदं प्रतीयते यल्लोभं विना गृह्यमाणं न शुल्कं भवत्यपि तु कुमारीणामर्हणमेव तत् । तथा च गोमिथुनस्योपलक्षणत्वे लोभं विना गृह्यमाणं धनमपि कुमारीणामर्हणमेव स्यात् । एवं च कन्योपकरणदानासमर्थस्य तद्दानार्थं गृह्यमाणं वा स्त्रीधनत्वेन कन्यार्हणार्थं गृह्यमाणमन्यदपि सुवर्णादिकं न शुल्कपदवाच्यं भवति । तथा च नात्र कन्याविक्रयदोषः । आसुरविवाहे तु ज्ञातिभ्यो यथेच्छमेव द्रविणदानमिति तत्र कन्याविक्रयापर्यवसानमेव । ननु कन्याविक्रयोऽपि धर्मशास्त्रसंमत एव पूर्वोक्तवसिष्ठवचनादिति चेन्न । तत्र हि " तयोः प्रदानविक्रयत्यागेषु मातापितरौ प्रभवत

त्यागस्यावश्यकर्तव्यता तत्रोक्ता । प्रभुत्वेऽपि शास्त्रविहितं निष्कामदानमेव कर्तव्यं न विक्रयत्यागाविति विधिनिषेधयोरन्यत्रोक्तयोरेकवाक्यतायां पर्यवस्यति । न चैवं विश्वजिति कन्यापुत्रयोर्दानप्रसक्तिः । तत्र हि प्रभुत्वात्प्राप्तमपि तद्दानं स्वशब्दस्य दक्षिणार्थनिर्दिष्टद्रव्यपरत्वेन पुत्रादीनामग्रहणान्न भवतीति स्पष्टमिदं दक्षिणादानाधिकरणेन । तथा चोक्तम्––

> दक्षिणाक्रतुयुक्त्यर्थं त्रयं देयमुतेष्यते ।
> शिष्टावाऽथवा दक्षिणार्थमेवाऽऽद्यः सर्वशब्दतः ॥
> क्रतुशेषस्तदा बाध्यः प्रधानत्वादबाधनात्
> मध्योऽन्त्यो दक्षिणार्थस्यानुवादात्सर्वता विधेः ॥

इति । यत्तु " देयं दारसुतादृते " इत्यनारभ्याधीतेन तद्दानबाध इति । तत्तु अनारभ्याधीतस्यानङ्गत्वेन सामान्यरूपत्वाद्विशेषविहितेन सर्वस्वदानेन तद्बाधादेव न समञ्जसम् । अन्यथा विवाहदत्तकादिविधौ विहितं कन्यापुत्रयोर्दानमपि निषिध्येत । अत एव " दानं विक्रयधर्मश्चापत्यस्य न विधीयते " इत्यनेन लोभमूलकापत्यदानविक्रययोरेव निषेधः, न शास्त्रविहितस्य । तथा च विश्वजिति सर्वस्वदानमिदं शास्त्रविहितं न लोभमूलकदानविक्रयनिषेधेन बाधितुं शक्यम् । किंच विश्वजिति सर्वस्वं ददातीत्यत्र स्वशब्दोऽयं नात्मीयतामात्रपरः, येन पित्रादीनां दानप्रसङ्गः स्यात् । अपि तु धनपर एव दक्षिणात्वेन दानविधानात् । तथा चोक्तं शास्त्रदीपिकायाम्––

किंचायं स्वशब्दोऽपि भिन्नया शक्त्याऽऽत्मात्मीयज्ञातिधनेषु वर्तते । तत्रैकस्मिन् प्रयोगेऽस्यैक एवार्थः । तत्र धनस्य दानसंभवात्तद्विषय एव स्वशब्दः । तस्माद्धनस्यैव दानं न पित्रादीनाम् ॥ इति

नन्वेवं " शूद्रश्च धर्मशास्त्रत्वात् " इति धर्मार्थशूद्रस्यादेयताधिकरणे दासभूतानां दानमुक्तं कथमुपपद्येतेति चेन्न । क्रयविक्रयद्वारा दासेषु स्वत्वोपगमापगमसंभवेन द्रव्यरूपत्वात् । न त्वेव भार्यापुत्रादिषु स्वत्वोपगमापगमौ ॥ भार्यायास्तावद्धर्मप्रजासंपत्त्यर्थमेव स्वीकारेण यथेच्छविनियोगाधिकारार्हत्वरूपस्वत्वस्य तत्रासंभवेन दानाधिकाराभावः । एवमपत्येऽपि । तत्र धर्मार्थं यथेच्छविनियोगाधिकारार्हत्वेऽपि पुत्रत्वेन वा कन्यात्वेन वा तादृशस्वत्वानपगमान्न मुख्यया वृत्त्या दानं संभवतीति तस्यादेयत्वमेव । दानं हि स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनम् । तत्र पुत्रत्वेन वा कन्यात्वेन वा स्वस्वत्वानिवृत्तेः कथमप्यसंभवान्न दानं संभवति । कन्यादानादौ तु भार्यात्वेन पराधीनत्वकरणादिना गौणो दानव्यवहारः । अत एव कन्यापितृव्यतिरिक्तस्य सकुल्यादेरपि कन्यादानेऽधिकारः स्मर्यमाण उपपद्यते । अत एव च " न भूमिः स्यात् सर्वान् प्रत्याविशिष्टत्वात् " इत्यनेन सार्वभौमस्य वा माण्डलिकस्य वा भूमिदानं निषिध्यते । अन्यथा " क्षत्रियस्य विजितम् " इति गौतमवचनात् विजि-

यस्य स्वत्वोत्पादकत्वेन भूमेरपि स्वत्वाद्दानं केन वार्यताम् । तस्मात्स्वत्वमिदं पालनाधिकारप्रयोजकमित्येव फलति । एवं भार्यापुत्रादावपि स्वत्वस्य धर्मानुष्ठानप्रयोजकत्वेन तन्मूलकदानविक्रयादीनामसंभव एवेति न तद्दानम् । अधिकं चात्र यद्वक्तव्यं तत्पूर्वमेव स्वत्वनिर्वचने विवेचितमिति तत एव द्रष्टव्यम् । सर्वथा तु लोभमूलकद्रव्यादानेनापत्यदानं विक्रय एवेति तन्मूलकत्वादासुरविवाहस्य न धर्म्यत्वमिति सिध्यति । यत्तु यावद्वचनं वाचनिकमिति न्यायेन नियतपरिमाणरूपत्वान्न शुल्कत्वं गोमिथुनस्येति । तत्तु सोमक्रयण्यादिषु व्यभिचरितमिति न समञ्जसम् । स्पष्टं चेदं वीरमित्रोदये। तस्माल्लोभालोभमूलक एव खलु आर्षासुरविवाहयोर्विशेषः । अत एव मनुवाक्यानां संगतिः । नन्वेवमधर्म्यविवाहानां कथमुपदेशो धर्मशास्त्र इति चेत् त्रिधा हि धर्मशास्त्रस्योपदेशो दृष्टार्थोऽदृष्टार्थ उभयार्थश्च । तत्र दृष्टार्थस्य दृष्टार्थेनैव प्रामाण्यम् । अदृष्टार्थस्य तु शास्त्रैकगम्यम् । उभयार्थस्य परं दृष्टार्थांशे लोकविद्विष्टत्वाच्छास्त्रनिषिद्धत्वादधर्म्यत्वेऽप्यदृष्टांशे शास्त्रैकगम्यप्रामाण्यस्याप्रतिहतत्वेन तादृूप्येणैव धर्मशास्त्रे संग्रहः । तथा च कन्याशुल्कस्याधर्म्यत्वेऽपि विवाहस्यादृष्टमात्रार्थकस्य प्रत्याख्यातुमशक्यत्वात्तन्मूलकस्तादृशो विवाहोऽपि शास्त्रीयचोदनाविषयो भवितुमर्हतीति धर्मशास्त्रोपदेशः । तथा चैतादृशे विषये धर्म्यत्वाधर्म्यत्वयोरुभयोरपि संभवात् यथाकथंचिदनुमतत्वेऽपि पूर्णांशेन धर्म्यत्वाभावादेवाधर्म्यत्वम् । एवं च शुल्कादातुस्तदादानमूलकदुर्गतिप्राप्तावपि कन्याप्रतिग्रहीतुस्तु भार्याप्राप्तौ तन्मूलकधर्माधिकारसिद्धिरप्रतिहतैव न हि कुत्रापि निषेधः प्रतिग्रहीतुरस्ति शुल्कदाने । एवं च भार्यालाभाय प्रयत्नवता सर्वमपि उपायजातं कर्तव्यमेव । कन्यादातुस्तु कन्यादानमूलकालौकिकफललाभाय निष्कामतयैव तद्दानं विधेयमिति फलति । एवमेव राक्षसविवाहेऽपि। पैशाचस्तु न विवाहः । सर्वथा लोकगर्हितत्वात् । न हि मत्तप्रमत्ताद्यवस्थायां संस्काराभावेऽपि मैथुनायोपगमनं कुत्रापि विधीयते । केवलं स्थितस्य गतिश्चिन्तनीयेति न्यायेनैव प्रतीकारासंभवे भार्यात्वसिद्धिरनुमन्यते । नैतावता कुत्राप्यंशे धर्म्यत्वम् । अत एव कन्यासंदूषणमिति-साहसं परिगण्यते । शक्तौ च तत्र न कन्यादानं भवति । किंतु प्रायश्चित्तेन शुद्धिं कृत्वा परस्मै कन्यादानं तत्र संभवति । अत एव

> बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
> अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥

इत्यादिवचनं संगच्छते । अत्र बलादिति छलादेः, अपहृतेति संदूषणादेरुपलक्षणम् । एवं च विवाहे निष्कामकन्यादानमेव धर्म्यत्वप्रयोजकम् । तदभावे तु न धर्म्यत्वम् । एवं च ब्राह्मदैवार्षप्राजापत्यगान्धर्वाणां शुद्धधर्म्यत्वम् । आसुरराक्षसादिषु लोभक्रोधमूलकत्वेनांऽऽशिकाधर्म्यत्वमिति फलति । पैशाचस्य तु सर्वथाऽधर्म्यत्वम् । यद्वा देशकालपात्राद्यपेक्षया धर्म्यत्वाधर्म्यत्वे । एवं च शिष्टपरिगृहीतानां ब्राह्मविवाहस्य विशिष्टप्रजोत्पादकत्वेन धर्म्यत्वेऽपि अन्येषां न धर्म्यत्वमिति ।

शास्त्रेषु सर्वविधमानवधर्मोपदेशात् । निषेधवचनानां तदितरपरत्वात् च । तत्सिद्धं धर्म्यप्रजोत्पादन-
मेव विवाहस्य परमं प्रयोजनमिति तदर्थं धर्म्यविवाहस्याऽऽवश्यकतेति ।

यत्तु शुनःशेफाद्युदाहरणेनापत्यविक्रयस्य धर्म्यत्वमिति केषांचिन्मतम्। तदतितुच्छम्। न ह्यजी-
गर्तेन पुत्रविक्रयः कृत इत्येतावता सर्वेषां पुत्रविक्रयाऽधिकारः कल्पयितुं शक्यः। तस्य लोभमूलकत्वात्।
अत एव गोसहस्रदानानन्तरमपि यूपबन्धनावसरे पुनरपि तत्पित्रा गोसहस्रं प्रार्थितमुपपद्यते। अत
एव चोपाख्यानानां न तत्त्वान्वाख्याने तात्पर्यमिति भट्टपादानामुद्घोषः। उपाख्यानेषु कामक्रोध-
लोभादिमूलकोपाख्यानानामपि संभवात्। अतश्च तेषां हेयत्वेनैव तात्पर्यं परिकल्पनीयम्। एवं च
धर्मशास्त्रीयापत्यविक्रयनिषेधविरोधादेतादृशोपाख्यानानां न स्वार्थे तात्पर्यम्। यत्र हि शास्त्रवि-
हितमपि कामक्रोधादिमूलकं चेदप्रमाणं भवति, तत्र कैव कथा शास्त्रविरुद्धानाम्। अन्यथा
"वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाती" त्यादीनामपि प्रामाण्यप्रसक्तौ सर्वथा "हेतुदर्शनाच्चेति"
सूत्रस्य वैयर्थ्यं स्यात्। भट्टपादमतेऽपि अननुष्ठानलक्षणमप्रामाण्यमेतादृशां वर्तत एव। अत एव
"अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु इति वचनमुपपद्यते। अधिकं चात्र पूर्वमेव प्रमाणप्र-
तिबिम्बे स्मृतिप्रामाण्यप्रस्तावे विवेचितमिति तत एवावगन्तव्यम्। तत्सिद्धं सुप्रजस्त्वमेव
विवाहप्रयोजकमिति ।

## ( प्रजोत्पादनातिभारविचारः )

इदमत्र विचार्यते यदिदं प्रजाजननमवश्यकर्तव्यतया विहितं "आचार्याय प्रियं धन-
माहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" इति। को वाऽत्राधिकारीति। किं पुरुष एवोत स्त्र्यपि
वोभावपीति। तदनुषङ्गेणेदमपि विचार्यते यद्द्रव्यार्जनविद्याग्रहणयोरपि को वाऽधिकारीति। तदेवं
ऋणत्रयापाकरणरूपसंसारस्यातिभारोऽयं किं स्त्रीपुंसयोरुभयोरप्येकस्यैव पुरुषस्य वा स्त्रिया इति
पर्यवस्यति ।

अत्रापरे समतावादिनः प्रत्यवतिष्ठन्ते। तेषामयमाशयः— जगदन्तःपातिनां पदार्थानामुप-
योगो हि निसर्गसिद्धकार्यशक्तिमवलोक्यैव किल विधेय इति प्रेक्षावत्प्रवृत्तिः। तदत्र स्त्रीपुंसरूप-
पदार्थानामपि तथैवोपयुक्तत्वं न्याय्यम्। तथा चोभयत्रापि ज्ञानशक्तेः कर्मशक्तेश्चाविशेषात्तयोरुभयो-
रपि ज्ञाने कर्मणि चाधिकारः सिध्यति। तत्र नैसर्गिकयोग्यतानुसारेण यत्र विषये येषां ज्ञानं
सुगमम्, यत्र च कर्मणि येषां क्रियाशक्तिप्रसरः, तत्र तेषां विनियोगे न केनापि प्रतिरोद्धव्यम्।
ततश्च स्त्रीणामपि स्वीयशक्त्यनुसारेण ज्ञाने कर्मणि तद्द्वारा द्रव्यार्जने चाधिकारोऽप्रतिहत एव
सिध्यति। एवं च तदर्थमपेक्षितानां धार्मिकाधार्मिकसंस्काराणामप्यविकारो निर्बाध एव। यद्यपि नैस-
र्गिकगर्भधारणादिना तासां परावलम्बित्वमापतति। नैतावता तादृशाधिकारनियमनं सांप्रतम्।

तत्रापि तादृशयोजनासंभवेनाधिकारनिरोधस्य कथमप्ययुक्तत्वात्। तथा च यथा पुरुषेण ज्ञानाधिगमः, द्रव्यार्जनं संतानोत्पादश्चावश्यमेव विधातव्यः, तथा स्त्रिया अपीति सिध्यति। एवं च स्त्रीणामपि तादृशाधिकारे स्वातन्त्र्येण सिद्धे पुरुषवत्स्त्रीभिरपि व्यवसायेन द्रव्योपार्जनम्, तदनुकूलज्ञानाधिगमः, संतानोत्पादश्चावश्यमेव कर्तव्यः। तथा चैकस्मिन् पत्यौ मृतेऽपि निःसंतानया पुरुषवद्विवाहान्तरं कृत्वा प्रजोत्पादयितव्या, धर्मकार्याणि च कर्तव्यानि इति सिध्यति। एवं च " नापुत्रस्य लोकोऽस्ति " " प्रजातन्तुं मा व्यवच्छेत्सीः " इत्यादिनिषेधवाक्यानां " ग्रहं संमार्ष्टि " इतिवत् लिङ्गवचनयोरविवक्षया सामान्यपरत्वमेव। अत एव " सोमेन यजेत, स्वाध्यायोऽध्येतव्यः, प्रजामुत्पादयेत् " इत्येवं विधीनां " जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यः यज्ञेन देवेभ्यः प्रजया पितृभ्यः, इति। स वै तर्ह्यनृणो यदा यज्वा ब्रह्मचारी प्रजावानिति " इति ऋणवाक्येन संयोगान्नित्यत्वं प्रसाध्य वर्णकान्तरेण भूयोऽपि शङ्कितम्—किमेते सोमादयो ब्राह्मणस्यैव नियताः, उत सर्वेषां नियता इति। किं प्राप्तम्। ब्राह्मणस्यैव नियता नेतरयोरिति। कुतः। एवं श्रूयते—जायमानो ह वै ब्राह्मण इति ब्राह्मणस्य नियमो दृश्यते नेतरयोः। ब्राह्मणसंकीर्तनात्। एवं प्राप्ते ब्रूमः।

सर्वेषां नियमः। कुतः। अविशेषेण नियमविधानं यत्तदकामसंयुक्तं वचनं नियामकम्। तदविशिष्टं सर्वेषाम्। तस्मात्सर्वेषां नियम इति। ननु जायमानो ह वै ब्राह्मण इति ब्राह्मणस्य संकीर्तनम्। उच्यते। भवत्यस्मिन् वचने ब्राह्मणसंकीर्तनम्। न ह्येतद्वचनं नियमस्य विधायकम्। एतैरकामसंयुक्तैर्वचनैर्विहितस्य नियमस्यानुवादोऽयमवदानस्तुत्यर्थः। तस्मान्नात्र ब्राह्मणसंकीर्तनेन राजन्यस्य क्षत्रियस्य वाऽनियमो विधीयते। ब्राह्मणग्रहणं तु प्रदर्शनार्थम्। जायमानो ब्राह्मणो राजन्यो वैश्यश्चेति। तथा जायमानो जातश्चेति

कृत्वा ब्राह्मणमग्रतः" इत्यादीनि वचनान्युपपद्यन्ते। अत एव च शूद्रकमलाकरादिषु शूद्राणां संस्कारश्राद्धपद्धत्याद्युपवर्णनम्। शूद्रस्य वृत्त्युपवर्णनेन धनार्जनं त्वविप्रतिपन्नमेव। तथैव संतानोत्पादोऽपि। एवं च सर्वेषामेव ऋणत्रयापाकरणमत्यावश्यकमित्यत्र तु न सनातनवैदिकधर्मशास्त्रस्यापि विमतिः। इयान् विशेषो यद्दम्पत्योः सहाधिकारोपवर्णनमिदं केवलं यज्ञादिष्वेव वा प्रजोत्पादनेऽपि। तत्र सहाधिकाराधिकरणं चेत्थम्।

## स्ववतोस्तु वचनादैकधर्म्यं स्यात्॥ १७॥

स्ववन्तावुभावपि दम्पती इत्येवं तावत्स्थितम्। तत्र संदेहः। किं पृथक् पत्नी यजेत, पृथक् यजमानः, उत संभूय यजेयातामिति। किं प्राप्तम्। पृथक्त्वेन। कुतः। एकवचनस्य विवक्षितत्वात्। उपादेयत्वेन कर्ता यजेतेति श्रूयते। तस्मादेकवचनं विवक्ष्यते। यथा न द्वौ पुरुषौ संभूय यजेयाताम्। तथाऽत्रापि द्रष्टव्यम्।

एवं प्राप्ते ब्रूमः। स्ववतोस्तु वचनादैकधर्म्यं स्यात्। वचनात्तयोः सहक्रिया। एवं हि स्मरन्ति धर्मे चार्थे च कामे च नातिचरितव्येति। तथा सहधर्मश्चरितव्यः सहापत्यमुत्पादयितव्यमिति। उच्यते। स्मृतिवचनेन श्रुतिवचनं न युक्तं बाधितुम्। नेति ब्रूमः। इह किंचित्कर्म स्त्रीपुंसकर्तृकमेव। यथा दर्शपूर्णमासौ ज्योतिष्टोम इति। यत्र पत्न्यवेक्षितेन यजमानावेक्षितेन चाऽऽज्येन होम उच्यते। तत्रान्यतराभावे वैगुण्यम्।

ननु पुंसो यजमानस्य यजमानावेक्षितमाज्यं स्त्रिया यजमानायाः पत्न्यवेक्षितं भविष्यतीति। नेत्याह। नायमीक्षितृसंस्कारः। ईक्षितुः संस्कारो यदि, तदेवं स्यात्। आज्यसंस्कारश्चायम्। सर्वाङ्गोपसंहारी च प्रयोगवचनः। तत्रैतद्गुणभूतावीशितारौ। तत्रान्यतरापाये नियतं वैगुण्यम्। स्त्रियं त्ववेक्षित्रीमिति तच्च न। स्यात्। स्त्री यजमाना पुमांसं परिक्रेष्यत्याज्यस्येक्षितारम्, पुमांश्च स्त्रियं त्ववेक्षित्रीमिति तच्च न। पत्नीति हि यज्ञस्य स्वामिनीत्युच्यते न क्रीता। पत्नीति संबन्धिशब्दोऽयम्। यजमान इति च स्वामी न क्रीतः। तस्मात्स्त्रीपुंसयोरेकमेवंजातीयकं कर्मेति। तत्र श्रुतिसामर्थ्याद्यः कश्चिद्यया कयाचित्संभूय यजेतेति प्राप्ते इदमुच्यते यस्त्वया कश्चिद्धर्मः कयाचित्सह कर्तव्यः सोऽनया सहेति। तेन न श्रुतिविरोधः स्मृतेरिति गम्यते। अथ यदुक्तं केवलस्य पुंसोऽधिकारः केवलायाश्च स्त्रियाः। यजेतेत्येकवचनस्य विवक्षितत्वादिति। तत्परिहर्तव्यम्।

इदं तावदयं प्रष्टव्यः,यजेतेत्येकवचने विवक्षिते कथं षोडशभिर्ऋत्विग्भिः सह यागो भवतीति। एवमुच्यते प्रतिकारकं क्रियाभेदः। याजमानानेव पदार्थान् परिक्रयादीन् कुर्वन् यजत इत्युच्यते यजमानः। आध्वर्यवानेव कुर्वन्नध्वर्युर्यजतीत्येवमुच्यते। यथा संभरणमेव कुर्वती स्थाली पक्ति

करोतीत्युच्यते । यस्य च कारकस्य य आत्मीयो व्यापारः, स एकवचने विवक्षिते एकेन कर्तव्यो भवतीति । एवं चेयावान् व्यापारो यजमानस्य, तावान् न संभूय कर्तव्यः । एकेनैको याजमानोऽपरेणापरः । द्वादशे वा शते एकेन षट्पञ्चाशत्, अपरेणापि षट्पञ्चाशदिति । इह तु पत्नीव्यापारोऽन्य एव । न तत्र पत्नी प्रवर्तमाना यजमानस्यैकत्वं विहन्ति । यथाऽध्वर्युराध्वर्यवेषु प्रवर्तमानः । अवश्यं च सह पत्न्या यष्टव्यम् । मध्यगं हीदं दम्पत्योर्धनम् । तत्र यागोऽवश्यं सह पत्न्या कर्तव्यः । इतरथाऽन्यतरानिच्छायां त्याग एव न संप्रवर्तेत । तथा हि द्वितीयया पत्न्या विना त्यागो नैवावकल्पते । यस्य द्वितीया पत्न्यस्ति । तत्र क्रत्वर्थानेका करिष्यति । कर्तृसंस्कारार्थेषु नैव दोषः । संभवन्ति हि तानि सर्वत्र इति ।

एतेन सहाधिकारप्रतिपादकशावरभाष्यसंदर्भेण स्पष्टमिदमवगम्यते यत्स्मार्तवचनैकवाक्यतयैव हि सहाधिकारसिद्धिः । तत्रेदमुच्यते यथा यः कश्चित्कयाचिद्धर्म आचरितव्यः सोऽनया सहेत्येव न वाक्यार्थः । किंत्वनयैव सहेति सर्ववाक्यानां सावधारणत्वात् । अत एवास्यां जनिष्यमाणसंतत्येति कन्यादानसंकल्पे त्वत्त एवेत्यूह्यते न तु यस्मात्कस्मादपि । तथा च परिणेतुर्मरणे न पुनः संतत्यर्थदानं तस्या इति सनातनीया वदन्ति । एवमेव मृतायां पत्न्यां पुनश्च धर्माचरणार्थमपि पत्नीसंग्रहो न स्यात् । न वा युगपदनेकपत्नीसंग्रहः । एवमापत्तौ तु वचनान्तरेण तादृशवाक्यार्थे बाधित्वापि पुनश्च पत्नीसंग्रहो युगपद्वाऽनेकपत्नीसंग्रहः सनातनीयैरनुमन्यते । एवमत्रापि स्मार्तवचनेन सहाधिकारसंबन्धबोधनेऽपि पतिमरणानन्तरं नैसर्गिकऋणत्रयापाकरणाधिकारसिद्ध्यर्थं स्त्रिया अपि पत्यन्तरविधानं स्यादेव । तथा च यस्या निष्प्रजस्त्वमेव । तया प्रजार्थं धर्मार्थं च पुनः पत्यन्तरसंग्रहापत्तिः सनातनीयानामुपर्यन्याहतैव । तदपेक्षया वैदिककर्माधिकारोऽस्तु नाम दम्पत्योः सहैव । तथापि प्रजोत्पादनं द्रव्यार्जनं ज्ञानाधिगमश्च न स्त्रीणां निवारयितव्यम् । युक्तं चैतत् । पत्युर्निःसंतानत्वे निर्धनत्वे च मरणे पत्न्याः स्वोदरपूरणार्थं कश्चन व्यवसायस्त्ववश्यमेव कर्तव्यतया समापतति । तथा स्वाधिकारप्रयोज्यपूर्तकर्मादौ स्त्रीणामप्यधिकारस्याव्याहतत्वाद्धर्माचरणमपि स्वातन्त्र्येण सिध्यति । तत्किमपराद्धं प्रजोत्पादनाधिकारेण । एवं च पत्युर्मरणे पत्यन्तरनिषेधोऽयं स्त्रीणां वैषम्यदृष्टिमेव प्रकटीकरोतीति । सा च स्मार्तवचनोपनिबद्धा । अत एव किल स्मार्तवचनानां पौरुषस्थितिमूलकत्वमभिप्रेयते आधुनिकैः । स्मार्तवचनैश्च स्त्रीदेहस्य प्रजोत्पादनक्षमत्वेऽप्यनुपयुक्तत्वं प्रतिपाद्यते । पुत्राभावे च परलोकप्राप्तिर्न भवतीति वैदिकवचनविरोधमङ्गीकृत्यापि स्त्रीणामधोगतिः क्रियते । तदलमेतादृशस्मार्तवचनस्याप्रामाण्यम् । येन स्त्रीणामपि यथावदृणत्रयापाकरणाधिकारः स्यात् । तस्मात्पुरुषवत्स्त्रीणामपि स्वातन्त्र्येण संसारातिभारो निर्बाध एव । यत्र तु कर्मणि न स्वातन्त्र्येणाधिकारः, तत्रास्तु नाम पत्या सहैवाधिकारः । एवमपि पत्यन्तरेण तादृशाधिकारसिद्धिः स्यादेव । इति ।

अत्रेदं विचारणीयम्—यदयं प्रजोत्पादनाधिकारः स्वातन्त्र्येण स्त्रीपुंसयोरपि प्रतिपाद्यते । स किं तथाविधः संभवति न वेति । अधिकारो हि नाम कार्यकारित्वम् । न तु कार्यानुकूलयोग्यतामात्रम् । सत्यामपि योग्यतायां कार्यादर्शनात् । न हि सत्यामपि विद्यायां योग्यछात्रालाभेऽप्रदीयमानायां अध्यापकत्वाधिकारः संभवति । छात्रसंप्रदानकविद्यादानमूलकत्वात्तस्य । तथा च सत्यपि छात्रे दानाभावे नाध्यापकत्वाधिकारः । एवमत्रापि सत्यामपि संतानोत्पादयोग्यतायां संतानोत्पादकबीजधारणं विना न तादृशाधिकारसिद्धिः । एवं पुरुषस्यापि बीजाधानं विना नैव प्रजोत्पादनाधिकारः सिध्यति । एवं च प्रजोत्पादनकार्यकर्तृत्वं विना तादृशाधिकारसिद्धेरभावात्तस्य च परस्परसापेक्षत्वात् तादृशाधिकारोऽपि परस्परसापेक्ष एव । तथा सति पुरुषेण स्त्रीव्यक्तिरपेक्षणीया । स्त्रिया च पुरुषव्यक्तिः । एवं प्रजोत्पादनकार्यस्योभयसापेक्षत्वात् तदधिकारोऽप्युभयोर्व्यासज्यवृत्तिरेव न प्रत्येकं पर्याप्तः । तथा च यथोभयावेक्षिताज्येनैव होमः । तत्रैकतरापाये कर्मवैगुण्यमित्यत उभयोर्व्यासक्त एवाधिकारः । एवमत्रापि एकतराभावे आनर्थक्यादुभयोरेवाधिकार इति युक्तमेव । तत्रायं विमर्शो यत्केन सह कस्य संगम इति । किं स्त्रिया पुरुषः परिणेतव्यः, आहोस्वित्पुरुषेण स्त्री परिणेतव्या । यश्च परिणेता, तस्य भर्तृत्वेन प्राधान्यमितरस्य तु गौणत्वम् । तत्र किं पुरुषस्य प्राधान्यमपेक्षितमुत स्त्रिया इत्यत्र किं वा समतावादिनामभिप्रेतमिति तु न विद्मः । इदं तु प्रत्यक्षमेवाऽऽपामरं सर्वत्रोपलभ्यते यत्परिणयानन्तरं स्त्री पुरुषगृहं गच्छतीति । किमत्र निदानम् ? वयं तु भर्तृत्वमेव तत्र निदानमालोचयामः । भरणं हि स्वतन्त्रेण परतन्त्रस्य भवति । तत्कर्तृत्वमेव भर्तृत्वम् । एवं चानुशासनं " स्वतन्त्रः कर्ते " ति । तच्च पुरुषस्यैव न स्त्रियाः । पौरुषत्वात् । गर्भधारणेन हि स्त्रीणां भरणे पारतन्त्र्यं नैसर्गिकमेव । क्षेत्रत्वाद्बीजाधारत्वं तासाम् । पुरुषस्तु बीजाधायकत्वेन सर्वदा स्वतन्त्र एव । आधानानन्तरमाहितं बीजं स्त्रिया परिपालनीयं संवर्धनीयं च भवति । परस्वपरिपालनसंवर्धनयोः कृते काचन भृतिरपेक्ष्यत एव । नो चेत्किमर्थं परिपालनीयं संवर्धनीयं च । तथा च स्त्रिया एव भृतेरपेक्षा न पुरुषस्येति पुरुषो भर्ता भार्या च स्त्रीत्येव सांप्रतम् । भरणकर्तुः स्वातन्त्र्याद् भार्यायाश्च पारतन्त्र्यात्तयोः संबंधोऽपि तथाविध एव सिध्यति यत्पुरुषस्य प्राधान्यं स्त्रियाश्च गौणत्वमिति । तथा च गौणमुख्ययोर्मुख्य एव कार्यसंप्रत्यय इति न्यायेन पुरुषस्यैवायमतिभारः सर्वसंसारस्येति युक्तमेव । फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः खलु सर्वत्रैव । यज्ञादिवत् । अत एव विवाहसंस्कारेण पतित्वपत्नीत्वयोरुभयोरपि सिद्धत्वेऽपि पुरुषेणैव स्त्री विवाह्या न तु स्त्रिया पुरुषः । तदुक्तं मनुना—

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥ ३।४

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥

इत्यादि । यद्यप्यत्र विधौ " स्वर्गकामो यजेत " इतिवदुद्देशगतत्वेन पुंलिङ्गस्याविवक्षा । तथापि " पशुमालभेते " तिवदुपादेयगतभार्यास्त्रीत्यादिशब्दगतस्त्रीलिङ्गस्य विवक्षितत्वेन पुरुषेण स्त्री विवाह्या न तु स्त्रिया पुरुष इति फलति । अन्यथा तु स्त्रिया स्त्री वा पुरुषेण पुरुषो वा विवाह्य इत्यपि स्यादिति सम्यगेव समतावादः प्रस्थापितः स्यात् । तदेवं ऋणत्रयबोधकवाक्येन सामान्यतः सर्वाधिकारित्वेन तद्विधानेऽप्यन्ततस्तस्यातिभारोऽयं पुरुषाणामुपर्येव वर्तते । एवमेव द्रव्योपार्जनविद्याधिगमयोरपि । न वयं स्त्रीणां स्ववत्तां निराकुर्मः । स्वामिनी हि खलु भार्या न स्ववत्तां विना तथा भवितुमर्हति । एवमपि भर्तृसहकारेणैव किल तस्याः स्ववत्ता न स्वातन्त्र्येण तथा विद्याधिगमोऽपि । न हि यज्ञेऽवश्यमुच्चारणीया मन्त्राः स्त्रीणां न पाठनीयाः, न वा गार्गीमैत्रेय्यादिवद्ब्रह्मज्ञानोपासनादिकं तासां नास्तीति । एवमपि भर्तृसहकारेणैव तासां तद्विधेयं न स्वातन्त्र्येण । यच्च शिल्पादिज्ञानं तद्द्वारा च द्रव्यार्जनमित्यादि । तदपि भर्तृसहकारेणैव न स्वातन्त्र्येण । अत एव कामशास्त्रे चतुःषष्टिकलोपदेशेऽपि—

आभिरभ्युच्छ्रिता वेश्या शीलरूपगुणान्विता ।
लभते गणिकाशब्दं स्थानं च जनसंसदि ॥ १।३।२०
पूजिता सा सदा राज्ञा गुणवद्भिश्च संस्तुता
प्रार्थनीयाऽभिगम्या च लक्ष्यभूता च जायते ॥ २१ ॥

इति वेश्याविषये तासामुपयोगं प्रदर्श्य

योगज्ञा राजपुत्री च महामात्रसुता तथा ।
सहस्रान्तःपुरमपि स्ववशे कुरुते पतिम् ॥ २२ ॥
तथा पतिवियोगे च व्यसनं दारुणं गता ।
देशान्तरेऽपि विद्याभिः सा सुखेनैव जीवति ॥ २३ ॥

इति स्त्रीविषये पत्युर्वशीकरणमापत्काले चोदरभरणं चोपयोगत्वेन प्रतिपादिते । अन्यथा हि तादृशकलाद्वारा स्वातन्त्र्येण द्रव्योपार्जने भार्यात्वाभावापत्तौ प्रजोत्पादनव्याघातप्रसङ्गः । अतश्च पत्युरुपार्जितद्रव्येण यौतकादिना चैव तासां स्ववत्त्वमवश्यमङ्गीकरणीयम् । एवं च तासामपि ऋणत्रयापाकरणाधिकारे स्त्रीणां पुरुषपारतन्त्र्येणैव तदपाकरणीयमिति फलति ।

यच्च निर्गुणोद्भिद्रकार्येषात्मिन्नलोकस्य पदार्थानामुपयोगः करणीय इति । सत्यं तथापि विचारणीयः । एवमपि यावतां कार्याणां सम्भवस्तत्र सर्वत्र सर्वस्योपयोगः कर्तव्यः, आहोस्वित् कतिपयेष्वेव कार्येषु । यदि च सर्वत्र, तदा कार्याणामपि साधनानामनुपयोगः, योग्यायोग्यविवेकशून्यः

रुपयोगः, साहसेष्वपि कर्मशक्तेरुपयोगः कर्तव्यतया समापतति । इष्टापत्तिरिति चेत्सम्यक् खलु मानवताऽऽविष्कृता स्यात्समतावादिभिः । यदि चाभिमतकार्येष्वेवोपयोगस्तादृशशक्तेस्तदा वक्तव्यं किं वाऽभिमतं कस्य वा । प्रतिव्यक्ति अभिमानस्य विविधत्वेन भवदभिमतस्यैवाभिमतत्वं नान्यस्येत्यत्र प्रमाणं वक्तव्यम् । एवमेवेष्टानिष्टत्वे अपि व्याख्येये । यदि च राष्ट्रकल्याणं वा योगक्षेमनिर्वाहो वा राष्ट्रस्येति गमकं स्यात्तत्र । तदापि कल्याणस्य वा योगक्षेमनिर्वाहस्य वा स्वरूपं वक्तव्यम् । अस्ति च विप्रतिपत्तिः सर्वत्रैहिकसुखोपभोग एव कल्याणमित्यत्र । दृश्यन्ते हि भोगेभ्यः क्लिष्टाः विरागिणः । तत्किंवोद्देश्यमुपलक्ष्योपयोगः कर्तव्य इत्यत्र समतावादिनां न किमप्युत्तरम् । न ह्यैहिकभोग्यसंपत्तिपुरस्कारेण जनानां योगक्षेमनिर्वाहः सुकरो भवतीत्यसकृदेवोक्तं पुरस्तात् तदगत्या मनसः समाधानार्थं चित्तनिग्रहवशीकारादिसंपत्तये सर्वान्तर्यामिपरमेशाराधनार्थमेव प्रयतनीयम् । तच्च यथाशास्त्रमनुष्ठानेनैव नान्यथेति युक्तः पन्थाः । तच्च शास्त्रमपि न पुरुषसंविद्रूपम् । अपितु नैसर्गिकक्रियाशक्तिमूलकमेवापौरुषेयमित्येव सिद्धान्तः । एवं च विद्यापि न सर्वा सर्वस्य । किंतु आराधनप्रकारानुकूलैव तत्तदाराधकस्य विभिन्ना । नहि सर्वस्य सर्वकार्ययोग्यतायामपि सर्वं सुकरं भवति । अतश्च यस्मिन्यस्य नियोगः, तदनुकूलं तस्य ज्ञानं क्रिया चाऽऽवश्यकमित्येव समतावादिनामपि व्यावहारिकः पन्थाः । तत्किमपराद्धं वैदिकपद्धत्या । यत्र किल विषमताभासः समतावादिनाम् । उभयवेतनाः खल्विमे शत्रुचारा इत्यप्यतो वक्तुं शक्यम् । अस्तु वा तत्त्ववादित्वम् । एवमप्यतत्त्वे तत्त्वाध्यवसायिनामेतेषां भ्रान्तमिदं विज्ञानं न केनापि स्वीकरणीयमित्येव सिध्यति ।

तदेवमभिलषितफलसाधनत्वेन यज्ञक्रियासु वर्तमानं सामर्थ्यं नैसर्गिकमेवेति परम्परया तदनुष्ठानप्रचारस्यातिभारोऽयं पुरुषाणामुपर्येवेति तदध्ययनं तदनुगुणोपनयनसंस्कारश्च पुरुषाणामेवेति तदवश्यकर्तव्यता पुरुषाणामुपदिष्टा धर्मशास्त्रेण । तत्रापि पिण्डगतावान्तरतारतम्यमूलकविशेषानुसारेण ब्राह्मणक्षत्रियविशामेव सा न शूद्रस्य । शूद्रस्य तु शिल्पादिज्ञानमावश्यकमिति तदध्ययनं तु न केनापि निवार्यते । पौराणमन्त्रपाठादिकं यदि धर्मकार्यार्थं तेषामावश्यकम् । तदपि न शास्त्रेण निवार्यते । अत एव तान्त्रिकनाममन्त्राद्युपदेशस्तेषामव्याहत एव प्रचलति । तदुपयुक्तसंस्कारविशेषा अपि तेषामप्रतिहता एव । अत एवोक्तं याज्ञवल्क्येन—

> भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः ।
> नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत् ॥ ५।१२१ ॥

अत्र मिताक्षरा यथा—

नम इत्यनेन मन्त्रेण पूर्वोक्तान् पञ्च महायज्ञान् न हापयेदनुतिष्ठेत् । नमस्कारमन्त्रं च केचित्—

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥

इति वर्णयन्ति । नम इत्यन्ये । तत्र वैश्वदेवं लौकिकेऽग्नौ कर्तव्यं न वैवाहिकेऽग्नावित्याचार्याः ॥ इति ।

तथा मनुरप्याह—

धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तमनुष्ठिताः ।
मन्त्रवर्ज्यं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥ १०।१२७ ॥

इति । अत्र मन्वर्थमुक्तावली यथा—

ये पुनः शूद्राः स्वधर्मवेदिनो धर्मप्राप्तिकामास्त्रैवर्णिकानामाचारमनिषिद्धमाश्रितास्ते "नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत्" इति याज्ञवल्क्यवचनान्नमस्कारमन्त्रेण मन्त्रान्तररहितं पञ्च यज्ञादिधर्मान् कुर्वाणा न प्रत्यवयन्ति ख्यातिं च लोके लभन्ते ॥ इति ।

एवं च पञ्चमहायज्ञपाकयज्ञादिषु शूद्राणामधिकारः स्पष्ट एव । तथा च तदनुकूलतादृशकर्मपरिपाटेर्ज्ञानमप्यावश्यकमेव । अतश्च संस्कृतभाषापि तेषां नाध्यापनीया इति वदन्तः केचन सनातनीयाः प्रत्याख्याताः । एवमेव "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः" इत्यातिदेशिकमनुवचनानुसारेणापध्वंसजानामपि तादृशधर्माधिकारोऽप्रतिहत एव । दृश्यते चेदानीमपि चाण्डालादिष्वपि विवाहौर्ध्वदेहिकादिक्रियाणामनुकरणरूपेण यथावदेवानुष्ठानम् । याजनाध्यापनादेस्तु वृत्तिरूपत्वान्न प्रचार इत्यन्यदेतत् । परंतु तेषां धर्मे सर्वथाऽनाधिकार इति तु न कुत्रापि अनुशासनम् । एवं च तत्तत्क्रियाकारिणां तेषां तेषां मानवानां तदनुगुणज्ञानमपि धर्मशास्त्रेणानुमन्यत एव । नैतावता विषमता समस्ति । तथाविधविषमतागाः समतावादिभिरकामैरप्यूरीकरणात् । योग्यविषये चाधिकारविषये च पुरस्तादेव चातुर्वर्ण्यप्रतिबिम्बे विवेचितमिति कणेहत्य तत्रैव निरीक्षणीयम् यत्तु—

न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥ ४।८० ॥

इति मनुवचनम् । तत्तु साक्षाद्धर्मोपदेशनिषेधकम् । मध्ये ब्राह्मणं कृत्वोपदेशस्तु न विप्रतिपन्नः । अत एव श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ॥ इति वचनं संगच्छते । अन्यथा पुराणरचनावैयर्थ्यप्रसङ्गात् । तथा च

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥
इति भारतमाख्यानं कृपया मुनिना कृतम् ।

इति व्यासवचनं तत्रापरितुष्टेन व्यासेन श्रीमद्भागवतप्रणयनं च विहितं संगच्छते । सर्वथा तु पुराणेतिहासद्वारा शूद्रादीनामपि धर्मज्ञानं न केनापि प्रत्याख्यातुं शक्यम् । अधिकं चात्रानुसंधेयं शूद्रकमलाकरादिषु द्रष्टव्यं नात्र विस्तरभयात्प्रतन्यते ।

तदेवं विवाहविधिना विवाहातिभारोऽयं पुरुषाणामुपर्येवेति सिध्यति । अत एव "प्रजातन्तुं मा व्यवच्छेत्सीः" इति वचनमपि पुरुषमेवाधिकरोति । इदं स्नातकस्योपदेशवचनम् । स्नातकश्चोपनीत एव । उपनयनं च पुरुषस्यैव न स्त्रियाः । "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्" इत्याद्युपनयनविधायकवाक्येषु विधेयविशेषणयोर्जातिपुंस्त्वयोः "पशुमालभते" इतिवद्विवक्षितत्वात् । अन्यथा कालभेदविधेरनुपपत्तेः । तथा च "स्वाध्यायोऽध्येतव्यः" इत्यपि वचनमुपनीतस्यैवाध्ययनविधायकमिति तत्रापि पुमानेवाधिकारी । न स्त्री । नैतावता स्त्रीणां सर्वथा ज्ञानाभावः । पुराणादिना तासामपि ज्ञानाधिगमसंभवात् । यज्ञादिषु सहानुष्ठाने तत्तत्कर्मोपयुक्तमन्त्रपाठस्याप्यभ्यनुज्ञानमिति तु पूर्वमेवोक्तम् । नैतावता वेदाध्ययनातिभारोऽयं स्त्रीणामुपरि शास्त्रेण प्रतिपाद्यते । एवं वृत्तिद्वारा द्रव्यार्जनमपि पुरुषस्यैवावश्यकर्तव्यतामावहति । तदर्जितद्रव्ये भार्यात्वेन स्त्रीणामप्यधिकारोऽव्याहत एव । सर्वथा संसारस्यातिभारोऽपि स्त्रीसहकारेण पुरुषाणामुपर्येव वर्तते इति तदनिर्वाहे पुरुष एव प्रत्यवैति न स्त्री । अतश्च दत्तकादिकमपि पुरुषमेवाधिकरोति न स्त्रियम् । स्त्रियास्तु पुरुषाभ्यनुज्ञयैवेति न स्वातन्त्र्येण स्त्रीणामधिकारः शास्त्रविहितः । नैतावता तासां पारतन्त्र्यं वा विषमता वा प्रजनार्थं तासामुत्पत्तेस्तदनुगुणपुरुषपारतन्त्र्यस्य भूषणत्वमेव न दूषणत्वम् । ये तु स्वैराचारविहारप्रिया राष्ट्रहितवावदूकास्तेषामेव मते केवलमिदं दूषणास्पदं स्यात् । न तु राष्ट्रियसुप्रजस्त्वाभिलाषुकाणां शास्त्रनिष्ठानां मत इति सर्वमवदातम् ।

## ( स्त्रीणामुपनयनाधिकारविचारः )

यत्तु "पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते"
अध्यापनं च वेदानां सावित्रीवाचनं तथा ।

इति वचनानुसारेण स्त्रीणामपि स्वातन्त्र्येणोपनयनाध्यापनयोरधिकार इति मतम् । तत्तु न युक्तम् । तथा सति प्रजातन्तुव्यवच्छेदनिषेधस्यापि तथात्वापत्तौ पतिमरणानन्तरमपि स्त्रीणां पुत्रार्थं पुनर्विवाहप्रसङ्गः । इष्टापत्तौ तु पुनर्विवाहनिषेधबोधकस्मृतिवचनानां विवाहविधौ दानादीनां चासंगत्यापत्तिः । तदर्थमेतद्वचनपरामर्शो नास्थाने भवितुमर्हतीति किंचिद्विचार्यते । अत्र विषये च वीरमित्रोदयस्यैव प्रथमतो विचारणीयत्वमापततीति तमेवात्रोपस्थापयामः । तत्र हारीतः—

"द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्येति । सद्योवधूनां तूपस्थिते विवाहे कथंचिदुपनयनमात्रं कृत्वा विवाहः कार्यः" इति ।

यमोऽपि—

पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥
पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः ।
स्वगृहे चैव कन्याया भैक्ष्यचर्या विधीयते ॥
वर्जयेदजिनं चीरं जटाधारणमेव च । इति ।

पुराकल्पेऽर्थवादविशेषे । तत्राऽऽर्थवादिकविधेः सार्वकालिकत्वे शिष्टस्मृतिविरोधदर्शनात्कल्पान्तर इति स्मृतिचन्द्रिकाकारः । पित्रादिरेवैनामध्यापयेन्न पर इत्यन्वयः । मनुरपि—प्राङ्नाभिवर्धनात्पुंस इत्युपक्रम्य नामकरणनिष्क्रमणान्नप्राशनचूडोपनयनकेशान्तान् पुरुषसंस्कारान् विधायान्ते पूर्वोक्तसंस्कारेतिकर्तव्यतां स्त्रीष्वतिदिशति ।

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥ इति ।

अत्रेयमिति सर्वनाम्ना बुद्धिस्थपरामर्शात्समानां च संस्काराणां बुद्धिस्थतयोपनयनस्यापि तदन्तर्गतत्वेनातिदेशात्स्त्रीणामप्यमन्त्रकमुपनयनं सिध्यति । ये तु चूडान्तानामेवेदमा परामर्शो नोपनयनकेशान्तयोरिति मन्यन्ते, तेषामसम्बन्धिव्यवधानेन विच्छिन्नबुद्धीनां परामर्शं वदतां कथमिव लज्जा नाऽऽननमानमयति । अथ "तूष्णीमेताः क्रियाः स्त्रीणाम्" इति याज्ञवल्क्यैकवाक्यतया चूडान्तानामेव परामर्शो नोपनयनादीनामिति वाच्यम् । तर्हि यमहारीतवाक्यैकवाक्यतयोपनयनपरामर्शोऽपि कथं नाङ्गीक्रियत इति । अथ—

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥

इत्येतन्मनुवाक्ये विवाहस्योपनयनस्थानापत्तिविधानान्यथानुपपत्त्या इदमः सङ्कोच इति न वाच्यम् । तस्य स्मृत्यन्तराभिहितोपनयनाभावपक्षे विवाहस्य तत्स्थानापत्तिविधायकत्वेनापि चरितार्थत्वात् । तस्मान्मनुवाक्ये नेदमः सङ्कोच इति ।

कर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति इति न्यायात्। अत एव संन्यासब्रह्मजिज्ञासादिकमप्युपनीतानामेव स्त्रीणां घटते। आश्रमसमुच्चयविकल्पयोरुपनयनपूर्वकत्वात्। तदयं निर्गलितोऽर्थः। ब्रह्मवादिनीनां गर्भाष्टमादौ मन्त्रवत्तूर्ष्णीं चोपनयनं ततो वेदाध्ययनं प्राग्रजोदर्शनात्समावर्तनं प्रागेव रजोदर्शनाद्विवाहश्चेति। सद्योवधूनां तूक्तविवाहकाल एवोपनयनं सद्य एव समावर्तनं सद्य एव विवाह इति। पुराकल्प इति वचनान्नास्मिन् कल्प इति गम्यते। अत एव मनुः—

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया॥

इत्यादिना विवाहस्योपनयनस्थानापत्तिमाह। वैदिको वेदग्रहणार्थः संस्कारःउपनयनं स स्त्रीणां वैवाहिको विधिर्विवाहजन्यसंस्कारः स्मृतः पूर्वैरिति मेधातिथिपाठार्थः। मिताक्षरादिपाठस्तु औपनायनिकः स्मृत इति तत्र औपनायनिक उपनयनकार्यकारी। ततश्च यथा पुरुषस्योपनयनादिस्तथा स्त्रीणां विवाहाविर्विधिनिषेधाधिकार इत्यर्थः॥ इति।

## ( वीरमित्रोदयविमर्शः )

अत्र यमहारीतादिस्मृतिवाक्यानुसारेण स्त्रीणामप्युपनयनं प्रतिपाद्यते। तत्र हारीतवचने ब्रह्मवादिनीत्वेन सद्योवधूत्वेन च कन्यानां द्विधा विभागं प्रदर्श्याग्नीन्धनवेदाध्ययनादिर्विशेषो ब्रह्मवादिनीनाम्, सद्योवधूनां च सद्य एव विवाहादिकमित्युपवर्ण्यते। एतत्सर्वं गर्भाष्टमादिवर्षेष्वेवेति वीरमित्रोदयस्य सिद्धान्तः। अत्रेदमालोचनीयं योऽयं विशेषो ब्रह्मवादिनीत्वेन सद्योवधूत्वेन च कन्यानामुपवर्णितः, उपनयननिमित्तत्वेन, सोऽयं अष्टवर्षात्मककन्यासु कथमालोचनीयः। नहीयं जातिः। गुणवचनशब्दनिर्देशात्। ब्रह्म वेदं वदति तच्छीला ब्रह्मवादिनीति तद्व्युत्पत्तेः। एवं सद्योवधूत्वमीप्सतीति सद्योवधूरिति। तथा च कन्यानां ब्रह्मवादिनीत्वं वा सद्योवधूत्वं वाऽष्टमे वर्षे तदिच्छाधीनमेव समायातम्। तथा चेच्छैवोपनयनसंस्कारप्रयोजिका स्यात्। न चैतद्युक्तम्। संस्काराणामवश्यकर्तव्यताव्याघातात्। अन्यथा पुरुषाणामपीच्छैवोपनयनप्रयोजिका स्यात्। तदभ्युपगमे च शास्त्रेण विहितस्य नात्यत्वस्यानुपपत्तेः। नहि स्वर्गकामनाऽभावे यागाननुष्ठाने प्रत्यवायः कुत्रापि काम्ये कर्मणि श्रूयते स्मर्यते वा। एवमुपनयनस्यापि अध्ययनकामनाप्रयोज्यत्वे काम्यत्वापत्तौ विहिताननुष्ठानजन्यप्रत्यवायाभावापत्तौ कथं अवश्यकर्तव्यत्वसिद्धिः। किंचेच्छेयं कन्यानां वोपनयनकर्तॄणामित्यपि विचारणीयम्। अष्टमे वर्षे किं वाऽध्येयमितीच्छायाः कथमपि न संभाव्यता। यथाकथंचित् संभवोपपत्तावपि योग्यतायास्तावज्ज्ञानं तूपनयनकर्तॄणामेव। एवं चोपनेयस्येच्छानुसारेण उपनयनं वोपनयनकर्तुर्जायमानस्योपनेययोग्यताज्ञानानुसारेण वेति संशये उपनेयेच्छापेक्षयोपनेययोग्यताया एव कार्यकारित्वात्प्राधान्यमवश्याभ्युपेयम्। तथा च ब्रह्मवादिनीत्वसंभावनायामेवो-

पनयनादिकम्, तदभावे च सद्योवधूत्वनिर्धारणमिति स्यात्। तत्र विनाऽध्यापनं नैव संभवतीति सर्वासामध्यापनतदनुगुणाग्नीन्धनादिकमादावापततीति को वा विशेषः साध्यते। वस्तुतस्तु संस्काराणां नित्यत्वेनावश्यकर्तव्यत्वादन्धबधिरादीनामपि तद्विधानाच्च नैव योग्यता वेच्छा वोपनयनप्रयोजिकेति वेदविरोधादियं स्मृतिरप्रमाणैव सिध्यति।

यत्तु "पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते" इति यमस्मृतिः। तत्रेदं विचारणीयम् कोऽयं पुराकल्पः? किमर्थवादविशेषो वा पूर्वः कल्पो वा? यद्यर्थवादस्तर्हि तु "वसन्ते ब्राह्मणमुपनयीत" इति प्रत्यक्षश्रुतिविरोधादर्थवादस्य न स्वार्थे प्रामाण्यं स्यात्। यदि च पूर्वः कल्पस्तदा तु प्रतिकल्पं श्रुतिभेदप्रसङ्गाद्वेदानां नित्यत्वव्याकोपः। न च "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" इत्यादिवचनानि तत्र प्रमाणम्। "धाता यथापूर्वमकल्पयत्" "यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा" इत्यादिश्रुतिविरोधात्। नित्यत्वं च वेदानां "शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्" इति शारीरकसूत्रे भगवता व्यासेन शब्दपूर्वकसृष्टिनिर्माणं सिद्धान्तयता सम्यगेवोपपादितामिति तत एव द्रष्टव्यम्। पूर्वमीमांसामते तु प्रवाहरूपेण सृष्टेरनादित्वाद्वेदानामप्यनादित्वेन नित्यत्वमेव किंबहुनाऽखण्डोऽयं शब्दराशिरनादिगुरुपरम्परयैव प्रचलित इति डिण्डिमः पूर्वमीमांसायाः सर्वत्र जोघुष्यते। तथा च श्रुतिविरोधात्कल्पानुसारेण श्रुतिभेदकल्पनमिदमप्रामाणिकमेव। प्रत्यक्षश्रुतिविरोधस्तु "वसन्ते ब्राह्मणमुपनयीत" इत्यत्र विशिष्टविध्याश्रयणेन ब्राह्मणपदगतपुंस्त्वस्य "अग्नीषोमीयं पशुमालभेत" इति पशुगतपुंस्त्वैकत्ववद्विवक्षितत्वात्स्पष्ट एव। न च पशोरुपादेयत्वेन विधेयत्वाच्चत्र तद्गतैकत्वपुंस्त्वयोर्विवक्षितत्वेऽपि विशिष्टविध्याश्रयणेन वाक्यभेदाभावात्तत्र तथाऽस्तु। इह तु "ग्रहं संमार्ष्टि" इतिवदुद्देश्यगतत्वेन तद्विवक्षायां च वाक्यभेदापत्तिरिति कथं विवक्षितत्वमिति वाच्यम्। "ग्रहं संमार्ष्टि" इत्यत्र ग्रहाणां "अंशुं गृह्णाति" "ऐन्द्रवायवं गृह्णाति" इत्यादिवाक्यान्तरैर्विधानात् प्राप्तानामनुवादेन संमार्गविधानमेव। अतश्च ग्रहाणामुद्देश्यत्वेन तद्गतसंख्याया विधाने साक्षात् क्रियान्वयासंभवेन वाक्यभेदापत्त्याऽविवक्षितत्त्वस्य युक्तत्वेऽपि प्रकृते संस्कार्यस्य ब्राह्मणादेरन्यतोऽप्राप्तत्वेन विधानादुपादेयत्वेन तद्गतलिङ्गसंख्ययोर्विधेयविशेषणत्वेन "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती" त्यादिवत् साक्षात् क्रियान्वयसंभवेन वाक्यभेदापत्तेरभावात् विवक्षाया युक्तत्वात्। न च "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिवाक्यैरत्रापि विहितस्यैव ब्राह्मणादेरुपनयनमनूद्य वसन्तादिकालमात्रविधानात्कथं ब्राह्मणादीनामुपादेयत्वमिति वाच्यम्। एवं तर्हि तत्रैव वाक्ये तद्विवक्षायाः सुवचत्वात्। वस्तुतस्तु विनिगमनाविरहेणोभयत्रापि विशिष्टविधिसंभवेन सर्वथा ब्राह्मणादिपदगतपुंस्त्वं विवक्षितमेव। अत एव कमलाकरभट्टमहोदयैः शूद्रकमलाकरे शूद्रस्योपनय-

नाधिकारविचारे उपनयनविधायकवाक्यगतब्राह्मणादिपदबोधितलिङ्गस्योपादेयगतत्वेन विवक्षितत्वमुपवर्णितं संगच्छते । स्पष्टप्रतिपत्तये च शूद्रकमलाकरमेवात्रोपस्थापयामः । तद्यथा—

( शूद्रकमलाकरोपष्टम्भः )

शूद्रस्य वर्णत्वेऽपि कर्मणां निषेधो वचनान्न्यायाच्चावगम्यते । तथा च शतपथश्रुतिः— पद्यु वा एतच्छ्मशानं यच्छूद्रः—इति । पद्भ्यां युज्यत इति पद्यु जङ्गममित्यर्थः । " तस्माच्छूद्रो यज्ञेऽनवक्लृप्तो न हि देवता अन्वसृज्यतेतितैत्तिरीयश्रुतिः । न्यायस्तु पूर्वमीमांसायामाद्याधिकरणसिद्धौ द्वैतीयिकः षाष्ठश्च । तथाहि—आद्येऽधिकरणे स्वाध्यायोऽध्येतव्य इत्यध्ययनस्य कर्मोत्पन्नतव्यश्रुत्या स्वाध्यायार्थत्वावगतेरक्षरग्रहणार्थत्वेन दृष्टार्थत्वात्तावतैव विध्यर्थविश्रान्तेर्विचारानाक्षेपान्मीमांसाशास्त्रं पूर्वपक्षे नाऽऽरम्भ्यम् । तेन विचारमकृत्वैव वेदमधीत्य स्नायादिति स्मृतेः समावर्तितव्यम् । ततश्च क्रतुभिरध्ययनविधिसिद्धविद्याभावेन स्वयमेव द्विजवच्छूद्रेऽपि विद्याक्षेपात् पुस्तकादिना विद्यां संपाद्य शूद्रस्याप्यधिकार उक्तः । षाष्ठे च शूद्राधिकरणपूर्वपक्षे । सिद्धान्ते त्वध्ययनस्यार्थधीहेतुत्वेन दृष्टार्थत्वात्साम्नामृगक्षराभिव्यक्तिद्वारा स्तोत्रार्थत्वमिव तव्यप्रत्ययावगतस्वाध्यायार्थत्वद्वाराऽर्थज्ञानार्थत्वाद्विचार विना च तदयोगात्तदर्थं शास्त्रमारम्भणीयम् । एतच्च " अथातो धर्मजिज्ञासा " इत्यत्राध्ययनविधेर्दृष्टार्थत्वादित्यतःशब्दव्याख्यया शाबरभाष्ये सूचितम् । तेन विचारं विना विध्यर्थासमाप्तेर्वेदमधीत्य स्नायादिति स्मार्तस्नानोत्कर्षः । ततश्चाध्ययनविधेः " अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत "

" उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् "

इति स्मृत्या उपनयनदृष्टार्थत्वाच्चोपनीतान् प्रत्येव प्रवृत्तत्वादुपनयनस्य च आधाने सर्वशेषत्वादिति द्वितीयाध्यायन्यायेन " वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम् " इति श्रुतिभिस्त्रैवर्णिकेष्वेव विधानेन शूद्रे तदभावात् क्रतुविधीनां चाध्ययनविधिसिद्धविद्यत्रैवर्णिकविषयत्वेनोपक्षीणानामन्यथानुपपत्त्यभावेन विद्यानाक्षेपकत्वाच्छूद्रस्य कर्मस्वनधिकार इति षाष्ठः सिद्धान्तोऽपि फलम् । तत्र यद्यपि श्रुत्यन्तरे " अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत " इत्यध्यापने उपनीतग्रहणं नाध्ययने, तथाप्यध्यापनस्य वृत्त्यर्थत्वेन याजयेदितिवद्ध्यनहेत्वादाचार्यनिष्ठत्वेन माणवकसंस्कारत्वाभावाच्च ब्राह्मण उपगच्छेत्सोऽधीयीतेति विपरिणामतोऽर्थो ज्ञेय इति विवरणादयः । स्वाध्यायवत् " चमसाध्वर्यून् वृणीते " इतिवच्चोपनयनसंस्कार्यस्यापि बटोरनेनैव विनियोगादुपादेयत्वमिति पार्थसारथिराणकादयः । तत्र वसन्तादिवाक्यैरुपनयनप्राप्तेर्ब्राह्मणविशिष्टमुपनयनमनूद्याष्टवर्षकालो विधीयते । न च वाक्यभेदः । उद्देश्यापर्यवसानेन विशिष्टोद्देशेन तदभा-

वादिति हेमाद्रिः। तत्त्वं तु विनिगमकाभावाच्छाखान्तरत्वादुभयत्रापि विशिष्टविधिरिति । अत एवोपादेयत्वेन विवक्षितं पुंस्त्वम्। अन्यथोपनयने संस्कार्यत्वाद्ग्रहैकत्ववत्पुंस्त्वाविवक्षया स्त्रीणामप्युपनयनप्राप्तिः केन वार्येत। यत्तु तन्त्ररत्ने तस्या यावदुक्तमाशीर्ब्रह्मचर्यमित्यत्राष्टवर्षवाक्ये द्वितीयया संस्कार्यत्वाल्लिङ्गाविवक्षया न्यायेन स्त्रियां उपनयनप्राप्तावपि निषेधादेवोपनयनाभाव इत्युक्तम्। तत् " अध्वर्युं वृणीते ", इतिवत् स्वाध्यायवच्चोपादेयत्वाद्वसन्तादिवाक्येऽपि तत्त्वाच्चिन्त्यम्। अत एव षण्ढस्य नोपनयनं शूद्रसधर्मत्वात्। अत एव मिताक्षरायां देवलः—

पण्ढको हीनलिङ्गः स्यात्संस्कारार्हश्च नैव सः।

इति। याज्ञवल्क्यः—

पण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ॥

इत्याह। बौधायनसूत्रस्मृत्यर्थसारादयस्तु षण्ढस्य वचनादुपनयनमाहुः। एतच्चाग्रे वक्ष्यामः। अत एवोपादेयगतत्वादष्टवर्षत्वमेकत्वं च विवक्षितम्। नन्वेवं न्यायत एव शूद्रस्य कर्मानधिकारसिद्धेः " तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः " इति निषेधो व्यर्थ इति चेन्न्यायप्राप्तानुवाद इति भाट्टाः। इति।

अनेन चेदं स्पष्टं भवति यदुपनयनश्रुतौ द्वितीयया नियोज्यमानस्य ब्राह्मणादेरन्यतोऽप्राप्तेरनेनैव विधिना विधीयमानत्वादुपादेयत्वेन ब्राह्मणादिपदगतपुंस्त्वैकत्वयोर्विवक्षा न केनापि निवार्यते। तथा च प्रत्यक्षश्रौतविधिविरोधाद्यमहारीतादिस्मृतिवाक्यानां स्त्रीणामुपनयनविधायकानां " विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् " इति न्यायेन न प्रामाण्यम्। कल्पान्तरे तादृशश्रुतिकल्पनं तु श्रुतिभेदकल्पनामन्तरा न संभवति। तादृशकल्पनायां तु श्रुतेरखण्डरूपेण नित्यत्वस्य हानिः। तस्माद्वीरमित्रोदयोऽयं न प्रामाणिकतामर्हति।

यत्तु— अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥ २।६६

इति मनुवाक्यानुसारेण स्त्रीणामुपनयनमुपवर्ण्यते। तत्रेदं विचारणीयम्— किमिदमुपनयनं किमर्थं चेति। तत्रोपनयनशब्दः कर्मनामधेयम्। तथा च भरद्वाजः—

उपानयाख्यं यत्कर्म विद्यार्थं तदुदीरितम्।

इत्यादिना महता प्रबन्धेनोक्त्वा " तत्रोपनयनं नामाऽऽचार्येण बटोर्गायत्र्या संस्करणम् " इति स एवाऽऽह। तत्र संस्कारत्वेन प्राधान्यं विद्यार्थत्वेन च वेदाध्ययनाङ्गत्वमित्यपि तत्रैव स ब्रवीति। मनुवाक्ये तु " अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः " इत्यमन्त्रकत्वं प्रतिपाद्यते। तत्रेदमा यद्युपनयनस्यापि परामर्शोऽभिप्रेतस्तर्हि तस्यामन्त्रकत्वे कथं गायत्र्या संस्करणं स्यात्। यदि च तादृशसंस्करणरूपमुपनयनमभिप्रेतं कथं वा तदमन्त्रकं स्यादिति वीरमित्रोदय एव

जानीयात् । एवं चेद्मा चूडान्तानामेव परामर्शो नोपनयनकेशान्तयोरिति वदतां लज्जया मुखावनतेरपेक्षयाऽमन्त्रिकेति पदं विस्मृत्य यमहारीतादिवाक्यैकवाक्यताभिनिवेशेन मनोरभिप्रायं विवृण्वतां स्वीयपूर्वापरसंदर्भविरोधाद्वीरमित्रोदयकाराणामेव तादृशी मुखावनतिर्युक्ता । यदि च गुरोः समीपे नयनमेवोपनयनमित्युपनयनशब्दार्थः, तदा तु तस्यामन्त्रकत्वासंभवेऽपि न वेदाध्ययनाङ्गत्वं संभवति । एवं च श्रुतिबोधिताङ्गत्वं बाधित्वा स्मार्तवचनेन स्त्रीणामुपनयनसंस्कारमात्राभ्युपगमोऽयं श्रुतिविरोधादेवोपेक्षणीयः । यदि च स्त्रीणां द्विजत्वसिद्ध्ये संस्कारमात्रस्यापेक्षा, तदापि गुरुसमीपप्रापणमात्रेण न सा सिद्धिः संभवति विना गायत्र्युपदेशात् । तथा च तत्रैवोक्तम्—

" तथा चाऽऽपस्तम्बः—उपनयनं विद्यार्थस्य श्रुतितः संस्कार इति ।

तदेव च ब्रह्मजन्मत्वेन परामृष्टं मनुना—

तत्र यद्ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम् ।<br>तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥

इति । ब्रह्मणा वेदेन गायत्रीरूपेण जन्मेव जन्म संस्कारविशेषाधानेन पुनर्नवीकरणम् " इति ॥ एवं च द्विजत्वमपि विना गायत्र्युपदेशं न भवति । यदि चास्य शास्त्रार्थस्यैतद्युगपरत्वम्, तर्हि तु पुराकल्पीयमुपनयनममन्त्रकं कथमासीदिति प्रदर्शनीयम् । एतत्सर्वमभिप्रेत्यैव मनुना स्त्रीणां द्विजत्वसिद्ध्ये विवाहे उपनयनातिदेशो विहितः—

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ॥ इति ।

यत्तु अतिदेशोऽयं स्त्रीणां विवाहादेर्विधिनिषेधाधिकार इत्युपवर्ण्य विधिनिषेधाधिकारमात्रपरत्वमस्य वचनस्य प्रदर्शितम् । तत्रायं प्रष्टव्यः— किमर्थं तर्हि

" पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया "

इति पतिसेवागृहार्थयोर्गुरुवासाग्निपरिक्रियास्थानापत्तिः । सर्वथा तु मनुवचनमिदममन्त्रकसंस्कारबोधकं नोपनयनस्य संग्राहकं भवतीति युक्त एवेदमा चूडान्तानां परामर्शः । उपनयनस्य मन्त्रैकसाध्यत्वात् । व्याख्यातं च कुल्लूकेन—

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।<br>संस्कारार्थं शरीरस्य यथाकाल यथाक्रमम् ॥

अमन्त्रिकेति । इयमावृदयं जातकर्मादिक्रियाकलापः समग्र उक्तकालक्रमेण शरीरसंस्कारार्थं स्त्रीणाममन्त्रकः कार्यः ॥ ६६ ॥

अनेनोपनयनेऽपि प्राप्ते विशेषमाह—

वैवाहिको विधिः स्त्रीणां संस्कारो वादकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥

वैवाहिक इति । विवाहविधिरेव स्त्रीणां वैदिकः संस्कार उपनयनाख्यो मन्वादिभिः स्मृतः । पतिसेवैव गुरुकुले वासो वेदाध्ययनरूपः । गृहकृत्यमेव सायंप्रातः समिद्धोमरूपाऽग्निपरिचर्या । तस्माद्विवाहादेरुपनयनस्थाने विधानादुपनयनादेर्निवृत्तिः ॥ इति । एतेन च कुल्लूकव्याख्यानेन स्पष्टमिदं प्रतीयते यद्वचनद्वयस्यास्य सामान्यविशेषभावः । सामान्यं च विशेषेण बाध्यते । तच्च सामान्ये विशेषानिरिक्तत्वेन संकोचं विधायैव । तथा चेदंशब्देनोपनयनातिरिक्तकर्मकलापस्यैव ग्रहणमिति सांप्रतमेव । तस्मान्न स्त्रीणामुपनयनं न वा वेदाध्ययनं नापि वा गायत्र्युपदेशो मनोरभिप्रेत इति सर्वथा भ्रान्तोऽयं वीरमित्रोदयः ।

ननु तर्हि यमवाक्यानां का गतिरिति चेदप्रामाणिकत्वमेव ।

" मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते "

" यद्वै किंचन मनुरवदत्तद्भेषजं भेषजतायाः " इति स्मृतिवचनात् श्रुतिवचनाच्च । पुराकल्परूपार्थवादश्चेद्विध्यनुसारेण नेय इत्यलं मान्यानामुपरि कटाक्षपातेन । सर्वथा तूपनयनाभावात्स्त्रीणामुपरि नैवाध्ययनस्यातिभार इति सिध्यति । तथा च ऋणत्रयापाकरणस्यातिभाराभावेन स्त्रीणां स्वातन्त्र्येण न तदधिकारः, किंतु पत्या सहैव । अत एव सहधर्मचारिणीत्वं तासाम् । नो चेत्कन्यादानस्येव पुरुषदानस्यापि प्रसङ्गः । तथा च धर्मे चार्थे च कामे चायं नातिचरितव्य इति प्रतिश्रोतव्यं स्यात् । न च तथा क्वापि शिष्टाचारः । एवं च श्रुतिस्मृतिशिष्टाचारैस्तदधिकाराभावः सिध्यति ।

यत्तु कश्चित्—वैवाहिको विधिः स्त्रीणामौपनायनिकः परः ।

इत्युक्तेर्विवाह एवोपनयनस्थानीयः । अतस्तद्दिन एव "पतिरेव" गुरुः स्त्रीणाम्, 'पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया' इति वचनात् " अहतेन वाससा पतिः परिदध्यात् या अकृन्तन्नित्येतयर्चा, परिधत्त धत्त वाससेति च प्रावृतां यज्ञोपवीतिनीमभ्युदानयन् जपेत् सोमो ददद्गन्धर्वायेति " गोभिलगृह्यतो यज्ञोपवीतधारणं वसिष्ठस्मृतावेकविंशेऽध्याये तत्तन्नामभिधानं स्त्रीणामपि गायत्रीजपहोमविधानस्यान्यथानुपपत्त्या गायत्र्यङ्गीकारं पतिरेव कारयेत् ।

पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥

इति वचनेनापि णिजर्थभूतप्रयोजकत्वस्यास्मिन् कल्पे निषेधेऽपि धात्वर्थव्यापाराश्रयत्वरूपप्रयोज्यत्वस्यानिषेधात् । ततश्च यथावकाश पतिरेव स्वशाखावेदं पाठयेत् । अत एव 'जातेरस्त्रीविषयात्' इति सूत्रभाष्ये जातिलक्षणकथनावसरे कथितस्य 'अपत्यप्रत्ययान्तः शाखाध्येतृवाची च जातिवाचकः' इत्यर्थकस्य "गोत्रं च चरणैः सह" इति वार्तिकस्य कठी बह्वृची अध्वर्युः इत्युदाहरणानि वेदाध्ययनमन्तराऽनुपपन्नानि सङ्गच्छन्ते । अत एव तत्तद्यागेष्वपि यजमानपत्न्यास्तत्तन्मन्त्रपाठः । याज्ञे कर्मण्यपशब्दभाषणस्य निषिद्धत्वेन संस्कृतेनैव यज्ञगतैर्वक्तव्यतया तत्तदुक्तेतिकर्तव्यताज्ञानस्य व्याकरणाध्यापनमन्तराऽनुपपन्नत्वेन व्याकरणमप्यध्यापयेत् ।

'नामधेयस्य ये केचिदभिवादं न जानते ।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च ॥'

इति मनूक्तौ संस्कृताज्ञातृत्वेन सिद्धौ 'स्त्रियः सर्वाः' इति विध्यन्तरस्यानुपपत्त्या संस्कृतज्ञा अपि आचार्यपत्नीरपि तथैव ब्रूयादिति मेधातिथिव्याख्यानमेव वरम्—इति निर्णयसिन्धौ टिप्पणीरूपेणाऽऽह । तथा तत्रैव—

'कौसल्यापि तदा देवी रात्रिं स्थित्वा समाहिता ।
प्रभाते चाकरोत् पूजां विष्णोः पुत्रहितैषिणी ॥
सा क्षौमवसना हृष्टा नित्यं व्रतपरायणा ।
अग्निं जुहोति स्म तदा मन्त्रवत्कृतमङ्गला ॥'
'मयाऽर्चिता देवगणाः शिवादयः ।
महर्षयो भूतगणाः सुरोरगाः ।' १–२ सर्ग ४४ इति ।
संध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी ।
नदीं चेमां शुभजलां संध्यार्थं वरवर्णिनी ॥

( ३५२ सर्ग ४९ ) इति च रामायणदर्शनेन कादम्बर्याख्यायिकायामपि महाश्वेतावर्णने "अथ क्षीणायां क्षपायां भगवतीं सन्ध्यामुपास्य शिलातलोपविष्टाया पवित्राण्यघमर्षणानि जपन्त्यां महाश्वेतायां, परिसमाप्तपूजा तु महाश्वेता, इत्यादिदर्शनेन," 'भीमोद्भवापि कृतदैवतभाक्तिपूजा' इति नैषधीयचरितदर्शनेन स्त्रीणामपि विष्ण्वादिपूजने दोषाभावस्य सिद्धत्वेनास्यापि श्लोकस्य "या सनाथा मृतनाथा वा ब्राह्मण्यपि श्रेय इच्छन्ती सती हरं विष्णुं वा न स्पृशेत् । तस्या इह निष्कृतिर्नास्ति" इत्यस्यार्थस्याऽऽश्रयणेन न कोऽपि विरोधः । पूर्वोत्तरवाक्येषु स्त्रीणामित्यस्यानुपनीतानामित्येतद्विशेष्यत्वेन न तद्विरोधः । एवं च रामायणाद्येकवाक्यतया स्त्रीणामधिकाराभावसूचकवाक्येषु प्रामाणिकत्वे स्त्रीपदमनुपनीतस्त्रीपरमेव व्याख्येयम् ।

यन्नास्ति वेदे न च यत्पुराणे ।
रामायणे भारतसागरे वा ॥
मन्वादिशास्त्रेषु च यद्धि नोक्तम् ।
तन्नास्ति नास्तीति न तेन कार्यम् ॥

इत्यभियुक्तोक्त्या वेदगृह्यरामायणादिविरुद्धस्य धर्मत्वाभावेनाऽऽधुनिकपण्डितंमन्यक्लृप्तस्य स्त्रीणां वेदाध्ययनाद्यनधिकारित्वसूचकवचनस्य न धर्मनिर्णये उपयोग इति दिक् —इति ।

एतदखिलमप्यतितुच्छम् । वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः, इति वाक्यस्यातिदेशरूपत्वाभावात् । अतिदेशे हि प्रकृतिधर्माणां विकृतावनुष्ठानं साकाङ्क्षत्वाद्भवति । न चात्र विवाहविधौ साकाङ्क्षता । येनोपनयनाङ्गभूतधर्माणां विवाहविधावनुष्ठेयता स्यात् । अन्यधर्मत्वेनावगतानां तत्संबन्धादरेणान्यत्र प्रदेशे प्रापणं येन व्यापारेण भवति सोऽतिदेशो नाम । तथा चोक्तम्—

प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृतः ॥ इति ।

अयमत्रान्वयः— प्राकृतात्कर्मणो धर्मप्रदेशो येन स्यात् सोऽतिदेशः ? क्व धर्मप्रदेश इत्यपेक्षायामाह-यस्मात्तत्समानेष्विति । यस्मात्प्राकृतादाग्नेयादेर्धर्माः प्रदिश्यन्ते तत्समानेषु सौर्यादिषु कर्मस्विति । त्रिविधश्चातिदेशः प्रत्यक्षवचनान्नामधेयाच्चोदनालिङ्गानुमितवचनाच्चेति " इति शास्त्रदीपिकानुसारेण विचार्यमाणे प्रकृते तादृशातिदेशलक्षणस्य सर्वथाऽसंभव एव । न ह्युपनयनविवाहविध्योः किमपि सादृश्यम् । न वा विवाहविधेरङ्गापेक्षा । नापि तादृशं लिङ्गवचनं नामधेयं वा । न च " वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः " इत्यादिवचनेभ्यो विवाहे मन्त्रोच्चारणप्राप्तौ तस्य चानुपनीतशूद्रसधर्मस्त्रीसाविधे प्रत्यवायाजनकत्वेनासंभवादस्त्येवादौ स्त्रीणामप्युपनयनापेक्षेति वाच्यम् । उपनयने समुच्चार्यमाणमन्त्रवदत्रापि विधिवशात्संस्कार्यस्यानुपनीतत्वेऽपि तादृशोच्चारणे प्रत्यवायासंभवेनानुष्ठेयस्य मन्त्रोच्चारणस्य सुकरत्वात् । ननु किमर्थं तर्हीदं वाक्यमिति चेत्ताद्रूप्यारोपेण तन्निवृत्त्यर्थमिति गृहाण । अत एव " तस्माद्विवाहादेरुपनयनस्थाने विधानादुपनयनादेर्निवृत्तिः " इति कुल्लूकः संगच्छते । ताद्रूप्यारोपोऽप्ययं तत्प्रयुक्तकार्यकारित्वार्थः । अतश्च न सर्वथा शूद्रसमत्वेन स्त्रीणां श्राद्धादिपाकादिक्रियानर्हत्वं शूद्रवत् । यथा हि गुरोः स्थाने शिष्यो याज्यकुलानि गत्वाऽऽसनादीनि लभत इति गुरुत्वप्रयुक्तकार्याधिकारः शिष्यस्य भवति । एवमनाप्युपनयनप्रयुक्तकार्याधिकारो विवाहसंस्कारेण स्यादेव । नैतावता गुरुस्वरूपनिर्वर्त्यकार्यकरणे शिष्योऽपि करोतीति उपनयनस्वरूपनिर्वर्त्यकार्यकरणाधिकारोऽपि नैव विवाहविधिना सिध्यति ।

तस्मान्न स्वातन्त्र्येणाध्ययन न वा गायत्र्युपदेशदण्डमेखलादिधारणं वा स्त्रीणां प्राप्नोति । यज्ञाङ्गभूतमन्त्रपाठनोच्चारणादिकं तु तत्तद्विधिवशाद्यावद्वचनं वाचनिकमिति न्यायेन न निवारयामः। नहि शूद्रस्योपनयनाधिकार इति "निषादस्थपतिं याजयेत्" इत्यत्र *निषादस्यापि तदनधिकार* इति तत्पुरुषसमासं वा बहुव्रीहिं वा स्वीकृत्य वाक्यार्थान्यथाकरणं कृतं शास्त्रे शास्त्रकारैः। किंतु वचनानुसारेण तादृशाधिकारप्राप्तौ तत्रानुमोदितमेव । शास्त्रपरतन्त्राणां निरपेक्षाणां धर्मैकनिष्ठानां तु वाक्यार्थपर्यालोचने सर्वथा पक्षपातविरहितैव दृष्टिर्यथायावदनुवर्तते । न हि स्वस्त्रीभ्योऽपि निषादस्थपतिः प्रेयान् स्त्रियश्चाप्रेयस्य इति तेषां रागद्वेषौ। सर्वथा रागद्वेषप्रहाणेनैव शास्त्रार्थः पर्यालोचनीयः। एवं चोपनयनस्वरूपगतयज्ञोपवीतदण्डमेखलाधारणगायत्र्युपदेशादिधर्मप्रयोजकत्वं विवाहविधेर्नैनेन वचनेन सिध्यतीति विवाहकाले तत्प्राक्काले वा तेषां धर्माणां पतिकर्तृकत्वमवश्यमेवाभ्युपेयमित्ययं प्रलापो निरर्गल एव । यत्तु यज्ञोपवीतिनीमभ्युदानयन् जपेदिति गोभिलगृह्यसूत्रम् । तदपि विवाहाङ्गभूतयज्ञोपवीतधारणमेव सूचयति नतूपनयनम्। वसिष्ठस्मृतौ तु होमविधानं प्रायश्चित्तरूपेण विहितं ब्राह्मणद्वारैव कर्तव्यं स्यात्। सर्वत्र ब्राह्मणद्वारैव स्त्रीणां होमादिविधानात्। शिष्टाचारोऽपि तथैवायथावत्प्रचलतीति नैव स्त्रीणां स्वातन्त्र्येण गायत्र्युपदेशो वोपनयनं वा तेन सिध्यति ।

यत्तु णिजर्थभूतप्रयोजकत्वस्यास्मिन् कल्पे निषेधेऽपि धात्वर्थव्यापाराश्रयत्वरूपप्रयोज्यत्वस्यानिषेध इति । तत्तु वाक्यमर्यादानभिज्ञस्य देवानां प्रियस्यैव शोभते । नहि निरूपकांशे नित्यसाकाङ्क्षस्य पदार्थस्य निरूपकाभावे सत्ता भवति । प्रयोज्यत्वं हि प्रयोजकांशे नित्यसाकाङ्क्षं पितृत्ववत्। यथा हि पितृत्वं संतानांशे नित्यसाकाङ्क्षं सति संतान एवाऽऽत्मानं लभते । एवं प्रयोज्यत्वमपि सति प्रयोजके आत्मलाभं विदध्यान्नान्यथा । नहि धात्वर्थव्यापाराश्रयत्वमात्रेण प्रयोज्यत्वासीद्धिः। तथा सति स्वातन्त्र्येण क्रियाकर्तॄणां सर्वेषामपि धात्वर्थव्यापाराश्रयत्वेन प्रयोज्यत्वापत्तिः। अतश्च परप्रयुक्तमेव धात्वर्थव्यापाराश्रयत्वं प्रयोज्यत्वमभ्युपेय तच्च प्रयोजकाभावे न घटत इति प्रयोजकत्वनिषेधेन प्रयोज्यत्वस्यापि निषेधः सिध्यति । स्वेच्छया तादृशाध्ययनं तु शूद्रादीनामपि सति पुस्तकलाभे केन निवार्यताम् । न तु तादृशाध्ययनं 'स्वाध्यायोऽध्येतव्यः' इति विधिना विहितम् । तस्योपनयनपूर्वकत्वात् । आचार्यज्ञानं गुरुगृहावस्थानपूर्वकसमावर्तनावसानत्वाच्च । तस्मादकिंचित्करमेवेदं टिप्पण्याः पाण्डित्यम् ।

यत्तु रामायणगतं कौसल्याकृतहोमनिदर्शनम्, *सीतायाः संध्यावन्दननिर्देशः*, कादम्बरीगतमहाश्वेतायाः संध्याजपादिवर्णनम् । तत्र तावदिदमेव वक्तव्यं यदुपाख्यानानां न तत्त्वान्वाख्याने तात्पर्यम् । *किंत्वर्थवादत्वात्तेषां विधिपरत्वमेव* । विधिश्चोपाख्यानानां न वेदविरुद्धो भवितुमर्हति । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वेदोपबृंहणार्थत्वात्तेषाम् । अन्यथा परदारहर्तू रावणस्याद्यावधि यावद्रामायणं च सुस्थिरा कीर्तिरिति कीर्तिकामो परदारानपहरेदित्यपि विधिः परि-

कल्पनार्हः स्यात्। अतश्च वेदाविरोधेन यथा पुराणोपाख्यानानां सगतिः स्यात्तथैवोपकल्पनीयम्। वेदविरोधश्च स्त्रीणामुपनयनकल्पने प्रागेव व्याख्यातः।

यत्तु "जातेरस्त्रीविषयादयोपधात्" इति पाणिनीयसूत्रगतभाष्यस्योदाहरणप्रदर्शनम्। तत्तु भाष्यानवलोकनमूलकमेव। भाष्ये तूदाहरणोपन्यासस्यात्यन्ताभावात्। कठी बह्वृची इत्युदाहरणे तु सिद्धान्तकौमुद्यां भट्टोजीदीक्षितैरुपादीयेते। अस्तु वा यथाकथमपि। उदाहरणयोः का गतिरिति चेदत्र ब्रूमः—अत्रस्थभाष्यपर्यालोचने तु "आकृतिग्रहणा जातिः" इति जातिलक्षणवत् "गोत्रं च चरणैः सह" इत्यप्येकं जातिलक्षणं वार्तिककारीयम्। एवं च यथाऽऽकृतिवाचकशब्दो जातिरूपप्रवृत्तिनिमित्तमुपादाय स्त्रियां प्रवर्तते, तथा शाखाध्येतृवाचककठादिशब्दा अपि स्वार्थभूतकठत्वादिपारिभाषिकजातिरूपप्रवृत्तिनिमित्तेन स्त्रिया प्रवर्तन्ते। न च न कठत्वादिकं जातिः। नित्यमेकमनेकानुगतं सामान्यमिति जातिलक्षणाभावेऽपि वार्तिककारीयजातित्वस्य तत्र सत्त्वात्। "गोत्रं च चरणैः सह" इत्यत्र हि "आकृतिग्रहणा जातिः" इत्यस्माज्जातिरित्यनुवर्तते। तथा च अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दोजातिः, जातित्वबोधक इत्यर्थः पर्यवस्यति। एवमपि प्रत्यक्षतया जातिरूपसामान्यस्यासिद्धत्वेन जातिरित्यस्य जातिकार्यं लभत इत्यर्थो भट्टोजीदीक्षितैः कृतः। तत्र जातिकार्यं नाम जातिलक्षणो ङीप्। स च यथा जातिरूपप्रवृत्तिनिमित्तपुरस्कारेण स्त्रियां भवति, तथाऽत्रापि पारिभाषिकजातिपुरस्कारेण वा जात्यारोपेण वा स्त्रियां प्रवृत्तौ कार्यं इत्यर्थः पर्यवसन्नः। नन्वेव स्त्रियां शाखाध्येतृत्वरूपप्रवृत्तिनिमित्तस्य का गतिरिति चेत् रूपकालंकारवदत्रापि निगरणमेव। नो चेद्वार्तिकवैयर्थ्यप्रसङ्गः। तत्सार्थक्याय स्त्रीणामुपनयनाध्यापनाद्यधिकारकल्पने तु वेदविरोधः। न हि व्याकरणस्मृत्या वेदो बाध्यः। स्मृतित्वेन दुर्बलत्वात्। न च पदार्थानुष्ठापकत्वमपि व्याकरणस्मृतेः। येन तदनुरोधेन बाधितं स्याद्वेदप्रामाण्यम्। एवं च वेदाविरोधेनैवोन्नेया स्याद्व्याकरणस्मृतिः। तथा चाध्यारोपमन्तरा तदनुपपत्तेरारोपितपारिभाषिकजातितामङ्गीकृत्यैव शाखाध्येतृवाचिनां शब्दाना स्त्रिया प्रवृत्तिरित्येवागत्याऽभ्युपेयम्। अत एव तत्त्वबोधिनीकाराः—यद्यपि स्त्रीणामध्ययन प्रतिषिद्धम्। तथापि पुराकल्पे ह्येतदासीत्। तदाह यमः—

> पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते।
> अध्यापनं च वेदानां सावित्रीवाचनं तथा॥

इति पुराकल्पीयाध्ययनाधिकारेण कठीत्याद्युपपाद्य पुराकल्पस्यार्थवादत्वेन स्वार्थे तात्पर्याभावात्कथं पुनरुपपत्तिरित्यपरितोषादाहुः—यद्वा मा नामाध्यगीष्ट, तद्वंश्यत्वात्तच्छब्दं भविष्यति, यथाऽनधीयानेऽपि माणवके—इति। एतेन साक्षादध्ययनाभावेऽपि अध्ययनकर्तृवंशात्तभवादेव तच्छब्दप्रयोगरिति भवति। एव चाध्ययनाभावेऽपीदानीं तत्तच्छाखीया यथा तत्तच्छब्देन बोध्यन्ते एवमेव

स्त्रियामपि बोधने का हानिः। अधुनापि हि शाखानामन्योन्यविवाहायान्दोलने माध्यंदिनी कन्या शाकलबह्वृचादिभिर्वोढव्या न वेति विचारावसरे कन्यानां तच्छाखीयत्वं सर्वैरेवाभ्युपगम्यते। न च तत्तदध्ययनकर्तृत्वादपि तु तदध्यनकर्तृवंश्यत्वादेवेति व्यर्थमिदमुदाहरणप्रदर्शनेन शास्त्रार्थान्यथाकरणम्। तथा च न जातेरस्त्रीति सूत्रं वा तद्गतभाष्यं वा स्त्रीणामुपनयनाद्यधिकारसमर्थकं भवतीति निरर्थकमेवेदं पाण्डित्यं निर्णयसिन्धुटिप्पणीकाराणाम्। तदेवं ज्ञानोपासनाप्रजातन्तुपरम्परारक्षणस्यातिभारोऽयं सर्वथा पुरुषाणामुपर्येव शास्त्रदृष्ट्या व्यवस्थापितो वर्तते। स्त्री तु तत्र सहकारिणीति सहकारित्वात्प्राप्तधर्माणामनुष्ठानं तु न केनापि निवार्यते। अतश्च न स्त्रीणां स्वातन्त्र्येणोपनयनं न वा गार्हस्थ्यं तथा न वा प्रजातन्तुव्यवच्छेदनिमित्तप्रत्यवायश्च सिध्यतीति पुरुषसहकारित्वमेव स्त्रीणां राष्ट्रदृष्ट्या शास्त्रदृष्ट्या चाभ्युपेयम्।

## ( साम्यवादविचारः )

एतेन विषमताप्रवादोऽपि व्याख्यातः। सत्यमस्त्येव विषमता कर्मानुष्ठानकाले सर्वेष वैदिकधर्मे। कुत्र पुनः सा न वर्तते कर्मानुष्ठानकाले। किं समतावादिनोऽपि कर्मानुष्ठानकाले सर्वेष साम्यमभिमन्यन्ते वा ?। ओमिति चेत्कुतः पुनरियं विषमता एको राष्ट्रचालकत्वेन राष्ट्राधिपतिरपरश्च सैनिक इति। तथा वेतनभेदोऽपि समतावादिनः किंमूलकः। न हि सर्वसाम्यमत एतद्घटते। अथ योग्यतावशादयं भेद इति चेदस्ति तर्हि साम्यवादेऽपि योग्यतामूलको विशेषो विषमतापादकः का पुनरियं योग्यता ? यदि स्वाभाविकी ज्ञानशक्तिः क्रियाशक्तिर्वा, तर्हि तु स्वभावत एव विषमता सिद्धेति कुत्र किं च साम्यस्याऽऽभिमानिकस्य प्रयोजनम्। यदि च राष्ट्रनिर्वाहार्थं केवलं व्यवस्थामात्रमिदम्। तर्हि तु तत्र नियमविशेषाणामनुशासनं निरर्थकमेव। निरक्षरभट्टाचार्योऽपि कश्चन ग्रामीणो नियोक्तव्यः स्याद्राष्ट्राध्यक्षपदे वा सेनापत्यादिपदेषु वा। तत्र विद्याध्ययनादिनियमास्तु नापेक्षणीयाः स्युः। न च तादृशी व्यवस्था कुत्रापि राष्ट्रे। तदगत्या साम्यवादेऽपि तत्तत्कार्ययोग्यता कार्यानुष्ठानकाले सहकारित्वेनापेक्षणीया। तथा च सत्यामपि सर्वेषां समतायां कार्यानुष्ठानशक्तिरूपयोग्यतावशाज्जायमाना विषमता केनापि नापवारयितुं शक्या। तद्वरं कार्यानुष्ठानशक्तिपर्यालोचनेनैवाधिकारप्रदानम्। योग्यताऽभावे हि दीयमानोऽन्यधिकारो निरर्थकः कालस्य च द्रव्यस्यापव्ययहेतुर्भवति। नन्वेकव्यक्तेस्तादृशयोग्यताया अभावेऽपि तद्वंशे व्यक्त्यन्तरस्य तादृशयोग्यतासत्त्वे यत्र कुत्रापि कर्मणि नियोगः संभवति साम्यवादे। न तथा वैदिकधर्मे जातिमूलकत्वात्। अतश्च यावच्चन्द्रदिवाकरमेतादृशाधिकारभेदमूलकविषमताया राष्ट्रहितोपघातकत्वं कथं न स्यात्। स्यादेतदेवं यदि तत्तज्जातीनां स्वकर्मानुष्ठानविमुखता स्यादिदानींतनीव। सैव च शास्त्रेण निवार्यते। अतश्च शास्त्रमेव शासनकरणात्प्रमाणमभ्युपेयते अनुष्ठा-

नकाले । साम्यवादिनोऽप्यनुष्ठानकाले स्वीयशासननियमानेव प्रमाणीकुर्वन्ति । न हि सर्वसाम्यान्यायासनाधिष्ठितेन कृतो निग्रहो वाऽनुग्रहः केनापि परिवर्त्यते । न चात्र निदानं शासननियमप्रामाण्यमन्तरा किमप्यन्यत् । न च शासननियमानामनर्थकारित्वेऽपि तत्परिवर्तनाधिकारः कस्याप्येकस्य । बहुमतमूलकत्वात् तेषाम् । न हि साम्यवादे बहुमतस्यैव प्रमाण्ये किमपि गमकं पश्यामः । अल्पमतवादिनामपि बहुमतवादिभिः साम्यात् । अतश्च गुणदोषविचारमन्तरा केवलं बहूनां सुखपर्यवसानमेव तत्र गमकं वक्तव्यम् । तदपि न साम्यवादे घटते । बहुमतवादिनां सुखमभिप्रेतं नाल्पमतवादिनामिति तु साम्यवादे वक्तुं दुर्घटम्। एवं च समतायामप्यल्पमतवादिनां दुःखोपहारः साम्यवादेऽपि दुष्परिहरः । एवं च नानुपहत्य भूतानि भोगः संभवतीति सिद्धान्त एव प्रतिष्ठितो भवति। यदि राष्ट्रहितार्थं स सोढव्यस्तर्हि किमपराद्धं वैदिकधर्मेण । तत्रापि राष्ट्रहितार्थं स्वात्महितार्थं च स्वे स्वे अधिकारे निष्ठायाः परिपालनं चेत्कथं वा विषमताादुःखमास्पदं लभेत । नहि अल्पमतानामन्नाच्छादनादिकमिव वैदिकधर्मेऽपि कस्याप्यन्नाच्छादनोपार्जनाद्यधिकारो नास्ति । प्रत्युत स्वस्वकर्माभिरतावनायासेनैव नान्तरीयकतयाऽन्नाच्छादनादिकं यथा वैदिकधर्मे समुपार्जितुं शक्यते न तथाऽन्यत्र । केवलमाभिमानिकसुखेच्छाविघातजन्यं दुःखं तु यत्र कुत्रापि दुष्परिहरमेव। तथा च

> यश्चोभयोः समो दोषः परिहारोऽपि तत्समः ।
> नैकस्तत्रानुयोक्तव्यस्तादृगर्थविवेचने ॥

इति न्यायेन नात्र वैदिकधर्मीया एवानुयोक्तव्याः । अपरश्चायं विशेषो वैदिकधर्मस्य प्रमाणमूलकत्वात् साम्यवादाद्यपेक्षया यदेकस्यापि प्रमाणसिद्धस्य मतस्य सर्वानुष्ठेयता, न त्वेशूख्रिस्तस्यैव प्रामाणिकस्य कस्यापि बहुमतानुसारेणावहेलना वा विनाशो वा । किंच लौकिकार्थव्यवस्था राजनीत्यादिकर्मसु कदाचित्कस्यचिदनधिकारिणोऽपि योग्यतावशान्नियुक्तिस्तु महति पदे न वैदिकशासनेनापि निवार्यते । अत एव धर्मपरिपालकानां दस्यूनामपि राज्यपदे नियोजनमनुमन्यते भारतगतदस्यूपाख्यानेन । पारलौकिकधर्मेषु परं तत्तज्जातिपुरस्कारः । नैतावता काऽपि हानिः । किंच यथा योग्यताभावेऽपि दीयमानः समानाधिकारः साम्यवादेऽकिंचित्करः । न तथा समानाधिकारोऽहिंसादिधर्मेषु दीयमानो वैदिकधर्मेण । परमार्थतस्तु साम्यं यथा वैदिकधर्मे आब्रह्मस्तम्बपर्यन्तं सर्वेषां ब्रह्मरूपत्वेन न तथा साम्यवादे । तथा नाकिंचित्करसाम्याधिकारापेक्षया ब्रह्मसायुज्यतासंपादकसाम्याधिकारोऽयं वैदिकधर्मस्य त्रैलोक्ययोगक्षेमावह इत्यत्र न विशयलेशोऽपीति निपुणमेव परीक्षणीयमास्माकीनैः । सर्वथा त्वतितुच्छोऽयं साम्यवादः पशुतापर्यवसान एवेति प्रागेव निरूपितं तदेव पर्यालोचनीयम् ।

( राष्ट्रियतावादः )

एतेन राष्ट्रियतावादोऽपि व्याख्यातः। राष्ट्रियता हि राष्ट्रहितानुकूलकृतिशालिता। सा च तदैव भवितुमर्हति यदा राष्ट्रपदार्थस्य तद्धितपदार्थस्य यथावदवगतिः स्यात्। राष्ट्रं च राजत इति राष्ट्रमिति व्युत्पत्त्या सर्वतः शोभमानो जनसमूहः। एवं च जीवनार्थमावश्यकानां सर्ववस्तूनामुत्पादनाद्यनुकूलज्ञानवत्त्वमेव किल राष्ट्रस्य सर्वतः शोभमानत्वम्। तच्च ज्ञानं वंशपरम्परयाऽवश्यमेव संरक्षणीयमिति तदर्थं ज्ञानपरम्परा संततिपरम्परा चाऽऽवश्यकी। ज्ञानं च बुद्धिपरिणामो वृत्त्यात्मकः। स च तदैव यथावद्भवितुमर्हति यदा सत्त्वशुद्धिः। सा च न कदाचिदपि भोग्यसंपत्तिरूपबाह्यसाधनवैपुल्याधीना। सत्यपि तादृशवैपुल्ये रागद्वेषपरम्पराया अव्याहतत्वदर्शनात्। भोग्यसंपत्तिप्रदर्शनमुखेन लोके प्रतिष्ठाख्यापनरूपाया लोकैषणाया निराकर्तुमशक्यत्वाच्च। एवं च परसंपत्प्रकर्षो हि हीनसंपदं पुरुषं दुःखाकरोतीति न्यायेनान्योन्यं रागद्वेषमात्सर्यस्पर्धासूयादीनां प्रादुर्भावे पुनश्च राष्ट्रहितव्याकोपस्तदवस्थ एव। अतश्च राष्ट्रहितार्थं जनानां सत्त्वशुद्धिरतीवोपयुक्तेति तदर्थं उपासनापि काचनाऽऽवश्यकी। सा च यथाकथंचिच्छ्रद्धातिरेकाद्यत्र कुत्रापि प्रवर्तमानाऽन्धे तमसि राष्ट्रमतिपातयेदित्येतदर्थं जगत आधिदैविकस्वरूपपर्यालोचनं तत्स्वरूपोपासनं च राष्ट्रस्याभ्युदयजनकं भवति नान्यत्। आधिदैविकस्वरूपज्ञाने चाऽऽध्यात्मिकमपि यथावदाकलयितुं सुशकमिति न तयोरतिरेकः। एवं च सत्त्वशुध्यर्थमाधिदैविकोपासनापरम्परापि राष्ट्रहितोपयुक्ता। एवं चोपासनापरम्परा ज्ञानपरम्परा संतानपरम्परा चावश्यमेव संरक्षणीया राष्ट्रहितायेति सिध्यति। एवमपि हितपदार्थाज्ञाने सर्वमपि निष्फलं स्यादिति तद्विचार एवाऽऽदौ श्रेयान्। तत्रैहिकसुखोपभोग एवाऽऽधिक्येनाधिकानां यथा स्यात्तदेव राष्ट्रहितमिति परप्रत्ययनेयबुद्धय आधुनिकाः। सर्वेषां भोग्यसंपत्तिसाम्यसंपादनेन भोगसाम्यमित्यपरे। सत्त्वशुद्धिमात्रमित्यन्ये। तदेतेषां पक्षाणामाद्ययोः पूर्वेव पर्यालोचितत्वादन्तिम एव पर्यालोचनीयः। सत्यं सर्वविधराष्ट्रकार्येषु सत्त्वशुद्धिरावश्यकी। एवमपि कार्यशक्तिव्याघाते सैव किल दैन्यमावहतीति नैव सत्त्वशुद्धिमात्रेण राष्ट्रहितोपार्जनं भवितुमर्हति। यथा हि 'न जातु कामः कामानामुपभोगेन शाम्यति इति न्यायेन भोग्यसंपत्तिवैपुल्यं वा भोगसाम्यं वा नैव राष्ट्रहिताय प्रभवति। एवमेव

"ये हि संस्पर्शजा भोगा दुःखयोनय एव ते।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः"

इति वाङ्मात्रेण वा तर्कपद्धत्या वा सर्वविषयविरागोद्बोधनमपि नैव क्षेमाय कल्पते।

'नानुभूय न जानाति पुमान् विषयतीक्ष्णताम्'

इति न्यायेन प्रत्यक्षानुभवापेक्षया परोक्षस्य शाब्दस्य तथाविधोद्बोधनस्य न केवलं राष्ट्रहितविघातकत्वमपितु विपरीतकार्यकारित्वमपि दृश्यते । किंच यावद्देहं क्षुत्तृडाद्युपशान्त्यर्थमन्येषां गृहस्थादीनामाश्रयणं नाम मृतजीवनमेव । तद्वरं विषयतीक्ष्णतामनुभूयैव विषयनिवर्तनमिति विषयतीक्ष्णतानुभवः सत्त्वशुद्ध्यर्थमावश्यकः । ततश्चैहिकजीवनयात्रापि निर्वोढा भवति । अतश्चैहिकसुखोपभोगानां पर्यवसानं यथा सत्त्वशुद्धौ स्यात्तादृशं किमपि क्षेमं राष्ट्रहितं भवेत् । एतादृशं राष्ट्रहितनिर्धारणं च नाऽऽधुनिकराष्ट्रवादिषु कुत्रापि दृश्यते । वैदिकराष्ट्रवादे तु तथा दर्शनेऽपि वैदिकैरेव तन्नाद्रियत इतीदानीं राष्ट्रहितवादोद्घोषणेन सर्वत्रोदरंभरतैव प्रसृता दरीदृश्यते । सेयं महती खल्वापदिदानीमुपस्थिता । नास्याः प्रतीकारो विपाकदर्शनमन्तरा भवितुमर्हतीति तावत्पर्यन्तमौदासीन्यमेव वरं विदुषामिति केचन मन्यन्ते । परं तु 'अकरणान्मन्दकरणं श्रेयः', इति न्यायेनाकर्मण्यतामपहाय तत्र तत्र दोषोद्घाटनमुखेनाहितोद्बोधनमिदानींतनानां पण्डितानां धर्मैकपक्षपातिनामाद्यं कर्तव्यमेव । अतश्चैतादृशहितनिर्धारणमवश्यमेव पर्यालोचनीयम् । तच्च न वैदिकवाङ्मयाध्ययनमन्तरा भवितुमर्हति । वैदिके तु वाङ्मये एतादृशा विचारास्तत्र तत्र सर्वत्रोपनिबद्धा एव । अत एव ।

"श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।
तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थात् य उ प्रेयो वृणीते'

इत्युक्तं काठके । इदानींतनराष्ट्रवादेष्वपि रुचित्यागो राष्ट्रार्थं तत्र तत्राभ्युपगम्यत एव । एवं च व्यक्तिसुखापेक्षया राष्ट्रहितस्य ज्यायस्त्वमविप्रतिपन्नमेव । एवं च ज्ञानोपासना संतानपरम्परा राष्ट्रहितोपकारिणी यथा न विच्छिद्येत तथा प्रयतितव्यं राष्ट्रहितैषिभिरित्यायातम् । एवमैहिकसुखोपयोगिवस्तुनिर्माणानुकूलकर्मशक्तिविच्छेदोऽपि परिहरणीय एव । तथा सति इह जगति सर्वविधसुखानुभवानन्तरं यथावदेव सत्त्वशुद्धिः स्यात् । परं चात्रेदमवधेयं यद्भोगेच्छया प्रवृत्तिर्जनानां मा भूत् । किंतु त्यागेच्छयैव सा यथा संपद्येत तथा विधातव्यम् । राष्ट्रहितार्थं व्यक्तेर्भोगत्यागस्येदानींतनानामपीष्टत्वात् । नो चेत्

"परान्नं प्राप्य दुर्बुद्धे मा प्राणेषु दयां कुरु । परान्नं दुर्लभं लोके प्राणा जन्मनि जन्मनि "

इत्याभाणकवदनिष्टेष्वपि ज्ञानोपयोगः कथं निवारणीयः स्यात् । अतश्च राष्ट्रहितं नाम राष्ट्रानुकूलभोगत्यागभयोपयुक्तबुद्धिमत्त्वमिति सिध्यति । राष्ट्रं च सर्वविधपूर्वोक्तहितानुकूलबुद्धिशालिकर्मशक्तिशालिजनसमूहः । एतादृशहितानुष्ठाने चाऽऽदौ शिक्षणशुद्धिः संपादनीया । सर्वविधहितधारणावश्यं कर्तव्यनिष्ठा समस्तकार्येषु जनानां यथा समुदियात् तथैव शिक्षणक्रमान्यथाकारकी ।

तत्रापि स्वाभाविकबुद्धिवैभवानुसारेण यथेच्छं सर्वविधज्ञानं यथा प्राप्नुयुर्जनास्तथा विधेयम्। एवमेव सुप्रजानिर्माणमपि यथा संपद्येत तथा प्रयतितव्यम्। तत्र च बीजक्षेत्रवासनादीनां परिशुद्धिः शास्त्रोक्ता नैव हेया। यावच्च शास्त्रमिदं नान्यथा भवति तावत्तस्य परिपालनं हि मानवधर्मः। न हि गुरुत्वाकर्षणसिद्धान्तानां यावद्वैतथ्यम् । तावत्ते परित्यक्ताः। वैतथ्ये त्वशास्त्रत्वमेवेति तत्त्यागः समुचित एव। न हीदानीं मन्वाद्युपदर्शितानां सुप्रजाजननियमानां वैतथ्यं केनापि प्रतिष्ठापितम्। नापि यथावदनुष्ठाने प्रजासु वैपरीत्यं भवति। तथैव शिक्षणनियमा उपासपद्धतयश्चाद्यावधि नैव वैतथ्यं नीताः। इदानीमपि गुरुशिष्यसंबन्धो ज्ञानार्थे कथमपेक्षित इत्यत्र पाश्चात्येष्वपि विचाराः प्रादुर्भवन्ति। न हि वैतनिकशिक्षणप्रणाल्या कर्तव्यनिष्ठा कुत्रापि प्रादुर्भूता। विदुषां पोषणभारो दण्डसंस्थया स्वीकर्तव्यः। शिक्षणं च आचार्यछात्रयोः सानुरागप्रवृत्त्या चेत्येव समीचीनं पश्यामः। अस्तु वा कथमपि। प्रकृते तु राष्ट्रहितार्थं ज्ञानोपासनासंतानानां चाव्याहतपरम्परैवाऽऽवश्यकी। तद्बुच्छेदस्तु महतेऽनर्थायेति तदेतदृणत्रयशब्देन बोधयति भगवती श्रुतिः। तादृशर्णत्रयापाकरणानन्तरमेव मोक्षाधिकारो नान्यथेति वैदिकः पन्थाः। तत्र ज्ञानपरम्परासातत्यार्थं न केवलं ग्रन्थालयः समर्थः। अपि तु ज्ञानवत्पुरुषपरम्परैव। न राष्ट्राणामन्योन्यसंघर्षे पुस्तकालयानां नाशो न दरीदृश्यते। पुरुषपरम्परासातत्ये तु न तथातिप्रसङ्ग इत्येव तत्तद्व्यवसायानिर्धारणपूर्वकं तत्तज्ज्ञानसातत्यं संरक्षणीयम्। एवं च ब्राह्मणकर्तव्यत्वेन ज्ञानपरम्परायाः संरक्षणमिदं विधीयमानं मन्वादिभिः किमिति दुनोति चेतांसि राष्ट्रहितैषिणामिति त एव जानीयुः। एवमेव कर्मोपासनापरम्परापि। न हि सत्यप्यधिकारे क्षत्रियादिभिः सा संरक्षिता। नापि वा सत्यप्यधिकारे शिल्पिभिरपि शिल्पज्ञानपरम्परा सुरक्षिता। उपलभ्यन्ते हि इदानीमपि समराङ्गणसूत्रधारसदृशा ग्रन्था यन्त्रशिल्पबीजघटकोपनिबन्धनाः। न हि

'उर्दकः कर्तरी यष्टिश्चक्रं भ्रमरकस्तथा'

इत्यादीनां यन्त्रघटकानां स्वरूपमपि जानाति कश्चन भारतीयः शिल्पी। इयमेवान्यासां कलानामवस्था। किमत्र निदानम्, परम्पराविच्छेदमन्तरा। स च विच्छेदः सुप्रजाया अभाव एव। तदभावश्च शास्त्रविहितेष्वनादरात्। अतश्च शास्त्रविहितेषु कर्तव्यनिष्ठोदयमन्तरा निखिलमपि क्रियमाणं वैयर्थ्यमावहति राष्ट्रदृष्ट्या। एतादृशपरम्परासंरक्षणमिदानींतनानां राष्ट्रवादिनामप्यावश्यकम्। नो चेदेतेषां राष्ट्रवादोऽयं यावज्जीवमेव स्यादिति सुनिपुणमालोचनीयं विचक्षणैः। तत्किमपराद्धं पूर्वजैः। इदानीमपि भारतमिदं भारतीयत्वेनांशेनापि विराजते। तदिदं तादृशपरम्परानिर्माणमूलकमेवेत्यत्र पाश्चात्या अपि संमन्यन्ते।

## ( इदानींतनशिक्षणप्रणालीपर्यालोचनम् )

यत्त्विदानीं सर्वत्र शिक्षणपदवाच्यं सर्वविधज्ञानं जोघुष्यते, तत्रेदं विचारणीयम्—किमिदं ज्ञानं कर्तव्यपर्यवसायित्वेनापेक्ष्यते न वा ? यद्यपेक्ष्येत, तर्हि कर्तव्यमपि निर्धारणीयं स्यात् । तच्चेद्राष्ट्रहितम्, तर्हि राष्ट्रस्य राष्ट्रत्वं हितस्य च हितत्वमपि प्रमाणपद्धत्या निश्चेतव्यं भवति । नो चेद्यथाकथमपि स्वतर्कविलसितेन प्रवर्तमानो जनः

> " यस्य कस्य तरोर्मूलं येन केनापि घर्षितम् ।
> यस्मै कस्मै प्रदातव्यं यद्वा तद्वा भविष्यति "

इत्याभाणकं प्रमाणीकुर्यात् । न हि मूर्खेण केनापि भिषक्ब्रुवेणौषधत्वेन दत्तं यत्किमपि सकलानेव घातयति । न वा भिषग्वरेण दत्तं रसायनमपि सर्वेषामारोग्यं पुष्णाति । एवमपि प्रमाणपद्धत्या निर्धारिता चिकित्सैवापेक्ष्यते सर्वैः । एवमिहापि यथाकथमपि राष्ट्रहितबुद्ध्या प्रवृत्तिरकिंचित्करैव । परंतु प्रमाणसिद्धराष्ट्रहितानुसारेण जायमाना प्रवृत्तिरेव यथार्थतया योगक्षेमकारिणीति सैवापेक्ष्यते जनैः । अतश्च राष्ट्रत्वं तद्धितत्वं च प्रवृत्तीनां केन प्रमाणेन प्रमातव्यमिति प्रथमतो विचारणीयम् । ततश्च तादृशराष्ट्रहितमुद्दिश्यैवेदानींतनी शिक्षणप्रणालीति प्रमापणीयम् । नो चेत्कर्तव्यपर्यवसायित्वं ज्ञानस्य कथमपि नोदियादिति निश्चप्रचमेव ।

वयं तु ब्रूमः——ज्ञानस्य कर्तव्यपर्यवसायित्वमवश्यमेवोरीकर्तव्यम् । प्रवृत्तिनिवृत्त्योर्हि ज्ञानकारणकत्वात्, तत्र प्रवृत्तिं प्रतीष्टसाधनताज्ञानं कारणम् । निवृत्तिं प्रति त्वनिष्टसाधनताज्ञानम् । इष्टानिष्टे तु नेच्छानिच्छामात्राभ्यां सुनिश्चेये । इच्छानिच्छयोरपि ज्ञानकारणकत्वात् । ज्ञानं च यदि यथाकथमपि जायमानमनुमन्येत, तदा हि असत्यहिंसाचौर्यसाहसादीनामपि कर्तव्यता भवेत् । न हि तादृशं ज्ञानं नैव भवितुमर्हतीति केनापि वक्तुं शक्यम् । युक्तीनां सर्वत्राप्रतिहतप्रसरत्वात् । दृश्यते हीदानीमपि समाजस्वत्ववादप्रतिष्ठापनाय परस्वत्वघातपरद्रव्याद्यपहरणादिसाहससमर्थनम् । एवं च जायमानं ज्ञानमपि प्रामाणिकमेवापेक्षणीयम् । तत्र च प्रमाणतत्प्रामाण्ययोर्विचारोऽपि कर्तव्यः स्यात् । प्रत्यक्षादिप्रमाणान्यपि प्रमाणान्तरविरोधेऽप्रामाण्यमावहन्तीति सिद्धमेव सूर्याचन्द्रमसोः परिमाणेन । यदि प्रत्यक्षमेव प्रमाणम्, तदा दृश्यमानपरिमाणातिरिक्तशास्त्रीयपरिमाणस्य बाधः । यदि च शास्त्रमेव प्रमाणम्, तर्हि प्रत्यक्षबाधः । तत्र केन कस्य बाध इति विषये त्विदमेव वक्तव्यं स्याद्यस्य प्राबल्यं, तेनेतरस्य बाधः । तत्र प्रमाणप्राबल्यदौर्बल्यचिन्तापि प्रमाणाधीनैवेति तदनिश्चये सर्वमपि संदिग्धमेवेति शास्त्रस्यैवाप्रामाण्यं स्यात् । निश्चायकस्य संदेहजनकत्वे को वा प्रेक्षावान् तत्प्रामाण्यमङ्गीकुर्यात् । तदगत्या यथादृष्टमेव व्यवहरेज्जनः । अतश्च शास्त्रप्रामाण्यमितरप्रमाणनिरपेक्षमेव स्वतःसिद्धमङ्गीकरणीयमिदानींतनैरपि । तेन चेतरप्रमाणबाध इत्येव प्राचीनः

पन्थाः श्रेयस्कर इत्यायातम्। यदि च प्रकाशगतिप्रदर्शनद्वारा वा प्रकाशपरिमाणप्रदर्शनद्वारा वा सूर्याचन्द्रमसोः परिमाणमतीव प्रथिमानमावहतीति प्रमाणीक्रियते, तदा तु कर्मविपाकशास्त्रस्यापि स्वाभाविकयोग्यताभेदलिङ्गकानुमानेन प्रामाण्यं न कथमपि बाधितुं शक्यम्। यदि तच्छास्त्रकर्तॄणां लाभपूजाख्यातिमूलकप्रणयनकर्तृत्वमुत्प्रेक्षेत, तदत्रापि दुर्निवारम्। तथा च—

यश्चोभयोः समो दोषः परिहारोऽपि तत्समः।
नैकस्तत्रानुयोक्तव्यस्तादृगर्थविचारणे॥

इति युक्तमुत्पश्यामः। सर्वथा तु शास्त्रप्रामाण्यमिदमुभयेषामप्यपरिहार्यम्। स्वाभाविकपिण्डगतयोग्यताभेदश्चेदानीं शिक्षणक्षेत्रेऽविप्रतिपन्न एव। तथा चेष्टत्वानिष्टत्वे अपि शास्त्रबोधिते एवोपादेये। एवं शास्त्रप्रतिपादितेष्टस्य साधनतापि शास्त्रप्रमितैव, न स्वकपोलकल्पितेति। न हि सत्यस्य वाऽहिंसादेर्वा येष्टसाधनता, सा सर्वत्र निराबाधा। न हि हिंस्रश्वापदानां वा राक्षसप्रकृतीनां वा पुरतः तेषामिष्टसाधनत्वं केनापि साधयितुं शक्यम्। न वा शास्त्रेणापि बोध्यते। अतश्च शास्त्रबोधिताऽहिंसैव परमार्थतोऽहिंसा, सत्यादीनामपि सैव गतिरित्यगत्याऽनुमन्तव्यम्। अत एव तादृशेष्टसाधनस्य कर्तव्यत्वेनोपदेशः। एवं च ज्ञानस्य शास्त्रबोधितकर्तव्यपर्यवसायित्वं सिध्यति। शास्त्ररूपप्रमाणाभावे तु स्वातन्त्र्यसमतेत्यादीनामिदानींतनानां निराबाधप्रसराणां तत्त्वानामुद्घोषे तु समाजे सर्वेषां द्वेषेर्ष्याविषादुर्भावेन हानिरेव जायमाना प्रत्यक्षगोचरा कथमप्रमाणीकर्तव्येति विचारणीयं विचक्षणैः।

तदेवं राष्ट्रहितार्थे शुद्धसंतानपरम्परा अतीवोपयुक्तेति तदर्थं स्त्रीपुरुषसंबन्धोऽपि यथा विशुद्धिमावहेत्तथैव नियमनमावश्यकमिति सिध्यति। तच्च शास्त्रप्रतिपादितविवाहसंस्कारात्मकमेव भवितुमर्हति नान्यथा कामादिमूलकम्। शास्त्रविरुद्धस्य कामस्य विशुद्धप्रजाजनकत्वस्यासंभवात्। शास्त्रविहितविवाहसंस्कारसंस्कृतस्तु कामः शास्त्रीय एवेति नो परिहेयः। अतश्च सुप्रजस्त्वमेव विवाहप्रयोजकमितिसिद्धम्। एतादृशशास्त्रीयविवाहस्वरूपपर्यालोचनमिदानीमवश्यमेव विधेयम्। धर्मशास्त्रे तु विधिनिषेधा बहवः किलोपलक्ष्यन्ते। एवमपि विवाहाङ्गत्वं किं सर्वेषामेवोत केषांचिदिति सुमहान् संशयः। न हि वृक्षनदीनाम्नीनां कन्यानां विवाहे पत्नीत्वमेव नोत्पद्यते सत्यपि "नर्क्षवृक्षनदीनाम्नीम्" (मनु. ३।९) इति निषेधातिक्रमे। समानार्षगोत्रजादीनां तु विवाहे

"मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्"

इति निषेधातिक्रमे त्यागपूर्वकप्रायश्चित्तविधानात् "मातृवत्पालयेदेनाम्" इति मातुरतिदेशेन पालनविधानाच्च पत्नीत्वमेव नोत्पद्यत इति गम्यते। एवमपि बलोपभोगवत् पुनस्तस्याः संस्कारोऽपि नास्ति पत्नीत्वाभावसादृश्येऽपि एकत्र पालनविधानादन्यत्र पुनः संस्कारविधानाच्च। तदेवं दानप-

तिग्रहयोस्तुल्यत्वेऽपि एकत्र पत्नीत्वोत्पत्तिरन्यत्र तदभावश्चेत्यत्र किंवा निदानं स्याद्विवाहाङ्गत्वानङ्गत्वाभ्यामन्तरा । अतश्चाऽऽदौ विवाहाङ्गभूता विधिनिषेधाः पर्यालोचनीयाः । तत्रापि के वा दानाङ्गभूताः, के वा प्रतिग्रहाङ्गभूताः, के वा द्रव्याङ्गभूता इत्यपि पर्यालोचनीयम् । द्रव्यं च वधूवरात्मकमेव । अतश्च तत्समीक्षणमारभामहे ।

## ( दानाङ्गभूतविधिनिषेधविचारः )

तत्र दानं नाम स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनम् । स्वत्वं च यथेच्छविनियोगाधिकारप्रयोजकः कश्चनालौकिको धर्मो वस्तुनिष्ठः । सोऽयं यथेच्छविनियोगाधिकारः स्वामिनो विनियोज्यवस्तुगतभोग्यत्वानुसारी शास्त्रनियमित एव । न हि यत्किमपि यस्य कस्यापि स्वमिति यथाकथमपि यः कोऽपि स्ववासनानुसारेण विनियोक्तुमर्हति । न हि गृहक्षेत्रादिकमपि व्यवहारनीतिमपहाय यः कोऽपि विनियोक्तुमीष्टे । तथाऽत्रापि व्यवहारनीत्यनुसारेणैव संततेरपि विनियोगः स्यात् । तत्र चेच्छैव प्रयोजिकेति यथेच्छविनियोगाधिकार इत्युच्यते । तथा च कन्यापुत्रादीनां कुत्र वा विनियोगः कर्तव्य इत्यत्राऽऽदौ व्यवहारनीतिरेव पर्यालोचनीया । साऽपि धर्मशास्त्रेणानुशासितैव ।

"शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः"

इति सूत्रं हि संतानस्य प्रदानविक्रयत्यागानेवोपदिशति । यदि संतानस्य विनियोगः कर्तव्यस्तर्हि अत्रैव नान्यत्रेति। एतेन हत्यादीनां निवृत्तिः । नैतावता एतेषामवश्यकर्तव्यता शास्त्रेण बोध्यते । अतश्च पुत्रवत्कन्यापि कदाचित् स्वेच्छया गृहे वसेद्विना प्रदानविक्रयत्यागेभ्यः । एतन्मूलकमेवेदं मनुवचनम्—

कामामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचिदिति ॥

परंतु— प्रजनार्थं स्त्रियः सृष्टाः संतानार्थं च मानवाः ।
तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥

इति नैसर्गिकशरीररचनानुसारेण स्त्रीदेहस्य पुरुषदेहस्य च परस्परसंबन्धोऽयं संतानपरम्परासंरक्षणार्थमत्यावश्यक इत्यपि सिध्यति । तत्र संतानपरम्परासंरक्षणस्यावश्यकर्तव्यताया अतिभारोऽयं पुरुषस्योपरि ऋणत्रयवाक्याद्वगम्यते । अत एव—

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥ ( ४।२ म. )

इति " कन्यायाः पाणिं गृह्णीयात् " इत्यादि च पुरुषस्यैवोद्वहनाधिकारबोधकं वचनं संगच्छते। अतश्च पुरुषेणैव स्त्री लब्धव्या वोढव्या चेति सिध्यति। न तु स्त्रिया पुरुषः। तत्र स्त्रीलाभस्तावद्दानक्रयाभ्यामेव ब्राह्मणस्य दानक्रयजयैश्च क्षत्रियस्य दानक्रयाभ्यां वैश्यस्य शूद्रस्य च भवितुमर्हति। तत्र क्रयस्य विगीतत्वं पूर्वमेवोक्तम्। जयविषयेऽपि राक्षसविधिचर्चायामुक्तप्रायमेव। अवशिष्टं तु दानमेव स्त्रीलाभस्य हेतुः सर्ववर्णसाधारणमिति तदेव विवाहाङ्गभूतमिति सिध्यति। एतेन–समानाधिकारवादोऽपि निरस्तः। जन्मसिद्धाधिकारसाम्येऽपि क्रियाविनियोगानुसारेणाधिकारभेदस्य सर्वसंमतत्वात्। न हि जन्मसिद्धाधिकारसाम्यमिति प्रधानपदाधिरूढस्य गृहवाहनादिसौकर्यप्रदानमिव सन्त्रिणोऽप्यारक्षकस्य वा तथा भवितुमर्हतीति साम्यवादिभिरपि कर्मविनियोगानुसारेण भोग्यवस्त्वधिकारभेदः स्वीकर्तव्य एवाकामैरपि। अतः स्त्रिया एव दानं न पुरुषस्येति तदेव विवाहाङ्गभूतम्।

ननु दानं नाम स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनम्। तत्र स्त्र्यपत्ये यत् पित्रादीनां स्वत्वं तत् कन्यात्वेन स्यात्। दानं तु न कन्यात्वेन। तथा सति दत्तकपुत्रवत् प्रतिग्रहीतुस्तत्र कन्यात्वं संपद्येत। यत्तु संतानोत्पादनक्षमत्वं स्त्र्यपत्ये, तत्र तु न स्वत्वमिति न तस्य दानं संभवति। न च तत्राप्यस्तु स्वत्वमिति वाच्यम्। स्वधातुजन्यत्वस्यैव संताने स्वत्वप्रयोजकत्वात्। तत्र स्त्र्यपत्ये तादृशधातुजन्यत्वेन स्वत्वसिद्धावपि स्वधातुजन्यत्वविशिष्टस्त्रीत्वस्यैव कन्यात्वेन तेन रूपेण दाने च प्रतिग्रहीतुस्तत्र कन्यात्वसिद्धौ भार्यात्वं पत्नीत्वं वा न सिध्येत्प्रतिग्रहीतुः। अतश्च अपत्योत्पादनक्षमत्वेनैव तत्र प्रतिग्रहीतुः स्वत्वं यथा सिध्येत्, तथैव दानमप्यावश्यकम्। न च तत्र स्वामिनः स्वत्वम्। न हि स्त्र्यपत्यं स्वामिनः पित्रादेरपत्योत्पादनक्षममिति स्वत्वाभावाद्दानमपि न सिध्यतीति न दानस्य विवाहाङ्गत्वम्। अत एव विवाहानन्तरमपि कन्यात्वस्य न निवृत्तिः। अत एव ऋतुत्रयपर्यन्तं प्रतीक्ष्यानन्तरं स्वयंवरणे दानाभावेऽपि विवाहसिद्धिः। ऋतुत्रयानन्तरं दानाभावस्य पित्रादिस्वत्वनाशगमकत्वकल्पनायामपि तादवस्थ्येन तन्मूलकप्रतिग्रहस्याप्यसिद्धौ विवाहमात्रस्य च तत्र सिद्धिरवश्यं भवतीति न दानस्य विवाहाङ्गता। ननु "पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति" इति पारस्करादिगृह्यवचनानां—

> पिता पितामहो भ्राता सकुल्यो जननी तथा।
> कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥ ६३
> अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ।
> गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम्॥ ६४॥

इत्यादीनां दातृक्रमबोधकानां स्मार्तवचनानां तथा ब्राह्मादिविवाहलक्षणबोधकानां च वचनानां का गतिरिति चेदत्रोच्यते। विवाहे हि दानं प्रतिग्रहः संस्कारश्चेति त्रयोंऽशाः। तत्र दान-

प्रतिग्रहयो राक्षसादिविवाहेषु स्वयंवरे चानियत्वात् संस्कारमात्रेणैव विवाहसिद्धिरिति तु न विप्रतिपन्नम्। अत एव नारदः—

स्त्रीपुंसयोस्तु संबन्धाद्वरणं प्राग्विधीयते।
वरणाद्ग्रहणं पाणेः स संस्कारो विलक्षणः॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात्॥ इति।

(अ. १२ श्लो. २३) तयोर्वरणपाणिग्रहयोर्मध्ये वरणमनियतं यतस्तद्दोषदर्शनात् प्रत्यावर्तते इत्यर्थ इति चात्र बालंभट्टी च संगच्छते। तथा मनुरपि—

नोदकेन न वा वाचा कन्यायाः पतिरुच्यते।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे॥ इति।

अनेन चेदमवगम्यते यत्र विवाहसंस्कारस्य दानापेक्षा न वा दानमात्रेण स्वःस्वनाशः पित्रादीनाम्। तदेवं विवाहेऽकिंचित्करस्य दानस्य कथं विवाहाङ्गत्वम्। अङ्गं हि तदेव यत्परार्थं सत् परस्य कारणं भवति। "शेषः परार्थत्वात्" इति सूत्रं हि शेषस्वरूपं हेतुश्च श्रुत्यर्थाभ्यां प्रतिपादयति। तत्र परार्थत्वं नाम परोद्देशेन विहितत्वम्। यस्मात्परोद्देशेन विहितत्वम्, अत एव परोपकारकत्वमपि। उपकारश्च गुणाधानेन दोषापनयनेन स्वरूपनिष्पत्त्या वा भवति। प्रयाजादयो हि दर्शपूर्णमासावुद्दिश्य विहिताः, अपूर्वद्वारा तावुपकुर्वन्तीति तच्छेषाः। न ह्येवं दानं विवाहोद्देशेन विहितं न वा तदपूर्वद्वारा विवाहसंस्कारमुपकरोतीति कथं तदङ्गम्। न च तत्राप्यपूर्वद्वारोपकारः। तथा सति तेन विना विवाहासिद्धिः स्यात्। न च तथा। स्वयंवरादिषु तदभावेऽपि विवाहसिद्धेरनुपदमेवोक्तत्वात्। किं चेदमपत्यदानं न विवाहमात्रोद्देशेन विहितम्। दत्तकादिसाधारण्यात्तस्य। अतश्च विवाहोद्देशेन विहितत्वाभावात् विवाहोपकारकत्वाभावात् दीयमानांशे पित्रादीनां स्वत्वासिद्धेश्च न दानं विवाहाङ्गमिति सिद्धम्। पूर्वोक्तगृह्यस्मार्तवचनानि तु न विवाहाङ्गभूतदानबोधकानि किं तु संताने पित्रादीनां जन्यजनकभावमूलकस्वत्वबोधकानीति तादृशदानबोधकानीति परिकल्पनीयमगत्या।

अत्रेदमुच्यते—स्यादेतदेवं यदि नाम संताने पित्रादीनां स्वत्वमेव न स्यात्। स्वत्वेऽपि वा संतानस्य विनियोगे पित्रादीनामनधिकारः स्यात्। न चैतदस्ति। शुक्रशोणितसंभूतत्वेन पित्रादीनां स्वत्वस्य तन्मूलकविनियोगाधिकारस्य च शास्त्रसिद्धत्वात्। स चायं विनियोगः कन्यासंततेः कस्मिन् कर्मणि कर्तव्य इत्याकाङ्क्षायां स्वयंभोगस्य निषिद्धत्वात् संतानोत्पादनस्य च शास्त्रविहितत्वाच्च परस्मै संतानोत्पादनार्थं दानमेवार्थात् सिध्यति। किं च संततिनिर्माणं हि विना क्षेत्रलाभ न सिध्यतीति तल्लाभः क्षेत्रसंमत्यैव भवेत्। सा च संमतिः क्षेत्रस्य वा तत्पालकस्य वाऽवश्यं संपादनीया। तत्र स्वयंवरे क्षेत्रमात्रस्य संमतिः, ब्राह्मादिषु तु तत्पालकस्य। तदेवं संमतेरावश्यकतया

तदभिज्ञापकस्य कस्यचित्कर्मणोऽप्यावश्यकत्वमर्थादेव सिध्यति । तत्र दानादन्यत् किमपि कर्म न कर्तव्यम्, इत्येव शास्त्रेण नियम्यते । तच्च न कन्यात्वेन न वा स्त्र्यपत्यत्वेन । किंतु प्रजोत्पत्तिक्षमदेहत्वेन। तादृशदेहे स्वजन्यत्वेन लालनपालनादिना च पित्रादीनां स्वत्वाधिकारः केन निवार्यताम्? तस्मात्सिध्यत्येव स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च । एवमेव विवाहसंस्कारोऽपि न संमतिमन्तरा संभवति । यत्र राक्षसादिविवाहेषु संमतेरभावः । तत्र तस्मादेव विगीतत्वमिति तादृशां विवाहोपवर्णनमिदं धर्मशास्त्रे स्थितस्य गतिश्चिन्तनीयेति न्यायेनैव नान्यथेति पुरस्तादेव निरूपितम् । तदेवं विवाहसंस्कारोऽयं क्षेत्रसंमतिमन्तरेणानुपपन्नस्तद्बोधकदानविधिमप्याक्षिपतीति विवाहस्वरूपनिष्पादकत्वात्कन्यादानस्य तदुद्देशेन विहितत्वाच्च विवाहाङ्गतेति सिध्यति ।

सोऽयं दानाधिकारः पित्रादीनां संतानोत्पादक्षमत्वविशिष्टस्त्रीदेहत्वेनेति तादृशावस्थायामपि यो वर्षत्रयपर्यन्तं न ददातीति स्वकर्तव्यभ्रंशात्सोऽधिकारः पित्रादीनां नश्यतीति स्वयंवराभ्यनुज्ञा। तत्रापि स्वसंमतिप्रदर्शनं कन्यायाः स्वयमेव दानमिति फलतीति स्वयंवर उच्यते। नात्र वरणं नाम प्रतिग्रहः । न हि कन्यया तत्र प्रतिग्रहः क्रियते वरस्य । किंतु मयि प्रजोत्पादनार्थं त्वं मेऽभिमत इतीच्छाप्रकाशनमेव । ततश्च पाणिग्रहणादिः संस्कारः । इदमेवाभिप्रेत्य " पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति " इति पारस्करगृह्यवचने आदाय गृहीत्वेति च समानार्थके पदे । अनेन च पदद्वयेन स्वीकृत्य हस्तं गृहीत्वेति स्वीकारानन्तरमेव पाणिग्रहणं तदप्यप्रतिग्रहविषयस्य क्षत्रियादेरपीति बोध्यते । एवं चाऽऽदायेति ल्यबन्तेन समानकर्तृकत्वस्य पूर्वकालभावित्वस्य च बोधनादेव शेषशेषिभावोऽपि सिध्यति दानविवाहयोरिति स्पष्टमेव कन्यादानस्य विवाहाङ्गत्वम् । अस्तु वाऽऽदायेति ल्यपः क्रमबोधकत्वम् । एवमपि क्रमातिक्रमे कर्मणो वैगुण्यात् साद्गुण्यसंपादनाय पूर्वकालभाविनः स्वीकारस्यापेक्षा केन वा वारणीया । एवं स्वीकारसिध्यर्थमपि दानं परम्परया विवाहाङ्गमेवेति तदुद्देशेन विहितत्वात्तच्छेषता त्वप्रत्याख्येयैवेति । अधिकं चात्रोह्यं सुधीभिः ।

एतेन स्त्रीदाक्षिण्यवादिनां राष्ट्रहितं पुरस्कुर्वतां प्राज्ञंमन्यानामिदानीतनाना पशोरिव न कन्यानां दानं युक्तमिति मतमपास्तम् । यथा हि न पशूनां पूर्वापरसमयानुसंधानं तन्मूलकं हिताहितज्ञानं च । तथा मनुष्याणामपीति को विशेषो विनाऽऽकृतिं मानवानां पशुभ्यः । किं बहुना दण्डसंस्थामन्तरेण क्षणमपि सुखेन स्थातुमशक्नुवानानामेतेषां मानवाना पशुतोऽपि निकृष्टत्वमनुमीयते । दण्डसंस्थायामपि मानवानामस्वास्थ्यं कलहादिकं संघर्षादिकं च सर्वंकषं यदिदानीं दरीदृश्यते तदेव किल पशुतोऽपि निकृष्टावस्थां गमयति मानवानाम् । दण्डसंस्थायामपि यत्किलानुशासनं वरीवर्ति, तत्रापि तात्कालिकसुखापेक्षया राष्ट्राभ्युदयस्य ज्यायस्त्वमभिमत्य यत्किल व्यक्तिस्वातन्त्र्यनियमनं क्रियते । अपि नाम तेन मानवताया वा जन्मसिद्धाधिकाराणां वा नियमनं न भवति । तथैव यदि वंशपरम्परयाऽखण्डदण्डायमानराष्ट्रपुरुषस्याभ्युदयार्थं सुप्रजस्त्वसंपत्तये यदि नाम

शास्त्रेण नियमनं क्रियते । तत्र कथं वा कोलाहल इत्यत्र निदानं तु पशोरिवेन्द्रियतृप्तिमन्तरा नान्यत्किमपि पश्यामः । विषयेष्विन्द्रियाणां या आपाततो रमणीयत्वेन प्रवृत्तिः, सैव पशुत्वम् । का वेदानींतनी रमणी रमणीयत्वमन्तरेण पतिवरणेऽन्यत् परीक्षितुं शक्नोति । के वा ब्राह्मणपुंगवा ज्ञानपरम्परासंरक्षणमेव परमं श्रेयो मन्यमाना दारिद्र्यमप्युररीकृत्य तदेककर्तव्यनिष्ठा इदानीमुपलभ्यन्ते । अपि नाम नास्ति राष्ट्रपुरुषस्य ज्ञानपरम्परापेक्षा । प्रत्युतोपयुक्ततावादं पुरस्कृत्य तत्तच्छास्त्रीयज्ञानपरम्परायाः समूलोन्मूलने कृतदीक्षा एव सर्वत्रोपलभ्यन्ते । स्पष्टं चेदं ( डायरेक्ट मेथड ) प्रचलितशिक्षणपद्धत्या । तदत्र यदि कर्तव्यतानिष्ठैव सर्वेषां विनष्टा स्यात्, तदा तु न स्त्रीणां दानमिति सिध्येत् । शास्त्रं तु कर्तव्यमेवानुशास्ति, न भोगप्रलोभनमिति शास्त्रानुसारेण कर्तव्यनिष्ठानां जन्मसिद्धाधिकारः कर्तव्यमेवेति न तत्र स्वेच्छावसरः । न हि स्वयंवरेण सर्वत्र योग्यपतिवरणमेव भवति । नापि वा पित्रा दानेन सर्वत्र संसारसुखोच्छेद इत्यन्वयव्यतिरेकौ । स्वयंवरेऽपि घटस्फोटस्य बहुश उपलम्भात् । दानेऽपि संसारसुखस्य सर्वत्र दृश्यमानत्वात् । तत्र संततिस्वरूपपर्यालोचने तु दानपूर्वकविवाहस्यैव सुप्रजस्त्वसंपादकत्वं प्राचुर्येणोपलभ्यते । न तथा स्वयंवरस्य । ततश्च राष्ट्रपुरुषाभ्युदयार्थं सुप्रजस्त्वसंपत्तये जन्मसिद्धस्वातन्त्र्यबाधेनापि पित्रादिपारतन्त्र्यमवश्यमेव स्वीकरणीयं स्त्रीणामित्येव समीचीनम् । किं च जन्मतो यैर्लालनपालनादिकमनुष्ठितम्, तेषामपि संततेः सकाशात्काचन भोगलिप्सा तु जन्मसिद्धैव । ततश्च दानापेक्षया स्वयंभोग एव सिध्येत् । तद्वरं शास्त्रानुशिष्टं दानम् । अतश्च सिद्धं शास्त्रस्य जन्मसिद्धाधिकारबाधकत्वम् । अत एवोक्तम्—

> शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः ।
> मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः ॥

इति । अधिकं चात्र प्रमाणप्रतिबिम्बतोऽनुसंधेयम् तदेवं सिद्धे किल दानस्य विवाङ्गत्वे तद्दानं केन कदा कस्मै कथं च कर्तव्यमित्याशङ्का समुदेति । अतश्च दानाधिकारिणः दानकालः वरविचारः दानपद्धतिश्चेति विचारविषयाः पर्यालोचनीयाः । तत्र दानाधिकारिणां पित्रादीनां याज्ञवल्क्यवचनानुसारेणानुपदमेवोक्तत्वात् सर्वेषामभावे तु "कन्या राजानमाव्रजेत्" इत्यनुशासनात् नाधिकं किंचित् विचारणीयम् । कदेति कालनिर्णयः आवश्यकः । ऋतुत्रयातिक्रमे स्वयंवरविधानात् । अतश्चाऽऽदौ तमेव विचारयामः ।

## ( कन्यादानसमयसमीक्षा )

अत्र च विषये बहूनां बहुशो विप्रतिपत्तिः ।

"वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः"

इति मनुवचनात् उपनयनातिदेशं मन्वाना बहवः किल निबन्धाः कन्याविवाहस्योपनयनकाल एव वैधः काल इति मन्वते। उपनयनकालश्चाष्टवर्षं ब्राह्मणमुपनयीत, एकादशवर्षं राजन्यम्, द्वादशवर्षं वैश्यम् " इति वचनेभ्योऽष्टवर्षात्मको ब्राह्मणस्य एकादशवर्षात्मको राजन्यस्य द्वादशवर्षात्मको वैश्यस्य। एवं च तत्तज्जातीयकन्यानां विवाहकालोऽपि तथैवेति ब्राह्मणकन्याया अष्टमे राजकन्याया एकादशे वैश्यकन्यायाश्च द्वादशे वर्षे विवाहः कर्तव्य इति सिध्यति। एवमपि "आ षोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते। आ द्वाविंशात्क्षत्रबन्धोरा चतुर्विंशतेर्विशः" (मनु १-३८) इत्यादिवचनेभ्यस्तेनैवातिदेशेन क्रमशो ब्राह्मणक्षत्रियवैश्यकन्याना षोडश–द्वाविंशति–चतुर्विंशतिवर्षात्मकं विवाहकालं गौणं वदन्ति सर्वेऽपि निबन्धकाराः। अत्रेयमाशङ्का समुदेति यदि गौणो वा मुख्यो वा कथमपि विवाहकालश्चतुर्विंशतिवत्सरपर्यन्तमपि सिध्येत्। स एव च दानकाल इत्यपि धर्मशास्त्रानुमतं स्यात्। तर्हि तु " कालेऽदाता पिता वाच्यः ",

"प्राप्ते तु द्वादशे वर्षे यदा कन्या न दीयते।
तदा तस्यास्तु कन्यायाः पिता पिबति शोणितम्॥
कन्या द्वादश वर्षाणि याऽप्रदत्ता गृहे वसेत्।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम्॥
प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति।
मासि मासि रजस्तस्याः पिता पिबति शोणितम्॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः॥"

इत्यादिवचनानां कथं संगतिः। नहि चतुर्विंशतिवत्सरपर्यन्तं काऽपि कन्या विना ऋतुमवतिष्ठेत्। यदि च मुख्यकालप्रशंसापरत्वमेतेषां परिकल्प्येत। एवमपि द्वादशवत्सरादूर्ध्वं स्वयंवरानुज्ञानमनुपपन्नमेव। तथाहि गौणकालबोधकानि वाक्यानि खलु तावत्कालपर्यन्तं पितुः स्वत्वमवगमयन्ति। स्वयंवरवाक्यानि तु द्वादशे वर्षे वा ऋतुत्रयप्रतीक्षणे वा ऋत्वनन्तरं वर्षत्रयापगमे वा तदभावमवगमयन्ति। यदि च पूर्वोक्तः सर्वोऽपि दानकाल एव। तर्हि तु पित्रादीनां स्वत्वमपि तावत्कालपर्यन्तमभ्युपगम्यमेव। तथा सति स्वयंवरवाक्याना निरवकाशत्वमेव। न हीमानि वाक्यानि ब्राह्मणकन्यापराण्येव। सामान्यतो विधानात्। नाप्यापदनापत्परत्वेनापि व्यवस्था। मानाभावात् मुख्यकालप्रशंसापरत्वेनाभ्युपगमे तु स्वार्थे.तात्पर्याभावात् प्रायश्चित्तविधेरानर्थक्यप्रसङ्गः। भूतार्थवाद

स्यैव किल स्वार्थे तात्पर्यं । नान्यस्येति च सिद्धान्तः । न चेमे भूतार्थवादाः । अतश्चागत्या दानविवाहयोः कालभेदः कल्पनीयः । अत एव कन्याप्रतिग्रहानन्तरं नरः कार्यवशाद्देशान्तरं गतोऽकृतविवाह ऋतुत्रयानन्तरं नाऽऽगतश्चेदन्यस्मै दानं विवाहश्च शास्त्रेणाभ्यनुज्ञातौ। तथा च नारदः—

परिगृह्य तु यः कन्यां नरो देशान्तरं व्रजेत् ।
त्रीनृतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम् ॥ इति ।

न चेवं पुनर्विवाहपरमित्यग्रे वक्ष्यामः । तथा च ऋतुदोषबोधकानां वचनानां दानकालपरत्वमुपनयनातिदेशप्राप्तकालस्य विवाहपरत्वमङ्गीकर्तव्यम् । अत एवानिष्पन्ने विवाहे गुणवद्वरलाभे च बलादाच्छिद्य गुणवद्वराय दानमनुशिष्टं संगच्छते । यदि दानविवाहयोरेककालिकत्वं स्यात्तदा तु पुनर्विवाहप्रसक्तिरेव बलादाच्छेदे ।

एतत्सर्वमनुसंधायैव " प्रदानं प्रागृतोः " इति गोतमवचनानुसारेण ऋतुकालात्पूर्वतनः कालो दानकाल इत्यपरेऽभ्युपगच्छन्ति । युक्तं चैतत् । वरणवाक्यानामृतुदोषबोधकानां च वाक्यानां सुसंगतत्वात् । परं तु ऋतुकालनिर्णयस्तु सर्वकन्यासाधारणो निर्धारणीयः । तत्र देशवशात् प्रकृतिवशात् वासनावशाच्चैककालनिश्चयस्त्वशक्यप्राय एव । केचित्तु—

ऋतुकाल इति प्रोक्तो गार्ग्यादिमुनिसत्तमैः ।
स्त्रीचिन्हं यौवनं प्राप्य षोडशे वत्सरे सदा ॥
कृत्रिमाद्दशमादूर्ध्वमौषधस्य च सेवनात् ।
एकादशे द्वादशे वा ऋतुकालं वदन्ति हि ॥
अनुरागाद्द्वादशाब्दे त्रयोदश्यां तु केचन ।
चतुर्दशे पञ्चदशे स्त्रीचिन्हं तु भविष्यति ।

इत्यादिवचनानुसारेण दशमवत्सरादारभ्याऽऽषोडशमृतुकाल इति मन्यन्ते । अतश्च दशमात् प्रागेव कन्यादानं कर्तव्यमिति सिध्यति । अत एव—

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

इत्यादीनि स्मार्तवचनानि संगच्छन्ते ।

अन्ये पुनर्द्वादशवत्सरादूर्ध्वमृतुकाल इति वदन्ति । तस्मात्तने पात्राऽऽपुर्वेदम् । तथाहि अष्टाङ्गहृदये शारीरस्थाने प्रथमेऽध्याये—

मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ।
वत्सराद्द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥
पूर्णषोडशवर्षा स्त्री पूर्णविंशेन संगता ।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥
वीर्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥ इति ।

तथा पञ्चदशाध्याये तत्रैव—

यदा बाल्यमतिक्रम्य तारुण्यं यान्ति योषितः ।
कायश्च मानसो भावस्तदा तासां विवर्तते ॥ १ ॥
स्तनौ पीनोन्नतौ स्यातां योनिश्च परिवर्धते ।
समुद्भवन्ति लोमानि वस्तिदेशे समन्ततः ॥ २ ॥
जरायुकोशात्तन्वच्छं शोणितं च प्रवर्तते ।
तदार्तवं रजश्चेति पुष्पनाम्ना च गद्यते ॥ ३ ॥
मासि मासि स्रवेद्रक्तं शशशोणितसंनिभम् ।
लाक्षारसनिभं वापि तददोषं विनिर्दिशेत् ॥ ४ ॥
तिस्रश्चतस्रो वा पञ्चाप्यनुबध्नाति तन्निशाः ।
अतोऽन्यथा रजः स्त्रीणां जानीयाद्दोषवद्भिषक् ॥ ५ ॥
अरुणानामशोकानां प्रायशश्च प्रवर्तते ।
द्वादशाद्वत्सरादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ६ ॥
आर्तवस्रावदिवसादृतुः षोडश रात्रयः ।
गर्भग्रहणयोग्यस्तु स एव समयः स्मृतः ॥ ७ ॥
नारीणां प्रकृतेर्भेदादृतुकालस्य चान्यथा ।
गर्भग्रहणकालस्य कीर्तितं देहवेदिभिः ॥ ८ ॥
दिने व्यतीते नियतं संकुचत्यम्बुजं यथा ॥ इति ।
वयस्त्वाषोडशाद्बाल्यं तत्र धात्विन्द्रियौजसाम् ।
वृद्धिरासप्ततेर्मध्यं तत्रावृद्धिः परं क्षयः ॥ १०५ ॥

इति । कालनिर्णयदीपिकायामपीदमेवोक्तम्—

ऋतुकाल इति प्रोक्तं गार्ग्यादिमुनिसत्तमैः ।
स्त्रीचिन्हं यौवनं प्राप्य षोडशे वत्सरे सदा ॥

कृत्रिमादश्नमादूर्ध्वमौषधस्य निषेवणात् ।
एकादशे द्वादशे वा ऋतुकालं वदन्ति हि ॥
अनुरागाद्द्वादशाब्दे त्रयोदशे तु केचन ।
चतुर्दशे पञ्चदशे स्त्रीचिन्हं तु भविष्यति ॥
वातजा पित्तजा चेति दारुणा त्रिविधा स्मृता ।
वातजा द्वादशे वर्षे पित्तजा च चतुर्दशे ॥
दारुणा षोडशे वर्षे शोणितं पतति ध्रुवम ॥ इति ।

एभिश्चाऽऽयुर्वेदीयवचनैः स्पष्टमिदमवगम्यते यद्द्वादशाद्वत्सरादूर्ध्वमाषोडशं स्त्रीणामृतुप्राप्तिकाल इति । यदि पितृगृहेऽप्रदत्ताया रजोदर्शनं दातुः प्रत्यवायजनकम्, तर्हि तादृशप्रत्यवायपरिहाराय ऋतुदर्शनात्पूर्वमेव कन्यादानं शस्तम् । तच्च द्वादशाद्वत्सरादर्वागेवेति स एव कन्यादानस्य मुख्यः कालः । एवमपि दातुर्दानाधिकारो यावद्वर्षत्रयमृतुप्राप्त्यनन्तरमप्यबाधित एव ।

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ ( ९।९० म. )

इति वचनेन वर्षत्रयप्रतीक्षणानन्तरमेव स्वयंवरस्यानुशिष्टत्वात् तावत्कालपर्यन्तमेवानुस्यूतमासिकरजोदर्शनस्यैव दातुर्दानाधिकारस्य बाधकत्वात् पञ्चदशवत्सरपर्यन्तमपि दातुर्दानाधिकारोऽप्रतिहत एवेति सिध्यति । एवं चाऽऽषोडशं दानकालः कन्याया इति सिध्यति । अत एव मनुः—

पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ॥ ९३।९

ऋतुप्रतिरोधनस्य दातृस्वाम्यबाधकत्वमाह । अत्र ऋतुप्रतिरोधनं नाम धर्म्यप्रजासंपत्त्यर्थं विनियोगाकरणम् । एवं च प्रजासंपत्त्यर्थं निसर्गतः समुत्पन्नस्य ऋतोर्वैयर्थ्यापादनमेव परमं पातकमिति सिध्यति । दाने तु तस्य सार्थकत्वापादनान्न तत्र दाता प्रत्यवैति। युक्तं चैतत् । निसर्गसिद्धरेतसो वैयर्थ्यापादने यथा पुरुषस्य प्रत्यवायस्तथा स्त्रिया अपि ऋतुवैयर्थ्ये परंतु कन्यानां दातृस्वत्वाक्रान्तत्वेन स्वातन्त्र्याभावात्तु प्रत्यवायो दातुरेव । न कन्याया इति विशेषः । वर्षत्रयपर्यन्तं प्रतीक्षणेऽपि यदि कन्या स्वयं न वृणीत, तदा तु स्वाम्याभावेऽपि ऋतुवैयर्थ्यापादनेन कन्यैव प्रत्यवैति न स्वामीति तादृशीं कन्यां वृषलीत्वेन व्यपदिश्य तद्वोढुरपि वृषलीपतित्वमभाव्यत्वमपाङ्क्तेयत्वं च शास्त्रेणानुशिष्यते । अतश्च षोडशाब्दादूर्ध्वमप्यविवाहितानामृतुमतीनां कन्यानां दानं विवाहश्च निषिध्यते शास्त्रेण । प्रायश्चित्तादिना शुद्धिसंपादनं प्राकामत ऋतुप्रतिरोधे । न तु धान्यसंततेरभयार्जनैः, धर्मेच्छाविहारेच्छया वा विना संततिम् । यदि च राष्ट्रहितार्थं शिक्षणा-

दिसंपादनाय ऋतुप्रतिरोधनं स्यात् तदा तु धूर्ततेव तत्राभिव्यज्यत इति स्पष्टं ब्रूमः । न हि शिक्षणमेव राष्ट्रहितार्थं न प्रजायाः संपादनं संवर्धनं चेत्यत्रास्ति किमपि विनिगमकम् । निसर्गडिण्डिमानं मुक्तकण्ठमुद्घोषयन्त इदानींतना निसर्गनिर्मितस्य ऋतोः प्रतिरोधनं कामयन्त इत्यहो धृष्टतेदानींतनानाम् । अत एव "सत्यत्वे धार्ष्ट्यमेव हि" इति कलिधर्मे । एवंच निसर्गवादिभिरिदानींतनैरपि ऋतुवैयर्थ्यं मा भूदित्यकामैरपि पूर्वोक्तो दानकालोऽनुमन्तव्य एव । ननु पुरुषबीजस्यापि वैयर्थ्यं मा भूदिति तत्रापि प्रजोत्पत्तिबलात्कारः कर्तव्य इति चेत्सत्यमेव तत्रापि तथैवानुशासनम् । इयान् विशेषो यत्संयमादिना रेतोऽवरोद्धुं शक्यत इति न वैयर्थ्यमेव रेतसः । न तथा स्त्रीरजः । तस्य मासि मासि क्षरणात् । एवं च विवाहानन्तरं यदि पुरुषो रज.काले स्त्रियं नोपगच्छेत् तदा तु दातुरिव तस्यापि ऋतुवैयर्थ्यापादनप्रयुक्तः प्रत्यवायः स्यादेव । तदुक्तम्—

ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः । इति ।

एवं स्त्रीपुंसयोरुभयोरपि प्रत्यवायस्मरणादुभाभ्यामपि स्वस्वबीजस्य वैयर्थ्यापादनमसाम्प्रतमेव । तदेवं षोडशवर्षावधिको दानकालः कन्यायास्ततश्च विवाहकाल इति सिद्धम् । नैतावता अष्टमादिवत्सरेषु न देया । यावद्दानकालस्तावद्देयेत्येव तात्पर्यमस्य विवेचनस्य । एतेन द्वाविंशश्चतुर्विंशो वा वत्सरो गौणो विवाहकाल इति तावद्देयेति प्रत्याख्यातम् ।

ननु यस्याः षोडशे वत्सरे ऋतुदर्शनम्, तस्या दानाभावे वर्षत्रयपर्यन्तं प्रतीक्षणे चैकोनविंशतिवर्षेभ्य एवोर्ध्वं स्वयंवरप्रसक्तिरिति ततः प्राक् दानाधिकारः स्यादेव । ऋतुप्राप्त्यनन्तरं वर्षत्रयपर्यन्तं प्रतीक्षणे एव स्वाम्यनाशः, न ततः पूर्वमिति कथं षोडशवर्षपर्यन्तमेव दानकाल इति चेदत्र ब्रूमः । ऋत्ववरोधो हि स्वाम्यबाधकः । तत्र ऋतुशब्देन न ऋतुमात्रस्य ग्रहणम् । किंतु गर्भधारणोपयुक्तर्तुग्रहणम् । ऋतुस्तु षोडशवर्षे एव भवतीत्यायुर्वेदवाक्यादवगम्यते । तथोक्तम्—

पूर्णषोडशवर्षा स्त्री पूर्णविंशेन संगता ।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥
वीर्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥ इति ।

एवं यस्य गर्भधारणक्षमत्वं तादृशर्तुप्रतिरोधे एव भ्रूणहत्याप्रत्यवाय इति षोडशे वर्षे प्राप्तरजस्काया नैव वर्षत्रयप्रतीक्षणावकाशः । स्वाम्यातिक्रमप्रत्यवायपरिहारार्थमृतुत्रयप्रतीक्षणमेव तस्याः कर्तव्यत्वेनानुशिष्यते । तदाह हेमाद्रौ परिशेषखण्डे विष्णुः—

ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनस्तथा ॥ इति ।

गोतमः—त्रीनृतूनतीत्य स्वयं युञ्ज्येत । इति ।

नेदं गुणवद्वरविषयम् । भ्रूणहत्याप्रत्यवायपरिहारार्थत्वात्स्वयंवरस्य । स च प्रत्यवायः शुद्धे गर्भाशये शुद्धे च रजस्येव संभवतीति द्वादशादिपञ्चदशान्तवर्षपर्यन्तमेव प्रतीक्षणं युक्तम् । षोडशे तु स्वाम्यातिक्रमप्रत्यवायपरिहारार्थमृतुत्रयपर्यन्तमेव प्रतीक्षणं दानस्येति षोडशे प्राप्तरजस्काया ऋतुत्रयप्रतीक्षणमेवानुशिष्यत एतेन वचनेनेति युक्तमुत्पश्यामः । एवं ऋतुत्रयप्रतीक्षणमिदं षोडशवर्षे प्राप्तरजस्काविषयम्, वत्सरत्रयप्रतीक्षणं च द्वादशाद्यापञ्चदशं प्राप्तरजस्काविषयकमिति सिध्यति । सर्वथा त्वायुर्वेदीयगर्भाधानकालो नातिक्रामेत्तथा दानं विवाहश्च कार्यं इति सिध्यति । एवं च चतुर्दशे वा प्राप्तरजस्कया वर्षद्वयं वा वर्षमात्रं वा प्रतीक्षणं कार्यम् । यथा भ्रूणहत्याप्रत्यवायो न स्यात्तथा प्रतीक्षणं कृत्वा स्वयंवरः कर्तव्य इति निष्कर्षः ।

नन्वेतादृशनिगमने किं प्रमाणमिति चेत्स्मार्तवचनमेव गृहाण । तथा च मनुः—

धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥

अनेन च त्रिवर्गसाधनमेव परं श्रेय इति बोधयता मनुवचनेन तस्यान्योन्यानुबन्धः परस्परमनुपघातश्चार्थादेव सूच्यते । न हि केवलधर्मस्य श्रेयस्त्वमभिप्रैति मनुः । अतश्च धर्मार्थकामानामनुपघातसिद्ध्यर्थं पूर्वोक्त एव विषयविवेकः श्रेयान् । न तु गुणवदगुणवद्वरविषयकत्वेन । अत एव गुणवद्वरालाभेऽगुणवन्तमपि स्वयं वृणुयात्, नतु ऋतुवैयर्थ्यमापादयेदित्यप्याह बोधायनः—

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ॥ इति ।

गुणहीनमपि श्रयेत्, न तु ऋतुप्रतिरोधेन भ्रूणहत्यापातकं कुर्यादिति अपेरर्थः । नन्वेवं—

काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥

इति मनुवाक्यस्य का गतिरिति चेद्गुणवद्वरान्वेषणमाशास्त्यामिति ब्रूमः । नैतावता ऋतुप्रतिरोधस्य वा तज्जन्यभ्रूणहत्याप्रत्यवायस्य वाऽप्यनुज्ञानं संभवति । प्रजातन्तोर्व्यवच्छेदप्रसङ्गात् व्यभिचारप्रसङ्गाच्च । एवं च यथारूपमपि षोडशाब्दात् प्रागेव कन्यादानं कर्तव्यमेव । विवाहश्च तद्वर्षमपीति सिद्धम् ।

ननु मनुस्त्वष्टवर्षाया अपि विवाहमनुशास्ति । तथा च मनुवचनम्—

त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

इति । एवमेव—

सप्तमाद्वत्सराद्ध्वं विवाहः सार्ववर्णिकः ।
कन्यायाः शस्यते राजन्नन्यथा दोषगर्हितः ॥
उपायनोदितः कालः स्त्रीणामुद्वाहकर्मणि ।
तस्माद्गर्भाष्टमः श्रेष्ठो जन्मतो वाऽष्टवत्सरः ॥

इति । तत्कथं षोडशाब्दादूर्ध्वं विवाह इति मतमिति चेत्—अत्रेदं चिन्तनीयं कस्तावदेतेषां वचनानामधिकारीति । दाता वा प्रतिग्रहीता वा । तत्रोद्वाहस्य प्रतिग्रहीतृकर्तृकत्वात्प्रतिग्रहीतैवात्राधिकारीति स्पष्टमेव । दातुस्तु दानमात्राधिकारः । तथा च दात्रा यथाकालं दत्ताऽपि नोद्वाहिता चेत् प्रतिग्रहीत्रा, न तत्र दाता प्रत्यवायी भवति । उद्वोढुश्च दानकाल एवोद्वाहः कर्तव्यतया न कुत्रापि विधीयते । दानानन्तरमवश्यकर्तव्यतया वरणं तु संप्राप्तं क्रियत एव । न च वरणमेव विवाहः । अत एवात्र दानं वरणं विवाहश्चेति त्रयोऽशाः । तत्र वरणानन्तरं पाणिग्रहणम् । एवं च पाणिग्रहणादिक्रियाकलाप एवोद्वाहपदवाच्यः । अनेनैव च पतित्वपत्नीत्वासिद्धिः । अत एवोक्तम्—

पाणिग्रहणमन्त्रास्तु नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ इति ।

एवं च यथाकालदानेन दाता न प्रत्यवैति । प्रतिग्रहीता च यथाकालमुद्वाहेन धर्ममनुतिष्ठतीति को वाऽतिभारः, अष्टम एव विवाहः कर्तव्य इति । ननु किमिव हि वचनं न कुर्यादिति न्यायेन वचनादेव तथाऽतिभार उद्वोढुरेति चेत्सत्यम् । तथापि धर्मप्रजोभयसंपत्त्यर्थं विहितस्य विवाहस्य धर्मलोपभयादष्टमे वर्षे कर्तव्यताबोधनमिदं धर्मप्राशस्त्यपरं नोद्वाहपरम् । तथाहि धर्मप्रजयोरुभयोरनुबन्धाभावे एकस्य चोपघातप्रसङ्गे कस्य वाऽनुबन्धः कस्य चोपघातः कर्तव्य इति संदेहे धर्म एवानुसंधेयो न प्रजा इति सिध्यति । धर्मस्य परमश्रेयोवहत्वात् । एवं चात्रापि धर्मे सीदति सति अष्टवर्षाप्युद्वाह्येति धर्मप्राशस्त्यपरत्वमस्य । अत्र च विवाहे चतुर्थीसमावेशनरूपाङ्गस्य

"अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु"

इति स्मार्तवचनाल्लोपः प्रसज्जति । षोडशाब्दे तु विवाहे न स लोप इति सर्वाङ्गसाद्गुण्यसंपादनाय षोडशाब्द एव विवाह इत्येव समुचितं पश्यामः । यच्चूपनयनातिदेशवाक्यम् ।'तदपि

संस्कारमात्रपरम्, न त्वङ्गोपाङ्गातिदेशपरम्। दण्डमेखलादीनामप्यतिदेशापत्तेः। एवं च स्थानिवद्भावेन तत्कार्यकारित्वमेवानेन वाक्येन बोध्यत इति विवाहमात्रेणैव स्त्रीणां ब्राह्मणत्वादिसिद्धिरित्येवास्य वचनस्य तात्पर्यमवसेयम्। नो चेत् क्षत्रियवैश्यकन्यासु रजःप्रतिरोधेन भ्रूणहत्याप्रत्यवायः केन वार्यताम्। तत्सिद्धमष्टमादारभ्याऽऽषोडशं दानकालः, ततश्च षोडशो वत्सरो विवाहकाल इति। यदि तु चतुर्थीसमावेशनं नाम न किमपि विवाहाङ्गम्। तदा साङ्गविवाहस्याष्टमेऽपि संभवाद् भवतु स मुख्यः कालः। तथापि षोडशे विवाहे न कोऽपि प्रत्यवैतीत्यपि बोद्धव्यम्।

अत्रेदं बोध्यम्। ऋतुप्रतिरोधोऽयमकामतश्चेत् तदैव षोडशे वर्षे विना प्रत्यवायं विवाहः। कामतस्तु दातुः प्रत्यवायः। प्रतिग्रहीतुरपि तस्याः पाणिग्रहणे प्रत्यवायः। कन्यायाश्च परस्वाम्याक्रान्तत्वेन न कोऽपि प्रत्यवायः। अनश्चैतादृशस्थले कामाकामादिविचारस्तत्रत्यैः परिस्थितिमनुसृत्यैव कर्तव्यः। एवं च दातृप्रतिग्रहीत्रोः प्रायश्चित्तबोधकानि वचनान्यपि सावसराणि। स्वाम्यविनाशेऽपि यदि कन्या स्वेच्छयर्तुप्रतिरोधनं कुर्यात्तदा तु तादृशकन्यायाः प्रायश्चित्तेन विवाहेऽपि न पत्नीत्वम्, किंतु भार्यात्वमेवेति वृषलीत्वबोधकानां वचनानां धर्मकार्यानर्हत्वबोधन एव तात्पर्यम्।

एतेनेदानींतनीनां वृद्धकुमारिकाणां वा कुमारीयुवतीनां वा विवाहोऽपि व्याख्यातः। एतेषां शब्दानां च मम माता वन्ध्येतिवत् विरोधप्रत्यायकत्वेन बाधितत्वादप्रामाण्यमेव। तिस्रो हि अवस्थाः कौमार्यस्य बाल्यपौगण्डकैशोर्यं इति। तत्राऽऽपञ्चमं बाल्यम्, आदशमं पौगण्डता, ततश्चाऽऽषोडशं कैशोर्यम्। एवं च षोडशातिक्रमे, तारुण्यावस्थाप्रादुर्भावे च कथं शास्त्रानुशिष्टः पाणिग्रहणाधिकारः। शास्त्रं हि "कुमार्याः पाणिं गृह्णीयात्" इति कुमारीमेव पाणिग्रहणेऽधिकरोतीति तदवस्थातिक्रमे धर्म्यविधेरभावान्न तेन विवाहेन तस्यां पत्नीत्वमुत्पद्यते। भार्यात्वं तु पुनर्भ्वादिष्विवात्रापि निवारयितुमशक्यम्। अत एव गान्धर्वादिविवाहानां काम्यत्वं न तु धर्म्यत्वम्। एवं च

'पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे'

इति वचनात्पत्नीत्वमपि पाणिग्रहणसंस्कारादेव निष्पद्यते नान्यथेति मन्तव्यम्। ननु पाणिग्रहणसंस्काराभावे भार्यात्वोत्पादकं संस्कारान्तरं कथं भवतीति वक्तव्यमिति चेदग्रे विवेचयिष्यामः।

एतेन "रातां पालीं वर्जयेत्" इत्यादिनिषेधवचनान्यपि व्याख्यातानि। सुप्रजस्त्वसंपत्त्यर्थं क्रियमाणोऽयं विवाहसंस्कारः शास्त्रनिषेधातिक्रमेणानुष्ठीयमानः कथं सुप्रजस्त्वं संपादयितुं प्रभवेत्? न हि सुप्रजस्त्वं नाम यथाकथंचिदुदरपूरणानुकूलबुद्धिशक्तिकर्मशाल्यपत्योत्पादकत्वम्। किंतु अखण्डदण्डायमानराष्ट्रपुरुषसंरक्षणक्षमापत्योत्पादकत्वम्। उक्तं चैतत्पुरस्ताद्विस्तरतः। अपि नाम दरीदृश्यन्त इदानीं तादृशान्यपत्यानि। प्रत्युत यस्य कस्यापि राष्ट्रस्य धनेनाऽऽत्मानं धन्यंमन्या

मखलेपानुसारेण ध्वनिमुद्घोषयन्त एव बहवः किलोपलभ्यन्ते । किं होल्गानदीत एव किल मानववंशः प्रवृत्तः प्रसृतश्च । किं जगत्यपरस्मिन्देशे मानवानां तदानीमत्यन्ताभाव एव । ओमिति चेदभिमतार्याणां कैः साकं संघर्षः ? अनार्यैरिति चेत्तत् किमनार्याणां मनुष्यत्वं नास्ति । किं च होल्गातो निःसृतानामार्यत्वमन्येषां चानार्यत्वमित्यत्र किं विनिगमकम् । एतत्सर्वमनुपपाद्यैव स्वाभिमतभावचित्रणेन कादंबरीवत्किमपि गोष्ठीनिबन्धमारचय्य जनानां पुरतः पुरस्कुर्वन्तः कथं वाऽऽर्यत्वमात्मनः मन्यन्ते । एतादृशमेव सुप्रजस्त्वं चेदभिमतं तदा तु को नामापरो राष्ट्रविनाश इति मनसि करणीयं विचक्षणैः । नैतादृशं सुप्रजस्त्वं शास्त्रमभिप्रैति । अतश्च पूर्वोक्तशास्त्रीयसुप्रजस्त्वसंपत्तयेऽनुष्ठीयमानो विवाह एव पत्नीत्वमुत्पादयति । न तु बौद्धभिक्षुणा भिक्षुत्वं विहायानन्तरं यया कयापि स्त्रिया इन्द्रियलौल्यात्क्रियमाणः संकेतः । एवं च कामतो यत्रतुं प्रतिरुध्यानन्तरं यथेच्छं यथाकथंचित् क्रियमाणो विवाहाभिनयो न कथमपि पत्नीत्वमुत्पादयतीति न ततो धर्मसंपत्तिर्न वा धर्म्यप्रजासंपत्तिरित्यूह्यं सुधीभिः ।

ननु कामतः प्रवृत्तानामपि प्रायश्चित्तेन शुद्धिः शास्त्रादवगम्यत इति चेत्सत्यम् । तथापि न परेच्छया सा संपादनीया । अपि तु स्वेच्छयैव । स्वेच्छा च शुद्धौ तदैव भवितुमर्हति यदा स्वाचरणे घृणा स्यात् । इदानीं तु यथेच्छर्तुप्रतिरोधनमेव धर्मं मन्वाना आधुनिकाः परितुष्यतु दुर्जन इति न्यायेन शास्त्रमभ्यनुजानन्ति प्रायश्चित्तविषये । एवं यत्र प्रायश्चित्तं विधीयते तत्र यथेच्छमनुष्ठेयम्, जनावहासपरिहाराय प्रायश्चित्तमप्याचरणीयमित्येवाऽऽकूतमेतेषाम् । अत एव

> क्वचिन्निवर्ततेऽभद्रात्क्वचिच्चरति तत्पुनः ।
> प्रायश्चित्तमतोऽपार्थं मन्ये कुंजरशौचवत् ॥

इत्युक्तदिशा नैषां प्रायश्चित्तेन कदापि शुद्धिः । अतश्चेदानीमकामत एव प्रायश्चित्तमित्येव पक्षः साधीयान् । न तु

"कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्"

इति पक्ष इत्यलं पल्लवितेन ।

एवं च राष्ट्रियसर्वापत्पर्यालोचनेऽपि षोडशवर्षपर्यन्तमेव शास्त्रीयः पाणिग्रहणसंस्कारो भवति । ततः परमापद्वशात् कन्यावरयोरित्येव सिद्धम् । दानकालस्त्वाषोडशम् । एवं दात्रा यथाकालं दाने प्रतिग्रहीत्रा च वरणे यथाकालं संपादिते तु विवाहो यदाकदाप्याकौमार्यं भवतीति सिद्धम् ।

## ( ऋतुमतीविवाहविचारः )

एतेन प्रौढाविवाहोऽपि व्याख्यातः। न वयमृतुमत्याः सर्वथा त्यागं ब्रूमहे। न वा कोऽपि धार्मिकस्तथाऽभिप्रैति। परंतु ऋतुमत्याः प्रौढाया एव विवाहः कर्तव्यः, नर्तोः प्रागिति नानुमन्यामहे। ऋतुमत्या अपि न यथेष्टकालं विवाह इत्यपि नानुमतमस्माकम्। गर्भाधानयोग्यताकालेऽपि यदि विवाहो न स्यात्, तदा तु दाता, प्रतिग्रहीता, कन्या च त्रयोऽपि प्रत्यवायभाज इत्येव धर्मशास्त्रस्याभिसंधिरित्येवास्माकं मतम्। अन्यथा ऋतोर्वैयर्थ्यापादनेन भ्रूणहत्याप्रत्यवायप्रसङ्गात्। प्रायश्चित्तबोधकवचनस्यानवकाशत्वप्रसङ्गाच्च। येषां तु प्रौढाया ऋतुमत्या एव विवाहो धर्मशास्त्रानुशिष्ट इति मतम्। तेऽपि यान् किल वचनाभासान् युक्तिवादांश्च पुरस्कुर्वन्ति, तेषामपि पर्यालोचनमावश्यकमिति तदर्थमारभामहे। तेषां मतस्य जीवातुः किल समावेशनमेव प्राधान्येनेति तद्विचारः प्रस्तूयते।

यद्धि किल विवाहप्रकरणे समाम्नातं समावेशनं तद्विवाहसंस्काराङ्गभूतं न वेति विप्रतिपत्तिः। तत्र मीमांसाशास्त्रदृष्ट्या परिणयमीमांसादिग्रन्थसमालोचनपूर्वकं पक्षोपपक्षानिबन्धनं पराक्रान्तमतीव सनातनधर्मप्रदीप इति नात्र पिष्टपेषणं श्रेयस्करमिति तत्तत एवावगन्तव्यम्। इदमेवात्राऽऽलोचनीयं नाम यदि समावेशनस्य विवाहाङ्गत्वम्, तदा

" पाणिग्रहणमन्त्रास्तु नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे "

इत्यादिवचनानां का गतिः। समावेशनस्याङ्गत्वे तु तद्विना साङ्गविवाहसंस्कारासिद्धिरिति ततः प्राक् कन्यायाः पुनर्विवाहोऽपि स्यात्। न च " वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेतिवदङ्गाङ्गिभावः। तत्रोभयोरपि कर्मणोरन्योन्यं भिन्नेतिकर्तव्यताकत्वेन भेदेऽपि परस्परोपकारकत्वमिवात्रापि कर्मणोर्भेदेऽपि परस्परोपकारकत्वं स्यादिति वाच्यम्। तत्रोपकारकत्वस्य फलोत्पत्तिसहकारित्वमिवात्र तथा सहकारित्वाभावात्। विवाहफलं हि पत्नीत्वसंपादनम्। तच्च नो चेत्समावेशनापूर्वमन्तरा, तदा तु यावत्समावेशनं पत्नीत्वप्रयोज्यसफलधर्मकार्यलोपः स्यात्। इष्टापत्तौ तु

" त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः "

इत्याद्यष्टवर्षविवाहबोधकवचनव्याकोपः। तस्माद्विवाहस्य साङ्गत्वसंपत्तिः सप्तपदीपर्यन्तैवोरीकर्तव्या। अत एव " तामुदुह्य यथर्तु प्रवेशनम् " इति पारस्करगृह्यवचनं " तामूढ्वा च यथर्तु ऋतावृतौ प्रवेशनमभिगमनं कुर्यात् " इति कर्काचार्या व्याचख्युः। अन्यथा तु ऋतुप्रवेशनमिव प्रवेशनमभिगमनं कार्यमित्येव व्याचक्षीरन्। यत्तु " यथाऽऽवी यथर्तो " इति समावेशनदपमति-

पावनम् । तस्यायमाशयो यदि कदाचित् पूर्वोक्तविवाहकालानुसारेण द्वादशादिवत्सरेषु विवाहः, यदि वा ऋत्वनन्तरं वत्सरत्रयं प्रतीक्ष्य स्वयंवरणम् । तदा तु कन्येच्छामनुसृत्यापि विनर्तुं गमनं सम्भवतीति तदा विवाहचतुर्थदिनेऽपि ऋतुगमनवद्गमन कार्यम् । अत एव " यथाकामी वा काममाविजनितोः संभवामेति वचनात् " इति पारस्करगृह्यवचन सगच्छते । अत एव च " न सवत्सरं मिथुनमुपेयाता द्वादशरात्र षड्रात्रं त्रिरात्रमन्ततः " इति पारस्करगृह्यानुशिष्टः संवत्सरपर्यन्त मिथुनीभावनिषेधः सावकाशः । अन्यथा हि " चतुर्थ्यामपररात्रे " इति विवाहादारभ्य चतुर्थरात्रावेव चतुर्थीकर्मणि समाप्ते तदानीमेवाभिगमनप्राप्तौ सवत्सरनिषेधोऽयं सर्वथा निरवकाश एव स्यात् । ननु निषेध एव प्रौढाविवाहगमकः । नहि प्राप्ति विना निषेधः । अप्राप्तस्य निषेधस्तु सर्वथाऽनुपपन्न एवेति तत एव प्रौढाविवाहसिद्धिरिति चेन्न । प्राप्तेरन्यथोपपत्तेः पूर्वं प्रदर्शितत्वात् । सूत्रकारैस्तथा शब्देनैवोपनिबन्धनात् । एवं च चतुर्थीकर्मणो विवाहशेषत्वेऽपि समावेशनस्य तदनङ्गत्वान्न समावेशनमन्तरा विवाहासिद्धिः ।

एतेन—" उद्वाहितापि या कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा "

इति वचनात् क्षतयोनित्वमेव विवाहसस्कारस्य पूर्णता गमयति । न तु सप्तपद्यन्तकर्मकलापः । उद्वाहिता, सप्तपद्यन्तकर्मणा सस्कृता मन्त्रैः समावेशनमन्त्रैर्यदि न सस्कृता अन्यस्मै विधिवत् दानविधिपूर्वक देया । अत एव मनुरपि—

सा चेदक्षतयोनिः स्यात् गतप्रत्यागतापि वा ।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥

इति अक्षतयोन्याः पुनःसस्कारमनुशास्ति । नो चेत् वचनान्येतानि सर्वथा निरवकाशान्येव । न च विधवायाः पुनर्भूसस्कारपरत्वमेतेषाम् ।

" न विवाहविधावुक्तं विधवावेदन पुनः "

इति मनुनैव विधवायाः पुन.सस्कारस्य निषेधात् । एव चागत्या प्रौढाया एव विवाहसस्कारः । स च समावेशनान्तकर्मकलापेनैव साङ्गः सपद्यते—इति वदन्तः प्रत्याख्याताः । पूर्वोक्तपारस्करगृह्यवचनविरोधात् । किंच पूर्वोक्तवचनयोर्यदि समावेशनान्तकर्मकलापस्यैव साङ्गविवाहगमकत्वमिति तात्पर्य परिकल्प्येत । तदा तु—

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषा निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ मनुः ८।२२७

इति वचनस्य

त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥ मनुः ९।९४

इति वचनस्य च सर्वथा निरवकाशत्वमेव स्यात्। न हि समावेशनस्य विवाहाङ्गत्वे मौढाय एव विवाहस्यानुशासने च सप्तपद्यन्तकर्मकलापस्यैव पतित्वोत्पादकत्वं वाऽष्टवर्षाया विवाहस् धर्म्यानुशासनं वोपपद्यते। तस्मात्पूर्वोक्तवचनयोरन्यथैव तात्पर्यपरिकल्पनं युक्तमुत्पश्यामः। त "सा चेदक्षतयोनिः स्यात्" इति श्लोकोक्तः पौनर्भवेन भर्त्रा सह पुनर्भूसंस्कारो यस्मिन् कस्मिन् वयसि कन्यायाः कर्तव्यः, आहोस्वित् तत्रापि वयसो नियमनमस्तीति संदेहे "उद्वाहितापि य कन्या" इति वचनेनाक्षतयोनित्वे कन्यायाः पुनःसंस्कारो पौनर्भवाख्य इति मनुवचनानुसारेणै तात्पर्यं परिकल्पनीयं नान्यथा। एवं च तादृशसंस्कारेण कन्यायाः पुनर्भूत्वमेव भवति न पत्नीत्व मिति नायं धर्म्यः संस्कारः। किंतु काम्य एवेति सिध्यति। ननु—

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः।
नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः॥ मनुः ८।२२६

इति मनुवचनं सर्वथा स्त्रीणामकन्यानां पुनः संस्कारं निषेधतीति कथमक्षतयोन्याः पुनर्भ्वाख्यः पुनःसंस्कार इति चेन्न। पौनर्भवपुत्रस्य क्षेत्रजकानीनकुण्डगोलकाद्यतिरिक्तत्वेनानुशासनात् तादृशसंस्काराभावे तु कुण्डगोलकाद्यन्यतरत्वप्रसङ्गात् पौनर्भवत्वोपपत्तये तादृशसंस्कारस्याकामेनाप्यभ्युपगन्तव्यत्वात्। "लुप्तधर्मक्रिया हि ताः" इत्यनेन तु तस्य संस्कारस्य धर्म्यत्वमेव निषिध्यते। एवं च तादृशसंस्कारस्य न पत्नीत्वोत्पादकत्वम्, अपि तु भार्यात्वोत्पादकत्वमेव। अत एव

"वाचा दत्ता मनोदत्ता अग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तधा पुनर्भूर्भवति। तामुदुह्य न भर्ता न धर्मं विन्दते"

इति गौतमवचनं संगच्छते। युक्तं चैतत्। सुप्रजस्त्वस्यैव विवाहप्रयोजकत्वस्य पूर्वमुपपादितत्वात्। अन्यथा हि विवाहसंस्कारस्य सर्वथा वैयर्थ्यमेव। लोकव्यवहारव्यवस्था तु समयबन्धादिना राजशासनेन वा सुपादेति न तदर्थं संस्कारापेक्षा। एवं च पुनर्भ्वाख्यः संस्कारोऽयं शास्त्रानुमतोऽपि न धर्म्यः, किंतु लोकयात्रानिर्वाहक एवाऽऽसुरादिविवाहवदिति विज्ञेयम्।

अयं भावः— यद्धर्मार्थकामरूपत्रिवर्गस्य श्रेयस्त्वं प्रतिपादयता मनुना तस्यान्योन्यानुबन्धस्य परस्परानुग्राहकत्वस्य च पर्यालोचनीयत्वमवश्यमेवाभिप्रेतम्। एवं च धर्मानुष्ठानसंपत्त्यर्थं विवाहसंस्कारोऽनुशिष्टो धर्मशास्त्रे। स चानन्यपूर्वायाः कुमार्या एवेति कुमारीभावातिक्रमे तादृशसंस्कारस्य

संस्कारत्वमेव न संभवति । क्रिया हि द्रव्यं विनयति, नाद्रव्यमिति न्यायेन संस्कारस्य गुणाधाने दोषापनयने च द्रव्यगतयोग्यतासापेक्षत्वमवश्यमेवाभ्युपगमनीयम् । विवाहसंस्कारस्य संस्कार्यं हि "कुमार्याः पाणिं गृह्णीयात्" इति वचनात् कुमार्येव । कुमारीत्वं चाक्षतयोनित्वमिवानन्यपूर्वत्वमपि । न हि मनसोऽन्यत्रानुबन्धेऽनन्यपूर्वत्वं संभवति । भावदुष्टो हि क्रियास्वपि दोषमुत्पादयतीति सुविशदमेव व्यवहारेऽपि । एवं च भावदुष्टायाः कुमार्या अपि पाणिग्रहणे यथावद्गृह्यकर्मानुष्ठानासंभवेन धर्मानुष्ठानस्याप्यसंभव एव । अतश्चैतादृश्याः कन्यायाः परिग्रहश्चेत्कर्तव्यस्तर्हि कामार्थमेव स कथंचिद्भवितुमर्हति । न धर्मार्थं वा धर्म्यप्रजासंपत्त्यर्थमिति व्यर्थ एव तादृशीनां विवाहसंस्कारः । कामार्थोऽपि स न यथावत् काममपि संपादयितुमलम् । अनुपस्कृतरतेरसंभवात् । अत एव "पुनर्भूरियमन्यपूर्वाविरुद्धा नात्र शङ्कास्ति" इति कामशास्त्रोक्तं संगच्छते । अत एव चानन्यपूर्वायामेवानुपस्कृता रतिरिति कामशास्त्रानुशासनम् । यद्यप्यन्यासामपि नायिकानां कामशास्त्रेऽभ्यनुज्ञानम् । तथापि न तद्धर्मप्रजासंपत्त्यर्थम् । किंतु व्यावहारिककारणान्तरवशादेव । एतत्सर्वं प्रारम्भ एवोपपादितं न विस्मर्तव्यम् । तथा च सत्यपि धर्मशास्त्राभ्यनुज्ञाने पौनर्भवसंस्कारस्य न तदनुष्ठानं श्रेयस्करमित्येव धर्मशास्त्रस्याभिप्रायः । अन्यथा हि धर्माननुबन्धित्वेन धर्मोपघातकत्वेन च तस्य प्रचारे काममूलकः सर्वत्र प्रकटव्यभिचारप्रसङ्गः केन वार्यताम् । यथा हि सर्वेषां द्वादशानां पुत्राणां वाऽष्टानामपि विवाहानामभ्युज्ञानेऽपि केषांचिदेव धर्म्यत्वं न सर्वेषाम् । एवं पौनर्भवपुत्रस्याधर्म्यत्वेन परिगणनात्तदुपयुक्तविवाहसंस्कारस्याप्यधर्म्यत्वमेव सांप्रतं परिकल्पयितुम् । एवं कानीनसहोढजयोरभ्यनुज्ञानेऽपि विवाहात्प्रागेव कन्याभिगमनं न पुरस्क्रियते । तथैव पौनर्भवस्यापि परिगणने किमिति तदुत्पादकपुनर्भूसंस्कारपुरस्कारो धर्म्यत्वेनेति न विद्मः । एवं चैतादृशतात्पर्यपरिकल्पनमिदं कामान्धतामात्रं गमयति न धर्मश्रद्धामिति स्पष्टमेवोद्घोषयामः । एवमपि भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन धर्मतिरस्कारपूर्वकं काममात्रपुरस्कारे कियन्तं वा कियत्कालपर्यंतं वा पत्यन्तरं विधातव्यमित्यत्र नियामकाभावात् पाश्चात्यानामिव दिनाभ्यन्तरेऽपि पतिद्वयस्य पतित्रयस्य वा प्रसक्तौ कीदृशं किल समाजस्वास्थ्यं वा संसारशान्तिर्वा शान्तिसुखं वा संपादितं भवेदिति मनसि करणीयं सूक्ष्मेक्षिकया समाजसंधारकैः । वयं तु मन्यामहे यदेवं स्वयं नष्टः परान्नाशयतीति न्यायेनाऽऽगामरं संसारसुखं लभमानानामस्माकं सुखस्यासहिष्णुतयैव किलैतादृशमतप्रचारः प्रबलानां वासनातृप्त्यर्थमिति । तद्यदि संसारे सुखस्य शान्तेश्चापेक्षा, तर्हि तु पतिपत्न्योर्यावज्जीवमनुच्छेद्यः संबन्धो यथा भवेत्तथैव प्रयतनीयम् । तदर्थं च धर्मपुरस्कार एवात्यावश्यकः ।

अत एव—

> न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते ।
> एवं धर्मं विजानीमः प्राक् प्रजापतिनिर्मितम् ॥ मनुः ९-४६

देवदत्तां पतिर्भार्यां विन्दते नेच्छयाऽऽत्मनः।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन्।' मनुः ९।९५

इत्यादि मनुरनुशास्ति। नो चेद्विवाहसंस्कारस्य सर्वत्राप्रतिहतप्रसरत्वात्सर्वमिदमसंगतमेव स्यात्।

एतेन—"नैकस्यै सहपतयः" "पतिमेकादशं कृधि" इत्यादिमन्त्रलिङ्गतात्पर्यं यावज्जीवं यावदपेक्षं पत्यन्तरवरणमिति वदन्तोऽपि परास्ताः। एतादृशतात्पर्यपरिकल्पनेन किंवाऽन्यत्सा-धनीयमृते कामपूर्तेः। तद्वरं विवाहसंस्कारोच्छेदनम्। न ह्येकादशपतिवरणानन्तरं न कामोद्रेक इति वक्तुं पार्यते। पुरुषसाम्यानुसारेण स्त्रीणामप्यनेकपतिस्वीकरणं न्याय्यं नैसर्गिककामवासनाबला-दिति चेत्तर्हि दीयतां पतिपत्नीसंबन्धस्य समाजस्वास्थ्यप्रयोजकस्य जलाञ्जलिः। तथैव समयबन्धा-दीनामपि नास्त्येवाऽऽवश्यकतेति कामं साम्यवादेन पशुत्वमेवाङ्गीक्रियतां मानवस्यापि। एवमपि न शान्तो व्याधिः। पशूनामिव पुरुषाणामप्येकस्त्रीविषयेऽन्योन्यसंघर्षः कथं वा परिहरणीय इत्यत्र नियामकाभावेन राजशासनस्य त्विच्छानुसारेण नियामकत्वेन चागत्या स्त्रीणामिच्छैव नियामिका ऽभ्युपगन्तव्या। तत्र च स्त्रीपुरुषयोः साम्यस्य न्याय्यत्वे पुरुषेच्छाया अपि नियामकत्वमापतितमि-त्यन्ततो बलस्यैव नियामकत्वमभ्युपगन्तव्यम्। तथा च समाजसुधारणाप्रवृत्तानां बलस्यैवं न्याय्यत्वो-पग्रहोऽयं कीदृशं समाजसुव्यवस्थामावहेदिति विचारणीयं सुधीभिः। एवं च सुव्यवस्थार्थं प्रवृत्ता-नामिदं दुरवस्थापादनं समाजस्य

"विनायकं प्रकुर्वाणो रचयामास वानरम्"

इत्याभाणकं सार्थकी करोतीत्यहो प्रेक्षावत्त्वम्। अत एव

"दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम्"

इत्यनुशासनं धर्मशास्त्रस्येति मनसि करणीयम्। नहि साम्यं वा समाना मनोविकारा वेति सर्वं सर्वस्य न्याय्यं धर्म्यं च भवति। तथाविधसाम्यस्य सर्वत्राप्रतिहतप्रसरत्वात्। कर्तव्यनियमनमिदं सर्वथा व्यर्थमेव स्यात्। न हि कर्तव्यनिष्ठाया साम्यवादस्य स्वैरमवकाशः कुत्रापि समाजविषये इतिहासगोचरः। न वा तथा प्रत्यक्षमनुभूयते कुत्रापि। अत एव

"कामात्मता न प्रशस्ता न चैवेहास्त्यकामता"

इति प्रस्तूय अंशेन कामपूर्तिरंशेन च कामनियमन धर्म इति धर्मशास्त्रस्य प्रणयनम्। अन्यथा हि नरकद्वारमेव काम इति सर्वमेव व्याकोपित स्यात्। सर्वथा त्वेतादृशतात्पर्यपरिकल्प-नमिद तत्रापि भिक्षोर्न धर्मश्रद्धां पुष्णातीति धर्मध्वजत्वमेवाऽऽविष्करोति। अलं प्रसक्तानुप्रसक्त्या।

एतेन "उद्वाहितापि या कन्या" इति श्लोकस्य पूर्वोक्ता व्याख्यापि— व्याख्याता ।

" तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे "

इति मनुवचनेन "तामुदुह्य यथर्तु प्रवेशनम्" इति पारस्करगृह्यवचनगतल्यबन्तेन च सप्तपदीपर्यन्तकर्मकलापस्यैव विवाहसाङ्गत्वबोधनात् । अन्यथा तयोर्वैयर्थ्यप्रसङ्गात् । तस्माद्वाग्दत्तापरत्वमेवैतस्य वचनस्याभ्युपेयम् । अत एव "यथा कन्या तथैव सा" इति कन्यात्वातिदेशः । ननु वाग्दत्ताया अपि पुनर्भूत्वमेव पूर्वोक्तगौतमवचनादिति कथं तस्या अपि पौनर्भवसंस्कारातिरिक्तो विवाहसंस्कारः स्यादिति चेन्न । वाग्दत्ताया भावदोषापरिज्ञानेन तथा संस्कारसंभवात् । यत्र तु, भावदोषः स्फुट एवाम्बिकादिवत्, तत्र पुनर्भूत्वमेव । अत एव कन्यात्वातिदेशः । एवं च पाणिग्रहणमन्त्राणामेतादृशस्थलेऽतिदेशादेव विनियोगः । कन्यात्वप्रयोज्यत्वात्तेषाम् ।

नन्वेवमत्रापि विवाहितासु तथाऽतिदेशेन प्रयोगो भवतु, का हानिरिति चेन्न । सप्तपदीपर्यन्तकर्मकलापस्यैव विवाहप्रतिष्ठापकत्वबोधकवचनहान्यापत्तेः । एवं च विवाहिता चेन्न मन्त्रसंस्काराभावः। मन्त्रसंस्काराभावे तु न विवाहितेति वचनगतस्यैव परस्परविरोधपरिहारार्थमुद्वाहितेतिप्रयोजकप्रयोगाच्चोद्वाहिता पित्रादिभिर्वाचा दत्तेत्येवार्थोऽभ्युपगन्तव्यः । अन्यथा तूढेत्येव वक्तव्यं स्यात् । एवमेव—

" ऊढापि देया साऽन्यस्मै सहावरणभूषणा "

इत्यादिवचनगतोढापदस्याप्यर्थो निर्वचनीयः । एवं च यत्र खलु पुनश्च विवाहसंस्कारानुशासनम्, तेषां सर्वेषामेव वचनानां वाग्दत्तापरत्वमेव । यानि तु पौनर्भवसंस्कारप्रतिपादकानि विधवायाः, तानि तु न विवाहमनुशासति, किंतु पौनर्भवसंस्कारमेव । तादृशसंस्कारस्य धर्म्यत्वाभावेन सुप्रजस्त्वसंपत्त्यर्थमनुपयोगात् " ऊढायाः पुनरुद्वाहम् " इति कलिवर्ज्यत्वम् । युक्तं चैतत् । तस्य कामप्रयोज्यत्वात् । अत एव—

या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया ।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥ मनुः ९।१७५

इति पौनर्भवपुत्रलक्षणे स्वयेच्छया पुनर्भूत्वेति निर्देशः । नात्र ज्ञातीनां संमतिर्न वा धर्मशास्त्रस्येति काम एव तत्र पुरुषान्तराश्रयप्रयोजकः । अतश्च तादृशसंस्कारेण भार्यात्वमेव न तु पत्नीत्वं संपद्यते । अत एव " स्वेच्छयाऽन्यस्य पुनर्भार्या भूत्वा " इति कुल्लूकः संगच्छते ।

अयं भावः—पत्नीत्वं धर्मकार्यसहकारप्रयोजको धर्मः । "पत्युर्नो यज्ञसंयोगे" इति पाणिनेरनुशासनात् । स च शास्त्रबोधितविवाहसंस्कारमन्तरा कथमपि ज्ञातुमशक्यः । अत एव शास्त्रैकगम्यः । भार्यात्वं तु ग्रासाच्छादनादिना वेश्यासाधारणमिति न तत्र शास्त्रैकगम्यत्वं न वा शास्त्री-

यसंस्कारापेक्षा एवमेवानुव्रतभार्यात्वमपि ग्रासाच्छादनादिप्रदानेन ज्ञातुं सुशकं समयबन्धादिनापीति न तत्र शास्त्रीयसंस्कारापेक्षा । अयमेव वेश्यात्वभार्यात्वयोर्विशेषो यदननुव्रतात्वानुव्रतात्वे नाम । एवं च बन्धक्या अपि अनुव्रतात्वे भार्यात्वं भवितुमर्हति । पत्नीत्वं शास्त्रीयविवाहसंस्काराभावान्नोभयोरिति पुनर्भ्वादीनां न कथमपि शास्त्रीयः संस्कारः । ततश्च पौनर्भवाख्यः संस्कारोऽयं कश्चन समयबन्धरूपो लौकिक एवेति पर्यवस्यति । अत एव—

न दानं नैव वरणं न चैव हि प्रतिग्रहः ।
त्रैरात्रिको विधिर्न स्यात्पुनरुद्वाहकर्माणि ॥

इत्युक्तं संगच्छते । अत एव च—

न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते ।
एवं धर्मं विजानीमः प्राक् प्रजापतिनिर्मितम् ॥

इति मनुवाक्ये भार्यापदस्य पत्नीपरत्वम् । केवलभार्यायास्तु निष्क्रयविसर्गौ संभवत एव ।

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ।

इत्यादिवचनैरज्ञानाच्छलेन वा बलात्कारादिना वा जातेऽपि विवाहसंस्कारे सपिण्डसगोत्रसप्रवरादिकन्यानां विसर्गस्योक्तत्वात् । मातृवत्पालनानुशासनं तु पुनः संस्कारासंभव एव । संभवति चापत्योत्पादनानन्तरमप्यज्ञानादिदोषपरिहारः । तदा तस्याः कन्यात्वक्षत्या कन्यात्वप्रयोज्यसंस्कारासंभवः ।

एवं चैतादृशकन्यानां विवाहप्रयोजकासपिण्डत्वादिधर्माभावादेव न पत्नीत्वमुत्पद्यत इति तादृशीनां समन्त्रकपुनर्विवाहसंस्कारः स्यादेवेति तत्परत्वमपि “ उद्वाहितापि या कन्या ” इत्यादिवचनानां सुवचम् । अधिकं चात्राऽऽलोचनीयं सुधीभिः । यथाकथमप्येतादृशां वचनानां प्रौढाविवाहतात्पर्यगमकत्वं तु न कदापि संभवतीति विज्ञेयम् । कन्यात्वं च न स्त्र्यपत्यत्वं किं त्वक्षतयोनित्वमेव । शाबाशौचादौ च कन्याशब्दस्य स्त्र्यपत्यपरत्वम्, विवाहे त्वक्षतयोनित्वमिति विवेकः ।

इदमत्राऽऽलोचनीयम् । यत् विवाहसंस्कारप्रयोजकाः कन्यागताः के वा धर्माः शास्त्रतात्पर्यविषयीभूताः, यत्र विवाहसंस्कारेण पत्नीत्वसंपत्तिरिति । यतः “ क्रिया हि द्रव्यं विनयति नाद्रव्यम् ” इति किल शास्त्रसिद्धान्तः । संस्कारश्च क्रियैवेति तेनापि द्रव्ये किंचित् गुणाधानं दोषापनयनं वाऽवश्यमेव विधेयम् । तत्र संस्कारेषु सर्वत्र क्रियासामान्येऽपि न हि सर्वैः संस्कारैः सर्वत्र द्रव्येषु समानं गुणाधानं दोषापनयनं वा भवति । धर्मीशनाकुन्चनयादिसंपादकसंस्कारेण तथैव पाकप्रकारस्य स्वादिम्नदर्शनात् । विवाहसंस्कारेण निर्गतं द्रव्यं नु वधूवरात्मकमेवेति तत्र पत्नीत्वनतिप-

संपादने द्रव्यगतयोग्यताया अपेक्षाऽस्ति नवेति विशये तु धर्मशास्त्रीयविधिनिषेधाभ्यामिदमेवानुमन्तव्यं भवति यत्तत्रापि द्रव्ये संस्कारयोग्यताव्यञ्जकानां केषांचिद्धर्माणामस्त्येवापेक्षेत्येव धर्मशास्त्रस्याऽऽशयः। के च ते धर्मा इत्याशङ्कायां धर्मशास्त्रोपदिष्टाना सर्वेषामेव ग्रहणं वा केषाचिदेवेति पुनरप्याशङ्का समुदेति। तत्र सर्वेषामेव ग्रहणे तु निषिद्धधर्माणा सर्वेषां विवाहसंस्कारानर्हत्वगमकत्वं कल्पनीयम्। तथा च निषेधातिक्रमेण क्रियमाणो विवाहः पत्नीत्वमेव नोत्पादयेदिति नदीवृक्षादिनाम्नीनां कन्यानां सर्वथा पत्नीत्वाभावप्रसङ्गः। यदि पुनस्तत्र पत्नीत्वं सपद्यत इति परिकल्प्येत तदा तु सपिण्डसमानार्षगोत्रजास्वपि तत्तथैव भवतीति परिकल्पनीयं स्यात्। सेयमुभयतःपाशा रज्जुः। तत्परिहारार्थं केषाचिद्धर्माणामेव विवक्षितत्वमिति मन्येत। तथापि विशेषो वक्तव्यः। स च गमकमन्तराऽनुपपन्न इति विवक्षाऽविवक्षागमकमपि वक्तव्यं स्यात्। तत्र स्वातन्त्र्येण तत्परिकल्पनापेक्षया पूर्वनिबन्धकारैर्यत्परिकल्पित तदेवानुमन्तव्य शिष्टपरिगृहीतत्वात्। एवं च दृष्टार्थाना स्मृतीनां दृष्टार्थादेव प्रामाण्येन नादृष्टार्थपत्नीत्वप्रयोजकत्वम्। ये त्वदृष्टार्थाः शास्त्रैकगम्या धर्मा असपिण्डासमानार्षगोत्रजत्वादयः, तेषामेवादृष्टार्थशास्त्रैकगम्यपत्नीत्वप्रयोजकत्वमिति युक्तमुत्पश्यामः। अन्यथा तु व्यवहारासौकर्यं छलबलाद्यवकाशो विधिनिषेधानर्थक्य च प्रसज्येरन्। येन केनापि धनबलाद्यस्य कस्याप्यभिमतायाः कन्याया अपहरणेन सपादिते विवाहसस्कारे पश्चात् समासादिताया अपि तस्याः पत्नीत्वाक्षत्या पित्रादीनामगत्या तदनुमतिप्रसङ्ग इति किं वा समाजस्वास्थ्यं सपादितं स्यात्। अतश्च शिष्टपरिगृहीत एव पन्थाः श्रेयान्। तदत्र मिताक्षरायां विज्ञानेश्वरो यथा—

"अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्" या स्मृ. श्लो. ५३

अरोगिणीमचिकित्सनीयव्याध्यनुपसृष्टाम्। भ्रातृमतीं पुत्रिकाकरणशङ्कानिवृत्तये। अनेनापरिभाषिताऽपि पुत्रिका भवतीति गम्यते। असमानार्षगोत्रजाम्। ऋषेरिदमार्षं नाम प्रवर इत्यर्थः। गोत्रं वंशपरम्पराप्रसिद्धम्। आर्षं च गोत्रं चाऽऽर्षगोत्रे। समाने आर्षगोत्रे यस्यासौ समानार्षगोत्रस्तस्माज्जाता समानार्षगोत्रजा। न समानार्षगोत्रजा असमानार्षगोत्रजा ताम्। गोत्रप्रवरौ च पृथक् पृथक् पर्युदासनिमित्तम्। तेनासमानार्षजामसमानगोत्रजामिति। तथा च "असमानप्रवरैर्विवाहः" इति गौतमः। तथा

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥ इति मनुः ३।५।

तथा मातृगोत्रामप्यपरिणेया केचिदिच्छन्ति।

" मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।
समानप्रवरां चैव गत्वा चान्द्रायणं चरेत् "

इति प्रायश्चित्तस्मरणात्। अत्र चासपिण्डामित्यनेन पितृष्वसृमातृष्वस्रादिदुहितृनिषेधः। तथा असगोत्रामित्यनेनासपिण्डाया अपि भिन्नसतानजायाः समानगोत्राया निषेधः। तथा असमानप्रवरामित्यनेनाप्यसपिण्डाया असगोत्राया अपि समानप्रवराया निषेधः। तथा चासपिण्डामित्येतत्सार्ववर्णिकम्। सर्वत्र सापिण्ड्यसद्भावात्। असमानार्षगोत्रजामित्येतत्त्रैवर्णिकविषयम्। यद्यपि राजन्यविशां प्रातिस्विकगोत्राभावात्प्रवराभावः, तथापि पुरोहितगोत्रप्रवरौ वेदितव्यौ। तथा च " यजमानस्याऽऽर्षेयान् प्रवृणीत " इत्युक्त्वा " पौरोहित्यान् राजन्यविशां प्रवृणीते " इत्याहाऽऽश्वलायनः। " सपिण्डासमानगोत्रासमानप्रवरासु भार्यात्वमेव नोत्पद्यते। रोगिण्यादिषु तु भार्यात्वे उत्पन्नेऽपि दृष्टविरोध एव " इति॥

अनेन च मिताक्षराव्याख्यानेन सपिण्डासमानगोत्रासमानप्रवरासु पत्नीत्वमेव नोत्पद्यत इति न तासां विवाहसंस्कारयोग्यतेति गम्यते। भार्याशब्दोऽत्र पत्नीपरः। विवाहेन पत्नीत्वस्यैवोत्पाद्यमानत्वात्। तथा च मातुलसुतायाः सापिण्ड्येन समानगोत्रायास्तु प्रतिपदोक्तत्वेन निषेधात् तन्मध्यपतितमातृगोत्राया निषेधोऽपि पत्नीत्वोत्पत्त्यनर्हतां गमयति तस्या इति तस्या अपि विसर्गः सूपपन्नः। एवमेव मन्वर्थमुक्तावलिर्यथा—

" अत्र च प्रकरणे सगोत्रापरिणयने " " सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात् " इति परित्यागश्रवणात् " परिणीय सगोत्रां च " इति प्रायश्चित्तश्रवणाच्च। तत्र तत्समभिव्याहृते च मातृसापिण्ड्यापरिणयनादौ भार्यात्वमेव न भवति। भार्याशब्दस्याऽऽहवनीयादिवत्संस्कारवचनत्वात्। येषां पुनर्दृष्टगुणदोषमूलके विधिनिषेधाभिधाने यथा हीनक्रियामित्यादि, न तदतिक्रमे भार्यात्वाभावः। अत एव मनुना ' महान्त्यपि समृद्धानि ' इत्यादि पृथक्करणं कृतम्। एतन्मध्यपतितश्च " नर्क्षवृक्षनदीनाम्नीम् " इत्यादिप्रतिषेधोऽपि न भार्यात्वाभावस्तत्फलकः। किं त्वत्र शास्त्रातिक्रमात् प्रायश्चित्तमात्रम् " ॥ मनुः ३।११ ॥ इति।

अत्र च पत्नीत्वादिद्वावपि पन्नानुवत्सरिपालनमुक्तम्, तच्च क्षतयोनित्वे एव। अक्षतयोनित्व एव विवाहेन कन्यायां पत्नीत्वोत्पत्तेः। अत एव

" अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् "

इति याज्ञवल्क्यवचने अनन्यपूर्विकामिति विशेषणम्। [illegible] सपिण्डा-
[illegible] विवाहान्तराभावेन [illegible]
[illegible] सामाजिकी व्यवस्था। [illegible]

बलच्छलादिष्वपि विज्ञेयम् । तदेवं पत्नीत्वं, अनन्यपूर्विकात्वे असपिण्डात्वेऽसमानार्षगोत्रजात्व एव
कन्याया विवाहेन निष्पद्यत इति सिध्यति । अन्यथा तु कृतेऽपि विवाहसंस्कारे पत्नीत्वरूपफलानु-
त्पत्त्या तस्याकिंचित्करत्वेन सर्वथा वैयर्थ्यमेवेति तदा पुनःसंस्कारो विवाहाख्य एव भवति, न
पौनर्भवाख्य इति सिद्धम् ।

एवमेव वरेऽपि पतित्वोत्पत्तौ विवाहप्रयोजकधर्माणामालोचनं कर्तव्यं भवति। विवाहस्य पति-
त्वपत्नीत्वोभयोत्पादकत्वात् । पतिपत्नीशब्दयोर्निरूपकांशे परस्परसापेक्षत्वाच्च । अत्र च कात्याय-
नवचनं यथा —

स तु यद्यन्यजातीयः क्लीवः पतित एव वा ।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपिवा ॥
ऊढापि देया साऽन्यस्मै सहावरणभूषणा ॥ इति ।

अत्रापि सर्वेषां विशेषणानां न पतित्वानुत्पादकत्वम् । किंतु आदितः पञ्चानामेव । दृष्टार्थानां
दृष्टार्थत्वादेव निषेधात् । ते च दासत्वदीर्घामयत्वादयः । एवमप्यज्ञानच्छलबलादिभ्य एव तादृशैर्जाते
विवाहे कालान्तरेण पूर्वोक्तदोषज्ञाने च कन्यायाः पुनश्च विवाहो वरान्तरेण । ज्ञानपूर्वकतादृशसं-
स्कारे तु वरवध्वोरुभयोरपि सामाजिको दण्ड एव राज्ञा निर्देष्टव्यः । एव चैतादृशस्थले कन्यायाः
पत्नीत्वानिष्पत्त्या पुनराच्छिद्य संस्कारः शास्त्रानुशिष्टो नापह्नोतु शक्यः । अत एव

" बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा "

इत्यादीनि वचनानि संगच्छन्ते । बलादिति छलाज्ञानादीनामुपलक्षणम् । एवं कन्यायाः
पुनश्च विवाहसंस्कारोऽवस्थाविशेषे भवतीति सिद्धम् । ते च विशेषाः शास्त्रतात्पर्यविषयीभूतविधि-
निषेधाभ्यामवगम्यमाना विवाहयोग्यताप्रयोजका वरवधूगता धर्मा एवेति सिद्धम् । अत्रेदं समवधे-
यमवश्यमेव मनीषिभिर्यत् विवाहसंस्कारप्रसङ्गे क्लीबत्वादिनिर्धारणं कथं कर्तव्यमिति । छलबलादि-
प्रतिबन्धस्तु राजदण्डाधीनः । विकर्मस्थपातित्यादिदोषपरिज्ञानं च धर्मश्रद्धाधीनम् । तत्रेदानीं
राजदण्डस्य सर्वथा निरङ्कुशत्वात् धर्मश्रद्धायाश्च तदधीनत्वेन तस्या अपि निरर्गलत्वात् क्लीबत्वा-
दिदोषज्ञानस्य च व्यवहारे दुर्घटत्वाच्चायं पुनश्च विवाहाख्यः संस्कारो व्यवहारासौकर्यं जनाभि-
शस्तिं च जनयेदित्यालोच्यैव सुदूरं कलौ निषिद्धः " ऊढायाः पुनरुद्वाहम् " इति वचनेन ।
नैतावता कदापि संस्कारो न भवति पुनश्चेति वक्तुं शक्यते । एवं च कलिनिषेधोऽयं प्राप्तिपूर्वक
एव। एवं च पूर्वोक्तानां सर्वेषां वचनानां वाग्दत्तापरत्वकल्पनमसाम्प्रतमेव । अधिकं चात्र विवेचनीयं
विधवापुनर्विवाहे वक्ष्यते । अत्र च प्रसङ्गात् गोत्रविषये किंचिद्विचारणीयमापतति । श्रूयते हीदानीं

विवाहे गोत्रविचारः सर्वथा परिहरणीय इति कोलाहलः केषांचित्। गोत्राणि तु पुरुषविशेषा इत्यनेकपरम्परातिक्रमे सापिण्ड्यसंबन्धनिवृत्त्या का हानिः सगोत्रापरिणये इति तेषामाशङ्का। तदत्र गोत्राणि किं पुरुषविशेषा एव आहोस्वित् षाट्कौशिकशरीरान्तर्गतः कश्चन स्थायी भावः। उताहो कल्पनामात्रमिति किंचिद्विमृश्यते।

## ( गोत्रप्रवरविमर्शः )

"असमानार्षगोत्रजाम्" इति याज्ञवल्क्यवचनेन समानगोत्रत्वं समानप्रवरत्वं च विवाहे कन्यायाः पर्युदासे पृथक् पृथङ्निमित्तमिति बोध्यते। "असपिण्डाम्" इत्यनेन च सापिण्ड्यमपि। तत्र सापिण्ड्यं ह्येकशरीरावयवान्वयेनेति ततः पृथगेव समानगोत्रायाः समानप्रवरायाश्च निषेधात् गोत्रप्रवरस्वरूपं सापिण्ड्यादन्यदेवेति गम्यते। किं तावदित्याकाङ्क्षायां सप्तर्षीणामपत्यं गोत्रम्, प्रवरणाच्च प्रवर इति सर्वनिबन्धकारसंमतम्। तदुक्तं वीरमित्रोदये—

अगस्त्याष्टमसप्तर्ष्यन्यतमापत्यं साक्षात्परम्परासाधारणं तद्गोत्रमुच्यते। तथा च स्मृतिः—

जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते॥ इति॥

भ्यश्चायमर्थोऽवगम्यते । तत्र ' अग्निं दूतं वृणीमहे वृणीध्वं हव्यवाहनम् ' इत्यादिभिर्मन्त्रलिङ्गैराहवनीयस्याग्नेर्वरणकर्मत्वमुच्यते । द्वितीयानिर्देशात् । तथा दर्शपूर्णमासयोः प्रवरविधिपरं तैत्तिरीयब्राह्मणं ' वृणीध्वं हव्यवाहनम् ' इत्यस्यैतमेवार्थमाह । त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणां त एतर्ह्याशंसन्ते मां वरिष्यन्ते मामिति वृणीध्वं हव्यवाहनमित्याह, य एव देवानां तं वृणीते आर्षेयं वृणीते बन्धोरेव नैत्यथो संतत्या इति । अत्राप्याहवनीयाग्निरेव वरणकर्म । देवानां यो हव्यवाहनस्तमार्षेयमिति द्वितीयानिर्देशात् । वाजसनेयिब्राह्मणमप्येतमर्थमाह । अथाऽऽर्षेयं वृणीते ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति । अस्यार्थो मन्त्रार्यामुक्तः । आर्षेयं ऋष्यपत्यमाहवनीयमग्निं यजमानेनोत्पादितत्वाद्यजमानस्य च ऋषिसंतानत्वाच्च वृणीते । किमर्थमित्याशङ्क्य प्रयोजनमाह ऋषिभ्यश्चैवैनं यजमानं देवेभ्यश्च निवेदयत्ययं महावीर्यो ब्राह्मणो यज्ञं प्रापदिति । यस्मादेवं सप्रयोजनः प्रवरस्तस्मादार्षेयं प्रवृणीत इति तस्मात्तदविरोधाय सूत्रकारवचनानि किंचिदध्याहृत्य व्याख्येयानि । तथाहि—इतो यजमानादूर्ध्वान् यजमानस्याऽऽर्षेयान् संकीर्त्य यजमानद्वारा तदपत्यत्वादेव तत्सादृश्येन हे अग्ने त्वं भृगुवदसीति वृणीते । तथा अमुतोऽर्वाञ्चो होतेत्यत्रापि तानेव संकीर्त्य यजमानद्वारा तदपत्यत्वादाहवनीयमेव योग्यत्वाद्वृणीते प्रार्थयते भार्गव भृगोरपत्य देवेभ्यो यज्ञं वहेति । इति ।

अनेन च वीरमित्रोदयेन स्पष्टमिदमवगम्यते यद्गोत्रं नाम सप्तर्षीणामपत्यम् । प्रवरोऽपि तदेवेति ऋष्यपत्येष्वेव कस्यचिद्गोत्रत्वं कस्यचित्तु प्रवरत्वम् । तत्राग्निवरणं यजमानप्रवररूपेणेति तदर्थं प्रवरपरिपालनं वंशपरम्परयेति । एवं च गोत्रप्रवरपरिपालनं यज्ञार्थमपि पत्नीत्वसिध्यर्थं विवाहेऽपि परिपालनीयम् । पत्नीत्वस्य यज्ञाधिकारप्रयोजकत्वात् । एवं चर्षयो ह्यस्मदादिवत्केचन पुरुषविशेषा एव । तत्र केषांचिद्गोत्रत्वं केषांचित्तु प्रवरत्वमित्यत्र वंशपरम्पराप्रसिद्धिरेव नियामिका । एवं च यत्र यस्य गोत्रत्वेन प्रसिद्धिस्तत्र तस्य गोत्रत्वम् । यत्र तु प्रवरत्वेन तत्र प्रवरत्वमिति विवेकः । सप्तर्षिसंतानानि तु सहस्रशः । अतश्च गोत्राणामप्यपरिमितत्वम् । अत एव

' गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च '

इति सूत्रं संगच्छते ।

अत्रेयमाशङ्का समुन्मिषति यद्भवन्तु नाम ऋष्यपत्यानि गोत्राणि । तथापि वंशोऽयं किं जन्मना वा विद्यया वा ग्राह्य इति । जन्ममूलकत्वे तु सर्वस्यापि जगतः ऋषिजन्यत्वेनापत्यत्वात्सर्वेषां गोत्रत्वापत्तिः । यत्र तिर्यञ्चोऽपि ऋष्यपत्यानि का कथा मानवानाम् । ननु भवतु सर्वेषां गोत्रत्वापत्तिः का हानिः । इति चेत् । परम्परायाः स्मरणे नियामकाभावेन येषां केषामपि स्वपूर्वजानां स्मरणापत्तेः । ननु यज्ञसंबन्धित्वात्स्मरणस्य यज्ञाधिकारप्रयोजकविद्यावतामेव स्मरणम् ।

तच्च मन्त्रद्रष्टृत्वेनेति न सर्वेषां स्मरणापत्तिरितिचेत्, एवं तर्हि विद्यावंश एवात्र ग्राह्यो न जन्मवंश इत्येव वक्तव्यम् । एवं च येषां मन्त्रैः स्ववंशोऽनुगृहीतः कर्मद्वारा, तेषामेव पुण्यश्लोकानां स्मरणं तदुपदिष्टं च कर्मानुष्ठानं तत्तत्कुले प्रजायत इति गम्यते । युक्तं चैतत् । ऋषीणां यज्ञसृष्ट्युत्पादकत्वात् । तथा च वाजसनेयी श्रुतिः—

सहस्तोमाः सहच्छन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः ।
पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन् ॥ ३४।४९

अत्रत्यमुव्वटभाष्यं यथा—सहस्तोमाः । ऋषिसृष्टिप्रतिपादिका त्रिष्टुप् । सहस्तोमाः स्तोमसहिताः । सहच्छन्दसः, छन्दःसहिताः । आवृतः । आवृच्छब्देन कर्माभिधीयते । श्रद्धासत्यप्रधानानां कर्मणामनुष्ठातारः । सहप्रमाः प्रमाणं प्रमा । शब्दप्रमाणपरीक्षणतत्पराः । ऋषयः सप्त । सप्त ऋषय इति प्राप्ते व्यत्ययः । भरद्वाजकश्यपगौतमात्रिविश्वामित्रजमदग्निवसिष्ठाः । दैव्याः प्रजापतेः प्राणाभिमानिन एते अभिव्यज्यमानाः । पूर्वेषामधस्तनकल्पोत्पन्नानामवसिताधिकाराणाम् । पन्थाम्—पन्थानम् । अनुदृश्य अवलोक्य । धीरा अन्वालेभिरे अन्वालभन्त सृष्टवन्तः सृष्टियज्ञम् । कथमिव । रथ्यो न रश्मीन् । रथे साधु रथ्यः सारथिः । नकार उपमार्थीयः । यथा सारथिरिष्टदेशप्राप्त्यर्थं प्रथममश्वरश्मीनालभते स्पृशति । एवं तेऽपि सृष्टियज्ञं सृष्टवन्तः ॥ ४९ ॥

एवमेव महीधरोऽपीमं मन्त्रं व्याचष्टे । अनेन च मन्त्रेण कल्पारम्भे सृष्टिपालनकर्माणि प्राप्ताधिकाराः केचन पुरुषविशेषाः सृष्टिपालनार्थं यज्ञकर्मविचक्षणाः संभूय यज्ञसृष्टिं निर्ममिरे । सा चावसिताधिकारिभिर्यथा निर्मिता पूर्वकल्पे तथैव । एवं चैतेषामपत्यान्येव गोत्रपुरुषत्वेन प्रवरपुरुषत्वेन च संस्मरणीयानि तादृशाधिकारसंपन्नानीति यज्ञसृष्टिसमुत्पादकत्वाद्विद्यावंश एवात्राभिप्रेत इति सिध्यति । एवं च विवाहे समानार्षगोत्रजायाः पर्युदासात् यज्ञकर्मजन्यसमानसंस्कारोऽपि पिण्डगतवैशिष्ट्यं गमयतीति तादृशसमानसंस्कारयोर्वधूवरयोः सुप्रजस्त्वसंपत्तिर्न भवतीति परिकल्पनीयम् । नात्र सापिण्ड्यवत्कश्चिद्धातुगतो विशेषः । परं च प्रजापतिप्राणाभिमानित्वेनाभिव्यज्यमानत्वं यदिदं सप्तर्षीणां व्याख्यातं नेदं पुरुषविशेषे भौतिकदेहधारिणि परिकल्पयितुं शक्यम् । परिकल्पितमपि तादृशपिण्डधारिण आधिदैविकत्व एव तत्पर्यवस्यतीति तदपि पर्यालोचनीयं भवति । तत्र याजिसंहितायामेव यथा—

सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥ ३४।५५॥

अत्रोव्वटभाष्यं यथा—सप्त ऋषयः । अध्यात्मवादिनी जगती । सप्त प्राणाः । षडिन्द्रि-
याणि मनःसप्तमानि । प्रतिहिताः प्रतिनिहिताः शरीरे व्यवस्थिता ये त एव । सप्त रक्षन्ति ।
सदं सदाकालं शरीरम् । अप्रमादम् । प्रमादमकुर्वाणाः । त एव सप्त आपः । आपनाः व्यापनाः ।
स्वपतः पुरुषस्य लोकमीयुः । लोकशब्देन विज्ञानात्मा हृदयाकाशप्रतिष्ठित उच्यते । तत्र च सवि-
त्स्थाने । तस्यामेवावस्थायां जागृतो जागरणं कुर्वाते । अस्वप्नजौ । ययोर्न जायते स्वप्नस्तौ
तथोक्तौ । सत्रसदौ । सत्रे सतां त्राणे कृतावस्थानौ । देवौ जीवितदातारौ प्राणापानौ ॥ ५५ ॥
इति ।

अत्र च मन्त्रभाष्ये सप्त ऋषयो नाम सप्त प्राणाः षडिन्द्रियाणि मनःसप्तमानीत्यर्थः
प्रतिपादितः । तत्र " मनः षष्ठानीन्द्रियाणि " इति गीतावचनात् ज्ञानेन्द्रियाणां पञ्चत्वे मन-
सश्च षष्ठत्वे सप्तमत्वमिदं मनसः प्रतिपाद्यमानं ज्ञानेन्द्रियाणां षट्त्वं गमयति । तत्र षष्ठमिन्द्रियं
बुद्धिरूपं ग्राह्यम् । वेददीपे तथोक्तत्वात् । तथा चात्र वेददीपो महीधरप्रणीतः—

अध्यात्मवादिनी जगती । सप्त ऋषयः प्राणाः, त्वक्चक्षुःश्रवणरसनाघ्राणमनोबुद्धिलक्षणाः
शरीरे प्रतिहिता व्यवस्थिताः । ते सप्त स्वपतो नरस्य लोकमात्मानमीयुः प्राप्नुवन्ति । लोकशब्देन
विज्ञानात्मा हृदयाकाशप्रतिष्ठ उच्यते । किंभूताः सप्त ? आप आप्नुवन्ति देहमित्यापो व्यापनाः ।
तत्र तस्यामृषीणां लोकगमनावस्थायां देवौ दीप्यमानौ प्राणापानौ जागरणं कुर्वाते । कीदृशौ ?
अस्वप्नजौ न स्वप्नो निद्रा जायते ययोस्तौ अस्वप्नजौ । तथा सत्रसदौ सतां जीवानां त्राणं
रक्षणं सत्रम् । तत्र सीदतस्तौ सत्रसदौ । जीवितदातारावित्यर्थः ॥ ५५ ॥ इति ।

एवं च सप्तानामेतेषां प्राणसहकारेणैव कार्यकारित्वात्प्रजापतेरात्मनः प्राणाभिमानित्वमुप-
पद्यते । एवं चेन्द्रियद्वारैव मन्त्रदर्शनात् प्रजापतेः प्राणाभिमानित्वाच्च ऋषित्वमिन्द्रियाणामिति
पर्यवस्यति । तत्र वस्तुत ऋषित्वं वा ऋषिवत्कार्यकारित्वाद्वा ऋषित्वमितिनिर्णयस्तु न संभवति ।
एवमेवेत एव रसरक्तमांसास्थिमज्जास्नायुवीर्यरूपाणां शरीरान्तर्गतसप्तधातूनामपि ऋषित्वमुत्प्रेक्षितुं
शक्यम् । इन्द्रियाणां हि कार्यकारित्वं प्राणसहकारमिव धातुसहकारमप्यपेक्षत एव । " अन्नमय
हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक् " इत्युपनिषद्वाक्येष्वस्यार्थस्य स्पष्टमेव प्रति-
पादनात् । एतेषां लोकगमनं नामेन्द्रियाणामसहकारो निद्रायाम् । किंचेन्द्रियाणां भौतिकत्वेन
धातूनामपि तथात्वेन, च परस्परसहकारित्वादन्योन्यसंबन्धोऽपि सिद्धो भवति । तथाच यत्र कुले
यद्गोत्रस्य परम्परा, तत्र तदात्मकधातुरूपस्य वेन्द्रियरूपस्य वा कश्चन विशेषः परम्परयाऽनुवर्तते न
वेति पर्यालोचनीयं भवति । यदि च परम्परया तादृशानुवृत्तिः सेत्स्यति । तदा तु कस्य पिण्डस्य
कीदृशेन पिण्डेन यौनः संबन्धः सुप्रजस्त्वसंपादकः स्यादित्यपि समीक्षणीयम् । एवमेव समीक्षणेन
गुणदोषौ पर्यालोच्य गोत्रप्रवरपरिपालनमिदं श्रेयस्करं न वेति निर्णयो भवेन्नान्यथा ।

किंच सप्ताश्वस्य सप्तकिरणानामेव सप्तर्षित्वमित्यपि गुरुपरम्परया श्रूयते । तदुपपत्तिरपि वेदेष्वस्तीति । परं च ममाल्पसत्त्वस्य सर्वस्यापि वेदमहोदधेरालोडनमशक्यमिति यावद्बुद्धिबलमुपपादितोपपत्तिः । अत्रापि किंचित्पुराणप्रतिपादितसूर्यव्यूहपर्यालोचनद्वारा कल्पयितुं शक्यमिति प्रज्ञावता परीक्षणाय किंचिदिवोपन्यस्यते ।

श्रीमद्भागवते द्वादशस्कन्धे एकादशाध्याये सूर्यव्यूहो यथा—

शौनक उवाच—शुको यदाह भगवान् विष्णुराताय शृण्वते ।
सौरो गणो मासि मासि नाना वसति सप्तकः ॥२७॥
तेषां नामानि कर्माणि संयुक्तानामधीश्वरैः ।
ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः ॥२८॥

सूत उवाच—अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् ।
निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्तते ॥२९॥
एक एव हि लोकानां सूर्य आत्माऽऽदिकृद्धरिः ।
सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥३०॥
कालो देशः क्रिया कर्ता करणं कार्यमागमः ।
द्रव्यं फलमिति ब्रह्मन्नवधोक्तोऽजया हरिः ॥३१॥
मध्वादिषु द्वादशसु भगवान् कालरूपधृक् ।
लोकतन्त्राय चरति पृथग्द्वादशभिर्गणैः ॥३२॥
धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने ।
पुलस्त्यस्तुम्बुरुरिति मधुमासं नयन्त्यमी ॥३३॥
अर्यमा पुलहोऽथौजाः प्रहेतिः पुञ्जिकस्थली ।
नारदः कच्छनीरश्च नयन्त्येते स्म माधवम् ॥३४॥
मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः ।
रथस्वन इति ह्येते शुक्रमासं नयन्त्यमी ॥३५॥
वसिष्ठो वरुणो रम्भा सहजन्यस्तथा हुहूः ।
शुक्रश्चित्रस्वनश्चैव शुचिमासं नयन्त्यमी ॥३६॥
इन्द्रो विश्वावसुः श्रोता एलापत्रस्तथाऽङ्गिराः ।
प्रम्लोचा राक्षसो वर्यो नभोमासं नयन्त्यमी ॥३७॥
विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः ।
अनुम्लोचा शङ्खपालो नभस्याख्यं नयन्त्यमी ॥३८॥

पूषा धनंजयो वातः सुषेणः सुरुचिस्तथा ।
घृताची गौतमश्चेति तपोमासं नयन्त्यमी ॥३९॥
ऋतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा ।
विश्व ऐरावतश्चैव तपस्याख्यं नयन्त्यमी ॥४०॥
अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी
विद्युच्छत्रुर्महाशङ्खः सहोमासं नयन्त्यमी ॥४१॥
भगः स्फूर्जोऽरिष्टनेमिरूर्ण आयुश्च पञ्चमः ।
कर्कोटकः पूर्वचित्तिः पुष्यमासं नयन्त्यमी ॥४२॥
त्वष्टा रुचीकतनयः कम्बलश्च तिलोत्तमा ।
ब्रह्मापेतोऽथ शतजिद्धृतराष्ट्र इषंभराः ॥४३॥
विष्णुरश्वतरो रम्भा सूर्यवर्चाश्च सत्यजित् ।
विश्वामित्रो मखापेत ऊर्जमासं नयन्त्यमी ॥४४॥
एता भगवतो विष्णोरादित्यस्य विभूतयः ।
स्मरतां संध्ययोर्नॄणां हरन्त्यंहो दिने दिने ॥४५॥ इति ।

अत्र हि प्रतिमासं तपतस्तपनस्य ऋषिगन्धर्वयक्षराक्षसनागाप्सरसः षट् सहकारिण इति तेषां मासभेदेन नामभेदोऽपि दर्शितः । एवं सप्ताश्वस्य सप्तानां मयूखानां मासभेदेन विभिन्नकार्यका-रित्वात् विभिन्नानि नामानीत्यपि कल्पयितुं शक्यम् । अतश्च षट्सु सहकारिषु ऋषेरपि परिगण-नात् किरणस्यैव कस्यचन ऋषित्वं भवितुं युक्तम् । तत्र कश्यपात्रिभरद्वाजविश्वामित्रगौतमवसि-ष्ठानां तु नामनिर्देशः स्पष्ट एव । ऋचीकतनय इत्यनेन जमदग्निरपि निर्दिष्टः । एवं च गोत्रप्रवर्त-कानां सप्तानामपि ऋषीणां किरणरूपत्वमुपपन्नं भवति । ये तु भृग्वङ्गिरादयस्तेऽपि भृगुगणत्वेन आङ्गिरसगणत्वेन गोत्रप्रवर्तकेषु परिगण्यन्त एव । एवं चैतेषामपत्यानां गोत्रत्वेऽप्येतत्संबन्धानुवृत्तिरव-श्यंभाविनी । तत्र किरणानां पिण्डगतवैशिष्ट्योत्पादनद्वारैव सा वक्तव्येति किरणतत्कार्याणां परीक्ष-णमावश्यकं भवति ।

किंच पुराणेषु सर्गविसर्गादिदशपदार्थनिरूपणावसरे सर्गमध्य एव ऋषिसृष्टिः प्रदर्शिता । सा च ब्रह्मणो मानसी सृष्टिर्न दैहिकीत्युपवर्णितम् ।

"भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः"

इति सर्गलक्षणमपि तत्रैव । एवं च ऋषिसृष्टिरियमिन्द्रियसृष्टिरेव भवितुमर्हति । तत्र ज्ञाने-न्द्रियाणि पञ्च पञ्च च कर्मेन्द्रियाणीति ब्रह्मणो दश पुत्राः प्रजज्ञिरे । तदुक्तम्—

अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे ।
भगवच्छक्तियुक्तस्य लोकसंतानहेतवः ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥
उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः ।
प्राणाद्वसिष्ठः संजातो भृगुस्त्वचि करात्क्रतुः ॥
पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः ।
अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥ भा. ३।१२।२१-२४

इति । नेदं सर्वं देहधारिपुरुषविशेषे घटत इत्यगत्येन्द्रियसृष्टावेव पर्यवस्यति । इन्द्रियाणामात्मनश्च भानुभानुमद्भिः संबन्धः स्पष्ट एव । "सूर्य आत्मा जगतस्तस्थुषश्च" इति श्रुतेः सूर्यस्याऽऽत्मत्वेऽर्थादेव तत्किरणानामिन्द्रियरूपता ।

"विभक्तारं हवामहे वसोश्चित्रस्य राधसः ।
सवितारं नृचक्षसम्"

इति मन्त्रे सूर्यस्य संघटनविघटनात्मककार्यकारित्वं सुविशदं निरूप्यते । तत्र कस्य किरणस्य किं कार्यकारित्वमिति तु पार्थक्येन न निरूपयितु शक्यते । एवमेव

"वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्रिर्नाम यदत्तिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद"

इति शतपथश्रुत्याऽत्रेर्वागिन्द्रियरूपत्वे ज्ञातेऽप्यन्येषामृषीणां किमिन्द्रियरूपतेत्यपि स्पष्टतया न परिज्ञायत इति वेदमहोदधिपर्यालोडनशीलैः परिनिष्ठितैरत्र पर्यालोचनीयम् ।

एवं च पिण्डगतधात्विन्द्रियवैशिष्ट्य हि सूर्यकिरणमूलकमिति तत्तद्वैशिष्ट्यानुसारेणैव तत्तत्पिण्डानां यौनसंबन्धे सुप्रजस्त्वसंपत्तिरिति तात्पर्यमिति भाति । कथमपि वा भवतु । सर्वथा त्वविप्रतिपन्नसगोत्रापर्युदासोऽयं परिपालनीय एव विशेषतो धर्मार्थमेव समुत्पन्नानां ब्राह्मणानाम् । न हि नेदानीं तत्तत्त्वज्ञानमित्यग्रेऽपि तथैव स्यात् । न वा पूर्वतनाः सर्वेऽपि मूर्खा वाऽन्धश्रद्धालवो वाऽध्यात्मतत्त्वपरिनिष्ठिता अपि । नापिताननुवर्तमानाः शिष्टा अपि लाभपूजाख्यात्यर्थं तेषां नर्मनीतिसचिवाः, यैरेतावत्कालपर्यन्तमयं पर्युदासः परिपालितः । न वाऽद्यतनाना विज्ञानं सर्वथा परिपूर्णं नातः परमस्तीत्यपि वक्तुं पार्यत इदानींतनैरपि । तदयं पर्युदासस्य पर्युदासः कदाचिदनर्थमपि नेयादिति सर्वथाऽदृष्टफलकेऽस्मिन् स्वबुद्धिवैभवस्वातन्त्र्यमिदं न केवलमनर्थकरमपि तु सर्वक्षयमेवेति न तत्साम्प्रतम् । तदेवं यथामति विचारितोऽप्ययं विषयः सूरिभिरितोऽप्यधिकं विचारणीय इत्युपन्यस्तः । सर्वथा तु गोत्रप्रवरपरिपालन श्रेयस्करमेवेत्यलं विस्तरेण ।

एवं च—

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥५२॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
पञ्चमात्सप्तमादूर्ध्वं भ्रातृतः पितृतस्तथा ॥५३॥

इति याज्ञवल्क्यवचनोक्तानि " अनन्यपूर्विकाम्, असमानार्षगोत्रजाम्, असपिण्डाम् " इति
त्रीणि विशेषणानि कन्याया विवाहसंस्कारेण पत्नीत्वं संपद्यते चेदेतादृशविशेषणविशिष्टाया एवेति
गमयन्ति। अतश्च परपूर्वासु सगोत्रासु सपिण्डासु च नैव पत्नीत्वं संस्कारेण संपद्यत इति सिध्यति।
अरोगिणीमित्यादिविशेषणविशिष्टासु कन्यासु तु पत्नीत्वमुत्पद्यत एव। एवमपि दृष्टदोषादेव तद्विशे-
षणविशिष्टानां कन्यानां विवाहे पर्युदास इति च सिध्यति। सोऽयमेवंगुणविशेषणविशिष्ट एव
विवाहसंस्कारो धर्म्यो नान्य इति शास्त्रीयसुप्रजस्त्वसंपत्तये स एवाऽऽदर्तव्य इतिशास्त्राभिप्रायः।

एवमेव वरस्यापि दुष्टत्वे पतित्वोत्पत्तिर्भवति नवेत्यपि विचारणीयम्। कन्यादानकाले
हि दाता

" अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते ।
इमां कन्यां प्रदास्यामि देवाग्निद्विजसान्निधौ "

इति ब्रूते। यद्यपीदं वचनमिदानीं वाग्दानावसर एव पठ्यते, तथाप्येतेन दातुराशयः सुवि-
शदो भवति। तव पुत्रे एतादृशे सत्येव मया कन्या दीयते नान्यथेति सर्वं वाक्यं सावधारणमिति
न्यायेन वाक्यार्थो भवति। दशदोषाश्च कात्यायनोक्ताः।

उन्मत्तः पतितः कुष्ठी पण्ढश्चैव सगोत्रजः ।
चक्षुःश्रोत्रविहीनश्च तथाऽपस्मारदूषितः ॥
वरदोषाः स्मृताश्चैते कन्यादोषाः प्रकीर्तिताः ॥ इति।

एतेषां च वाग्दानानन्तरमपि विवाहात् प्राक् ज्ञाने कन्याया अन्यस्मै दानं सर्वसंमतमेव। अत
एव 'उद्वाहिताऽपि या कन्या' इत्यादिवचनानां वाग्दत्तापरत्वं सर्वनिबन्धाभिमतम्। एवमपि कदाचित्
विवाहानन्तरं तज्ज्ञाने कन्यायाः पुनर्विवाहो भवति नवेत्याशङ्कायां दोषाणामेतेषां यदि पत्नीत्व-
निष्पत्तिप्रतिबन्धकत्वं स्यात्तदा तु पत्नीत्वाभावादेव यथा कन्या तथैव सेति कन्यायाः पुनःसंस्कारेण
पत्यन्तरं स्यात्। नो चेदेकनिरूपितपत्नीत्वावरुद्धायां कन्यायामपरनिरूपितपत्नीत्वं कथं स्यात्। न
च पत्नीत्वस्योत्पत्तिविनाशोऽप्यभ्युपगन्तव्यः। तन्मूलकदायाशौचादीनामुत्तराधिकारस्य चानुपपत्तेः।
तदगत्या पत्नीत्वं न विनाशशालीत्यभ्युपगन्तव्यम्। तथा च वरदोषाणां पत्नीत्वानुत्पादकत्वं वा वरे

पतित्वानुत्पादकत्वं वाऽभ्युपगन्तव्यमकामेनापि । ननु यथैककन्यानिरूपितपतित्वावरुद्धेऽप्यपरानिरूपितपतित्वं विवाहेनोत्पद्यते पुरुषस्य । तथैवैकपुरुषनिरूपितपत्नीत्वावरुद्धायामपि कन्यायामपरनिरूपितपत्नीत्व भवतु का हानिरिति चेदत्रभवान् प्रष्टव्यः किमर्थं तर्हीयं विवाहसंस्कारः । न हि मृत एव वरे तादृशपत्नीत्वं नामृत इत्यत्र किमपि गमकमस्ति । तथा च मृतत्वक्लीबत्वाद्यवस्थायामिव जीवदवस्थायामपि पतित्ववदपरनिरूपितपत्नीत्वाभ्युपगमो गले पतितः स्यात् । तथा चैकपतिसत्त्वेऽप्यपरानेकपतिस्वीकारापत्तिः । सा चेदिष्टा । तर्हि पतिपत्नीसंबन्धनियमनमिदं सर्वत्र समाजेषु क्रियमाणं निरालम्बमेवेति पशुवदनावृतव्यवहार एव न्याय्य इत्येव सिध्येत् । तथा च समाजसुव्यवस्थासंपादकानां समानाधिकारमेव स्त्रीपुंसयोरुद्घोषकाणामेतादृशसमाजस्वास्थ्यमिदं पशुतामेवाऽऽवहतीति सुष्ठु किलेयं मानवसमाजव्यवस्था देवानांप्रियस्य । तदगत्या पतिपत्नीसंबन्धनियममवश्यमेवाभ्युपेयं मानवैः । तच्च न विवाहसंस्कारमन्तरेति पूर्वमेवोपपादितम् । न हीदं नियमनं व्यक्तिगतकामनियमनार्थम् । न वा भोग्यसंपत्तेर्यथावद्विभजनार्थम् । किंतु " प्रजातन्तुं मा व्यवच्छेत्सीः " इति अखण्डदण्डायमानप्रवाहरूपेणानायनन्तराष्ट्रपुरुषसंरक्षणार्थं यथावत्कार्यकारिबुद्धिबलसंपन्नसुप्रजासवर्धनार्थमेवेति न तत्र विवाहसंस्कारमन्तरेण किमपि प्रभवतीति असकृदवोचाम । अतश्च कन्यागतानां केषांचिद्दोषाणामिव वरगतानामपि केषांचिद्दोषाणां पत्नीत्वानुत्पादकत्वं चेच्छास्त्रेणावगम्यते, तदैव खलु कन्यायाः पुनर्विवाहः स्यादिति निश्चप्रचमेव । अतश्च वरदोषपर्यालोचनद्वारैव कन्यायाः पुनरुद्वाहसिद्धिरिति तानत्र पर्यालोचयामः ।

## ( कन्यायाः पुनरुद्वाहविचारः )

तत्र सगोत्रसप्रवरसपिण्डत्वादिदोषाणां कन्यागतानां पर्युदासेन तादृशदोषदुष्टवरस्यापि पर्युदासोऽर्थादेव । साम्यस्यान्योन्यसापेक्षत्वात् । असमाधेयरोगस्य तु प्रत्यक्षोपलम्भयोग्यत्वेन दृष्टार्थत्वादेव पर्युदास इति तत्सत्त्वेऽपि विवाहसिद्धौ छलकपटलोभाद्यन्यतमसंभावना भवितुमर्हतीति तत्र विवाहात् प्राक् तद्दोषज्ञाने बलादपि कन्यामपहृत्य पुनरुद्वाहः कार्यो दाता च दण्ड्य इत्येव न्याय्यः पन्थाः । विवाहानन्तर तद्दोषज्ञाने तु दातैव दण्ड्यो न तु विवाहोच्छेदः । पर्युदासस्य दृष्टार्थत्वात् । दातुर्दण्डस्त्वहितकारित्वादेव कन्यायाः राष्ट्रोपघातकत्वेनेति । दृष्टार्थपर्युदासस्यातिक्रमे पुनरुद्वाहकल्पनायां तु विवाहसंस्कारवैयर्थ्यं तदवस्थमेव । येन केनापि कारणेन विवाहोच्छेदे पुनरुद्वाहे च पुनरपि पशुधर्मप्रसरः कथं वार्यताम् । " यस्यां मनश्चक्षुषोः प्रीतिः " इत्यत्रोक्तरीत्या प्रीत्यपगमेऽपि पुनरुद्वाहप्रसङ्गेन धर्मप्रजासंपत्तीनां विनाशेन समाजस्वास्थ्यस्य निर्वाहोऽपि न स्यादेव । अतश्च दृष्टार्थपर्युदासातिक्रमो न पत्नीत्वोत्पादप्रतिबन्धक इत्येव युक्तं वक्तुम् । अतश्च नासमाधेयरोगग्रस्तस्य विवाहे निर्वृत्ते पत्नीत्वानुत्पादः । पतितक्लीबत्वादिदोषास्तु तेषां छलादिभ्य एवापरिज्ञाता भवन्ति विवाहकाले इति तन्निर्णयाधीन एव विवाहनिर्णयः । एवं पश्चादपि सिद्धेषु तादृशदोषेषु

पत्नीत्वानिष्पत्तिरेव तत्राङ्गीकर्तव्या । न हि पतितस्य वा क्लीबस्य धर्मानुष्ठानाधिकारः । अतश्च तत्र
संस्कारेण धर्मानुष्ठानप्रयोजकपत्नीत्वासिद्धिरेवोरीकर्तव्या । विवाहस्य धर्मप्रजासंपत्त्यर्थत्वात् । अत्र
क्लीबस्तु तृतीया प्रकृतिरेव । वातजादिक्लीबानां तु औषधिसेवनादिना पुंस्त्वप्राप्तिर्भवितुमर्हतीति तैः सह
विवाहे पतिपत्नीभावोत्पत्तिर्भवत्येव । ननु क्लीबस्यापि विवाहो भवितुमर्हति । तथा च मनुः—

यद्यर्थिता तु दारैः स्यात्क्लीबादीनां कथंचन ।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥ ९।२०३ ॥

अनेन च क्लीबादीनां दारार्थित्वमनुवदता विवाहार्हता गम्यते । अतश्च क्लीबादिषु विवाहेन
पतित्वसंसिद्धिर्भवतीति कथं क्लीबादिषु पतित्वासिद्धिरिति चेन्न । तेषामपत्यस्य दायाधिकारित्वं
हि तदैव भवितुमर्हति यदा नियोगादिकमनुष्ठीयते । नियोगादिकं चाधर्म्यमिति तु मनुनैव विशदी-
कृतम् ।

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।
न विवाहविधावुक्तं विधवावेदनं पुनः ॥९।६५
अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥९।६६

एवं च यत्र मनुनैवाधर्म्यत्वं प्रतिपाद्यते । तत्र तादृशप्रजानां दायोऽप्यधर्म्य एव । एवमपि
स्थितस्य गतिश्चिन्तनीयेति न्यायेन यदाकदाचित् छलादिनाऽज्ञानाद्वा निर्वृत्ते विवाहे समुत्पन्ने च
संतानेऽधर्म्यस्यापि तस्य दायाधिकारो भवत्येवेत्येव मनोरभिप्रायः । नैतावता तत्र संस्कारेण
पतिपत्नीत्वसिद्धिः । यथैव पुनर्भ्वादिषु पत्नीत्वासिद्धावपि पतिपत्नीवद्व्यवहारो दायादिकं वा । तथा-
त्रापीति मनोराशयः । तत्सिद्धं न क्लीबपतितादीनां विवाहसंस्कारेण पतित्वनिष्पत्तिः । अतश्च
पतिनिरूपितस्वत्वानुत्पादादेव तदूढानां कन्यानां कन्यात्वाक्षत्या पुनश्च विवाहसंस्कारः । नन्वेवं
वन्ध्याकन्यास्वपि पत्नीत्वानुत्पत्तिप्रसङ्गः । तासामपि प्रजोत्पादनानर्हत्वेन विवाहस्य च प्रजासंप-
त्त्यर्थत्वेन च प्रजोत्पादनानर्हतायाः क्लीबवन्ध्ययोः समत्वात् । न च कामोपभोग्यत्वाद्विशेषः ।
कामस्य नान्तरीयकफलत्वेऽपि प्रधानफलस्य संतानस्यानिष्पत्तेः । अन्यतरफलसंभवेऽपि यदि पत्नीत्व-
मुरीक्रीयेत, तदा तु काम्यविवाहे क्षत्रियादिषु ब्राह्मणादीनां विवाहेन पत्नीत्वप्रसङ्गः । पुनर्भ्वादिषु
च तथा प्रसङ्गः । अतश्च यत्र धर्म्यप्रजानिष्पत्तिसंभवस्तत्रैव पतिपत्नीत्वसिद्धिरिति वक्तव्यम् ।
वन्ध्यासु च प्रजानिष्पत्तेरसंभवान्न तत्र विवाहेन पत्नीत्वसिद्धिरिति तस्याः पुनश्च विवाहः स्यादिति
चेन्न । विवाहकाले वन्ध्यात्वस्य निश्चेतुमशक्यत्वात् । स्त्रीपुंसयोरुभयोरपि तादृशदोषसंभवेन
साम्याच्च । यथाकथंचित्तद्दोषनिर्णयेऽपि विवाहस्य धर्मप्रजोभयफलकत्वेन प्रजारूपफलानुत्पादेऽपि

धर्मफलस्याप्रतिहतत्वान्न तत्र पतिपत्नीभावासिद्धिः। अतश्च वन्ध्यपुरुषस्य वन्ध्याया वा स्त्रिया विवाहेन पतिपत्नीत्वसिद्धौ न कापि हानिः। न च तथा क्लीबपतितादीनाम्। तेषां धर्मप्रजोभयाधिकाराभावात्। क्लीबे तु कामस्याप्यसंभवः। अत एव 'कथंचनेत्यभिधानात्क्लीबादयो विवाहानर्हा इति सूचितम्" इति मन्वर्थमुक्तावलिः संगच्छते। यत्र च न विवाहयोग्यता, तत्र "मह्यं त्वाऽदुर्गार्हपत्याय देवाः" इति गृहपतिधर्माधिकारोऽपि परास्त एवेति कथमपि विवाहफलासंभवेन कृतोऽपि विवाहसंस्कारो मृदादिषु प्रतिबिम्बग्राहकचाकचक्यसंस्कार इवानिष्पन्न एवेति तत्र पुनश्च संस्कारः कन्याया भवितुमर्हतीति सिद्धम्।

एतेन विधवोद्वाहशङ्कासमाधौ कृतः स्वत्वविमर्शोऽपि परास्तः। तथाहि—

स्वत्वान्तरमिव विवाहप्रयोज्यं स्वत्वं पतिनिष्ठेन क्लीबत्वादिना दोषेण न विनश्यति, न वा नोत्पद्यते। क्लीबत्वपातित्ययोर्दायनिमित्तस्वत्वातिरिक्तस्वत्वनाशकत्वे तथाविधस्वत्वोत्पत्तिप्रतिबन्धकत्वे च मानाभावात्। लोके क्रयप्रतिग्रहादिभिः क्लीबपतितयोरपि स्वत्वोत्पत्तिदर्शनात्। न चैवं सति क्लीबाय वाग्दत्ताया अन्यस्मै दानमसंगतं स्यादिति वाच्यम्। न हि तत्रान्यस्मै दानं क्लीबादिस्वत्वोत्पत्त्यभावात्, किंतु दात्रनुशयजन्यप्रतिग्रहीतृस्वत्वनाशात्। यथा- क्रीतानुशयादौ। अनुशयेन स्वत्वनाशे च प्रतिग्रहीतृदोषज्ञानं सहकारीति नादुष्टाय दानस्थलीयानुशयात् स्वत्वनाशः। अत एवादुष्टाय प्रतिश्रुत्यादान इव दुष्टाय बुद्धिपूर्वं दाने दण्डविधानं नास्ति। दुष्टाय दाने सप्तपद्युत्तरं तु न दात्रनुशयः। तत्र देवानां दातृत्वात्। तेषां च सर्वज्ञतयाऽनुशयासंभवात्। देवकर्तृकदानभावनभावस्य स्वत्वप्रयोजकत्वाङ्गीकारेऽपि च स्वस्वत्वनिवर्तकस्यानुशयासंभवात्" इति।

अत्र यदि क्लीबशब्देन वातजादिक्लीबानां, विवक्षा वा विवाहोत्तरं प्राप्तक्लीबत्वानां वा विवक्षा तर्हि तु नास्माकं विप्रतिपत्तिः। औषधादिना तादृशक्लीबत्वदोषस्य समाधेयत्वात्। यदि तु जन्मत एव तृतीया प्रकृतिरूपक्लीबत्वमपि क्लीबत्वसामान्यबोधकक्लीबपदेन विवक्षितम्। तदा तु विवाहाधिकारबोधकविवाहविधिविरोधादेव तादृशक्लीबस्य वरस्य स्वत्वानुत्पत्तिरिति परं ब्रूमः। तथाहि।

"कन्यायाः पाणिं गृह्णीयात्" "उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्" "अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्" इत्यादिविवाहविधीनां कः खलु अधिकारीति समालोचनीयम्। यदि चात्रोद्वाहकस्य पुंस्त्वमुद्देश्यगतत्वात् ग्रहैकत्ववदविवक्षितम्, तदा तु स्त्रीपुंनपुंसकसाधारण मनुष्यत्वमेवाधिकारितावच्छेदकमिति स्त्रिया वा पुरुषेण वा नपुंसकेन वा कन्यायाः पाणिग्रहणं कर्तव्यं स्यात्। तथा च "प्रजातन्तुं मा व्यवच्छेत्सी" रिति प्राप्तविवाहनयोजकं सुप्रजस्त्वमेव दत्तजलाञ्जलि स्यात्। स्त्रिया कन्यापाणिग्रहणे तत्र च स्वत्वोत्पत्तौ

तादृशस्वत्वस्य सर्वथाऽनपगमे वा कामोपभोगस्य स्वाभाविकस्य दुर्निवारस्यासिध्याऽगत्या
परपुरुषसमागमस्तन्मूलकव्यभिचारश्च कथं वार्यताम् । तथा च धर्मप्रजासंपत्त्यर्थं विधीयमानो
विवाहोऽधर्मदुष्टप्रजासंपादको भवेदिति " विनायकं प्रकुर्वाणो रचयामास वानरम् " इति सुष्ठु
समर्थितः शास्त्रार्थः । अतश्चोपनयनविधिवदत्रापि विशिष्टविधेराश्रयणमगत्यैवाभ्युपेयम् । ततश्च
पुंस्त्वं विध्याश्रितत्वाद्विवक्षितमेवेति दानकाले वा विवाहकाले वा क्लीबत्वदोषदुष्टस्य मानवस्य
विवाहानधिकारेणानधिकारिणा कृतस्य कर्मणोऽकृतत्वात्फलानुत्पादकत्वाच्च तादृशविवाहेन
स्वत्वानुत्पाद एवाभ्युपेय इति सिध्यति । उपनयने चैतादृशविशिष्टविधित्वं शूद्रकमलाकरादिनिब-
न्धानुमतमिति तूक्तपूर्वमेव । अत्रापि कर्तृविशेषविशिष्टकर्मविधिरेव । तथा च वीरमित्रोदयः—

" स च विवाहः पुरुषार्थतया पुरुषं प्रति विधीयते । यथाह मनुः—

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥

अत्र द्विजोपादानमुक्तविशेषणविशिष्टस्यैव तस्योद्वाहाधिकारप्रतिपादनार्थम् । न
पुनर्द्विजमात्रस्य तदधिकारप्रतिपादनार्थम् । उपनीतस्यासमावृत्तस्य तदधिकारापत्तेः । नापि
परिसंख्यार्थम् । शूद्रादीनामविवाहापत्तेः । तस्मात्कर्तृविशेषविशिष्टकर्मविधिरयमभ्युपगन्तव्यः ।
भार्यामिति भाविसंस्कारनिमित्ता संज्ञा । यूपं तक्षतीतिवत् । ततश्चोद्वाहेन भार्यां कुर्यादित्यर्थः
संपद्यते । भार्यादिशब्दस्य संस्कारनिमित्तत्वात् । सवर्णामिति मुख्यत्वप्रतिपादनार्थम् ।
नासवर्णापरिसंख्यार्थम् । तदुद्वाहस्याप्यभ्यनुज्ञानात् । याज्ञवल्क्योऽपि ।

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् । इति ।

अविप्लुतब्रह्मचर्यं इति विशेषणं ब्रह्मचर्यस्खलने कृतप्रायश्चित्तस्यैव विवाहाधिकार इति
बोधयितुम् । अन्यथाऽनधिकारिणा कृतेनापि विवाहेन भार्यात्वानुत्पत्तेः । " इति ।

एवं च असपिण्डत्वासगोत्रत्वादिविशेषणानामिव पुंस्त्वरूपविशेषणस्यापि विवक्षितत्वेन
तादृशकर्तृविशेषविशिष्टकर्मविधेराश्रयणात्तादृशकर्तृविशेषस्यैव विवाहकर्माधिकाराच्च तदतिरिक्तेनान-
धिकारिणा कृतेनापि विवाहेन न भार्यात्वोत्पत्तिरिति क्लीबत्वपातित्ययोर्दायनिमित्तस्वत्वातिरिक्तस्वत्व-
नाशकत्वे तथाविधस्वत्वोत्पत्तिप्रतिबन्धकत्वे च मानाभावादिति वचनं साहसमात्रमेव । क्रयविक्रया-
दिभिः क्लीबपतितयोः स्वत्वोत्पत्तिस्तु तदधिकारबोधनादेव । न ह्येकत्राधिकार इति सर्वत्रासावप्रति-
हतप्रसरः । न हि प्रतिग्रहेण ब्राह्मणस्य स्वत्वमिति क्षत्रियादेरपि । वाग्दत्तायामुत्पन्नमपि प्रतिग्रहीतृ-
स्वत्वं दातृनुशयान्नश्यतीति तु विधवोद्वाहशङ्कासमाधावपि संप्रतिपन्नमेव । तादृशस्वत्वनाशे च प्रति-
ग्रहीतृदोषज्ञानं सहकारीत्यत्रापि नास्माकं विप्रतिपत्तिः । तच्च ज्ञानं दानोत्तरकालेऽपि जायमानं

यथा क्लीबादिस्वत्वनाशप्रयोजकम्, तथा विवाहोत्तरमपि दात्रनुशयोत्पादकत्वात्तथैव स्वत्वं नाशयेदित्येवाभिदधाम:। यत्तु सप्तपद्युत्तरं देवानां दातृत्वात्तेषां च सर्वज्ञत्वेनानुशयासंभवात्तदा जातमपि प्रतिग्रहीतृदोषज्ञानं न क्लीबादिस्वत्वनाशकमिति।

तत्रैवं विचार्यते यद्देवकर्तृकदाने मनुष्यकर्तृकदानस्यापेक्षा वर्तते न वा। नो चेदपेक्षा मनुष्यकर्तृकदानस्य विवाहानङ्गत्वापत्तौ "पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति" इति ल्यबन्तश्रुतिव्याकोपः। पित्रादिकर्तृकदानविधेः सर्वथा वैयर्थ्यप्रसङ्गश्च। न च स्वयं वरवदत्रापि विना तद्दानं विवाहसिद्धिः। सर्वथा मनुष्यकर्तृकदानस्यानङ्गत्वे स्वयंवरविधेरपि वैयर्थ्यप्रसङ्गात् विवाहस्यैव स्वयंवरत्वापत्तेः। अतश्चागत्या पित्रादिकर्तृकदानं विवाहाङ्गमित्यभ्युपेयम्। अयमेव स्वयंवरविवाहयोर्विशेषः। एवं च मनुष्यकर्तृकदानपूर्वकोद्वाहस्थले दात्रनुशयजन्यप्रतिग्रहीतृस्वत्वनाशे तादृशदानमूलकदेवकर्तृकदानेऽपि तन्नाशः स्यात्। मनुष्यकर्तृकदानविशिष्टदेवकर्तृकदानस्यैव विवाहप्रयोज्यस्वत्वोत्पादकत्वमेवमभ्युपेयं पूर्वोक्तल्यबन्तश्रुत्या। तथा च विशेषणाभावप्रयुक्तविशेष्याभावस्य प्रतिग्रहीतृदोषज्ञानसहकृतदात्रनुशयस्थले सत्तायां कथं केवलदेवकर्तृकदानेन स्वत्वसिद्धिः। यत्तु दोषाभासनिरासतिलके न वैवाहिकस्वत्वे सोपधिकत्वम्, उपधिर्हि न केवलं यदिच्छाधीना दानेच्छा सः, अपि तु यस्य दानेच्छाकारणीभूतेच्छाविषयस्याभिसंधीयमानस्य संप्रदानं स्वस्वत्वोत्पत्तिस्थितिप्रयोजकत्वं दात्रिच्छावशादङ्गीकुर्यात्सः। न हि विवाहे वरो यद्यहं धर्मप्रजोत्पादनयोग्यताविशिष्टो न भवामि भविष्यामि वा, तर्हि नेयं ममेत्यङ्गीकुरुते, येन क्लैब्याभावादेरुपाधित्वं स्यात्, इत्युक्तम्। तत्रैवं वदामः कः खलु धूर्तः असतीमपि योग्यतामाविष्कुर्वाणश्छलादेव प्रवृत्त एवमङ्गीकुर्यात्। एवमपि क्रियमाणो विवाहसंस्कारः स्वत्वमुत्पादयेच्चेदनधिकारिणा क्रियमाणः क्रयविक्रयादिरपि स्वत्वमुत्पादयेत्। तथा च शास्त्रव्याकोपः। यथाह मनुः—

> अस्वामिना कृतो यस्तु दायो विक्रय एव वा।
> अकृतः स तु विज्ञेयो व्यवहारे यथा स्थितिः॥ मनुः ८।१९९

एवं च अनधिकारिकृतस्य क्रयादिव्यवहारस्य यथा अकृतत्वम्। एवं विवाहस्याप्यनधिकारिकृतस्यासिद्धिरेव। तदेवमनधिकारिकृतस्य सर्वस्यापि कर्मणो निष्फलत्वेन तादृशविवाहस्यापि कन्यागतस्वत्वोत्पादकत्वं न सिध्यति।

किंच यदि नाम सर्वथोढायाः पुनरुद्वाह एव नानुशिष्टः स्याच्छास्त्रेण, शिष्टस्य च वाग्दानान्तरस्य वाग्दत्तायाः पुनरुद्वाहस्यैव निषेधः कर्तो "ऊढायाः पुनरुद्वाहम्" इत्यनेन वक्तव्यः। तथा च अन्यस्य थोढायाः वाग्दानस्यैव नाभिहितम्। तथा चेदानीं प्रकृतस्य वाग्दत्तायाः पुनरुद्वा-

हस्य सर्वथाऽधर्म्यत्वमेवेत्यपि प्रेक्षावद्भिः समालोचनीयम्। अस्मन्मते तु पूर्वोक्तरीत्या प्राप्तस्य पुनर्विवाहस्यैव निषेधः कलाविति अधर्मबहुले करालेऽस्मिन् कलिकाले कन्यादानाधिकारिभिर्जागरूकैश्छलमोहलोभाद्यनादृत्यैव कन्या देयेत्येवमर्थमेव तादृशविवाहः कलौ निषिद्ध इति सिध्यति। कलिवर्ज्यप्रकरणप्रामाण्य तु प्रमाणप्रतिबिम्बे विवेचितमेव तत एवाऽऽलोचनीयम्। एतादृशतात्पर्याभावे तु कलौ निषेधोऽयमप्राप्तिपूर्वक इति वैयर्थ्यमेवाऽऽवहेत्।

नन्वेवं " यद्यर्थिता स्याद्दारैस्तु " इत्यादिवचनाना का सगतिरिति चेदत्र ब्रूमः। इदं हि वचनं दायभागग। दायधनलोभेन यथाकथचित् सपन्ने विवाहे पश्चाच्च नियोगेन समुत्पन्न क्षेत्रज विषयीकरोति। तत्र चाऽऽदौ लोभाद्यधर्ममूलकत्व विवाहस्य पश्चाच्चाधर्म्यनियोगमूलकत्व क्षेत्रजस्य तन्मूलकत्व दायभागस्येति श्रौतविवाहविधिविरोधात् हेतुदर्शनाच्च सर्वथाऽप्रमाणमेव। स्थितस्य गतिश्चिन्तनीयेति न्यायेन व्यवहारस्थित्युपयुक्तमिति मन्यामहे। राक्षसपैशाचादिविवाहवत्। एवमेव पतितविषये। पतितो हि विवाहकाले पातित्यमपह्नुवानः पाणि गृह्णीयाच्चेत्कन्यायास्तर्हि पातित्यज्ञानानन्तर कन्यामाच्छिद्य तस्याः पुनश्च विवाहसस्कारो भवितुमर्हति। एतत्सर्वममत्या सवृत्ते विवाहे। तादृज्ञानपूर्वक तु तादृशे विवाहे राजाज्ञयैव तस्य निवृत्तिर्यदि राजशासन धर्मानुबन्धि स्यात्। तादृशराजशासनाभावे तु उभयोरपि वरवध्वो समतिश्चेदगत्या तादृशविवाह. समत एवेत्यभ्युपेयम्। यत्र च राष्ट्रे न राजशासन धर्मानुबन्धि तत्रैतादृशगतानेन राष्ट्रनाश एवेति निश्चप्रचमेव। तथा च मनुः—

यत्र त्वेते परिध्वंसाज्जायन्ते वर्णदूषकाः।
राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति॥ १०।६१॥ इति

एतेन राष्ट्रोपयोगिसुप्रजाविवृद्धये राजदण्डेन वर्णसकरो निवारणीय इति कर्तव्यतया सिध्यति। राजदण्डस्य निरर्गलत्वे तु मात्स्यन्यायोऽप्रतिहतप्रसर इति निश्चप्रचमेव। एतादृशराजदण्डप्रतिरोधस्तु ब्राह्मणायत्त एवेत्यपि मनसि कर्तव्य विशेषतो ब्राह्मणैः। यथाऽऽह मनु.—

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः।
ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम्॥ ९।३२०

इति। अत्र ब्राह्मणानिति वेदप्रतिपादितमानवधर्मोपलक्षणम्। ब्रह्मेति ब्रह्मवर्चसोपलक्षणम्। एतदभावे एवेदानीं निर्धर्मिकराजदण्डो जोधुष्यते। फलतस्तु अर्थकामप्राधान्य प्रजासु प्रसरति। येन अर्थकामविषयकमनुशासनमपि तृणाय मत्वा शिश्नोदरपरायणत्व प्रजाना दरीदृश्यते। न ह्रीदानीमलूक्षा धर्मकामा ब्राह्मणा ब्रह्मवर्चससपन्ना दरीदृश्यन्ते व्यवहारे। अत एवायमनर्थ इति सुविशदमेव। फल च राष्ट्रनाश इति तु नापह्नोतु शक्यम्।

तदेवं सपिण्डत्वसमानार्षगोत्रजत्वपातित्यक्लीबत्वादिदोषदुष्टेन वरेण कृतोऽपि विवाहविधिर्न भार्यात्वमुत्पादयितुं समर्थ इति तादृशस्थले क्षतयोनित्वदोषोत्पत्तेः। प्राक् कन्याया निर्दुष्टवरेण सह पुनश्च विवाहसंस्कारो भवितुमर्हति। योनिक्षतौ त्वनुशयेपि वरवध्वोः पातित्यमेव न पुनः संस्कार इति "मातृवत्पालयेदेनाम्" इत्यादिवचनानि एतद्विषयपराणीति सर्वं सुस्थम्। अयं च पुनर्विवाहो लोकाभिशस्तिमूलककालिवर्ज्यप्रकरणगतेन "ऊढायाः पुनरुद्वाहम्" इति वाक्येन निषिद्धः कलौ। एवमपि कलिवर्ज्यप्रकरणप्रामाण्यपद्धत्या लोकाभिशस्त्यभावेऽधर्मप्रचारासंभवे चानुष्ठातुं शक्यत एव वाग्दत्तमनोदत्तकन्याविवाहवदिति विज्ञेयम्। अधिकं चात्र विचारणीयं परिनिष्ठितैः सुधीभीरित्यल्पज्ञतया सप्रश्रयं निवेद्यते।

## ( विधवायाः पुनरुद्वाहविचारः )

तदेवं सपिण्डत्वादिदोषसत्त्वे कन्यायाः पुनरुद्वाहो विचारितः। एवमेव विधवायाः पुनरुद्वाहो भवितुमर्हति न वेत्यप्यालोचनीयम्। कथं विप्रतिपत्तिः। परस्परविरुद्धवचनद्वयप्रामाण्यात्। के ते वचने। मानवधर्मशास्त्रीये। यथा चाह मनुः—

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः।
नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः ॥८।२२६॥
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्।
न विवाहविधावुक्तं विधवावेदनं पुनः ॥९।६५।

अत्र च कन्यास्वेव पाणिग्रहणमन्त्राणां प्रतिष्ठां प्रतिपाद्य विवाहविधौ विधवावेदनं नैवोक्तमिति स्पष्टं प्रतिपादयता विधवाविवाहः सर्वथा निषिध्यते।

सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥९।१७५

अनेन चाक्षतयोन्याः पुनःसंस्कारयोग्यता प्रतिपाद्यमाना विधवायाः पुनरुद्वाहं गमयति। तस्माद्विप्रतिपत्तिः। विधवायाः पुनरुद्वाहो भवितुमर्हति न वेति। किमत्र न्याय्यम् भवितुमर्हतीति। कथम्। वचनात्। किं तद्वचनम्। पाराशरीयम्। तथा च पराशरः—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ इति ॥

अपि नाम क्लीबत्वादिदोषवन्मरणस्यापि भार्यात्वानुत्पादकत्वं वा समुत्पन्नभार्यात्व-विनाशकत्वं वा । नाऽऽद्यः जीवतो भार्यात्वोपगमात् । भार्यात्वप्रयोज्याग्न्याधानाद्यनुष्ठानदर्शनात् । भार्यात्वविनाशकत्वमथाभिप्रेयते । दृष्टान्तहानिः । क्लैब्यादिषु भार्यात्वानुत्पत्तेरनुपदमेव प्रतिपादितत्वात् । ध्वंसो हि प्रतियोगिसापेक्षः । प्रतियोगी च भार्यात्वम् । तदभावे ध्वंसस्याप्यभावः क्लैब्यादिषु इति न दृष्टान्तः संप्रतिपन्नः । अपि तु विषमः । अथ नैव विषमो दृष्टान्तः । कलौ क्लीबादिदोषसत्त्वेऽपि भार्यात्वाभ्युपगमात् । कलौ पुनर्विवाहस्य निषेधात् । एवं तर्हि पाराशरीयवचनप्राप्तस्यापि पुनर्विवाहस्य निषेधः । न निषेधः । कलिवर्ज्यस्य पुनः प्रसवार्थं पाराशरीयवचनप्रवृत्तेः । कृष्याद्यापद्वृत्तिनिषेधप्रतिप्रसववत् । अथ कलिवर्ज्यप्रकरणमेव पाराशरीयवचनबाधकम् । अथ पाराशरीयवचनं कलिवर्ज्यबाधकम् । किमत्र सांप्रतम् । पाराशरीयवचनं कलिवर्ज्यबाधकम् । स्मृतेः प्रत्यक्षश्रुतिमूलकत्वात् । ननु तर्हि कलिवर्ज्यप्रकरणमूलभूतास्वर्ग्यमिति स्मृतिवचनमेव पराशरस्मृतिबाधकं स्यात् । न स्यात् पराशरवचनस्य श्रुतिमूलकत्वात् । अस्वर्ग्यमित्यस्य लोकाभिशास्तिमूलकत्वात् । अस्तु तर्हि लोकाभिशास्तिमूलको धर्मसंकोचः प्रत्यक्षश्रुतिमूलकः । दृष्टार्थत्वात् । दृष्टार्थानामपि राजधर्माणां । श्रुतिमूलकत्ववत् । विषमो दृष्टान्तः । अदृष्टोपसर्जन-त्वाद्राजधर्माणाम् । अत्राप्यनुष्ठातुर्लोकाभिशस्तिप्रयोज्याधर्मपरिहारोऽस्तु अदृष्टः । लोकाभिशस्तेर्धर्मा-धर्मयोरप्रामाण्यात् । केषामभिशस्तिः । धर्मज्ञानां वाऽधर्मज्ञानाम् । अथ धर्मज्ञानां चेन्नाभिशस्तिः । धर्मस्य चोदनैकगम्यत्वेन चोदनासत्त्वे च तेषामभिशस्तेरसंभवात् । अथापि श्येनादिवत्संभवेत् । न संभवेत् । अनर्थत्वेन अधर्मत्वात् श्येनस्य । न विधिविषयत्वेऽधर्मत्वम् । फलस्यानर्थत्वेऽपि न विधिविषयत्वम् । यत्र चांशे विधिर्न तत्र धर्मज्ञानामभिशस्तिः । एव तर्हि किमायातम् । एतदेवाऽऽयातम् । यद्विधवाविवाहस्य विधिविषयत्वेन धर्मज्ञानामभिशापाभावः । अथाधर्मज्ञानाम-भिशस्तिः । नासौ धर्माधर्मप्रमाणभावमर्हति । मनुवचनानि तु युगान्तरपराणि । " कलौ पाराशराः स्मृताः " इति स्मृतेः । तत्सिद्धं मरणस्य भार्यात्वविनाशकत्वेन विधवापुनर्विवाहस्य धर्म्यत्वमिति ।

अत्रोच्यते न सिद्धं मरणस्य भार्यात्वविनाशकत्वम् । पुनर्विवाहाकरणे भार्यात्वस्य तादव-स्थ्यात् । अन्यथा हि मरणोत्तरक्षण एव भार्यात्वापगमे तत्प्रयोज्याशौचदायादिव्यवस्थाया अनुप-पत्तिः स्यात् । अतश्च पुनर्विवाहेनैव पूर्वपतिनिरूपितभार्यात्वनिवृत्तिरेष्टव्या । सा चानुपपन्ना । एक-निरूपितभार्यात्वसत्त्वेऽपरनिरूपितभार्यात्वसंपादकसंस्कारासंभवात् । अतश्च संस्कारात्पूर्वमेव पूर्ववरनिरू-पितभार्यात्वनिवृत्तिरभ्युपेया । सा च निवर्तकाभावादनुपपन्ना । तथा च पुनःसंस्कारेण पूर्वभार्यात्व-निवृत्तिः, तन्निवृत्त्या च पुनःसंस्कार इत्यन्योन्याश्रयः । ननु तर्ह्यस्तु पुनःसंस्क्रियमाणस्त्रिया इच्छावशात्तन्निवृत्तिरिति चेद्विवाहसंस्कारवैयर्थ्यापत्तेः । यदीच्छैव पतिपत्नीसंबन्धनियामिका । किमर्थं तर्हि विवाहसंस्कारः । किंच जीवत्यपि पत्याविच्छावशात् संबन्धनिवृत्तिरभ्युपेया स्यात् ।

विनिगमकान्तराभावात् । एवं चेच्छाया एव पतिपत्नीसंबन्धगमकत्वे समाजसुस्थितेः सुप्रजस्त्वस्य च सर्वथा लोपप्रसङ्गेन पशुतैव समाजस्य संपादिता स्यात् ।तथा च मानवतां पुरस्कृत्य समाजसुस्थितिसंपादनार्थं प्रवृत्तानां विधवाकामुकानामिदं मतं मानवानां पशुतामेवाऽऽपादयतीति

" विनायकं प्रकुर्वाणो रचयामास वानरम् "

इत्याभाणकं सार्थकी करोतीति सुष्ठु समर्थितः शास्त्रार्थः । तस्मादिदं पाराशरीयवचनमन्यथा नेयम् । पूर्वपक्षोक्तः शास्त्रार्थस्त्वनुपपत्त्यैव हेयः । न हि कलौ पाराशराः स्मृता इतिवचनेन पराशरोऽप्यधर्मानुष्ठानमनुजानाति । किंतु धर्मक्रियास्वेव कासांचित्सुकराणामनुज्ञा पराशरेण विशदीक्रियते । युगपरत्वे धर्मान्यत्वं ह्यशक्तिमूलकसंकोचरूपमेव । न त्वधर्मस्य धर्मत्वं धर्मस्य वाऽधर्मत्वम् । अतश्च आपद्वृत्तित्वेन विहितस्यैव कृष्यादेरभ्यनुज्ञानम् । न तु म्लेच्छान्त्यजादेर्दास्यम् । एवं च कलिवर्ज्यत्वेन परिगणिताप्यापद्वृत्तिः कृष्याद्यंशेऽनुज्ञायते । नैतावता कलिवर्ज्यप्रकरणबाधकत्वं पराशरस्मृतेः । कलिवर्ज्यप्रकरणस्य लोकाभिशस्तिमूलकत्वात् । लोकाभिशस्तेश्च स्मृत्यैव धर्मसंकोचे प्रामाण्यबोधनात् । अतश्चेदं प्रकरणं स्मृतिव्याख्यानरूपं स्मार्तमेव । न हि परस्परविरुद्धस्मृतीनामन्योन्यबाधकत्वम् । तथा सति समबलत्वेन विकल्प एव स्यात् । सामान्यविशेषरूपेण बाधकत्वे तु विशेषातिरिक्ते सामान्यप्रवृत्तिः केन वार्यताम् । न च तथा सामान्यविशेषभावः पुनरुद्वाहविषये विधिनिषेधवचनयोर्भवितुमर्हति । विधेः सर्वथाऽनुपपन्नत्वात् । ननु किमिव हि वचनं न कुर्यात्, नास्ति वचनेऽतिभार इति विधिवचनमेव पतिमरणस्य भार्यात्वनिवृत्तिं गमयतीति वाच्यम् । दायाशौचाद्यनुपपत्तेरनुपदमेव प्रदर्शितत्वात् । पराशरेणापि दायादिकमनुमन्यत एवानुद्वाहे विधवायाः । न हि अक्षरार्थमनुसृत्य धर्माधर्मज्ञानं भवति । अतश्चाक्षरार्थोऽप्यनुपपन्नोऽन्यथा नेयः । तथा च मनुः—

> प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
> त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥१२।१०५
> आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
> यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ १२।१०६

इति । तथा च समुत्पन्नस्य पतिपत्नीसंबन्धस्य विच्छेदे किमपि साधकं न पश्यामः । अत एव मनुः—

> न विवाहविधावुक्तं विधवावेदनं पुनः ॥ इति ।
> पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
> पतिलोकमभीप्सन्ती नाऽऽचरेत्किंचिदप्रियम् ॥ ५।१५६
> कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।

न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥५।१५७
नान्योत्पन्ना प्रजाऽस्तीह न चाप्यन्यपरिग्रहे ।
न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ॥ ५।१६१
न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते ।
इति धर्मं विजानीमः प्राक् प्रजापतिनिर्मितम् ॥ इति च।

अतश्च पाराशरीयं वचनं वाग्दत्तापरमेव मन्तव्यम् । युक्तं चैतत् । वाग्दत्ताया मनोदत्तायाश्च पुनर्भूत्वं स्मर्यमाणं कलिवर्ज्यप्रकरणेन

"दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च"

इति पुनर्दाननिषेधेन दृढीकृतमनेन वचनेन बाध्यते । अतश्च कलौ वाग्दत्ताया मनोदत्तायाश्च अभिमतपतिमरणानन्तरं परस्मै पुनर्दानं भवति नापि पुनर्भूत्वं तयोरित्येव पराशरवचनस्य तात्पर्यमिति मन्यामहे । सा चेदक्षतयोनिरिति मानवं नु पुनर्भूपरमेव । पुनर्भ्वाश्च न दानं न संस्कारः । किंतु कामप्राबल्यादभिमतान्यभर्तृस्वीकार एवेति तस्यास्तत्पत्युस्तत्संतानस्य चाधर्म्यत्वम् । अत एव श्राद्धा-दिषु तन्निषेधः । एतेन नष्टे इति पदमपि व्याख्यातम् । नाशो हि अशक्योपलम्भप्रवृत्तिः । सापि विवाहोत्पन्नभार्यात्वनिवर्तिका न भवति । पूर्वोक्तानुपपत्तेः । तदगत्या वाग्दत्तापरत्वमेव सांप्रतम् । तथैव संन्यासोऽपि । क्लीबत्वपातित्ये तु न भार्यात्वोत्पादके इति तत्र पुनर्विवाहः । उक्तपूर्वं चैतत् । एवं च यत्र विवाहे संवृत्तेऽपि तस्यानिष्पत्त्या पुनर्विवाहः । तत्र वाग्दानानन्तरं पुनश्च संस्कारः स्यादिति किमु वक्तव्यम् । अतश्च सिद्धं न विधवायाः पुनर्विवाह इति । एवं चेदं पाराशरवचनं वाग्दत्तापरमिति सर्वनिबन्धसमतमेव । पराक्रान्तं चात्र सूरिभिर्बहुश इति नाधिक वितन्यते ।

यत्तु काममूलकबहुभार्याकत्वमिव पुंसां स्त्रीणामपि बहुपतिकत्वं भवत्विति केषांचिदबला-वैधव्यदारुणदुःखपरिपीडितानां वस्तुगत्या समानाधिकारमुद्घोषयतां स्त्रीपुंसयोः सहृदयानां सदुक्तिः । तत्रेदमालोचनीयम् । कोऽयं समानोऽधिकार इति । समाजसुस्थितिसंपादको वा स्वेच्छापूर्त्यनुकूलो वा । न द्वितीयः । कुत्रापि स्वेच्छापूर्त्यनुकूलसमानाधिकारः पुरुषस्यापि न संभवति । न हि पुरुष इत्येतावतैव पुरुषाणामपि समानाधिकारः शास्त्रगोचरः । यत्र त्वहिंसादिषु सार्ववर्णिकधर्मेषु समानाधिकारः, स तु स्त्रीपुंससाधारण इति न तत्र विशेषप्रतिपत्तिः । यत्तु बहुभार्याकत्वं पुरुषस्य न तत्र पुरुषत्वमेव प्रयोजकम् । न वा कामपूर्तिः । किंतु प्रजातन्तुं मा व्यवच्छेत्सीरिति प्रजातन्तु-व्यवच्छेदनिषेध एव । नायं निषेधः स्त्रियमधिकरोतीत्युक्तं पुरस्तात् । ऋणत्रयापाकरणातिभारोऽयं पुरुषस्यैवेति ऋणत्रयचर्चायाम् । यत्र तु सत्यपि संताने पुनश्च काममूलकः परिणयः पुरुषेण क्रियते । तत्रापि शास्त्राभ्यनुज्ञा न काममूलिका । किंतु सुप्रजस्त्वमूलिकैवेत्यप्युक्तं पुरस्तात् । सर्वत्र

हि शास्त्रानुशासनं कामादिनियमनार्थमेव न तु कामपूरणार्थम्। कामस्य दुष्पूरत्वात्। यथाऽऽह मनुः—

कामात्मता न प्रशस्ता नचैवेहास्त्यकामता। इति।

एवं चाप्रशस्तकामपूर्तिपरत्वं शास्त्रस्य कल्पयतां शास्त्राज्ञानमेवाविर्भवति। अतश्च स्वाभाविककामादिनियमनमेव शास्त्रविषयः। तथा च शास्त्रानुसारिकामादि निषेव्यं न तदन्यदिति शास्त्राकूतम्।

अथ समाजसुस्थितिसंपादकश्चेत्समानाधिकारोऽभिमतः। तत्र समाजसुस्थितिर्व्याख्येया। किं व्यक्तीनां कामादिपूर्तिरेव समाजसुव्यवस्था। तदा तु पशूनामिव स्त्रीणामपि परीक्ष्यैव कामपूर्तिर्निश्चेतुं शक्येति संभोगपूर्वकमेव परिणयनं विधातव्यम्। तत्रापि कालगत्या वा निसर्गतो वा यावदिष्टं सुखमाधातुमसमर्थयोः स्त्रीपुंसयोः पुनश्च विवाहविच्छेदः स्वीकर्तव्यः। तदन्तरे समुत्पन्नसंतानस्य पोषणातिभारः पुरुषेण वा दण्डसंस्थया वा वोढव्यः। यत्र तु संतानपोषणानुकूलनिसर्गव्यवस्था, सा स्त्री स्वातन्त्र्यसमानाधिकारादिना व्यक्तिगतकामपूर्तये विच्छेदनीयेत्यहो समाजसुस्थितिः। किं च यस्याश्च नैकेन पत्या कामपूर्तिस्तया पुरुषवदेव युगपदपि भर्तृद्वयं भर्तृत्रयं वा संपादनीयं स्यात्समानाधिकारवादिमते। तदपीदं चेत्कृतं विवाहेन। स्वैराचारस्यैवापरमभिधानं समाजसुस्थितिरित्यलं पल्लवितेन। अतश्च समाजसुस्थितिर्नाम सर्वान्तर्यामिपरमेशाराधनानुकूलबुद्धिकर्मशक्तिमत्संतानपरम्परानिर्माणमित्येवोरीकर्तव्यम्। तदर्थं च व्यक्तिवासनानियमनमत्यावश्यकमिति नैव विधवानां पुनरुद्वाहाधिकारः। अपरं च शूद्राणां पुनर्भूस्वीकारस्तावदप्रतिहतः। येषां शिरसि पुनरयं राष्ट्रसंरक्षणातिभारस्तेऽपि द्विजा यदि पुनर्भूपरिग्रहं क्षेमाय मन्येरन्। तदा तु शास्त्रमेव दत्तजलाञ्जलि स्यादिति शास्त्रमनङ्गीकुर्वतां म्लेच्छानामेवैतादृशाः प्रलापा इत्यलं विस्तरेण। सर्वथा तु विधवानां न पुनरुद्वाहाधिकारः शास्त्रसंमत इति सिध्यति।

तदयं निर्गलितोऽर्थः— सुप्रजस्त्वमेव विवाहसंस्कारप्रयोजकम्। तच्च शास्त्रानुशिष्टविशेषणविशिष्टस्त्रीपुंसयोर्विवाहे। नतु काममूलकयथेष्टविवाहे। एतादृशविवाहेनैव पतिपत्नीभावः। नान्यथा। छलबललोभादिभिरनधिकारिणा कृतोऽपि परिणयो न पतिपत्नीभावसंपादक इति तत्र संतानोत्पत्तेः पूर्वमाच्छिद्य कन्यां पुनश्चान्येन वरेण विवाहसंस्कारः। संतानोत्पत्तेः परं तु सत्यनुशये वरस्य परिपालनाधिकारः। स्त्रीपुंसयोस्तत्संतानस्य च जातिपातित्यम्। तथैव पुनर्भूसंस्कारेऽपि। सप्तपद्याः प्रागन्यस्मै दत्ताऽप्यपरस्मै दातुं योग्या। मरणं तु न जातस्य विवाहस्य विच्छेदकम्। अतश्च विधवाया मृतवरनिरूपितपत्नीत्वं कदापि नापैति। विवाहश्च पत्नीत्वापादकः सप्तपद्यन्तकर्मकलाप एव। दानं च विवाहाङ्गम्। अतश्च संपन्ने विवाहे पुनर्भूसंस्कारप्रचारश्चेद्राष्ट्रगुप्तये दण्डसंस्थया निवारणीयः।

पुरुषस्यापि सति पुत्रे वानप्रस्थसमयानन्तरं भार्यान्तरसंपादनमपि काममेवाऽऽविष्करोतीति तत्रापि कामनियमनं कर्तव्यम् । यदि तु न स्यादेव योग्यता आश्रमान्तरस्य, तदा

"अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः"

इति प्रत्यवायपरिहाराय गृहस्थाश्रमे नियोजनं विवाहान्तरेण कर्तव्यम् । तादृशावस्थायां तु द्रव्यसंपादनाधिकारो निरोद्धव्यः । येन धर्मानुष्ठानश्रद्धा सुविशदा भवेत् । एतत्सर्वं सत्यां धर्मश्रद्धायाम् । सा च दण्डसंस्थायत्ता । अत एवोक्तं

चातुर्वर्ण्याश्रितो लोको राज्ञा दण्डेन पालितः ।
स्वधर्मकर्माभिरतो वर्तते स्वेषु कर्मसु ॥
व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः ।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ॥

एवं च दण्डो हि धर्मानुसार्येव लोकस्य योगक्षेममावहतीति सिध्यति । स च धर्मस्त्रयीमूलकः । सा च त्रयी ब्रह्मवर्चसमूला । तच्च ब्राह्मणाधीनम् । अतश्च यत्र राष्ट्रे न ब्रह्मवर्चससंपन्ना ब्राह्मणाः न वा तदनुकूलो राजदण्डः । तद्राष्ट्रं सर्वथा नश्यत्येव । यथा चाऽऽह मनुः—

नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते ।
ब्रह्म क्षत्रं च संसृष्टमिह चामुत्र मोदते ॥ इति ।

न ह्यण्वस्त्राद्यधीना जगतः सुस्थितिः । प्रतिपक्षस्य यावदस्त्रलाभमेव सा भासमाना पुनश्च जगत्क्षोभायैव भवति । ब्राह्मणास्त्रं तु लब्धं प्रतिपक्षभावमेव विनाशयतीति तदस्त्रमेव जगत्क्षेमावहम् । अत एवाऽऽचार्यपादाः—

ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः । तदधीनत्वाद्वर्णाश्रमधर्माणामिति

मनुरपि—

ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥१।९९ इति ।

इदानीं ब्राह्मणा एवेन्द्रियार्थप्रसक्ता अर्थकामयोरेव श्रेयस्त्वं मन्यमाना धर्मस्य विषमताविषमयत्वमाकलयन्तः स्वैराचारमेव समानतामुद्घोषयन्तो न देवता मानयन्ते, न वेदानधीयते, न शास्त्रार्थानवलोकयन्ते, न नीतिमभिमन्यन्ते, नाऽऽचारानभिनन्दयन्ते न वृद्धान् गणयन्ते, न कुलमीक्षन्ते, न शीलं परिचाययन्ते, न विद्यामाकलयन्ते, न योगं परीक्षन्ते, न क्षेममपि विजानते, न जातिधर्मानवलम्बन्ते, न देशधर्मान् वा ग्रामधर्मान् वा समीक्षन्ते, शमदमादीनशक्तधर्मान् प्रलपन्ति, दानं पौरुषापाकरणमिति मन्यन्ते । सर्वथा तं मानयन्ति तमभिलपन्ति तस्मै वितरन्ति

तमभ्यन्तरीकुर्वन्ति तत्र स्निह्यन्ति, तत्र दयालुतां दर्शयन्ति, तमाराधयन्ति, तमभिमुखीभवन्ति, तमेव प्रणमन्ति, तमेव कृतार्थमाकलयन्ति, तमेव पुरुषार्थभाजमभिवदन्ति यो हि येन केन प्रकारेण परार्थमवलुप्य स्वेच्छाविहारी धर्मकञ्चुकप्रावारी अर्थमूलराज्यप्रलोभनकारी स्वशास्त्रापन्हवपूर्वकपरशास्त्रविहारी कामहेतुकमतपुरस्कारी । सर्वथा सर्वमतखलीकारकुशलाः शिश्नोदरपरायणाः किल ब्राह्मणा एव जायमाना दरीदृश्यन्त इति कमन्यं शरणं यायाद्वराकीयं धर्मसंस्कृतिः ।

यस्याङ्के शिर आधाय लोकः स्वपिति निर्वृतः ।
स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः ॥

इत्युक्त्यनुसारेण स्वपराज्ञानमूलपरप्रत्ययनेयबुद्धयो हि ब्राह्मणास्तर्हि किमपराद्धं क्षत्रियादिभिरिति सुदूरमालोचनीयं ब्राह्मणैः । सर्वथा न कंचन न खलीकरोति खल्वयं करालः कलिकाल इत्यन्तः सर्वान्तर्यामिणः परमेशस्यैवेदमिच्छाकौतुकमिति विश्वसिमः । अतश्च स एवान्तर्याम्यस्मानस्मात्कुपथात्परावर्त्य जगत्क्षेमोदये वैदिके पथ्यभिमुखीकरोत्विति प्रार्थनैव श्रेयस्करी ।

सर्वात्मा सर्वभावेन सर्वार्थकुशलः प्रभुः
प्रीयतामनया कृत्या जानकीजानिरच्युतः ॥ १ ॥
नेत्रर्षिवसुभूशाके माघे शुक्ले विधोर्दिने
त्रयोदश्यां समाप्तोऽयं धर्मादर्शः सुमङ्गलः ॥ २ ॥
जानन्त एव जानन्तु न दोषेभ्यो बिभेम्यहम्
अगुणानां गुणोक्तिस्तु हृदि शल्यायते मम ॥ ३ ॥
क्वाहं मन्दमतिः स्वल्पः क्व धर्माब्धिः सुदुस्तरः
बलादेव नियुक्तोऽस्मि धर्मशास्त्रविलोडने ॥ ४ ॥
विद्वद्भिः कृपया शोध्यो विचार्य च पुनःपुनः
शास्त्रतत्त्वं कथमपि जनेषु विशदं भवेत् ॥ ५ ॥
इति दीर्घतमायासः स्वीकृतोऽयं मया मुदा
अविशुद्धं विशुद्धं वेत्यवधत्तां विपश्चित्सु ॥ ६ ॥
संतोषः परमो मे स्यान्मन्येऽहं न संशयः
पाठकास्तावता भूयासः शुभ्रबुद्धिविकाशकाः ॥ ७ ॥
नान्ते अंशेन वा निन्देदिति धर्मो व्यवस्थितः
नानुक्तं किंचिदस्त्यत्र न वा किंचिदचोदितम् ॥ ८ ॥

आदर्शे प्रतिबिम्बं तु वैपरीत्यं दधाति चेत्
नात्र दोषोऽस्ति बिम्बस्य नैर्मल्यगुणयोगतः ॥ ९ ॥

ये तु विख्यातनामानः शास्त्रेषु परिनिष्ठिताः
तेभ्यो नमोऽस्तु सततं किमन्यत् प्रवदामि तान् ॥ १० ॥

प्रचोदितो बलादेव केनाप्यन्तःशरीरिणा
प्रवृत्तोऽहं न पाण्डित्यात् न वा दृष्टफलादपि ॥ ११ ॥

तन्नात्रातीव कर्तव्यं दोषदृष्टिपरं मनः
न निर्दुष्टं जगत्यत्र वस्तुजातं कदाचन ॥ १२ ॥

अन्ते नारायणकवेरिमामुक्तिं विचार्य तु
सभावयामि विदुषो विधातुं त्वन्यदक्षम ॥ १३ ॥

विद्वांसो विदितं हि सर्वमिति नो द्रक्ष्यन्ति मन्दाः पुनः
प्रारब्धाधिकमार्गदर्शनपरिभ्रान्ता विरंस्यन्ति च ।
अन्ये मत्सरिण कथामपिच नो कुर्युः किमेतैः क्षतम्
यन्मद्बुद्धिविशुद्धये रघुपतेर्मोदाय चेदं कृतम् ॥ १४ ॥

योग्यता मानवानां तु बीजरक्तप्रभावतः
पूर्वपुण्यैर्लभ्यतेऽतो वंशशंसनमिष्यते ॥ १५ ॥

( कवेर्वंशवृत्तम् )

आवासो ज्यासुराणां निगमगतिविदां शुद्धचिद्व्रासभाजां
संवासो नीतिभाजामविरतविघसाशाशिनां भूभुजां [१] च ।
आरामः सद्गुणानां शमदमशुचिताद्यात्मतुष्टिप्रदानां
रम्याक्रीडोऽस्ति सह्योच्चशिखरतले शैलराजो मयूरः ॥ १ ॥

उद्घोषो यत्र कल्ये प्रतिनिलयमथो कर्णपूरः श्रुतीनां
शास्त्राणां चापि चर्चा श्रुतिसुखमधुरा छात्रवृन्देष्वजागः
धन्याः पुण्याः शरण्या द्विजगणमणयो यत्र सन्तुष्टचित्ताः
सोऽयं भूक्षेत्रभूतो जगति विजयते ग्राम एको मयूरः [२] ॥ २ ॥

—(१) जहागीरदार. (२) मुल्हेर.

श्रौतस्मार्तविधेयकर्मनिपुणो मान्यो वदान्यः पुरा
सर्वारम्भकरोऽप्यसक्तविषयव्यावृत्तचित्तः प्रभुः।
नित्यानित्यविचारसारकुशलः शाण्डिल्यगोत्रोद्भव
स्तत्राऽऽसीन्निजवंशपद्मतरणिः श्रीलक्ष्मणार्यः सुधीः ॥ ३ ॥

काशीराजार्यवर्यस्तु तत्पुत्रो भुव्यजायत
काशीराज [1] इवाशेषशरणागतवत्सलः ॥ ४ ॥

सोऽयं विद्याविलासः शुचिगुणगणतो दुर्गपालं प्रसाद्य
प्राप्तामात्यास्पदस्तन्नयनिपुणधिया पालयन् प्रान्तलोकम्।
धर्मारम्भैश्च रम्यान् विबुधमणिगणान् नन्दयन् रञ्जयंश्च
निष्टङ्कं निष्कलङ्को रिपुतिमिरमुदस्योदयन्नर्कति स्म ॥ ५ ॥

त्रिवर्गस्य द्वयं तस्य मिथो वैरजिगीषया
अमूताजस्रमात्मानं विना विग्रहमित्यहो ॥ ६ ॥

औरङ्गो दुर्गपालस्तु तत्प्रतापोज्झितप्रभः
ईर्षालुरकृतप्रज्ञश्चिन्तयामास दुर्मतिः ॥ ७ ॥

गुण्डोजिनामाऽप्यपरस्तस्याऽऽसीत्कार्यसाधकः
मन्त्रं चकार तेनासौ काशीराजनिरोधने ॥ ८ ॥

आयव्ययपरीक्षापदेशेन निरुपाधिकः
निरागाः काशीराजस्तु कारायां वै निचिक्षिपे ॥ ९ ॥

विरागः सर्वतस्तत्र काशीराजस्य मानसे
समभूदिह चामुत्र मनःशान्तिकरः परः ॥ १० ॥

क्वेदं निःसत्त्वमात्मीयं क्व दास्यं यवनस्य च
क्षुद्रस्यास्य वराकस्योदरस्य परिपूर्तये ॥ ११ ॥

धिङ् मां विमकलङ्कं वै तृष्णापाशनिपीडितम्
योऽहं क्लेशाविश्रान्तो म्लेच्छाराधनतत्परः ॥ १२ ॥

स्वात्मधर्मसमाराध्यो भगवान् नागशायिनः
विहाय तं नृपाऽऽस्थाऽयं मया नु परितापितः ॥ १३ ॥

(१) काशीविश्वनाथ.

इति जातसुनिर्वेद उष्णीषग्रन्थिमालया
जपन् रघुपतेर्नाम परां निष्ठामगात्पुनः ॥ १४ ॥

दीनानां शं विधाता गतिरगतिमतां पापपुञ्जोपहन्ता
दान्तानां शान्तिदाता रघुपतिरनिशं भक्तकल्पद्रुमोऽसौ ।
निद्रायां दुर्गपालं खलदववदहनं रूपमेत्याभ्यवोचत्
मोच्योऽयं काशिराजो न हि विभवमिदं तेऽन्यथा सत्यमेतत् ॥ १५ ॥

ततः प्रातः समुत्थाय खलोऽसौ गुण्डमन्त्रितः
नैच्छन्मुक्तिं ततस्तस्य नष्टं प्रिय[1]चतुष्टयम् ॥ १६ ॥

सप्तमेऽह्नि समुत्तप्तः शीघ्रं प्रद्रुत्य चाऽऽगतः
गुहाद्वारं समुद्घाट्य ध्यानमग्नं ददर्श सः ॥ १७ ॥

तत्प्रभाहततेजस्कः पश्चात्तप्तः पुनः पुनः
दण्डवत्पतितो भूमावब्रवीत्पाहि मां खलम् ॥ १८ ॥

तदाऽऽर्तरोदनादेव ध्यानभङ्गात्समुत्थितः
ददर्श काशीराजस्तं दण्डवत्पतितं भुवि ॥ १९ ॥
उत्तिष्ठोत्तिष्ठ भूपाल मा विलापं कुरु प्रभो
गतोऽहं कृपया तेऽद्य निर्वेदस्य परां गतिम् ॥ २० ॥

राज्यं प्रशासतस्तेऽद्य कुतो ह्यत्र समागमः
इति पृष्टः सत्तमेन यथावत्समवर्णयत् ॥ २१ ॥

ततः समुत्थाप्य निजेन पाणिना
विधाय वै तस्य मनःप्रसादनम् ।
उवाच वाचं पुरुषावतंसको
जिहीष्व राज्यं परिपालयस्व च ॥ २२ ॥

नाहं न चेमे न ममापि राज्यं
तवैव राज्यं भगवन्नितोऽस्तु ।
दौरात्म्यमेतत्तु मम क्षमस्व
क्षमैकसाराः खलु साधुवृत्ताः ॥ २३ ॥

---

(१) गजः, अश्वः, वेश्या, दूतः, इति प्रियचतुष्टयम् ।

इति विज्ञापितस्तेन स्वाधिकारपरिग्रहे
वान्तान्नमिव तन्नैच्छत् रामदर्शनलालसः ॥ २४ ॥
संतोष्य दुर्गपालं रघुपतिदर्शनसमुत्कचित्तः सः
हरगडकुहरनिलीनो लीनोऽभूद्रामनामजपतपसि ॥ २५ ॥
कतिपयकालापगमे स्वप्ने दिष्टोऽन्तरायहरणं तं
शरणं व्रज गजरदनं स्पृहणं ते तदवलोकनाधीनम् ॥ २६ ॥
आदेशमनुस्मरन्तं जपन्तमन्तस्तमेकदन्तस्तु
प्रत्यक्षमक्षिविषयो वाचं प्रोवाच भवतु तेऽभीष्टम् ॥ २७ ॥
रामानुजाचार्यमनुसंप्रदायप्रवर्तकाः
एत्य गोवर्धनाचार्या उपदेक्ष्यन्ति ते मनुम् ॥ २८ ॥
ततस्तज्जाप्यपरमो न चिरात्त्वं द्विजोत्तम
सीतालक्ष्मणसंयुक्तं शीघ्रं द्रक्ष्यसि राघवम् ॥ २९ ॥
जपात्सिद्धिर्नूनं भवति कलिकाले हि परमा
इति स्वां निष्ठां श्रीगुरुगुणगरिष्ठां स विदधत् ।
जपन्नन्तर्जाप्यं प्रकटवपुषं श्रीगुरुपदं
ददर्शासौ जातः प्रमदभररोमाञ्चिततनुः ॥ ३० ॥

ततः समुत्थाय चिराय पादयोः
प्रमोदभावानतकंधरः कृती ।
पपात चास्वस्थमनाः प्रदर्शयन्
निवेदनं भक्तिमतां यदीप्सितम् ॥ ३१ ॥

गुरुस्तमुत्थाप्य शिरस्यधात्पुनः
दत्वाभयं यन्निजहस्तपङ्कजम् ।
श्रुतौ पुनर्गात्ररसायनं मनुं
येनाऽविरासीच्चिदचिद्विवेकः ॥ ३२ ॥

प्रसन्नवाक्तनुगात्रो नत्वा बद्धाञ्जलिस्तदा
विधायापचितिं भक्त्या काशीराजोऽस्तवीद्गुरुम् ॥ ३३ ॥
गुरुस्तमब्रवीद्वत्स जप भक्त्या परं मनुम्
न चिरादेव त्वद्दृष्टिपथमायाति राघवः ॥ ३४ ॥

गुरुवचसि गरिष्ठां वृत्तिनिष्ठां दधानः
जपतपसि रतोऽसौ योगकाष्ठां प्रपेदे।
इति गलितविकल्पां वृत्तिमासाद्य सद्यः
रघुपतिरपि तस्य प्रादुरासीद्धृदन्तः ॥ ३५ ॥

विलक्ष्यां वृत्तिमाज्ञाय शनैरुन्मील्य लोचने
पुरःस्थितं ददर्शासौ जानकीजानिमच्युतम् ॥ ३६ ॥

चैतन्यानन्यसूर्तिं गुणगणवसतिं रूपलावण्यमूर्तिम्
आर्तानामार्तिहेतिं जगति रघुपतिं भक्तकामैकपूर्तिम् ॥
सीताश्लेषप्रहृष्टिं निजजनसमितौ दत्तवात्सल्यदृष्टिम्
कारुण्यानन्दसृष्टिं पुनरपि पुरतोऽलोचयद्दीप्तघृष्टिम् ॥ ३७ ॥

उल्लासं भक्तिफुल्लप्रमुदितहृदयावर्जितान्तःसुखानां
निस्तारं दुस्तरापद्घनजलधिपरिभ्रान्तचित्तातुराणाम् ॥
विश्रामं संसृतीनां दुरिततिमिरजस्वाशयाविष्कृतीनां
संघातं पुण्यधाम्नां पुनरिह पुरतो वीक्ष्य हर्षं प्रपेदे ॥ ३८ ॥

पायं पायं लोचनाभ्यां ध्यायं ध्यायं पुरः स्थितम्
नित्यतृप्तोऽपि नातृप्यत्कामलोभहतो यथा ॥ ३९ ॥

स्तब्धचित्तः स्विन्नगात्रो रोमाञ्चितवपुः पुनः
नोपस्थातुं शशाकासौ प्रभुं तं गद्गदाक्षरः ॥ ४० ॥

विज्ञाय तं विवक्षुं क्षामाङ्गं क्षीणवासनं दक्षम्
भक्तावनैकदीक्षो हस्तं तच्छिरसि राघवो निदधे ॥ ४१ ॥

स तत्करस्पर्शविधूतविभ्रमः
प्रसादविज्ञानविरागधौतधीः।
हृदि स्मरन् राघवपादपङ्कजं
शशंस यावन्मनसः प्रसादनम् ॥ ४२ ॥

प्रोवाच तं ततो देवो नतं भक्तशिरोमणिम्
याहि त्वं मदनुज्ञातो महीध्रोपत्यकामितः ॥ ४३ ॥

तत्र मे मन्दिरं कृत्वा गृहस्थाश्रमसंस्थितः
आतिष्ठ परया भक्त्या धर्मान् भागवतान् शुभान् ॥ ४४ ॥

कलिकल्मषनाशाय नान्यः पन्था ह्यतो लघुः
तमेव संप्रदायं त्वं प्रकटीकुरु मुक्तये ॥ ४५ ॥
गार्हस्थ्यं सम्यगास्थाय भुक्तिमुक्ती करस्थिते
यत्र नो मनसः क्लेशो निरोधो वाऽनवस्थितिः ॥ ४६ ॥
आतिष्ठ तात मद्धर्मान् प्रचारय च सर्वशः
लोकसंग्रहमातिष्ठ ततो मुक्तिमवाप्स्यसि ॥ ४७ ॥
त्वद्वंश्या अपि लोकेऽस्मिन् पण्डिता इति विश्रुताः
मद्धर्मानाचरन्तस्ते नो नङ्क्ष्यन्ति कदाचन ॥ ४८ ॥
ततः परेशस्य परां सपर्यां विधाय विश्वेशविनम्रमौलिः
दध्यौ चिरं राघवपादपद्मं भक्तार्तिहा ध्यानमगात् प्रभुश्च ॥ ४९ ॥
ततो जगामाऽऽशु स भक्तराजो देवालयं सत्वरमाततान
सौमित्रिसीतारघुवंशनाथमूर्तित्रयाराधनतत्परोऽभूत् ॥ ५० ॥
गणेशमूर्तिं गणराजदत्तां तत्रैव संस्थाप्य तदर्चनेऽपि
दत्तादरोऽभून्न हि भेदबुद्धिर्विप्रे गुरौ वा निजदेवतायाम् ॥ ५१ ॥
रामदासो विष्णुदासस्तत्सुतौ पितृवत्सलौ
तदाज्ञाकारिणावास्तामातिथ्यैकरतौ सदा ॥ ५२ ॥
लक्ष्मणो नाम विप्रोऽन्यस्तत्र धर्मपरायणः
भागीरथी च तत्पत्नी सती पतिमनुव्रता ॥ ५३ ॥
धर्मकर्मरतस्यास्य नैव पुत्रो व्यजायत
संतत्यभावात्संतप्तो विरागं परमाप्तवान् ॥ ५४ ॥
तीर्थयात्रां हितां मेने गतो बदरिकाश्रमम्
स्नानहोमजपार्चादितपः परममास्थितः ॥ ५५ ॥
पतिव्रता च तत्पत्नी सदैवाऽऽसीदनुव्रता
किं मया वन्ध्यया हन्त नास्ति संततिदर्शनम् ॥ ५६ ॥
इति शोकपरीतापं भजन्तीं दृष्टवान् पतिः
मा तापं भज कल्याणि कल्याणं न चिरात्तव ॥ ५७ ॥
रामभक्तं महात्मानं सुतं त्वं जनयिष्यसि
तपस्यभिरतस्यास्य कल्याणी वाग् विनिर्गता ॥ ५८ ॥

दैवतैरभ्यनुज्ञाता ततो गर्भं दधार सा
ततः शुभे दिने लग्ने ग्रहचक्रे बलान्विते ॥ ५९ ॥
कुमारं सुषुवे साध्वी पित्रोर्हर्षविवर्धनम्
स बाल एव तेजस्वी शुभलक्षणलक्षितः ॥ ६० ॥
युगाधिकारिको नूनं योगभ्रष्टो नु तापसः
तत्रत्यैस्तर्कितः सोऽभूद्विमेन्द्रैस्तपसि स्थितैः ॥ ६१ ॥
पित्रोरभ्यधिका प्रीतिस्तदा तस्मिन्नवर्धत
अतिकृच्छ्रार्जिते वित्ते कृपणानां यथा पुनः॥ ६२ ॥
नातृप्यतां तु पितरौ पिबन्तौ तन्मुखाम्बुजम्
अतिलोभाकृष्टचित्तो वित्तं लब्ध्वा यथा नरः ॥ ६३ ॥
जन्मनैव खलु येन भूतले दीपितं कुलमथान्वयस्य च
तस्य नाम 'शिवबे'त्यधिष्ठितं भव्यसूतिरिह भूतय एव ॥ ६४ ॥
पुत्रमोहवशगो हि तत्पितोत्सृज्य तद्बदरिकावनं पुनः
विश्ववन्द्यविबुधेशविभ्रमं विश्वनाथपुरमाशु सेदिवान् ॥ ६५ ॥
तत्र तत्र पथि पौरजनाना लोचनस्य विषयः शिवबालः
आचकर्ष हृदयान्यपि तेषां भव्यता हि जनचित्तहारिणी ॥ ६६ ॥
स्वर्धुनीत्रिपवणे जपहोमदेवतातिथिविधावतिपक्वतः
लक्ष्मणस्तु शिवबाशिवशंसी संततं शिवसमर्चनमग्नः ॥ ६७ ॥
रामनाम सततं जपन् शिव. शंसतीह शिवद सुजनेभ्यः
इत्थमेव कलयन् शिवबालो रामभक्तिनिरत· स बभूव ॥ ६८ ॥
अपहर हर संसारं दह कामं विषयजालजटिलं मे
लोचनपथमवतारय रघुनाथं जनकजाक्षिपद्माब्जम् ॥ ६९ ॥
ग्रामं ग्रामं प्रत्यहं शर्वसद्म ध्यायं ध्यायं पादपद्मं शिवस्य
अस्तौदित्थं बालकोऽसौ महात्मा स्वोत्थायत्थं कार्यजात समस्तम् ॥७
स्वप्ने शर्वादेशो याहि त्वं दाक्षिणापथं तात
सह्योत्तरकूटतटे भूमिधरो राजते मयूराख्यः ॥ ७१ ॥
काशीराजो वैष्णवाग्र्यो महात्मा
सिद्धश्चासौ राघवानुगृहीतः ।
मन्त्र तस्मात्संप्रदायानुशिष्टं
प्राप्येष्टं त्वं प्रेक्षितासे हृदिस्थम् ॥ ७२ ॥

उत्थायासौ बालकः कल्य एव वृत्तं सर्वं प्राह ताताय तूर्णम् ।
विज्ञायासौ लक्ष्मणोऽप्यार्यवृत्तो बालं मेने श्रीहरेः प्रीतिपात्रम् ॥ ७३ ॥
अथान्तरे तद्गृहिणी विनश्वरं
विहाय लोकं समवाप धूर्जटेः ।
बालोऽप्ययं श्रीपतिपादपङ्कज–
द्विरेफितोऽनुग्रहमन्वमन्यत ॥ ७४ ॥
पिताऽस्य निर्वर्त्य तदौर्ध्वदेहिकं
वियोगदुःखातिविषण्णमानसः ।
विधाय वृत्तिं जनिभूनिवेशने
ययौ समेतः शिवबालकेन सः ॥ ७५ ॥
अथ च पौरजनैः स सभाजितो न चिरतश्चिरतोषमवाप्य च
शिवसमर्चनमर्चनभक्तिधीः सततमाकलयत्कलयन्नसून् ॥ ७६ ॥
इति विरागविराजितमानसश्चिदुपरागपरागतकल्मषः
शिवपदं विपदन्तकरं परं निजसुतं स विहाय समभ्यगात् ॥ ७७ ॥
मातापितृविहीनोऽसौ बालकः पञ्चहायनः
हरेरनुग्रहं मेने जन्मबन्धमुमुक्षया ॥ ७८ ॥
सर्वादिष्टा महात्मानः क्व नु बन्धविमोचकाः
इत्येवं चिन्तयन् बालो ययावद्रेरुपत्यकाम् ॥ ७९ ॥
काशीराजं महात्मानं दृष्ट्वा सात्वतविग्रहम्
संस्तवं प्राप बालोऽसौ साधवो मैत्रविग्रहाः ॥ ८० ॥
नत्वा च दण्डवद्भूमौ प्रणिधाय मनो हृदि
दध्यावनन्यया बुद्ध्या तुष्टुवे संहताञ्जलिः ॥ ८१ ॥
भवविपिनदवानुज्वालमालावलीढो
गुरुचरणपयोदं कान्दिशीकः प्रपन्नः ।
सततसदयदृष्ट्यासारतश्चानुकम्प्यः
शरणमपरमारान्नास्ति मेऽनाथनाथ ॥ ८२ ॥
ब्रह्मादयो यद्गुणिनं स्तुतिभिः स्तुवन्तो
नान्तं ययुः कथमहं प्रभवामि दीनः ।
वन्दे निवेदनमिदं मनुराप्यनोभिः
स्वान्मारणेन परितुष्यतु दीननाथः ॥ ८३ ॥

निशम्य रुचिरां वाचं लघ्वीं गुर्वर्थगव्हराम्
निर्वर्ण्य सुचिरं बालं योगाच्च्युतममन्यत ॥ ८४ ॥
पाणिना शंतमेनासौ उत्थाप्याऽऽमृज्य लोचने
ईक्षयाऽमृतवर्षिण्याऽनुजग्राह च तं गुरुः ॥ ८५ ॥
भोजयित्वा तु तं बालं रामचन्द्रार्पितान्धसा
तत आरभ्य बालोऽसौ गुरुभक्तिरतोऽभवत् ॥ ८६ ॥
प्राक्तनं योगसामर्थ्यं तस्मिन्नाविर्बभूव च
निष्ठां स परमां प्राप हरिपादाब्जसेवने ॥ ८७ ॥
लोकदृष्टिं समाश्रित्य मातुलस्तन्निवर्तने
न शशाक तदा तेने यातना विविधाः खलु ॥ ८८ ॥
दुर्गपालस्य साहाय्यात् कारागृहनिबन्धनम्
गुरुणा सह संप्राप्तो बालको दिष्टभुक् पुनः ॥ ८९ ॥
रामाज्ञया विमुक्तश्च रामदूतप्रसादतः
आविर्भूतास्ततस्तस्यानुत्तमा योगसिद्धयः ॥ ९० ॥
कृतोपनयनस्यास्य कृतार्थस्यापि सर्वदा
मन्त्रादेशन उत्कण्ठां ज्ञात्वा गुरुरुपादिशत् ॥ ९१ ॥
रासक्रीडादर्शनं च प्रत्यक्षं कृष्णदर्शनम्
कूपात्पायसलब्धिश्च सात्वतातिथ्यचिन्तने ॥ ९२ ॥
स्वभक्तरूपच्छन्नात्तु रामाद्दणविमोचनम्
इत्येवमादिकं तस्य दृष्टं योगबलं जनैः ॥ ९३ ॥
इत्येवं गुरुपादाब्जमधुलिड् बालकः शिवः
वसन् गुरुकुले दान्तो रामभक्तिरतोऽभवत् ॥ ९४ ॥
श्रीसमर्था रामभक्ता रामदासेति विश्रुताः
संचरन्तः समाजग्मुर्लोकतत्त्वविवित्सया ॥ ९५ ॥
तत्रोषुर्वर्षमेकं तु काशीराजेन सत्कृताः
शिवबालस्य तां निष्ठामातिथ्ये च समादरम् ॥ ९६ ॥
योगतत्त्वानुसंधानं योगसिद्धीरनुत्तमाः
उत्सुर्विलोक्य कारुण्यात् प्रेमातिभरनिर्वृताः ॥ ९७ ॥

उद्धवोऽयं महाराज मूर्तिमानिव भाति मे
अत ' उद्धव ' इत्याख्या विख्याताऽस्य भवेद् भुवि ॥ ९८ ॥
त्रयोदशाक्षरं मन्त्रं तस्मै भादुः कृपालवः
काशीराजानुमत्या तमाशीर्भिरनुजगृहुः ॥ ९९ ॥
तत आरभ्य बालोऽसावुद्धवेत्यभिविश्रुतः
देवातिथिगुरूणां वै परिचर्यारतोऽभवत् ॥ १०० ॥
रघुपतिपरिचर्याधूतपापोऽमलात्मा
तनययुगसमेतश्चोद्धवेनार्चितः सः ।
धनसुखसुतदारान् पादचर्यां प्रभोस्तां
ननु किमपि निदध्यौ काशिराजो महात्मा ॥ १०१ ॥
दृष्ट्वा पुत्रं रामदासं व्ययातिशयदुःखितम्
रहस्युद्धवमेत्याह काशिराजो विशुद्धधीः ॥१०२ ॥
निर्माय त्वं मयाऽऽदिष्टो रघुनाथनिवेशनम्
धर्मान् भागवतान् सम्यक् श्रद्धयाऽऽचर सर्वदा ॥ १०३
गृहाणेदं मया दत्तं मूर्तित्रयमिदं शुभम्
संस्थाप्य तत्र रामस्य परिचर्यारतो भव ॥ १०४ ॥
परिचर्याविधिः सौम्य मयाऽऽदिष्टोऽस्ति ते पुनः
तत्र ते सहकारी स्याद् विष्णुदासो विशुद्धधीः ॥ १०५ ।
गुरोरनुग्रहाल्लब्धं मूर्तित्रयमिदं शुभम्
आराधितं वशीकुर्यादपि लोकान् सहेश्वरान् ॥ १०६ ॥
सिद्धोऽसि कृतकृत्योऽसि स्थितप्रज्ञोऽसि सांप्रतम्
तथाप्याचर सद्धर्मान् लोकानुग्रहहेतवे ॥ १०७ ॥
त्वत्तः परं विष्णुदाससंस्थाः सद्धर्ममास्थिताः
लोकाननुचरिष्यन्ति भक्तिमार्गप्रकाशकाः ॥ १०८ ॥
विष्णुदासस्त्वनुप्राप्तस्त्वया धूतमनोमलः
किमन्यच्च समादेश्यं सर्वं जानासि यद् भवान् ॥ १०९ ।
इत्येवं गुरुवचनं निशम्य सम्यक्
चक्रेऽसौ रघुपतिमन्दिरं परस्तात् ।
पूर्णाना विधयो समर्च्य पश्चात्
सद्धर्माचरणरतः सदा प्रभुः ॥ ११० ॥

विष्णुदासो रामपादपरिचर्यापरायणः ।
उद्धवं प्रीणयामास सद्धर्माचरितैः शुभैः ॥ १११ ॥
आक्रान्ते वसुधातले तु यवनैः सद्धर्मविद्वेषिभि-
र्विद्राणेऽसुरवृत्तिरुद्धकरुणे धर्मार्थहीने जने ।
यच्छिष्यप्रवराः परावरदृशो देशे[१] जनान् खाण्डवे[१]
चक्रुर्योगवलात्स्वधर्मनिरतान् तं काशिराजं नुमः ॥ ११२ ॥
उद्धवं नौमि योगीन्द्रं योगाम्बुधिसुधाकरम्
यत्कृपालेशतः सिद्धः कृतकृत्योऽयमन्वयः ॥ ११३ ॥
अवतारकृत्यमित्थं समाप्य योगीश्वरो जगामाऽऽशु
पाण्डववह्निषडेकप्रमिते शकवत्सरे निज धाम ॥ ११४ ॥
संस्थाप्य विष्णुदासः सद्गुरुपदपादुके तु तत्रैव
गुरुविरहदूनचित्तस्तदर्चनाया समाहितो जातः ॥ ११५ ॥
विष्णुदासस्य वंशे तु चतुर्थः पुरुषः शुचिः
हिरण्यगर्भनामाऽभूद्धिरण्यसदृशच्छविः ॥ ११६ ॥
यत्सौन्दर्यसमाकृष्टा राज्य[२]विद्रोहकाः खलाः
हिरण्यलोभाच्च जघ्नुर्मत्वा तु धनिनं पुनः ॥ ११७ ॥
अन्नपूर्णा च वद्भार्या सती पतिमनुव्रता
आरुह्यैकाचितां प्राप पतिलोकं परात्परम् ॥ ११८ ॥
तत्सुतो रामजीत्यासीद्रामभक्तिपरायणः
हरिस्तत्तनयस्तस्य केशवः पुत्रतामगात् ॥ ११९ ॥
सर्वेऽप्येते रामभक्ता भक्तिमार्गविशारदाः
देववाणीप्रगल्भाश्च पण्डिता इति विश्रुताः ॥ १२० ॥
बालकृष्णो रामचन्द्रो भानुदासश्च सत्तमः
देवकृष्णस्तथा लक्ष्मीकान्त पञ्च सुतास्ततः ॥ १२१ ॥
चतुर्थस्तनयस्तत्र यमुनागर्भसंभवः
शाण्डिल्यगोत्रतरणिर्वाजिमाध्यंदिनीयकः ॥ १२२ ॥
सोऽहं सद्वंशसंभूतोऽप्यगुणो रन्ध्रवर्जितः
मुक्ताश्रेण्यां न रोचिष्णुः पण्डितानां यथार्थतः ॥ १२३ ॥

(१) खानदेश. । (२) बडवाले ।

तथापि विठ्ठलेशस्य नामव्रतपरायणैः
श्रीसंतोजीमहाराजैर्नियुक्तो ग्रन्थलेखने ॥ १२४ ॥
कराले कलिकालेऽस्मिन् आसुरीं वृत्तिमास्थितान्
दोधूयमानान् सद्धर्मं जनानालोक्य दुःखितैः ॥ १२५ ॥
सद्धर्मत्राणदीक्षैस्तैर्यावज्जीवं कृतश्रमैः
या पराभूतयः सोढास्तदीक्षणविषण्णधीः ॥ १२६ ॥
यथामत्यालिखं ग्रन्थं धर्मादर्शमिमं पुनः
रामोद्धवेन गुरुणा हृदन्तःस्थेन चोदितः ॥ १२७ ॥
यत्कृपालेशतोऽशेषशास्त्रसिद्धान्तदर्शनम्
तुष्यन्त्वदभ्रकरुणाः सीतारामोद्धवादयः ॥ १२८ ॥

इति श्रीसंतोजी महाराजादि संचाल्यमान सनातनधर्मोज्जीविनीसभाद्वारा संपादिते
पण्डितोपाह्वकेशवसूनुदेवकृष्णशर्मणा विरचिते
धर्मादर्शे विवाहप्रतिबिम्बः ॥

— समाप्तश्च धर्मादर्शः —